श्रीः

# ऋक्संहिता

## सायणाचार्यविरचितभाष्यसहिता

## पदपाठयुताच.



## तस्या अयं प्रथमोष्टकः

सकलराज्यश्रीनिधानाय, समस्तशुभानांनिकेतनाय, मन्त्रबलोत्सा-
हादिसमस्तशक्तिनिवासाय, षाड्गुण्यस्थानाय, श्रीसरस्वत्योरे-
कायतनाय, सामन्तचक्रोपशोभिताय, अनेकनृवरचूडामणि-
रञ्जितपादपीठाय, **सेनाखासखेल** इतिप्रपन्नत्राण-
कर्तृत्वेन प्रसिद्धाय, **समशेर बहादुर** इत्यसि-
मात्रसहायत्वप्रख्यापनोपनामविभूषिताय, प्रजापालनदक्षाय अधि-
राज्ञीदत्त **जी० सी० एस्० आय्०** इत्युत्तमस्वकीयत्वद्योतनपदाय,
महाराजाधिराजाय, **गायकवाड** इतिनाम्ना व्यञ्जितगोब्राह्मणादिप्रतिपाल-
नाय, **वटपत्तनाधिपाय महाराज श्रीसयाजीराव**ेत्याख्याय, अपरभूसु-
रेन्द्राय, विज्ञप्तिरियं, यद्भवदीयेन भव्येन चारित्रेण, नव्येन गुणोत्कर्षेण,
स्तव्येन राजधर्मेण, परमोदारेण दानधर्मेण, महासारेण देशोत्कर्षो-
त्साहेन, अतिविपुलेन विद्याव्यसनप्रकारेण, धर्मो-
च्छ्रायप्रतानेनच हृतान्तःकरणोऽयंजनः, आर्याणामना-
दिसिद्धसर्ववर्णाश्रमधर्मादिप्रतिपादकग्रन्थसोपहारं, भाष्या-
दियोजनया तस्योद्धारकर्तृ**श्रीबुक्कराय**सदृशाभवन्तएवयोग्या-
इतिमनस्तदनुज्ञयोपहारीकरोमीदंप्रसिद्धकर्ता नम्रोऽयंतुकारामाख्यः

श्रीः

# ऋक्संहिता

सायणाचार्यविरचितभाष्यसहिता
पदपाठयुताच.

इयंच

तत्त्वविवेचकग्रंथप्रसारकसमित्याप्रेरितः तुकारामतात्याभिख्यः,
गणपतकृष्णाजीमुद्रायंत्रालयाधिपतिः आत्मारामकान्होबाभिख्यः;

इत्येताभ्यां

वोडसोपाह्वमहामहोपाध्यायराजारामशास्त्रि,
गोरेइत्युपाभिधशिवरामशास्त्रिभ्यांशोधयित्वा

मुंबय्यां

गणपतकृष्णाजीमुद्रायंत्रालयेमुद्रयित्वा

प्रकाशिता.

तस्याअयंप्रथमोष्टकः

शकाब्दाः १८१०

# प्रस्तावना.

अस्यग्रंथस्यांकनक्रमः—प्रथमं स्थूलाक्षराऋक्सस्वरा। ततोधः किंचित्स्वल्पाक्षरस्त-स्याऋचःपदपाठः। ततोधस्तेभ्योपिलघ्वक्षरं सायणाचार्यविरचितंभाष्यम्। एवंसर्वत्रक्रमः॥ प्रतिपृष्ठमधोभागेभाष्येअन्यग्रंथेभ्योगृहीतप्रमाणानां तत्रतत्रागतानां तत्तच्छाखांतर्गतानां ब्राह्मणादिवाक्यानामंकन्यासःटिप्पण्यांस्तोटकवर्गादीनां । किंच भाष्येप्रक्रियायामागतानां पाणिन्युणादिफिट्सूत्राणां शीघ्रोपस्थानार्थं वर्णानुक्रमेणसूचीचदत्ताद्वितीयाष्टकांते। तथाप्रतिपृष्ठोपरिभागे अध्यायवर्गमंडलानुवाकसूक्तानामंकाविन्यस्ताः। एवंसुबोधीकरणार्थमत्रपुस्तकेक्रमोंगीकृतः।

# ऋक्संहिता

## सभाष्या, पदपाठसहिताच.



### उपोद्घातप्रकरणम्

श्रीगणेशायनमः श्रीसरस्वत्यैनमः वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे । यंनत्वाकृतकृत्याःस्युस्तंनमामिगजाननम् ॥ १ ॥ यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥ यत्कटाक्षेणतद्रूपंदधद्बुक्कमहीपतिः । आदिशन्माधवाचार्यंवेदार्थस्य प्रकाशने ॥ ३ ॥ येपूर्वोत्तरमीमांसेतेव्याख्यायातिसङ्ग्रहात् । कृपालुर्माधवाचार्योवेदार्थंवक्तुमुद्यतः ॥४॥ आध्वर्यवस्ययज्ञेषुप्राधान्याद्व्याकृतःपुरा । यजुर्वेदोथहौत्रार्थमृग्वेदोव्याकरिष्यते॥५॥एतस्मिन्प्रथमाध्यायःश्रोतव्यःसम्प्रदायतः । व्युत्पन्नस्तावतासर्वंबोद्धुंशक्नोतिबुद्धिमान् ॥६॥ अत्र केचिदाहुः—ऋग्वेदस्यप्राथम्येनसर्वत्राम्नातत्वात् अभ्यर्हितंपूर्वमितिन्यायेनाभ्यर्हितत्वात् तद्व्याख्यानमादौयुक्तम् प्राथम्यंचपुरुषसूक्तेविस्पष्टम्—तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे । छन्दांसिजज्ञिरेतस्माद्यजुस्तस्मादजायतेति । सहस्रशीर्षापुरुषइत्युक्तत्वात् परमेश्वराद्यज्ञाद्यजनीयात्पूजनीयात्सर्वहुतःसर्वैर्हूयमानात् । यद्यपीन्द्रादयस्तत्रतत्रहूयन्ते तथापिपरमेश्वरस्यैवेन्द्रादिरूपेणावस्थानादविरोधः । तथाचमन्त्रवर्णः—इन्द्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् ।

---

१ सप्राहनृपतिंराजन्सायणार्योममानुजः । सर्वंवेत्त्येषवेदानांव्याख्यातृत्वेनियुज्यताम् ४ इत्युक्तोमाधवार्येणवीरबुक्कमहीपतिः । अन्वगात्सायणाचार्यंवेदार्थस्यप्रकाशने इत्यधिकमेकस्मिन्पुस्तके । २ ऋक्संहिता अष्टमाष्टकः ( ८ ) चतुर्थाध्यायः ( ४ ) अष्टादशोवर्गः ( १८ ) । ३ ऋक्संहितायांअष्टमाष्टके चतुर्थाध्यायस्यसप्तदशोवर्गे ( ८. ४. १७. ) । ४ ऋ. सं. २.३. २२. ।

एकंसद्विप्राबहुधावदन्त्यग्निंयमंमातरिश्वानमाहुरिति । वाजसनेयिनश्चामनन्ति—तद्यदिदमाहुरमुं यजामुंयजेत्येकैकंदेवमेतस्यैवसाविसृष्टिरेषउह्येवसर्वेदेवाइति । तस्मात्सर्वैरपिपरमेश्वरएवहूयते नकेवलमृचांपाठप्राथम्येनाभ्यर्हितत्वम् किन्तु यज्ञाङ्गदार्ढ्यहेतुत्वादपि तथाचतैत्तिरीयाआमनन्ति—यद्वैयज्ञस्यसाम्नायजुषाक्रियतेशिथिलंतद्यदृचातद्दृढमिति ।तथाचसर्ववेदगतानिब्राह्मणानि स्वाभिहितेऽर्थेविश्वासदार्ढ्याय तदेतदृचाभ्युक्तमित्यृचमेवोदाहरन्ति।मन्त्रकाण्डेष्वपियजुर्वेदगतेषु तत्रतत्राध्वर्युणाप्रयोज्याऋचोबहवआम्नाताः ।साम्नांतुसर्वेषामृगाश्रितत्वंप्रसिद्धम् । आथर्वणिकैरपि स्वकीयसंहितायामृचएवबाहुल्येनाधीयन्ते अतोऽन्यैःसर्वैर्वेदैरादृतत्वात् अभ्यर्हितत्वम्। छन्दोगास्तुप्राथम्येनसनत्कुमारंप्रति नारदवाक्यमेवमामनन्ति—ऋग्वेदंभगवोऽध्येमियजुर्वेदंसामवेदमाथर्वणंचेति । मुण्डकोपनिषद्यप्येवमाम्नायते—ऋग्वेदोयजुर्वेदःसामवेदोऽथर्वणइति । तापनीयोपनिषद्यपिमन्त्रराजपादेषुक्रमेणाध्ययनमेवमामनन्ति— ऋग्यजुःसामाथर्वाणश्चत्वारोवेदाः साङ्गाःसशाखाश्चत्वारःपादाभवन्तीति । एवंसर्वत्रोदाहरणीयम् तस्मात् ऋग्वेदस्याभ्यर्हितस्यादौव्याख्यानमुचितमिति । तान्प्रत्येतदुच्यते—अस्त्वेवंसर्ववेदाध्ययनतत्पारायणब्रह्मयज्ञजपादौ ऋग्वेदस्यैवप्राथम्यम् अर्थज्ञानस्यतु यज्ञानुष्ठानार्थत्वात् तत्रतुयजुर्वेदस्यैवप्रधानत्वात् तद्व्याख्यानमेवादौयुक्तम् । तत्प्राधान्यंचकाचिदृगेवाह—ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्वरीषु । ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वइति । एतस्याऋचस्तात्पर्यंनिरुक्तकारोयास्कःसंक्षिप्यदर्शयति—इत्यृत्विक्कर्मणांविनियोगमाचष्टेइति पुनरपिसएवप्रथमंपादंविवृणोति—ऋचामेकःपोषमास्तेपुपुष्वान्होतर्गर्चनीति । अस्यायमर्थः—त्वशब्दएकशब्दपर्यायोहोतृविशेषणम् होतृनामकएकऋत्विग्यज्ञकालेस्वकीयवेदगतानामृचांपुष्टिंकुर्वन्नास्ते भिन्नप्रदेशेष्वाम्नातानामृचांसंघमेकत्रसम्पाद्यैतावदिदंशस्त्रमितिक्लृप्तिंकरोति सेयंपुष्टिः ।अर्चनीत्यमुमर्थमृक्शब्द आचष्टे अर्च्यन्तेप्रशस्यन्तेऽनयादेवविशेषाःक्रियाविशेषास्तत्साधनविशेषावेत्यृक्शब्दव्युत्पत्तेरिति । अथद्वितीयंपादंविवृणोति—गायत्रमेकोगायतिशक्वरीषूद्गातागायत्रंगायतेःस्तुतिकर्मणःशक्वर्यऋचःशक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुंतच्छक्वरीणांशक्वरीत्वमितिविज्ञायतइति ।अस्यायमर्थः-उद्गातृनामकएकऋत्विग्गायत्रशब्दाभिधेयंस्तोत्रंशक्वरीशब्दाभिधेयास्वृक्षुगायति धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनोगायतिधातोरुत्पन्नोगायत्रशब्दः शक्वरीशब्दस्तुशक्नोतिधातोरुत्पन्नः वृत्रंशत्रुंहन्तुंशक्नोत्याभिर्ऋग्भिरित्येषाव्युत्पत्तिःकस्मिंश्चिद्ब्राह्मणेविज्ञायतइति । अथतृतीयं पादंविवृणोति—ब्रह्मैकोजातेजातेविद्यांवदतिब्रह्मासर्वविदिति । अस्यायमर्थः—ब्रह्मनामकएकऋ-

---

१ तैत्तिरीयसंहितायांषष्ठकाण्डेपञ्चमप्रपाठकेदशमेनुवाके (६.५.१०)। २ ऋ. सं. ८. २. २४। ३ नि० १.८। ४ नि० १.८।

त्विग्जातेजातेवदातदोत्पन्नेप्रस्तुतेप्रणयनादिकर्मणिविद्यामनुज्ञांवदति ब्रह्मन्नपःप्रणेष्यामीत्येवं सम्बोधितःसन् ओम्प्रणयेत्यनुजानाति सचब्रह्मावेदत्रयोक्तसर्वकर्माभिज्ञः तस्माद्योग्यतांदृष्ट्वा तत्तदनुज्ञातुंसतिप्रमादेसमाधातुंचसमर्थइति। तच्चसामर्थ्यंछन्दोगाआमनन्ति–एषएवयज्ञस्तस्य मनश्चवाक्चवर्तनीतयोरन्यतरांमनसासंस्करोतिब्रह्मावाचाहोताध्वर्युरुद्गातान्यतरामिति। कृत्स्नो-यज्ञःप्रमादराहित्यायमनसासम्यगनुसन्धेयः वाचाचवेदत्रयोक्तमन्त्राःपठनीयाः तत्रहोत्रादयस्त्र-योमिलित्वावाग्रूपंयज्ञमार्गंसंस्कुर्वन्ति ब्रह्मात्वेकएवमनोरूपंयज्ञमार्गंकृत्स्नमपिसंस्करोति तस्माद-स्यास्तिसामर्थ्यमिति। अथचतुर्थपादंविवृणोति–यज्ञस्यमात्रांविमिमीतएकोध्वर्युरध्वर्युरध्वर-युरध्वरंयुनक्त्यध्वरस्यनेतेति। अस्यायमर्थः–अध्वर्युनामकएकऋत्विग्यज्ञस्यमात्रांस्वरूपंविमि-मीतेविशेषेणनिष्पादयति मीयतेनिर्मीयतेइतिमात्राःस्वरूपं तन्निष्पादकत्वंचाध्वर्योर्नामनिर्वचना-द्वगम्यते अध्वर्युरित्यत्रछान्दस्यामक्रियायालुप्तंअकारंपुनःप्रक्षिप्याध्वरयुरितिनामसम्पादनीय-म् अध्वरंयुनक्तीत्यवयवार्थः अध्वरस्यनेतेतितात्पर्यार्थइति। एतदेवाभिप्रेत्याध्वर्युवेदस्ययागनि-ष्पादकद्योतकंनिर्वचनंयास्कोदर्शयति–मन्त्रामननात् छन्दांसिछादनात् स्तोमःस्तवनात् यजुर्य-जतेरिति[1]। एवंसत्यध्वर्युसम्बन्धिनियजुर्वेदेनिष्पन्नंयज्ञशरीरमुपजीव्य तदपेक्षितौस्तोत्रशस्त्ररूपा-ववयवावितरेणवेदद्वयेनपूर्येते इत्युपजीव्यस्ययजुर्वेदस्यप्रथमतोव्याख्यानंयुक्तम् ततऊर्ध्वंसाम्ना-मृगाश्रितत्वात् उभयोर्मध्येप्रथमतऋग्व्याख्यानंयुक्तमित्यृग्वेदइदानींव्याख्यायते। ननु वेदए-वतावन्नास्ति कुतस्तदवान्तरविशेषऋग्वेदः तथाहि कोयंवेदोनाम नहितत्रलक्षणंप्रमाणंचास्ति नचतदुभयव्यतिरेकेणकिञ्चिद्वस्तुप्रसिद्ध्यति लक्षणप्रमाणाभ्यांहिवस्तुसिद्धिरितिन्यायविदांम-तम् प्रत्यक्षानुमानोपमानागमेषुप्रमाणविशेषेष्वन्तिमोवेदइतितल्लक्षणमितिचेत् न मन्वादि-स्मृतिष्वतिव्याप्तेः समयबलेनसम्यक्परोक्षानुभवसाधनमित्येतस्यागमलक्षणस्यतास्वपिसद्भा-वात् अपौरुषेयत्वेसतीतिविशेषणाददोषइतिचेत् न वेदस्यापिपरमेश्वरनिर्मितत्वेनपौरुषेय-त्वात् शरीरधारिजीवपुरुषनिर्मितत्वाभावादपौरुषेयत्वमितिचेत् न सहस्रशीर्षापुरुषइत्यादिश्रु-तिभिरीश्वरस्यापिशरीरित्वात् कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वंवि-वक्षितमितिचेत् न जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात् ऋग्वेदएवाग्नेरजायतयजुर्वे-दोवायोःसामवेदआदित्यादितिश्रुतेः[2]। ईश्वरस्याग्न्यादिप्रेरकत्वेननिर्मातृत्वंद्रष्टव्यम्। मन्त्रब्राह्म-णात्मकःशब्दराशिर्वेदइतिचेत् न ईदृशोमन्त्रईदृशंब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्ना-स्तिकिञ्चिद्वेदस्यलक्षणम् नापितत्सद्भावेप्रमाणंपश्यामः ऋग्वेदंभगवोध्येमियजुर्वेदंसामवेदमा-थर्वणंचतुर्थमित्यादिवाक्यंप्रमाणमितिचेत् न तस्यापिवाक्यस्यवेदान्तःपातित्वेनात्माश्रयत्वप्रस-

1 नि॰७.१२.। 2 ऐतरेयब्राह्मणेपञ्चमपंचिकायांद्वात्रिंशोखण्डे (५-३२.)।

ज्ञात् नखलुनिपुणोपिस्वस्कंधमारोढुंप्रभवेदिति । वेदएवद्विजातीनांनिःश्रेयसकरःपरइत्यादिस्मृतिवाक्यंप्रमाणमितिचेत् न तस्याप्युक्तश्रुतिमूलत्वेननिराकृतत्वात् । प्रत्यक्षादिकंशङ्कितुमप्ययोग्यम् । वेदविषयातुलोकप्रसिद्धिःसार्वजनीनापि नीलंनभइत्यादिवद्भ्रान्ता । तस्माल्लक्षणप्रमाणरहितस्यवेदस्यसद्भावोनाङ्गीकर्तुंशक्यतइतिपूर्वःपक्षः । अत्रोच्यते—मन्त्रब्राह्मणात्मकस्तावददुष्टंलक्षणम् अतएवापस्तम्बोयज्ञपरिभाषायामेवमाह—मन्त्रब्राह्मणयोर्वेदनामधेयमिति । तयोस्तुस्वरूपमुपरिष्टान्निर्णेष्यते अपौरुषेयवाक्यत्वमिदमपियादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति प्रमाणान्यपियथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणिवेदसद्भावेद्रष्टव्यानि यथा घटपटादिद्रव्याणांस्वप्रकाशकत्वाभावेऽपिसूर्यचन्द्रादीनांस्वप्रकाशकत्वमविरुद्धम् तथामनुष्यादीनांस्वस्कन्धारोहासंभवेऽप्यकुण्ठितशक्तेर्वेदस्येतरवस्तुप्रतिपादकत्ववत्स्वप्रतिपादकत्वमप्यस्तु । अतएवसंप्रदायविदोऽकुण्ठितांशक्तिंवेदस्यदर्शयन्ति-चोदनाहिभूतंभवन्तंभविष्यन्तंसूक्ष्मंव्यवहितंविप्रकृष्टमित्येवंजातीयकमर्थंशक्नोत्यवगमयितुमिति । तथासति वेदमूलायाःस्मृतेस्तदुभयमूलायाल्लोकप्रसिद्धेश्चप्रामाण्यंदुर्वारम् तस्माल्लक्षणप्रमाणसिद्धोवेदोनकेनापिचार्वाकादिनाऽपोढुंशक्यइतिस्थितम् । ननु अस्तुनामवेदाख्यःकश्चित्पदार्थः तथापिनासौव्याख्यानमर्हति अप्रमाणत्वेनानुपयुक्तत्वात् नहिवेदःप्रमाणम् तल्लक्षणस्यतत्रदुःसंपादत्वात् तथाहि सम्यगनुभवसाधनंप्रमाणमितिकेचिल्लक्षणमाहुः अपरेत्वनधिगतार्थगन्तृप्रमाणमित्याचक्षते नचैतदुभयंवेदेसंभवति मन्त्रब्राह्मणात्मकोहिवेदः तत्रमन्त्राःकेचिदबोधकाः अम्यक्सातइन्द्रऋष्टिरित्येकोमन्त्रः । यादृश्मिन्धायितमपस्यया विदद्रित्यन्यः । सृण्येवजर्भरीतुर्फरीतूइत्यपरः । एवं आपान्तमन्युस्तृपलप्रभर्मेत्यादयउदाहार्याः । नह्येतैर्मन्त्रैःकश्चिदप्यर्थोवबुध्यते एतेष्वनुभवएवयदानास्ति तदातत्सम्यक्त्वं तदीयसाधनत्वंचदूरापेतम् । अधःस्विदासी३दुपरिस्विदासी३दितिमन्त्रस्यबोधकत्वेपिस्थाणुर्वा पुरुषोवेत्यादिवाक्यवत्सन्दिग्धार्थबोधकत्वान्नास्तिप्रामाण्यं ओषधेत्रायस्वैनमितिमन्त्रोदर्भविषयः । स्वधितेमैनंहिंसीरितिक्षुरविषयः । शृणोतग्रावाणइतिपाषाणविषयः । एतेष्वचेतनानांदर्भक्षुरपाषाणानांचेतनवत्सम्बोधनंश्रूयते ततोद्वौचन्द्रमसाविति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यम् एकएवरुद्रोनद्वितीयोवतस्थे । सहस्राणिसहस्रशोयेरुद्राअधिभूम्यामित्येतयोस्तुमन्त्रयोर्यावज्जीवमहंमौनीतिवाक्यवद्व्याघातबोधकत्वात् अप्रामाण्यम् आपउन्दन्त्विति मन्त्रोयजमान-

---

१ याज्ञवल्क्यस्मृतौआचाराध्यायेश्लो. (४० ) । २ आपस्तंबसूत्रेप्रथमाध्याये । ३ शाबरभाष्ये चोदनालक्षणोधर्मइति सू०२. । ४ ऋ० सं.२.४.८. । ५ ऋ० सं.४.२.२४ । ६ ऋ.सं. ८.६.२ । ७ ऋ. सं.८.४.१४. । ८ ऋ.सं.८.७.१७ । ९ तैत्तिरीयसं. प्र.कां.द्वि. प्र पा. प्रथमानुवाके ( १.२.१. ) । १० तै. सं.१.३.१३. । ११ तै. सं.४.५.११. । १२ तै. सं १.२.१. ।

स्यक्षौरकालेजलेनशिरसःक्लेदनंब्रूते । शुंभिकेशिरआरोहशोभयन्तीमुखंममेतिमन्त्रोविवाहकाले मङ्गलाचरणार्थंपुष्पनिर्मितायाःशुभिकायावरवध्वोःशिरस्यवस्थानंब्रूते । तयोश्चमन्त्रयोर्लोकमसिद्धार्थानुवादित्वात् अनधिगतार्थगन्तृत्वंनास्ति तस्मान्मन्त्रभागोनप्रमाणम् । अत्रोच्यते—अग्न्यगादिमन्त्राणामर्थोयास्केननिरुक्तग्रन्थेऽवबोधितः तत्परिचयरहितानामवबोधोनमन्त्राणांदोषमावहति । अतएवात्रलौकिकन्यायमुदाहरन्ति—नैषस्थाणोरपराधोयदेनमन्धोनपश्यतिपुरुषापराधःसभवतीति । अधःस्विदासीदितिमन्त्रश्चनसन्देहबोधनायप्रवृत्तः किंतर्हिजगत्कारणस्यपरवस्तुनोतिगभीरत्वंनिश्चेतुमेवप्रवृत्तः तदर्थमेवहिगुरुशास्त्रसंप्रदायरहितैर्दुर्बोधत्वमधःस्विदित्यनयावचोभङ्ग्योपन्यस्यति सएवाभिप्रायउपरितनेषु कोअद्धावेदेत्यादिमन्त्रेषुस्पष्टीकृतः। ओषध्यादिमन्त्रेष्वपिचेतनाएवतत्तदभिमानिदेवतास्तेनतेननाम्नासम्बोध्यन्ते ताश्चदेवताभगवता बादरायणेनाभिमानिव्यपदेशस्त्वितिसूत्रेसूत्रिताः। एकस्यापिरुद्रस्य स्वमहिम्नासहस्रमूर्तिस्वीकारात् नास्तिपरस्परव्याघातः। जलादिद्रव्येणशिरःक्लेदनादेर्लोकप्रसिद्धत्वेऽपि तदभिमानिदेवतानुग्रहस्याप्रसिद्धत्वात् तद्विषयत्वेनाज्ञातार्थज्ञापकत्वम् ततोलक्षणसद्भावादस्तिमन्त्रभागस्य प्रामाण्यम् । एतदेवाभिमेत्यभगवान्जैमिनिर्मन्त्राधिकरणेमन्त्राणांविवक्षितार्थत्वमसूत्रयत् तानिचसूत्राणिक्रमेणोदाहृत्यव्याख्यास्यामः तत्रपूर्वपक्षंसूत्रयति—तदर्थशास्त्रादिति १ यस्यार्थस्याभिधानेसमर्थोमन्त्रः सएवाभिधेयोयस्यशास्त्रस्यब्राह्मणवाक्यस्यतदिदंवाक्यंतदर्थशास्त्रम् तस्माच्छास्त्रादविवक्षितार्थोमन्त्रइत्यवगम्यते तथाहि उरुंप्रथस्वेतिमन्त्रेणपुरोडाशप्रथनमभिधीयते पुरोडाशंप्रथयतीतिब्राह्मणेनापितदेवाभिधीयते तथासतिमन्त्रेणैवप्रतीतत्वात् तदर्थबोधनायप्रवृत्तंब्राह्मणवाक्यमनर्थकंस्यात् मन्त्रस्याविवक्षितार्थत्वेतुविनियोगबोधनायब्राह्मणमुपयुक्तम् तस्मान्मन्त्राउच्चारणेनैवानुष्ठानमुपकुर्वन्ति । नन्वच्चारणार्थत्वेसत्यदृष्टंप्रयोजनंपरिकल्प्येत अर्थाभिधायकत्वेतुदृष्टंलभ्येत तस्माद्ब्राह्मणस्यानुवादत्वमभ्युपेत्यापिमन्त्रस्याभिधानार्थत्वमेवेत्याशंक्य उत्तरंसूत्रयति—वाक्यनियमादिति २ अग्निर्मूर्धादिवःककुदित्येवमेववाक्यंपठितव्यमितिमन्त्रेनियमउपलभ्यते अर्थप्रत्यायनंतुमूर्धाग्निरित्येवंव्युत्क्रमपाठेपिभवत्येव तस्मान्नियतपाठक्रमसाफल्याय उच्चारणमेवमन्त्रप्रयोजनम्। ननुपाठक्रमनियममात्रस्यादृष्टार्थत्वेपिमन्त्रपाठोऽर्थबोधनार्थएवेत्याशंक्यतत्रदोषान्तरंसूत्रयति—बुद्धशास्त्रादिति ३ अग्नीदग्नीन्विहरेति प्रैषमन्त्रःप्रयोगकालेपठ्यते तच्चाग्निविहरणादिकर्माग्नीध्रेणाध्ययनकालेएवस्वकर्तव्यत्वेनबुद्धम् तस्यचबुद्धस्यार्थस्यपुनर्मन्त्रोच्चारणेनशासनमनर्थकम् नहिसोपानत्केपादेपुनरप्युपानहंमन्मुञ्च-

१ बौधायनसूत्रे.। २ ऋ० सं० ८.७.१७.।३ ब्रह्मसूत्रेतृतीया ०। ४ जैमिनिसूत्रे प्रथमाध्याये. ५ तै. सं१. १. ८-१६ ऋ० सं०६.३.३९.। ७ तै० सं० ६.३.१।

न्ति । ननुबुद्धस्यार्थस्यप्रमादादिकविस्मरणपरिहारायमन्त्रेणस्मारणमस्त्वित्याशंक्यान्यंदोषंसूत्र-यति—अविद्यमानवचनादिति ४ चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्येतिमन्त्र-आम्नायते नखलुचतुःशृङ्गत्वाद्युपेतंकिञ्चिद्यज्ञसाधनंविद्यते यन्मन्त्रपाठेनानुस्मर्यते नन्वीदृशी काचिद्देवतास्यादित्याशङ्क्यान्यंदोषंसूत्रयति—अचेतनेअर्थबन्धनादिति ५ ओषधेत्रायस्वैनं शृणोतग्रावाणइत्यादावचेतनेद्रव्येचेतनोचितंरक्षणश्रवणाद्यर्थंबध्नाति सचायुक्तः-नन्वभिमानि-व्यपदेशइतिवैयासिकशास्त्रेसूत्रितत्वात् ओषध्याद्यभिमानिचेतनदेवतात्रविवक्ष्यतामित्याशङ्क्य दोषान्तरंसूत्रयति—अर्थविप्रतिषेधादिति ६ अदितिर्द्यौरदितिरन्तरिक्षमितिमन्त्रआम्नायते । यदे-वद्यौस्तदेवान्तरिक्षमित्ययमर्थोविप्रतिषिद्धः एकएवरुद्रः सहस्राणिसहस्रशोयेरुद्राइत्यादिकम-प्युदाहर्तव्यम् ।ननुत्वमेवमाताचपितात्वमेवेत्यादिवदन्तरिक्षादिरूपत्वेनादितिःस्तूयते एवमेकस्या-पिरुद्रस्ययोगसामर्थ्याद्बहुरूपस्वीकारोऽस्तु ततोनार्थविप्रतिषेधइत्याशङ्क्यदोषान्तरंसूत्रयति-स्वाध्यायवदवचनादिति ७ पूर्णिकानामकाचिद्दोषिदवघातंकरोति तत्समीपेमाणवकःस्वा-ध्यायग्रहणार्थंकदाचिदवघातमन्त्रमधीते नचतस्यार्थप्रकाशनविवक्षास्ति यतिमुसलप्रहारंतस्य मन्त्रस्यापठ्यमानत्वात् अक्षरग्रहणायैवतंमन्त्रमन्यांश्चमन्त्रानभ्यस्यति तत्रस्वाध्यायकालेपठितो-ऽप्यवघातमन्त्रोयथापूर्णिकांप्रतिस्वार्थंनब्रूते तथाकर्मकालेऽपिस्वार्थंनवक्ष्यति । ननुतत्रमाणवक-स्यार्थविवक्षानास्ति पूर्णिकाप्यवबोद्धुमक्षमा कर्मणित्वध्वर्योरर्थविवक्षाविद्यते बोधश्चसंभवती-त्याशङ्क्यदोषान्तरंसूत्रयति—अविज्ञेयादिति ८ केषांचिन्मन्त्राणांअर्थोविज्ञातुंनशक्यते तद्यथा अम्यक्सातइन्द्रऋष्टिरस्मेइत्येकोमन्त्रः।सृण्येवजर्भरीतुर्फरीतूइत्यपरोमन्त्रः ।ननु ईदृशमन्त्रार्थबो-धायैवनिगमनिघण्टुनिरुक्तव्याकरणानिप्रवृत्तानीत्याशङ्क्यदोषान्तरंसूत्रयति-अनित्यसंयोगान्म-न्त्रानर्थक्यमिति९ किन्तेकृण्वन्तिकीकटेष्वितिमन्त्रेकीकटोनामजनपदआम्नातः । तथानैचाशाखं नामनगरं प्रमगन्दोराजेत्येतेअर्थाअनित्याआम्नाताः।तथासतिप्राक्प्रमगन्दान्नायंमन्त्रोभूतपूर्वइति गम्यते । तदेवमेतैस्तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वंनास्ति किन्तूच्चारणाददृष्टा-र्थाएवेतिपूर्वःपक्षः। तत्रसिद्धान्तंसूत्रयति—अविशिष्टस्तुवाक्यार्थइति१०तुशब्देनमन्त्राणामदृष्टा-र्थमुच्चारणमात्रंवारयति क्रियाकारकसंबन्धेनप्रतीयमानोवाक्यार्थोलोकवेदयोरविशिष्टःतथास-ति यथालोकेऽर्थप्रत्यायनायैववाक्यमुच्चार्यते तथावैदिकेयागप्रयोगेऽपिद्रष्टव्यम् मन्त्रेणप्रकाशि-तस्त्वर्थोऽनुष्ठातुंशक्यते नत्वप्रकाशितः तस्मान्मन्त्रोच्चारणस्यार्थप्रकाशनरूपंदृष्टमेवप्रयोजनम् । ननु अग्निरसिनारिरसीत्यारभ्यत्रैष्टुभेनत्वाछन्दसाददइतिमन्त्रआम्नातेः तेनैवमन्त्रेणप्रतीतेप्यस्या-

---

१ ऋ० सं०३.८ १०।  २ ऋ०सं० १.६.१६.।  ३ ऋ० सं० ३. ३. २१.।
४ कितेरण्वन्तीतिमन्त्रेएव.।  ५ तै० सं०४.१.१.।

दाने पुनर्ब्राह्मणेनतां चतुर्भिरभ्रिमादत्ते इतिविधीयते ।तदेतद्विधानंतत्पक्षेप्यर्थंस्याद् इत्याशङ्क्योत्तरंसूत्रयति—गुणार्थेनपुनःश्रुतिरिति ११ मन्त्रेणप्रतीतस्यैवार्थस्यब्राह्मणेयत्पुनःश्रवणंतदेतच्चतुः

---

१ तै०सं० ५. १. १. तैत्तिरीयशाखायांसंहिताकतिपयब्राह्मणभागमिश्रिता ब्राह्मणमपिकतिपयमंत्रभागमिश्रितं तत्सारस्वतपाठानुसारेणेतिज्ञातव्यम् । अमिश्रितपाठस्तुसंहिताब्राह्मणयोःसत्याषाढगृह्योक्तकांडानुक्रमानुसारेणबोद्धव्यः । तदुक्तंसंस्काररत्नमालायाम्-कांडानांसंकीर्णत्वेनयथाकांडमिदानीमध्ययनासंभवात्कांडानुक्रमणिकायांसारस्वतपाठस्याप्यभ्यनुज्ञातत्वाच्च सारस्वतपाठेनैवेदानीमध्ययनमस्ति सारस्वतकथाचेतिहासपुराणादौप्रसिद्धा साकांडनिरूपणावसरेसंस्काररत्नमालायामुपन्यस्ता—यथाब्रह्मसभायांदुर्वासाःसामगायन्नास । तंखलुतेजसाक्रूरंदृष्ट्वासभामध्येसरस्वत्यस्मयत् । ततःक्रुद्धोमुनिःसरस्वतींशशाप मर्त्ययोनौप्रजायस्वेति । ततस्तंदेवीप्रसादयामास भगवन्विप्रगृहेप्रजायेयमिति । ततःसमुनिस्तथेत्युक्त्वाजगाम । ततोदेव्यात्रेयगृहेजायत । ततोवेदविदंभर्तारंप्राप्यविद्यानिधिंपुत्रंकृतोपनयनंपितासारस्वतंवेदमध्यापयामासयथावृद्धक्रमेण ॥ ततस्तं बालत्वादल्पमेधसंपितातादयामासपृष्ठेवेणुदलेन । ततःसोरोदीत्सापितंदृष्ट्वापुत्रमालिंग्यातिदुःखिताबभूव । अश्रुपूर्णंतंवागीशानिवार्यचपुनः ततःसाचिंतयामासयस्याःकस्याःसुतोनहि । प्राप्यमांताड्यतेबालोममप्राणप्रियःसुतः।ततश्चतुःषष्टिकलाः सर्वान्वेदान्सांगान्ब्रह्मविद्यापर्यंतान्सारस्वतायसरस्वत्युपादिशत् । क्षुत्पिपासानिवर्त्यंवायुधारणंचोपादिशत् । ततःसंपूर्णविद्योसौकुरुक्षेत्रेवसन्मुनिः । तपस्तेपेमहाभागोदेवैरपिसुदुष्करम् ॥ ततःकालेनमहताह्यनावृष्टिरभूत्किल । कुरुक्षेत्रेसारस्वतंतदृष्टपुष्टमंतर्वायुंधार्यमाणंतमृषयोददृशुः । तमूचुर्मुनयःसर्वेशाकंदेहीतिनःप्रभो । अलंशाकेनभोविप्रायदिशाकंभवेद्भुवि । सारस्वतोमुनिःप्राहतेभ्योदेहीतिचंडिकाम् । सुतशाकंप्रदास्यामियदिशाकेनतेह्यलं । शाकंभरीतिमुनिनाप्रसन्नाकारिवैतदा । शाकाहारास्ततःसर्वेमुनयःकृतजीविताः । दुर्भिक्षेविनिवृत्तेप्यध्ययनंनास्मरंस्तदा । अन्योन्यमभिजग्मुस्तउच्चरंतश्चनकंचन । ततोविस्मृतवेदास्तेबभूवुर्मुनयोभृशम् । ततोतिदुःखितेषुमुनिषुनारदेनोक्तम् । सारस्वतंकृतसर्ववेदाध्ययनंगत्वा अध्ययनंकुरुध्वमिति । ततस्तेसारस्वतंप्रार्थयामासुः । अध्यापनंकुरुष्वभगवन्निति । ततःसारस्वतःप्रार्थितश्चतुःषष्टिमुनिगणसहस्रेभ्यश्चतुःषष्टिसहस्रवेदानध्यापयामास । ततस्तान्वेदांस्तच्छाखिनःसाकल्येनाधीतवंतः । तैत्तिरीयशाखिनस्तु साकल्येनाध्ययनंकृत्वासर्ववेदविलक्षणांतैत्तिरीयशाखांदृष्ट्वान्योन्यमूचुः अहो अतीवविस्मयोस्माकंसर्वविलक्षणांशाखामध्यापयतिस्मास्मान्मूढान्कृत्वानिर्मितात्म ततःसर्वेतैत्तिरीयशाखिनःसंभूयसारस्वतमूचुः नायंवेदस्त्वयाध्यापितःसर्ववेदविलक्षणत्वादिति । ततःसारस्वतःसर्वान्तैत्तिरीयान्मुनीन्प्राहवचः यद्ययंनभवेद्वेदःप्रतिज्ञांतुकरोम्यहम् । अग्निप्रवेशनंकुर्यांप्रपंतोवाचमीरिताम् । ततूचुर्मुनयःसर्वेवचनंयत्त्वयोदितम् । यदिवेदक्रमंविप्रप्रतिज्ञांकुर्महेत्रयम् । ततःसारस्वतेनसहिताःसर्वेमुनयःतत्रतत्रमुनीन्गत्वानिर्णेतुंनशक्नुमइतितेरुक्ताब्रह्माणंजग्मुर्यथायथंप्रतिज्ञानिवे-

संख्यालक्षणगुणविधानार्थत्वेनोपयुज्यते एतस्य विधानस्याभावे चतुर्णां मन्त्राणां मध्ये येन केनाप्येकेनाभिरादीयेत । ननु इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्र मन्त्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते तदेतत्कथमिवेत्यर्थमित्याशङ्क्योत्तरं सूत्रयति—परिसंख्येति १२ गर्दभाभिधानीं नादत्त इति निषेधः परिसंख्या तदर्थमिदं ब्राह्मणवाक्यम् । ननु परिसंख्यायां त्रयो दोषाः प्राप्नुयुः आदत्त इति शब्दः रशनादानलक्षणं स्वार्थं जह्यात् तन्निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येतेति त्रयो दोषाः । मैवं गर्दभरशनाया अप्राप्तत्वात् तथाहि त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या मन्त्रेणानेनादानं कुर्यादिति वाक्यं परिकल्प्येत तेन च वाक्येन मन्त्रादानयोः सम्बन्धे सिद्धे सति पश्चात्किंविषयमादानमिति वीक्षायां लिङ्गाद्रशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या सा च विलम्ब्यते इत्यश्वाभिधानीमिति प्रत्यक्षेण वाक्येन मन्त्रादानयोः संबन्धे सति लिङ्गाद्रशनामात्रे प्राप्तमादानमश्वाभिधानीमिति श्रुत्या विशेषे व्यवस्थाप्यते ततो मन्त्रस्य निराकाङ्क्षत्वात् गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः अत एव निषेधार्थो न कल्प्यते स्वार्थश्च न त्यज्यते तत्र कुतो दोषत्रयम् ईदृशमप्राप्तिरूपमेव गर्दभरशनाया निवारणमभिप्रेत्य परिसंख्येति सूत्रितम् । ननु उरु प्रथस्वेति प्रथयतीति ब्राह्मणवैयर्थ्यं तद्वदस्य अमेवेत्याशङ्क्योत्तरं सूत्रयति—अर्थवादो वेति १३ वाशब्दो वैयर्थ्यं वारयति अस्त्यत्रार्थवादः यज्ञपतिमेव तत्प्रथयतीति तेनार्थवादेन संबन्धाय ब्राह्मणे विधिः पठ्यते । ननु प्रथयतीत्यनेनैव विधिशब्देन प्रथनमनूद्य यज्ञपतिमेवेत्यादिनार्थवादेन स्तोतव्यं तदेव तु प्रथनं कुतः प्राप्तमित्याशङ्क्योत्तरं सूत्रयति—मन्त्राभिधानादिति १४ अध्वर्युः पुरोडाशमुद्दिश्य मन्त्रे प्रथस्वेत्येवमभिधत्ते तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तम् यथा लोके यः कुर्विति ब्रूते स कारयत्येव तथात्रापि यः प्रथस्वेति ब्रूते स प्रथयत्येव यदुक्तम् अग्निर्मूर्धादिव इति पाठक्रमनियमात् अदृष्टार्थो मन्त्र इति तत्रोत्तरं सूत्रयति—अविरुद्धं परमिति १५ परं द्वितीयसूत्रोक्तमस्मत्पक्षेऽप्यविरुद्धम् न हि वयं पाठक्रमनियमाददृष्टं निवारयामः किं तर्हि मन्त्रोच्चारणेन जायमानमर्थप्रत्यायनं

---

रिताः । ब्रह्माभिर्मुनिभिरागत्य तमाह—सन्यं न निश्चातं तत्र भवतां सारस्वतेन सारस्वतो वेदपाठः प्राप्त इतीनत्क्रमेणाध्येतव्यः अन्यथाध्ययनं कर्तुं नास्तीति तनस्तेषु तरामुनीन्माह सत्यं पाठक्रमेणाध्ययनक्रमो भवतीति तस्मात्सर्वजितं नाग्निचयनं कर्तव्यमिति तीतिहासः ।

१ तै० सं० ५.१.२. । इमामगृभ्णन्रशनामृतस्येत्यादि चतुर्थकाण्डे प्रथमाध्याये द्वितीयानुवाके मन्त्राः पठिताः तस्य इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति पञ्चमकाण्डे प्रथमप्रपाठके द्वितीयानुवाके ब्राह्मणम् । २ तै० ब्रा० ३.२.८. ।

दृष्टप्रयोजनत्वात् नोपेक्षितव्यमित्येतावदेवब्रूमः । ननुमोक्षणीरासादयेतिमन्त्रोबुद्धमेवार्थंशास्ति तदयुक्तम् सोपानत्कस्यपादस्योपानदन्तरासंभवादित्युक्तमितिचेत् तस्यपरिहारंसूत्रयति—सम्प्रैषकर्मणोगर्हानुपलम्भःसंस्कारत्वादिति १६ सम्प्रैषकर्मणोगर्हात्वदुक्तदोषोनोपलभ्यते बुद्धस्याप्यर्थस्यमन्त्रेणैवानुस्मरणेसतिनियमात् दृष्टलक्षणस्यसंस्कारस्यसद्भावात् । यच्चोक्तम् चत्वारिशृङ्गेतिमन्त्रोऽसन्तमेवार्थमभिधत्तइति तस्योत्तरंसूत्रयति—अभिधानेऽर्थवादइति १७ असतोऽर्थस्याभिधायकेवाक्येगौणस्यार्थस्योक्तिर्द्रष्टव्या तद्यथा चत्वारोहोत्रध्वर्यूद्गातृब्रह्माणोस्यकर्मणःशृङ्गाणि प्रातःसवनादयस्त्रयःपादाः पत्नीयजमानौद्वेशीर्षे गायत्र्यादीनि सप्तछन्दांसिहस्ताः ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधाबन्धनं कामान्वर्षतीतिवृषभः रोरवीतिस्तोत्रशस्त्रादिशब्दान्पुनःपुनःकरोति महोदेवःसोयंप्रौढोयज्ञरूपोदेवोमर्त्यानाविवेशेति । मनुष्याएवात्राधिकारिणः लोकेप्येवंगौणप्रयोगाद्दृश्यन्ते चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवलकेशिनीत्येवंनद्याःस्तूयमानत्वात् एवमोषधेत्रायस्व शृणोतग्रावाणइत्याद्यचेतनसम्बोधनानिस्तुतिपरत्वेनयोजनीयानि यस्मिन्वपनेओषधिरपित्रायतेतत्रवपनकर्तात्रायतइतिकिमुवक्तव्यम् तथा ग्रावाणोपिप्रातरनुवाकंशृण्वन्ति किमुतविद्वांसोब्राह्मणाइत्यादिमन्त्राणामभिप्रायः योप्यदितिर्द्यौरदितिरन्तरिक्षमितिविप्रतिषेधउक्तः तस्योत्तरंसूत्रयति—गुणादविप्रतिषेधःस्यादिति १८ यथात्वमेवपितात्वमेवमातेत्यत्रगौणप्रयोगादविरोधः तद्वत् एवमेकरुद्रदेवत्येकर्मण्येकोरुद्रः शतरुद्रदेवत्येशतंरुद्राइत्यविरोधः । यदप्युक्तम् स्वाध्यायमधीयानोमाणवकःपूर्णिकायाअवहतिं नमकाशयितुमिच्छति तत्रोत्तरंसूत्रयति—विद्यावचनमसंयोगादिति १९ वेदविद्याग्रहणकालेऽर्थस्ययदवचनंतद्यज्ञसंयोगादुपपद्यते नहिपूर्णिकायाअवघातोयज्ञसंयुक्तः नापिमाणवकोयज्ञमनुतिष्ठति अतोयज्ञानुपकारान्नतत्रार्थविवक्षा । यदप्युक्तम् अम्यक्सातइन्द्र सृण्येवजर्भरीतुर्फरीतूइत्यादौअर्थस्यज्ञातुमशक्यत्वान्नास्त्येवार्थइति तत्रोत्तरंसूत्रयति—सतःपरमविज्ञानमिति २० विद्यमानएवार्थःप्रमादालस्यादिभिर्नज्ञायतेतेपांनिगमनिरुक्तव्याकरणवशेनधातुतोऽर्थःपरिकल्पयितव्यः तद्यथा जर्भरीतुर्फरीतूइत्येवमादीन्यश्विनोरभिधानानि तेषुहिद्विवचनान्तत्वंलक्ष्यते आश्विनंचेदंसूक्तम् अश्विनोःकाममप्राइतिदर्शनात् एतदेवाभिप्रेत्यनिरुक्तकारोव्याचष्टे—जर्भरीभर्तारावित्यर्थः तुर्फरीतूहन्तारावित्यर्थइति एवमम्यक्सातइत्यादावप्यून्नेयम् । यदप्युक्तम् प्रमगन्दाद्यनित्यार्थसंयोगान्मन्त्रस्यानादित्वंनस्यादिति तत्रोत्तरंसूत्रयति—उक्त-

---

१ तै० ब्रा० ३. २. ९. । २ ऋ० सं. ३. ८. १०. । ३ सृण्येवजर्भरीइतिमन्त्रोयस्मिन्सूक्तेवर्ततेतत् ( ऋ० सं० ८. ६. २. ) । ४ नि० १३. ५. ।

श्चानित्यसंयोगइति २१ प्रथमपादस्यान्तिमाधिकरणे सोयमनित्यसंयोगदोषउक्तःपरिहृतः त-
थाहि तत्र पूर्वपक्षेवेदानांपौरुषेयत्वंवक्तुं काठकंकालापकमित्यादिपुरुषसंबन्धाभिधानंहेतूक्त्वा-
नित्यदर्शनाच्चेतिहेत्वन्तरंसूत्रितम् तस्यायमर्थः—बबरःप्रावाहणिरकामयतेत्यनित्यानांबबरा-
दीनामर्थानांदर्शनात् ततःपूर्वमसत्वात्पौरुषेयोवेदइतितस्योत्तरमेवंसूत्रितम्—परंतुश्रुतिसामान्य-
मात्रमिति तस्यायमर्थः—यत्काठकादिसमाख्यानंतत्प्रवचननिमित्तम् यत्तुपरंबबराद्यनित्यदर्श-
नं तच्छब्दसामान्यमात्रं नतुतत्रानित्योबबराख्यःकश्चित्पुरुषोविवक्षितः किन्तु बबरइतिशब्दानु-
कृतिः तथासतिबबरइतिशब्दंकुर्वन्वायुरभिधीयते सचप्रावाहणिः प्रकर्षेणवहनशीलः एवम-
न्यत्राप्यूहनीयम्। तदेवंकस्यचिदपिदोषस्यासंभवात् विवक्षितार्थामन्त्राःस्वार्थप्रकाशनायैवप्र-
योक्तव्याः। नन्वर्थप्रकाशनार्थत्वेसतिदृष्टंप्रयोजनंलभ्यतइतियुक्तिमात्रमिदमुच्यते नत्वेतदुपोद्ब-
लकंकिंचिच्छ्रौतंलिङ्गंपश्यामइत्याशङ्क्योत्तरंसूत्रयति—लिङ्गोपदेशश्चतदर्थवदिति २२ आग्ने-
य्याग्नीध्रमुपतिष्ठतइतिश्रूयते। तस्यायमर्थः—अग्निर्देवतायस्याऋचः सेयमाग्नेयी तयाग्नीध्रस्था-
नमुपतिष्ठेतेति अत्रह्युपस्थानमुपदिशद्ब्राह्मणं अग्नेनयेत्यनयोपतिष्ठेतेतिमन्त्रप्रतीकंपठित्वानोप-
दिशति किंत्वाग्नेयीत्वलिङ्गेनोपदिशति यदातस्यामृच्यग्निःप्राधान्येनप्रतिपाद्यते तदातस्याऋ-
चोग्निर्देवताभवति तथासत्याग्नेय्येतिदेवतावाचितद्धितान्तनिर्देशउपपद्यते तस्मादयमुपदेशस्त-
न्मन्त्रवाक्यमर्थवदितिबोधयति अतोविवक्षितार्थत्वात् अर्थप्रत्यायनार्थंप्रयोगकालेमन्त्रोच्चारणम्
तस्मिन्नेवविवक्षितार्थत्वेलिङ्गान्तरंसूत्रयति—ऊहइति २३ प्रकृतावाम्नातस्यमन्त्रस्यविकृतौसम-
वेतार्थत्वायतदुचितपदान्तरस्यप्रक्षेपेणपाठऊहः तद्यथा अन्वेनंमातामन्यतामनुपितानुभ्रातेति
प्राकृतपशुविषयोमन्त्रपाठः तस्यचमन्त्रस्यविकृतौपशुद्वयेसति अन्वेनौमातामन्यतामित्यूहः प-
शुबहुत्वेसति अन्वेनान्मातामन्यतामित्यूहःकर्तव्यः एतन्मन्त्रव्याख्यानरूपंब्राह्मणमेवमाम्नायते-
नमातावर्धतेनपितेति तत्रेदंचिन्तनीयम् किमत्रशरीरवृद्धिर्निषिध्यतेआहोस्विच्छब्दवृद्धिरिति।
एकवचनान्तस्यमातृशब्दस्य मातराविति द्विवचनान्तत्वेनवा मातरइतिबहुवचनान्तत्वेनवाप्रयोगः
शब्दवृद्धिः तत्रनतावच्छरीरवृद्धिर्निषेद्धुंशक्यते बाल्यकौमारयौवनादिवयोनुसारेणतद्वृद्धेःप्र-
त्यक्षत्वात् अतःशब्दवृद्धिनिषेधएवपरिशिष्यते मातृशब्दपितृशब्दयोर्निषेधाकारेणवृद्धिनिषेधा-
त् इतरस्यैनमितिशब्दस्यार्थानुसारिणीवृद्धिःसूचिताभवति तत्रयद्यर्थोनविवक्ष्येत तदापशुद्वि-
त्वेद्विवचनम् पशुबहुत्वेबहुवचनंचकथमुच्येत तस्माद्विवक्षितार्थामन्त्राः। तस्मिन्नेवार्थेलिङ्गान्त-
रंसूत्रयति—विधिशब्दाच्चेति २४ मन्त्रव्याख्यानरूपोब्राह्मणगतःशब्दोविधिशब्दइत्युच्यते सचे-

---

१ तै॰ सं॰ १. २. ४. १

निन्द्यते तद्वत् एवंतर्हिअजादेर्यथावस्तुतःपशुत्वमस्ति तथाजर्तिलादिविधिरत्रनिन्द्यमानोपि क्वचिच्छाखान्तरेभवेदितिचेत् भवतुनाम प्रामाण्यमपितच्छाखाध्यायिनंप्रतिभविष्यति यथा गृहस्थाश्रमेनिषिद्धमपिपरान्नभोजनंआश्रमान्तरेषुप्रामाणिकम् तद्वत् अनेनन्यायेनसर्वत्रप-रस्परविरुद्धौविधिनिषेधौपुरुषभेदेनव्यवस्थापनीयौ यथामन्त्रेषुपाठभेदःशाखाभेदेनव्यवस्थि-तत्वात् तैत्तिरीयाःवायवस्थोपायवस्थेतिमन्त्रमामनन्ति वाजसनेयिनस्तूपायवस्थेत्येनंभागंनाम-नन्ति प्रत्युतशतपथब्राह्मणेसभागोनूद्यनिराकृतः तथासूक्तवाकमन्त्रेशाखान्तरपाठंनिराकृत्यपा-ठान्तरंतैत्तिरीयाआमनन्ति यद्ब्रूयात्सूपावसानाचस्वध्यवसानाचेतिप्रमायुकोयजमानःस्यात् इ-तिनिराकरणंसूपचरणाचस्वधिचरणाचेत्येवब्रूयादितिपाठान्तरोपदेशः तत्रानुष्ठातृपुरुषभेदेनव्य-वस्था तद्विधिषुद्रष्टव्या। षोडशिग्रहणादिदूषणंतु अश्रुतमीमांसावृत्तान्तस्यतवैवशोभते पूर्वमी-मांसायां दशमाध्यायस्याष्टमपादेषोडशिनोग्रहणाग्रहणविकल्पोनिर्णीतः द्वितीयस्याध्यायस्य प्रथमपादेकालान्तरभाविफलसिद्ध्यर्थमपूर्वंनिर्णीतम् तद्वदुत्तरमीमांसायांप्रथमाध्यायस्यचतुर्थ-पादेकारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेरित्यस्मिन्सूत्रेजगत्कारणेपरमात्मनिश्रुतिविप्रतिप-त्तिर्निराकृता द्वितीयस्याध्यायस्यप्रथमेपादेआरम्भणाधिकरणेत्वसद्व्यपदेशान्नेतिचेत् नधर्मा-न्तरेणवाक्यशेषादितिसूत्रेतैत्तिरीयवाक्यगतस्यासच्छब्दस्यनशून्यपरत्वम् किन्त्वव्यक्तावस्था-परत्वमितिनिर्णीतम् तथा जैमिनिश्चोदनासूत्रेविधिवाक्यंधर्मेप्रमाणमितिप्रतिज्ञायौत्पत्तिकसूत्रेत-त्प्रामाण्यंसमर्थयामास व्यासोपिशास्त्रयोनित्वादितिसूत्रेवेदान्तानांब्रह्मणिप्रामाण्यंप्रतिज्ञाय त-त्तुसमन्वयादिसूत्रैःसमर्थयामास तस्मादमीमांसकस्यतवपूर्वोक्तस्थानेएवंविधन्यायोदुष्परिहरः अतोविधिभागस्यप्रामाण्यंसुस्थितम्। अर्थवादभागस्यप्रामाण्यंमहतापयत्नेनजैमिनिःसमर्थ-यामास तत्सूत्राणिव्याख्यास्यन्ते तत्रपूर्वपक्षंसूत्रयति—आम्नायस्यक्रियार्थत्वादानर्थक्यमत-दर्थानांतस्मादनित्यमुच्यतइति १ आम्नायस्यसर्वस्यक्रियाप्रतिपादनायप्रवृत्तत्वात् अक्रिया-प्रतिपादकानामर्थवादानांनास्तिकश्चिद्विवक्षितःस्वार्थः तेचार्थवादाएवमाम्नायन्ते—सोरोदीद्य-दरोदीत्तद्रुद्रस्यरुद्रत्वम्। सआत्मनोवपामुदक्खिदत्। देवैर्वैदेवयजनमध्यवसायदिशोनप्राजा-नन्निति। यस्मादीदृशस्यवाक्यस्यविवक्षितोऽर्थःकश्चिदपिनास्ति तस्मादिदंवाक्यमनित्य-मुच्यते यद्यप्यनादित्वात्स्वरूपेणानित्यत्वंनास्ति तथापिधर्मावबोधनलक्षणस्यनित्यकार्य-स्याभावात् अनित्यैःकाव्यालापैःसमानत्वादप्रमाणमित्यर्थः। ननूदाहृतानामर्थवादानामनुष्ठे-येधर्मेप्रामाण्याभावेऽपिस्वार्थेप्रामाण्यमस्तु तत्प्रत्यायकत्वेनस्वतःप्रामाण्यस्यापवदितुमशक्य-

१ जैमिनिसूत्रेप्रथमाध्यायस्यद्वितीयपादेएतदादिअष्टादशसूत्राणि। २ तै. सं. १-५१.। ३ तै. सं. २-१-१.। ४ तै. सं. ६-१-५.।

त्वात्   इत्याशंक्यान्येष्वपि केषुचिदर्थवादेषु मानान्तरविरोधदर्शनादप्रामाण्ये सति तद्दृष्टान्तेन सर्वेषामप्यर्थवादानामप्रामाण्यमित्यभिप्रेत्य सूत्रयति—शास्त्रदृष्टविरोधाच्चेति २ शास्त्रविरोधो दृष्टविरोधः शास्त्रदृष्टविरोध इति त्रिविधो विरोधोऽर्थवादेषूपलभ्यते तथाहि स्तेनं मनोऽनृतवादिनी वागित्यत्र श्रूयमाणं मानसं चौर्यं वाचिकमनृतवदनं च प्रतिषेधशास्त्रेण विरुद्धम्. तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इत्यत्र दृष्टविरोधः तथा न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेत्यत्रापि प्रत्यक्षविरोधः को हि तद्वेद यद्यमुष्मिँल्लोके ऽस्ति वा न वेत्यत्र शास्त्रदृष्टेन विरोधः स्वर्गकामो यजेतेत्यादिशास्त्रेणामुष्मिकं फलं दृश्यते तस्माद्विरोधादर्थवादानामप्रामाण्यम्। ननु सोऽरोदीदित्यादीनां निष्प्रयोजनत्वात् स्तेनं मन इत्यादीनां च विरोधात् अप्रामाण्येऽपि फलप्रतिपादकानामर्थवादानां तदुभयवैलक्षण्यादस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—तथाफलाभावादिति ३. यथा मानान्तरविरुद्धमर्थवादैरुक्तम् तथा फलमप्यविद्यमानमेव तैरुच्यते तथाहि गर्गत्रिरात्रं प्रकृत्य श्रूयते—शोभतेऽस्य मुखं य एवं वेदेति दर्शपूर्णमासयोर्वेदाभिमर्शनं प्रकृत्य श्रूयते—आऽस्य प्रजायां वाजी जायते य एवं वेदेति न च वयं वेदितॄणां तत्फलमुपलभामहे न चैहिकफलवाक्यानां विसंवादादप्रामाण्येऽपि आमुष्मिकफलवाक्यानामस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—अन्यानर्थक्यादिति ४ एवं हि श्रूयते पूर्णाहुत्या सर्वान्कामानवाप्नोति पशुबन्धयाजी सर्वाँल्लोकानभिजयति तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेति। तत्राग्न्याधेयगतया पूर्णाहुत्या सर्वकामप्राप्तेरन्यान्यग्निहोत्रादीन्युत्तरकालीनानि अनर्थकानि स्युः तथा निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयात् ज्योतिष्टोमादीनामानर्थक्यम् अध्ययनकालीनेनैवाश्वमेधवेदनेन ब्रह्महत्यादितरणात् तदनुष्ठानं च व्यर्थं स्यात् तस्मादामुष्मिकफलवाक्यानामप्यप्रामाण्यम्. ननु माभूत्फलवाक्यानां प्रामाण्यम् तथापि निषेधवाक्येषु विरोधानुपलम्भात् अस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—अभागिप्रतिषेधादिति ५ न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यत्रान्तरिक्षस्य च दिवश्च प्रतिषेधभागित्वं नास्ति तत्र चयनप्रसक्तस्यैवाभावात्, माभूत्तर्हि निषेधानां प्रामाण्यम् बबरः प्रावाहणिरकामयतेत्यादीनां पूर्वपुरुषवृत्तान्ताभिधायिनां विरोधानुपलम्भात् अस्तु प्रामाण्यमित्याशङ्क्योत्तरं सूत्रयति—अनित्यसंयोगादिति ६ बबरादिस्वरूपेणानित्येनार्थेन संयोगे सत्यस्य वाक्यस्य ततः पूर्वमभावात् कादम्बरीवाक्यवत् पौरुषेयत्वं प्रसज्येत किं बहुना सर्वथा निरालम्ब्यैवार्थवादानां प्रामाण्यमिति पूर्वपक्षः सिद्धान्तं सूत्रयति—विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति ७ तु शब्दोऽर्थवादानामप्रामाण्यं वारयति वायुर्वै क्षेपिष्ठेत्येवमादीनामर्थवादानां वायव्यं श्वेतमालभेतेत्यादिना विधिना सहैकवाक्यत्वात् अस्ति धर्मे प्रामाण्यम्।

---

१ तै. सं. १-७-४।

नचविधिवाक्यस्यार्थवादनैरपेक्ष्येणपदान्वयसम्पूर्तेस्तत्रार्थवादानांनास्त्युपयोगइतिशङ्कनीयम् ते ह्यर्थवादाःपुरुषप्रवृत्तिमाकांक्षतांविधीनांस्तुत्यर्थत्वेनोपयुक्ताःस्युः स्तुत्याचप्रलोभितःपुरुषस्तत्र प्रवर्तते। ननुअर्थवादानांप्रमादपठितत्वेनोपेक्षणीयत्वात् किमनेनैकवाक्यताप्रयासेनेत्याशङ्क्याह- तुल्यंचसाम्प्रदायिकमिति ८ अनध्यायवर्जनादिनियमपुरःसरंगुरुसम्प्रदायादध्ययनंयत्तत्सांप्र- दायिकम् तच्चविधीनामर्थवादानांचसमानम् तस्माद्विधिवदेतेषामपिप्रमादपाठोनभवति। ननुशा- स्त्रदृष्टविरोधान्नेत्येवमर्थवादेष्वनुपपत्तिरुक्तेत्याशङ्क्याह—अप्राप्ताचानुपपत्तिःप्रयोगेहिविरोधः- स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यतेइति ९ तत्रवार्तिकेत्वेतत्सूत्रमध्याहृत्यत्रिधाव्याख्या- तम् अप्राप्तांचानुपपत्तिं अप्राप्ताचानुपपत्तिः अप्राप्तंचानुपपत्तिमिति। स्तेनंमनइत्यादौशास्त्र- विरोधाद्यनुपपत्तिरप्राप्ता प्रयोगस्यानुक्तत्वात् प्रयोगेहिस्तेयादीनामुच्यमानेशास्त्रविरोधःस्यात् नचात्रस्तेयंकर्तव्यमितिप्रयोगउच्यते किन्तु स्तेयशब्दार्थउच्यते नचस्तेयशब्दार्थःप्रयोगभूतः तस्माच्छब्दार्थवचनमात्रेणशास्त्रविरोधाभावात् अयमर्थवादउपपन्नएव। ननुस्तुत्यर्थेनविधी- नांस्युरितियदुक्तम् तदसत् वैयधिकरण्यात् वैतसशाखयाचावकाभिश्चविकर्षत्यापोवैशान्ता- इत्यत्रवेतसावकेविधीयेते आपश्चस्तूयन्ते इतिवैयधिकरण्यमित्याशङ्क्याह—गुणवादस्त्विति १० तुशब्दोवैयधिकरण्यदोषंवारयति गुणवादोह्यत्रविवक्षितः यथालोकेकाश्मीराभिजनोदे- वदत्तः काश्मीरदेशेपुस्तूयमानेपुस्तुतमात्मानंमन्यते एवमत्रापि अब्जोजातेवेतसावकेअप्सुस्तुतासु तेएवस्तुतेभवतः शान्ताभ्योऽब्भ्योजातत्वात् वेतसावकेस्वयमपिशान्तेसत्यौयजमानस्यानिष्टंशमय- तइत्येतादृशस्यगुणस्यवादोत्राभिप्रेतः। सोरोदीदित्यत्रापिरजतस्यपतिताश्रुरूपत्वात् रजतदाने गृहेऽपिरोदनप्रसङ्गात् बर्हिपिरजतंनदेयमितितन्निषेधेनविधेयेनार्थवादस्यैकवाक्यत्वम् तत्ररज- तदानाभावेरोदनाभावरूपोगुणोऽत्रविवक्षितः तेनचगुणेनरजतदाननिवारणरूपोविधिःस्तूयते यद्यपिरजतस्याश्रुप्रभवत्वमत्यन्तमसत् तथापियथोक्तरीत्याविधेःस्तुतिःसम्पद्यते। यःप्रजाकामः पशुकामःस्यात् सएतंप्राजापत्यमजंतूपरमालभेतेत्ययंविधिः प्रजापतिर्वपोत्खेदेनस्तूयते यस्मा- त्प्रजापतिःस्ववपामप्युत्खिद्याग्नौप्रहृत्यततोजातंतूपरमजमात्मार्थमालभ्यप्रजाःपशूंश्चलब्धवान् । तस्मात्प्रजादिसंपादकोयंतूपरइतितूपरगुणस्यवादोऽत्रविवक्षितः। आदित्यःप्रायणीयश्चरुरित्ये- षविधिर्दिशोनप्राजानन्नित्यनेनदिङ्मोहेनस्तूयते यथेयमदितिर्देवतादिङ्मोहमप्यपनीयदिग्विशे- षंप्रापयति तथाबहुविधकर्मसमुदायरूपे सोमयागे अनुष्ठानविपर्यंभ्रममपनयतीतिकिमुवक्त- व्यमित्येयमदितिदेवतागतस्यगुणस्यवादोत्रविवक्षितः स्वकीयवपोत्खेदोदेवयजनाध्यवसानमात्रे- णदिङ्मोहश्चेत्युभयमस्तुवामावा सर्वथापिस्तुतिपरत्वमभ्युपगतवतामस्माकंनकिञ्चिद्धीयते। शि-

१ तै. सं. ५.४.४.। २ तै. सं. २.१.१.। ३ तै. सं. ६.१.७.। ४ तै. सं. ६.१.५.४.

खातेवर्धतेवत्सगुडूचींश्रद्धयापिबेत्यादावविद्यमानेनाप्यर्थेनलोकेस्तुतिदर्शनात् । अथपूर्वपक्षिणा
शास्त्रविरोधंदर्शयितुंयदुदाहृतं स्तेनंमनोनृतवादिनीवागिति तत्रोत्तरंसूत्रयति—रूपात्प्रायादिति
११ हिरण्यंहस्तेभवत्यथगृह्णातीत्येतंविधिंस्तोतुमयमर्थवादउच्यते यथा लोकेपि किश्चिदृषिणा-
देवदत्तएवपूजयितव्यइत्यत्रदेवदत्तपूजांस्तोतुमेवौदासीन्यमृषावुपन्यस्यते नतुपूज्यत्वमृषेर्वारयितु-
म् एवमत्रापिहस्तेहिरण्यग्रहणंप्रशंसितुंमनसःस्तेनरूपत्वंवाचोनृतवादित्वंचोपन्यस्यते तत्रगुण-
वादेनशब्दार्थोयोजनीयः यथास्तेनाःप्रच्छन्नरूपाएवंमनोपीतिप्रच्छन्नरूपत्वमत्रगुणः प्रायेण
वागनृतंवक्तीतिप्रायिकत्वंतत्रगुणः हस्तस्तुनप्रच्छन्नः नाप्यनृतबहुलः अतोहस्तेहिरण्यधारणं
प्रशस्तमितिस्तूयते । यदपिदृष्टविरोधायधूमएवाग्नेर्दिवाददृशेइत्यादिकंउदाहृतम् तत्रोत्तरंसूत्रय-
ति—दूरभूयस्त्वादिति १२ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिसायंजुहोति सूर्योज्योति-
र्ज्योतिःसूर्यःस्वाहेतिप्रातरिति एतौविधीस्तोतुंसोऽर्थवादः यस्मादर्चिर्दिवानदृश्यते तस्मात्सू-
र्यमन्त्रएवप्रातःप्रयोक्तव्यः यस्माद्रात्रावर्चिरेवदृश्यतेतस्मादग्निमन्त्रोरात्रौप्रयोक्तव्यःसूर्यमन्त्रश्च
दिवाइत्येवंतयोर्मन्त्रयोःस्तुतिः धूमार्चिषोरदर्शनोपन्यासस्तु दूरभूयस्त्वगुणनिमित्तः भूयसि
हिदूरेपर्वताग्रेवृक्षादयोऽपिनविस्पष्टंदृश्यन्ते किंतुतृणसादृश्येनवेषांदर्शनाभासएव तद्वदत्रापि ।
यदप्यन्यदृष्टविरोधायैवोदाहृतम् नचैतद्विद्मोवयंब्राह्मणावास्मोऽब्राह्मणावेति तत्रोत्तरंसूत्रय-
ति—त्र्यपराधात्कर्तुश्चपुत्रदर्शनादिति १३ प्रवरेप्रव्रियमाणेब्रूयाद्देवाःपितरइत्यस्यविधेस्ता-
वकोऽयमर्थवादः यदियजमानोदेवाःपितरइत्यादिमन्त्रेणप्रवरमनुमन्त्रयेत् तदानीमब्राह्मणोऽ-
पिब्राह्मणोभवेदित्यनुमन्त्रणस्यस्तुतिः नचैतद्विद्मइत्येतदज्ञानवचनंदुर्ज्ञानत्वगुणेनतत्रप्रयुज्यते य-
त्रस्त्रियाअपराधोभवति तत्रकर्तुरुत्पादयितुर्जारस्यापिपुत्रोदृश्यते अतः पत्युपपत्योरुभयोःपुत्र-
दर्शनात् स्वकीयंजन्मकीदृशमितिदुर्ज्ञानम् अनेनाभिप्रायेणप्रयुक्तत्वात् नास्तितत्रदृष्टविरोधः
नहितत्रदृश्यमानंस्वब्राह्मण्यमपवदितुंनचैतद्विद्मइत्युपन्यस्तम् । यदपिशास्त्रीयदर्शनविरोधायो-
दाहृतम् कोहितद्वेदयद्यमुष्मिंल्लोकेऽस्तिवानवेति तत्रोत्तरंसूत्रयति—आकालिकेप्सेति १४ दि-
क्ष्वतीकाशान्करोतीतिप्राचीनवंशस्यद्वारविधिः तस्यशेषोऽयंकोहिवद्वेदेतिधूमाद्युपद्रवपरिहारेण
प्रत्यक्षेणफलेनद्वारविधिःस्तूयते स्वर्गप्राप्तिरूपंतुफलमाकालिकम् अकालेभवमाकालिकम् विप्र-
कृष्टकालीनंनत्विदानींतनमित्यर्थः तस्येप्सातस्यप्राप्तुमिच्छा साच कोहितद्वेदेत्यनिश्चयोप-
न्यासेकारणम् यथाभाविकालीनःपौत्रप्रपौत्रादिवृत्तान्तोनिश्चेतुंनशक्यते तद्वत्स्वर्गप्राप्तिर्भावि-
कालीनेतिगुणयोगादनिश्चयोपन्यासः धूमादिपरिहारस्तुप्रत्यक्षत्वान्निश्चितइत्यभिप्रायः । यद-
प्यन्यदृष्टविरोधायोदाहृतम् शोभतेऽस्यमुखंयएवंवेदेति तत्रोत्तरंसूत्रयति—विद्याप्रशंसेति १५

१ ऐ. ब्रा.५-३१.।

सोऽयंगर्गत्रिरात्रविधेःशेषः तद्विषयंवेदनमपिमुखशोभाहेतुः किमुतानुष्ठानमितिस्तूयते यथाकर्णाभरणादिनामुखंशोभितंभवति एवंवेदितुरुत्साहेनविकसितंवदनंशोभितमिवशिष्यैरुद्वीक्ष्यते अतःशोभासादृश्यगुणयोगाच्छोभतइत्युच्यते। यदपिअन्यद्विरोधायोदाहृतम् आस्यमजायांवाजीजायते यएवंवेदेति सोऽपिवेदानुमन्त्रणविधेःशेषः अत्रापिकैमुतिकन्यायेनस्तुतिःपूर्ववद्योजनीया वेदितुःपुत्रःपितृशिक्षयास्वयमपिविद्वान्भवति ततःप्रतिग्रहेणान्नंप्राप्नोति तस्मादीदृशंगुणमभिप्रेत्यवाजीजायतइत्युक्तम् यदप्यन्यानर्थक्यायोदाहृतम् पूर्णाहुत्यासर्वान्कामानवाप्नोतीति तत्रोत्तरंसूत्रयति—सर्वत्वमाधिकारिकमिति १६ पूर्णाहुतिंजुहुयादित्यस्यविधेःशेषोऽयम् सर्वकामावाप्तिहेतुत्वात् प्रशस्तेयमाहुतिरितिस्तूयते यथा सर्वेब्राह्मणाभोजयितव्याइत्यत्रसर्वत्वंस्वगृहागतब्राह्मणविषयम् एवंपूर्णाहुत्याकर्मसाङ्गत्वम् यत्फलंतस्मिन्नधिकारेप्रस्तावेसंभावितंतद्विषयमेवसर्वत्वंद्रष्टव्यम् पूर्णाहुतेरभावेसत्याधानरूपंकर्माङ्गविफलंभवति तच्चवैकल्यंपूर्णाहुत्यासमाधीयतेइत्येकःकामः तस्मिन्समाहितेसतिआहवनीयाद्यग्नयोग्निहोत्रादिकर्मसुयोग्याभवन्तीत्ययमन्यःकामः तैश्चकर्मभिस्तत्तत्फलंप्राप्यतेइतिकामान्तरं ईदृशीसर्वकामावाप्तिराहुत्यन्तरेष्वपिविद्यतइतिचेत् विद्यतांनाम किन्नश्छिन्नम् नखल्वेतावतापूर्णाहुतिस्तुतेःकाचिद्धानिरस्ति ननुपूर्णाहुतेरङ्गस्वभावत्वात् तदीयफलश्रुतेरर्थवादत्वेनस्तावकत्वंभवतु द्रव्यसंस्कारकर्मसुपरार्थत्वात् फलश्रुतिरर्थवादइतिसूत्रेणनिर्णीतत्वात् पशुबन्धवाक्यस्यतुकर्मविधायकत्वात्सर्वलोकाभिजयस्यमुख्यफलत्वात् अन्यानर्थक्यंदुर्वारमित्याशंक्योत्तरंसूत्रयति—फलस्यकर्मनिष्पत्तेस्तेषांलोकवत्परिमाणतःसारतोवाफलविशेषःस्यादिति १७ पृथिव्यन्तरिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपंफलंपशुबन्धकर्मणानिष्पद्यते तेषांचपृथिव्यादीनांफलानांकर्मान्तरेणपरिमाणाधिक्यंसारत्वंवासंपद्यते ततःफलविशेषःस्यादिति नास्त्यानर्थक्यंलोकवदित्युक्तार्थेदृष्टान्तः—यथालोकेनिष्केणखारीपरिमितान्व्रीहीन्विक्रीयनिष्कान्तरेणपुनःक्रयेसतिपरिमाणाधिक्यंभवति यथावानिष्केणवस्त्रमात्रंलभ्यते निष्कद्वयेनतुसारभूतंदुकूलम् तथाभोगाधिक्यंभोगसारत्वंवाकर्मान्तरेणद्रष्टव्यम् ब्रह्महत्यायाअपिमानस्याःस्वल्पायावेदनमात्रेणतरणम् कायिकयास्तुमहत्याअश्वमेधेनेतिनास्त्यानर्थक्यम्। योऽपिनान्तरिक्षेनदिवीत्यग्निसक्तमतिषेधउदाहृतः तथा बर्बरःप्रावाहणिरित्यनित्यसंयोगउदाहृतः तत्रोभयत्रोत्तरंसूत्रयति—अन्यथोपंधोक्तमिति १८ अन्ययोरनयोरुदाहरणयोरुत्तरंपूर्वोक्तमेवद्रष्टव्यम् अन्तरिक्षादौचयननिन्दारूपोःऽर्थवादोहिरण्यंनिधायचेतव्यमित्यस्यविधेःशेषः अतोप्रशस्तुत्यर्थेनविधीनांस्युरित्युक्तमेवोत्तरम् अन्तरिक्षेचयनमशक्यत्वभावात् तन्निन्दानित्यानुवादोऽस्तु तेनापिविधिःस्तोतुंशक्यते नित्यप्रिद्धार्थानुवादिनावायोःक्षेपिष्ठत्वेनपशुविधेःस्तुतत्वात् बर्बरःप्रावाहणिरकामयते-

त्यत्रापिबबरनामकःकश्चिदनित्यःपुरुषोमनुष्योनविवक्षितः किन्तु बबरध्वनियुक्तःप्रकर्षेणवहन्शीलोवायुर्व्यवहारदशायांनित्यएवार्थोविवक्षितइत्येतदुत्तरंप्रथमपादस्यान्तिमाधिकरणेप्रोक्तम् ॥ तस्मात्तंभाविवदोषाणांपरिहृतत्वादर्थवादानामस्तिप्रामाण्यम्। तत्रसङ्ग्रहश्लोकाः–वायुर्वेइत्येवमादेरर्थवादस्यमानता। नविधेयस्तिधर्मोकिंकिंवासौतत्रविद्यते १ विध्यर्थवादशब्दानांमिथोपेक्षापरिक्षयात्। नास्त्येकवाक्यताधर्मेप्रामाण्यंसंभवेत्कुतः २ विध्यर्थवादौसाकांक्षौप्राशस्त्यपुरुषार्थयोः। तेनैकवाक्यतातस्माद्वादानांधर्ममानताइति ३ तदेवंवेदेविद्यमानानांत्रयाणांमन्त्रविध्यर्थवादभागानांअप्रामाण्येकारणाभावात् बोधकानांतेषांप्रामाण्यस्यस्वतस्त्वाङ्गीकाराच्च कृत्स्नस्यापिवेदस्यप्रामाण्यंसिद्धम्।ननुएवमपिवेदस्यपौरुषेयत्वेनविप्रलम्भकवाक्यवदप्रामाण्यंस्यात् पौरुषेयत्वंचप्रथमपादेपूर्वपक्षत्वेनजैमिनिःसूत्रयामास–वेदांश्चैकेसंनिकर्षंपुरुषाख्येति १ एके वादिनोवेदान्प्रतिसंनिकर्षमन्यन्ते कालिदासादिभिर्निर्मितानांरघुवंशादिग्रन्थानांसमुच्चयार्थश्चकारः तेह्यत्रदृष्टान्ततयासमुच्चीयन्ते यथारघुवंशादयइदानींतनास्तथावेदाअपि नतुवेदाअनादयःअतएववेदकर्तृत्वेनपुरुषाआख्यायन्ते वैयासिकंभारतं वाल्मीकीयंरामायणमित्यत्रयथाभारतादिकर्तृत्वेनव्यासादयआख्यायन्ते तथा काठकं कौथुमं तैत्तिरीयमित्येवंतत्तद्वेदशाखाकर्तृत्वेनकठादीनामाख्यातत्वात् वेदाःपौरुषेयाः। ननुनित्यानामेवसतांवेदानामुपाध्यायवत्संप्रदायप्रवर्तकत्वेनकाठकादिसमाख्यास्यादित्याशङ्कयुक्त्यन्तरंसूत्रयति–अनित्यदर्शनाचेति २ अनित्याजननमरणवन्तोबबरादयोवेदार्थेश्रूयन्ते बबरःप्रावाहणिरकामयत कुसुरुविन्दऔद्दालकिरकामयतेति। तथासतिबबरादिभ्यःपूर्वमभावादनित्यावेदाः। विमतंवेदवाक्यंपौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवदित्याद्यनुमानसमुच्चयार्थश्चकारः। सिद्धान्तंसूत्रयति–उक्तंतुशब्दपूर्वत्वमिति ३ तुशब्दोवेदानामनित्यत्वंवारयति शब्दस्यवेदरूपस्यकठादिपुरुषेभ्यःपूर्वत्वमनादित्वंप्राचीनैरेवसूत्रैरुक्तम् औत्पत्तिकस्तुशब्दस्यार्थेनसंबन्धइत्यस्मिन्सूत्रेऔत्पत्तिकशब्देनसर्वेषांशब्दानांवेदानांतदर्थानांतदुभयसंबन्धानांचनित्यत्वंप्रतिज्ञायोत्तराभ्यांशब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात्। कार्तर्हिकाठकाद्याख्यायिकायागतिरित्याशंक्य सम्प्रदायप्रवर्तनात्सेयमुपपद्यतेइत्युत्तरंसूत्रयति–आख्याप्रवचनादिति ४ अस्तिवयमाख्यायिकायामतिः ततःपरंबबराद्यनित्यदर्शनंयदुक्तम् तस्यकिमुत्तरमित्याशंक्योत्तरंसूत्रयति–परंश्रुतिसामान्यमात्रमिति ५ यत्परंबबरादिकंतच्छब्दसामान्यमेव नतुमनुष्योबबरनामकोत्रविवक्षितः बबरध्वनियुक्तस्यप्रवहणस्वभावस्यवायोरत्रवक्तुंशक्यत्वात् ननुवेदेक्वचिदेवंश्रूयते वनस्पतयःसत्रमासत। सर्पाःसत्रमास-

१ तै. सं. ७-२-२।

तेति । तत्रवनस्पतीनामचेतनत्वात् सर्पाणांचेतनत्वेपिविद्यारहितत्वात् नतदनुष्ठानंसंभवति अतो-
जरद्गवोगायतिमद्रकाणीत्याद्युन्मत्तबालवाक्यसदृशत्वात् केनचित्कृतोवेदइत्याशंक्योत्तरंसूत्रय-
ति—कृतेचाविनियोगःस्यात्कर्मणःसमत्वादिति ६ यदिज्योतिष्टोमादिवाक्यंकेनचित्पुरुषेणक्रि
येत तदानींकृतेतस्मिन्वाक्येस्वर्गसाधनत्वेज्योतिष्टोमस्यविनियोगोनस्यात् साध्यसाधनभावस्य
पुरुषेणज्ञातुमशक्यत्वात् श्रूयतेतुविनियोगः ज्योतिष्टोमेनस्वर्गकामोयजेतेति नचैतदुन्मत्तवा-
क्यसदृशंलौकिकविधिवाक्यवद्भाव्यकरणेतिकर्तव्यतारूपैस्त्रिभिरंशैरुपेतायाभावनायाअवगमात्
लोकेहिब्राह्मणान्भोजयेदितिविधौकिंकेनकथमित्याकांक्षायां तृप्तिमुद्दिश्यौदनेनद्रव्येण शाकसू-
पादिपरिवेषणप्रकारेणेतियथोच्यते ज्योतिष्टोमविधावपिस्वर्गमुद्दिश्यसोमेनद्रव्येण दीक्षणीया-
द्यङ्गोपकारप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशंभवेदिति । वनस्पत्यादिमन्त्रवाक्यमपिनतत्सदृ-
शम् तस्यमन्त्रकर्मणोज्योतिष्टोमादिनासमत्वात् यत्परोहिशब्दः सशब्दार्थइतिन्यायविदआहुः
ज्योतिष्टोमादिवाक्यस्यविधायकत्वात् अनुष्ठानेतात्पर्यम् । वनस्पत्यादिमन्त्रवाक्यस्यार्थवादत्वात्
प्रशंसायांतात्पर्यम् । साचाविद्यमानेनापिकर्तुंशक्यते अचेतनाअविद्वांसोऽपिमन्त्रमनुष्ठितवन्तः किं-
पुनश्चेतनाविद्वांसोब्राह्मणाइतिमन्त्रस्तुतिः । चकारःपूर्वपक्षोक्तस्यवाक्यत्वहेतोःकर्त्रनुपलंभेनपराह-
तिंसमुच्चिनोति तस्मान्नास्तिवेदस्यपौरुषेयत्वम् । अत्रैतौसंग्रहश्लोकौ—पौरुषेयंनवावेदवाक्यंस्या-
त्पौरुषेयता । काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् १ समाख्यानंप्रवचनाद्वाक्यत्वंतु
पराहतम् । तत्कर्त्रनुपलम्भेनस्यात्ततोऽपौरुषेयता २ ननुभगवताबादरायणेनवेदस्यब्रह्मकार्यत्वं
सूत्रितम्—शास्त्रयोनित्वादिति ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्मसर्वज्ञमितिसूत्रार्थः । बाढम् नैता-
वतापौरुषेयत्वंभवति मनुष्यनिर्मितत्वाभावात् ईदृशमपौरुषेयत्वमभिप्रेत्यव्यवहारदशायामाका-
शादिवन्नित्यत्वंबादरायणेनैवदेवताधिकरणेसूत्रितम्—अतएवचनित्यत्वमिति श्रुतिस्मृतीचात्र
भवतः—वाचाविरूपनित्ययेतिश्रुतिः । अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवेतिस्मृतिः । तस्मा-
त्कर्तृदोषशंकायाअनुदयान्मन्त्रब्राह्मणात्मकस्यवेदस्यनिर्विघ्नंप्रामाण्यंसिद्धम् । ननुमन्त्रब्राह्मणा-
त्मकत्ववेदस्यनयुक्तम् तयोःस्वरूपस्यनिर्णेतुमशक्यत्वात् मैवम् द्वितीयाध्यायस्यप्रथमपादेसप्त-
माष्टमयोरधिकरणयोर्निर्णीतत्वात् सप्तमाधिकरणमारचयति—अहेबुध्नियमन्त्रंमइतिमन्त्रस्यलक्ष-
णम् । नास्त्यस्तिवास्यनास्त्येतदव्याप्त्यादेरवारणात् १ याज्ञिकानांसमाख्यानंलक्षणंदोषवर्जि-
तम् । तेनुष्ठानस्मारकादौमन्त्रशब्दंप्रयुञ्जते २ आधानइदमाम्नायते—अहेबुध्नियमन्त्रंमेगोपायेति
तत्रमन्त्रस्यलक्षणंनास्ति अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् विहितार्थाभिधापकोमन्त्रइत्यु-

---

१ जरद्गवःकंबलपादुकाभ्यांद्वारिस्थितोगायतिमद्रकाणि । तंब्राह्मणीपृच्छतिपुत्रकामा राजन्रुमायांलशुनस्यकोर्थः ।

२ तै. सं. २-६.११. ।

३ तै. ब्रा. १.२.१. ।

केवसन्तायकपिञ्जलानालभतेइत्यस्यमन्त्रस्यविधिरूपत्वादव्याप्तिः । मननहेतुर्मन्त्रइत्युक्तेब्राह्मणे अतिव्याप्तिः । एवमसिपदान्तोमन्त्रउत्तमपुरुषान्तोमन्त्रइत्यादिलक्षणानांपरस्परमव्याप्तिरितिचेत् नैवम् याज्ञिकसमाख्यानस्यनिर्दोषलक्षणत्वात् तच्चसमाख्यानमनुष्ठानस्मारकादीनांमन्त्रत्वंगमयति उरुंप्रथस्वेत्यादयोऽनुष्ठानस्मारकाः अग्निमीळेपुरोहितमित्यादयःस्तुतिरूपाः इषेत्वेत्यादयस्त्वान्ताः अग्नआयाहिवीतयइत्यादयआमन्त्रणोपेताः अग्नीदग्नीन्विहरेत्यादयःप्रैषरूपाः अधःस्विदासीदुपरिस्विदासीदित्यादयोविचाररूपाः अम्बेअम्बाल्यम्बिकेनमानयतिकश्चनेत्यादयः परिदेवनरूपाः पृच्छामित्वापरमन्तंपृथिव्याइत्यादयःप्रश्नरूपाः वेदिमाहुःपरमन्तंपृथिव्याइत्यादयउत्तररूपाः एवमन्यदप्युदाहार्यम् । ईदृशोप्यत्यन्तविजातीयेषुसमाख्यानमन्तरेणनान्यःकश्चिदनुगतोधर्मोस्ति यस्यलक्षणत्वमुच्येत लक्षणस्यचोपयोगःपूर्वाचार्यैर्दर्शितः ऋषयोऽपिपदार्थानांनान्तंयान्तिपृथक्त्वशः । लक्षणेनतुसिद्धानामन्तंयान्तिविपश्चितइति । तस्मादभियुक्तानांमन्त्रोऽयमितिसमाख्यानंलक्षणम् । अष्टमाधिकरणमारचयति—नास्त्येतद्ब्राह्मणेन्यद्वलक्षणंविद्यते थवा । नास्तीयन्तोवेदभागाइतिक्लृप्तेरभावतः १ मन्त्रश्चब्राह्मणंचेतिद्वौभागौतेनमन्त्रतः । अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् २ चातुर्मास्येष्विदमाम्नायते—एतद्ब्राह्मणान्येवपञ्चहवींषीति । तत्रब्राह्मणस्यलक्षणंनास्ति कुतःवेदभागानामियत्तानवधारणेनब्राह्मणभागेष्वन्यभागेषुचलक्षणस्याव्याप्त्यतिव्याप्त्योःशोधयितुमशक्यत्वात् पूर्वोक्तोमन्त्रभागएकः भागान्तराणिचकानिचित्पूर्वैरुदाहर्तुंसंगृहीतानि—हेतुर्निर्वचनंनिन्दाप्रशंसासंशयोविधिः । परक्रियापुराकल्पोव्यवधारणकल्पनेति १ तेनह्यन्नंक्रियतइतिहेतुः तद्दध्नोदधित्वमितिनिर्वचनम् अमेध्यावैमाषाइतिनिन्दा वायुर्वैक्षेपिष्ठादेवतेतिप्रशंसा तद्व्यचिकित्सज्जुहवानी३माहौषा३मितिसंशयः यजमानेनसंमितौदुम्बरीभवतीतिविधिः माषानेवमह्यंपचन्तीतिपरकृतिः पुराब्राह्मणाअभैषुरिति पुराकल्पः यावतोऽश्वान्प्रतिगृह्णीयात्तावतोवारुणांश्चतुष्कपालान्निर्वपेदितिविशेषावधारणकल्पना एवमन्यदप्युदाहार्यम् । नचहेत्वादीनामन्यतमंब्राह्मणमितिलक्षणं मन्त्रेष्वपिहेत्वादिसद्भावात् इन्द्रवोवामुशन्तिहीतिहेतुः उदानिषुर्महीरितिवस्मादुदकमुच्यतइतिनिर्वचनम् मोघमन्नं

---

१ तै. सं. १.१.८. । २ तै.ब्रा.३.५.२. । ३ तै. सं. ६. ३-१- । ४ तै. ब्रा. २.८. ९. । ५ तै. सं- ७.४.१८. । ६ तै. सं. ७.४. १७. । ७ तै.सं.७.४.१७. इयंवेदिःपरोअन्तःपृथिव्याःइत्यपिपाठः । ८ तै. ब्रा. १.७.१. । ९ तै.सं. २.५.३. । १० तै. सं- ५.१.८. । ११ तै- ब्रा- २.१.२. । १२ तै.सं. ६. २.१० । १३ तै. सं. १.५.७. । १४ तै.सं. २.३.१२. । १५ ऋ. सं. १.१.३. । १६ तै. सं. ५.६.१. ।

विन्दतेअप्रचेताइतिनिन्दा अग्निर्मूर्धादिवइतिप्रशंसा अधःस्विदासी३दुपरिस्विदासी३दितिसंशयः वसन्तायकपिञ्जलानालभतइतिविधिः सहस्रमयुताददिितिपरकृतिः यज्ञेनयज्ञमयजन्तदेवाइति पुराकल्पः । इतिकरणबहुलंब्राह्मणमितिचेव् न इत्यददाइत्ययजथाइत्यपचइतिब्राह्मणोगायेदित्यस्मिन्ब्राह्मणेनगातव्येमन्त्रेतिव्याप्तेः । इत्याहेत्यनेनवाक्येनोपनिबद्धंब्राह्मणमितिचेन्न राजाचिद्यंभगंभक्षीत्याह योवारक्षाःशुचिरस्मीत्याह इत्यनयोर्मन्त्रयोरतिव्याप्तेः आख्यायिकारूपंब्राह्मणमितिचेन्न यमयमीसंवादसूक्तादावतिव्याप्तेः तस्मान्नास्तिब्राह्मणस्यलक्षणमितिप्राप्ते ब्रूमः मन्त्रब्राह्मणरूपौद्वावेववेदभागावित्यङ्गीकाराव् मन्त्रलक्षणस्यपूर्वमभिहितत्वाव् अवशिष्टोवेदभागोब्राह्मणमित्येतल्लक्षणंभविष्यति तदेतल्लक्षणद्वयंजैमिनिःसूत्रयामास—तच्चोदकेपुमन्त्राख्याशेषेब्राह्मणशब्दइति तस्मिन्वेदेकेपुचिदभिधायकेपुवाक्येपुमन्त्रइतिसमाख्यासम्प्रदायविद्भिर्व्यवह्रियते मन्त्रानधीमहइतिमन्त्रव्यतिरिक्तभागेतुब्राह्मणशब्दस्तैर्व्यवहृतइत्यर्थः ननुब्राह्मणप्रकरणेमन्त्रब्राह्मणव्यतिरिक्ताइतिहासादयोभागाआम्नायन्ते यद्ब्राह्मणानीतिहासपुराणानिकल्पान्गाथानाराशंसीरिति मैवम् विप्रपरिव्राजकन्यायेनब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनांपृथगभिधानाव् देवासुराःसंयत्ताआसन्नित्यादयइतिहासाः इदंवाअग्रेनैवकिञ्चनासीदित्यादिकंजगतःप्रागवस्थामुपक्रम्यसर्गप्रतिपादकंवाक्यजातंपुराणम् कल्पस्त्वारुणकेतुकचयनप्रकरणेसमाम्नायतेइतिमन्त्राःकल्पः अतऊर्ध्वंयदिवालिंहरेदितिअग्निचयनेयमगाथाभिः परिगायतीतिविहितामन्त्रविशेषागाथाः मनुष्यवृत्तान्तप्रतिपादिकाऋचोनाराशंस्यः तस्मान्मन्त्रब्राह्मणव्यतिरिक्तभागाभावाव् मन्त्रब्राह्मणस्वरूपस्यचलक्षितत्वाव् उभयात्मकत्वंवेदस्यसुस्थितम् । मन्त्रावान्तरविशेषश्चतस्मिन्नेवपादेइत्थंविचारितः—ऋक्सामयजुषांलक्ष्मसाङ्कर्यादितिशङ्किते । पादस्य गीतिःप्रश्लिष्टपाठइत्यस्त्यसङ्करः । इदमाम्नायते—अहेबुध्नियमन्त्रंमेगोपाय यमृषयस्त्रैविदाविदुः ऋचःसामानियजूंषीति । त्रीन्वेदान्विदन्तीतित्रिविदः त्रिविदांसम्बन्धिनोध्येतारस्त्रैविदाः तेचयंमन्त्रभागमृगादिरूपेणत्रिविधमाहुः तंगोपायेतियोजना तत्रत्रिविधानामृक्सामयजुषांव्यवस्थितंलक्षणंनास्तिकुतः सांकर्यस्यदुष्परिहरत्वाव् अध्यापकप्रसिद्धेपुऋग्वेदादिपुपठितोमन्त्रइतिहिलक्षणं

१ ऋ. सं. ८. ६. २३. । २ ऋ. सं. ६. ३. ३९ । ३ ऋ. सं. ८. १७. । ४ ऋ. सं. ८.
४. १९. । ५ ऋ. सं. ५. ४. ८. । ६ ऋ. सं. ५. ७. ८. । ७ ओचित्सखायमित्यादिचतुर्दश-
र्चसूक्तंयमयमीसंवादरूपं । ऋ. सं. ७. ६. ६. । ८ तै. आरण्यकेद्वितीयाध्याये । ९ तै. ब्रा.
२. २. ९. । १० योस्यकोष्ठ्यजगतःपार्थिवस्यैकइद्वशीइत्याद्याःयमगाथाः अरण्यकाण्डेपितृ-
मेधप्रपाठकेसमाम्नाताः । ११ इदंजनाउपश्रुतइत्यादयस्तिस्रः कुंतापेउक्ताः । १२ तै. ब्रा.
१. २. १. ।

वक्तव्यम् तच्चसंकीर्णम् देवोवःसवितोत्पुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिरित्ययंमन्त्रो-यजुर्वेदेत्सम्प्रतिपन्नयजुषांमध्येपठितः नचतस्ययजुष्ट्वमस्ति तद्ब्राह्मणेसावित्र्यर्चेत्यृक्त्वेनव्यवहृतत्वात् एतत्सामगायन्नास्तइतिप्रतिज्ञायकिञ्चित्सामयजुर्वेदेगीतम् अक्षितमस्यच्युतमसिप्राणसंशितमसीतित्रीणियजूंषिसामवेदेसमाम्नातानि तथागीयमानस्यसाम्नआश्रयभूताऋचः सामवेदे समाम्नातास्तस्मान्नास्तिलक्षणमितिचेन्न पादादीनामसंकीर्णलक्षणत्वात् पादेनार्थेनचोपेतावृत्तबद्धामन्त्राऋचः गीतिरूपामन्त्राःसामानि वृत्तगीतिवर्जितत्वेनप्रश्लिष्टपठितामन्त्रायजूंषीत्युक्ते न क्वापिसंकरः तदेतत्त्रैविध्यंजैमिनिनासूत्रत्रयेणलक्षितम्—तेषामृग्यत्रार्थवशेनपादव्यवस्था गीतिषुसामाख्या शेषेयजुःशब्दइति एतमेवमन्त्रावान्तरविशेषमुपजीव्यवेदानामृग्वेदोयजुर्वेदःसामवेदइतित्रैविध्यंसम्पन्नम् तेषांचवेदानांसर्वेषामन्यतमस्यवास्वप्रज्ञानुसारेणाध्ययनमुपनीतेनकर्तव्यम् तथाचयाज्ञवल्क्यःस्मरति—वेदानधीत्यवेदौवावेदंवापियथाक्रममिति। एकवेदपक्षे पितृपितामहादिपरंपराप्राप्तएववेदोऽध्येतव्यइत्यभिप्रेत्यस्वाध्यायोऽध्येतव्यइतिस्वशब्दआम्नातः तच्चाध्ययनंनकाम्यं किन्तु नित्यम अतएवपुरुषार्थानुशासनेसूत्रितम्—वेदस्याध्ययनंनित्यमनध्ययनेपातादिति पावित्र्यंचैवमाम्नायते—अपहतपाप्मास्वाध्यायोदेवपवित्रंवाएतत्तंयोऽनुसृजत्यभागोवाचिभवत्यभागोनाकेतदेषाभ्युक्ता यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति यदींशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपन्थामिति। तस्मात्स्वाध्यायोऽध्येतव्यइति अध्येतारंपुरुषंतदीयमध्यासाभिज्ञानेनसखिवत्पालयतीतिसचिविदित्युक्तः बहुद्रव्यप्रयाससाध्यक्रतुफलस्याध्ययनमात्रेणसम्पादनंतत्पालनं तदप्याम्नायते—यंयंक्रतुमधीतेतेनतेनहास्यक्रतुनेष्टंभवत्यग्नेर्वायोरादित्यस्यसायुज्यंगच्छतीति यद्यप्येतद्ब्रह्मयज्ञस्वाध्यायफलम् तथापिग्रहणार्थाध्ययनमन्तरेण ब्रह्मयज्ञासंभवात् तदीयफलमपिसम्पद्यते ईदृशंसखिविदंवेदरूपंसखायंयःपुमानध्ययनमकृत्वा परित्यजति तस्यवाच्यपिभाग्यंनास्ति फलेभाग्यंनास्तीतिकिमुवक्तव्यम् सकलदेवतानां धर्मस्यपरब्रह्मतत्त्वस्यचप्रतिपादकंवेदमनुच्चार्यपरनिन्दानृतकलहहेतुंलौकिकींवार्तांसर्वत्रोच्चारयतः स्पष्टएववाचिभाग्याभावः अतएवाम्नायते—नानुध्यायाद्बहूञ्छब्दान्वाचोविग्लापनंहितदिति यद्यप्यसौकाव्यनाटकंशृणोति तथापिनिरर्थकमेवतच्छ्रवणम् तेनसुकृतमार्गज्ञानाभावादित्यर्थः । स्मृतिरपि—योऽनधीत्यद्विजोवेदानन्यत्रकुरुतेश्रमम् सजीवन्नेवशूद्रत्वमाशुगच्छति

१ तै. सं. १. १. ५ । २ तै. आ. सप्तमाध्याये । ३ याज्ञवल्क्यःस्मरतीत्युक्तेपिसंप्रतीदंवचनंमनुस्मृतावेवोपलभ्यते ( म. स्मृ. अ. ३ श्लो. २. ) नयाज्ञवल्क्यस्मृतौ । ४ तै. आ. द्वितीयाध्याये. । ५ ऋ. सं. ८. २. २४. । ६ तै० आ. द्वितीयाध्याये. । ७ मनुस्मृतौ द्वितीयाध्याये श्लो.१६८ ।

सान्वयइति एवमन्यान्यपिबहूनिवचनान्यत्रोदाहर्तव्यानि नन्वधीतेवेदेपश्चादध्ययनविध्यर्थज्ञाने
ज्ञानेसतिपश्चादध्ययनप्रवृत्तिरित्यन्योन्याश्रयइतिचेत् बाढम् अतएवगुरुमतानुसारिणआचार्य-
कर्तृकाध्यापनेनप्रवृत्तियुक्तिमाणवकाध्ययनस्यमहताप्रयासेनसम्पादयन्ति मतान्तरानुसारिण-
स्तुप्रकाशात्मादयोऽध्ययनात्प्रागेवसन्ध्यावन्दनादिविधिज्ञानवत्तिनादिभ्योऽध्ययनविधिज्ञानंवर्णय
न्ति यद्यप्यध्यापनविधिप्रयुक्तिः यदिवास्वविधिप्रयुक्तिःसर्वथाप्युपनीतैरध्येतव्यएववेदः तस्य
चाध्ययनस्यदृष्टार्थत्वमक्षरग्रहणान्तत्वंचपुरुषार्थानुशासनेसूत्रितम्—तानिसूत्राणितद्वृत्तिंचोदा-
हरामः अध्ययनस्यदृष्टार्थत्वंसाधयितुंपूर्वपक्षयति—अदृष्टार्थोत्वधीतिर्विहितत्वादिति १ दृ-
ष्टफलसाधनेभोजनादौविध्यदर्शनाद्विहितमध्ययनमदृष्टार्थमवगन्तव्यम् अदृष्टविशेषोनश्रुतइ-
तिचेत्तत्राह—घृतकुल्याद्यतिदेशःस्वर्गकल्पनंवेति २ ब्रह्मयज्ञजपाध्ययनार्थवादंनित्याध्ययने-
तिदिश्यतत्रत्यंघृतकुल्यादिकंरात्रिसत्रन्यायेनफलत्वेनकल्पनीयम् येत्वर्थवादातिदेशंनेच्छन्ति तै-
र्विश्वजिन्न्यायेनस्वर्गःकल्पनीयः दृष्टफलयोःसंस्कारप्राप्त्योः सम्भवेकथमदृष्टकल्पनेत्यतआह—
अयुक्तेसंस्कारप्राप्तीइति ३ संस्कृतस्वाध्यायस्यक्वचित्कर्मविनियोगादर्शनात्प्राप्तेःस्वयमपुरुषार्थ-
त्वाच्चेत्यर्थः स्वाध्यायप्राप्तिरर्थप्रमितिहेतुत्वयापुरुषार्थइत्याशंक्याग्निपनिर्हरणादिकार्यविनियु-
क्तयत्नवदध्ययनाङ्गतयाविनियुक्तानांज्योतिष्टोमादिवाक्यानांनस्वार्थप्रामाण्यमित्याह—अन्याङ्गं
नार्थप्रमापकमिति ४ अध्ययनविधायकंतुवाक्यंस्वविहिताध्ययनस्यैवाङ्गमितिकृत्वास्वार्थेप्रमा-
णमित्याह—अध्ययनवाक्यमनन्याङ्गमिति ५ नन्वेवमदृष्टार्थत्वेकर्मकारकभूतस्वाध्यायगतफ-
लाभावात् अध्येतव्यइतिकर्मवाचीतव्यप्रत्ययोविरुध्यतेइत्यतआह सक्तुवत्करणपरिणाम-
इति ६ सक्तूञ्जुहोतीत्यत्रकर्मत्वेनप्रधानभूतान्सक्तूनुद्दिश्यहोमसंस्कारविधानेप्रतीयमानेऽपिहो-
मसंस्कृतानांभस्मीभूतानांसक्तूनामन्यत्रविनियोगाभावात् कर्मप्राधान्यंहित्वासक्तुभिर्जुहोतीतिक-
रणपरिणामःकृतः एवमत्रापिकर्मगतयोःसंस्कारप्राप्त्योरसंभवात् स्वाध्यायेनाधीयीतेतिवाक्य-
परिणामःकर्तव्यः । इदानींदृष्टफलेसत्यदृष्टफलंनकल्प्यमितिसिद्धान्तयति—दृष्टेतुनादृष्टमिति
७ किंतद्दृष्टंफलमितितदाह—दृष्टाप्राप्तिसंस्काराविति ८ अक्षरप्राप्तेःपरंपरयापुरुषार्थत्वमाह—
प्राप्त्यार्थबोधइति ९ ज्ञायतइतिशेषः नचभोजनादिवदन्वयव्यतिरेकसिद्धत्वाद्विधिवैयर्थ्य-
मितिशंकनीयम् अवघातादिवन्नियमादृष्टायविध्युपपत्तेरित्याह—विधिर्नियमार्थइति १०

१ यत्रविधिवाक्येफलंनश्रूयतेतत्रार्थवादवाक्योक्तंफलमतिदिश्यतेइत्ययंरात्र्यादातिदेशः अ-
यमेवरात्रिसत्रन्यायस्यविषयः । २ यत्रार्थवादवाक्येऽपिफलंनश्रूयतेतत्रस्वर्गःकल्प्यते यथावि-
श्वजिति (तत्रहिविधिवाक्येअर्थवादवाक्येवाफलंनश्रूयते तस्मात्तत्रसकलतावुक्तसाधारणंस्वर्गफ-
लंकल्प्यते ) अयमेवविश्वजिन्न्यायः ।

यत्तूक्तंसंस्कृतस्यस्वाध्यायस्यविनियोगादर्शनात् नसंस्कारइति तत्राह—संस्कारसिद्धिःक्रत्वध्ययनविधिद्वयोपादानादिति ११ क्रतुविधयोविषयावबोधमपेक्षमाणास्तदवबोधेस्वाध्यायं विनियुञ्जते अध्ययनविधिश्चलिखितपाठादिव्यावृत्त्याध्ययनसंस्कृतत्वंस्वाध्यायस्यगमयति-अतउभयोपादानात्तत्तत्सिद्धिः ननुसंस्कारोनामादृष्टातिशयः सचनस्वाध्यायगतः तव्यप्रत्ययेनस्वपदोपात्तप्रकृत्यर्थभूताध्ययनोपरक्ताया भावनायाअपूर्वाभिधानात् ततः कथंस्वाध्यायस्यसंस्कृतत्वमितितत्राह—तव्यःकर्मगादृष्टवाचीति १२ अत्रतव्यप्रत्ययस्यकर्माभिधायितयाकर्मकारकस्यस्वाध्यायस्यतव्यप्रत्ययंप्रतिप्रकृत्यर्थादध्ययनादपिप्रत्यासन्नत्वात् स्वाध्यायगतमेवापूर्वंतव्यप्रत्ययोवक्ति अपूर्वस्यधात्वर्थजन्यत्वनियमेऽपितदुपरक्तत्वानियमादिति भावः । यच्चोक्तमन्याङ्गंनार्थप्रमापकमित्यदृष्टान्तरं तदसत् यतोमन्त्राणांस्वतन्त्रादृष्टशेषाणांतथात्वंयुज्यते इहतुस्वाध्यायाश्रितमदृष्टं तस्यचस्वाध्यायगताक्षरसामर्थ्यसिद्धार्थावबोधेफलेसतिफलान्तरकल्पनायोगात् प्रामाण्यस्योपबृंहकमेवादृष्टं नतुप्रतिबन्धकमित्याह स्वतन्त्रादृष्टाशेषत्वान्नस्वार्थप्रमाप्रतिबध्यतइति १३ सक्तुन्यायेनकर्मकारकप्राधान्येपरित्यक्तेस्वतन्त्रादृष्टमेवात्रापिस्यादित्यतआह—यथाश्रुतोपपत्तेर्नसक्तुन्यायइति १४ सक्तुपुगत्यभावात् श्रुतंपरित्यज्याश्रुतंकल्प्यतांनाम नेहतद्युक्तंप्रदर्शितत्वादित्यर्थः इत्थमध्ययनविधेर्दृष्टार्थत्वंप्रसाध्यार्थावबोधपर्यन्ततांनिराकर्तुंपूर्वपक्षयति—वैधमर्थनिर्णयंभट्टगुरूविधेःपुमर्थावसानादिति १ सर्वत्रविधेःपुरुषार्थपर्यवसायित्वनियमादत्रापिपुरुषार्थभूतंफलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरूमन्येते । ननुसकृदध्ययनादावृत्तिसहिताद्वार्थनिश्चयोनोपलभ्यतइत्याशंक्य तथासतितत्सिद्धयेसोऽध्ययनविधिरर्थनिश्चयहेतुंविचारंकल्पयिष्यतीत्याह—सविचारमाक्षिपेदिति २ ननुस्वविधेयतदुपकारिणोरेवविधिः प्रयोजकइतिसर्वत्रनियमः तथासत्येतादृशंकथमत्राध्ययनविधिराक्षेप्स्यतीत्यतआह—अविधेयानुपकार्याक्षेपोवघाताबृत्तिवदिति ३ व्रीहीनवहन्तीत्यत्रावघातमात्रंविधेयंनतुतदावृत्तिः तस्याअधात्वर्थत्वात् नापिसाविधेयोपकारिणी अन्तरेणावृत्तिसकृन्मुशलघातमात्रादवघातसिद्धेः तथापितण्डुलनिष्पत्तिफलसिद्धयेसविधिरावृत्तिंयद्वदाक्षिपेत् तद्वत्प्रकृतेप्यवगन्तव्यम् । ननुवेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपिव्याकरणाद्यंगसहितवेदाध्यायिनस्तदुदयसद्भावात्तंप्रतिव्यर्थविचारंविधिर्नकल्पयेदित्याशङ्क्यार्थगतविरोधपरिहारायपेक्षितएवविचारइत्याह—साङ्गाध्ययनात्तद्भावेविचारोऽर्थविरोधापनुदिति ४ सिद्धान्तयति—प्राप्तेस्तुगवादिवत्पुमर्थत्वाद्विधिस्तदन्यइति ५ यथाफलभूतस्यक्षीरादेर्हे-

१ भट्टः कुमारिलभट्टपादः । गुरुः प्रभाकरगुरुः ।

तवोगवादयोऽपिपुरुषैरर्थ्यन्ते तथाफलवदर्थावबोधहेतोरक्षरप्राप्तेरपिपुरुषार्थत्वात् अध्ययन-
विधिरक्षरप्राप्त्यवसानोवगन्तव्यः । नन्वक्षरप्राप्तेःपुरुषार्थत्वंफलवदर्थावबोधप्रयुक्तंचेत्तर्हितद्बो-
धस्यमुख्यपुरुषार्थत्वात् बोधान्तएवविधिःकिंनस्यादित्यतआह—फलवद्बोधान्तत्वेअध्ययना-
कात्स्र्न्यमिति ६ बोधस्यहिफलंकर्मानुष्ठानं तथासतियस्यब्राह्मणादेर्यस्मिन्बृहस्पति-
सवादावधिकारस्तस्यतद्वाक्यमात्राध्ययनंस्यात् नतुराजसूयादिवाक्याध्ययनं तत्रप्रवृत्त्यादिफ-
लाभावात् । स्वपक्षेतुनायंदोषइत्याह—कृत्स्नप्राप्तिर्जपार्थेति ७ नचाबोधकत्वेऽर्थावबो-
धएवनसिध्येदितिशङ्कनीयम् प्रमाणस्यप्रमेयबोधकत्वस्वाभाव्यात् लौकिकाप्तवाक्यानामन्तरे-
णैवविधिंबोधकत्वदर्शनादित्याह—लोकवन्नैजोबोधइति ८ ननुबोधस्यविधिफलत्वेबो-
धकाममुद्दिश्यविधातुंशक्यत्वात् सुलभोधिकारीस्यादित्याशङ्क्यप्राप्तिपक्षेऽपि प्राप्तिकामउपनी-
ताष्टवर्षब्राह्मणोऽधिकारीसुलभएवेतिपरिहारंस्पष्टत्वादुपेक्ष्यबोधस्यकाम्यत्वंदूषयति—सोऽकाम्यः
प्राग्बोध्यभानाभानयोरिति ९ बोध्यस्याग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात्प्राक्सन्ध्यो-
पासनादिवत्पित्राद्युपदेशतएवभानेसिद्धत्वादेवसोऽर्थबोधोनकाम्यः अभानेकामयितुमशक्यः
ज्ञातएवविषयेकामनानियमात् ननु सामान्यतोज्ञातेविशेषतोबुभुत्सासंभवति यद्वा विशेषतोऽपि
पित्राद्युपदेशादवगतेसत्यौपदेशिकज्ञानस्यप्रामाण्यनिर्णयायपुनर्बोधकामनायुक्तैवेत्याशङ्क्यैवम-
प्यर्थावबोधमुद्दिश्याध्ययनविधानंनसम्भवतीत्याह—उद्देशायोगादिति १० अग्निहो-
त्रादिविशेषज्ञानानांनतावदेकबुद्ध्याविशेषाकारेणोद्देशःसंभवति अनन्तत्वात्सामान्याकारे-
णोद्देशेसामान्यमेवविधिफलंस्यान्नतुज्ञानविशेषः ततोनोद्देशोयुक्तः । नन्वर्थावबोधमुद्दिश्योच्चा-
रणाभावेवेदस्यस्वार्थेतात्पर्यंनस्यादित्याशङ्क्य उपक्रमादिलिङ्गगम्यंतात्पर्यंशब्दबलादेवसि-
ध्यतीत्याह—तात्पर्यंशब्दादिति ११ तर्ह्यर्थज्ञानमुद्दिश्यशब्दोच्चारणंलोकेव्यर्थंस्या-
दितिचेन्न पुरुषसम्बन्धकृतदोषाख्यप्रतिबन्धपरिहारार्थत्वादित्याह—उद्दिश्योच्चारणंदोषघ्नंलो-
कइति १२ नन्वध्ययनविधेर्बोधान्तत्वाभावेविचारशास्त्रंनप्रवर्तेत प्रयोजकाभावा-
दित्याशङ्क्याह—विचारउत्तरविधिप्रयुक्तउपपद्यतइति १३ क्रतुबोधविधयः साङ्गवेदाध्य-
यनादापाततःप्रतिपन्नाः विरोधपरिहारेणप्रतिष्ठितंनिर्णयज्ञानमन्तरेणानुष्ठापयितुमशक्नुवन्तस्त-
न्निर्णयायक्रतुविचारंप्रयोजयन्ति श्रवणविधिस्तुसाक्षादेवब्रह्मविचारंविधत्ते एवंचसतिश्रवण-
स्यविधेयप्रयोजकत्वंक्रतुविधीनांचविधेयोपकारिप्रयोजकत्वमित्युपपद्यतेतराम् अध्य-
यनविधिप्रयुक्तिपक्षेतु तद्विधेःक्रतुद्वारास्वर्गसिद्धिपर्यन्तत्वात् क्रत्वनुष्ठानस्यापितत्प्रयुक्तीक्र-
तुविधिवैयर्थ्यंप्राप्येत नन्वध्ययनविधेस्त्रैवर्णिकमात्रंप्रतिनित्यत्वात्तत्प्रयुक्तोविचारस्यापितद्व-
त्प्रयत्नान्यथेतिचेत् क्रतुविचारस्यत्रैवर्णिकमात्रेऽपिनित्यत्वसिद्धेः किंवाब्रह्मविचारस्य तत्रा-

द्योऽस्मन्मतेऽपिसमइत्याह—अतोनित्यःक्रतुविचारस्त्रैवर्णिकमात्रस्येति १४ यतोऽकरणेप्रत्यवायश्रवणात् क्रतवस्त्रैवर्णिकानांनित्याअतइत्यर्थः । द्वितीयोऽनिष्टइत्याह—ब्रह्मविचारःपुनः परमहंसस्यैवेति १५ नित्योनुपङ्गइति ननूकरीत्याध्ययनस्याक्षरग्रहणान्तत्वेऽर्थज्ञानमविहितंस्यात् मैवम् वाक्यान्तरेणतद्विधानात् ब्राह्मणेननिष्कारणोधर्मःषडङ्गोवेदोध्येयोज्ञेयश्चेतितद्विधिः तत्रनिष्कारणशब्देनाध्ययनज्ञानयोःकाम्यत्वंनिवार्यते अर्थज्ञानेपुरुषप्रवृत्तिकरंवचनद्वयंशाखान्तरगतंनिरुक्तकारोयास्कएवमुदाजहार—अथापिज्ञानप्रशंसाभवत्यज्ञाननिन्दाच स्थाणुरयंभारहारःकिलाभूदधीत्यवेदंनविजानातियोर्थम् । योऽर्थज्ञइत्सकलंभद्रमश्नुतेनाकमेतिज्ञानविधूतपाप्मा । यद्गृहीतमविज्ञातंनिगदेनैवशब्द्यते । अनग्नाविव शुष्कैधोनतज्ज्वलतिकर्हिचिदिति । अस्मिन्मन्त्रद्वयेयोऽर्थज्ञइत्यनेनैवार्धेनवेदार्थज्ञानंप्रशस्यते इतरेणार्धत्रयेणज्ञानराहित्यंनिन्द्यते योवेदार्थंजानातिसोऽयमिहलोकेसकलंश्रेयःप्राप्नोति तथातेनज्ञानेनपापक्षयेसतिमृतःस्वर्गंप्राप्नोति तदेतदैहिकमामुष्मिकंचज्ञानफलंतैत्तिरीयाम्नायोदाहरणेनतदीयतात्पर्याभिधायिब्राह्मणेनचस्पष्टीचक्रुः—तदेषाभ्युक्ता येअर्वाङ्गुतवापुराणेवेदंविद्वांसमभितोवदन्त्यादित्यमेवतेपरिवदन्तिसर्वेअग्निंद्वितीयंतृतीयंचहꣳसमिति । यावतीर्वैदेवतास्ताःसर्वावेदविदिब्राह्मणेवसन्तितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणातीति । वेदंविद्वानर्थाभिज्ञःपुरुषः सचद्विविधः अर्वाचीनकालेसमुत्पन्नश्चतुर्दशविद्यास्थानकुशलःकश्चिदुपाध्यायः पुरातनकालेसमुत्पन्नोव्यासादिश्च तमेतमुभयविधंविद्वांसंविद्यामदधनमदकुलमदोपेताःपण्डितंमन्यापेपुरुषाअभितोविद्यादिपुदूषयन्ति वेसर्वेप्यादित्यमेवप्रथमंदूषयन्ति आदित्यापेक्षयाद्वितीयमग्निंदूषयन्ति तदुभयापेक्षयातृतीयंहंसंदूषयन्ति हन्तिसदागच्छतीतिहंसोवायुः अग्न्यादित्यत्वंचवेदविदआम्नातम्—अग्नेर्वायोरादित्यस्य सायुज्यंगच्छतीति । नकेवलमेतद्देवतात्रयं किन्तु सर्वाअपिदेवतावेदविदिवसन्ति ब्राह्मणान्वेदविदोदृष्ट्वास्मृत्वावाप्रतिदिनंनमस्कुर्यात् नतुतस्मिन्विद्यमानमपिदोषंकीर्तयेत् एवंसतितत्रमद्यार्थभूताःसर्वाअपिदेवतावेदार्थविदास्मर्यमाणतयातदीयहृदयेवस्थिताअयंनमस्कर्तातोषमेति नचैतदध्ययनस्यैवफलमितिशङ्कनीयम् विद्वांसमित्याम्नातत्वात् अन्यथावेदमधीयानमित्याम्नायेत । तस्मात्सर्वदेवतारूपत्वात्प्राणिभिःपूज्यस्त्ववेदार्थविदोलोकद्वयेऽपिश्रेयःप्राप्तिरुपपद्यते यस्तुवेदमधीत्यार्थंनविजानातिसोऽयंपुमान्भारमेवहरविधारयति स्थाणुरितिदृष्टान्तः छिन्नशाखंशुष्कंवृक्षमूलंस्थाणुशब्देनोच्यते सचयथेन्धनार्थमेवोपयुज्यते नतुपुष्पफलार्थम् तथाकेवलपाठक-

१ नि० १. १८. । २ तै० आ० द्वितीयाध्याये. । ३ तै० आ० द्वितीयाध्याये. ।

स्यमाप्त्यत्वंनभवतीत्येतावदेव नत्वनुष्ठानंस्वर्गादिफलसिद्धिर्वास्ति किलेत्यनेनलोकप्रसिद्धिर्द्यो-
त्यते लोकेपिपाठकस्ययावतीधनादिपूजाततोऽप्यधिकाविदुषिदृश्यते किञ्च यद्वेदवाक्यमाचार्या-
द्गृहीतमर्थज्ञानरहितंपाठरूपेणैवपुनःपुनरुच्चार्यते तत्कदाचिदपिनज्वलतिस्वार्थंनप्रकाशयति य-
थाग्निरहितप्रदेशेप्रक्षिप्तंशुष्ककाष्ठंनज्वलतितद्वत् तथासति तस्यवाक्यस्यवेदत्वमेवमुख्यंनस्यात्
अलौकिकपुरुषार्थोपायंवेत्त्यनेनेतिवेदशब्दनिर्वचनम्।तथाचोक्तम्—प्रत्यक्षेणानुमित्यावायस्तूपा-
योनबुध्यते । एनंविदन्तिवेदेनतस्माद्वेदस्यवेदतेति १ अतोमुख्यवेदत्वसिद्ध्येज्ञातव्यएवतदर्थः ।
किञ्चात्रयास्केनकाचिदृग्याप्युदाहृता—उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनाम् ।
उतोत्वस्मैतन्वं॑विसस्रेजायेवपत्यउशतीसुवासाइति।तत्रपूर्वार्धस्यतात्पर्यंसएवदर्शयति—अप्येकः
पश्यन्नपश्यतिवाचमपिचशृण्वन्नशृणोत्येनामित्यविद्वांसमाहार्धमिति । अस्यायमर्थः—यःपुमान-
र्थंनवेत्तितंप्रतिपूर्वार्धेनमन्त्रोब्रूते एकःपुरुषःपाठमात्रपर्यवसितोवेदरूपांवाचंपश्यन्नपिनसम्यक्पश्य-
ति एकवचनबहुवचनादिविवेकाभावेपाठशुद्धेरपिकर्तुमशक्यत्वात् वायुमेवस्वेनभागधेयेनोप-
धावतिसएवैनंभूतिंगमयति । आदित्यानेवस्वेनभागधेयेनोपधावति तएवैनंभूतिंगमयन्तीत्यादाव-
न्युत्पन्नःकथंपाठंनिश्चिनुयात् अन्यःकश्चिदर्थज्ञानायव्याकरणाद्यङ्गानिशृण्वन्नपिमीमांसाराहि-
त्यादेनांवेदरूपांवाचंनसम्यक्शृणोति यावतोश्वान्प्रतिगृह्णीयात्तावतोवारुणाञ्चतुष्कपालान्निर्व-
पेदिति । अत्रव्याकरणमात्रेणप्रतिग्रहीतुरिष्टिःप्रतीयते मीमांसायांतुन्यायेनदातुरितिनिर्णीतम्।
तस्मादुभयविधमप्यविद्वांसंप्रत्येवमाहेति । तृतीयपादतात्पर्यंदर्शयति—अप्येकस्मैतन्वंविसस्र इ-
तिस्वमात्मानंविवृणुतेज्ञानंप्रकाशनमर्थस्याहानयावाचाइति । अस्यायमर्थः—अपिशब्दपर्या-
यउतोशब्दः सचपूर्वोक्तानभिज्ञवैलक्षण्यायात्रप्रयुक्तः निपातानामनेकार्थत्वात् यःपुमान्व्याक-
रणाद्यङ्गैःस्वशब्दार्थंमीमांसयातात्पर्यंचशोधयितुंप्रवृत्तस्तस्माएकस्मैवेदःस्वकीयांतनुंविसस्रेस्व-
मित्यादिकंपदव्याख्यानंज्ञानमित्यादिकंतात्पर्यव्याख्यानम् वेदार्थप्रकाशनक्षमंसम्यग्ज्ञानं-
ममपातृतीयपादरूपयावाचामन्त्रआहेति । चतुर्थपादतात्पर्यंदर्शयति—उपमोत्तमयावाचा-
जायेवपत्येकामयमानासुवासाऋतुकालेषुसुवासाःकल्याणवासाःकामयमानाऋतुकालेषुयथास-
एनांपश्यतिसशृणोतीत्यर्थज्ञप्रशंसेति । अस्यायमर्थः—उत्तमयाचतुर्थपादरूपयावाचातृतीयपा-
दार्थस्योपमोच्यते उशतीत्येतस्यव्याख्यानंकामयमानेति यद्यप्यक्लिष्टगृहकृत्यवेलायांमलिनवासा-
स्तथापिसंभोगकालेपुकल्याणवासाभवति तत्रहेतुः कामयमानाऋतुकालेष्विति यथासपतिरे-
नांजायांसाकल्येनादरयुक्तःपश्यति किञ्च तयोक्तमर्थंहितबुद्ध्याशृणोति तथाऽयंचतुर्दशविद्या-

१ ऋ. स. ८. २. २३. । २ नि० १. १९. । ३ तै. सं. २. १. १. । ४ तै० सं. २. ३. १२. । ५ तै. सं. २. ३. १२. । ६ नि० १. १९. । ७ नि० १. १९ ।

स्थानपरिशीलनोपेतःपुरुषोवेदार्थरहस्यंसम्यक्पश्यति वेदोक्तंचधर्मंब्रह्मरूपमर्थंहितबुद्ध्यास्वीकरोति सेयमुक्तावेदार्थाभिज्ञस्यप्रशंसेति पुनरप्यृगन्तरंयास्कउदाजहार—तस्योत्तराभूयसेनिर्वचनाय—उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु । अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पामिति । अयमर्थःपूर्वोदाहृतायाउतत्वःपश्यन्नित्यादिकायाऋचोऽनन्तरमेषाम्नाताकाचिदृक्तस्यपूर्वोक्तमन्त्रस्यार्थस्यभूयसेनिर्वचनायसम्पद्यते तमर्थमतिशयेनप्रतिपादयितुंप्रभवति कथमितिचेत्तदुच्यते—अपिचैकंचतुर्दशविद्यास्थानकुशलंपुरुषंवेदरूपायावाचः सख्येस्थित्वास्थैर्येणवेदोक्तार्थामृतपानयुक्तमाहुःअभिज्ञाःकथयन्ति सखिविदंसखायमितिमन्त्रे . वेदस्यसखित्वमुदाहृतम् यद्वा स्वर्गलोकेवेदानांसख्येस्थित्वाअतिशयेनपीतामृतमाहुः . वाचामिनाईश्वराः सभासुप्रगल्भावाजिनाः तेषुमध्येप्येनंवेदार्थकुशलंचोदयितुंनहिन्वन्ति नकेपिप्राप्नुवन्ति तेनसहविवदितुमसमर्थत्वात् . यस्त्वन्यःपाठमात्रपरःपुष्पफलरहितांवाचंशुश्रुवान्भवति पूर्वकाण्डोक्तस्यधर्मस्यज्ञानंपुष्पम् उत्तरकाण्डोक्तस्यब्रह्मणोज्ञानंफलम् यथालोकेपुष्पंफलस्योत्पादकं तथावेदानुवचनादिधर्मज्ञानमनुष्ठानद्वाराफलात्मकब्रह्मज्ञानेच्छांजनयति तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तियज्ञेनदानेनतपसानाशकेनेतिश्रुतेः । यथाचफलंतृप्तिहेतुस्तथाब्रह्मज्ञानंकृतकृत्यत्वहेतुः यत्पूर्णानन्दैकबोधः तद्ब्रह्माहमस्मीतिकृतकृत्योभवतीतिश्रुतेः । तादृशपुष्पफलरहितवेदपाठकःसएषपुमानधेन्वामाययासहचरति नवप्रसूतिकाक्षीरस्यदोग्ध्रीगौःप्रीतिहेतुत्वाद्धिनोतीतिव्युत्पत्त्याधेनुरित्युच्यते पाठमात्रपरंप्रतिवेदरूपावाक्धर्मब्रह्मज्ञानरूपंक्षीरंनदोग्धीत्यधेनुः अतएवासौमायाकपटरूपाऐन्द्रजालिकनिर्मितगोसदृशागोरूपत्वात् तयामाययासहचरन्नयंपरमपुरुषार्थंनलभतइत्यर्थः । इत्थंयास्केनज्ञानस्तुत्यज्ञाननिन्दोदाहरणस्यप्रपञ्चितत्वात् यच्चस्तूयतेतद्विधीयतइतिन्यायेनाध्ययनवदर्थज्ञानस्यापिविधिरभ्युपगन्तव्यः । किञ्चनक्षत्रेष्टिकाण्डेप्रतीष्टिफलवाक्यंयागतद्वेदनयोःसमानमेवाम्नायते—यंथाहवाअग्निर्देवानामन्नादः एवंहवाएषमनुष्याणांभवति यएतेनहविषायजते यउचैनदेववेदेति । अतोयागवत्फलाय स्यवेदनमपिविधीयते अनेनन्यायेनसर्वेष्वपिब्राह्मणेषुवेदनविधयोद्रष्टव्याः । ननुविद्याप्रशंसेति सर्ववेदनफलानांप्रशंसारूपत्वंजैमिनिनासूत्रितमितिचेत् अस्तुनाम विद्यमानेनापिफलेनप्रशंसितुंशक्यत्वात् दर्शयागस्यपूर्णमासयागस्यचातिपातेसतिप्रायश्चित्तरूपांवैश्वानरेष्टिंविधातुंविद्यमानेनैवस्वर्गफलेनस्तुतिःक्रियते—सुवर्गायवैहिटोकायदर्शपूर्णमासाविज्येतेइति । एवञ्चाचार्यैर्ब्रह्मज्ञानफलवाक्यस्यस्वार्थेऽपितात्पर्यंदर्शयितुमुदाहृतम्—इच्छाम्येवार्थवादत्वंवचसोन्यपरत्वतः । य-

---

१ ऋ० सं. ८. २. २३. ।	२ ऋ. सं. ८. २. २४. ।	३ तै० आ० ३. ७. ४. ।
४ ते. सं. २. २. ५ ।

थावस्त्वभिधायित्वात्तत्वभूतार्थवादता १ इज्येतेस्वर्गेलोकायदर्शादर्शौयथातथा। नत्वभूतार्थवादत्वंपापश्लोकाश्रुतिर्यथेति २ नचवेदनमात्रेणफलसिद्धावनुष्ठानवैयर्थ्यमितिशङ्कनीयम् फलभूयस्त्वेनपरिहृतत्वात् उदाहृतंचात्रजैमिनिसूत्रम्—फलस्यकर्मनिष्पत्तेस्तेषांलोकवत्परिमाणतः सारतोवाफलविशेषःस्यादिति एतच्चास्माभिः तरतिब्रह्महत्यांयोऽश्वमेधेनयजते यउचैनमेवंवेदेत्युदाहरणेनव्याख्यातम्। छन्दोगाश्चकेवलादनुष्ठानाद्विद्यासहितेनुष्ठानेफलातिशयमामनन्ति–तेनोभौकुरुतोयश्चैतदेवंवेदयश्चनवेदनानातुविद्याचाविद्याचयदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीति। यद्यप्यङ्गावबद्धोपास्तिरत्रविद्याशब्देनविवक्षिता तथापिन्यायःसर्वास्वपिविद्यासुसमानः। कुतस्तर्ह्येतावतीवेदनेभक्तिरितिचेत् कुतोवातवेषोऽत्रमद्वेषः। प्रशंसात्वस्माभिर्भूयसीदर्शिता निन्दांतुनक्काप्युपलभामहे किन्तुकर्मजन्यमपूर्वंयथामरणादूर्ध्वंजीवेनसहगच्छति तथाविद्याजन्यमप्यपूर्वंगच्छति तथाचवाजसनेयिनआमनन्ति—तंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाचेति तस्मादध्ययनवदर्थज्ञानस्यापिविहितत्वात् अर्थज्ञानायवेदोव्याख्यातव्यः विषयप्रयोजनसम्बन्धाधिकारिज्ञानमन्तरेणश्रोतृप्रवृत्त्यभावात् विषयादयोनिरूप्यन्ते—व्याख्यानस्यव्याख्येयोवेदोविषयः तदर्थज्ञानंप्रयोजनम् व्याख्यानव्याख्येयभावःसम्बन्धः ज्ञानार्थीचाधिकारी। यद्यप्येतावत्प्रसिद्धम् तथापिवेदस्यविषयाद्यभावेव्याख्यानस्यापिपरमविषयादिकंनस्यात् अतोवेदस्यचतुष्टयमुच्यते—वेदेपूर्वोत्तरकाण्डयोःक्रमेणधर्मब्रह्मणीविषयः तयोरनन्यलभ्यत्वात् तथाचपुरुषार्थानुशासनेसूत्रितम्—धर्मब्रह्मणीवेदैकवेद्येइति। जैमिनीयेचद्वितीयसूत्रेचोदनैवधर्मेप्रमाणम् चोदनाप्रमाणमेवेतिनियमद्वयंसंप्रदायविद्भिरभिहितम् चोदनैवेत्यमुमर्थमुपपादयितुंचतुर्थसूत्रेप्रत्यक्षविषयत्वंधर्मस्यनिराकृतम् प्रत्यक्षमनिमित्तंविद्यमानोपलम्भनत्वादिति अनुष्ठानादूर्ध्वमुत्पत्स्यमानस्यधर्मस्यपूर्वमविद्यमानत्वात् नप्रत्यक्षयोग्यतास्ति उत्तरकालेऽपिरूपादिराहित्यान्नेन्द्रियैरवगम्यते अतएवादृष्टमितिसर्वैरभिधीयते लिङ्गराहित्यान्नानुमानविषयत्वमप्यस्ति सुखदुःखेधर्माधर्मयोर्लिङ्गमितिचेत् बाढम् अयमपिलिङ्गलिङ्गिभावोवेदेनैवगम्यते ततश्चोदनैवधर्मेप्रमाणम् वैयासिकस्यतृतीयसूत्रस्यद्वितीयवर्णकेब्रह्मणःसिद्धवस्तुनोऽपिशास्त्रैकविषयत्वंभाष्यकृद्भिर्व्याख्यातम्—शास्त्रादेवप्रमाणाज्जगतोजन्मादिकारणंब्रह्माधिगम्यतइत्यभिप्रायइति। श्रुतिश्चभवति—नावेदविन्मनुतेतंबृहन्तमिति। तत्रोपपत्तिःपूर्वाचार्यैरेवमुदीरिता रूपलिङ्गादिराहित्यान्नास्यमानान्तरयोग्यतेति तस्मादनन्यलभ्यत्वात् अस्तिधर्मब्रह्मणोर्वेदविषयत्वम् तदुभयज्ञानंवेदस्यसाक्षात्प्रयोजनम् नचतस्यज्ञानस्यसप्तद्वीपावसुमतीराज्यासौगच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वंशङ्कनीयम् धर्मप्रयुक्तस्यपुरुषार्थस्य

१ तै०सं. ५ ३. १२।  २ तै० ब्रा० ३. १२ ९.।

स्तूयमानत्वात् धर्मोविश्वस्यजगतःप्रतिष्ठालोकेधर्मिष्ठंप्रजाउपसर्पन्ति धर्मेणपापमपनुदतिधर्मे सर्वंप्रतिष्ठितम् तस्माद्धर्मंपरमंवदन्तीति उद्दण्डस्यराज्ञोनियामकत्वात् विवदमानयोःपुरुषयोर्मध्येदुर्बलस्यापिराजसाहाय्यवज्जयहेतुत्वाच्चधर्मःपुरुषार्थः तथाचवाजसनेयिनःसृष्टिप्रकरणे समामनन्ति—तच्छ्रेयोरूपमत्यसृजतधर्मंतदेतत्क्षत्रस्यक्षत्रंयद्धर्मस्तस्माद्धर्मात्परंनास्त्यथोअबलीयान्बलीयांसमाशंसते धर्मेणयथैवराज्ञैवमिति । ब्रह्मविदाप्नोतिपरं । ब्रह्मवेदब्रह्मैवभवति । तरतिशोकमात्मविदित्यादिश्रुतिपुब्रह्मज्ञानप्रयुक्तःपुरुषार्थःप्रसिद्धः तदुभयज्ञानार्थीवेदेऽधिकारी सत्त्रैवर्णिकःपुरुषः। स्त्रीशूद्रयोस्तुसत्यामपिज्ञानापेक्षायामुपनयनाभावेनाध्ययनराहित्यात् वेदेधिकारःप्रतिषिद्धः धर्मब्रह्मज्ञानंतुपुराणादिमुखेनोत्पाद्यते तस्मात्त्रैवर्णिकपुरुषाणांवेदमुखेनार्थज्ञानेऽधिकारः । संम्बन्धस्तुवेदस्यधर्मब्रह्मभ्यांसहप्रतिपाद्यप्रतिपादकभावः तदीयज्ञानेनसहजन्यजनकभावः त्रैवर्णिकपुरुषैःसहोपकार्योपकारकभावः । तदेवंविषयाद्यनुबन्धचतुष्टयमवगत्यसमाहितधियःश्रोतारोवेदव्याख्यानेप्रवर्तन्ताम् ॥ अतिगम्भीरस्यवेदस्यार्थमवबोधयितुंशिक्षादीनि षडङ्गानिप्रवृत्तानि अतएवतेषामपरविद्यारूपत्वंमुण्डकोपनिषद्याथर्वणिकाआमनन्ति—द्वेविद्येवेदितव्येइतिहस्मयद्ब्रह्मविदोवदन्तिपराचैवापराच तत्रापराऋग्वेदोयजुर्वेदःसामवेदोथर्ववेदःशिक्षाकल्पोव्याकरणंनिरुक्तंछन्दोज्योतिषमिति । अथपरा ययातदक्षरमधिगम्यतइति साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानांकर्मकाण्डानामपरविद्यात्वम् । परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वात् उपनिषदांपरविद्यात्वम् वर्णस्वराद्युच्चारणप्रकारोयत्रोपदिश्यतेसाशिक्षा । तथाचतैत्तिरीयाउपनिषदारम्भेसमामनन्ति—शीक्षांव्याख्यास्यामः वर्णःस्वरः मात्राबलं सामसन्तानः इत्युक्तःशीक्षाध्यायइति । वर्णोऽकारादिः सचाङ्गभूतशिक्षाग्रन्थेस्पष्टमुदीरितः । त्रिषष्टिश्चतुःषष्टिर्वावर्णाःसंभवतोमताः । प्राकृतेसंस्कृतेचापिस्वयंप्रोक्ताःस्वयंभुवेत्यादिना। स्वरउदात्तादिः सोऽपितत्रोक्तः—उदात्तश्चानुदात्तश्चस्वरितश्चस्वरास्त्रयइति । मात्राह्रस्वादिःसापितत्रोक्ता—ह्रस्वोदीर्घःप्लुतइतिकालतोनियमाअचीति । बलंस्थानप्रयत्नौ तत्रअष्टौस्थानानिवर्णानामित्यादिनास्थानमुक्तम् । अचोऽस्पृष्टायणस्त्वीषदित्यादिनाप्रयत्नउक्तः । सामशब्देनसाम्यमुक्तम् अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येनमाधुर्यादिगुणयुक्तत्वेनोच्चारणंसाम्यम् गीतीशीघ्रीशिरःकम्पीत्यादिना उपांशुदष्टंत्वरितमित्यादिनाचदोषाउक्ताः । माधुर्यमक्षरव्यक्तिरित्यादिनागुणाउक्ताः । सन्तानःसंहिता वायवायाहीत्यत्रावादेशः । इन्द्राग्नीआगतमित्यत्रप्रकृतिभावः । एतच्चव्याकरणे

---

१ तै० आ० दशमप्रपाठके. । २ तै. आ० अष्टमप्रपाठके । ३ तै० आ० सप्तमप्रपाठके. । ४ 'शंभुमतेमताः, अयमेवात्रप्रचुरःपाठः । ५ ऋ. सं० १. १. ३. । ६ ऋ० सं० ३. १. १०. ।

ऽभिहितत्वात् शिक्षायामुपेक्षितम् शिक्ष्यमाणवर्णादिविकल्प्येवाधस्तत्रोदाहृतः—मन्त्रोहीनः
स्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतो-
ऽपराधादिति । इन्द्रशत्रुर्वर्धस्वेत्यस्मिन्मन्त्रेइन्द्रस्यशत्रुर्घातकइत्यस्मिन्विवक्षितेऽर्थेतत्पुरुषसमा-
सेसमासस्येतिसूत्रेणतत्पुरुषत्वात् अन्तोदात्तेनभवितव्यम् आद्युदात्तस्तुप्रयुक्तः तथा-
सति पूर्वपदप्रकृतिस्वरत्वेनबहुव्रीहित्वात् इन्द्रोघातकोयस्येत्यर्थःसम्पन्नः तस्मात्स्वरवर्णाद्यप-
राधपरिहारायशिक्षाग्रन्थोपेक्षितः । कल्पस्त्वाश्वलायनापस्तम्बबौधायनादिसूत्रम् कल्प्यतेसम-
र्थ्यतेयागप्रयोगोऽत्रेतिव्युत्पत्तेः नन्वाश्वलायनः किंमन्त्रकाण्डमनुसृत्यप्रवृत्तःकिंवाब्राह्मणमनु-
सृत्य । नाद्यः दर्शपूर्णमासौतुपूर्वंव्याख्यास्यामइत्येवंतेनोपक्रान्तत्वात् नह्यग्निमीळइत्यादयो-
मन्त्रादर्शपूर्णमासयोःक्वचिद्विनियुक्ताः । नद्वितीयः आग्नावैष्णवमेकादशकपालंपुरोडाशंनिर्व-
पन्तिदीक्षणीयायामित्येवंदीक्षणीयेष्ट्याब्राह्मणेप्रक्रान्तत्वात् । अत्रोच्यते—मन्त्रकाण्डोब्रह्मयज्ञा-
दिजपक्रमेणप्रवृत्तोनतुयागानुष्ठानक्रमेण ब्रह्मयज्ञश्चैवंविहितः यत्स्वाध्यायमधीयीतैकामप्यृचं
यजुःसामवातद्ब्रह्मयज्ञइति सोयंब्रह्मयज्ञजपोऽग्निमीळइत्याम्नायक्रमेणैवानुष्ठेयः तथासर्वाऋ-
चःसर्वाणियजूंषिसर्वाणिसामानिवाचस्तोमेपारिप्लवंशंसतीतिविधीयन्ते तथाश्विनेसंपत्स्य-
मानेसूर्योनोदियादपिसर्वादाशतयीरनुब्रूयादितिविधीयते तथारिच्यतइववाएषप्रेवरिच्यते यो-
याजयतिप्रतिवागृह्णाति याजयित्वाप्रतिगृह्यवानश्नन्त्रिःस्वाध्यायंवेदमधीयीतेतिप्रायश्चित्तरूपं
वेदपारायणंविहितम् । इत्यादिपुक्तत्स्नमन्त्रकाण्डविनियोगेषुसम्प्रदायपारम्पर्यागतए-
षक्रमआदरणीयः । विशेषविनियोगस्तुमन्त्रविशेषाणांश्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्या-
श्वलायनोदर्शयति अतोमन्त्रकाण्डक्रमाभावेऽपिनकश्चिद्विरोधः । इषेत्वोर्जेत्यादिमन्त्रास्तु
पादिष्वपिसएवक्रमः । यद्यपिब्राह्मणेदीक्षणीयेष्टिरुपक्रान्ता तथापितस्याइष्टेर्दर्शपूर्णमासवि-
कृतित्वेनतदपेक्षत्वात् आश्वलायनस्यादौतद्व्याख्यानंयुक्तम् अतः कल्पसूत्रंमन्त्रविनि-
योगेनक्रत्वनुष्ठानमुपदिश्योपकरोति तर्हि प्रवोवाजाइत्यादीनांसामिधेनीनामृचामेवविनियोग-
माश्वलायनोब्रवीतु नमःप्रवक्त्रइत्यादयस्त्वनाम्नाताःकुतोविनियुज्यन्तेइतिचेत् नायंदोषः शा-
खान्तरसमाम्नातानांब्राह्मणान्तरसिद्धस्यविनियोगस्यचगुणोपसंहारन्यायेनात्रवक्तव्यत्वात् सर्व-
शाखाप्रत्ययमेकंकर्मेतिन्यायविदः तस्माच्छिक्षेवकल्पोपेक्षितः । व्याकरणमपिप्रकृतिप्रत्ययाद्युप-
देशेनपदस्वरूपतदर्थनिश्चयायोपयुज्यते तथाचेन्द्रवायवग्रहब्राह्मणेसमाम्नायते—वाग्वैपराच्यव्या-

१ ऐ० ब्रा० १. १. । २ तै. आ० द्वितीयप्रपाठके. । ३ तै० आ० द्वितीयप्रपाठके. ।
४ ऋ. सं. २. १. २८. । ५. समाम्नातस्येत्यपिपाठः । ६ तै. सं. ६. ४. ७. ।

कृतावदन्तेदेवाइन्द्रमब्रुवन्निमान्नोवाचंव्याकुर्विति सोऽब्रवीद्वरंवृणैमह्यंचैवैषवायवेचसहगृह्याताइति तस्मादैन्द्रवायवःसहगृह्यतेतामिन्द्रोमध्यतोऽवक्रम्यव्याकरोत् तस्मादियंव्याकृतावागुद्यतेइ- ति अग्निमीळेपुरोहितमित्यादिवाक्पूर्वस्मिन्कालेपराचीसमुद्रादिध्वनिवदेकात्मिकासतीअव्या- कृता प्रकृतिःप्रत्ययःपदंवाक्यमित्यादिविभागकारिग्रन्थसंघरहितासीत् तदानीं देवैःप्रा- र्थितइन्द्रएकस्मिन्नेवपात्रेवायोःस्वस्यचसोमरसग्रहणरूपेणवरेणतुष्टस्तामखण्डांवाचंमध्येविच्छि- द्यप्रकृतिप्रत्ययादिविभागंसर्वत्राकरोत् तस्मादियंवागिदानीमपिपाणिन्यादिमहर्षिभिर्व्याकृतास- र्वैःपठ्यतइत्यर्थः तस्यैतस्यव्याकरणस्यप्रयोजनविशेषोवररुचिनावार्त्तिकेदर्शितः । रक्षोहागमल- घ्वसंदेहाःप्रयोजनमिति । एतानिरक्षादिप्रयोजनानिप्रयोजनान्तराणिचमहाभाष्येपतञ्जलिनास्प- ष्टीकृतानि रक्षार्थं वेदानामध्येयंव्याकरणम् लोपागमवर्णविकारज्ञोहिसम्यग्वेदान्परिपालयिष्यति वेदार्थंचाध्यवस्यति ऊहःखल्वपिनसर्वैर्लिङ्गैर्नसर्वाभिर्विभक्तिभिर्वेदमन्त्रानिगदिताः तेचावश्यंय- ज्ञगतेनयथायथंविपरिणमयितव्याः तान्नावैयाकरणःशक्नोतिविपरिणमयितुम् तस्मादध्येयं व्याकरणम् आगमःखल्वपिब्राह्मणेननिष्कारणोधर्मःषडङ्गोवेदोऽध्येयोज्ञेयश्च प्रधानंचषट्स्वङ्गेषु व्याकरणम् प्रधानेचकृतोयत्नःफलवान्भवति । लघ्वर्थंचाध्येयंव्याकरणम् बृहस्पतिरिन्द्रायदि- व्यंवर्षसहस्रंप्रतिपदविहितानांशब्दानांशब्दपारायणंप्रोवाचनान्तंजगाम बृहस्पतिश्चवक्ताइन्द्रश्चा- ध्येतादिव्यंवर्षसहस्रमध्ययनकालःअन्तंचनजगाम । अद्यतुपुनर्यदिपरमायुर्भवति सवर्षशतंजी- वति तत्रकुतःप्रतिपदपाठेनसकलपदावगमः कुतस्तरांप्रयोगेण । असन्देहार्थंचाध्येयंव्याकरण- म् याज्ञिकाःपठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तत्रनज्ञायतेकिंस्थूलानिपृष- न्तियस्याःसास्थूलपृषती किंवास्थूलाचासौपृषतीस्थूलपृषतीति तांनावैयाकरणःस्वरतोऽध्य- वस्यति यदिसमासान्तोदात्तत्वंततःकर्मधारयः अथपूर्वपदप्रकृतिस्वरत्वंततोबहुव्रीहिरिति । इ- मानिचभूयःशब्दानुशासनस्यप्रयोजनानि। तेऽसुराःदुष्टःशब्दः यदधीतं यस्तुप्रयुङ्क्ते अविद्वांसोवि- भक्तिंकुर्वन्ति योवाइमां चत्वारि उतत्वः सक्तुमिव सारस्वतीं दशम्यांपुत्रस्य सुदेवोअसिवरु- ण ॥ तेऽसुराः तेऽसुराहेलयोहेलयइतिकुर्वन्तःपराबभूवुः तस्माद्ब्राह्मणेननम्लेच्छितवैनापभाषितवै म्लेच्छोहवाएषयदपशब्दः म्लेच्छामाभूमेत्यध्येयंव्याकरणम् । दुष्टःशब्दः दुष्टःशब्दःस्वरतोवर्ण- तोवामिथ्याप्रयुक्तोनतमर्थमाह । सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतोऽपराधादिति दुष्टा- ञ्छब्दान्मापयुक्ष्महीत्यध्येयंव्याकरणम् । यदधीतं यदधीतमविज्ञातंनिगदेनैवशब्द्यते । अ- नग्नाविवशुष्कैधोनतज्ज्वलतिकर्हिचित् । अविज्ञातार्थकंमाध्यगीष्महीत्यध्येयंव्याकरणम् । य- स्तुप्रयुङ्क्ते । यस्तुप्रयुङ्क्तेकुशलोविशेषेशब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोतिजयंपरत्रवा-

१ पातञ्जलभाष्येपस्पशाह्निके. । २ नि० १. १८. ।

ग्योगविद्दुष्यतिचापशब्दैः । कः वाग्योगविदेव योहिशब्दाञ्जानातिअपशब्दानप्यसौजानाति यथैवशब्दज्ञानेधर्मएवमपशब्दज्ञानेऽप्यधर्मःप्राप्नोति अथवाभूयानधर्मःप्राप्नोति भूयांसोह्यपशब्दाअल्पीयांसःशब्दाएकैकस्यहिशब्दस्यबहवोपभ्रंशायथागौरित्येतस्यशब्दस्यगावीगोणीगोगोपोतलिकेत्येवमादयः । अथयःअवाग्योगवित् अज्ञानंतस्यशरणम् विषमउपन्यासः नात्यन्तायाज्ञानंशरणंभवितुमर्हति योह्यजानन्ब्राह्मणंहन्यात् सुरांवापिबेत् सोऽपिमन्ये पतितःस्यात् एवंतर्हिकः अवाग्योगविदेव अथयः वाग्योगवित् ज्ञानंतस्यशरणं । अविद्वांसः अविद्वांसःप्रत्यभिवादेनाम्नोयेनप्लुतिंविदुः । कामंतेषुतुविप्रोष्यस्त्रीष्विवायमहंवदेदिति । स्त्रीवन्माभूमेत्यध्येयंव्याकरणं विभक्तिंकुर्वन्ति याज्ञिकाःपठन्ति प्रयाजाःसविभक्तिकाःकर्तव्याइति नचान्तरेणव्याकरणं प्रयाजाः सविभक्तिकाः शक्याःकर्तुम् तस्मादध्येयंव्याकरणम् । योवाइमां योवाइमांपदशःस्वरशोवर्णशोऽक्षरशोवावाचंविदधाति सआर्त्विजीनोभवति आर्त्विजीनाः स्यामेत्यध्येयंव्याकरणम् । चत्वारिशृङ्गा चत्वारिशृङ्गात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश । चत्वारिशृङ्गा चत्वारिपदजातानि नामाख्यातोपसर्गनिपाताश्च त्रयोअस्यपादाः त्रयःकालाः द्वेशीर्षेसुपस्तिङश्च सप्तहस्तासःसप्तविभक्तयः त्रिधाबद्धः त्रिषुस्थानेषुबद्धः उरसिकण्ठेशिरसि वृषभोवर्षणात्कामानांरोरवीति रौतिः शब्दकर्मा महोदेवोमर्त्याँआविवेशमहतादेवेनसाम्यंयथास्यादित्यध्येयंव्याकरणम् । अथवा चत्वारि चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेङ्गयन्तितुरीयंवाचोमनुष्यावदन्ति येमनीषिणः मनसईषिणोमनीषिणःगुहायांत्रीणिनिहितानिनेङ्गयन्ति नचेष्टन्ते ननिमिषन्तितुरीयंवाचोमनुष्यावदन्ति तुरीयंहवाएतद्वाचोयन्मनुष्येषुवर्तते । उतत्वः पश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनाम् । उतोत्वस्मैतन्वं[1] विसस्रेजायेवपत्यउशतीसुवासाः । अपित्वल्येकःपश्यन्नपिनपश्यति शृण्वन्नपिनशृणोत्येनां विद्वांसमाहार्धत्वस्मैअन्यस्मैतन्वं विसस्रेतनुंविवृणुते जायेवपत्यउशतीसुवासाःयथाजायापत्येकामयमानासुवासाःस्वमात्मानंविवृणुते एवंवाक्विदेस्वमात्मानंविवृणुते वाक्नंनोविवृणुयादित्यध्येयंव्याकरणम् । सक्तुमिवतितउनापुनन्तोयत्रधीरामनसावाचमक्रत । अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि सक्तुःसचतेर्दुर्धावोभवतिकसतेर्वास्याद्विपरीतस्यविकसितोभवति नितउपरिपवनंभवति तितउवदातुत्नवद्वाधीराःप्रज्ञावन्तोध्यानवन्तोमनसाप्रज्ञानेनवाचमक्रत वाचमकृषत सख्यानिसंजानते क्रएषदुर्गमोमार्गः एकगम्योवाग्विषयः केपुनस्ते वैयाकरणाः कुतएतत् भद्रात्यैषांलक्ष्मीर्निहि-

१ ऋ० सं. २-३. २२ । २ ऋ० सं. ८. २. २३. । ३ ऋ० सं० ८. २. २३. ।

ताधिवाचि एषांवाचिभद्रालक्ष्मीर्निहिताभवति सारस्वतीं आहिताग्निरपशब्दंप्रयुञ्जानःप्रायश्चित्तीयांसारस्वतीमिष्टिंनिर्वपेदितिप्रायश्चित्तीयामाभूमेत्यध्येयंव्याकरणम् । दशम्यांपुत्रस्य दशम्यांपुत्रस्यजातस्यनामविदध्यात् घोषवदाद्यन्तरंतस्थमभिनिष्ठानान्तंद्व्यक्षरंचतुरक्षरंवाकृतंनामकुर्यात् नतद्धितान्तमिति नचान्तरेणव्याकरणंकृतस्तद्धितावाशक्याविज्ञातुम् तस्मादध्येयंव्याकरणम्। सुदेवोअसि सुदेवोअसिवरुणयस्यतेसप्तसिन्धवः । अनुक्षरन्तिकाकुदंसूर्म्यं सुषिरामिव । सप्तसिन्धवः सप्तविभक्तयः ककुदजिह्वातास्मिन्विद्यतेइतिकाकुदंतालु ऊर्मिःसूर्मिः स्थूणालोहप्रतिमेति एवंसिद्धेशब्दार्थसम्बन्धइत्यादिवार्तिकोक्तान्यत्रापिप्रयोजनान्यनुसन्धेयानि । अथनिरुक्तप्रयोजनमुच्यते—अर्थावबोधेनिरपेक्षतयापदजातंयत्रोक्तंतन्निरुक्तम् गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य वसवःवाजिनःदेवपत्न्योदेवपत्न्यइत्यन्तोयःपदानांसमाम्नायःसमाम्नातस्तस्मिन्ग्रन्थेपदार्थावबोधायपरापेक्षानविद्यते एतावन्तिपृथिवीनामान्येतावन्तिहिरण्यनामानीत्येवं तत्रतत्रविस्पष्टमभिहितत्वात् तदेतन्निरुक्तंत्रिकाण्डं तच्चानुक्रमणिकाभाष्येदर्शितम् आद्यंनैघण्टुकंकाण्डंद्वितीयंनैगमंतथा। तृतीयंदैवतंचेतिसमाम्नायस्त्रिधास्थितः । गौराद्यपारपर्यन्तमाद्यंनैघण्टुकंमतम् । जहाद्युल्बऋबीसान्तंनैगमंसम्प्रचक्षते ।अग्न्यादिदेवपत्न्यन्तंदैवताकाण्डमुच्यते । अग्न्यादिदेवीऊर्जाहुत्यन्तःक्षितिगतोगणः । वाय्वादयोभगान्ताःस्युरन्तरिक्षस्थदेवताः । सूर्यादिदेवपत्न्यन्ताद्युस्थानादेवताइति । गवादिदेवपत्न्यन्तंसमाम्नायमधीयतेइति । एकार्थवाचिनांपर्यायशब्दानांसंघोयत्रप्रायेणोपदिश्यतेतत्रनिघण्टुशब्दःप्रसिद्धः तादृशेष्वमरसिंहवैजयन्तीहलायुधादिषुदृशनिघण्टवइतिव्यवहारात् एवमत्रापिपर्यायशब्दसङ्घोपदेशात् आद्यकाण्डस्यनैघण्टुकत्वम् तस्मिन्काण्डेत्रयोऽध्यायाः तेषुप्रथमेपृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणिनामानि । द्वितीयेमनुष्यतदवयवादिद्रव्यविषयाणि तृतीयेतदुभयद्रव्यगततनुत्वबहुत्वह्रस्वतादिधर्मविषयाणि निगमशब्दोवेदवाची यास्केनतत्रतत्रापिनिगमोभवतीत्येवंवेदवाक्यानामवतारितत्वात् तस्मिन्निगमेएवप्रायेणवर्तमानानांशब्दानांचतुर्थाध्यायरूपेद्वितीयस्मिन्काण्डेउपदिष्टत्वात् तस्यकाण्डस्यनैगमत्वम् । पञ्चमाध्यायरूपस्यतृतीयकाण्डस्यदैवतत्वंविस्पष्टम् पञ्चाध्यायरूपकाण्डत्रयात्मकेएतस्मिन्ग्रन्थेपरनिरपेक्षतयापदार्थस्योक्तत्वात् तस्यग्रन्थस्यनिरुक्तत्वम् तद्व्याख्यानंच समाम्नायःसमाम्नातइत्यारभ्यतस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्कोनिर्ममे तदपिनिरुक्तमित्युच्यते एकैकस्यपदस्यसम्भाविताअवयवार्थास्तत्रनिःशेषेणोच्यन्तइतिव्युत्पत्तेः । तत्रहिचत्वारिपदजातानि नामाख्यातेचोपसर्गनिपाताश्चेतिप्रतिज्ञायो-

१ आश्वलायनगृह्यसूत्रेप्रथमाध्याये , पातञ्जलमहाभाष्यपस्पशाह्निकेच।

च्चावचेष्वर्थेषुनिपतन्तीतिनिपातस्वरूपंनिरुच्यैवमुदाहृतम् नेतिप्रतिषेधार्थीयोभाषायामुभयम्-न्वध्यायंनेन्द्रंदेवममंसतेतिप्रतिषेधार्थीयइति दुर्मदासोनसुरायामित्युपमार्थीयइतिच तच्चलो-केकेवलप्रतिषेधार्थीयस्यापिनकारस्यवेदेप्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन्ग्रन्थेवगम्य-ते एवंग्रन्थकारेणोक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मन्त्रव्याख्यानावसरेएवास्माभिरुदाहरि-ष्यन्ते नचनिर्वचनानांनिर्मूलत्वंशङ्कनीयम् एतद्व्युत्पत्त्यर्थमेवब्राह्मणेषुपदनिर्वचनानांकेषांचि-दुक्तत्वात् तदाहुतीनामाहुतित्वमिति तमिदंन्द्रंसन्तमिन्द्रइत्याचक्षतइति यदप्रथयत्तत्पृ-थिव्याःपृथिवीत्वमितिच ग्रन्थकारोऽपितत्रतत्रस्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति केषांचिन्निर्वचनानांव्याकरणबलेनसिद्धावपिनसर्वेषांसिद्धिरस्ति अतएवग्रन्थकारआह तदि-दंविद्यास्थानंव्याकरणस्यकार्त्स्न्यंस्वार्थसाधकंचेति तस्माद्वेदार्थावबोधायोपयुक्तंनिरुक्तम्। त-थाछन्दोग्रन्थोऽप्युपयुज्यते छन्दोविशेषाणांतत्रतत्रविहितत्वात् तस्मात्सप्तचतुरुत्तराणिछन्दां-सिप्रातरनुवाकेनूच्यन्तइतिह्याम्नातम् गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीत्येतानिसप्तच्छन्दां-सि चतुर्विंशत्यक्षरागायत्री ततोऽपिचतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक् एवमुत्तरोत्तरा-धिकाअनुष्टुबादयोऽवगन्तव्याः तथान्यत्रापिश्रूयते—गायत्रीभिर्ब्राह्मणस्यादध्यात् त्रिष्टुब्भीरा-जन्यस्य जगतीभिर्वैश्यस्येति। तत्रमगणयगणादिसाध्योगायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण नसुविज्ञेयः किञ्चयोहवाअविदितार्षेयच्छन्दोदैवतब्राह्मणेनमन्त्रेणयाजयतिवाध्यापयतिवास्था-णुंवर्च्छतिगर्तंवापात्यतेप्रमीयतेवापापीयान्भवति तस्मादेतानिमन्त्रेमन्त्रेविद्यादितिश्रूयते तस्मा-त्तद्वेदनायछन्दोग्रन्थउपयुज्यते। ज्योतिषस्यप्रयोजनंतस्मिन्नेवग्रन्थेऽभिहितम् यज्ञकालार्थ-सिद्धयइति कालविशेषविधयश्चश्रूयन्ते संवत्सरमेतद्व्रतंचरेत्। संवत्सरंमुख्यंभृत्वे-त्येवमादयःसंवत्सरविधयः वसन्तेब्राह्मणोऽग्निमादधीत ग्रीष्मेराजन्यआदधीत शर-दिवैश्यआदधीतेत्याद्याऋतुविधयः मासिमासिसत्रपृष्ठान्युपयन्तिमासिमास्यतिग्राह्यागृह्यन्तइ-त्याद्यामासविधयः यंकामयेतवसीयान्स्यादितितंपूर्वपक्षेयाजयेदित्याद्याःपक्षविधयः एकाष्ट-कायांदीक्षेरन्फल्गुनीपूर्णमासेदीक्षेरन्नित्याद्यास्तिथिविधयः प्रातर्जुहोतिसायंजुहोतीत्याद्याःप्रातः-कालादिविधयः कृत्तिकास्वग्निमादधीतेत्याद्यानक्षत्रविधयः अतःकालविशेषानवगमयितुंज्यो-तिषमुपयुज्यते। एतेषांचवेदार्थोपकारिणांषण्णांग्रन्थानांवेदाङ्गत्वंशिक्षायामेवमुदीरितम्—छन्दः पादौतुवेदस्यहस्तौकल्पोऽथपठ्यते। ज्योतिषामयनंचक्षुर्निरुक्तंश्रोत्रमुच्यते। शिक्षाघ्राणं तुवेदस्यमुखंव्याकरणंस्मृतम्। तस्मात्साङ्गमधीत्यैवब्रह्मलोकेमहीयतेइति षडङ्गवत्पुराणादीना-

१ ऐ० आ० चतुर्थाध्यायस्यतृतीयखण्डे. । २ तै० ब्रा० १.३.३. । ३ तै० ब्रा० १.१.९. । ४ तै. आ० प्रथमप्रपाठके. । ५ तै. सं. ५. ६. ५. । ६ तै. ब्रा० १.१.२. ।

मपिवेदार्थज्ञानोपयोगोयाज्ञवल्क्येनस्मर्यते—पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः
स्थानानिविद्यानांधर्मस्यचचतुर्दशेति । इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत् । बिभेत्यल्पश्रुता-
द्वेदोमामयंप्रहरेदिति । अन्यत्रापिस्मर्यते ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानिहरिश्चन्द्र-
नाचिकेताद्युपाख्यानानिधर्मब्रह्मावबोधोपयुक्तानि तेषुतेष्वितिहासग्रन्थेषुस्पष्टीकृतानि उपनिषदु-
क्ताश्चसृष्टिस्थितिलयादयोब्राह्मपाद्मवैष्णवादिपुराणेषुस्पष्टीकृताः सर्गश्चप्रतिसर्गश्चवंशोमन्वन्त-
राणिच । वंशानुचरितंचेतिपुराणंपञ्चलक्षणमिति । सृष्ट्यादेःपुराणप्रतिपाद्यत्वावगमनात् न्या-
यशास्त्रेप्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनांषोडशपदार्थानांनिरूपणात् तदनुसारेणेदंवाक्य-
मस्मिन्नर्थेप्रमाणंभवतिनेतरदितिनिर्णयःकर्तुंशक्यते पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्टएव।
मन्वत्रिविष्णुहारीतादिप्रोक्तासुस्मृतिषुवेदोक्तसन्ध्यावन्दनादिविधयःप्रपञ्चिताः तदुहवाएतेब्रह्मवा-
दिनःपूर्वाभिमुखाःसन्ध्यायांगायत्रियाभिमन्त्रिताआपऊर्ध्वंविक्षिपन्तीत्यादिकःसन्ध्यावन्दनविधिः
पञ्चवाएतेमहायज्ञाःसततंप्रतायन्तइत्यादिकोमहायज्ञविधिः एवंविध्यन्तराणिद्रष्टव्यानि उक्तप्र-
कारेणपुराणादीनांवेदार्थज्ञानोपयोगाद्विद्यास्थानत्वंयुक्तम् एतैःपुराणादिभिश्चतुर्दशविद्यास्थानै-
रुपबृंहितायाविद्यायाग्रहणेधिकारिविशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः तांश्चमन्त्रान्यास्क-
उदाजहार तत्रायंप्रथमोमन्त्रः—विद्याहवैब्राह्मणमाजगामगोपायमाशेवधिष्टेहमस्मि । असूयका-
यानृजवेयतायनमाब्रूयावीर्यवतीतथास्यामिति॥१॥विद्याभिमानिनीदेवताब्राह्मणमुपदेष्टारमाचा-
र्यमागत्यैवंप्रार्थयामास हेब्राह्मणमांअनधिकारिणेनुपदिश्यपालय तवाहंनिधिवत्पुरुषार्थहेतुरस्मि
तादृश्यांमयिमदुपदेष्टरित्वयिचयोऽसूयांकरोति यश्चार्जवेनविद्यांनाभ्यस्यति योऽपिस्नानाचमना-
द्याचारनियतोनभवति तादृशेभ्यःशिष्याभासेभ्योमांनब्रूयाः तथा सतितद्धृदयेस्थित्वाफलप्रदा-
भवेयम् । अथद्वितीयोमन्त्रः—यआतृणत्त्यवितथेनकर्णावदुःखंकुर्वन्नमृतंसंप्रयच्छन् । तंमन्येत
पितरंमातरंचतस्मैनद्रुह्येत्कतमच्चनाह॥२॥पूर्वस्मिन्मन्त्रेआचार्यस्यनियममभिधायास्मिन्मन्त्रेशि-
ष्यस्यनियमोऽभिधीयते वितथमनृतमपुरुषार्थभूतंलौकिकंवाक्यंतद्विपरीतंसत्यंवेदवाक्यंअवि-
तथम् तादृशेनवाक्येनयआचार्यःशिष्यस्यकर्णावातृणत्तिसर्वतस्तद्देनंपूरणंकरोति उपसर्गवशा-
दौचित्याच्चतृणत्तिधातोरर्थान्तरेवृत्तिः सर्वदावेदंयःश्रावयतीत्यर्थः किंकुर्वन्अदुःखंकुर्वन्मन्दप्र-
ज्ञस्यमाणवकस्यादावर्धर्चंऋचंवाग्रहीतुमशक्तस्ययथादुःखंनभवति तथापादंपादैकदेशंवाग्राहयन्
किञ्चअमृतंसंप्रयच्छन्नमृतत्वस्यदेवत्वजन्मनोमोक्षस्यवाप्रापकत्वात् अमृतंवेदार्थस्तस्यप्रदानंकु-
र्वन् तंतादृशमाचार्यंसच्छिष्योमुख्यंमातापितृरूपंमन्येत पूर्वसिद्धौतुमातापितरावधमस्यमनुष्यश-
रीरस्यप्रदानादमुख्यौ तस्मैमुख्यमातापितृरूपायाचार्यायकमपिद्रोहंनकुर्यात् । अथतृतीयो-

१ याज्ञवल्क्यस्मृतौ अ० १. श्लो० २. । २ तै. आ. द्वितीयप्रपाठके । ३ नि०२.४.

मन्त्रः—अध्यापितायेगुरुंनाद्रियन्तेविप्रावाचामनसाकर्मणावा । यथैववेनगुरोर्भोजनीयास्तथैवतान्भुनक्तिश्रुतंतदिति ॥३॥येत्वधमाविप्रागुरुणाध्यापिताःसन्तोविनयोक्त्यातदीयहितचिन्तनेनशुश्रूषयावागुरुंनाद्रियन्तेआदररहितास्तेशिष्याभासागुरोर्नभोजनीयाः अनुभवयोग्यान भवन्ति नहितेषुगुरुःकृपांकरोति । यथैवगुरुणातेनपालनीयाः तथैवतानधमाञ्छिष्यान्तच्छ्रुतंगुरूपदिष्टंवेदवाक्यंनपालयतिफलप्रदंनभवतीत्यर्थः । अथचतुर्थोमन्त्रः—यमेवविद्याःशुचिमप्रमत्तंमेधाविनंब्रह्मचर्योपपन्नम्।यस्तेनद्रुह्येत्कतमच्चनाहतस्मैमाब्रूयानिधिपायब्रह्मन्निति॥४॥ हेआचार्ययमेवमुख्यशिष्यंशुचित्वादिगुणोपेतंजानीयाः किञ्चयोमुख्यशिष्यस्तुभ्यंकदाचिदपिनद्रुह्येत्तस्मैतुमुख्यशिष्यायत्वदीयनिधिपालकायहेब्रह्मन्वेदरूपांमांविद्यांब्रूयाः इत्थंविद्यादेवतयाप्रार्थितत्वात् आचार्येणमुख्यशिष्यायवेदविद्योपदेष्टव्या । तदर्थमृग्वेदोस्माभिःषडङ्गानुसारेणव्याख्यायते ।

---

१ निधिः शेवधिः ।

इत्युपोद्घातप्रकरणम्.

---

॥ श्रीः ॥

# ऋक्संहिता

## सभाष्या पदपाठसहिता च.



मन्त्रब्राह्मणात्मकेवेदेब्राह्मणस्यमन्त्रव्याख्यानोपयोगित्वात् आदौब्राह्मणमारण्यकाण्डस-
हितंव्याख्यातम् अथतत्रतत्रब्राह्मणोदाहरणेनमन्त्रात्मकःसंहिताग्रन्थोव्याख्यातव्यः सचाग्नि-
मीळइत्यारभ्ययथावःसुसहासतीत्यन्तोऽष्टकाण्डैर्दशमण्डलैश्चतुःषष्ट्यध्यायैः ईषदधिकसहस्रसू-
क्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभिर्दशसहस्रसंख्याभिर्ऋग्भिश्चोपेतः।तस्यचग्रन्थस्यकृत्स्न-
स्याप्याम्नातक्रमेणैवसामान्यविनियोगोब्रह्मयज्ञजपादौपूर्वमेवाभिहितः विशेषविनियोगस्तुतत्तत्क्र-
तौसूत्रकारेणप्रदर्शितः सचत्रिविधः सूक्तविनियोगस्तृचादिविनियोगएकैकस्याऋचोविनियोग-
श्चेति तत्राग्निमीळइतिसूक्तंप्रातरनुवाकेआग्नेयेक्रतौविनियुक्तम् सविनियोगआश्वलायनेनचतुर्था-
ध्यायस्यत्रयोदशेखण्डेसूत्रितः—अवानोअग्नइतिषडग्निमीळेऽग्निंदूतमिति । तत्रहीनपादग्रहणात्
सूक्तनिश्चयः सूक्तंसूक्तादौहीनेपादइतिपरिभाषितत्वात् तस्मिन्सूक्तेप्रथमायाऋचोद्वितीयस्यां
पवमानेष्टौस्विष्टकृतोयाज्यात्वेनविनियोगः सचद्वितीयाध्यायस्यप्रथमखण्डेसूत्रितः—साह्वान्वि-
श्वाअभियुजोऽग्निमीळेपुरोहितमितिसंयाज्येइति । तत्रसकलपादग्रहणात् ऋगित्यवगम्यते ।
ऋचंपादग्रहणइतिपरिभाषितत्वात् । तथासंयाज्येइत्युक्तेसौविष्टकृतीमवीयादितिपरिभाषितत्वा-
त्स्विष्टकृत्संबन्धनिश्चयः अत्रापिद्वितीयमन्त्रत्वेनोदाहृतत्वाद्याज्यात्वम्. यद्यपिसाह्वानित्यनयापु-
रोनुवाक्ययैवदेवतायाअनुस्मरणरूपःसंस्कारःसिद्धः तथापियाज्यानुवाक्ययोःसमुच्चयोद्वादशा-
ध्यायेचतुर्थपादेमीमांसितः—पुरोनुवाक्ययायाज्याविकल्प्यावासमुच्चिता। विकल्प्यान्यतरेणैवदे-
वतायाःप्रकाशनात्।पुरोनुवाक्यासमाख्यानाद्वचनाच्चसमुच्चयः। देवताप्रकाशनकार्यैकत्वात्
युग्मयोर्यथाविकल्पस्तथैकयुग्मगतयोरितिचेत् मैवम्.पुरोनुवाक्येतिसमाख्यायाउत्तरकालीन-

१ सप्तदशाधिकैरित्यर्थः ( खिल्यवर्जम् )।२ षडधिकैरित्यर्थः। ३ द्विसहस्राधिकचतुः-
शताधिकाभिरित्यर्थः ( वालखिल्यवर्जम् )।

याज्यामन्तरेणानुपपत्तेः किञ्चपुरोनुवाक्यामनूच्ययाज्ययायजतीतिप्रत्यक्षवचनेनदेवतोपलक्षण-हविःप्रदानकार्यभेदोक्तिपुरःसरंसाहित्यंविधीयते तस्मात्समुच्चयइति ॥

एतच्चाग्निमित्यादिसूक्तंनवर्चम् अग्निंनवमधुच्छन्दावैश्वामित्रइत्यनुक्रमणिकायामुक्तत्वात् विश्वामित्रपुत्रोमधुच्छन्दोनामकः तस्यसूक्तस्यद्रष्टृत्वात् तदीयऋषिः ऋषीगतावितिधातुः सर्वधातुभ्यइन् इगुपधात्किव् वेदमात्यर्थं तपोनुतिष्ठतःपुरुषान्स्वयंभूर्वेदपुरुषःप्राभोत तथाचश्रूयते—अजान्हवैपृश्नींस्तपस्यमानान्ब्रह्मस्वयंभ्वभ्यानर्षत्तदृषयोभवन्निति । तथाअतीन्द्रियस्यवेदस्यपरमेश्वरानुग्रहेणप्रथमतोदर्शनात् ऋषित्वमित्यभिप्रेत्यस्मर्यते—युगान्तेन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरेतपसापूर्वमनुज्ञाताःस्वयंभुवेति ऋष्यादिज्ञानाभावेप्रत्यवायःस्मर्यते—अविदित्वाऋषिंछन्दोदैवतंयोगमेवच । योध्यापयेज्जपेद्वापिपापीयाञ्जायतेतुसः । ऋषिच्छन्दोदैवतानि ब्राह्मणार्थस्वराद्यपि । अविदित्वाप्रयुञ्जानोमन्त्रकण्टकउच्यतइति । वेदनविधिश्चस्मर्यते—स्वरोवर्णोक्षरंमात्राविनियोगोर्थएवच । मन्त्रंजिज्ञासमानेनवेदितव्यंपदेपदइति । अग्निमित्यादिसूक्तस्यछन्दःअनुक्रमणिकायांयद्यप्यत्रनोक्तंतथापिपरिभाषायामेवमुक्तम्—आदौगायत्रंप्राग्घैरण्यस्तूपादिति हिरण्यस्तूपाख्यऋषिःयेषांमन्त्राणांवक्ष्यते ततःप्राचीनेषुमन्त्रेषुसामान्येनगायत्रंछन्दइत्यर्थः । पुरुषस्यपापसंबन्धंवारयितुमाच्छादकत्वात् छन्दइत्युच्यते तच्चारण्यकाण्डेसमाम्नायते—छादयन्तिहवाएनंछन्दांसिपापात्कर्मणइति । अथवाचीयमानाग्निसन्तापस्याच्छादकत्वात्छन्दः तच्चतैत्तिरीयाआमनन्ति—प्रजापतिरग्निमचिनुतसक्षुरपविर्भूत्वातिष्ठत्तंदेवाबिभ्यतोनोपायन्तेछन्दोभिरात्मानंछादयित्वोपायन्तच्छन्दसांछन्दस्त्वमिति । यद्वा अपमृत्युंवारयितुमाच्छादयतीतिछन्दः तदपिछान्दोग्योपनिषद्याम्नातम्—देवावैमृत्योर्बिभ्यतस्त्रयींविद्यांप्राविशन्तेछन्दोभिरात्मानमाच्छादयन्यदेभिराच्छादयंस्तच्छन्दसांछन्दस्त्वमिति । तथाद्योतनार्थदीव्यतिधातुनिमित्तोदेवशब्दः एतदाम्नायते—दिवावैनोभूदिति तद्देवानांदेवत्वमिति । अतोदीव्यतेइतिदेवः मन्त्रेणद्योत्यतेइत्यर्थः । प्रथममण्डलेप्रथमानुवाकेत्रीणिसूक्तानि तत्राद्यंनवर्चसूक्तम् अस्मिन्सूक्तेस्तूयमानत्वादग्निर्देवः तथाचानुक्रमणिकायामुक्तम्—मण्डलादिष्वाग्नेयमैन्द्रादिति । अग्निंनवमधुच्छन्दावैश्वामित्रः ।

तस्यसूक्तस्यप्रथमामृचंभगवान्वेदपुरुषआह—

ॐम् अ॒ग्निमी॑ळेपु॒रोहि॑तंय॒ज्ञस्य॑दे॒वमृ॒त्विज॑म् । होता॑रंरत्न॒धात॑मम् ॥१॥

अ॒ग्निम् । ई॒ळे॒ । पु॒रःऽहि॑तम् । य॒ज्ञस्य॑ । दे॒वम् । ऋ॒त्विज॑म् ।
होता॑रम् । र॒त्न॒ऽधात॑मम् ॥ १ ॥

---

१ तै० आ० द्वितीयाध्यायेऽष्टमखण्डे. । २ योगोविनियोगः । ३ तै० सं० ५. ६. ६. । ४ तै० ब्रा० २. २. ८. ।

अग्निनामकं देवमीळेस्तौमि ईडस्तुताविति धातुः डकारस्यळकारोवह्वृचाध्येतृसंप्रदायप्रा-
प्तः अज्मध्यस्थडकारस्यळकारंवह्वृचाजगुः । अज्मध्यस्थढकारस्यह्ळकारंवैयथाक्रममिति । म-
न्त्रस्यहोत्राप्रयोज्यत्वात् अहंहोतास्तौमीतिलभ्यते कीदृशमग्निंयज्ञस्यपुरोहितम् यथाराज्ञःपुरोहितः
तदभीष्टंसंपादयतितथाग्निरपियज्ञस्यापेक्षितंहोमंसंपादयति यद्वा यज्ञस्यसम्बन्धिनिपूर्वभागेआ-
हवनीयरूपेणावस्थितम् पुनःकीदृशं देवंदानादिगुणयुक्तम् होतारमृत्विजं देवानांयज्ञेषु होतृनाम-
कऋत्विगग्निरेव तथाचश्रूयते—अग्निर्वै देवानांहोतेति । पुनरपिकीदृशम् रत्नधातमम् यागफल-
रूपाणांरत्नानामतिशयेनधारयितारंपोषयितारंवा । अत्राग्निशब्दस्ययास्कोवहुधानिर्वचनंदर्श-
यति—अथातोऽनुक्रमिष्यामोऽग्निःपृथिवीस्थानस्तंप्रथमंव्याख्यास्यामोऽग्निःकस्मादग्रणीर्भव-
त्यग्रंयज्ञेषुप्रणीयतेऽङ्गंनयतिसंनममानोऽक्नोपनोभवतीतिस्थौलाष्ठीविर्नक्नोपयतिनस्नेहयतित्रिभ्य-
-आख्यातेभ्योजायतइतिशाकपूणिरिताद्क्ताद्दग्धाद्वानीतात्सखल्वेतेरकारमादत्तेगकारमनक्तेर्वा
दहतेर्वानीःपरस्तस्यैषाभवतीति । अग्निमीळेइति अस्यायमर्थः—सामान्येनसर्वदेवतानांलक्षण-
स्याभिहितत्वात् अनन्तरंयत्प्रतिपदंविशेषेणवक्तव्यत्वमाकांक्षितमतोऽनुक्रमेणवक्ष्यामः त-
त्रपृथिवीलोकेस्थितोऽग्निःप्रथमंव्याख्यास्यते—कस्मात्प्रवृत्तिनिमित्तादग्निशब्देनदेवताभिधीयते
-इतिप्रश्नस्याग्रणीरित्यादिकमुत्तरम् देवसेनामग्रेस्वयंनयतीत्यग्रणीः एतदेकमग्निशब्दस्यप्रवृत्ति-
-निमित्तम् तथाचब्राह्मणान्तरम्—अग्निर्देवानांसेनानीरिति । एतदेवाभिप्रेत्यवह्वृचामन्त्रब्राह्मणे
-आमनन्ति—अग्निर्मुखंप्रथमोदेवतानामितिमन्त्रः । अग्निर्वैदेवानामवमइतिब्राह्मणम् । तथाचतैत्ति-
-रीयाआमनन्ति—अग्निरग्रेप्रथमोदेवतानामिति । अग्निरवमोदेवतानामितिच । वाजसनेयिनस्त्वे-
-वमामनन्ति—सवाएषोऽग्रेदेवतानामजायततस्मादग्निर्नामेति । यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वयं
-पूर्वदिग्वर्त्याहवनीयदेशंप्रतिगार्हपत्यात्प्रणीयतइतिद्वितीयंप्रवृत्तिनिमित्तम् सन्नयमानःसम्य-
-क्स्वयमेवप्रह्वीभवन्नङ्गंस्वकीयंशरीरंनयतिकाष्ठदाहेहविःपाकेचप्रेरयतीतितृतीयंप्रवृत्तिनिमित्तम् ।
-स्थूलाष्ठीविनामकस्यमहर्षेःपुत्रोनिरुक्तकारःकश्चिदक्नोपनइत्यग्निशब्दंनिर्वक्ति—सत्वनक्नोपयती-
त्युक्तेनस्नेहयति किन्तुकाष्ठादिकंरूक्षयतीत्युक्तंभवति । शाकपूणिनामकोनिरुक्तकारंस्त्र्या-
-ख्यातत्रयादग्निशब्दनिष्पत्तिंमन्यते—इत इणगताविति धातुः अक्तःअञ्जुव्यक्तिम्रक्षणकान्तिगतिष्वि-
-तिधातुः दग्धोदहभस्मीकरणेइतिधातुः नीतोणीञ्प्रापणेइतिधातुः अग्निशब्दोऽयमकारगकार-
-निशब्दानपेक्षमाणएतिधातोरुत्पन्नादयनशब्दादकारमादत्ते अनक्तिधातुगतस्यककारस्याग
-देशंकृत्वातमादत्ते यद्वा दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते नीरितिनयतिधातुः सपरस्ता-

१ तै० सं. २ ५ ९. १ २ नि० ७. १४. ३ ऐ० ब्रा० १. १. १ ४ [illegible]ब्राह्मणे १. १.
५ तै० ब्रा० २. ४. ३. १ ६ तै० सं. ५ ५. १. १

भूत्वापरोभवति ततोधातुत्रयंमिलित्वाग्निशब्दोभवति यज्ञभूमिंगत्वास्वकीयमङ्गंनयति काष्ठदाहे हविःपाकेचप्रेरयतीतिसमुदायार्थः तस्याग्निशब्दार्थस्यदेवताविशेषस्यप्राधान्येनस्तुतिप्रदर्शनायै-षाग्निमीळइतिऋग्भवतीति । तामेतामृचंयास्कएवंव्याख्यातवान्—अग्निमीळेग्नियाचामीळिरध्ये-षणाकर्मापूजाकर्मावापुरोहितोव्याख्यातोयज्ञश्च देवोदानाद्वादीपनाद्वाद्योतनाद्वाद्युस्थानोभव-तीतिवायोदेवःसादेवताहोतारंह्वातारंजुहोतेर्होतेत्यौर्णवाभोरत्नधातमंरमणीयानांधनानांदातृतम-मिति । अस्यायमर्थः—ईडतिधातोःस्तुत्यर्थत्वंप्रसिद्धम् धातूनामनेकार्थत्वमितिन्यायमाश्रित्य याञ्चाऽध्येषणापूजाअप्यत्रोचितत्वात् तदर्थतयाव्याख्याताः । पुरोहितशब्दोद्वितीयेध्याये य-द्देवापिःशन्तनवेपुरोहितइत्येतामृचमुदाहृत्यपुरएनंदधतीतिव्याख्यातः । तैत्तिरीयाश्चपौरोहि-त्येस्पर्धमानस्यपश्वनुष्ठानंविधायतत्फलत्वेनपुरएनंदधतइत्यामनन्ति । देवशब्दोदानदीपनद्यो-तनानामन्यतममर्थमाचष्टे यज्ञस्यदातादीपयिताद्योतयितायमग्निरित्युक्तंभवति दीपनद्योतनयोरे-कार्थत्वेऽप्यस्तिधातुभेदः यद्यप्यग्निःपृथिवीस्थानस्तथापिदेवान्प्रतिहविर्वहनात् द्युस्थानोभव-ति देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्याकाचिदग्निव्यतिरिक्तादेवतानान्वेषणीया हो-तृशब्दस्यह्वयतिधातोरुत्पन्नत्वेनदेवानामाह्वातारमिति और्णवाभनामकस्तुमुनिर्जुहोतिधातो-रुत्पन्नोहोतृशब्दइतिमन्यते अग्नेश्चहोतृत्वंहोमाधिकरणत्वेनद्रष्टव्यम् । रत्नशब्दोद्वितीयाध्यायेमं-घमित्यादिष्वष्टाविंशतौधननामसुपठितः रमणीयत्वाद्रत्नत्वम् दधातिधातुरत्रदानार्थवाचीति त-दिदंनिरुक्तकारस्ययास्कस्यमन्त्रव्याख्यानम् ॥ अथव्याकरणप्रक्रियोच्यते—अगिधातोर्गत्य-र्थादङ्गेर्नलोपश्चेत्युणादिसूत्रेणनिप्रत्ययः इदित्वान्नुमागमेनप्राप्तस्यनकारस्यलोपश्चभवति अ-ङ्गतिस्वर्गंगच्छतिहविर्नेतुमित्यग्निः तत्रधातोरित्यकारउदात्तः आद्युदात्तश्चेतिप्रत्ययगतइका-रोऽप्युदात्तः अनुदात्तंपदमेकवर्जमितिद्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वंप्राप्तम् तत्रधा-तुस्वरेप्रथमतोऽवस्थितेसतिपश्चादुपदिश्यमानःप्रत्ययस्वरोऽवशिष्यते सतिशिष्टःस्वरोबलीयानि-तिहिन्यायः ततोऽन्तोदात्तमग्निमानिपदिकम् अनुदात्तौसुप्पितावित्यमित्येतद्द्वितीयैकवचन-मनुदात्तम् तस्मादिपूर्वइनियतपूर्वरूपंतदुदात्तम् एकादेशउदात्तेनोदात्तइतिसूत्रितत्वात् अग्नि-शब्दोधातुजन्माइतिमतेसेयंप्रक्रियासर्वापिद्रष्टव्या । मतद्वयंयास्केनप्रदर्शितम्—नामान्याख्यात-जानीतिशाकटायनोनैरुक्तसमयश्चनसर्वाणीतिगार्ग्यो वैयाकरणानांचैकेइति । गार्ग्यस्यमतेऽग्नि-शब्दस्याव्युत्पन्नप्रातिपदिकत्वात् फिषोऽन्तउदात्तइत्यन्तोदात्तत्वम् । पूर्वोक्तेप्यग्रणीरित्यादिनिर्व-चनेपुनरुक्तनिप्रत्ययाद्यशेषप्रक्रियायथोचितंकल्पनीया एतदेवाभिप्रेत्ययास्कआह—अथनिर्वच-

१ नि० ७. १५. । २ नि० २. १२. । ३ तै० सं. २. १. २. । ४ नि० १. १२. ।

नंतद्येषुपदेषुस्वरसंस्कारौसमर्थौप्रादेशिकेनगुणेनान्वितौस्याताम् तथातानिनिर्ब्रूयादथानन्वितेऽर्थेप्रादेशिकेविकारेऽर्थनित्यःपरीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमानेसामान्येप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेवननिर्ब्रूयादिति[1] । अस्यायमर्थः—तत्रनिर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषुपूर्वोक्तरीत्यास्वरसंस्कारौसमर्थौव्याकरणसिद्धौस्याताम् स्वरउदात्तादिः संस्कारोनिमत्ययादिः किञ्च तौस्वरसंस्कारौसमर्थौप्रादेशिकेनगुणेनान्वितौस्यातामशब्दस्यैकदेशःपूर्वोक्तोऽगिधातुःप्रदेशः तत्रभवोगुणोगतिरूपोऽर्थः तेनान्वितौ तान्यग्न्यादिपदानितथाव्याकरणानुसारेणनिर्ब्रूयात् तच्चनिर्वचनमस्माभिःप्रदर्शितम् अथपूर्वोक्तवैलक्षण्येनकश्चित्स्वेनविवक्षितोऽर्थोनान्वितस्तस्मिन्शब्देऽनुगतोनभवेत् तस्यैवव्याख्यानमप्रादेशिकेविकारेइति अग्रनयनादिरूपःक्रियाविशेषोविकारः सचप्रदेशेनाग्निशब्दैकदेशेनात्रनाभिधीयतइत्यप्रादेशिकः एवंसवियःपुमानर्थनित्यः स्वविवक्षितेऽर्थेनियतोनिर्बन्धवान्ब्राह्मणानुसारेणवादेवतान्तरविशेषणत्वेनयोजयितुंवासनिर्बन्धः तदानींसपुमान्केनचिद्वृत्तिसाम्येनस्वविवक्षितमर्थंपरीक्षेत तस्मिञ्छब्देयोजयेत् वृत्तिःक्रियातद्रूपेणसामान्यंसादृश्यम् अस्माभिश्चाग्रनयनादिरूपंक्रियात्वसाम्यमुपजीव्याग्रणीत्वाद्यर्थोयोजितः तदिदंयास्काभिमतंनिर्वचनम्। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति—अक्नोपनशब्दस्यादौनिषेधार्थमकाररूपमक्षरंविद्यते अग्निशब्दस्याप्यादावकारोऽस्ति तदिदमक्षरसाम्यम्। शाकपूणिस्तुवर्णसाम्यान्निर्ब्रूते—दग्धशब्दाग्निशब्दयोर्गकारेणवर्णेनसाम्यम् सर्वथापिनिर्वचनंनत्याज्यमिति । ईळइत्येतत्पदंक्रत्समप्यनुदात्तम् तिङ्ङतिङइतिअतिङन्ताद्ग्निशब्दात्परस्यतिङन्तस्यनिघातविधानात्तद्वयसंहिताकालेत्वीकारस्यधातुगतस्योदात्तादनुदात्तस्यस्वरितइतिस्वरितत्वम् तस्मादूर्ध्वंभाविनएकारस्यतिङ्प्रत्ययरूपस्यस्वरितात्संहितायामनुदात्तानामित्यैकश्रुत्यंप्रचयनामकंभवति । पुरःशब्दोऽन्तोदात्तः अंयंपुरोभुवइत्यत्रतथैवाम्नातत्वात् पूर्वाधरावराणामसिपुरधवश्चैषामिति पूर्वशब्दादस्प्रत्ययःपुरादेशश्च ततोऽत्रप्रत्ययस्वरः धाञोनिष्ठायांदधातेर्हिरित्यादेशेसतिप्रत्ययस्वरेणान्तोदात्तोहितशब्दः तत्रसमासान्तोदात्तत्वेप्राप्तेतदपवादत्वेनततुरुपेतुल्यार्थेत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वम् यद्वा पुरोव्ययमितिगतिसंज्ञायांगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् तत्रौकारउदात्तः अवशिष्टानामनुदात्तस्वरितप्रचयाःपूर्ववद्द्रष्टव्याः आद्याक्षरस्यसंहितायांप्रचयप्राप्तावुदात्तस्वरितपरस्यसन्नतरइत्यतिनीचोनुदात्तः । यजयाचेत्यादिनायजतेर्नङ्प्रत्यये-

1 नि०२.१.। 2 तै०सं०४.३२.। 3 क्वचित्पुस्तकेनीचोनुदात्तइत्यग्रे 'यद्यपिपदकालेहितशब्दान्तर्गतस्यैकारस्यस्वरितत्वंदुर्लभं उदात्तपरत्वाभावात तथाप्यत्रस्तावदवमहान्तरमिति प्रातिशाख्येवसानविधानात् नैत्तिरीयाअनुदात्तमेवाभिदधति तथापियथासंधीयमानानामनेकीभवतांस्वरः उपदिष्टस्तथाविद्यादक्षराणामव्यहेइतिप्रातिशाख्येऽभिदर्शनादिष्टसिद्धिरित्यधिकम्

सत्यन्तोदात्तोयज्ञशब्दः विभक्तेःसुप्स्वरेणानुदात्तत्वेसतिपश्चात्स्वरितत्वम् । देवशब्दःपचाद्यजन्तः सचफिट्स्वरेणप्रत्ययस्वरेणचित्स्वरेणवान्तोदात्तः । ऋत्विक्शब्दः ऋतौयजतीतिविग्रहेसतिऋत्विग्दधृगितिनिपातितः गतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः विभक्तिस्वरःपूर्ववत् । होतृशब्दस्तृन्प्रत्ययान्तोनित्स्वरेणाद्युदात्तः भित्यादिर्नित्यमितिस्वरितप्रचयौपूर्ववत् । रत्नशब्दोनविषयस्यानिसन्तस्येत्याद्युदात्तः तथाचाम्नायते—रत्नंधातेति । रत्नानिदधातीतिविग्रहः समासत्वादन्तोदात्तोरत्नधाशब्दः यद्वा कृदुत्तरपदप्रकृतिस्वरः तमप्प्रत्ययस्य पित्स्वरेणानुदात्तत्वेसतिस्वरितप्रचितौ संहितायामाद्याक्षरस्यप्रचयः द्वितीयाक्षरस्यसन्नतरत्वम्॥१॥

वेदावतारआद्यायाऋचोऽर्थश्चप्रपञ्चितः । विज्ञातंवेदगांभीर्यमथसङ्क्षिप्यवर्ण्यते ॥

आग्नेयसूक्तस्यद्वितीयामृचमाह—

**अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति ॥ २ ॥**

**अ॒ग्निः । पूर्वे॑भिः । ऋषि॑ऽभिः । ईड्यः॑ । नूत॑नैः । उ॒त । सः । दे॒वान् । आ । इ॒ह । व॒क्ष॒ति॒ ॥ २ ॥**

अयमग्निः पूर्वेभिःपुरातनैर्भृग्वङ्गिरःप्रभृतिभिर्ऋषिभिरीड्यःस्तुत्यःनूतनैरुत इदानींतनैरस्माभिरपिस्तुत्यः सोऽग्निःस्तुतःसन्निहयज्ञेदेवान्हविर्भुजआवक्षति वहप्रापणेइतिधातुः आवहत्वित्यर्थः॥पूर्वेभिरित्यत्रबहुलंछन्दसीतिभिसऐसादेशाभावः पुर्वपर्वमर्वपूरणेइतिधातुः पूर्वतिधातोरन्प्रत्ययऔणादिकः ।इन्प्रत्ययान्तऋषिशब्दः ऋष्यन्धकेतिनिपातनात् लघूपधगुणाभावः किम्प्रत्ययोवात्रज्ञेयः तौशब्दौनित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्यण्यत्प्रत्ययान्तत्वात् तित्स्वरितमितिस्वरितेशेषानुदात्तत्वेचप्राप्तेतदपवादत्वेनईडवन्देत्यादिनाआद्युदात्तत्वम् । नवशब्दस्यनूइत्यादेशस्तनन्प्रत्ययश्चमहावार्तिकेविहितः ततोनित्स्वरेणाद्युदात्तः । अवशिष्टस्वराअग्न्यादिषुनूतनान्तेषुपूर्ववदुन्नेयाः । उतशब्दोयद्यपिविकल्पार्थेप्रसिद्धः तथापिनिपातत्वेनानेकार्थत्वादौचित्येनात्रसमुच्चयपार्थोद्रष्टव्यः उच्चावचेष्वर्थेषुनिपतन्तीतिनिपातत्वम्[1] । तर्हिनिपाताआद्युदात्ताइत्युकारस्योदात्तःप्राप्तइतिचेद् न प्रातःशब्दवदन्तोदात्तत्वात् यथाप्रातःशब्दोऽन्तोदात्तत्वेनैवस्वरादिषुपठितः एवमुतशब्दस्यापिपाठोद्रष्टव्यः स्वरादेराकृतिगणत्वात् यद्वा एवादीनामन्तइत्यन्तोदात्तत्वम् सइत्यप्रफिट्स्वरः । देवशब्दःपूर्ववत् देवानित्यस्यनकारस्यसंहितायांदीर्घादटीविरुत्वम् अत्रानुनासिकइत्यनुवृत्तौआतोटिनित्यमित्याकारःसानुनासिकः भोभगोइतिरोर्यकारः सचलोपःशाकल्यस्येतिलुप्यते तदसिद्धत्वान्नपुनःसन्धिकार्यम् । आङोनिपातत्वादाद्युदात्तत्वम् । इदमो-

१ नि० १. ४.

हप्रत्ययेसतिनिष्पन्नत्वादिहशब्देप्रत्ययस्वरः । वहतिधातोर्लोडर्थेछान्दसोलृट् तस्यप्रत्ययगतस्ययकारस्यलोपोऽपिछान्दसः यद्वा लेटि सिब्बहुलमितिसिप्प्रत्ययः लेटोडाटावित्यडागमश्च ततोवक्षतीतिसंपद्यते तस्यतिङ्ङतिङइतितिङन्तत्वान्निघातः संहितास्वराःपूर्ववत् ॥ २ ॥

आधानेतृतीयेष्टौप्रथमाज्यभागस्यानुवाक्यासूक्तगतातृतीया ।

तामेतांतृतीयामृचमाह—

अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे । य॒शसं॑ वी॒रव॑त्तमम् ॥ ३ ॥

अ॒ग्निना॑ । र॒यिम् । अ॒श्न॒व॒त् । पोष॑म् । ए॒व । दि॒वेऽदि॑वे ।
य॒शस॑म् । वी॒रव॑त्ऽतमम् ॥ ३ ॥

योऽयंहोतास्तुत्योऽग्निः तेनाग्निनानिमित्तभूतेनयजमानोरयिंधनमश्नवत्प्राप्नोति कीदृशंरयिं दिवेदिवेपोषमेव प्रतिदिनंपुष्यमाणतयावर्धमानमेव नतुकदाचिदपिक्षीयमाणं यशसं दानादिना यशोयुक्तम् वीरवत्तमंअतिशयेनपुत्रभृत्यादिवीरपुरुषोपेतम् सतिहिधनेपुरुषाःसम्पद्यन्ते ॥ रयिशब्दोमघमित्यादिधननामसुपठितः तत्रफिट्स्वरः । अश्नोतेर्धातोर्लेटिव्यत्ययेनतिप् इतश्चलोपइतीकारलोपः लेटोडाटावित्यडागमः ततोऽश्नवदितिभवति तस्यनिघातः । घञन्तत्वात्पोषशब्दआद्युदात्तः । एवशब्दस्यनिपातत्वेऽप्येवादीनामन्तइत्यन्तोदात्तत्वम् । वकारान्तादिवूशब्दात्परस्याःसप्तम्याःसुपांसुलुगित्यादिनाशेभावेसतिसावेकाचइत्यादिनोडिदंपदादीत्यादिनावातस्योदात्तत्वम् नित्यवीप्सयोरितिद्विर्भावेसत्युत्तरभागस्यानुदात्तंचेत्यनुदात्तत्वम् । यशोस्यास्तीति विग्रहेसत्यर्शआदिभ्योजित्यच्प्रत्ययः चित्स्वरंव्यत्ययेनबाधित्वामध्योदात्तत्वम् । फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोःपित्वादनुदात्तत्वम् ह्रस्वनुड्भ्यामितिनुन सावर्णान्तत्वान्नगोश्वन्नितिप्रतिषेधः ॥ ३ ॥

अग्निष्टवषडहस्यमध्यवर्तिपृष्ठ्येषुतृतीयसवनेमैत्रावरुणस्याग्नेयंयज्ञमित्यादिकोवैकल्पिकोऽनुरूपस्तृचः एतच्चसप्तमाध्यायेएवुष्वित्यादिखण्डेसूत्रितम्—अग्निंवोवृधन्तमग्नेयंयज्ञमध्वरमिति । तस्मिंस्तृचेपाप्रथमासासूक्तेचतुर्थी ॥

तामेतांचतुर्थीमृचमाह—

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति ॥ ४ ॥

अङ्गेत्यभिमुखीकरणार्थोनिपातः अङ्गाग्नेहेअग्ने त्वंदाशुषेहविर्दत्तवतेयजमानायतत्प्रीत्यर्थंयद्भद्रंवित्तगृहप्रजापशुरूपंकल्याणंकरिष्यसितद्भद्रंतवेव् तवैवसुखहेतुरितिशेषः हेअङ्गिरोऽग्ने एतच्चसत्यं नत्वत्रविसंवादोऽस्ति यजमानस्यवित्तादिसम्पत्तौसत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेवसुखंभवति भद्रशब्दार्थंशाट्यायनिनःसमामनन्ति—यद्वैपुरुषस्यवित्तंतद्भद्रंगृहाभद्रंप्रजाभद्रंपशवोभद्रमिति ॥ अङ्गशब्दस्यनिपातत्वेप्यभ्यादित्वादन्तोदात्तत्वम् । दाशुषेदाश्वान्साह्वानिति-सूत्रेणदाशृदानेइतिधातोःक्वसुन्प्रत्ययोनिपातितः तत्रप्रत्ययस्वरः । आमन्त्रितस्याग्निशब्दस्यपदात्परत्वेनाष्टमिकानुदात्तत्वंनशङ्कनीयम् अपादादावितिपर्युदस्तत्वात् ततःषाष्ठिकमाद्युदात्तत्वमेव । भद्रशब्दस्यनद्विषयत्वेनाद्युदात्तत्वमसक्तावपिभदिकल्याणेइतिधातोरुपरिरक्प्रत्ययेननिपातनादन्तोदात्तत्वम् । अस्मिन्वाक्येयच्छन्दप्रयोगान्निपातैर्यद्यदिहन्तेतिनिघातेप्रतिपिद्धेऽस्यप्रत्ययस्वरेणसतिशिष्टेनकरिष्यसिशब्दउपान्त्योदात्तः । तवेत्यत्रयुष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । अङ्गिराअङ्गाराइतियास्कः । ऐतरेयिणोऽपिप्रजापतिर्दुहितृध्यानोपाख्यानेसमामनन्ति—येऽङ्गाराआसंस्तेऽङ्गिरसोभवन्निति । तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् , अत्रपदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥ ६ ॥

अग्नीषोमप्रणयनेउपत्वाग्नइत्यादिकोऽनुवचनीयस्तृचः एवञ्चब्राह्मणेसमाम्नातम्—उपत्वाग्नेदिवेदिवउपप्रियंपनिप्नतमितिविसृष्टेकांचान्वाहेति । तस्मिंस्तृचेयाप्रथमासासूक्तेसप्तमी ।

तामेतांसप्तमीमृचमाह—

उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम् । नमोभरन्तएमसि ॥ ७ ॥

उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्तः । धिया । वयम् ।
नमः । भरन्तः । आ । इमसि ॥ ७ ॥

हेअग्नेवयमनुष्ठातारोदिवेदिवेप्रतिदिनंदोषावस्तः रात्रावहनिच धियाबुद्ध्यानमोभरन्तः नमस्कारंसंपादयन्तः उपसमीपेत्वाएमसि त्वामागच्छामः ॥ उपशब्दस्यनिपातस्वरः । त्वामौद्वितीयायाइतियुष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दोरात्रिवाची वस्तइत्यहर्वाची द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः सावेकाचइतिधियोविभक्तिरुदात्ता । नमइतिनिपातः । भरन्तइत्यत्रशपःपित्वाच्छतुर्ङसार्वधातुकत्वाच्चानुदात्तत्वेसतिधातुस्वरःशिष्यते । इमसीत्यत्रेदन्तोमसिरितिमसिरित्यादेशोनिपातस्य ॥ ७ ॥

---

१ नि० ३.१७. २ ऐ० ब्रा० ३.३४. । ३ ऐ० ब्रा० १.३०. ।

अग्ने । यम् । यज्ञम् । अध्वरम् । विश्वतः । परिऽभूः । असि ।
सः । इत् । देवेषु । गच्छति ॥ ४ ॥

हेअग्ने त्वंयंयज्ञंविश्वतः सर्वासुदिक्षुपरिभूःपरितःप्राप्तवानसि सइत्तसएवयज्ञोदेवेषुतृप्तिंजनयितुंस्वर्गंगच्छति प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति परिशब्देनहोत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता कीदृशंयज्ञं अध्वरं हिंसारहितम् नह्यग्निना सर्वतःपालितंयज्ञंराक्षसादयोहिंसितुंप्रभवन्ति ॥ अग्निशब्दस्यपाष्ठिकमामन्त्रिताद्युदात्तत्वम् । नविद्यतेऽध्वरोस्येतिबहुव्रीहौ नञ्सुभ्यामित्यन्तोदात्तत्वम् । विश्वतइत्यत्रतसिलःप्रत्ययस्वरत्वं बाधित्वापूर्ववर्णस्यलितीत्युदात्तत्वम् । परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वेप्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् । असीतितिङन्तस्ययद्वृत्तान्नित्यमितिनिघाताभावः ॥ ४ ॥

पञ्चमीमृचमाह—

अ॒ग्निर्होता॑क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वोदे॒वेभि॒राग॑मत् ॥५॥१॥

अ॒ग्निः । होता॑ । क॒विऽक्र॑तुः । स॒त्यः । चि॒त्रश्र॑वःऽतमः । दे॒वः ।
दे॒वेभिः॑ । आ । ग॒म॒त् ॥ ५ ॥ १ ॥

अयमग्निर्देवोन्यैर्देवैर्भिर्देवैर्हविर्भोजिभिःसहागमत् अस्मिन्यज्ञेसमागच्छतु कीदृशोग्निः होताहोमनिष्पादकः कविक्रतुः कविशब्दोऽत्रक्रान्तवचनोनतुमेधाविनाम क्रतुः प्रज्ञानस्यकर्मणोवानाम ततः क्रान्तप्रज्ञःक्रान्तकर्मावा सत्यः अनृतरहितःफलमवश्यंप्रयच्छतीत्यर्थः चित्रश्रवस्तमः श्रूयतइतिश्रवःकीर्तिः अतिशयेनचित्रकीर्तियुक्तः ॥ कविक्रतुः चित्रश्रवस्तमइत्यत्रोभयत्रबहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम् । सत्सुसाधुःसत्यः सत्यादशपथेइत्यत्रान्तोदात्तोहरदत्तेननिपातितः । लोडन्तस्यगच्छतीतिशब्दस्यछत्वाभावउकारलोपश्चछान्दसः तयोरूपंगमदितिभवति । स्पष्टमन्यत् ॥ ५ ॥

इत्यृक्संहितायांवेदार्थप्रकाशेप्रथमकाण्डस्यप्रथमाध्यायस्यप्रथमोवर्गः ॥ १ ॥

आग्नेयेसूक्तेषष्ठीमृचमाह—

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत्तत्स॒त्यम॑ङ्गिरः ॥ ६ ॥

यत् । अ॒ङ्ग । दा॒शुषे॑ । त्वम् । अग्ने॑ । भ॒द्रम् । क॒रि॒ष्यसि॑ ।
तव॑ । इत् । तत् । स॒त्यम् । अ॒ङ्गि॒रः॒ ॥ ६ ॥

अङ्गेत्यभिमुखीकरणार्थोनिपातः अङ्गाग्नेहेअग्ने त्वंदाशुषेहविर्दत्तवतेयजमानायतत्प्रीत्यर्थंयद्भद्रंवित्तगृहप्रजापशुरूपंकल्याणंकरिष्यसितद्भद्रंतवेव तवैवसुखहेतुरितिशेषः हेअङ्गिरोऽग्ने एतच्चसत्यं नत्वत्रविसंवादोऽस्ति यजमानस्यवित्तादिसम्पत्तौसत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेवसुखंभवति भद्रशब्दार्थंशाट्यायनिनःसमामनन्ति—यद्वैपुरुषस्यवित्तंतद्भद्रंगृहाभद्रंप्रजाभद्रं पशवोभद्रमिति ॥ अङ्गशब्दस्यनिपातत्वेप्युच्चाद्दित्वादन्तोदात्तत्वम् । दाशुषेदाश्वान्साह्वानिति-सूत्रेणदाशृदानेइतिधातोःक्वसुन्प्रत्ययोनिपातितः तत्रप्रत्ययस्वरः । आमन्त्रितस्याग्निशब्दस्यपदात्परत्वेनाष्टमिकानुदात्तत्वंनशङ्कनीयम् अपादादाविविपर्युदस्तत्वाव् ततःपाष्ठिकमाद्युदात्तत्वमेव । भद्रशब्दस्यनब्विषयत्वेनाद्युदात्तत्वप्रसक्तावपिभदिकल्याणेइतिधातोरुपरिरक्प्रत्ययेननिपातनादन्तोदात्तत्वम् । अस्मिन्वाक्येयच्छब्दप्रयोगान्निपातैर्यद्यदिहन्तेतिनिघातेप्रतिषिद्धेऽस्यप्रत्ययस्वरेणसतिशिष्टेनकरिष्यसिशब्दउपान्त्योदात्तः । तवेत्यत्रयुष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । अङ्गिराअङ्गाराइतियास्कः[1] । ऐतरेयिणोऽपिप्रजापतिदुहितृध्यानोपाख्यानेसमामनन्ति—येऽङ्गाराआसंस्तेङ्गिरसोभवन्निति[2] । तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् . अत्रपदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥ ६ ॥

अग्नीषोमप्रणयनेउपत्वाग्नइत्यादिकोऽनुवचनीयस्तृचः एवञ्चब्राह्मणेसमाम्नातम्—उपत्वाग्नेदिवेदिवउपप्रियंपनिप्नतमितितिस्रश्चैकांचान्वाहेति[3] । तस्मिंस्तृचेयाप्रथमासासूक्तेसप्तमी ।

तामेतांसप्तमीमृचमाह—

उप॑त्वाग्नेदि॒वेदि॑वे॒दोषा॑वस्तर्धि॒याव॒यम् । नमो॒भर॑न्त॒एम॑सि ॥७॥

उप॑ ।त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् ।
नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ॥ ७ ॥

हेअग्नेवयमनुष्ठातारोदिवेदिवेप्रतिदिनंदोषावस्तः रात्रावहनिच धियाबुद्ध्यानमोभरन्तः नमस्कारंसंपादयन्तः उपसमीपेत्वाएमसि त्वामागच्छामः ॥ उपशब्दस्यनिपातस्वरः । त्वामोद्वितीयायाइतियुष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दोरात्रिवाची वस्तइत्यहर्वाची द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः सावेकाचइतिधियोविभक्तिरुदात्ता । नमइतिनिपातः । भरन्तइत्यत्रशपःपित्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वेसतिधातुस्वरःशिष्यते । इमसीत्यत्रेदन्तोमसिरितिमसिरित्यादेशोनिघातश्च ॥ ७ ॥

---

1 नि० ३.१७.　2 ऐ० ब्रा० ३.२४.।　3 ऐ० ब्रा० १.३०.।

अष्टमीमृचमाह–

राजन्तमध्वराणांगोपामृतस्यदीदिविम् । वर्धमानंस्वेदमे ॥ ८ ॥

राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे ॥ ८ ॥

पूर्वमन्त्रेत्वामुपैमसिइत्यग्निमुद्दिश्योक्तम् कीदृशंत्वां राजन्तंदीप्यमानम् अध्वराणां राक्षसकृतहिंसारहितानांयज्ञानांगोपांरक्षकं ऋतस्यसत्यस्यावश्यंभाविनःकर्मफलस्यदीदिविंपौनःपुन्येनभृशंवाद्योतकम् आहुत्याधारमग्निंदृष्ट्वाशास्त्रमसिद्धंकर्मफलंस्मर्यते स्वेदमेस्वकीयगृहेयज्ञशालायांहविर्भिर्वर्धमानम् ॥ राजन्तं वर्धमानमित्यत्रोभयत्रपूर्ववद्धातुस्वरःशिष्यते । दीदिविशब्दस्याभ्यस्तानामादिरित्याद्युदात्तत्वम् । दमशब्दोवृषादित्वादाद्युदात्तः ॥ ८ ॥

नवमीमृचमाह–

सनःपितेवसूनवेऽग्नेसूपायनोभव । सचस्वानःस्वस्तये ॥ ९ ॥ २ ॥

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥ ९ ॥ २ ॥

हेअग्नेसत्वंनोऽस्मदर्थंसूपायनः शोभनप्राप्तियुक्तोभव तथानोस्माकंस्वस्तयेविनाशराहित्यार्थंसचस्व समवेतोभव तत्रोभयत्रदृष्टान्तः—यथासूनवेपुत्रार्थंपितासुप्रापःप्रायेणसमवेतोभवति तद्वत् ॥ अस्मच्छब्दादेशस्यनइत्येतस्यानुदात्तंसर्वमित्यनुदात्तत्वम् । चादयोऽनुदात्ताइतीवशब्दोऽनुदात्तः इवेननित्यसमासःपूर्वपदप्रकृतिस्वरत्वंचवक्तव्यमितिसमस्तःपितेवेतिशब्दोमध्योदात्तः । शोभनमुपायनंयस्येतिबहुव्रीहौ नञ्सुभ्यामित्यन्तोदात्तत्वम् । सचस्वेत्यत्रपदात्परत्वंनास्तीतिननिघातः लसार्वधातुकानुदात्तत्वेसतिधातुस्वरावशेषः ॥ ९ ॥

इतिप्रथमस्यप्रथमेद्वितीयोवर्गः ॥ २ ॥

अग्निमीळइत्यादिसूक्तमग्निष्टोमस्यप्रातरनुवाकेयथाविनियुक्तम् तथावायवायाहीत्यादयस्तृचाः प्रउगशस्त्रेविनियुक्ताः तत्रेदंचिन्त्यते शस्त्रंकिं देवतास्मरणरूपसंस्कारकर्म किंवाप्रधानकर्मेति । तत्रपूर्वपक्षंजैमिनिःसूत्रयामास—स्तुतशस्त्रयोस्तुसंस्कारोयाज्यावद्देवताभिधानत्वादिति ॥ १ ॥ आग्नेयःस्तुवतेऐन्द्रंःस्तुवते प्रउगंशंसतिनिष्केवल्यंशंसतीतिश्रूयते । तत्रस्तु-

१ क्रियारूपकर्मत्वप्रधानकर्मेतिपाठःकाशिमुद्रितपुस्तके. ।

तिःशंसनंचगुणिनिष्ठगुणाभिधानम् इन्द्रस्यनुवीर्याणिप्रवोचमित्यत्रदृष्टत्वात् एवंसतियाज्यान्यायेनगुणिन्यादेवतायाअभिधायकत्वेनस्तुतशस्त्रयोःसंस्काररूपत्वमभ्युपेयम् । याज्यायास्तद्रूपत्वंदशमाध्यायस्यचतुर्थपादेदृष्टार्थत्वाभेननिर्णीतम् तद्वदत्रापि तुशब्दःप्रधानकर्मत्वंव्यावर्तयति । सिद्धान्तीतंपक्षंदूषयति—अर्थेनत्वपकृष्येतदेवतानाम्नश्चोदनार्थस्यगुणभूतत्वादिति ॥ २ ॥ तुशब्देनसंस्कारत्वंवारयति संस्कारपक्षेप्रयोजनवशेनमन्त्रःस्वस्थानादपकृष्येत कुतःमन्त्रगतंदेवतावाचकंयदिन्द्रादिनामास्ति तच्चोदनयामन्त्ररूपयाप्रतिपाद्यस्यदेवतारूपस्यगुणभूतम् तस्माद्यत्रप्रधानभूतदेवतास्ति तत्रगुणभूतोमन्त्रोनेतव्यः तद्यथा माहेन्द्रग्रहसन्निधौ अभित्वा शूरेत्ययंप्रगाथआम्नातः । सचेन्द्रंप्रकाशयति नतुमहेन्द्रं ततोयत्रैन्द्रंकर्मतत्रायंप्रगाथोपकर्षणीयः तथासतिक्रमसन्निधीबाध्येयाताम् । तदेतत्सिद्धान्तिनाभिहितंदूषणंपूर्वपक्षीसमाधत्ते—वशावद्वागुणार्थंस्यादिति ॥ ३ ॥ वाशब्दःप्रगाथस्यान्यत्रनयनंवारयति मन्त्रेयदेतदिन्द्रशब्दाभिधानंतदेतन्महत्त्वगुणोपलक्षणार्थंस्यात् यथा सौवाएषासर्वदेवत्यायदजावशावायव्यामालभेतेत्यत्राजावशाशब्देनचोदितेकर्मणिछागशब्देनकेवलेनयुक्तानिगमाः वशात्वगुणमप्युपलक्षयन्ति तद्वत् तस्मान्महत्वगुणयुक्तेचोदितेकर्मणिनिर्गुणेनेन्द्रशब्देनाभिधानमविरुद्धम् लोकेऽपिमहाराजेकेवलराजशब्दप्रयोगमपिपश्यामः । तदेतत्समाधानंसिद्धान्तीदूषयति—नश्रुतिसमवायित्वादिति ॥ ४ ॥ यदुक्तंवशान्यायेनराजन्यायेनवास्यग्रहस्येन्द्रोदेवतायुज्यतइति तन्न देवतात्वस्यतद्धितश्रुतिसमवायित्वात् माहेन्द्रग्रहइत्यत्रसास्यदेवतेत्यस्मिन्नर्थेमहेन्द्राद्घाणौचेतिमहेन्द्रशब्दादण्प्रत्ययोविहितः तस्मान्महेन्द्रएवदेवतानत्विन्द्रः । विपक्षेबाधमाह—गुणश्चानर्थकइति ॥ ५ ॥ यदीन्द्रोदेवतास्यात्तदानींमैन्द्रग्रहइत्येतावतैवार्थावगतौ माहेन्द्रइतिमहत्त्वगुणोऽनर्थकःस्यात् चकारःपूर्वहेतुनासमुच्चयार्थः । हेत्वन्तरमाह—तथायाज्यापुरोरुचोरिति ॥ ६ ॥ इन्द्रमहेन्द्रयोर्देवतयोर्भेदे यथामहत्त्वगुणःसार्थकस्तथायाज्यापुरोऽनुवाक्ययोर्भेदोप्यस्मिन्नेवपक्षेउपपद्यते ऐन्द्रसानसिमित्यादिकेइन्द्रस्ययाज्यापुरोऽनुवाक्ये महाँइन्द्रोयओजसेत्यादिकेमहेन्द्रस्य । पूर्वपक्षिणोक्तवशादृष्टान्तेवैषम्यमाह—वशायामर्थसमवायादिति ॥ ७ ॥ यावशाविधिवाक्येश्रुता तस्याएवनिगमेपुछागशब्देनव्यवहारोनविरुद्धः छागत्वलक्षणस्यार्थस्यवशायांसमवेतत्वात् तच्चप्रत्यक्षेणोपलभ्यते इन्द्रमहेन्द्रयोस्तुभेदउपपादितः तस्माद्विषमोदृष्टान्तः । एवंसंस्कारपक्षेप्रगाथस्यैन्द्रकर्मण्यपकर्षप्रसङ्गस्तद्वारयितुंस्तोत्रशस्त्रयोःप्रधानकर्मत्वमितिसिद्धांतिनोमतम् । पुनरपिपूर्वपक्षीतदेतन्मतंनिराचष्टे—यचेतिपार्थवत्त्वा-

१ ऋ०सं० १. २. ३६. ।　२ ऋ० सं० ५. ३. २१. ।　३ तै०सं० ३. ४. ३. ।
४ ऋ० सं० १. १. १५. ।　५ ऋ० सं० ५. ८. ९. ।

त्स्यादिति॥८॥वाशब्दःसिद्धान्तिमतव्यावृत्त्यर्थः यत्रैन्द्रंकर्मतत्रप्रगाथोनेतव्यःइत्ययमेवपक्षःस्याव्कुतः अर्थवत्त्वात् ऐन्द्रोमन्त्रइन्द्रंप्रकाशयितुंसमर्थइत्यर्थवान्स्यात् महेन्द्रंतुप्रकाशयितुमसमर्थत्वादानर्थक्यंप्रगाथस्यप्रसज्येत तस्माद्देवताप्रकाशनरूपसंस्कारकर्मत्वमेवस्तोत्रशस्त्रयोर्युक्तमिति स्थितःपूर्वपक्षः। अथसिद्धान्तमाह—अपिवाश्रुतिसंयोगात्प्रकरणेस्तौतिशंसतीक्रियोत्पत्तिंविदध्यातामिति ॥ ९ ॥ अपिवेत्यनेनसंस्कारकर्मत्वंव्यावर्त्यते स्तौतिधातुःशंसतिधातुश्चेत्येतावुभावपिस्वप्रकरणेएवकस्याश्चित्प्रधानक्रियायाउत्पत्तिंविदध्याताम् कुतः श्रुतिसंयोगात् तयोर्धात्वोर्वाच्योऽर्थःश्रुतिरित्युच्यते तत्संयोगःप्रधानकर्मत्वेसिध्यति तथाहिगुणिनमुपसर्जनीकृत्यतन्निष्ठानांगुणानांप्राधान्येनकथनंस्तुतिः योदेवदत्तः सचतुर्वेदाभिज्ञइत्युक्ते सर्वेजनाःस्तुतिमवगच्छन्ति गुणस्योपसर्जनत्वेतुनस्तुतिःप्रतीयेत यश्चतुर्वेदाभिज्ञस्तमाकारयेत्युक्ते स्तुतिंनमन्यन्ते किंत्वाह्वानप्राधान्यमेवबुध्यन्ते एवं मन्त्रेष्वपियादेवतासेयमीदृशैर्गुणैरुपेतेतिगुणप्राधान्यविवक्षायां मुख्यःस्तौतिधात्वर्थोविधीयते। त्वत्पक्षेतुयेयमीदृग्गुणयुक्तासेयंदेवतेतिदेवतास्मरणस्यप्राधान्यादियंस्तुतिर्नस्यात् ततः श्रुतिवशादेतेप्रधानकर्मणी। तथासतिदेवताप्रकाशनेतात्पर्याभावादैन्द्रोऽपिप्रगाथःस्वप्रकरणगतेमाहेन्द्रकर्मण्येवावतिष्ठते यदिदेवतानुस्मरणरूपंदृष्टप्रयोजनंनलभ्येत तर्हदृष्टमस्तु प्रधानकर्मत्वेहेत्वन्तरमाह—शब्दपृथक्त्वाच्चेति ॥ १० ॥ द्वादशाग्निष्टोमस्यस्तोत्राणिद्वादशशस्त्राणि इत्यत्रद्वादशशब्देनस्तोत्राणांपृथक्त्वमवगम्यते देवताप्रकाशनपक्षेसर्वैरपिमन्त्रसङ्घैः कृतस्यप्रकाशनस्यैकत्वेनद्वादशसंख्यानस्यात् प्रधानकर्मणांत्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानांभिन्नत्वात् द्वादशत्वसंख्योपपद्यते एवंशस्त्रवाक्येऽपियोज्यम्। विपक्षेबाधमाह—अनर्थकंचतद्वचनमिति॥ ११॥ अग्निष्टुतिःश्रूयते आग्नेयाग्रहाभवन्तीति तत्रैवपुनरप्यन्यदुच्यते आग्नेयीषुस्तुवतेआग्नेयीःशंसन्तीतित्वत्पक्षेतद्वचनमनर्थकंस्यात् चोदकप्राप्तेषु स्तोत्रशस्त्रमन्त्रेष्वाग्नेयग्रहानुसारेणदेवतापदस्योहेसत्याग्नेयत्वसिद्धेः प्रधानकर्मपक्षेतुदेवताप्रकाशनरूपत्वाभावेनोहाभावात् आग्नेयमन्त्रान्तरविधिवचनमर्थवद्भवति पुनरपिहेत्वन्तरमाह—अन्यश्चार्थःप्रतीयतइति ॥ १२ ॥ संबन्धेस्तोत्रशस्त्रेइतिसाम्नातम् संबन्धश्चद्वयोर्भवतिनत्वेकस्य तस्मात्स्तोत्रशस्त्रयोरर्थभेदःप्रतीयते सचसंस्कारपक्षेनसंभवति देवताप्रकाशनरूपस्यार्थस्यैकत्वात् प्रधानकर्मपक्षेतुस्तोत्रकर्मशस्त्रकर्मचेत्यर्थभेदउपपद्यते यद्यपिष्टुञ्शंसुस्तुतावित्येकार्थौ तथापि प्रगीतमन्त्रसाध्यंस्तोत्रम् अप्रगीतमन्त्रसाध्यंशस्त्रमितितयोर्भेदः। हेत्वन्तरमाह—अभिधानंचकर्मवदिति ॥ १३ ॥ यथाप्रधानकर्माग्निहोत्रंजुहोतीतिद्वितीयासंयोगेनाभिहितम् तथाप्रउगंशंसतीत्यभिधीयते अतस्तत्साम्यात्प्रधानकर्मत्वम्। हेत्वन्तरमाह—फलनिर्वृत्तिश्चेति ॥ १४ ॥ स्तुवस्यस्तुतमसीनिस्तोत्रानुमन्त्रणमाम्नायवाक्य-

शेषेस्तोत्रफलमेवाम्नातम् इन्द्रियावन्तोवनेमहिमक्षीमहिप्रजामिषमिति नतुदेवताप्रयुक्तंफलमाम्नातम् अतोनदेवतासंस्कारः किन्तु प्रधानकर्मैवेतिस्थितम् । अनेनतुनिर्णयेनप्रयोजनंविकृतिषूहाभावः । संस्कारपक्षेतुयस्यांविकृतौदेवतान्तरं तत्रतद्वाचकंपदमूहनीयंस्यात् तन्माभूदितिप्रधानकर्मत्वमुक्तम् । एतच्चदशमाध्यायेसूत्रितम्—ग्रहाणांदेवतान्यत्वेस्तुतशस्त्रयोःकर्मत्वादविकारःस्यादिति । अत्रसङ्ग्रहश्लोकौ—प्रउगंशंसतीत्यादौगुणतोनप्रधानता । द्व्यादेवस्तुतिस्तेनगुणतास्तोत्रशस्त्रयोः ॥ १ ॥ स्तुत्यर्थत्वेस्तौतिशंस्योर्धात्वोःश्रौतार्थबाधनम् । तेनाद्दष्टमुपेत्यापिप्राधान्यंश्रुतयेमतमिति ॥ २ ॥ अग्निष्टोमेसुत्यादिनेसूर्योदयात्पूर्वमेवपितोहोतापातरनुवाकमनुब्रूयात् एतच्चैतरेयब्राह्मणेप्रपञ्चितम्—देवेभ्यःप्रातर्यावभ्योहोतरनुब्रूहीत्याहाध्वर्युरित्यादिब्राह्मणम् । तस्मिंश्चप्रातरनुवाकेऽग्निमीळइत्यादिसूक्तमन्तर्भूतम् तच्चव्याख्यातम् । प्रातःसवने वैश्वदेवग्रहणादूर्ध्वंप्रउगशस्त्रंहोत्राशंसनीयम् तच्चशस्त्रंवायवायाहीत्यादिसप्तऋचात्मकम् एतच्चब्राह्मणेग्रहोक्थमित्यादिखण्डेप्रपञ्चितम् । तथापञ्चमाध्यायेस्तोत्रमग्रेशस्त्रादित्यादिखण्डेसूत्रितंच । अत्रेयमनुक्रमणिका—वायोवायव्यैन्द्रवायवमैत्रावरुणास्तृचाः अश्विनाद्वादशाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाःसप्तैताःप्रउगदेवताइति । अस्यायमर्थः—वायवायाहीत्यादिकंनवर्चंसूक्तम् अग्निनेत्यतोनवशब्दस्यानुवृत्तेः तत्राद्यस्तृचोवायुदेवताकः द्वितीयऐन्द्रवायवदेवताकः तृतीयोमित्रावरुणदेवताकः अश्विनेत्यादिकंद्वादशर्चंसूक्तम् तत्राद्यस्तृचआश्विनः द्वितीयऐन्द्रः तृतीयोवैश्वदेवः चतुर्थःसारस्वतः तेषुतृचेषुप्रतिपाद्यावाय्वादयःसरस्वत्यन्ताःसप्तसंख्याकाःप्रउगशस्त्रस्यदेवताइति । मधुच्छन्दसोऽनुवर्तनात्सएवऋषिः तथैवानुवृत्त्यागायत्रंछन्दः वायव्येतृचेप्रथमाग्रहस्यैन्द्रवायवस्यैकापुरोनुवाक्या एतच्चब्राह्मणेसमाम्नातम्—वायव्यापूर्वापुरोनुवाक्यैन्द्रवायव्युत्तरेति । तथासूत्रितंच—वायवायाहिदर्शतेन्द्रवायूइमेसुताइत्यनुवाक्येइति ।

वायव्यतृचेप्रथमामृचमाह—

**वायवायांहिदर्शतेमेसोमाअरंकृताः । तेषांपाहिश्रुधीहवम् ॥ १ ॥**

**वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः ।**
**तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥**

दर्शतदर्शनीयवायो कर्मण्येवस्मिन्नायाहि आगच्छ त्वदर्थमिमेसोमाअरंकृताः अलं-

१ जैमिनीयसूत्रेद्वितीयाध्यायस्यप्रथमपादेपंचमाधिकरणे ( २. १. ५. ) ।
२ ऐ० ब्रा० २. १५. । ३ ऐ० ब्रा० ३. १. । ४ ऐ० ब्रा० २. २६. ।

कृताः अभिषवादिसंस्कारोऽलङ्कारस्तेषांतान्सोमान् यद्वा तेषामेकदेशमित्यध्याहारः पाहिस्वकीयंभागंपिबेत्यर्थः तत्पानार्थंहवमस्मदीयमाह्वानंश्रुधिशृणु । अत्रयास्कः—वायवायाहिदर्शनीयेमेसोमाअरङ्कृताअलङ्कृतास्तेषांपिबशृणुनोह्वानमिति[1] ॥ दर्शतेत्यत्र भृमृदृशीत्यादिसूत्रेणातच्प्रत्ययऔणादिकः चित्त्वादन्तोदात्तस्यामन्त्रितानुदात्तत्वम् । अर्तिस्तुसुइत्यादिनामन्प्रत्ययान्तस्यसोमशब्दस्यनित्स्वरः । अलमित्यत्रछान्दसोरेफादेशः अरङ्कृतशब्देसमासान्तोदात्तत्वं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरप्राप्तौभूषणेऽलमित्यलंशब्दस्यगतिसंज्ञायांगतिकारकेत्यादिनाकृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते तदपवादत्वेनगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् निपातत्वादलंशब्दआद्युदात्तः । पाहीत्यत्रपिबादेशाभावश्छान्दसः । श्रुधीत्यत्रश्रुशृणुपृकृवृभ्यश्छन्दसीत्यादिनाहेर्धिभावः तिङन्तादुत्तरस्यनिघातोनास्ति सेर्ह्यपिच्चेतिपित्त्वनिषेधात् अनुदात्तेनिवारितेप्रत्ययस्वरः । हवमित्यत्रह्वयतिधातोर्बहुलंछन्दसीतिसंप्रसारणेसत्युकारान्तत्वात् ऋदोरबित्यप्प्रत्ययः तस्यपित्त्वादनुदात्तेसतिधातुस्वरःशिष्यते । संहितायांश्रुधिइत्यस्यान्येषामपिदृश्यतेइतिदीर्घः ॥ १ ॥

द्वितीयामृचमाह—

**वाय॒ उ॒क्थेभि॑र्जरन्ते॒त्वाम॒च्छाज॑रि॒तारः॑ । सु॒तसो॑माअह॒र्विदः॑ ॥ २ ॥**

वायो॒ इति॑ । उ॒क्थेभिः॑ । ज॒र॒न्ते॒ । त्वाम् । अच्छ॑ । ज॒रि॒तारः॑ ।
सु॒तऽसो॑माः । अ॒ह॒ःऽविदः॑ ॥ २ ॥

हेवायोजरितारःस्तोतारः ऋत्विग्यजमानास्त्वामच्छत्वामभिलक्ष्य उक्थेभिराज्यप्रउगादिशस्त्रैर्जरन्तेस्तुवन्ति कीदृशाःसुतसोमाः अभिषुतेनसोमेनोपेताः अहर्विदः अहःशब्देनाह्वानिष्पाद्येमिष्टोमादिक्रतौवैदिकव्यवहारेणप्रसिद्धः क्रतुविशेषं ते विदन्ति लभन्त इत्यहर्विदः क्रत्वभिज्ञाइत्यर्थः अर्चतिगायतीत्यादिषुचतुश्चत्वारिंशत्स्वर्चतिकर्मसुधातुषु जरते ह्वयतीतिपठितम् स्तुतेरप्यर्चनाविशेषत्वादीदृशेनार्थेनजरनिधातुः ॥ अच्छशब्दस्यसंहितायांनिपातस्यचेतिदीर्घः । सुतसोमाइत्यत्रबहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः । अहर्विदइत्यत्रसमासस्वरंबाधित्वातत्पुरुषेतुल्यार्थेतिद्वितीयापूर्वपदप्रकृतिस्वरेप्राप्ते तदपवादत्वेनगतिकारकेतिकृदुत्तरपदप्रकृतिस्वरः ॥ २ ॥

तृतीयामृचमाह—

**वायो॒तव॑प्रपृञ्च॒तीधेना॑जिगाति॒दा॒शुषे॑ । उ॒रू॒चीसोम॑पीतये ॥ ३ ॥**

वायो॒ इति॑ । तव॑ । प्र॒ऽपृ॒ञ्च॒ती । धेना॑ । जि॒गा॒ति॒ । दा॒शुषे॑ । उ॒रू॒ची ।
सोम॑ऽपीतये ॥ ३ ॥

1 नि० १०.२०

हेवायोतवधेनावाक्सोमपीतयेसोमपानार्थंदाशुषेदाश्वांसंदत्तवन्तंयजमानंजिगातिगच्छति हेयजमान त्वयादत्तंसोमंपास्यामीत्येवंवायुर्ब्रूतइत्यर्थः कीदृशीधेना प्रपृञ्चती प्रकर्षेणसोमसंपर्कंकुर्वन्ती सोमगुणंवर्णयन्तीत्यर्थः उरूचीउरून्बहून्यजमानान्गच्छन्ती येयेसोमयाजिनस्तान्सर्वान्वर्णयन्तीत्यर्थः ॥ प्रपृञ्चतीत्यत्रशतुरनुमइतिङीनुदात्तः श्लोकःधारेत्यादिषुसप्तपञ्चाशत्सुवाङ्नामसु गणः धेना ग्राइतिपठितम् । वर्तते अयतेइत्यादिषुद्वाविंशाधिकशतसंख्येषुगतिकर्मसु गातिजिगातीतिपठितम् ।दाशुषइत्यत्रगत्यर्थकर्मणीतिचतुर्थी। उरूचीइत्यत्रगौरादित्वेनङीषिकृतेप्रत्ययस्वरः । सोमपीतयइत्यत्रबहुव्रीहित्वाभावेऽपिप्रत्ययेनपूर्वपदप्रकृतिस्वरः ॥ ३ ॥

ऐन्द्रवायवेतृचेप्रथमामृचमाह—

इन्द्र॑वायूइ॒मेसु॒ताउप॒प्रयो॑भि॒राग॑तम् । इन्द॑वोवामु॒शन्ति॒हि ॥ ४ ॥

इन्द्र॑वायू॒ इति॑ । इ॒मे । सु॒ताः । उप॑ । प्रयः॑ऽभिः । आ । ग॒त॒म् ।
इन्द॑वः । वा॒म् । उ॒शन्ति॑ । हि ॥ ४ ॥

एतस्याऋचऐन्द्रवायवग्रहेद्वितीयापुरोऽनुवाक्यारूपेणविशेषविनियोगःपूर्वमेवोक्तः हेइन्द्रवायू भवदर्थमिमेसोमाःसुताअभिषुताः तस्माद्युवांप्रयोभिरन्नैरस्मत्प्रदातव्यैःसहउपागतम् अस्मत्समीपंप्रत्यागच्छतम् हियस्मादिन्दवःसोमावांयुवामुशन्ति कामयन्ते तस्मादागमनमुचितम् ॥ इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वम् । प्रीणयन्तिभोक्तृनितिप्रयांस्यन्नानि प्रीञ्धातोरन्तर्भावितण्यर्थादसुन्प्रत्ययेसतिनित्स्वरः गमिधातोर्लोण्मध्यमपुरुषद्विवचनेबहुलंछन्दसीतिशपोलुकिसत्यनुदात्तोपदेशेत्यादिनामकारलोपः ततोगतमितिभवति । उन्दीक्लेदनेइतिधातोरुन्देरिच्चादेरित्युप्रत्ययः आद्याक्षरस्येकारादेशः ततइन्दुशब्दस्यनित्स्वरः सोमरसस्यद्रवत्वात्क्लेदनंसंभवति । युष्मच्छब्दादेशस्यवामित्येतस्यअनुदात्तंसर्वमपादादावित्यनुदात्तः ।उशन्तीत्यस्यनिघाते हिचेतिसूत्रेणप्रतिषिद्धेसतिप्रत्ययस्वरः।हिशब्दस्यनिपातस्वरः॥४॥

द्वितीयामृचमाह—

वाय॒विन्द्र॑श्चचेतथःसु॒ताना॑वाजिनीवसू । तावाया॑त॒मुप॑द्र॒वत् ॥ ५॥३॥

वायो॒ इति॑ । इन्द्रः॑ । च॒ । चे॒त॒थः॒ । सु॒ताना॑म् । वा॒जि॒नी॒व॒सू॒ इति॑
वाजिनीऽवसू । तौ । आ । या॒त॒म् । उप॑ । द्र॒वत् ॥ ५ ॥ ३ ॥

अत्रचकारेणान्यःसमुच्चीयते सन्निहितत्वाद्वायुरेव हेवायो त्वमिन्द्रश्चयुवामुभौसुतानामभिषुतान्सोमान्चेतथोजानीथः यद्वा अभिषुतानांसोमानांविशेषमित्यध्याहारः कीदृशौयुवांवाजिनीवसू वाजिनीशब्दोयद्यप्युषोनामसुपठितः तथाप्यत्रासंभवान्नगृह्यते वाजोऽ-

त्वंतयस्यांहविःसन्ततावस्तिसावाजिनी तस्यांवसतइतितौवाजिनीवसू आमन्त्रितत्वादनु-दात्तः तौतथाविधौयुवांद्रवत्क्षिप्रमुपसमीपेआयातमागच्छतम् ॥ षड्विंशतिसंख्याकेषुक्षिप्रनाम-सुनुक्षिप्रंमंक्षुद्रवदितिपठितम् तत्रफिट्स्वरः ॥ ५ ॥

इतिप्रथमस्यप्रथमेतृतीयोवर्गः ॥ ३ ॥

ऐन्द्रवायवेतृचेतृतीयामृचमाह—

वायविन्द्रश्चसुन्वतआयातमुपनिष्कृतम् । मक्ष्वि१त्थाधियानरा ॥६॥

वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् । मक्षु । इत्था । धिया । नरा ॥ ६ ॥

हेवायो त्वमिन्द्रश्च सुन्वतःसोमाभिषवंकुर्वतोयजमानस्यनिष्कृतंसंस्कर्तारं सोमंउपा-यातंआगच्छतम् नराहेनरौपुरुषौ पौरुषेणसामर्थ्येनोपेतौयुवयोरागवयोश्चसतोर्धियाअमुनाक-र्मणामक्षुत्वरयासंस्कारःसंपत्स्यते इत्थासत्यम् ॥ वायोइत्यस्यामन्त्रितस्येतिपाष्ठिकमाद्युदा-त्तत्वम् । इन्द्रशब्दोऋज्रेन्द्रेत्यादिनारन्प्रत्ययान्तत्वेननिपातितोञ्नित्यादिर्नित्यमित्याद्युदात्तः । चशब्दश्चादयोऽनुदात्ताइत्यनुदात्तः । सुन्वतइत्यत्रशतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् । निरित्येपसमित्येतस्यस्थानइतियास्कः कृतशब्देआदिकर्मणिकर्तरिक्तः संस्कर्तुंप्रवृत्तइत्यर्थः कु-गतिप्रादयइतिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वेप्राप्ते थाथघञ्क्ताजबित्रकाणामित्यन्तोदात्तः गतिरनन्तरइतितुनिसउदात्तत्वंनभवति तद्धिकर्मणिक्तेविहितम् निष्करोतीतिनिष्कृदिति क्विबन्तव्याख्यानेतु गतिकारकोपपदात्कृदितिकृत्स्वरउदात्तःस्यात् । धिया सावेकाचस्तृतीया-दिरितिविभक्तिरुदात्ता । नरा सुपांसुलुगित्यादिनासंबोधनद्विवचनस्यडादेशः पदात्परत्वादाम-न्त्रितस्येत्याष्टमिकोनिघातः ॥ ६ ॥

मित्रंहुवेइतिमैत्रावरुणस्तृचोगवामयनेआरंभणीयेचतुर्विंशेऽहनिप्रातःसवनेमैत्रावरुणस्यस्तो-त्रियः सत्रेवाभिप्लवषडहेऽपिविनियुक्तः तथाचाश्वलायनेनचतुर्विंशेहोताजनिष्टेत्यादिखण्डे मित्रंवयंहवामहेमित्रंहुवेपूतदक्षमित्यादिसूत्रितम् तथाचाभिप्लवपृष्ठ्याहानीतिखण्डे—परिशिष्टा-न्वावापानुद्धृत्यमित्रंवयंहवामहेमित्रंहुवेपूतदक्षमितिच ।

तस्यमैत्रावरुणतृचस्यप्रथमामृचमाह—

मित्रंहुवेपूतदक्षंवरुणंचरिशादसम् । धियंघृताचींसाधन्ता ॥ ७ ॥

मित्रम् ॥ हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् । धियम् । घृताचीम् । साधन्ता ॥ ७ ॥

१नि०१२.७.।

अहमस्मिन्कर्मणिहविःप्रदानायपूतदक्षंपवित्रबलंमित्रंहुवे तथारिशादसंरिशानांहिंसकानामदसमत्तारंवरुणंचहुवे आह्वयामि कीदृशौमित्रावरुणौ घृतमुदकमञ्चतिभूमिंप्रापयतियाधीर्वर्षणकर्मतां घृताचींधियं साधन्तासाधयन्तौकुर्वन्तौ ॥ मित्रशब्दःपुंल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्तः । हुवइतिह्वयतेर्बहुलंछन्दसीविशपोलुकिसतिह्वःसंप्रसारणमित्यनुवृत्तौबहुलंछन्दसीतिसंप्रसारणेउवङादेशः तिङ्ङतिङइतिनिघातः । पूतशब्दःप्रत्ययस्वरेणान्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । वरुणशब्दः कृवृदारिभ्यउनन्नित्युनन्प्रत्ययान्तोनित्त्वादाद्युदात्तः । रिशन्तिहिंसन्तीतिरिशाःशत्रवः इगुपधज्ञाप्रीकिरःकइतिकः प्रत्ययस्वरेणोदात्तः तानत्तीतिरिशादाः तं सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययेनित्स्वरेणोत्तरपदमाद्युदात्तम् कृदुत्तरपदप्रकृतिस्वरेण सएवावशिष्यते शेषनिघातेसतिएकादेशउदात्तेनोदात्तइतिसवर्णदीर्घोऽप्युदात्तएव । धीरितिप्रज्ञत्यादिषाड्विंशतिकर्मनामसुपठितः प्रातिपदिकस्वरेणान्तोदात्तः । घृतमञ्चतीतिघृताची ऋत्विग्दधृगित्यादिना क्विनि अनिदितामितिनकारलोपः अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपेचावितिदीर्घत्वम् । घृतशब्दोनविषयस्यानिसन्तस्येत्याद्युदात्तत्वंबाधित्वाघृतादीनांचेत्यन्तोदात्तः समासस्येत्यन्तोदात्तस्यापवादकं तत्पुरुषेतुल्यार्थेतिपूर्वपदप्रकृतिस्वरंबाधित्वा गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरेणान्तोदात्तस्यधात्वकारस्यलोपेसति अनुदात्तस्यचयत्रोदात्तलोपइतिङीपउदात्तत्वेप्राप्ते चावितिपूर्वपदान्तोदात्तत्वम् । साधन्ता राधसाधसंसिद्धावित्यस्मादन्तर्भावितण्यर्थाल्लटःशत्रादेशे श्नुंबाधित्वाव्यत्ययेनशप् अदुपदेशत्वाल्लसार्वधातुकानुदात्तत्वम् द्वितीयाद्विवचनस्यशपश्चानुदात्तौसुप्पिताावित्यनुदात्तत्वेधातोरितिधातुस्वरएवशिष्यते सुपांसुलुगित्यादिनाविभक्तेराकारादेशः ॥ ७ ॥

द्वितीयामृचमाह—

ऋतेनमित्रावरुणावृतावृधावृतस्पृशा । क्रतुंबृहन्तमाशाथे ॥ ८ ॥

ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतुम् ।
बृहन्तम् । आशाथे इति ॥ ८ ॥

हेमित्रावरुणौयुवांक्रतुंप्रवर्तमानमिमंसोमयागंआशाथे आनशाथे व्याप्नवन्तौ केननिमित्तेनऋतेनअवश्यंभावितयासत्येनफलेनास्मभ्यंफलंदातुमित्यर्थः कीदृशौयुवांऋतावृधौ ऋतमित्युदकनाम सत्यंवायज्ञंवेतियास्कः । उदकादीनामन्यतमस्यवर्धयितारौ अतएवऋतस्पृशाउदकादीन्स्पृशन्तौकीदृशंक्रतुंबृहन्तंअङ्गैरुपाङ्गैश्चातिप्रौढम् ॥ ऋतशब्दोघृतादित्वादन्तोदात्तः मित्रावरुणावित्यत्रमित्रश्चवरुणश्चेतिमित्रावरुणौ देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः । ऋतस्यवर्धयितारा-

१ नि० ४. १९. ।

वित्यर्थेन्तर्भाविण्यर्थाद्वृधेःक्विप् नहिवृतीत्यादिनापूर्वपदस्यदीर्घः । ऋतस्पृशा सुपांसुलुगिति
डादेशः मित्रावरुणावित्याद्यामन्त्रितत्रयस्यस्वस्वपूर्वपदात्परत्वादामन्त्रितस्येत्याष्टमिकोनिघातः ।
ननुऋतेनेत्येतस्यसुबामन्त्रितेपराङ्गवत्स्वरेइतिपराङ्गवद्भावेनामन्त्रितानुप्रवेशात्पादादित्वेनपदादपर-
त्वेनवाष्टमिकनिघाताभावात् आमन्त्रितस्यचेत्याद्युदात्तेनभवितव्यमितिचेत् न पराङ्गवद्भाव-
स्यसुबामन्त्रिताश्रयत्वेनपदविधित्वात्समर्थःपदविधिरितिनियमात् इहचऋतेनमित्रावरुणावित्ये-
तयोराशाथेइत्याख्यातेनैवान्वयेनपरस्परमसामर्थ्यात् । यत्रपुनःपरस्परान्वयेनसामर्थ्यं त-
त्रपराङ्गवद्भावात्पादादेराद्युदात्तत्वंभवत्येव । यथामरुतांपितस्तदहंगृणामीति मृग्मोरुतिरित्यु-
तिमत्ययान्तत्वेनपृश्नियैवैपयसोमरुतोजाताइत्यादावन्तोदात्तोऽपिहिमरुच्छब्दोमरुतांपितरित्यत्र
सामर्थ्यात्पराङ्गवद्भावादेवाद्युदात्तोजातः । प्रकृतेतु ऋतेनेत्यस्यासामर्थ्यादेवनपराङ्गवद्भावइति
ऋतावृधावित्यत्रद्वितीयामन्त्रितस्यनिघातेकर्तव्येआमन्त्रितंपूर्वमविद्यमानवदितिप्रथमामन्त्रितेना -
विद्यमानवद्भवितव्यमितिचेत् भवतु अतएवतस्याव्यवधायकत्वाद्धतेनेतिप्रथमपदात्परत्वेनैवद्वि-
तीयामन्त्रितंनिहन्यते यथाइमंमेगङ्गेयमुनेइत्यादौगङ्गेशब्दस्याविद्यमानवद्भावेऽपितस्याव्य-
वधायकत्वादेव मेइत्येतदेवपदमुपजीव्ययमुनेशब्दस्यनिघातः किञ्चप्रकृतेमित्रावरुणावित्याम-
न्त्रितंसामान्यवचनम् तस्यविशेषणतयाविशेषवचनमृतावृधाविति अतोनामन्त्रितेसमानाधि-
करणेसामान्यवचनमितिपूर्वस्याविद्यमानवद्भावप्रतिषेधादपिनिरन्तरायोद्वितीयस्यनिघातः ।
नन्वेवमप्यपादादावित्यनुवृत्तेः ऋतावृधेत्यस्यद्वितीयपादादित्वान्नभवितव्यंनिघातेन अतएव
इमंमेगङ्गे इत्यत्रशुतुद्रिपदस्यपदात्परस्यामन्त्रितस्यापिपादादित्वादेवानिघातादाद्युदात्तत्वंजातम्
तद्वदत्रापिभवितव्यम् वक्तव्योवाविशेषइति । उच्यते–मित्रावरुणपदस्यसुबामन्त्रितइतिपराङ्ग-
वद्भावेनपरानुप्रवेशादेवऋतावृधेत्यस्यनपादादित्वम् शुतुद्रिपदमपितर्ह्येवमेवपूर्वस्यसरस्वतिपद-
स्यपराङ्गवद्भावेननपादादिरितिनिहन्येतेतिचेत् पराङ्गवद्भावस्तावत्सुबन्तमामन्त्रितंचाश्रित्यप्रवृत्तेः
पदविधिः अतस्तयोःसत्येवपरस्परान्वयेपराङ्गवद्भावेनभवितव्यम् समर्थःपदविधिरिति
नियमात् शुतुद्रिसरस्वतिपदयोश्चनपरस्परेणान्वयः किन्तुसचतेत्यनेनेत्यसामर्थ्यान्नपरा-
ङ्गवद्भावः प्रकृतेतु मित्रावरुणावृतावृधाइतिद्वयोरपिसामानाधिकरण्येनपरस्परान्वयादस्तिसा-
मर्थ्यमितिभवितव्यंपराङ्गवद्भावेन यथामरुतांपितरित्यत्रेतिविशेषः । नन्वतएवतर्हिमित्रा-
वरुणपदस्यपराङ्गवद्भावेनपादादित्वादपादादावितिपर्युदासादामन्त्रितनिघातोनस्यादितिचेत् न
पूर्वंसुबन्तंपरंचामन्त्रितमाश्रित्ययःस्वरःप्रवर्ततेतत्रसुबामन्त्रितइतिपराङ्गवद्भावः भवतिचैवंऋ-
तावृधपदनिघातइति तत्रपूर्वस्यपराङ्गवद्भावेनापादादित्वात्सप्रवर्तते मित्रावरुणपदनिघातस्तु
पूर्वमेवपदमुपजीवति नपरमामन्त्रितमितिनपराङ्गवद्भावः । ननुपराङ्गवद्भाववन्निघातोऽपिपदवि-

धिरितिङ्कत्वेनेत्यनेनासामर्थ्यात् ततःपदात्परस्यमित्रावरुणपदस्यनस्यादितिचेत् न समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइति निघातेपद्विधावपिसमानवाक्यत्वमेवपर्याप्तम् न पराङ्गवद्भावबलपरस्परान्वयोऽपीत्यलम् । क्रतुं कृञःक्रतुः प्रत्ययस्वरेणादिरुदात्तः । आशाथे आनशाथे छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् नुडभावश्छान्दसः ॥ ८ ॥

तृतीयामृचमाह—

कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ९ ॥ ४ ॥

कवी इति । नः । मित्रावरुणा । तुविऽजाता । उरुऽक्षया । दक्षम् । दधाते इति । अपसम् ॥ ९ ॥ ४ ॥

मित्रावरुणावेतौदेवौनोऽस्माकंदक्षंबलं अपसंकर्मच दधातेपोषयतः कीदृशौ कवी मेधाविनौ तुविजातौबहूनामुपकारकतयासमुत्पन्नौ उरुक्षयाबहुनिवासौ विमोधीरइत्यादिषुचतुर्विंशतिसंख्याकेषुमेधाविनामसुकविर्मनीषीतिपठितम् उरुतुवीत्येतौशब्दौद्वादशसुबहुनामसुपठितौ ओजःपाजइत्यादिषुअष्टाविंशतिसंख्याकेषुबलनामसुदक्षोवीळ्वितिपठितम् अपसशब्दःषड्विंशतिसंख्याकेषुकर्मनामसुपठितः ॥ मित्रावरुणा मित्रशब्दःप्रातिपदिकस्वरेणान्तोदात्तः वरुणशब्दोनित्स्वरेणाद्युदात्तः द्वन्द्वे देवताद्वन्द्वेचेत्युभाववशिष्येते । तुविजातौ बहूनामुपकारकतयातत्संबन्धित्वेनजाताविति षष्ठीसमासेसमासान्तोदात्तत्वम् चतुर्थीसमासेहि केचेविपूर्वपदप्रकृतिस्वरःस्यात् उरूणां बहूनांक्षयावुरुक्षयौ क्षिनिवासगत्योरितिधातोःक्षियंत्यस्मिन्नितिक्षयःइत्यधिकरणेएरजित्यच्प्रत्ययान्तस्यचितइत्यन्तोदात्तत्वेप्राप्तेक्षयोनिवासेइत्याद्युदात्तत्वंविहितम् समासेतु समासस्येत्यन्तोदात्तत्वंबाधित्वाकुदुत्तरपदप्रकृतिस्वरेणप्राप्तमुत्तरपदाद्युदात्तत्वम् यद्यपिथाथादिस्वरेणान्तोदात्तेनबाध्यते तथापिपरादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वंद्रष्टव्यम् । दक्षोदक्षतेरुत्साहकर्मणः घञ् ञित्वादाद्युदात्तः आप्यतेफलमनेनेत्यपःकर्म आपःकर्माख्यायांह्रस्वोनुट्चेत्यसुन्नन्तस्यापसस्पारेइत्यादौनित्त्वादाद्युदात्तस्याप्यपस्शब्दस्यात्रव्यत्ययेनप्रत्ययाद्युदात्तत्वम् ॥ ९ ॥

इतिप्रथमस्यप्रथमेचतुर्थोवर्गः ॥ ४ ॥

आश्विनस्तृचः प्रातरनुवाकस्यआश्विनेक्रतौविनियुक्तः तथाचसूत्रितम्—अथाश्विनएषोउषाःप्रातर्युजेतिचतस्रोऽश्विनायज्वरीरिषइति ।

तत्रप्रथमामृचमाह—

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ॥ १ ॥

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ॥ १॥

हेअश्विनाअश्विनौ युवामिषोहविर्लक्षणान्यन्नानिचनस्यतंइच्छतम् भुञ्जाथामित्यर्थः यद्यपिचनःशब्दोऽन्नवाची तथापि इषइत्यनेनसहनास्तिपुनरुक्तिदोषः इच्छामुपलक्षयितुंप्रयुक्तत्वात् वक्तव्यमुवाच समूलकापंकपतीत्यादौयथापुनरुक्त्यभावस्तद्वत् कीदृशीरिषःयज्वरीः यागनिष्पादिकाः कीदृशावश्विनौ द्रवत्पाणीहविर्ग्रहणायद्रवद्भ्यांधावद्भ्यांपाणिभ्यामुपेतौ शुभस्पतीशोभनस्यकर्मणःपालकौ पुरुभुजाविस्तीर्णभुजौबहुभोजिनौवा ॥ अश्विना आमन्त्रितस्येतिपाष्ठिकमाद्युदात्तत्वम् । यज्वरीः यागकरणानामप्यन्नानांअसिञ्छिनत्तीतिवत्स्वव्यापारेकर्तृत्वविवक्षया सुयजोर्ङ्वनिबितिङ्वनिप्प्रत्ययः वनोरचेतिङीप् तत्सन्नियोगेनरेफादेशः प्रत्ययद्वयस्यानुदात्तौसुप्पिताविवत्यनुदात्तत्वात् धातुस्वरएवावशिष्यते । इषशब्देशसोऽनुदात्तत्वात्प्रातिपदिकस्वरएवावशिष्यते । द्रवन्तौधावन्तौपाणीययोः तयोःसंबोधनंद्रवत्पाणीइति तस्यामन्त्रिताद्युदात्तत्वम् नपुनराष्टमिकोनिघातः अपादादाविविप्रतिषेधात् इषइतिपूर्वपदस्यसुबामन्त्रितेइतिपराङ्गवद्भावेनमित्रावरुणावृतावृधाविविवदपादादित्वमितिचेत् न तत्रसामानाधिकरण्येनपरस्परान्वयात् इहत्विषोद्रवत्पाणीइत्यनयोः सरस्वतिशुत्रुद्रिपदवदसामर्थ्येनप्रयुक्तत्वात् । शुभशुंभदीप्तावित्यस्यसम्पदादित्वाद्भावेक्विबन्तस्यषष्ठ्येकवचनम् षष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् तस्यपतीइत्यामन्त्रितेपरतःपराङ्गवद्भावादामन्त्रिताद्युदात्तत्वम् नपुनराष्टमिकोनिघातः तस्मिन्कर्तव्येद्रवत्पाणीइतिपूर्वस्यामन्त्रितस्यामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवद्भावेनपादादित्वादपादादाविविप्रतिषेधात् । ननुमित्रावरुणावृतावृधाविविवन्नामन्त्रितेसमानाधिकरणइत्यविद्यमानवद्भावप्रतिषेधेनभवितव्यमितिचेत् न मित्रावरुणपदंहिसामान्यवचनमितियुक्तस्तत्रविशेषणसमानाधिकरणस्याविद्यमानवत्त्वप्रतिषेधः द्रवत्पाणीपदंतुनतथेतिवैषम्यात् । पुरूविस्तीर्णौभुजौययोस्तौ आमन्त्रिताद्युदात्तत्वम् सुपांसुलुगितिडादेशः पुरुबहुभुञ्जातेइतिवा । चनस्यतमित्यत्र चायतेरन्नेह्रस्वश्चेति चायृपूजानिशामनयोरित्यस्मादसुन्प्रत्ययेआकारस्यह्रस्वेचानुकृष्टेनुडागमेचलोपोव्यर्थ्वौयकारलोपेचनस्शब्दोऽन्ननामसुपठितः तदात्मनइच्छतीतिसुपआत्मनःक्यच् सनाद्यन्ताधातवइतिधातुत्वाल्लोण्मध्यमद्विवचनम् । क्यचःप्रत्ययस्वरेणान्तोदात्तत्वम् शपाएकादेशेएकादेशउदात्तेनोदात्तइत्युदात्तः उपर्यात्यानस्पन्दसार्वधातुकानुदात्तत्वेस्वरितत्वम् नचनिङ्क्तिङइतिनिघातःपूर्वस्यामन्त्रितस्याविद्यमानवद्भावेनपदात्परत्वात्पादादित्वाच्चतदभावः ॥ १ ॥

द्वितीयामृचमाह—

अश्विनापुरुदंससानराशवीरयाधिया । धिष्ण्यावनतंगिरः ॥ २ ॥

अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतम् । गिरः ॥ २ ॥

अश्विनाहेअश्विनौयुवांगिरोऽस्मदीयाः स्तुतीर्धियाआदरयुक्तयाबुद्ध्यावनतंसंभजतम् स्वीकुरुतं कीदृशावश्विनौपुरुदंससाबहुकर्माणौ षड्विंशतिसंख्याकेषुकर्मनामसुदंसइतिपठितम् नरानेतारौ धिष्ण्याधाष्ट्र्ययुक्तौबुद्धिमन्तौवा कीदृश्याधिया शवीरयागतियुक्तयाअप्रतिहतप्रसरयेत्यर्थः ॥ अश्विनेत्याद्यामन्त्रितचतुष्टयस्यपाष्ठिकमामन्त्रिताद्युदात्तत्वंपादादित्वान्नाष्टमिकोनिघातः पुरुदंससेत्यपिहिपादादिरेवआमन्त्रितंपूर्वमविद्यमानवदितिपूर्वस्याविद्यमानवत्त्वात् नामन्त्रितेसमानाधिकरणेइतिपूर्वस्यसामान्यवचनत्वेननाविद्यमानवत्त्वमितिचेत् न अश्विशब्दवत्पुरुदंसस्शब्दस्याप्यश्विनोरेवरूढ्याप्रयुज्यमानतयासामान्यशब्दत्वात् सामान्यवचनंनाविद्यमानवदित्युक्ते अर्थात्परस्यविशेषवचनत्वावगमात् उभयोःसामान्यवचनत्वेपर्यायत्वेनपौनरुक्त्यात्सहाप्रयोगइतिचेत् न गुणविशेषसंकीर्तनवत्प्रसिद्धानेकनामविशेषसंबन्धसंकीर्तनस्यापिस्तुत्युपयोगेनसप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैवपुनरुक्तत्वात् अश्विपुरुदंसस्शब्दयोरेकार्थवृत्तित्वेऽपिपर्यायत्वादेवप्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपिनाविद्यमानवत्त्वप्रतिषेधः भिन्नप्रवृत्तिनिमित्तानामेवह्येकस्मिन्नर्थेवृत्तिःसामानाधिकरण्यम् अश्विशब्दस्याश्वसंबन्धोनिमित्तम् पुरुदंसस्शब्दस्यतुबहुकर्मसंबन्धइतिप्रवृत्तिनिमित्तभेदइतिचेत् न तद्धिद्वयंव्युत्पत्तिमात्रनिमित्तं नप्रवृत्तिनिमित्तम् व्युत्पत्तिनिमित्तभेदमात्रेणापिसामानाधिकरण्याभिधानेवृक्षमहीरुहशब्दयोरपितथात्वप्रसङ्गः अतएवहीडेरन्तेदितेसरस्वतिप्रियेप्रेयसिमहिविश्रुत्येतानितेऽघ्न्येनामानीत्यत्र सहस्रतमीप्रशंसोपयोगित्वेनेडादिशब्दानामेतानितेअघ्न्येनामानीतिवचनेनपर्यायाणामप्यनेकविशिष्टनामसंबन्धनिबन्धनस्तुत्यर्थत्वेनैवसहप्रयोगः स्तुत्युपयोगेनैवव्युत्पत्तिनिमित्तभेदविवक्षायामपिपर्यायत्वेनासामानाधिकरण्यादेवनामन्त्रितइतिनिषेधाभावादामन्त्रितंपूर्वमविद्यमानवदिति पूर्वपूर्वस्याविद्यमानवत्त्वात्सर्वेषांपाष्ठिकमाद्युदात्तत्वम् तद्वदुक्तेऽपि । कॄशॄपॄकटिपटिशौटिभ्यईरन्नित्यतईरन्नित्यनुवृत्तौबहुलवचनादन्यत्रापीत्यनेनशुश्रुगताविति धातोरीरन्प्रत्ययेकृतेसतिनित्त्वाच्छवीरयाशब्दआद्युदात्तः । धियेत्यत्रसावेकाचइतिविभक्तिरुदात्ता । वनतमित्यत्रशपःपित्त्वाल्लोण्मध्यमद्विवचनस्यङिसार्वधातुकत्वाच्चवनषणसंभक्तावितिधातूदात्तत्वमेवशिष्यते नचतिङ्ङति-

इइतिनिघातः पूर्वामन्त्रितस्याविद्यमानवत्त्वेनपादादित्वात्। गिरः सुपोऽनुदात्तत्वेनप्रातिपदिकस्वरःशिष्यते ॥ २ ॥

तृतीयामृचमाह—

**दस्रा॑युवा॒क॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः । आया॑तंरुद्रवर्तनी ॥ ३ ॥**

दस्रा॑ । यु॒वाक॑वः । सु॒ताः । नास॑त्या । वृ॒क्तऽब॑र्हिषः । आ । या॒त॒म् ।
रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी ॥ ३ ॥

अत्राश्विनेत्यनुवर्तते हेअश्विनौआयातं अस्मिन्कर्मण्यागच्छतम् किमर्थमितितदुच्यते सुताः युष्मदर्थंसोमाः अभिषुताः तान्स्वीकर्तुमितिशेषः कीदृशावश्विनौदस्राशत्रूणामुपक्षपयितारौ यद्वा देववैद्यत्वेनरोगाणामुपक्षपयितारौ अश्विनौवैदेवानांभिषजावितिश्रुतेः । नासत्या असत्यंअनृतभाषणंतद्रहितौ अत्रयास्कः—सत्यावेवनासत्यावित्यौर्णवाभः सत्यस्यप्रणेतारावित्याग्रायणइति। रुद्रवर्तनी रुद्रशब्दस्यरोदनंप्रवृत्तिनिमित्तम् यदरोदीत्तद्रुद्रस्यरुद्रत्वमितितैत्तिरीयाः । तद्यद्रोदयन्तितस्माद्रुद्राइतिवाजसनेयिनः । रुद्राणांशत्रुरोदनकारिणांशूरभटानांवर्तनिर्मार्गोधाटीरूपोययोस्तौरुद्रवर्तनी यथाशूराधाटीमुखेनशत्रून्रोदयन्ति तद्वदेतावित्यर्थः युवाकवइत्यभिषुतसोमानांविशेषणम् वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिताइत्यर्थः वृक्तानिमूलैर्वर्जितानिबर्हींष्यास्तरणरूपाणियेषां सोमानांतेवृक्तबर्हिषः यद्वा भरताइत्यादिष्वष्टस्वृत्विङ्नामसुवृक्तबर्हिषइति तदानींतृतीयार्थेप्रथमा ऋत्विग्भिरभिषुताइत्यन्वयः ॥ दस्रा आमन्त्रितस्येत्याद्युदात्तः। युवाकवः युमिश्रणे युवन्तिमिश्रीभवन्तिवसतीवरीप्रभृतिभिःश्रयणद्रव्यैरितियुवाकवः कटिकप्यादिष्वगणितस्यापियौतेर्बहुलग्रहणात्काकुप्रत्ययः तस्यकित्त्वेनगुणाभावादुवङादेशः प्रत्ययस्वरेणआकारउदात्तः नविद्यतेअसत्यमनयोरितिनासत्यौ नभ्राण्नपान्नवेदानासत्येत्यादिनाप्रकृतिवद्भावान्नञोनलोपाभावः पादादित्वेनानिघातादामन्त्रिताद्युदात्तत्वम् । वृक्तबर्हिषः वृक्तं मूलैर्वर्जितंबर्हिरास्तीर्णंयेषांसोमानांतेवृक्तबर्हिषः पूर्वपदप्रकृतिस्वरेणक्तप्रत्ययस्वरएवशिष्यते । आङ्त्यमोपसर्गाश्चाभिवर्जमित्युदात्तः । रुद्रवर्तनी आमन्त्रितस्यचेत्यामन्त्रितनिघातः ॥ ३ ॥

ऐन्द्रीतृचेप्रथमामृचमाह—

**इन्द्रायाहि॑चित्रभानो सु॒ता इ॒मे त्वा॒यव॑ः । अण्वी॑भि॒स्तना॑ पू॒तास॑ः ॥ ४ ॥**

इन्द्र॑ । आ । या॒हि॒ । चि॒त्र॒भा॒नो॒ इति॑ चित्रऽभानो । सु॒ताः । इ॒मे ।
त्वा॒ऽयव॑ः । अण्वी॑भिः । तना॑ । पू॒तास॑ः ॥ ४ ॥

---

१ तै० सं० २. ३. ११. १ २ नि० ६. १२. १ ३ तै० सं० १. ५. १. १

चित्रभानोचित्रदीप्तेहेइन्द्रअस्मिन्कर्मण्यायाहि आगच्छ सुताअभिषुताइमेसोमाः त्वायवः त्वांकामयमानावर्तन्ते अण्वीभिःअण्वइत्यादिषुद्वाविंशतिसंख्याकेष्वङ्गुलिनामसुअण्व्यइतिपठितम् ऋत्विजामङ्गुलिभिः सुताइत्यन्वयः किञ्च एतेसोमाः तनानित्यंपूतासःपूताःशुद्धाःदशापवित्रेणशोधितत्वात् इन्द्रशब्दंयास्कोबहुधानिर्वक्ति—इन्द्रइरांदृणातीतिवेरांददातीतिवेरांदधातीतिवेरांदारयतइति वेरान्धारयतइति वेन्दवेद्रवतइति वेन्दौरमतइति वेन्धेभूतानीतिवातद्यदेनंप्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायतइदंकरणादित्याग्रायणइदंदर्शनादित्यौपमन्यवइन्दतेर्वैश्वर्यकर्मणइन्छत्रूणांदारयितावाद्रावयितावादरयितावाचयज्वनामिति[1] । अस्यायमर्थः—दृविदारणेइतिधातुः इरामन्नमुद्दिश्यतन्निष्पादकजलसिद्ध्यर्थंदृणातिमेघंविदीर्णंकरोतीतीन्द्रः । डुदाञ्दानेइतिधातुः इरामन्नंवृष्टिनिष्पादनेनददातीतीन्द्रः । धाञ्पोषणार्थः इरामन्नंतृप्तिकारणंसस्यंदधातिजलप्रदानेनपुष्णातीतीन्द्रः। इरामुत्पादयितुंकर्षकमुखेनभूमिंविदारयतीतीन्द्रः। पूर्वोक्तपोषणमुखेनेरांधारयतिविनाशराहित्येनस्थापयतीतीन्द्रः । इन्दुःसोमोवल्लीरसः तदर्थं यागभूमौद्रवतिधावतीतीन्द्रः । इन्दौयथोक्तेसोमेरमतेक्रीडतीतीन्द्रः । ञिइन्धीदीप्ताविति धातुः । भूतानिप्राणिदेहानइन्धेजीवचैतन्यरूपेणान्तःप्रविश्यदीपयतीतीन्द्रः । एतदेवाभिप्रेत्यवाजसनेयिनआमनन्ति—इन्धोहवैनामैपयोऽयंदक्षिणेक्षन्पुरुषस्तंवाएतमिन्धंसन्तमिन्द्रइत्याचक्षतेपरोक्षेणपरोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषइति । तद्यदित्यादिकंब्राह्मणान्तरवाक्यम् । तत्तत्रेन्द्रविषयेनिर्वचनमुच्यतेइतिशेषः यद्यस्मात्कारणादेनंपरमात्मरूपमिन्द्रंदेवं प्राणैर्वाक्चक्षुरादीन्द्रियैःप्राणापानादिवायुभिश्चसहितंसमैन्धन् उपासकाःध्यानेनसम्यक्प्रकाशितवन्तः तत्तस्मात्कारणादिन्द्रनामसंपन्नम् अस्मिन्पक्षेइध्यतेदीप्यतेइतिकर्मणिव्युत्पत्तिः । आग्रायणनामकोमुनिरिदंकरणादिन्द्रइतिनिर्वचनंमन्यते इन्द्रोहिपरमात्मरूपेणेदंजगत्करोति औपमन्यवनामकोमुनिरिदंदर्शनादिन्द्रइतिनिर्वचनमाह इदमित्यापरोक्ष्यमुच्यते विवेकेनहिपरमात्मानमापरोक्ष्येणपश्यति एतदेवाभिप्रेत्यारण्यकाण्डेसमाम्नायते—सएतमेवपुरुषंब्रह्मततमपश्यदिदमदर्शमिती[2] ३ तस्मादिदन्द्रोनामेदन्द्रोहवैनामतमिदंद्रंसन्तमिन्द्रइत्याचक्षतेपरोक्षेणपरोक्षप्रियाइवहिदेवाइति। इदिपरमैश्वर्येइतिधातुः स्वमाययाजगद्रूपत्वंपरमैश्वर्यंतद्योगादिन्द्रः अनेनाभिप्रायेणश्रूयते—इन्द्रोमायाभिःपुरुरूपइति[3] । इनशब्दस्येश्वरवाचकस्याकारलोपेसति नकारान्तमिनिनितिपदंभवति दृभयेइतिधातुः सचपरमेश्वरःशत्रूणांदारयिताभीषयितेतीन्द्रःद्रुगताविति धातुः शत्रूणांद्रावयितापलायनंप्रापयितेतीन्द्रः यज्वनायागानुष्ठायिनामादरयिता भयस्यपरिहर्ताएवमेतानिनिर्वचनानिद्रष्टव्यानीति ॥ इन्द्रेत्यत्रामन्त्रिताद्युदात्तत्वम् ।

१ इरांदारयतीतिवेरांधारयतीतिवापाठः। २ नि० १०.८.। ३ ऋ०सं० ४.७.३३.।

आइत्यत्रनिपातत्वेनाद्युदात्तत्वम् । चित्रभानो पदात्परत्वादामन्त्रितनिघातः । त्वामिच्छन्तीत्यर्थेयुष्मच्छब्दात्सुपआत्मनःक्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः क्याच्छन्दसीतिक्यजन्तादुप्रत्ययः त्वद् यवइतिप्राप्तौयुष्मदस्मदोरनादेशेइत्यविभक्तावपिहलादौव्यत्ययेनात्वम् उकारःप्रत्ययस्वरेणाद्युदात्तः । अणुशब्दःसौक्ष्म्यवाचकः तद्योगात्प्रकृतेअङ्गुलीषुवर्तते वोतोगुणवचनादितिङीषिप्राप्तेव्यत्ययेनङीन् नित्वादाद्युदात्तः । तना इत्ययंनिपातोनित्यमित्यर्थे निपातत्वादाद्युदात्तः । पूतासः आज्जसेरसुगित्यसुक् ॥

द्वितीयामृचमाह–

इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः । उपब्रह्माणिवाघतः ॥ ५ ॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः ।
उप । ब्रह्माणि । वाघतः ॥ ५ ॥

हे इन्द्र त्वमायाहि अस्मिन्कर्मण्यागच्छ किमर्थं वाघतऋत्विजोब्रह्माणिवेदरूपाणिस्तोत्राण्युपैतुं कीदृशस्त्वं धियास्मदीययाभक्त्याइषितःप्राप्तःअस्मद्भक्त्याप्रेरितइत्यर्थः विप्रजूतः यथायजमानभक्त्याप्रेरितस्तथान्यैरपिविप्रैर्मेधाविभिर्ऋत्विग्भिःप्रेरितः कीदृशस्यवाघतःसुतावतः अभिषुतसोमयुक्तस्य केतइत्यादिषुएकादशसुप्रज्ञानामसुधीरितिपठितम् चतुर्विंशतिसंख्याकेषुमेधाविनामसुविप्रोधीरइतिपठितम् भरताइत्यादिष्वष्टस्वृत्विङ्नामसुवाघतइतिपठितम् ॥ इषितइत्यत्रेषगतावित्यस्मान्निष्ठायामिडागमः आगमाअनुदात्ताः इतीटोनुदात्तत्वात् क्तस्वरःशिष्यते। विप्रजूतः टुवपबीजतन्तुसन्तानेइतिधातोः ऋज्रेन्द्राग्रवज्रविप्रेत्यादिनारन्प्रत्ययान्तोविप्रशब्दोनिपातितः निपातनादुपधायाइकारोटघूपधगुणाभावश्च नित्वादाद्युदात्तः तेर्जूतःप्राप्तःजूइतिसौत्रोधातुर्गत्यर्थः श्र्युकःकितीतीट्प्रतिषेधःतृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। सुतावतः छान्दसंदीर्घत्वम् मतुपोऽनुदात्तत्वात् क्तप्रत्ययस्वरएवशिष्यते । ब्रह्माणि नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । वाघतशब्दऋत्विङ्नामसुपठितः प्रातिपदिकस्वरः ॥

तृतीयामृचमाह–

इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः । सुतेदधिष्वनश्चनः ॥ ६ ॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते ।
दधिष्व । नः । चनः ॥ ६ ॥ ५ ॥

हरिशब्दइन्द्रसंबन्धिनोरश्वयोर्नामधेयम् हरीइन्द्रस्यरोहितोऽग्नेरितितदी याश्वनामत्वेनपठितत्वात् हेहरिवः अश्वयुक्तेन्द्र त्वं ब्रह्माण्युपेतुमायाहि कीदृशस्त्वंतूतुजानः त्वरमाणः आगत्यचास्मिन्सुतेसोमाभिषवयुक्तेकर्मणिनोस्मदीयंचनोऽन्नंहविर्लक्षणंदधिष्वधारय स्वीकुर्वित्यर्थः ॥ तूतुजानःतुजेर्लिटि लिटःकानज्वेतिकानजादेशः तुजादीनांदीर्घोभ्यासस्येत्यभ्यासस्यदीर्घत्वम् । अभ्यस्तानामादिरित्याद्युदात्तत्वम् । हरिवइत्यत्रहरयोऽस्यसन्तीतिमतुपिछन्दसीरइतिमकारस्यवत्वम् संबुद्धौउगिदचामितिनुम् संयोगान्तलोपेनकारस्यमतुवसोरुसंबुद्धौछन्दसीतिरुत्वम् आष्टमिकोनिघातः । ब्रह्माणीत्यस्यहरिवइत्यनेनासामर्थ्यात्समर्थःपदविधिरितिनियमात्सुबामन्त्रितेइतिपराङ्गवद्भावाभावेनामन्त्रितनिघाताभावादाद्युदात्तत्वेसत्युपेत्यकारस्यसन्नतरः। दधिष्वेत्यत्रदधातेर्लोटिथास् थासःसे सवाभ्यांवामावित्येकारस्यवादेशः छन्दस्युभयथेति सार्वधातुकार्धधातुकसंज्ञयोःसत्योः सार्वधातुकत्वेनशपितस्यश्लौचद्विर्भावः आर्धधातुकत्वेनेडागमश्च आतोलोपइटिचेत्याकारलोपः । चनः चायतेरन्नेह्रस्वश्चेत्यसुन्नन्तःचकारान्नुडागमेयलोपः ॥ ६ ॥

इतिप्रथमस्यप्रथमेपञ्चमोवर्गः ॥ ५ ॥

वैश्वदेवतृचेप्रथमामृचमाह—

**ओमा॑सश्चर्षणीधृतो॒ विश्वे॑ देवास॒ आग॑त । दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम् ॥ ७ ॥**

ओमा॑सः । च॒र्ष॒णि॒ऽधृ॒तः॒ । विश्वे॑ । दे॒वा॒सः॒ । आ । ग॒त॒ ।

दा॒श्वांसः॑ । दा॒शुषः॑ । सु॒तम् ॥ ७ ॥

हेविश्वेदेवासः एतन्नामकादेवविशेषाः दाशुषोहविर्दत्तवतोयजमानस्यसुतमभिषुतंसोमंप्रतिआगत आगच्छत तेचदेवाः ओमासोरक्षकाः चर्षणीधृतोमनुष्याणांधारकाः दाश्वांसः फलस्यदातारः मनुष्याइत्यादिषुपञ्चविंशतिसंख्याकेषुमनुष्यनामसु चर्षणिशब्दःपठितः अश्विनावित्यादिष्वेकत्रिंशत्संख्याकेषुदेवविशेषनामसु विश्वेदेवाःसाध्याइतिपठितम् एतामृचंयास्कएवंव्याख्यातवान्—अवितारोवावनीयावामनुष्यधृतःसर्वेचदेवाइहागच्छतदत्तवन्तोदत्तवतःसुतमितितदेतदेकमेववैश्वदेवंगायत्रंतृचंदशतयीषुविद्यतेयत्तुकिंचिद्बहुदैवतंतद्वैश्वदेवानांस्थानेयुज्यतेयदेवविश्वलिङ्गमितिशाकपूणिरिति॑ ॥ अत्रविश्वशब्दःसर्वशब्दपर्यायइतियास्कस्यमतम् देवविशेषस्यैवासाधारणंलिङ्गमितिशाकपूणेर्मतम् अवन्तीत्योमासोदेवाः अवतेरित्यनुवृत्तौ अविसिविसिशुषिभ्यःकिदितिमन्प्रत्ययः ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ् मनःकित्त्वेपिचाहुलकाद्गु-

---

१ नि० १२. ४० ।

णः आज्ञसेरसुगितिजसेरसुगागमः आमन्त्रितायुदात्तत्वम् । चर्षणयोमनुष्याः तान्वृष्टिदानादिनाधारयन्तीतिचर्षणीधृतोदेवाः पूर्वस्यामन्त्रितस्यसामान्यवचनस्यविभाषितंविशेषवचनेबहुवचनमित्यविद्यमानवत्त्वप्रतिषेधादपादादित्वेननिघातः नन्वतएवविद्यमानवत्त्वात्सुबामन्त्रितेइतिपराङ्गवत्त्वेनैकपदीभावात्पदादपरत्वेनकथंनिघातइतिचेत् न तत्करणंस्वाश्रयमपियथास्यादितिवचनात्पदभेदमयुक्तस्यनिघातस्याप्युपपत्तेः ऐकपद्येप्याद्युदात्तत्वेऽनुदात्तंपदमेकवर्जमितिसुतरामेवनिघातोभविष्यति इत्थमेवतर्हिद्रवत्पाणीशुभस्पतीइत्यत्रापिपराङ्गवत्त्वेनैकपद्यादुत्तरस्यशेषनिघातमसङ्गइतिचेत् न तत्रपराङ्गवद्भावस्यपरेणामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवद्भावेनबाधितत्वात् इहपुनर्विभाषितंविशेषवचनेबहुवचनमित्यविद्यमानत्वस्यनिषेधात्पूर्वस्याप्यामन्त्रितस्यविद्यमानवत्त्वात्पराङ्गवत्त्वंस्वीकृतमितिवैषम्यम् । विश्वे पादादित्वादाद्युदात्तः गणदेवतावचनश्चात्रविश्वशब्दोनसर्वशब्दपर्यायइतिविशेष्यपरतयासामान्यवचनत्वादोमासइत्यनेनासामानाधिकरण्यम् सामानाधिकरण्येहिपूर्वस्यपादस्यपराङ्गवद्भावेसतिमित्रावरुणावृतावृधावित्यादाविवाद्यामन्त्रितायुदात्ततानस्यात् विश्वेइत्यस्यविशेषणंदेवासइति दीव्यन्तीतिदेवाः प्रकाशवन्तः नन्ववयवप्रसिद्धेःसमुदायप्रसिद्धिर्बलीयसीतिरूढएवार्थोदेवशब्दस्यग्राह्योनयौगिकः यौगिकत्वेह्यवयवार्थानुसन्धानव्यवधानेनप्रतिपत्तिर्विलम्बितास्यात् समुदायप्रसिद्धौतुनविलम्बइतिचेत् न समुदायप्रसिद्धौहिदेवशब्दस्यसामान्यपरतयाविशेषवचनत्वाभावाद्विभाषितंविशेषवचनेबहुवचनं इत्यनेनानिषिद्धत्वाद्विश्वेइत्यस्याविद्यमानवत्त्वेनशुभस्पतीइतिपदवद्देवासइत्यस्याप्युदात्तत्वंस्यात् स्वरानुसारेणचरूढित्यागेनापिदेवशब्दस्ययोगस्वीकारोयुक्तएव । आगत आगच्छत बहुलंछन्दसीतिशपोलुक्तस्ततिअनुदात्तोपदेशेत्यादिनामकारलोपः आङः पदात्परत्वेननिघातः । दाश्वांसः दाशृदानेइत्यस्यक्वसौ दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनात्क्रादिनियमप्राप्तइडागमोद्विर्वचनंचनभवति प्रत्ययस्वरेणक्वसोरुदात्तत्वम् । दाशुषइत्यत्रवसोःसंप्रसारणमितिसंप्रसारणम् संप्रसारणाच्चेतिपूर्वरूपत्वम् शासिवसिघसीनांचेतिषत्वम् ॥ ७ ॥

द्वितीयामृचमाह—

विश्वे॑दे॒वासो॑अ॒प्तुरः॑सु॒तमाग॑न्त॒तूर्ण॑यः । उ॒स्राइ॑व॒स्वस॑राणि ॥ ८ ॥

विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः । उ॒स्राःऽइ॑व । स्वस॑राणि ॥ ८ ॥

विश्वेदेवासः एतन्नामकागणरूपादेवविशेषाः सुतंसोममागन्त आगच्छन्त आगच्छन्तु कीदृशाः अप्तुरः तत्तत्कालेवृष्टिप्रदाइत्यर्थः तूर्णयः त्वरायुक्ताः यजमानमनुग्रहीतुमात्वस्वर-

हिताइत्यर्थः विश्वेषांदेवानां सोमंमत्यागमनेउस्राइत्यादिर्दृष्टान्तः उस्राः सूर्यरश्मयः स्वसराण्यहानिमत्यालस्यरहितायथासमागच्छन्तितद्वत् स्रेदयइत्यादिषुपञ्चदशसुरश्मिनामसुउस्राःपसवइतिपठितम् वस्तोरित्यादिषुद्वादशस्वहर्नामसुस्वसराणिघ्रंसःधर्मइतिपठितम् तच्चपदं यास्केनव्याख्यातम्—स्वसराण्यहानिभवन्तिस्वयंसारीण्यपिवास्वरादित्योभवतिसएनानिसारयतिउस्राइवस्वसराणीत्यपिनिगमोभवतीति ॥ देवासः पचाद्यजन्तश्चित्त्वादन्तोदात्तः । अप्तुरः तुरत्वरणे श्लुविकरणीतुतुरतित्वरयन्तीत्यर्थेक्विप्चेतिक्विप् गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वम् । आगन्त आगच्छन्तित्यर्थेव्यत्ययेनमध्यमपुरुषबहुवचनं बहुलंछन्दसीतिशपोलुक् तस्यतप्तनप्तनथनाश्चेतितबादेशे अपिदितिप्रतिषेधादङित्त्वादनुनासिकलोपाभावः तिङ्ङतिङइति निघातः । ञित्वरासंभ्रमेइतिधातोस्त्वरन्तेइतितूर्णयः निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदितिनित्प्रत्ययः नित्त्वादाद्युदात्तः उस्राइवेत्यत्रइवेननित्यसमासोविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेतिसमासेपूर्वपदप्रकृतिस्वरत्वम् । नित्यंसरतीतिसरःसूर्यः पचाद्यच् स्वः सरोयेषांतानिस्वसराणि अहानि बहुव्रीहौप्रकृत्यापूर्वपदमितिस्वशब्दआद्युदात्तः ॥ ८ ॥

तृतीयामृचमाह—

विश्वे॑दे॒वासो॑अ॒स्रिध॒एहि॑मायासो अ॒द्रुहः॑ । मेधं॑जुषन्त॒वह्न॑यः ॥ ९ ॥

विश्वे॑ । दे॒वासः॑ । अ॒स्रिधः॑ । एहि॑ऽमायासः । अ॒द्रुहः॑ । मेध॑म् । जु॒षन्त॒ । वह्न॑यः ॥ ९ ॥

विश्वेदेवासएतन्नामकादेवविशेषाः मेधंहविर्यज्ञसंबन्धिजुषन्तसेवन्ताम् कीदृशाः अस्रिधः क्षयरहिताः शोषरहितावा एहिमायासः सर्वतोव्याप्तप्रज्ञाः यद्वा सौचीकमग्निमन्तःप्रविष्टमेहिमायासीरितियदवोचन्तदनुकरणहेतुकोयंविश्वेषांदेवानांव्यपदेशएहिमायासइति अद्रुहोद्रोहरहिताः वह्नयोवोढारःधनानांमापयितारः स्रिधेःक्षयार्थस्यशोषणार्थस्यवासंपदादिभ्योभावेक्विपिनञावहुव्रीहिः पूर्वपदप्रकृतिस्वरंबाधित्वानञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । एहिमायासः ईहचेष्टायां आसमन्तादीहतेइत्येहिः इन्नितिसर्वधातुसाधारणइन्प्रत्ययोनित्त्वादाद्युदात्तः एहिर्मायाप्रज्ञायेषामितिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् अथवा आङुदात्तादुत्तरस्यइहीतिलोण्मध्यमैकवचनस्य तिङ्ङतिङइतिनिघातेएकादेशउदात्तेनोदात्तइत्येकारउदात्तः एहीत्येतत्पदयुक्तंमायासीरित्यत्रमायेत्यक्षरद्वयंयेषांतेएहिमायासः पूर्वपदप्रकृतिस्वरः । अद्रुहः

१ नि० ५. ५. ।

दुहजिघांसायां संपदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। मेधं मेधृसङ्गमे च मेध्यते देवैः संगम्यते इति मेधं हविः कर्मणि घञ् ञित्वादाद्युदात्तः। जुषन्त सेवन्तामित्यर्थे छन्दसि लुङ्लङ्लिट इति धातुसंबन्धे लङ् यत उक्तरूपा विश्वेदेवाः अतो जुषन्तेति दुहादिधात्वर्थैः संबन्धात् बहुलं छन्दस्यमाङ्योगेपीत्यडागमाभावः। वह्नयः निरित्यनुवृत्तौ वहिश्रीत्यादिना विहितस्य निप्रत्ययस्य नित्त्वादाद्युदात्तत्वम्॥ ९॥

सारस्वतेष्टौ चैषा प्रथमासा ऽन्वारंभणीयेष्टौ सरस्वत्याः पुरो ऽनुवाक्या तथा दर्शपूर्णमासावारप्स्यमान इत्यस्मिन् खण्डे—पावका नः सरस्वती पावीरवीति सूत्रितम्।

तामेतामृचमाह—

पा॒व॒का नः॒ सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती। य॒ज्ञं व॑ष्टु धि॒याव॑सुः॥ १०॥

पा॒व॒का। नः॒। सर॑स्वती। वाजे॑भिः। वा॒जिनी॑ऽवती। य॒ज्ञम्। व॒ष्टु॒। धि॒याऽव॑सुः॥ १०॥

सरस्वती देवी वाजेभिः हविर्लक्षणैरन्नैर्निमित्तभूतैः यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैर्नोऽस्मदीयं यज्ञं वष्टु कामयताम् कामयित्वा च निर्वहत्वित्यर्थः तथा चारण्यकाण्डे श्रुत्यैव व्याख्यातम्—यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाहेति। कीदृशी सरस्वती पावका शोधयित्री वाजिनीवती अन्नवत्क्रियावती धियावसुः कर्मप्राप्यधननिमित्तभूता वाग्देवतायास्तथाविधधननिमित्तत्वमारण्यककाण्डे श्रुत्या व्याख्यातम्—यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुरिति। श्येनः सोम इत्यादिषु पंचत्रिंशत्संख्याकेषु देवताविशेषवाचिषु पदेषु सरमा सरस्वतीति पठितम्। एतामृचं यास्क एवं व्याचष्टे—पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुरिति। पवनं पावः शुद्धिः पावं कायतीति पावका कै गै शब्दे आतोऽनुपसर्गे कः कदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम् यद्वा पुनातीति पचाद्यच् णिच् यत्र बुडित्युक्ते प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इतीत्वस्याभावोऽन्तोदात्तत्वं च छान्दसं द्रष्टव्यम्। सरःशब्दः सर्तेरसुन्नन्तत्वादाद्युदात्तः मतुब्ङीपोः पित्त्वादनुदात्तत्वम्। वाजेभिः वाजशब्दो वृषादित्वादाद्युदात्तः सप्रवृन्दत्वादाकृतिगणः वाजोऽन्नमस्त्विति वाजिन्यः क्रियाः अत इनिठनाविति इनिप्रत्ययः ताः क्रिया यस्याः सन्ति सा सरस्वती वाजिनीवती छन्दसीर इति मतुपो वत्वं मतुब्ङीपोः पित्त्वेनानुदात्तत्वात् इनेः प्रत्ययाद्युदात्तत्वमेवशिष्यते। यज्ञं यजयाचेत्यादिना नङ् प्रत्ययस्वरेणान्तोदात्तः। वष्टु वश कान्तौ कान्तिरभिलाषः अदिप्रभृतिभ्यः शप इति शपो लुक् निघातः धि-

1 नि० ११.२६.। 2 वस्तुतस्तु इत्वं नु पावकादीनां छन्दसीति निषिद्धम्।

याकर्मणावसुयस्याःसकाशाद्भवतिसाधियावसुः सावेकाचइतिविभक्तिरुदात्ता बहुव्रीहौप्रकृत्यापूर्वपदमितिविभक्तिस्वरएवशिष्यते छान्दसस्तृतीयायाअलुक् ॥ १० ॥

द्वितीयामृचमाह—

चोदयित्रीसूनृतानांचेतन्तीसुमतीनाम् । यज्ञंदधेसरस्वती ॥११॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ॥ ११ ॥

यासरस्वतीसेयमिमंयज्ञंदधेधारितवती कीदृशीसूनृतानांप्रियाणांसत्यवाक्यानांचोदयित्रीप्रेरयित्री सुमतीनांशोभनबुद्धियुक्तानामनुष्ठातॄणांचेतन्ती तदीयमनुष्ठेयंज्ञापयन्ती ॥ चोदयित्री चुदप्रेरणेण्यन्तात्तृच् चित्वादन्तोदात्तः ऋन्नेभ्योङीबितिङीप् तस्योदात्तयणोहल्पूर्वादित्युदात्तत्वम्। सूनृतानां ऊनपरिहाणेइत्यतः क्विप्चेतिक्विपि सुतरामूनयत्यप्रियमितिसूनृइतिप्रियमुच्यते तच्चतदृतंसत्यंचेतिसूनृतम् परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । चेतन्ती चिती संज्ञाने अत्रशपोङीपश्चपित्वादनुदात्तत्वम् शतुश्चाउपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वम् धात्वन्तस्वरएवशिष्यते ।सुमतिशब्दस्यमतुपिहस्वत्वान्नामन्यतरस्यामितिविभक्तेरुदात्तत्वम्॥११॥

तृतीयामृचमाह—

महोअर्णःसरस्वतीप्रचेतयतिकेतुना । धियोविश्वाविराजति ॥ १२ ॥

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना । धियः । विश्वाः । वि । राजति ॥ १२ ॥ ६ ॥

द्विविधाहिसरस्वतीविग्रहवद्देवतानदीरूपाच तत्रपूर्वाभ्यामृग्भ्यांविग्रहवतीप्रतिपादिता अनयातुनदीरूपाप्रतिपाद्यते तादृशीसरस्वतीकेतुनाकर्मणाप्रवाहरूपेणमहोअर्णः प्रभूतमुदकंप्रचेतयतिप्रकर्षेणज्ञापयति किञ्च स्वकीयेनदेवतारूपेणविश्वाधियः सर्वाण्यनुष्ठातृप्रज्ञानानि विराजतिविशेषेणदीपयति अनुष्ठानविषयाबुद्धीः सर्वदोत्पादयतीत्यर्थः सरस्वत्याद्विरूपत्वंयास्कोदर्शयति—तत्रसरस्वतीत्येतस्यनदीवद्देवतावच्चनिगमाभवन्तीति[1] । एकशतसंख्याकेषूदकनामस्वर्णःक्षोदइतिपठितम् । एतामृचंयास्कोव्याचष्टे—महदर्णःसरस्वतीप्रचेतयतिप्रज्ञापयति

१ नि० २. २३.

केतुनाकर्मणाप्रज्ञयावेमानिचसर्वाणिप्रज्ञानान्यभिविराजतीतिं ॥ महोअर्णः महदितितकारस्य व्यत्ययेनसकारः तस्यरुत्वोत्वगुणाः प्रातिपदिकस्वरेणान्तोदात्तः एङःपदान्तादतीतिपूर्वरूपेप्राप्तेप्रकृत्यान्तःपादमव्यपरेइतिप्रकृतिभावः अचीत्यर्णः उदकेनुट्चेत्यसुन्प्रत्ययोनुडागमश्च । केतुना प्रातिपदिकस्वरेणान्तोदात्तः । विश्वाः विश्वशब्दःक्वन्प्रत्ययान्तआद्युदात्तः ॥ १२ ॥

इतिप्रथमस्यप्रथमेषष्ठोवर्गः ॥ ६ ॥

इतिप्रथमेमण्डलेप्रथमोऽनुवाकः ॥ १ ॥

द्वितीयानुवाकेचत्वारिंसूक्तानि तेषुसुरूपेत्यादिकंदशर्चंसूक्तम् सुरूपकृत्नुंदशेत्यनुक्रान्तत्वात् पूर्ववन्मधुच्छन्दसोगायत्रस्यचानुवृत्तेः तेएवऋषिच्छन्दसी इन्द्रंपृच्छेतिचतुर्थ्यांघ्रचिलिङ्गदर्शनादिन्द्रोदेवता अभिप्लवषडहेब्राह्मणाच्छंसिनःप्रातःसवनेस्तोमवृद्धावावापार्थानि सुरूपकृत्नुमूतयेइत्यादीनिषट्सूक्तानि सूत्रितंचअभिप्लवषष्ठ्याहानीतिखण्डे—ब्राह्मणाच्छंसिनःसुरूपकृत्नुमूतयइतिषट्सूक्तानीति आद्यानित्रीणिसूक्तानिमहाव्रतेनिष्केवल्येऔष्णिहतृचाशीतौशस्तव्यानि उक्तंचशौनकेन—सुरूपकृत्नुमूतयइतित्रीण्येन्द्रसानसिंरयिमितिसूक्तेइति चतुर्विंशेहनिमाध्यन्दिनेसवनेब्राह्मणाच्छंसिनःसुरूपकृत्नुमूतयइतिवैकल्पिकःस्तोत्रियस्तृचः होत्रकाणामितिखण्डेमदेमदेहिनोददिःसुरूपकृत्नुमूतयइतिसूत्रितत्वात् अग्निष्टोमेवैश्वदेवशस्त्रे सुरूपकृत्नुमूतयइतिधाय्या सुरूपकृत्नुमूतयेतक्षत्रयमितिसूत्रितत्वात् ।

तामेतांसूक्तगतांप्रथमामृचमाह—

सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे । जुहूमसिद्यविद्यवि ॥ १ ॥

सुरूपकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ १ ॥

सुरूपकृत्नुंशोभनरूपोपेतस्यकर्मणःकर्तारमिन्द्रंऊतयेऽस्मदक्षार्थं द्यविद्यविप्रतिदिनं जुहूमसि आह्वयामः आह्वानेदृष्टान्तः—गोदुहेगोधुगर्थंसुदुघामिव सुष्ठुदोग्धींगामिव यथालोके गोर्दोग्धातदर्थं तस्याभिमुख्येनदोहनीयांगामाह्वयतितद्वत् वस्वोरित्यादिपुद्वादशस्वहर्नामसु द्यविद्यवीतिपठितम् ॥ सुरूपकृत्नुं करोतीतिकृत्नुःकृहनिभ्यांक्त्नुःकित्वाद्गुणाभावः सकारोपजनश्छान्दसः समासान्तोदात्तः । ऊतये अवतेर्धातोरुदात्तइत्यनुवृत्तावूतियूतिजूतिसातिहेतिकीर्तयश्चेतिक्तिन्नुदात्तोनिपातितः । सुदुघाम् इवइतिसुदुघा दुहःकप्घश्चेतिकप्प्रत्ययोहकारस्य

नि० ११ २७ ।

चघकारः कित्त्वाद्गुणाभावः कपःपित्त्वादनुदात्तत्वेधातुस्वरेणउकारउदात्तः सुशब्देनगतिसमासेकृदुत्तरपदप्रकृतिस्वरत्वेनसएवस्वरः इवेनविभक्त्यलोपःपूर्वपदप्रकृतिस्वरत्वंचेतीवसमासेसएव। गांदोग्धीतिगोधुक् सत्सूद्विषेत्यादिनाक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम्। जुहूमसि ह्वयतेर्लट्युत्तमपुरुषबहुवचनेबहुलंछन्दसीतिशपःश्लुः अभ्यस्तस्यचेत्यभ्यस्तकारणस्यह्वयतेः प्रागेवद्विर्वचनात्संप्रसारणंसंप्रसारणाच्चेतिपरपूर्वत्वं हलइतिदीर्घः ततःश्लाविति द्विर्वचनम् अभ्यासस्यह्रस्वः श्चुत्वजश्त्वे इदन्तोमसिरितीडिकारागमः प्रत्ययस्वरेणमकारस्यउदात्तत्वम्। द्यविद्यवि द्योशब्दःप्रातिपदिकस्वरेणान्तोदात्तः नित्यवीप्सयोरितिद्विर्भावः तस्यपरमाम्रेडितं अनुदात्तंचेतिद्वितीयस्यानुदात्तत्वम्॥ १ ॥

द्वितीयामृचमाह—

उप॑नः॒सव॑ना॒ग॑हि॒सोम॑स्यसोमपाःपिब। गो॒दाइद्रे॒वतो॒मदः॑॥ २ ॥

उप॑ । नः॒ । सव॑ना । आ । ग॒हि॒ । सोम॑स्य । सो॒म॒ऽपाः॒ । पि॒ब॒ ।
गो॒ऽदाः । इत् । रे॒वतः॑ । मदः॑ ॥ २ ॥

हेसोमपाः सोमस्यपातरिन्द्रसोमंपातुंनोऽस्मदीयानिसवना त्रीणिसवनानिप्रत्युपसमीपे आगहिआगच्छ आगत्यचसोमस्यसोमंपिब रेवतोधनवतस्तवमदोहर्षोगोदाइत् गोप्रदएव त्वयिहृष्टेसत्यस्माभिर्गावोलभ्यन्तइत्यर्थः॥उप निपातत्वादाद्युदात्तः।सवना सूयतेसोमएष्विति सवनानि सुपोडादेशःटिलोपश्च लितीतिप्रत्ययात्पूर्वस्याकारस्योदात्तत्वम्। गहि गमेर्लोट् तस्यसेर्हिः बहुलंछन्दसीतिशपोलुक् हेर्ङित्त्वादनुदात्तोपदेशेत्यादिनामकारलोपः अंतोहेरित्याभाच्छास्त्रीयेलुकिकर्तव्ये असिद्धवदत्राभादित्याभाच्छास्त्रीयोमकारलोपोऽसिद्धवद्भवति। सोमपाः आमन्त्रितस्यचेतिनिघातः तस्याविद्यमानवत्त्वेऽपिपूर्वांपेक्षयातिङ्ङतिङइतिपिबेत्यस्यनिघातः नचपूर्वस्यापिपराङ्गवद्भावेनाविद्यमानवत्त्वम् असामर्थ्येनतदभावात्। गांददातीतिगोदाः क्विप्चेतिक्विपंपरमपिसरूपंबाधित्वा प्रतिपदविधित्वादातोमनिन्क्वनिब्वनिपश्चेतिविच् क्विपिहिघुमास्थेत्यादिनाधातोराकारस्यईत्वंस्यात्। रेवान् रयिर्धनमस्यास्तीतिमतुप् ह्रस्वनुड्भ्यांमतुबितिमतुबुदात्तः छन्दसीरइतिवत्वम् रयेर्मतौबहुलंछन्दसीतिसंप्रसारणपरपूर्वत्वेगुणश्च। मदः मदोनुपसर्गेइत्यप् पित्त्वादनुदात्तः॥ २ ॥

तृतीयामृचमाह—

अथा॑तेअन्त॑मानां॒वि॒द्याम॑सुमती॒नाम्। मानो॒अति॑ख्य॒आग॑हि॥ ३ ॥

अर्थ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः ।
अति । ख्यः । आ । गहि ॥ ३ ॥

अथसोमपानानन्तरं हेइन्द्र तेतवान्तमानांअन्तिकतमानामतिशयेनसमीपवर्तिनांसुमतीनांशोभनमतियुक्तानांपुरुषाणांमध्येस्थित्वाविद्याम वयंत्वांजानीयाम यद्वा सुमतीनांशोभनबुद्धीनांकर्मानुष्ठानविषयाणांलाभार्थमित्यध्याहारः बुद्धिलाभायत्वांस्मरेमेत्यर्थः त्वमपिनोतिमाख्यः अस्मानतिक्रम्यान्येषांत्वत्स्वरूपंमाकथय किंत्वागहि अस्मानेवागच्छ ॥ अथेतिनिपातआद्युदात्तः निपातस्यचेतिदीर्घत्वम् । अन्तमानां अतिशयेनान्तिकाइत्यतिशायिनेतमप् तमेतादेश्चेतिवादिलोपः अन्तोऽस्यास्तीत्यन्तिकःसमीपः अतइनिठनावितिठन् नित्त्वादाद्युदात्तः दूरोत्कर्षस्यस्वसानंनास्ति सामीप्योत्कर्षस्यपुनर्योयस्यसमीपःसएवतस्यान्तइत्यन्तवत्त्वात्समीपमन्तिकमुच्यते । विद्याम वेत्तेर्लिङि यासुट्परस्मैपदेषूदात्तोङिच्चेतियासुट्उदात्तः पादादित्वाचिङ्गतिङइतिननिघातः । सुमतीनां मतिशब्देक्तिन्नन्तेपि मन्त्रेवृषेषपचमनविदभूवीराउदात्तइतीकारउदात्तः शोभनामतिर्येषांति सुमतयइतिबहुव्रीहौपूर्वपदप्रकृतिस्वरापवादोनञ्सुभ्यामित्युत्तरपदान्तोदात्तः शोभनामतयःसुमतयइतिकर्मधारयेप्यव्ययपूर्वपदप्रकृतिस्वरापवादः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेव अतोमतुपिहस्वादन्तोदात्ताच्चसुमतिशब्दात्परस्यनामोनामन्यतरस्यामित्युदात्तत्वम् । ख्यः ख्याप्रकथनेइत्यस्यलुङिसिपि अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः इतश्चेतीकारलोपोरुत्वविसर्गौ नमाङ्योगेइत्यडभावः । गहि गमेर्बहुलंछन्दसीतिशपोलुकिहेर्ङित्त्वादनुदात्तोपदेशेतिमकारलोपस्यासिद्धवदत्राभादत्यसिद्धत्वादतोहेरितिलुग्नभवति ॥ ३ ॥

चतुर्थीमृचमाह—

परेहिविग्रमस्तृतमिन्द्रंपृच्छाविपश्चितम् । यस्तेसखिभ्यआवरम् ॥ ४ ॥

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ।
यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥

अत्रयजमानंप्रतिहोतावृते हेयजमान त्वंइन्द्रंपरेहि इन्द्रस्यसमीपेगच्छ गत्वाचावपश्चितमबाधिनं होतारंमांपृच्छ असौहोताअस्म्यक्स्तुतवान्नवेत्येवंमांप्रश्नंकुरु यइन्द्रस्तेतवयजमानस्यमित्रायकन्तिम्पोवरंश्रेष्ठंधनपुत्रादिकमासमन्तात्प्रयच्छतीतिशेषः तादृशमिन्द्रमितिपूर्वत्रान्वयः

पुनरपिकीदृशं विप्रंमेधाविनं अस्तृतंअहिंसितं विपइत्यादिपुचतुर्विंशतिसंख्याकेपुमेधाविनामसु विप्रविपश्चिच्छन्दौपठितौ ॥ विप्रं वृषादित्वादाद्युदात्तः । अस्तृतं अव्ययपूर्वपदप्रकृतिस्वरत्वम् । इन्द्रशब्दे ऋज्रेन्द्राग्रेत्यादिनारन् नित्त्वादाद्युदात्तः । सखिभ्यः समानेख्यश्चोदात्तइतिसमानेउपपदेख्यातेरिण् डिदित्यनुवृत्तेः तस्यडित्त्वाट्टिलोपश्च तत्सन्नियोगेनयलोपः उपपदस्योदात्तत्वम् समानस्यछन्दस्यमूर्धप्रभृत्युदर्केष्वितिसभावः अतःसखिशब्दआद्युदात्तः । व्रियतेइतिवरः ग्रहवृदृनिश्चिगमश्चेत्यप् तस्यपित्त्वाद्धातुस्वरएव ॥ ४ ॥

पञ्चमीमृचमाह–

उ॒त ब्रु॑वन्तु नो॒ निदो॒ निर॒न्यत॑श्चिदारत । दधा॑ना॒ इन्द्र॒ इद्दुवः॑ ॥ ५ ॥७॥

उ॒त । ब्रु॒व॒न्तु॒ । नः॒ । निदः॑ । निः । अ॒न्यतः॑ । चि॒त् । आ॒र॒त॒ ।
दधा॑नाः । इन्द्रे॑ । इत् । दुवः॑ । ५ ॥ ७ ॥

नोऽस्माकंसंबन्धिनः ऋत्विजइतिशेषः तेब्रुवन्तुइन्द्रंस्तुवन्तु उतअपिच हेनिदः निन्दितारः पुरुषाः निरारतइतोदेशान्निर्गच्छत अन्यतश्चित् अन्यस्मादपिदेशान्निर्गच्छत कीदृशाः ऋत्विजः इन्द्रेदुवः परिचर्यांदधानाःकुर्वाणाः इच्छब्दोवधारणे सर्वदापरिचर्यांकुर्वन्तएवतिष्ठन्त्वित्यर्थः ॥ निन्दन्तीतिनिदः णिदिकुत्सायांक्विप् नुमभावश्छान्दसः सुपोऽनुदात्तत्वाद्धातुस्वरः आमन्त्रितत्वेपिवाक्यान्तरत्वेनस्ववाक्यगतपदात्परत्वान्ननिघातइत्याद्युदात्तत्वमेव । अन्यतः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । चिदित्यपिशब्दार्थे वेनकेवलमितः इतोनिर्गत्यान्यतोऽपिनिर्गच्छतेतिगम्यते सएषधात्वर्थयोःसंबन्धआरतेतिलुङाद्योत्यते सहिधातुसंबन्धाधिकारेविधीयते । आरत अर्तेश्छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् मध्यमबहुवचनस्यतादेशः सर्तिशास्त्यर्तिभ्यश्चेतिच्लेरङादेशः ऋदृशोङिगुणइतिगुणः आडागमः । दधानाः शानचश्चित्त्वात्प्राप्तमन्तोदात्तत्वंबाधित्वा परत्वादभ्यस्तानामादिरित्याद्युदात्तत्वम् । दुवः नब्विषयस्यानिसन्तस्येत्याद्युदात्तः ॥ ५ ॥

॥ इतिप्रथमस्यप्रथमेसप्तमोवर्गः ॥ ७ ॥

सुरूपेतिसूक्तेषष्ठीमृचमाह–

उ॒त नः॑ सु॒भगाँ॑ अ॒रिर्वो॒चेयु॑र्दस्म कृ॒ष्टयः॑ । स्यामेदिन्द्र॑स्य॒ शर्म॑णि ॥ ६ ॥

१नव्योयलोपइतिपूर्वसूत्रादनुवृत्तिः ।

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः ।
अति । ख्यः । आ । गहि ॥ ३ ॥

अथसोमपानानन्तरं हेइन्द्र तेतवान्तमानांअन्तिकतमानामतिशयेनसमीपवर्तिनांसुमतीनांशोभनमतियुक्तानांपुरुषाणांमध्येस्थित्वाविद्याम वयंत्वांजानीयाम यद्वा सुमतीनांशोभनबुद्धीनांकर्मानुष्ठानविषयाणांलाभार्थमित्यध्याहारः बुद्धिलाभायत्वांस्मरेमेत्यर्थः त्वमपिनोतिमाख्यः अस्मानतिक्रम्यान्येषांत्वत्स्वरूपंमाकथय किंत्वागहि अस्मानेवागच्छ ॥ अथेतिनिपातआद्युदात्तः निपातस्यचेतिदीर्घत्वम् । अन्तमानां अतिशयेनान्तिकाइत्यतिशायिनेतमप् तमेतादेश्चेतितादिलोपः अन्तोऽस्यास्तीत्यन्तिकःसमीपः अतइनिठनाविति ठन् नित्त्वादाद्युदात्तः दूरोत्कर्षस्यह्यवसानंनास्ति सामीप्योत्कर्षस्यपुनर्योयस्यसमीपःसएवतस्यान्तइत्यन्तवत्त्वात्समीपमन्तिकमुच्यते । विद्याम वेत्तेर्लिङि यासुट्परस्मैपदेषूदात्तोङिच्चेतियासुट्उदात्तः पादादित्वात्तिङ्ङतिङइतिननिघातः । सुमतीनां मतिशब्देक्तिन्नन्तेपि मन्त्रेवृषेषपचमनविदभूवीराउदात्तइतीकारउदात्तः शोभनामतिर्येषांते सुमतयइतिबहुव्रीहौपूर्वपदप्रकृतिस्वरापवादोनञ्सुभ्यामितिउत्तरपदान्तोदात्तः शोभनामतयःसुमतयइतिकर्मधारयेप्यव्ययपूर्वपदप्रकृतिस्वरापवादः छदुत्तरपदप्रकृतिस्वरेणान्तोदात्ततैव अतोमतुपिह्रस्वादन्तोदात्ताच्चसुमतिशब्दात्परस्यनामोनामन्यतरस्यामित्युदात्तत्वम् । ख्यः ख्याप्रकथनेइत्यस्यलुङिसिपि अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः इतश्चेतीकारलोपोरुत्वविसर्गौ नमाङ्योगेइत्यडभावः । गहि गमेर्बहुलंछन्दसीतिशपोलुकिहेर्ङित्त्वादनुदात्तोपदेशेतिमकारलोपस्यासिद्धवदत्राभादित्यसिद्धत्वादतोहेरितिलुग्नभवति ॥ ३ ॥

चतुर्थीमृचमाह—

परेहिविग्रमस्तृतमिन्द्रंपृच्छाविपश्चितम् । यस्तेसखिभ्यआवरम् ॥४॥

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ।
यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥

अत्रयजमानंप्रतिहोतानूते हेयजमान त्वंइन्द्रंपरेहि इन्द्रस्यसमीपेगच्छ गत्वाचावपश्चितमिधाविनं होतारंमांपृच्छ असौहोतासम्यक्स्तुतवान्नवेत्येवंप्रश्नंकुरु यइन्द्रस्तेतवयजमानस्यसखिरूपकत्विग्भ्योवरंश्रेष्ठंधनपुत्रादिकमासमन्तात्प्रयच्छतीतिशेषः तादृशमिन्द्रमितिपूर्वेणान्वयः

पुनरपिकीदृशं विप्रंमेधाविनं अस्तृतंअहिंसितं विप्रइत्यादिषुचतुर्विंशतिसंख्याकेषुमेधाविनामसु विप्रविपश्चिच्छन्दौपठितौ ॥ विप्रं वृषादित्वादाद्युदात्तः । अस्तृतं अव्ययपूर्वपदप्रकृतिस्वरत्वम्। इन्द्रशब्दे ऋज्रेन्द्राग्रेत्यादिनारन् निच्वादाद्युदात्तः । सखिभ्यः समानेख्यश्चोदात्तइतिसमानेउपपदेख्यातेरिण् डिदित्यनुवृत्तेः तस्यडित्वाट्टिलोपश्च तत्सन्नियोगेनयलोपः उपपदस्योदात्तत्वम् समानस्यछन्दस्यमूर्धप्रभृत्युदर्केष्विति सभावः अतःसखिशब्दआद्युदात्तः । वियतेइतिवरः ग्रहवृदनिश्चिगमश्चेत्यप् तस्यपित्त्वाद्धातुस्वरएव ॥ ४ ॥

पञ्चमीमृचमाह—

उतब्रु॑वन्तु नो॒ निदो॒ निर॒न्यत॑श्चिदारत । दधा॑ना॒ इन्द्र॒ इद्दुवः॑ ॥ ५ ॥७॥

उ॒त । ब्रु॒वन्तु । नः॒ । निदः॑ । निः । अ॒न्यतः॑ । चि॒त् । आ॒र॒त । दधा॑नाः । इन्द्रे॑ । इत् । दुवः॑ । ५ ॥ ७ ॥

नोऽस्माकंसंबन्धिनः ऋत्विजइतिशेषः तेब्रुवन्तुइन्द्रंस्तुवन्तु उतअपिच हेनिदः निन्दितारः पुरुषाः निरारतइतोदेशान्निर्गच्छत अन्यतश्चित् अन्यस्मादपिदेशान्निर्गच्छत कीदृशाः ऋत्विजः इन्द्रेदुवः परिचर्यांदधानाःकुर्वाणाः इच्छब्दोवधारणे सर्वदापरिचर्यांकुर्वन्तएवतिष्ठन्त्वित्यर्थः ॥ निन्दन्तीतिनिदः णिदिकुत्सायांकिप् नुमभावश्छान्दसः सुपोऽनुदात्तत्वाद्धातुस्वरः आमन्त्रितत्वेपिवाक्यान्तरत्वेनस्ववाक्यगतपदात्परत्वाच्चनिघातइत्याद्युदात्तत्वमेव । अन्यतः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम्। चिदित्यपिशब्दार्थे तेननकेवलमितः इतोनिर्गत्यान्यतोऽपिनिर्गच्छतेतिगम्यते सएषधात्वर्थयोःसंबन्धआरतेतिलुङद्योत्यते सहिधातुसंबन्धाधिकारेविधीयते । आरत अर्तेश्छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् मध्यमबहुवचनस्यतादेशः सर्तिशास्त्यर्तिभ्यश्चेतिच्लेरङादेशः ऋदृशोऽङिगुणइतिगुणः आडागमः । दधानाः शानचश्चित्वात्प्राप्तमन्तोदात्तत्वंबाधित्वा परत्वादभ्यस्तानामादिरित्याद्युदात्तत्वम् । दुवः नब्विषयस्यानिसन्तस्येत्याद्युदात्तः ॥ ५ ॥

॥ इतिप्रथमस्यप्रथमेसप्तमोवर्गः ॥ ७ ॥

सुरूपेतिसूक्तेषष्ठीमृचमाह—

उ॒त नः॑ सु॒भगाँ॑ अ॒रिर्वो॒चेयु॑र्दस्म कृ॒ष्टयः॑ । स्यामेदिन्द्र॑स्य॒ शर्म॑णि ॥ ६ ॥

१नल्योपलोपइतिपूर्वसूत्रादनुवृत्तिः ।

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः ।
स्याम । इत् । इन्द्रस्य । शर्मणि ॥ ६ ॥

हेदस्मशत्रूणामुपक्षयितरिन्द्र त्वदनुग्रहाद्अरिरुतशत्रवोऽपिनोऽस्मान्सुभगान् शोभनधनोपेतान्वोचेयुः उच्यासुः कृष्टयोमनुष्याः अस्मन्मित्रभूतावदन्तीतिकिमुवक्तव्यमितिशेषः ततोधनसंपन्नावयमिन्द्रस्यशर्मणि इन्द्रप्रसादलब्धेसुखेस्यामेव भवेमैव मघमित्यादिष्वष्टाविंशतिसंख्याकेषुधननामसु रयिः क्षत्रं भगइतिपठितम् मनुष्याइत्यादिषुपञ्चविंशतिसंख्याकेषुमनुष्यनामसुकृष्टयइतिपठितम् ॥ उत एवादीनामन्तइत्यन्तोदात्तः । सुभगान् भगशब्दस्यकत्वादिषुपाठात् नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंबाधित्वाकत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम् संहितायांदीर्घादटिसमानपादेइतिनकारस्यरुत्वम् भोभगोइतियत्वं लोपःशाकल्यस्येतियलोपः तस्यासिद्धत्वान्नपुनःसन्धिकार्यम् आतोटिनित्यमित्याकारस्य सानुनासिकता । अरिः वचनव्यत्ययः अचइरितिइप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः । वोचेयुः उच्यासुः वचपरिभाषणेइत्यस्मादाशीर्लिङि झेर्जुसादेशोलिङ्याशिष्यङित्यङ्प्रत्यये वचउमित्युमागमः गुणः किदाशिषीतियासुट् छन्दस्युभयथेतिलिङादेशस्यसार्वधातुकत्वात् लिङःसलोपोऽनन्त्यस्येतिसकारलोपः अतोयेयः आद्गुणः अङोऽदुपदेशत्वाल्लसार्वधातुकस्वरेणलिङोऽनुदात्तत्वम् अङ्प्रत्ययस्वरएवशिष्यते तेनसह इकारस्यगुणःएकादेशउदात्तेनोदात्तइत्याद्युदात्तः । दस्म दसुउपक्षयेइत्यस्मादन्तर्भावितण्यर्थादिषियुधीन्धिदसिश्याधूसूभ्योमक् पदात्परत्वादामन्त्रितनिघातः । कृष्टयः क्तिच्क्तौचसंज्ञायामितिक्तिचिमनुष्यनामत्वाच्चितइत्यन्तोदात्तः । स्याम असभुवि श्नसोरल्लोपः यासुडउदात्तत्वम् पादादित्वादनिघातः । शर्मणि शॄहिंसायां हिनस्तिदुःखमितिशर्म अन्येभ्योऽपिदृश्यन्तेइतिमनिन् नेड्वशिकृतीतीट्प्रतिषेधःनित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

एमाशुमाशवेभरयज्ञश्रियंनृमादनम् । पतयन्मन्दयत्सखम् ॥ ७ ॥

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् ।
पतयत् । मन्दयत्ऽसखम् ॥ ७ ॥

ईमितिनिपातइदंशब्दार्थेवर्तते हेयजमान आशवेकृत्स्नसोमयागव्यापायेन्द्रायईमाभरइमंसोममाहर कीदृशंसोमं आशुं सवनत्रयव्यापिनम् यज्ञश्रियंयज्ञस्यसंपद्रूपं नृमादनं नृणामृत्वि-

ग्यजमानानांहर्षहेतुं पतयत् पतयन्तम् कर्मणिप्राप्नुवन्तं मन्दयत्सखं यइन्द्रोमन्दयति यजमाना-न्हर्षयति तस्मिन्निन्द्रेसखिभूतोऽयंसोमःतत्रीतिहेतुत्वात् तृप्तिहेतुत्वाद्वा ॥ आशुं कृवापाजिमि-स्वदिसाध्यशूभ्यउणितिउण् प्रत्ययस्वरः । आशवे पूर्ववत् । यज्ञश्रियंसमासस्येत्यन्तोदात्तः । माद्यन्तेअनेनेतिमादनः करणाधिकरणयोश्चेतिल्युट् तस्यलित्त्वात्पूर्वआकारउदात्तः गतिका-रकोपपदात्कृदितिसएवशिष्यते । पतयत् पतेरदन्तस्यचौरादिकोणिच् अतोलोपः तस्यस्था-निवत्त्वादुपधावृद्ध्यभावः लटःशत्रादेशः तस्यछन्दस्युभयथेत्यार्धधातुकत्वेनशबभावाददु-पदेशादितिनिघाताभावेनप्रत्ययाद्युदात्तत्वमेवभवति आर्धधातुकत्वेऽपिसर्वेविधयश्छन्दसिवि-कल्प्यन्तेइतिणेरनिटीतिणिलोपाभावः सुपांसुलुगित्यमोलुक् नलुमतेतिप्रत्ययलक्षणनिषेधादु-गिदचामितिनुम् । एवं मन्दयच्छब्दोऽन्तोदात्तः मन्दयतीन्द्रेसखा सप्तमीतियोगविभागात्स-मासः तत्पुरुषेतुल्यार्थेतिसप्तमी पूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

अस्यपीत्वाशतक्रतोघनोवृत्राणामभवः । प्रावोवाजेषुवाजिनम् ॥८॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् ।
अभवः । प्र । आवः । वाजेषु । वाजिनम् ॥ ८ ॥

हे शतक्रतो बहुकर्मयुक्तेन्द्र त्वमस्यसोमस्यसंबन्धिनमंशंपीत्वा वृत्राणांवृत्रनामकासुर-प्रमुखानांशत्रूणांघनोभवः हन्ताभूः ततोवाजेषुसङ्ग्रामेषुवाजिनंसङ्ग्रामवन्तं स्वभक्तंप्रावः प्रकर्षे-णरक्षितवानसि ॥ अस्येतीदम्शब्देनप्रयोगसमयेपुरोदेशस्थःसोमोनिर्दिश्यते नतुपूर्वंप्रकृतःसोमः परामृश्यते अतोऽनन्वादेशत्वात्रेदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावित्यशादेशः अतोनसर्वा-नुदात्तत्वम् किन्तु त्यदाद्यत्वेहलिलोपे अकारःप्रातिपदिकस्वरेणोदात्तइत्यन्तोदात्तः इत्यन्तोदात्ता-दित्यनुवृत्तावूडिदंपदाद्यप्पुम्रैद्युभ्यइतिविभक्तिरुदात्ता । पीत्वा पिबतेःक्त्वाप्रत्यये घुमास्थादिना ईत्वम् प्रत्ययस्वरेणान्तोदात्तःअसामर्थ्यान्नपरामन्त्रिताङ्गवद्भावः । घनः मूर्तौघनइति हन्तेर्धा-तोःकाठिन्येअप्प्रत्ययः तदस्यास्तीत्यर्थेआदित्वादजन्तः चित्त्वादन्तोदात्तः । वाजेषु वृषादि-त्वादाद्युदात्तः । वाजिनं इनिप्रत्ययस्वरः ॥ ८ ॥

नवमीमृचमाह—

तंत्वावाजेषुवाजिनंवाजयामःशतक्रतो । धनानामिन्द्रसातये ॥ ९ ॥

तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति
शतऽक्रतो । धनानाम् । इन्द्र । सातये ॥ ९ ॥

हेशतक्रतो बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्तेन्द्र धनानांसातयेसंभजनार्थं वाजेषुयुद्धेषु वाजिनंबलवन्तंत्वा पूर्वमन्त्रोक्तगुणयुक्तंत्वां वाजयामःअन्नवन्तंकुर्मः रणइत्यादिषुषट्चत्वारिंशत्सु संग्रामनामसु पौंस्येमहाधनेवाजेअज्मन्निति पठितम् अष्टाविंशतिसंख्याकेष्वन्ननामसु अन्धःवाजःपाजइतिपठितम् उरुतुवीत्यादिषुद्वादशसुबहुनामसु शतंसहस्रमितिपठितम् अपःअप्नइत्यादिषु-द्विंशतिसंख्याकेषुकर्मनामसु शक्मक्रतुरितिपठितम् केतःकेतुरित्यादिषुएकादशसुप्रज्ञानामसु क्रतुःअसुरितिपठितम् ॥ त्वा अनुदात्तंसर्वमित्यनुवृत्तौत्वामौद्वितीयायाइतित्वादेशः । वाजेषु वजव्रजगतौ वाजयतिगमयतिशरीरनिर्वाहमनेनेतिवाजोबलमन्नंवा ण्यन्तात्करणेघञ् तत्रञ्नित्स्वरस्यापवादे कर्षात्वतइत्यन्तोदात्तत्वेमाप्तेतस्याप्यपवादत्वेन वृषादीनांचेत्याद्युदात्तः । वाजयामः वाजोस्यास्तीतिवाजवान् तंकुर्मइत्यर्थे तत्करोतितदाचष्टेइतिणिच् इष्ठवण्णौप्रातिपदिकस्येतिवत्मिन्परतइष्ठवद्भावाद्विन्मतोर्लुगितिमतुपोलुक् टेरित्यकारलोपः णिचश्चित्त्वादन्तोदात्तत्वम् शपःपित्त्वेनानुदात्तत्वम् लसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वम् पादादित्वात्तिङ्ङतिङइतिननिघातः । शतक्रतो आमन्त्रितनिघातः । धनानां नविषयस्यानिसन्तस्येत्याद्युदात्तः । सातये उदात्तइत्यनुवृत्तौ ऊतियूतिजूतिसातिहेतिकीर्तयश्चेतिक्तिन्नुदात्तः ॥ ९ ॥

दशमीमृचमाह—

योरायोऽवनिर्महान्त्सुपारःसुन्वतःसखा।तस्माइन्द्रायगायत ॥१०॥८॥

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः ॥ सखा ।
तस्मै । इन्द्राय । गायत ॥ १० ॥ ८ ॥

यइन्द्रोरायोधनस्यावनिः रक्षकः स्वामीवा तस्माइन्द्रायगायत हेऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत कीदृशइन्द्रःमहान् गुणैरधिकः सुपारःसुष्ठुकर्मणःपूरयिता सुन्वतोयजमानस्यसखा सखिवत्प्रियः॥ रायः ऊडिदंपदाद्यप्पुम्रैद्युभ्यइतिविभक्तेरुदात्तत्वम् । अवनिः अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिंगनहिंसादानभागवृद्धिषु इत्यस्माद्र्तिसृभृधृधम्यमिपश्यवितृभ्योऽनिरित्यनिःप्रत्ययाद्युदात्तत्वम् । सुपारः पृपालनपूरणयोरित्यस्माण्णिजन्तात्कर्तरीत्यनुवृत्तौपचाद्यच् चितइत्यन्तोदात्तः । सुन्वतः शतुरनुमोनद्यजादीइतिविभक्तिरुदात्ता । सखा समानेख्यश्चोदात्तइतीण्प्रत्ययान्तस्तत्संनियोगेनयलोपःसशब्दस्यचोदात्तः डित्वाट्टिलोपः तस्मै अद्रिरित्यनुवृत्तौ त्यजितनिपजिभ्योडिदिनितनोतेरद्रिप्रत्ययः डित्वाट्टिलोपेप्रत्ययस्वरेणतच्छब्दउदात्तः त्यदाद्यत्वम् एकादेशउदात्तेनोदात्तइत्युदात्तः सावेकाचस्तृतीयादिर्विभक्तिरिति विभक्तेरुदात्तत्वेप्राप्ते नपर्यमेकवचनेअवर्णान्तात्वान्नगोश्वन्सावर्णेतिनिषेधः । इन्द्राय इन्द्रशब्दो-

रन्प्रत्ययान्तोनिपातितःनित्त्वादाद्युदात्तः कर्मणायमभिप्रैतिससंप्रदानमित्यत्रक्रियाग्रहणंकर्तव्य-मितिवचनाद्दानक्रियया प्राप्यत्वात्संप्रदानत्वेनचतुर्थी ॥ १० ॥

॥ इतिप्रथमस्यप्रथमेऽष्टमोवर्गः ॥ ८ ॥

आत्वेतितिदृर्कंदशर्चम् सुरूपकृत्नुंदशेत्यनुवृत्तावातुयुञ्जन्तीत्येवमनुक्रान्तत्वात् ऋषिच्छ-न्दोदेवताविनियोगाः पूर्ववत् विशेषविनियोगस्तु अतिरात्रेतृतीयपर्यायेमैत्रावरुणशस्त्रेस्तोत्रियो-ऽयंतृचः अतिरात्रेपर्यायाणामितिखण्डे—आत्वेतानिषीदतेत्युक्तत्वात् ।

तत्रप्रथमामृचमाह—

आत्वेतानिषीदतेन्द्रमभिप्रगायत । सखायःस्तोमवाहसः ॥ १ ॥

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥ १ ॥

तुशब्दःक्षिप्रार्थोनिपातः द्वाभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः हेसखायऋत्विजः क्षिप्रमस्मिन्कर्मणि इतेतआगच्छतागच्छत आदरार्थोऽभ्यासः आगत्यच निषीदतोपविशत उप-विश्यचेन्द्रमभिप्रगायत सर्वतःप्रकर्षेणस्तुत कीदृशाः सखायः स्तोमवाहसः त्रिवृत्पंचदशैकविं-शादिस्तोमानस्मिन्कर्मणि वहन्तिप्रापयन्ति ॥ आ तु आ निपातत्वादाद्युदात्ताः । इत इणूगतौ द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । नि निपातत्वादाद्युदात्तः। सीदत पाघ्राध्मेत्यादिनासदेःसी-दादेशः सदिरप्रतेरितिसंहितायांषत्वम् । अभि उपसर्गाश्चाभिवर्जमितिवचनात्प्रातिपदिकान्तो-दात्तत्वम् । स्तोमवाहसः अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्योमन्निति स्तौतेर्मन्प्रत्यया-न्तःस्तोमशब्दोनित्त्वादाद्युदात्तः स्तोमंवहन्तीतिस्तोमवाहसः वहिहाधाञ्भ्यश्छन्दसीत्यसुन्प्रत्य-यः तत्र णिदित्यनुवृत्तेरतउपधायाइत्युपधायावृद्धिः कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्तेगतिकारकयोर-पिपूर्वपदप्रकृतिस्वरत्वंचेत्यौणादिकसूत्रात्समासआद्युदात्तः ॥ १ ॥

द्वितीयामृचमाह—

पुरूतमंपुरूणामीशानंवार्याणाम् । इन्द्रंसोमेसचासुते ॥ २ ॥

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥ २ ॥

सखायोऽभिप्रगायतेतिपदद्वयमत्रानुवर्तते हेसखायऋत्विजः यूयंसचा सर्वैःसह यद्वा सचापरस्परसमवायेनसुते अभिषुतेसोमेप्रवृत्तेसति इन्द्रमभिप्रगायत कीदृशमिन्द्रं पुरुतमं पुरून्बहून्छत्रून् तामयतिग्लापयतीतिपुरुतमः पुरूणां बहूनांवार्याणांवरणीयानांधनानांईशानंस्वामिनम् ॥ पुरुतमं तमुग्लानावितिधातोरन्तर्भावितण्यर्थात्पचाद्यच्चित्त्वादन्तोदात्तेऽपिकृदुत्तरपदप्रकृतिस्वरंबाधित्वा परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । पुरूणां पृपालनपूरणयोरित्यस्मात्कुरित्यनुवृत्तौ पृभिदिव्यधिगृधिधृषिदृशिभ्यश्चेति कुप्रत्ययः किच्चाद्गुणनिषेधे उदोष्ठ्यपूर्वस्येत्युकारः उरण्रपरः प्रत्ययस्वरेणान्तोदात्तःपुरुशब्दः अतोमतुपिह्रस्वादन्तोदात्तात्पुरुशब्दात्परस्यनामोनामन्यतरस्यामित्यन्तोदात्तत्वम् । ईशानं ईशऐश्वर्येइतिधातोरनुदात्तेत्त्वात् परस्य शानचोलसार्वधातुकानुदात्तत्वम् । वार्याणां वृङ्संभक्तावित्यस्माद्दहलोर्ण्यत् क्यब्विधौहि वृञएवग्रहणंनवृङः तित्स्वरितमितिप्रत्ययस्वरितंबाधित्वा ईडवंदवृशंसदुहांण्यतइतिण्यदन्तस्याद्युदात्तत्वम् यतोनावइत्यत्रतुण्यतोग्रहणंनभवति तस्यद्व्यनुबन्धकत्वात् एकानुबन्धकग्रहणेनद्व्यनुबन्धकस्येतिनियमात् । सचा षचसमवाये धात्वादेःषःसः संपदादित्वाद्भावे क्विबितिक्विप् तृतीयैकवचनं धातुस्वरेणाद्युदात्तः सर्वेविधयश्छन्दसिविकल्प्यन्तेइतिन्यायेनसावेकाचइतिसूत्रंनप्रवर्तते सचेत्यस्यनिपातत्वपक्षेस्पष्टमाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह–

संघानोयोगआभुवत्सरायेसपुरंध्याम् । गमद्वाजेभिरासनः ॥ ३ ॥

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् । गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

घशब्दोवधारणार्थोनिपातः सर्वैस्तच्छब्दैःसंबध्यते सघ सएवेन्द्रःपूर्वोक्तगुणविशिष्टोनोऽस्माकंयोगेपूर्वमप्राप्तस्यपुरुषार्थस्य संबन्धे आभुवत् आभवतु पुरुषार्थसाधयत्वित्यर्थः सएवरायेधनार्थंआभुवत्आभवतु सएवपुरंध्यांयोषित्याभुवत् यद्वा बहुविधायां बुद्धावाभुवत् पुरन्धिर्बहुधीरितियास्कः । सएववाजेभिर्देयैरन्नैःसहनोऽस्मान्आगमदागच्छतु ॥ घ चादयोऽनुदात्ताइत्यनुदात्तः संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । योगे घञोञ्नित्वादाद्युदात्तत्वम् । भुवत् भूयात् भवतेराशीर्लिङ्परतोलिङ्याशिष्यङित्यङ्प्रत्ययः तस्यङित्त्वेनगुणाभावादुवङादेशः क्लिदाशिषीतियासुणनभवति अनित्यमागमशासनमितिवचनाच्चिङ्तिङ्ङतिनिघातः ऊडिदंपदाद्यप्पुंरैद्युभ्यइतिरायेइत्येतस्याविभक्तेरुदात्तत्वम् । पुरंध्यां पुरन्धिः पु-

१ नि० ६. १३.

रुधीः पृषोदरादित्वादुकारस्यअमादेशः इकारस्यह्रस्वश्च आद्युदात्तप्रकरणेदिवोदासादीनांछन्दस्युपसंख्यानमित्याद्युदात्तत्वं अथवा पुरंशरीरंधीयतेऽस्यामितिकर्मण्यधिकरणेचेतिकिःप्रत्ययः अलुक्छान्दसः नब्विषयस्यानिसन्तस्येतिपुरशब्दआद्युदात्तः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । गमत गमेर्लेटस्तिप् इतश्चलोपःपरस्मैपदेष्वितीकारलोपः बहुलंछन्दसीतिशपोलुक् लेटोडाटावित्यडागमः आगमाअनुदात्ताइतिवस्यानुदात्तत्वेधातुस्वरएवशिष्यते । वाजेभिः वृषादित्वादाद्युदात्तः ॥ ३ ॥

चतुर्थीमृचमाह—

यस्यंसंस्थेनवृण्वतेहरींसमत्सुशत्रवः । तस्माइन्द्रायगायत ॥ ४ ॥

यस्यं । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः ।
तस्मै । इन्द्राय । गायत ॥ ४ ॥

समत्सुयुद्धेषुयस्येन्द्रस्यसंस्थेरथेयुक्तौहरीद्वावश्वौ शत्रवोनवृण्वतेनसंभजन्ते रथमश्वौचदृष्ट्वापलायन्तइत्यर्थः तस्माइन्द्रायतत्तत्तोपार्थं हेऋत्विजोगायत स्तुतिंकुरुत रणइत्यादिपुपढ्चत्वारिंशत्सुसंग्रामनामसुसमत्सुसमरणइतिपठितम् ॥ संस्थे सम्यक्तिष्ठतीतिसंस्थोरथः आतश्चोपसर्गेइतिकप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । वृण्वते प्रत्ययस्वरेणाकारउदात्तः सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यः तिङ्ङतिङइतिनिघातोनभवति यद्वृत्तान्नित्यमितिप्रतिषेधात् पञ्चमीनिर्देशोऽप्यनव्यवहितेऽपिकार्यमिष्यते । हरतोरर्थमितिहरीअश्वौ इन्नित्यनुवृत्तौ हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्चेतीन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । शत्रवः शातिः सौत्रोधातुर्हिंसार्थः रुशातिभ्यांकुन् नित्त्वादाद्युदात्तत्वम् । तस्मै सावेकाचइतिविभक्त्युदात्तस्य नगोश्वन्साववर्णेतिप्रतिषेधात्प्रातिपदिकस्वरएव ॥ ४ ॥

पञ्चमीमृचमाह—

सुतपाव्नेसुताइमेशुचंयोयन्तिवीतयें । सोमासोदध्याशिरः ॥ ५ ॥ ९ ॥

सुतऽपाव्ने । सुताः । इमे । शुचंयः । यन्ति । वीतयें । सोमासः ।
दधिऽआशिरः ॥ ५ ॥ ९ ॥

१ कुरुगार्हपतेतिसूत्रे ( पा० ६. २. ४२. )। २सम्पूर्वादतेः क्विप् कृदुत्तरपदप्रकृतिस्वरत्वंसंभजस्यन्तियोद्धृणामायूंषितिसमदः ।

इमेसोमासः अस्मिन्कर्मणिसंपादिताःसोमाः सुतपान्नेअभिषुतस्यसोमस्यपानकर्त्रे षष्ठ्य-र्थेचतुर्थी तस्यपातुर्वीतयेभक्षणार्थयन्तितमेवमाप्नुवन्ति कीदृशाःसोमाः सुताःअभिषुताः शुचयः दशापवित्रेणशोधितत्वाच्छुद्धाः दध्याशिरः अवनीयमानंदधिआशीर्दोषघातकंयेषांसोमानांते दध्याशिरः ॥ सुतपान्ने सुतंपिबतीतिसुतपावा वनिपःपित्त्वाद्धातुस्वरएवशिष्यते समासेद्विती-यापूर्वपदप्रकृतिस्वरंबाधित्वाकृदुत्तरपदप्रकृतिस्वरत्वम् । शुचयः शुचदीप्तौ इन्नित्यनुवृत्तौ इगुप-धात्किदितीनःकित्त्वाल्लघूपधगुणाभावः नित्त्वादाद्युदात्तत्वम् । वीतये वीगतिव्याप्तिप्रजन-कान्त्यसनखादनेष्वित्यस्मान्मन्त्रेवृषेषपचमनविदभूवीराउदात्तइतिक्तिन्नुदात्तः सोमासः पुञ्अ-भिषवे अर्तिस्तुसुहुसृधृक्षीत्यादिनामन् नित्त्वादाद्युदात्तः आज्जसेरसुगित्यसुगागमः । दध्या-शिरः दधातिपुष्णातीतिदधि डुधाञ्धारणपोषणयोः आदृगमहनजनःकिकिनौलिट्चेतिकिन् लिड्वद्भावाद्द्विर्भावः कित्त्वादाकारलोपः नित्त्वादाद्युदात्तत्वम् शॄहिंसायां शृणाति हिनस्ति सोमेअवनीयमानंसत् सोमस्यस्वाभाविकंरसं ऋजीषत्वमयुक्तं नीरसंदोषंवाइत्याशीः क्विपि ऋतइद्धातोरितीत्वम् रपरत्वंच दध्येवआशीर्येषांसोमानांतेदध्याशिरः बहुव्रीहौपूर्वपदप्रकृति-स्वरत्वम् ॥ ५ ॥

इतिप्रथमस्यप्रथमेनवमोवर्गः ॥ ९ ॥

आत्वेतिसूक्तेषष्ठीमृचमाह—

**त्वंसुतस्यपीतयेसद्योवृद्धोअजायथाः । इन्द्रज्यैष्ठ्यायसुक्रतो ॥ ६ ॥**

**त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सुऽक्रतो ॥ ६ ॥**

सुक्रतोशोभनकर्मन्शोभनप्रज्ञावाहेइन्द्र त्वंसुतस्याभिषुतस्यसोमस्यपीतयेपानार्थंज्यैष्ठ्या-यदेवेषुज्येष्ठत्वार्थंचसद्यस्तस्मिन्नेवक्षणेवृद्धःअजायथाः अभिवृद्ध्याउत्साहेनयुक्तोभूः ॥ पी-तये पापानेइत्यस्मात्स्थागापापचोभावइतिक्तिन् घुमास्थेत्यादिनाईत्वम् तस्यनित्त्वेपिव्यत्यये-नप्रत्ययोदात्तत्वम् उत्तरसूत्रगतमुदात्तपदमत्रापिवायोजनीयम् । सद्यः सद्यःपरुत्परारीतिस-प्रेणसमानेहनीत्यर्थेसमानस्यसभावोद्यश्चप्रत्ययोनिपात्यते प्रत्ययस्वरेणोदात्तः । वृद्धः वृधुवृद्धौ ऊदितोवेतिक्त्वाप्रत्ययेइटोविकल्पितत्वाद्यस्यविभाषेतिनिष्ठायामिट्प्रतिषेधः प्रत्ययस्वरेणोदा-त्तः । ज्यैष्ठ्याय ज्येष्ठस्यभावोज्यैष्ठ्यम् गुणवचनब्राह्मणादिभ्यःकर्मणिचेतिष्यञ् ञि-त्वादाद्युदात्तः ॥ ६ ॥

सप्तमीमृचमाह—

आत्वाविशन्त्वाशवःसोमासइन्द्रगिर्वणः । शन्तेसन्तुप्रचेतसे ॥ ७ ॥

आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र । गिर्वणः ।
शम् । ते । सन्तु । प्रऽचेतसे ॥ ७ ॥

हेइन्द्र त्वात्वांसोमासः सोमाआविशन्तु आभिमुख्येनप्रविशन्तु कीदृशाःसोमाः आशवः सवनत्रयेप्रकृतिविकृत्योर्वाप्यात्तिमन्तः कीदृशेन्द्र गिर्वणः गीर्भिःस्तुतिभिः संभजनीय देवविशेष गिर्वणादेवोभवतिगीर्भिरेनंवनयन्तीतियास्कः । तथाविधहेइन्द्र तेतुभ्यंप्रचेतसेप्रकृष्टज्ञानाय शंसुखरूपाः सोमाः सन्तु ॥ गिर्वणः गृणन्तीतिगिरः स्तुतयः गृशब्दे क्विपि ऋतइद्धातोरितीत्वंरपरत्वंच गीर्भिर्वन्यतेसेव्यतेइतिगिर्वणाः वनषणसंभक्तौ संभक्तिःसेवा सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययः । प्रचेतसे बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

त्वांस्तोमाअवीवृधन्त्वामुक्थाशतक्रतो । त्वांवर्धन्तुनोगिरः ॥ ८ ॥

त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था । शतक्रतो इति शतऽक्रतो । त्वाम् । वर्धन्तु । नः । गिरः ॥ ८ ॥

हेशतक्रतोबहुकर्मन् बहुप्रज्ञवेन्द्र त्वांस्तोमाः सामगानांस्तोत्राणि अवीवृधन् वर्धितवन्ति तथाबह्वृचानामुक्था शस्त्राणित्वामवीवृधन् यस्मात्पूर्वमेवमासीत् तस्मादिदानीमपिनोऽस्माकंगिरःस्तुतयस्त्वांवर्धन्तु वर्धयन्तु अतिवृद्धंकुर्वन्तु ॥ स्तोमाः मनोनित्त्वादाद्युदात्तः । अवीवृधन् वृधुवृद्धौ ण्यन्ताल्लुङिचङिउर्ऋदितिवृधेरुपधायाऋकारस्यऋकारविधानादन्तरङ्गोऽपिगुणोबाध्यते द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घत्वाडागमाः । उक्था उक्थानि पातृतुदिवचिरिचिसिचिभ्यस्थगितिवचेः थक्प्रत्ययः वस्यकित्त्वात्संप्रसारणम् शेश्छन्दसिबहुलमितिशिलोपःनलोपश्च प्रत्ययस्वरेणान्तोदात्तः असामर्थ्यादामन्त्रितपरस्यापिनपराङ्गवद्भावइति नानुदात्तत्वम् । वर्धन्तु अन्तर्भावितण्यर्थाद्वृधेर्व्यत्ययेनपरस्मैपदम् ॥ ८ ॥

नवमीमृचमाह—

अक्षितोतिःसनेदिमंवाजमिन्द्रःसहस्रिणम् । यस्मिन्विश्वानिपौंस्या ॥ ९ ॥

---

१ नि० ६. १४. । २ नाद्युदात्तत्वमित्यपिपाठः ।

इमेसोमासः अस्मिन्कर्मणिसंपादिताःसोमाः सुतपान्नेअभिषुतस्यसोमस्यपानकर्त्रे षष्ठ्यर्थेचतुर्थी तस्यपातुर्वीतयेभक्षणार्थयन्तितमेवमाप्नुवन्ति कीदृशाःसोमाः सुताःअभिषुताः शुचयः दशापवित्रेणशोधितत्वाच्छुद्धाः दध्याशिरः अवनीयमानंदधिआशीर्दोषघातकंयेषांसोमानांते दध्याशिरः ॥ सुतपान्ने सुतंपिबतीतिसुतपावा वनिपःपित्त्वाद्धातुस्वरएवशिष्यते समासेद्वितीयापूर्वपदप्रकृतिस्वरंबाधित्वाकृदुत्तरपदप्रकृतिस्वरत्वम् । शुचयः शुचदीप्तौ इन्नित्यनुवृत्तौ इगुपधात्किदितीनःकित्त्वाल्लघूपधगुणाभावः नित्त्वादाद्युदात्तत्वम् । वीतये वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्मान्मन्त्रेवृषेषपचमनविदभूवीराउदात्तइतिक्तिन्नुदात्तः सोमासः षुञ्अभिषवे अर्तिस्तुसुहुसृधृक्षीत्यादिनामन् नित्त्वादाद्युदात्तः आज्जसेरसुगित्यसुगागमः । दध्याशिरः दधातिपुष्णातीतिदधि डुधाञ्धारणपोषणयोः आदृगमहनजनःकिकिनौलिट्चेतिकिन् लिङ्वद्भावाद्द्विर्भावः कित्त्वादाकारलोपः नित्त्वादाद्युदात्तत्वम् शॄहिंसायां शृणाति हिनस्ति सोमेअवनीयमानंसत् सोमस्यस्वाभाविकंरसं ऋजीषत्वमयुक्तं नीरसंदोषंवाइत्याशीः क्विपि ऋतइद्धातोरितीत्वम् रपरत्वंच दध्येवआशीर्येषांसोमानांतेदध्याशिरः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

इतिप्रथमस्यप्रथमेनवमोवर्गः ॥ ९ ॥

आत्वेतिसूक्तेषष्ठीमृचमाह—

त्वंसुतस्यपीतयेसद्योवृद्धोअजायथाः । इन्द्रज्यैष्ठ्यायसुक्रतो ॥ ६ ॥

त्वम् । सुतस्य॑ । पीतये॑ । सद्यः । वृद्धः । अजायथाः । इन्द्र॑ । ज्यैष्ठ्या॑य । सुक्रतो इति॑ सुऽक्रतो ॥ ६ ॥

सुक्रतोशोभनकर्मन्शोभनप्रज्ञवाहेइन्द्र त्वंसुतस्याभिषुतस्यसोमस्यपीतयेपानार्थंज्यैष्ठ्यायदेवेषुज्येष्ठत्वार्थंचसद्यस्तस्मिन्नेवक्षणेवृद्धःअजायथाः अभिवृद्ध्याउत्साहेनयुक्तोभूः ॥ पीतये पापानेइत्यस्मात्स्थागापापचोभावइतिक्तिन् घुमास्थेत्यादिनाईत्वम् तस्यनित्त्वेपिव्यत्ययेनप्रत्ययोदात्तत्वम् टचरसूत्रगतमुदात्तपदमत्रापिवायोजनीयम् । सद्यः सद्यःपरुत्परारीतिसूत्रेसमानेह्नीत्यर्थेसमानस्यसभावोद्यश्चप्रत्ययोनिपात्यते प्रत्ययस्वरेणोदात्तः । वृद्धः वृधुवृद्धौ ऊदितोवेतिक्त्वाप्रत्ययेइटोविकल्पितत्वाद्यस्यविभाषेतिनिष्ठायामिट्प्रतिषेधः प्रत्ययस्वरेणोदात्तः । ज्यैष्ठ्याय ज्येष्ठस्यभावोज्यैष्ठ्यम् गुणवचनब्राह्मणादिभ्यःकर्मणिचेतिष्यञ् ञित्वादाद्युदात्तः ॥ ६ ॥

सप्तमीमृचमाह—

आत्वाविशन्त्वाशवःसोमासइन्द्रगिर्वणः । शन्तेसन्तुप्रचेतसे ॥ ७ ॥

आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र । गिर्वणः ।
शम् । ते । सन्तु । प्रऽचेतसे ॥ ७ ॥

हेइन्द्र त्वात्वांसोमासः सोमाआविशन्तु आभिमुख्येनप्रविशन्तु कीदृशाःसोमाः आशवः सवनत्रयेप्रकृतिविकृत्योर्व्याप्तिमन्तः कीदृशेन्द्र गिर्वणः गीर्भिःस्तुतिभिः संभजनीय देवविशेष गिर्वणादेवोभवतिगीर्भिरेनंवनयन्तीतियास्कः । तथाविधहेइन्द्र तेतुभ्यंप्रचेतसेप्रकृष्टज्ञानाय शंसुखरूपाः सोमाः सन्तु ॥ गिर्वणः गृणन्तीतिगिरः स्तुतयः गृशब्दे क्विपि ऋतइद्धातोरितीत्वंरपरत्वंच गीर्भिर्वन्यतेसेव्यतेइतिगिर्वणाः वनषणसंभक्तौ संभक्तिःसेवा सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्ययः । प्रचेतसे बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

त्वांस्तोमाअवीवृधन्त्वामुक्थाशतक्रतो । त्वांवर्धन्तुनोगिरः ॥ ८ ॥

त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था । शतक्रतो इति शत-
ऽक्रतो । त्वाम् । वर्धन्तु । नः । गिरः ॥ ८ ॥

हेशतक्रतोबहुकर्मन् बहुप्रज्ञवेन्द्र त्वांस्तोमाः सामगानांस्तोत्राणि अवीवृधन् वर्धितवन्ति तथाबह्वृचानामुक्था शस्त्राणित्वामवीवृधन् यस्मात्पूर्वमेवमासीत् तस्मादिदानीमपिनोऽस्माकंगिरःस्तुतयस्त्वांवर्धन्तु वर्धयन्तु अतिवृद्धंकुर्वन्तु ॥ स्तोमाः मनोनित्त्वादाद्युदात्तः । अवीवृधन् वृधुवृद्धौ ण्यन्ताल्लुङि च्लिचङि उर्ऋदितिवृधेरुपधायाऋकारस्यऋकारविधानादन्तरङ्गोऽपिगुणोबाध्यते द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घत्वाडागमाः । उक्था उक्थानि पातृतुदिवचिरिचिसिचिभ्यस्थगितिवचेः थक्प्रत्ययः तस्यकित्त्वात्संप्रसारणम् शेश्छन्दसिबहुलमितिशिलोपःनलोपश्च प्रत्ययस्वरेणान्तोदात्तः असामर्थ्यादामन्त्रितपरस्यापिनपराङ्गवद्भावइति नानुदात्तत्वम् । वर्धन्तु अन्तर्भावितण्यर्थाद्वृधेर्व्यत्ययेनपरस्मैपदम् ॥ ८ ॥

नवमीमृचमाह—

अक्षितोतिःसनेदिमंवाजमिन्द्रःसहस्रिणम् । यस्मिन्विश्वानिपौंस्या ॥ ९ ॥

---

१ नि० ६. १४. । २ नाद्युदात्तत्वमित्यपिपाठः ।

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ॥ ९ ॥

इन्द्रः इमंवाजं सोमरूपमन्नं सनेत् संभजेत् कीदृशइन्द्रः अक्षितोतिः अहिंसितरक्षणः कदाचिदपिरक्षांनमुञ्चतीत्यर्थः कीदृशंवाजं सहस्रिणं प्रकृतौविकृतिषुचप्रवर्तमानत्वेनसहस्रसंख्यायुक्तम् यस्मिन्वाजेविश्वानिसर्वाणिपौंस्या पौंस्यानि पुंस्त्वानिबलानिवर्तन्तेतादृशंवाजमितिपूर्वेणान्वयः ॥ अक्षितोतिः ननु क्षिक्षयेइत्ययंधातुरकर्मकः तस्यचकर्माभावादधिकरणेभावेकर्तरिवाक्तप्रत्ययेनभवितव्यम् तदिहयदिकर्तर्यधिकरणेवास्यात्तदातयोरर्थयोर्ण्यत्प्रत्ययस्याविधानात् क्षियइत्यनुवृत्तौनिष्ठायामण्यदर्थेइतिदीर्घेणभवितव्यम् तथाचक्षियोदीर्घादितिनिष्ठानत्वेअक्षीणेतिस्यात् नत्वक्षितेति अथनपुंसकेभावेक्तइतिभावपरःक्षितशब्दोगृह्यते तदातस्यण्यदर्थत्वेनाण्यदर्थेइतिनिषेधाद्दीर्घनत्वयोरभावात् क्षितमितिसिध्यति तदातुनञ्तत्पुरुषः प्रकृत्यानान्वेतीति नविद्यतेक्षितमत्रेति बहुव्रीहिणैवभवितव्यम् तथाचनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंस्यात् पुनरूतिशब्देनबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनसएवस्वरस्तिष्ठेदित्यभिमतमाद्युदात्तत्वंनसिध्येदिति । सत्यं अतएवात्रक्षिधातुरन्तर्भावितण्यर्थोगृह्यते तेनसकर्मकत्वात्कर्मण्येवानिष्ठा ततश्चाण्यदर्थेइतिनिषेधाद्दीर्घोनिष्ठानत्वंचनभविष्यति तथा चनञ्तत्पुरुषेनक्षिता अक्षिताअक्षयितेत्यर्थः तत्रचाव्ययपूर्वपदप्रकृतिस्वरत्वेननञउदात्तत्वम् पुनरूतिपदेनबहुव्रीहौसएवस्वरःस्थास्यतीतिनकोपिदोषः रिक्षिचिरिरिजिरिदाशदहिंसायांइतिक्षिणोतेर्हिंसार्थस्यवाकर्मणिनिष्ठा तथाचाहिंसितोतिरित्यर्थेउक्तक्रमेणस्वरःसिध्यतीतिनदोषः । सनेत् षणसंभक्तौ भौवादिकः । वाजं वृषादित्वादाद्युदात्तः । इन्द्रः रनोनित्त्वादाद्युदात्तः । सहस्रिणं सहस्रमस्यास्ति अतइनिठनौ प्रत्ययस्वरः । विश्वा विशेः क्वन् नित्त्वादाद्युदात्तः । पुंसःकर्माणिपौंस्यानि ब्राह्मणादेराकृतिगणत्वाद्गुणवचनब्राह्मणादिभ्यःकर्मणिचेतिष्यञ् ञित्त्वादाद्युदात्तः प्रथमाबहुवचनस्यसुपांसुलुगित्यादिनाडादेशः ननु स्त्रीपुंसाभ्यांनञ्स्नञौभवनादित्यनेनधान्यानांभवनेक्षेत्रेखञित्येतत्पर्यन्तेष्वपत्याद्यर्थेपुनञ्स्नञोर्विधानाद्यथापुंसोपत्यंपौंस्नः पुंसआगतःपौंस्नइत्यादि तद्वत्पुंसोभावःकर्मवेत्यस्मिन्नर्थेष्यञंबाधित्वा पौंस्नानीत्येवभवितव्यम् कथमुच्यतेपौंस्यानीति । उच्यते—आचत्वादितिसूत्रे त्वात् इत्यवधिनिर्देशात् ब्रह्मणस्त्वइत्येतत्पर्यन्तैरिमनिजादिभिःप्रत्ययैःसह त्वतलोःसमावेशः एवंतत्रैवचशब्दान्नञ्स्नञोरपिष्यञादिभिःसमावेशएवनबाध्यबाधकभावः ॥ ९ ॥

दशमीमृचमाह—

मानोमर्तांअभिद्रुहन्तनूनामिन्द्रगिर्वणः।ईशानोयवयावधम्॥१०॥१०॥

मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः ।
ईशानः । यवय । वधम् ॥ १० ॥ १० ॥

हेगिर्वणइन्द्र मर्ताः विरोधिनोमनुष्याः नोऽस्मदीयानांतनूनांशरीराणांमाभिद्रुहन् अभितोद्रोहंमाकुर्युः ईशानःसमर्थस्त्वं वधं वैरिभिःसंपाद्यमानंयवयास्मत्तःपृथक्कुरु मनुष्याइत्यादिपञ्चविंशतिसंख्याकेषुमनुष्यनामसुमर्ताइत्येतइतिपठितम्॥ मर्ताः असिहसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्निितितन् नित्त्वादाद्युदात्तत्वम् । अभि एवमादीनामन्तः । द्रुहन् द्रुह जिघांसायां लिङर्थेलेडितिप्रार्थनायांलेट् तस्यझि झोन्तः इतश्चलोपःपरस्मैपदेष्वितीकारलोपः शपोलुक् सार्वधातुकमपिदितितिङोङित्त्वाल्लघूपधगुणाभावः । तनूनां असामर्थ्यान्नपराङ्गवद्भावः । इन्द्र गिर्वणः गतम् । ईशानः धातोरनुदात्तेत्त्वाच्छपोलुकि लसार्वधातुकत्वानुदात्तत्वेधातुस्वरएवशिष्यते । यवय यौतेर्णिचि संज्ञापूर्वकोविधिरनित्यइतिवृद्धिर्नक्रियते अथवा यौतीतियवः पचाद्यच् यवंकरोतीत्यर्थेतत्करोतितदाचष्टइतिणिच् इष्ठवद्भावाट्टिलोपः तस्यस्थानिवद्भावाद्वृद्ध्यभावः। वधं हनश्चवधइतिभावेअप् तत्सन्नियोगशिष्टस्थानिवद्भावेनान्तोदात्तोवधादेशः उदात्तनिवृत्तिस्वरेणाप्उदात्तत्वम् ॥ १० ॥

इतिप्रथमस्यप्रथमेदशमोवर्गः ॥ १० ॥

सुरूपेत्यादिषुषट्सूक्तेषुतृतीयस्ययुञ्जन्तीतिसूक्तस्यमन्त्रसंख्याऋषिच्छन्दोदैवतानिविनियोगश्चेत्येतेपूर्ववदवगन्तव्याः दशर्चेएतस्मिन्सूक्तेआद्यास्तिस्रोन्द्विमाचेत्येताश्चतस्रऐन्द्र्यः आदहेत्येतांचतुर्थीमारभ्यषळृचोमारुत्यः तासुमध्येवीळुचिदिन्द्रेणेत्येतेद्वेऋचौमारुत्यौसत्यावैन्द्र्यावपिभवतः तदेतत्सर्वमनुक्रमणिकायामुक्तम्—सुरूपकृत्नुंदशैन्द्रमातुयुञ्जन्त्यादहेत्येताःषण्मारुत्योवीळुचिदिन्द्रेणेत्यैन्द्र्यौचेति एतस्मिन्सूक्ते युञ्जन्तीत्यसौतृचस्तृतीयेरात्रिपर्यायेब्राह्मणाच्छंसिनोऽनुरूपः तथाचातिरात्रेपर्यायाणामितिखण्डेयोगेयोगेववस्तरंयुञ्जन्तिब्रध्नमरुषमितिसूत्रितम ।

तत्रप्रथमामृचमाह—

युञ्जन्तिब्रध्नमरुषंचरन्तंपरितस्थुषः।रोचन्तेरोचनादिवि॥१॥

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते ।
रोचना । दिवि ॥ १ ॥

इन्द्रोहिपरमैश्वर्ययुक्तः परमैश्वर्यंचाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते ब्रध्नमादित्यरूपेणावस्थितम् अरुषंहिंसकरहिताग्निरूपेणावस्थितम् चरन्तं वायुरूपेणसर्वतःप्रसरन्तमिन्द्रं परितस्थुषःपरितोवस्थिताः लोकत्रयवर्तिनः प्राणिनोयुञ्जन्ति स्वकीयेकर्मणिदेवतात्वेनसंबद्धंकुर्वन्ति तस्यैवेन्द्रस्यमूर्तिविशेषभूतारोचनानक्षत्राणिदिविद्युलोकेरोचन्ते प्रकाशन्ते । अस्यमन्त्रस्योक्तार्थपरत्वंब्राह्मणान्तरेव्याख्यातम्—युंजन्तिब्रध्नमित्याह । असौवाआदित्योब्रध्नः । आदित्यमेवास्मैयुनक्ति । अरुषमित्याह । अग्निर्वाअरुषः । अग्निमेवास्मैयुनक्ति । चरन्तमित्याह । वायुर्वैचरन् । वायुमेवास्मैयुनक्ति । परितस्थुषइत्याह । इमेवैलोकाःपरितस्थुषः । इमानेवास्मैलोकान्युनक्ति । रोचन्तेरोचनादिवीत्याह । नक्षत्राणिवैरोचनादिवि । नक्षत्राण्येवास्मैरोचयन्तीति । पञ्चविंशतिसंख्याकेषु महन्नामसु महः ब्रध्नइतिपठितम् आदित्यस्यापिमहत्त्वादेवब्रध्नत्वम् ॥ युञ्जन्ति अन्तेःप्रत्ययस्वरेणाद्युदात्तत्वम् । ब्रध्नं प्रातिपदिकान्तोदात्तः । अरुषं रुषरिषहिंसार्थाः रोषन्तीतिरुषाहिंसकाः इगुपधज्ञाप्रीकिरःकइतिकः प्रत्ययस्वरेणान्तोदात्तः नसन्तिरुषायस्यासावरुषः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अमिपूर्वइतिपूर्वरूपे एकादेशउदात्तेनोदात्तइत्युदात्तत्वम् । चरन्तं शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते । तस्थुषः तिष्ठतेर्लिटःक्वसुरादेशः वस्वेकाजाद्धसामितीडमन्तरंगमपिबाधित्वा संप्रसारणंसंप्रसारणाश्रयंचबलीयइतिशसिपरतोभत्वाद्वसोःसंप्रसारणंपरपूर्वत्वम् आदेशप्रत्यययोरितिषत्वं वसोःप्रत्ययस्वरेणोदात्तत्वम् । रोचन्ते तिङोलसार्वधातुकानुदात्तत्वम् शपःपित्त्वादनुदात्तत्वं धातुस्वरएव । रोचना अनुदात्तेतश्चहलादेरितियुच् युवोरनाकावित्यनादेशः चितइत्यन्तोदात्तत्वम् । दिवि ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् ॥१॥

द्वितीयामृचमाह—

युञ्जन्त्यस्य॒काम्या॒हरी॒विप॑क्षसा॒रथे॑ । शोणा॑धृ॒ष्णू॒नृ॒वाह॑सा ॥ २ ॥

यु॒ञ्जन्ति॑ । अ॒स्य॒ । काम्या॑ । हरी॒ इति॑ । विऽप॑क्षसा । रथे॑ ।

शोणा॑ । धृ॒ष्णू इति॑ । नृ॒ऽवाह॑सा ॥ २ ॥

अस्यब्रध्नादिप्रतिपाद्यस्यादित्यादिमूर्तिभिस्तत्रतत्रावस्थितस्येन्द्रस्यरथेहरीएतन्नामानौ द्वौअश्वौसारथयोयुञ्जन्ति इन्द्रसंबन्धिनोरश्वयोर्हरिनामत्वम् हरीइन्द्रस्यरोहितोऽग्नेरितिपठितत्वात् कीदृशौहरी काम्या कामयितव्यौ विपक्षसाविविधेपक्षसीरथस्यपार्श्वौययोरश्वयोस्तौ विपक्षसौरथस्यद्वयोःपार्श्वयोर्योजिताविन्यर्थः शोणारक्तवर्णौ धृष्णू प्रगल्भौ नृवाहसानृणां

१ तै०ब्रा०३.९.४.

पुरुषाणामिन्द्रतत्सारथिप्रमुखानांवोढारौ ॥ अस्य व्रध्नमित्युक्तस्यपरामर्शादिदमोन्वादेशेऽश-नुदात्तस्तृतीयादावित्यश् शित्वात्सर्वादेशेऽनुदात्तः विभक्तिरनुदात्तैवेतिसर्वानुदात्तत्वम् । काम्या कमुकान्तौ कमेर्णिङ् कामयतेरचोयत् तित्स्वरितापवादत्वेनयतोनावइत्याद्युदात्तत्वम् सुपांसुलुगितिद्विवचनस्यडादेशः । हरतोरथमितिहरी हृपिषीत्यादिनाइन् नित्वादाद्युदात्तः । विपक्षसा पचिवचिभ्यांसुट्चेतिपचेरसुन्सुडागमः विभिन्नेपक्षसीपार्श्वौयमयोस्तौ विशब्दोनि-पातत्वादुदात्तः पूर्वपदप्रकृतिस्वरेणसएवशिष्यते द्विवचनस्यडादेशः । रथे रमन्तेऽस्मिन्निति रथः रमुक्रीडायां हनिकुषिनीरमिकाशिभ्यःक्थन्नितिक्थन् कित्वादनुदात्तोपदेशेत्यादिना मकारलोपः नित्स्वरेणाद्युदात्तः । शोणा शोणृवर्णगत्योः गमनकरणत्वात्करणेघञ् ञित्वादाद्युदात्तः सुपांसुलुगितिडादेशः । धृष्णू ञिधृषाप्रागल्भ्ये त्रसिगृधिधृषिक्षिपेःक्नुः कित्वाद्गुणाभावः प्रत्ययस्वरः । नृवाहसा नृन्वहतइतिवहेर्वहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेर्वृद्धिः नित्वादाद्युदात्तः कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते ॥ २ ॥

तृतीयामृचमाह—

केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे । समुषद्भिरजायथाः ॥ ३ ॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥ ३ ॥

हेमर्यामनुष्याइदमाश्चर्यपश्यतेत्यध्याहारः किमाश्चर्यमितितदुच्यते आदित्यरूपोऽयमिन्द्रउषद्भिर्दाहकैः रश्मिभिःप्रतिदिनमुषःकालेर्वासंभूयाजायथाः उदपद्यत अथवासूर्यस्यैवास्तमयेमरणमुपचर्यव्यत्ययेनबहुवचनंकृत्वासंबोधनंक्रियते हेमर्य प्रतिदिनंत्वमजायथाइतियोज्यम् किंकुर्वन् अकेतवे रात्रौनिद्राभिभूतत्वेनप्रज्ञानरहितायप्राणिनेकेतुंकुर्वन्प्रातःप्रज्ञानंकुर्वन् अपेशसे रात्रावन्धकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहितायपदार्थायप्रातरन्धकारनिवारणेनपेशोरूपमभिव्यज्यमानंकुर्वन् पेशइतिरूपनाम पिंशतेरितियास्कः । अकेतवेऽपेशसेइतिचतुर्थ्यौषष्ठ्यर्थेद्रष्टव्यौ ॥ केतुं प्रातिपदिकस्वरः । कृण्वन् कृविर्हिंसाकरणयोश्च लटःशत्रादेशः इदितोनुम्धातोरितिनुमागमः कर्तरिशपिप्राप्ते धिन्विकृण्व्योरचेतिउप्रत्ययः ततसन्नियोगेनवकारस्याकारः अतोलोपइत्यकारलोपः तस्यस्थानिवद्भावात्पूर्वस्यलघूपधगुणोनभवति अकारस्यप्रत्ययस्वरेणोदात्तत्वम् । अकेतवे बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । पेशः नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । मर्याः छन्दसिनिष्टर्क्येत्यादौम्रियतेर्निपातितः आमन्त्रितनिघा-

१ नि० ८, ११.।

तः असामर्थ्यात्पूर्वस्यनपराङ्गवद्भावः । अपेशसे नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् सम्‌ निपातआद्युदात्तः । उषद्भिः उषदुपदाहे ज्वलद्भिः रश्मिभिः लटःशत्रादेशेशपिप्राप्तेव्यत्ययेन शः सार्वधातुकमपिदितितस्यङित्त्वाल्लघूपधगुणोनभवति शस्यप्रत्ययस्वरेणोदात्तत्वम् उपरिशतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वम् एकादेशउदात्तेनोदात्तः । अजायथाः अजायतेत्यर्थेपुरुषव्यत्ययेननिघातः ॥ ३ ॥

चतुर्थीमृचमाह—

आदह॑स्व॒धामनु॒पुन॑र्ग॒र्भ॒त्वमे॑रि॒रे । दधा॑ना॒नाम॑य॒ज्ञिय॑म् ॥ ४ ॥

आत् । अह॑ । स्व॒धाम् । अनु॑ । पुन॑ः । ग॒र्भ॒ऽत्वम् । आ॒ऽई॒रि॒रे । दधा॑नाः । नाम॑ । य॒ज्ञिय॑म् ॥ ४ ॥

अत्रास्तिविशेषविनियोगः चतुर्विंशेहनिप्रातःसवनेब्राह्मणाच्छंसिशस्त्रेआदहस्वधामन्वितिद्वेऋचौइन्द्रेणसंहिदृक्षसइत्येका अयंतृचःषळहस्तोत्रियसंज्ञकः तथाचसूत्रितंचतुर्विंशेहोताजनिष्टेतिखण्डे—इन्द्रेणसंहिदृक्षसआदहस्वधामन्वित्येकाद्वेचेति । यद्यप्येतदैन्द्रंसूक्तम् तथाप्यादहेत्यादिपुषट्सुमरुतोवर्ण्यन्ते प्रायेणैन्द्रेमरुतइत्यनुक्रमणिकायामुक्तत्वात् आदित्ययमानन्तर्यार्थेनिपातः अहेत्यवधारणार्थः आदहवर्षर्तोरनन्तरमेवस्वधामनु इतःपरंजनिष्यमाणमन्नमुदकंवानुपलक्ष्यमरुतोदेवागर्भत्वमेरिरे मेघमध्येजलस्यगर्भाकारमेरितवन्तः जलस्यकर्तारंपर्जन्यंप्रेरितवन्तः प्रतिसंवत्सरमेवंकुर्वन्तीतिदर्शयितुंपुनःशब्दःप्रयुक्तः कीदृशामरुतः यज्ञियंयज्ञार्हंनामदधानाःधारयन्तः सप्तसुगणेषुमरुतामीदृङ्चान्यादृङ्चेत्यादीनियज्ञयोग्यानिनामान्यन्यत्राम्नातानि अन्धइत्यादिष्वष्टाविंशतिसंख्याकेषुअन्ननामसुऊर्क्रसःस्वधेति पठितम् अर्णइत्यादिष्वेकशतसंख्याकेषूदकनामसु तेजःस्वधाअक्षरमितिपठितम् ॥ आत् अह निपातावाद्युदात्तौ । स्वधां स्वंलोकंदधातिपुष्णातीतिस्वधा आतोऽनुपसर्गेकः कृदुत्तरपदप्रकृतिस्वरत्वम् । अनुपुनःशब्दौनिपातावाद्युदात्तौ । गर्भस्यभावोगर्भत्वम् प्रत्ययस्वरः । एरिरे अन्तर्भावितण्यर्थादीरगतावित्यस्मादनुदात्तेतःपरस्यलिटोझस्यइरेच् चित्त्वादन्तोदात्तः सहसुपेत्यत्रसुपेतियोगविभागाद्गाङ्गसहविङ्समासेऽपिसमासस्येत्यन्तोदात्तत्वम् इजादेश्चगुरुमतोऽनृच्छइत्याम्नभवति प्रयत्वात् अहशब्दयोगान्निघाताभावः तुपश्यपश्यताहैःपूजायामितिनिषेधात् । दधानाःशानचश्चित्त्वादन्तोदात्तत्वेप्राप्ते अभ्यस्तानामादिरित्याद्युदात्तत्वम् । यज्ञमर्हं तिप्रतिपम् यज्ञर्त्विग्भ्यांघखञावितिघप्रत्ययः आयनेयीनीयियःफढखछघांप्रत्ययादीनामितीयादेशः प्रत्ययस्वरेणइकारउदात्तः ॥ ४ ॥

पञ्चमीमृचमाह—

वीळुचिदारुजत्नुभिर्गुहाचिदिन्द्रवह्निभिः । अविन्दउस्रियाअनु ॥५॥

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र ।
वह्निऽभिः । अविन्दः । उस्रियाः । अनु ॥ ५ ॥ ११ ॥

अस्तिकिंचिदुपाख्यानं पणिभिर्देवलोकाद्गावोपहताअन्धकारेप्रक्षिप्ताः ताश्चेन्द्रोमरुद्भिःसहाजयदिति एतच्चानुक्रमणिकायांसूचितम्—पणिभिरसुरैर्निगूढागाअन्वेष्टुंसरमांदेवशुनीमिन्द्रेणप्रहितामसुरैःपणयोमित्रीयन्तःप्रोचुरिति । मन्त्रान्तरेचदृष्टान्ततयासूचितम्—निरुद्धाआपःपणिनेवगावइति । तदेतदुपाख्यानमभिप्रेत्योच्यते—हेइन्द्र वीळुचित् दृढमपिदुर्गमस्थानं आरुजत्नुभिर्भञ्जद्भिर्वह्निभिर्वोढृभिरन्यत्रनेतुंसमर्थैर्मरुद्भिःसहितस्त्वं गुहाचित् गुहायामपिस्थापिताः उस्रियागाअन्वविन्दः अन्विष्यलब्धवानसि ओजःपाजइत्यादिष्वष्टाविंशतिसंख्याकेषुबलनामसु दक्षःवीळुच्यौत्नमितिपठितम् नवसंख्याकेषुगोनामस्वघ्न्याउस्राउस्रियाइतिपठितम् ॥ वीळु प्रातिपदिकस्वरः । चित् चादिरनुदात्तः । आरुजत्नुभिः रुजोभङ्गेइत्यौणादिकःकत्नुच्प्रत्ययः कित्त्वाद्गुणाभावः चित्त्वादन्तोदात्तत्वम् समासेकृदुत्तरपदप्रकृतिस्वरत्वम् । गुहा सप्तम्याडादेशः ग्रामादीनांचेत्याद्युदात्तः । वह्निभिः वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिरितिवहेर्निप्रत्ययः नित्त्वादाद्युदात्तः । अविन्दः शेमुचादीनामितिनुमागमः लुङ्लङ्लृङ्क्ष्वडुदात्तः । वसन्तीत्युस्रियाः वसेःकर्तरिरियक्प्रत्ययः षत्वाभावश्चबाहुलकादूहनीयः उक्तंहि—पत्नपदार्थविशेषसमुत्थंप्रत्ययतःप्रकृतेश्चतदूह्यमिति इकारःप्रत्ययस्वरेणोदात्तः ॥ ५ ॥

॥ इतिप्रथमस्यप्रथमेएकादशोवर्गः ॥ ११ ॥

युञ्जन्तीतिसूक्तेषष्ठीमृचमाह—

देवयन्तोयथामतिमच्छाविदद्वसुंगिरः । महामनूषतश्रुतम् ॥ ६ ॥

देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् ।
गिरः । महाम् । अनूषत । श्रुतम् ॥ ६ ॥

देवयन्तःमरुत्संज्ञकान्देवानिच्छन्तोगिरःस्तोतारऋत्विजः महांप्रौढं मरुद्गणमच्छप्राप्यमनूषत स्तुतवन्तः कीदृशंमरुद्गणं विदद्वसुं वेदयद्भिःस्वमहिमप्रख्यापकैःवसुभिर्धनैर्युक्तम् श्रुतं विख्यातं

---

१ ऋ० सं. १. २. ३८. ।

मरुद्गणस्यदृष्टान्तः यथामतिं मन्तारमिंद्रंयथास्तुवन्तितथेत्यर्थः ॥ देवयन्तःदेवानात्मनइच्छन्तः सुपआत्मनःक्यच् क्यचिचेतीत्वम् अकृत्सार्वधातुकयोर्दीर्घइतिदीर्घत्वंचनभवति नच्छन्दस्यपुत्रस्येत्यनेनक्यचियत्प्राप्तमीत्वंदीर्घत्वंवा तस्यसर्वस्यप्रतिषेधात् यद्यपीत्वमेवमकृतं तथापिव्यवहितस्यापिदीर्घत्वस्यसप्रतिषेधइतिविज्ञायते अश्वायन्तइत्यादावश्वाघस्येत्यात्वविधानादितिसुकम्. क्यजन्ताच्छतृप्रत्ययः क्यचश्चित्त्वाच्चितइत्यन्तोदात्तत्वम् शपःपित्त्वेनशतुश्चलसार्वधातुकस्वरेणानुदात्तत्वे एकादेशउदात्तेनोदात्तइत्युदात्तः। यथा प्रकारवचनेथाल् लितीतिप्रत्ययात्पूर्वमुदात्तत्वम्। मतिं मन्त्रेवृषेषपचमनेत्यादिनाक्तिन्नुदात्तः मतिशब्दोज्ञानपरोप्युपचारात् ज्ञातरीन्द्रेवर्तते अथवा पदान्तरेविशेष्यानुपादानादिन्द्रस्यैवैषासंज्ञा ततश्च क्तिचूक्तौचसंज्ञायामितिमन्यतेःकर्तरिक्तिच् तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः चित्त्वादन्तोदात्तत्वम्। अच्छ अभ्याप्तगच्छत्यर्थयोगादच्छगत्यर्थवदेष्वितिगतिसंज्ञयासहनिपातसंज्ञायाअपिसमावेशान्निपाताआद्युदात्ताइत्याद्युदात्तत्वम्। विदद्वसुं विदज्ञानेइत्यस्मादन्तर्भावितण्यर्थाच्छतृप्रत्यये विदन्त्यौदार्यातिशयवत्तयाज्ञापयन्तिवसूनिधनानियंसविदद्वसुः विदेःशतृप्रत्ययेअदिप्रभृतिभ्यःशपइतिशपोलुकि प्रत्ययस्वरेणशतुरुदात्तत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनतदेवशिष्यते। गृणन्तिस्तुवन्तीतिगिरः गृणातेःक्विपि ऋतइद्धातोरितीत्वंरपरत्वं धातुस्वरेणोदात्तत्वम्। महां महान्तं नकारतकारयोर्लोपश्छान्दसः प्रातिपदिकस्वरेणोदात्तत्वम्। अनूषत णुस्तुतौव्यत्ययेनात्मनेपदं लुङि झस्यअदादेशः सिचि कुटादित्वेनङित्त्वाद्गुणाभावः इडभावउकारदीर्घत्वंचछान्दसं निघातः। श्रुतं प्रत्ययस्वरः ॥ ६ ॥

सप्तमीमृचमाह—

इन्द्रे॑ण॒सं हि दृक्ष॑से संजग्मा॒नो अबि॑भ्युषा। म॒न्दू स॑मा॒नव॑र्चसा ॥ ७॥

इन्द्रे॑ण। सम्। हि। दृक्ष॑से। स॒म्ऽज॒ग्मा॒नः। अबि॑भ्युषा।
म॒न्दू इति॑। स॒मा॒नऽव॑र्चसा ॥ ७ ॥

हेमरुद्गण त्वंइन्द्रेणसञ्जग्मानः संगच्छमानः संदृक्षसेहि सम्यग्दृश्येथाःखलु अवश्यमस्माभिर्द्रष्टव्यइत्यर्थः कीदृशेनेन्द्रेण अविभ्युषाभीतिरहितेन कीदृशाविन्द्रमरुद्गणौ मन्दू नित्यप्रमुदितौ समानवर्चसातुल्यदीप्ती पुराकदाचिद्वृत्रवधदशायांइन्द्रस्यसखायः सर्वेदेवावृत्रश्वासस्यत्रासात्पलायिताः तदानीमिन्द्रस्यवृत्रसंवन्धिसकलसेनाजयार्थमरुद्भिःसंगमोभूत् सोऽयमर्थोवृत्रस्यत्वाश्वसथादितिमन्त्रेसंगृहीतः। इन्द्रोवैवृत्रंहनिष्यन्तितिब्राह्मणेप्रपञ्चितश्च। इन्द्रशब्दःपरमै-

१ ऋ० सं. ६. ६. ३३. । २ ऐ० ब्रा० ३. २०।

श्वर्यवन्तंमरुद्गणंचाभिधत्ते तदानीमिन्द्रस्यसंबोधनंबहिरेवाध्याहर्तव्यम् तथाचेयमृग्यास्केनव्याख्याता—इन्द्रेणहिसंदृश्यसेसंगच्छमानोऽविभ्युषागणेनमन्दूमदिष्णूयुवांस्थोऽपिवामन्दुनातेनेतिस्यात्समानवर्चसेत्येतेनव्यौख्यातमिति ॥ संदृक्षसे संपश्येथाः दृशेश्चेतिवक्तव्यमित्यात्मनेपदं दृशेर्लिङर्थेलेडिति प्रार्थनायांलेट् थासःसे लेटोडाटावित्यडागमः सिब्बहुलंलेटीतिसिप् संज्ञापूर्वकोविधिरनित्यइतिगुणाभावः भ्रश्चादिनाषत्वम् षढोःकःसीतिकत्वम् आदेशप्रत्यययोरितिसिपःषत्वम् बहुलग्रहणात्तिपःपरस्ताच्छबपिभवति सिपाव्यवधानात्तस्यादेशोनभवति शपःपित्वादनुदात्तत्वं उत्तरस्यलसार्वधातुकानुदात्तत्वं धातुस्वरएवशिष्यते हिशब्दयोगात्तिङ्ङतिङइतिनिघातोनभवति हिचेतिप्रतिषेधात् । संजग्मानः गमेःसंपूर्वाच्छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् समोगम्यृच्छीत्यात्मनेपदविधानाल्लिटःकानजादेशः द्विर्भावोहलादिशेषोऽभ्यासस्यचुत्वं गमहनेत्युपधालोपः कानचश्चित्त्वादन्तोदात्तत्वं गतिसमासेकृदुत्तरपदप्रकृतिस्वरत्वम् । अविभ्युषा ञिभीभये पूर्ववल्लिट् शेषात्कर्तरिपरस्मैपदमितिपरस्मैपदम् क्वसुश्चेतिलिटःक्वसुरादेशः तस्यकित्त्वाद्गुणाभावः द्विर्भावः अभ्यासस्यह्रस्वजश्त्वे क्रादिनियमात्प्राप्तइट् वस्वेकाजाद्घसामितिनियमान्निवर्तते नञ्समासेतृतीयैकवचनेभत्वाद्वसोःसंप्रसारणमितिवकारस्यउकारः संप्रसारणाच्चेतिपूर्वरूपत्वं शासिवसीतिषत्वं इयङादेशंबाधित्वाएरनेकाचइतियणादेशः अव्ययपूर्वपदप्रकृतिस्वरत्वं पूर्वेण सहसंहितायामोकारस्य एङःपदान्तादतीतिपरपूर्वरूपत्वेप्राप्ते प्रकृत्यान्तःपादमव्यपरेइतिप्रकृतिभावः । मन्दू मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु इदितोनुम्धातोरितिनुमागमः कुरित्यनुवृत्तौ स्वरुशंकुपीयुनीलंगुलिग्वित्यत्राविभक्तिकनिर्देशाद्बन्तोर्हिगुरितिवद्धात्वन्तरादपिकुरित्युक्तम् प्रत्ययस्वरेणान्तोदात्तः द्विवचनमौ प्रथमयोःपूर्वसवर्णः तृतीयैकवचनेचेत् सुपांसुलुगित्यादिनापूर्वसवर्णदीर्घत्वम् । समानवर्चसा समानंवर्चोययोरितिवायस्येतिवाबहुव्रीहिः द्विवचनेसुपांसुलुगित्यादिनाआकारादेशः समानपदस्यप्रातिपदिकान्तोदात्तत्वं बहुव्रीहौपूर्वपदप्रकृतिस्वरेण वेदेवावशिष्यते ॥ ७ ॥ अष्टमीमृचमाह—

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥ ८ ॥

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥ ८ ॥

मखःप्रवर्तमानोयंयज्ञः अनवद्यैर्दोषरहितैरभिद्युभिः द्युलोकमभिगतैः काम्यैः फलप्रदत्वेनकामयितव्यैर्गणैःमरुत्समूहैःसहितमिन्द्रस्येन्द्रं सहस्वत् बलोपेतं यथाभवतितथार्चतिपूज-

1 नि० ४.१२.।

यति अयंयज्ञोमरुतइन्द्रंचातिशयेनप्रीणयतीत्यर्थः यज्ञइत्यादिपुपञ्चदशसुयज्ञनामसु मखः विष्णुरितिपठितम् चतुश्चत्वारिंशत्स्वर्चतिकर्मसुअर्चतिगायतीतिपठितम् ॥ नविद्यतेअवद्यंयेषांते-अनवद्याः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अभिगताद्यौर्यैस्तेअभिद्यवः तैः अभिद्युभिः अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरेणसएवशिष्यते। मखः प्रातिपदिकस्वरः। सहोबलमस्मिन्नर्चनकर्मण्यस्तीतिसहस्वत् तसौमत्वर्थइतिभसंज्ञयापदसंज्ञाया-बाधितत्वात्सकारस्यरुत्वाभावः मादुपधायाश्चमतोर्वोयवादिभ्यइतिमतुपोमस्यवत्वं सहसूर्श-नविषयस्यानिसन्तस्येत्याद्युदात्तः मतुपःपित्त्वात्सएवशिष्यते । काम्यैः कमेर्णिङ् अतउपधायाइतिवृद्धिः जनीजृष्क्नसुरञ्जोमन्ताश्चेत्यमन्तत्वेनप्राप्तस्यमित्त्वस्य नकम्यमिचमामितिप्रतिषेधा-न्मितांह्रस्वइत्युपधायाह्रस्वत्वंनभवति ण्यन्तादचोयत् णिलोपः तित्स्वरितमितिप्राप्तेयतोनावइत्या-द्युदात्तत्वम्॥ ८ ॥

नवमीमृचमाह—

**अतः॑परिज्मन्नाग॑हि॒दि॒वोवा॑रोच॒नादधि॑। सम॑स्मिन्नृञ्ज॒ते॒गिरः॑ ॥ ९॥**

**अतः॑। प॒रि॒ऽज्म॒न्। आ। ग॒हि॒। दि॒वः। वा॒। रो॒च॒नात्। अधि॑। सम्। अ॒स्मि॒न्। ऋ॒ञ्ज॒ते॒। गिरः॑ ॥ ९ ॥**

हेपरिज्मन्परितोव्यापिन् मरुद्गण अतोऽस्मान्मरुद्गणस्थानादन्तरिक्षादागहिअस्मिन्कर्म-ण्यागच्छ दिवोवाद्युलोकाद्वा समागच्छ रोचनादधिदीप्यमानादादित्यमण्डलाद्वासमागच्छ अ-स्मदीयकर्मकालेयत्रयत्रतिष्ठसि ततःसर्वस्मादागच्छेत्यर्थः किमर्थमागमनमितितदुच्यते अस्मि-न्कर्मणिवर्तमानऋत्विग्गिरःस्तुतीः समृञ्जतेसम्यक्प्रसाधयति ऋञ्जतिः प्रसाधनकर्मेतियास्कः। एताः स्तुतीःश्रोतुमागच्छेत्यर्थः यद्यप्यृत्विजामग्रस्यप्रयुज्यमानत्वादृञ्जतिधातोरुत्तमपुरुषेणभ-वितव्यम् तथापिपरोक्षकृतत्वेननिर्देशात्प्रथमपुरुषप्रयोगः परोक्षकृतलक्षणंचयास्कआह—तास्त्रि-विधाऋचःपरोक्षकृताःप्रत्यक्षकृताआध्यात्मिक्यश्च तत्रपरोक्षकृताःसर्वाभिर्नामविभक्तिभिर्यु-ज्यन्तेप्रथमपुरुषैश्चाख्यातस्येति[२] ॥ अतः पञ्चम्यास्तसिल् एतदोऽश् शित्त्वात्सर्वादेशः लि-तीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । परिज्मन् अजगतिक्षेपणयोः अन्येभ्योऽपिदृश्यन्तइतिमनिन् अकारलोपश्छान्दसः आमन्त्रितनिघातः । गहि गमेर्बहुलंछन्दसीतिशपोलुक् हेर्ङित्त्वादनुदा-त्तोपदेशेत्यादिनामलोपः अतोहेरितिहेर्लुग्लोपोनभवति तस्मिन्कर्तव्ये असिद्धवदत्राभादितिमलो-पस्यासिद्धत्वेनअनकारान्तत्वात्। दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। वा चादयोऽनुदात्ता-

१ नि० ६, २१। २ नि० ७, १. ३ वृत्त्यभिप्रायेणायंपाठः

इत्यनुदात्तः। रोचनात् रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् युवोरनाकावित्यनादेशः चितित्यन्तोदात्तः। अधि अधिपरीअनर्थकाविविकर्मप्रवचनीयत्वेनसन्निपातसंज्ञायाःसमावेशान्निपाताआद्युदात्ताइत्याद्युदात्तः। अस्मिन् परिज्मन्नित्यादिष्टस्यैवान्वादेशादिदमोन्वादेशेशनुदात्तस्तृतीयादावित्यश्अनुदात्तः शित्वात्सर्वादेशः विभक्तिः अनुदात्तौसुप्पितावित्यनुदात्तेतिसर्वानुदात्तत्वम् । ऋञ्जते ऋजिभृजीवर्जने समित्युपसर्गयोगात्प्रसाधनेवर्तते निघातः। गिरः प्रातिपदिकस्वरः ॥ ९ ॥

दशमीमृचमाह—

इतोवासातिमीमहेदिवोवापार्थिवादधि। इन्द्रंमहोवारजसः॥१०॥१२॥

इतः। वा। सातिम्। ईमहे। दिवः। वा। पार्थिवात्। अधि।
इन्द्रम्। महः। वा। रजसः॥ १० ॥ १२ ॥

इन्द्रंदेवंप्रति सातिंधनदानंअधीमहे आधिक्येनयाचामहे कस्माल्लोकादितितदुच्यते इतोऽस्मादृश्यमानात्पार्थिवात्पृथिवीलोकाद्वादिवोवाद्युलोकाद्वा महोमहतःप्रौढाद्रजसोवापक्षान्तरीनांरजकादन्तरिक्षलोकाद्वायमिन्द्रोयतःकुतश्चिदानीयास्मभ्यंधनंप्रयच्छत्वित्यर्थः समदशाखुयाज्ञाकर्मस्वीमहेयामीतिपठितम्॥ इतः इदम्शब्दात्पञ्चम्यास्तसिल् इदमइशितीश् शित्वात्सर्वादेशः अनऊहिदमित्यस्यावकाशः आभ्यांएभिःलितीत्यस्यावकाशः पचनंपाचकः उभावपिनित्यौ तत्रपरत्वाद्विप्रतिषेधेपरंकार्यमितिलितीतिइकारस्योदात्तत्वम् पश्चात्तसेःप्राग्दिशोविभक्तिरितिविभक्तिसंज्ञकत्वादूडिदमित्यादिना असर्वनामस्थानविभक्तेरुष्मशानमुदात्तत्वंभवति सकृद्गतौविप्रतिषेधेयद्बाधितंतद्बाधितमेवेत्यूडिदमित्यस्यपुनरप्रवृत्तिरेवेतिचेत् न लक्ष्यानुरोधेनपुनःप्रसंगविज्ञानंचेति स्वीकारात् नन्वेवंयतस्ततइत्यादावपिपरेणबाधितमपिसावेकाचइतिवसिलउदात्तत्वंस्यादितिचेत् न यत्तच्छब्दयोः सावकवर्णान्तत्वेन नगोश्वन्सावकवर्णेतिनिषेधात् नचपुनःप्रसंगविज्ञानंचेत्येतत्सार्वत्रिकं लक्ष्यानुरोधेनक्वचिदेवतदाश्रयणादिति। सातिं षणुदाने धात्वादेःषःसः भावेक्तिन् जनसनखनांसञ्झलोरितिनकारस्यात्वं तितुत्रतथसिसुसरकसेषुचेतिनिषेधादिण्नभवति नित्स्वरेप्राप्ते उदात्तइत्यनुवृत्तौ ऊतियूतिजूतिसातिहेतिकीर्तयश्चेतिनिपातनादन्तोदात्तत्वम्। ईमहे ईङ्गतौ श्यनोऽपिबहुलंछन्दसीतिलुक् अस्यधातोर्ङित्वात्तास्यनुदात्तेन्ङिददुपदेशादितिलसार्वधातुकस्यानुदात्तत्वेधातुस्वरएवशिष्यते नचतिङ्ङतिङइतिनिघातः चवायोगेप्रथमेतिनिषेधात्तुत्तरवाक्ययोरनिहितायच्छब्दयोगादन्यथावाक्यापरिपूर्तेस्तिङ्विभक्तेरवश्यमध्याहारात्तदपेक्षयैवप्रथमातिङ्वि-

भक्तिरिति। दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। पार्थिवात् प्रथमख्याने प्रथेतेइतिपृथिवी प्रथेःपिवन्संप्रसारणंचेतिपिवन्प्रत्ययः पिद्गौरादिभ्यश्चेतिङीष् प्रत्ययस्वरेणोदात्तः शेषनिघाते नानुदात्तादिःपृथिवीशब्दः पृथिव्याविकारइत्यर्थे ओरञ्इत्यनुवृत्तावनुदात्तादेश्चेत्यञ् यस्येतिचेतीकारलोपः तद्धितेष्वचामादेरित्यादिवृद्धीरपरत्वम् ञ्नित्यादिर्नित्यमित्याद्युदात्तः । अधि निपातत्वादाद्युदात्तः । इन्द्रं रन्प्रत्ययान्तआद्युदात्तः । महः महतइत्यस्यअकारतकारयोर्लोपश्छान्दसः सावेकाचइतिविभक्तेरुदात्तत्वम्। रजसः नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम्॥१०॥

॥ इतिप्रथमस्यप्रथमेद्वादशोवर्गः ॥ १२ ॥

इन्द्रमित्यादिकंदशर्चंयत्सूक्तंतत्सुरूपकृत्नुमित्यादिपुचतुर्थम् ऋषिच्छन्दोदेवताविनियोगश्च पूर्ववत् विशेषविनियोगस्तूच्यते—महाव्रतेनिष्केवल्यशस्त्रेइन्द्रमिद्गाथिनइतिसूक्तम् तथाचपञ्चमारण्यकेसूत्रितम्—शिरोगायत्रमिन्द्रमिद्गाथिनइति । तथाचतुर्विंशेहनिब्राह्मणाच्छंसिनःशस्त्रे इन्द्रमिद्गाथिनइतिपळहस्तोत्रियस्तृचः चतुर्विंशेहोताजनिष्टेत्युपक्रम्यायाहिसुषुमाहितइन्द्रमिद्गाथिनोबृहदितिसूत्रितत्वात् अतिरात्रेप्रथमेपर्यायेऽच्छावाकशस्त्रेऽयमेवतृचोऽनुरूपः सूत्रितंच— इन्द्रायमद्वनेसुतमिन्द्रमिद्गाथिनोबृहदिति ।

तत्रप्रथमामृचमाह—

इन्द्र॒मिद्गा॒थिनो॑बृ॒हदिन्द्र॑म॒र्केभि॑र॒र्किणः॑ । इन्द्रं॒वाणी॑रनूषत ॥ १ ॥

इन्द्र॑म् । इत् । गा॒थिनः॑ । बृ॒हत् । इन्द्र॑म् । अ॒र्केभिः॑ । अ॒र्किणः॑ ।
इन्द्र॑म् । वाणीः॑ । अ॒नू॒ष॒त॒ ॥ १ ॥

गाथिनः गीयमानसामयुक्ताउद्गातारः इन्द्रमित् इन्द्रमेव बृहत् त्वामिद्धिहवामहेइत्यस्यामृचिउत्पन्नेनबृहन्नामकेनसाम्नाअनूषतस्तुतवन्तः अर्किणः अर्चनहेतुमन्त्रोपेताहोतारः अर्केभिः ऋग्रूपैर्मन्त्रैः इन्द्रमेवानूषतस्तुतवन्तः येत्ववशिष्टाअध्वर्य्वादयस्तेवाणीर्वाग्भिर्यजूरूपाभिरिन्द्रमनूषत अर्कशब्दस्यमन्त्रपरत्वंयास्केनोक्तम्—अर्कोमन्त्रोभवतियदनेनार्चतीति । श्लोकइत्यादिपुसप्तपञ्चाशत्सुवाङ्नामसुवाशीवाणीतिपठितम् ॥ गाथिनः उषिकुषिगार्तिभ्यस्थन्निति गायतेस्थन्प्रत्ययः नित्त्वादाद्युदात्तः गाथाएषांसन्तीतिगाथिनः व्रीह्यादिभ्यश्चेतीनिः प्रत्ययस्वरेणइकारउदात्तः सच सतिशिष्टः। बृहत् बृहता तृतीयैकवचनस्यसुपांसुलुगितिलुक् पृषद्बृहन्महज्जगच्छतृवच्चेत्यन्तोदात्तोनिपातितः । अर्केभिः अर्चपूजायां अर्च्यन्तेएभिरित्यर्कामन्त्राः पुंसिसं-

१ ऋ० सं० ८.७.२७. । २ नि० ५.४. ।

ज्ञायांघःप्रायेणेतिघः चजोःकुघिण्ण्यतोरितिकुत्वं प्रत्ययस्वरेणान्तोदात्तः बहुलंछन्दसीतिभिस ऐसादेशोनभवति।अर्काःस्तुतिसाधनभूतामन्त्राएषांसन्तीत्यर्किणः।वाणीः वृषादीनांचेत्याद्युदात्तः दीर्घाज्जसिचेतिपूर्वसवर्णदीर्घनिषेधस्य वाछन्दसीतिविकल्पितत्वाद्दीर्घत्वम् तृतीयार्थेप्रथमा। अनूषत णुस्तुतौ णोनइतिनत्वं लुङि व्यत्ययेनात्मनेपदं झस्यअदादेशः सिचइडभावः उकारस्यदीर्घत्वंचछान्दसं धातोः कुटादित्वात्सिचोङित्त्वेनगुणाभावः ॥ १ ॥

द्वितीयामृचमाह–

इन्द्रइद्धर्योःसचासम्मिश्लआवचोयुजा । इन्द्रोवज्रीहिरण्ययः ॥ २ ॥

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा ।
इन्द्रः । वज्री । हिरण्ययः ॥ २ ॥

इन्द्रइवइन्द्रएवहर्योः हरिनामकयोरश्वयोः सचासहयुगपत् आसंमिश्लः सर्वतः सम्यक्मिश्रयिता कीदृशयोर्हर्योः वचोयुजाइन्द्रस्यवचनमात्रेणरथेयुज्यमानयोःसुशिक्षितयोरित्यर्थः अयमिन्द्रोवज्रीवज्रयुक्तः हिरण्ययः हिरण्मयः सर्वाभरणभूषितइत्यर्थः ॥ हर्योः हरतइतिहरी इन् नित्त्वादाद्युदात्तः ।सचासहेत्युक्तम्। मिश्रणंमिश्रः मिश्रयतेर्घञ् सम्यक्मिश्रोयस्यासौसंमिश्रः लत्वंछान्दसम् सम्यक्मिश्रयितेत्यर्थः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। वचसा युज्येतेइतिवचोयुजौ तयोःषष्ठीद्विवचनस्यसुपांसुलुगित्याकारादेशः युज्शब्दोधातुस्वरेणान्तोदात्तः कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते। वज्री वज्रमस्यास्ति अतइनिठनौ प्रत्ययस्वरः। हिरण्ययः ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसीति हिरण्मयशब्दस्यमकारलोपोनिपात्यते अकारः प्रत्ययस्वरेणोदात्तः पूर्वेणानुदात्तेनसहैकादेशउदात्तेनोदात्तइत्युदात्तः ॥ २ ॥

तृतीयामृचमाह–

इन्द्रोदीर्घायचक्षसआसूर्यंरोहयद्दिवि । विगोभिरद्रिमैरयत् ॥ ३ ॥

इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि । वि ।
गोभिः । अद्रिम् । ऐरयत् ॥ ३ ॥

अयंइन्द्रोदीर्घायप्रौढायनिरन्तरायचक्षसेदर्शनायदिविद्युलोकेसूर्यमारोहयत् पुरावृत्रासुरेणजगतिपद्मापादितंतमस्तन्निवारणेनप्राणिनांदृष्टिसिद्ध्यर्थं आदित्यंद्युलोकेस्थापितवानि-

त्यर्थः सचसूर्योगोभिःस्वकीयरश्मिभिरद्रिंपर्वतममुखंसर्वंजगवद्र्श्येरयव विशेषेणदर्शनार्थमेरितवान् प्रकाशितवानित्यर्थः अथवा इन्द्रएवगोभिर्जलैर्निमित्तभूतैरद्रिंमेघंव्यैरयवविशेषेणप्रेरितवान् पञ्चदशसंख्याकेपुरश्मिनामसुखेदयः किरणाः गावइतिपठितम् त्रिंशत्संख्याकेपुमेघनामसुअद्रिः ग्रावेतिपठितम् ॥ दीर्घाय प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे चक्षेः सर्वधातुभ्योसुन्नित्यसुन् बहुलग्रहणाव् ख्याञादेशाभावः नित्त्वादाद्युदात्तः । सूर्यं सुवतिमेरयतीतिसूर्यः पूमेरणे धात्वादेःपःसः राजसूयसूर्येत्यादिनाक्यप्प्रत्ययः तस्यरुडागमश्चनिपात्यते क्यपः किस्त्वाद्गुणाभावः पित्त्वादनुदात्तत्वं धातुस्वरएवशिष्यते । रोहयव् रुहेर्ण्यन्ताल्लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावोनिघातश्च । दिवि ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । अद्रिं अदिशदिभूशुभिभ्यःक्रिनितिक्रिन्प्रत्ययः अदन्तिपशवस्तृणादिकमत्रेत्यद्रिः नित्त्वादाद्युदात्तत्वम्। ऐरयत् ईरगतौ ण्यन्ताल्लङ् निघातः ॥ ३ ॥

चतुर्थीमृचमाह—

इन्द्रवाजेपुनोवसहस्रप्रधनेपुच । उग्रउग्राभिरूतिभिः ॥ ४ ॥

इन्द्र । वाजेपु । नः । अव । सहस्रऽप्रधनेपु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥ ४ ॥

हेइन्द्र उग्रः शत्रुभिरप्रधृष्यस्त्वं उग्राभिरप्रधृष्याभिरूतिभिरस्मद्विपयरक्षाभिर्वाजेपुयुद्धेपुनोऽस्मानवरक्ष तथा सहस्रप्रधनेपुच सहस्रसंख्याकगजाश्वादिलाभयुक्तेपुमहायुद्धेप्वपि रक्ष॥वाजेपु वृपादीनांचेत्याद्युदात्तत्वम्।नसःसकारस्यरुत्वोत्वगुणेपुमकृत्यान्तःपादमितिमकृतिभावोनभवति अव्यपरे इतिनिपेधात्।अव अवरक्षणे तिङ्ङतिङइतिनिघातः यद्यपिसहस्रप्रधनेपुचावेत्यध्याहृतांक्रियामपेक्ष्यमथमायाःश्रूयमाणायाःअवेतिक्रियायाश्चवायोगेप्रथमेति निघातनिपेधःप्राप्तः तथापिवाजेप्वित्यत्रचकारस्यल्लुप्तत्वाच्चादिलोपेविभापेतिनिपेधस्यविकल्पितत्वादत्रनिघातःप्रवर्तते । सहस्रशब्दःकर्दमादीनांचेतिमध्योदात्तः । सहस्रप्रधनेपुवाजेपु बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । उग्रः उचसमवाये चस्यगः ऋज्रेन्द्रेतिरन् व्यत्ययेनान्तोदात्तः । ऊतिभिः ऊतियूतीत्यादिनाक्तिन्नुदात्तः ॥ ४ ॥

पञ्चमीमृचमाह—

इन्द्रंवयंमहाधनइन्द्रमर्भेहवामहे । युजंवृत्रेपुवज्रिणम् ॥ ५ ॥ १३ ॥

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे । युजम् । वृत्रेपु । वज्रिणम् । ५ ॥ १३ ॥

वयमनुष्ठातारः महाधनेप्रभूतधननिमित्तमिन्द्रं हवामहे आह्वयामः अर्भेअर्भके स्वल्पेपिधनेनिमित्तभूतेसतिइन्द्रंहवामहे कीदृशमिन्द्रं युजंसहकारिणं समाहितंवा वृत्रेषुशत्रुषुधनलाभविरोधिषुप्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतम् महाधनशब्दोयद्यपिसंग्रामनामसुपठितः तथापि महाधनवचनमत्रसंग्रामइतिबहुव्रीहित्वेसत्यन्तोदात्तत्वासिद्धेर्नात्रतद्गृहीतम् ॥ महाधने महच्चतद्धनंचेतिसमासस्येत्यन्तोदात्तः। अर्भे आर्विगृभ्यांभन् नित्त्वादाद्युदात्तः। हवामहे ह्वेञ्स्पर्धायांशब्देच ञित्त्वात्कर्त्रभिप्रायेआत्मनेपदं लटःस्थानेमहिङ् टितआत्मनेपदानामितिएत्वम् कर्तरिशप् ह्वःसंप्रसारणमित्यनुवृत्तौबहुलंछन्दसीतिसंप्रसारणम् वकारस्यउकारः परपूर्वत्वं गुणावादेशौ अतोदीर्घोयञीतिदीर्घत्वम् तिङ्ङतिङइतिनिघातः । युजं युजसमाधावित्यस्यक्विप् युजेरसमासेइतिनुम्नभवति सहियुजेरितिनिर्देशादिकाररहितस्यनभवतिअनित्यमागमशासनमितिवायुजिर्योगेइत्यस्यापिनुम्नभवति । वृत्रेषु वृतुवर्तने प्रतिकूलतयावर्तन्तेइतिवृत्राणिशत्रुकुलानि स्फायितञ्चीत्यादिनारक्प्रत्ययः किस्वाद्गुणाभावः प्रत्ययस्वरः । वज्रिणं अतइनिठनावितीनिः प्रत्ययस्वरः ॥ ५ ॥

इतिप्रथमस्यप्रथमेत्रयोदशोवर्गः ॥ १३ ॥

इन्द्रमिद्गाथिनइतिसूक्तेपष्ठीमृचमाह—

सनौ॑ वृषन्न॒मुं च॒रुं सत्रा॑दाव॒न्नपा॑ वृधि । अ॒स्मभ्य॒मप्र॑तिष्कुतः ॥ ६ ॥

सः । नः॒ । वृ॒ष॒न् । अ॒मुम् । च॒रुम् । सत्रा॑ऽदाव॒न् । अप॑ । वृ॒धि॒ । अ॒स्मभ्य॑म् । अप्र॑तिऽस्कुतः ॥ ६ ॥

हेसत्रादावन् अस्मदभीष्टानांसर्वेषांफलानांसहप्रदातः अतोव्रीह्यादिनिष्पत्त्यर्थं हेवृषन् वृष्टिप्रदेन्द्र नोऽस्मदर्थं अमुंदृश्यमानंचरुंमेघमपावृधिउत्पाटय तथैवास्मभ्यमस्मदर्थंअप्रतिष्कुतः प्रतिशब्दरहितः यद्यदस्माभिर्याच्यतेतत्रसर्वत्रनेतिप्रतिशब्दंनोच्चारयति अतोऽस्मद्विषयेकदाचिदप्यप्रतिस्खलितः एतदेवाभिप्रेत्ययास्कआह—अप्रतिष्कुतोप्रतिष्कृतोप्रतिस्खलितोवेति । ॥ वृषन् आमन्त्रितनिघातः। अमुं प्रातिपदिकस्वरेणान्तोदात्तः। चरुं चरतीतिचरुः भृमृशीङ्चरित्सरितनिधनिमिमस्जिभ्यउरित्युप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः । सत्रादावन् सत्राशब्दःसहार्थे अभिमतफलजातंसकलंसहददातीतिसत्रादावा आतोमनिन्क्वनिब्वनिपश्चेतिवनिप् आमन्त्रितस्यचेत्याद्युदात्तत्वम् पादादित्वान्ननिघातः । अप निपातस्यचेतिदीर्घः निपातआद्युदात्तः ।

१ नि० ६. १६. ।

वृधि वृञ्वरणे लोटःसिप् तस्यसेर्ह्यपिच्चेतिहिः स्वादिभ्यःश्नुः तस्यबहुलंछन्दसीतिलुक् श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः तस्यङित्त्वात्पूर्वस्यगुणाभावः निघातः । अस्मभ्यं अस्मच्छब्दाद्भ्यसोऽभ्यमितिभ्यमादेशः शेषेलोपइतिदकारलोपः बहुवचनेझल्येदित्येत्वंनभवति अङ्गवृत्तेपुनर्वृत्तावविधिर्निष्ठितस्येत्युक्तम् प्रातिपदिकस्वरेणस्मेत्यकारउदात्तः भ्यसोऽभ्यमिति भ्यमादेशपक्षेशेषेलोपइतिमपर्यन्तशेषस्यादृशब्दस्यलोपः तदाउदात्तनिवृत्तिस्वरेण अभ्यमादेः रकारस्योदात्तत्वम् । अप्रतिष्कुतः केनचिदप्रतिशब्दितः कुङ्शब्दे निष्ठेतिकर्मणिक्तप्रत्ययः प्रतेःप्राक्प्रयोगः पारस्करादेराकृतिगणत्वात्सुडागमः सुषामादेराकृतिगणत्वात्षत्वम् नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

तुञ्जेतुञ्जेयउत्तरेस्तोमाइन्द्रस्यवज्रिणः । नविन्धेअस्यसुष्टुतिम् ॥ ७ ॥

तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ॥ ७ ॥

तुञ्जेतुञ्जेतस्मिन्तस्मिन्फलदातरिदेवान्तरेयेस्तोमाःस्तोत्रविशेषाः उत्तरेउत्कृष्टाःसन्तितैःस्तोमैः सर्वैरपिवज्रिणोवज्रयुक्तस्यास्येन्द्रस्यसुष्टुतिंयोग्यांशोभनस्तुतिंनविन्धेनविंदामि इन्द्रस्यात्यन्तंगुणबाहुल्येनदेवान्तरेपूत्तमत्वेनप्रसिद्धान्यपिस्तोत्राणिनपर्याप्तानीत्यर्थः एतामृचंयास्कएवंव्याचष्टे—तुञ्जस्तुञ्जतेर्दानकर्मणः दानेदानेयउत्तरेस्तोमाइन्द्रस्यवज्रिणोनास्यतैर्विंदामिसमाप्तिंस्तुतेरिति॥ तुञ्जेतुञ्जे तुञ्जतिर्दानकर्मेत्युक्तम् ततःकर्तरिपचाद्यच् चितइत्यन्तोदात्तत्वम् नित्यवीप्सयोरितिद्विर्भावः तस्यपरमाम्रेडितमितिद्वितीयस्याम्रेडितसंज्ञा अनुदात्तंचेत्यनुदात्तत्वं दातरिदातरीत्यर्थः निरुक्तेतुदानेदानेइत्यर्थतोव्याख्यानम् ।उत्तरे तॄप्लवनतरणयोः भावेऋदोरप् उच्छब्दउत्कृष्टवचनः उत्कृष्टस्तरोयस्येतिबहुव्रीहिः उच्छब्दोनिपाताआद्युदात्ताइत्याद्युदात्तः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । स्तोमाः अर्तिस्तुस्वित्यादिनास्तोमशब्दोमन्नन्तोनित्त्वादाद्युदात्तः । विन्धे विदॢलाभे लट् स्वरितेत्त्वादात्मनेपदं उत्तमैकवचनमिट् तुदादिभ्यःशः शेमुचादीनामितिनुम् दकारस्य व्यत्ययेनधकारः अस्यप्रकृतस्येन्द्रस्यपरामर्शादन्वादेशेइदमोऽश् शित्वात्सर्वादेशोऽनुदात्तः। सुष्टुतिं ष्टुञ्स्तुतौ धात्वादेःषःसइतिसत्वं स्त्रियांक्तिन्निति भावेक्तिन् सुइत्युदात्तेनोपसर्गेणप्रादिसमासःउपसर्गात्सुनोतीत्यादिनाषत्वम् अत्राव्ययपूर्वपदप्रकृतिस्वरत्वेनसोःप्राप्तमुदात्तत्वंबाधित्वा ग-

१ नि० ६. १८ ।

तिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वेन धातोरुदात्तत्वे प्राप्ते तदपवादे [illegible] कृत्स्वनितिकृत्यता-वित्यनन्तरस्य गतिसंज्ञकस्य सोरेवोदात्तत्वेन भवितव्यम् तत्तु मन्क्तिन्व्याख्यानशयनासनस्थान-याजकादिक्रीताइत्युत्तरपदान्तोदात्तेन बाध्यते तथाच सुहवांसुष्टुती हुवे वृष्णे चोदस्व सुष्टुतिं यास्ते-राके सुमतय इत्यादावन्तोदात्तत्वमित्याहुः यथातु मन्क्तिन्नित्यादौ वृत्तावुक्तं तथैव तत्र घटत इति लक्ष्यते तत्र हि कारकाद्दत्तश्रुतयोरेवाशिषीत्यतः कारकादित्यनुवृत्तेः पाणिनिकृतिरित्यादावेव मन्क्तिन्नित्यादिसूत्रमित्युक्तम् कारकादित्येव प्रकृतिः प्रहृतिरिति च प्रत्युदाहृतम् स्यादेतत् स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूताङ्गमभिधीयते सुशब्देन च करणमेव विशेष्यते न धात्वर्थः तथाच-सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थविशेषण-मेवेति तत्प्रत्युदाहरणोपपत्तिरिति न एवं सति सुशब्दस्य क्रियायोगाभावात् उपसर्गाः क्रियायो-ग इत्युक्ता उपसर्गसंज्ञा न स्यात् तथाच उपसर्गात्सुनोतीति सुवतीत्यादिना षत्वं न स्यात् ननु क्तिना करणमभिधीयते क्रियासाधनं च करणं तथाच करणविशेषणस्यापि सुशब्दस्य करणान्तर्गतक्रिया-योगादुपसर्गता भविष्यतीति न तथा सति यत्क्रियायुक्तास्तं प्रत्युपसर्गसंज्ञका इति करोत्यर्थमेव प्रति सोरुपसर्गता ननु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति या हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति एवं च स्तुधात्वर्थसंबन्धा-च्चं प्रत्युपसर्गत्वेन षत्वमपि भविष्यति तद्द्वारा करणविशेषणत्वात्कारकवचनोऽपि सुशब्दो भविष्य-तीति वृत्त्यविरोधेनैव मन्क्तिन्नादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति प्रकृतिः प्रहृतिरित्यत्र भा-वे क्तिन्प्रत्युदाहृतेति न तत्र प्रशब्दस्य करणपरत्वम् करणे क्तिन् उदाहरणेऽपि धात्वर्थमात्रविशेषणत्वे-न विवक्षितान तद्द्वारा प्रत्ययार्थविशेषणता पीति तत्प्रत्युदाहरणत्वोपपत्तिरिति सुष्टुतिरित्यत्र पुनः क्तिन्नभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति न किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः उत श्रुत्यैकं विशिनष्टि अर्थादितरदिति यदाप्युभय-परत्वं तदापि किं यौगपद्येन उत क्रमेणेति आद्ये प्रतिविशेष्यं विशेषणपदावृत्तिरिति प्रसंगः द्वितीये विरम्य व्यापारापातः नच शब्दबुद्धिकर्मणां विरम्य व्यापारः कथंचिद् दृष्ट इष्टो वा अतो न श्रुत्योभय-परत्वं अथैकत्र श्रुत्या तात्पर्यम् अपरत्र त्वर्थादिति तत्र धात्वर्थसंबन्धस्यार्थिकत्वे षत्वासिद्धिः प्रत्ययार्थसंबन्धस्यार्थिकत्वे मन्क्तिन्नित्यादिस्वरासिद्धिः आर्थिकेनापि कारकसंबन्धेनोदाहरण-त्वाभिधाने प्रकृतिः प्रहृतिरित्यादि प्रत्युदाहरणं न स्यात् श्रुत्या धात्वर्थमात्रसंबन्धस्यापि प्रशब्दस्या-र्थात्तत्करणसंबन्धः केन वारयितुं शक्यत इत्येषा दिक् अत इह प्रत्ययार्थमात्रसंबन्धपरत्वांगीकारे-ण स्वरः सिध्यतु षत्वं तु छान्दसमस्तु शोभनास्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु एवं च न श्रुतु-

१ ऋ० सं० २. ७. १५. । २ ऋ० सं० ६. ५. २५. । ३ ऋ० सं० २. ७. १५. ।

ष्यामित्यन्तोदात्तत्वं भविष्यति अथवासुष्टुस्तुवन्तीति सुष्टुतयइतिकरणभूताऋचः स्तुतिशब्देनोच्यन्ते क्तिच्क्तौचसंज्ञायामितिक्तिच्प्रत्ययेसतिचित्त्वादन्तोदात्तताभविष्यति नचकरणीभूतानामृचांकर्तृप्रत्ययेनक्तिचाकथमभिधानमितिवाच्यम्. काष्ठानिपचन्तीतिवत्तासामपिस्वव्यापारेप्राधान्यविवक्षयाकरणत्वोपपत्तेरिति ॥ ७ ॥

अष्टमीमृचमाह—

वृषा॑यू॒थेव॒वंस॑गः कृ॒ष्टीरि॑य॒र्त्योज॑सा । ईशा॑नो॒अप्र॑तिष्कुतः ॥ ८ ॥

वृषा॑ । यू॒थाऽइ॑व । वंस॑गः । कृ॒ष्टीः । इ॒य॒र्ति॒ । ओज॑सा ।
ईशा॑नः । अप्र॑तिऽस्कुतः ॥ ८ ॥

वृषाकामानांवर्षितेन्द्रओजसास्वकीयबलेनानुग्रहीतुंकृष्टीर्मनुष्यानियर्तिप्राप्नोति कीदृश इन्द्रः ईशानः समर्थः अप्रतिष्कुतः प्रतिशब्दरहितः याच्यमानेनपरिहरतीत्यर्थः इन्द्रस्य दृष्टान्तः—वंसगोवननीयगतिर्वृषभोयूथेव गोयूथानियथाप्राप्नोतितद्वत् ॥ वृषा कनिन्युवृषितक्षिधन्विराजिधृप्रतिदिवइतिवर्षतेःकनिन्प्रत्ययः कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । यूथाइव युवन्तिमिश्रीभवन्तीतियूथानि युमिश्रणामिश्रणयोः तिथपृष्ठगूथयूथप्रोथाइतिथक्प्रत्ययान्तोनिपातितः निपातनाद्दीर्घत्वं प्रत्ययस्वरेण अकारउदात्तः शेश्छन्दसिबहुलमितिलुक् इवेननित्यसमासोविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचवक्तव्यमितिसमासेपिसएवस्वरः । वंसगः पृषोदरादित्वादभिमतरूपस्वरसिद्धिः कर्षन्तीतिकृष्टयः क्तिच्क्तौचसंज्ञायामितिक्तिच् चित्त्वादन्तोदात्तः । इयर्ति ऋसृगतौ तिप् शपःश्लुः श्लावितिद्विर्भावः अभ्यासस्यउरदत्वहलादिशेषौ अर्तिपिपर्त्योश्चेत्यकारस्यइकारः अभ्यासस्यासवर्णेइतीयङादेशः अङ्गस्यगुणोरपरत्वम् । ओजसा उब्जेर्बलेबलोपश्चेत्यसुन् तत्सन्नियोगेनबकारलोपः लघूपधगुणः नित्त्वादाद्युदात्तः । ईशानः ईशऐश्वर्ये लटःशानच् अदिप्रभृतिभ्यःशपइतिशपोलुक् चितइत्यन्तोदात्तंबाधित्वा अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेनधातुस्वरएवशिष्यते । अप्रतिष्कुतः अप्रतिशब्दितः कुशब्देकर्मणिक्तः पारस्करादेराकृतिगणत्वात्सुडागमः सुषामादित्वात्षत्वम् नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

यएक॑श्चर्षणी॒नांवसू॑नामिर॒ज्यति॑ । इन्द्रः॒पञ्च॑क्षिती॒नाम् ॥ ९ ॥

यः । एकः॑ । च॒र्ष॒णी॒नाम् । वसू॑नाम् । इ॒र॒ज्यति॑ । इन्द्रः॑ । पञ्च॑ ।
क्षि॒ती॒नाम् ॥ ९ ॥

यइन्द्रः स्वयमेकएव चर्षणीनांमनुष्याणांइरज्यति ईष्टे तथावसूनां धनानांइरज्यति सइन्द्रः पञ्च निषादपञ्चमानांक्षितीनांनिवासार्हाणांवर्णानां अनुग्रहीतेतिविशेषः॥एकः इणूगतौ इण्भीकापाशल्यतिमर्चिभ्यःकन्निितिकन् बाहुलकात्कलोपाभावः नित्त्वादाद्युदात्तत्वम्। चर्षणीनां प्रातिपदिकस्वरेणान्तोदात्तः अन्तोदात्तादित्यनुवृत्तौनामन्यतरस्यामितिविभक्तेरुदात्तत्वम्। वसूनाम् निदित्यनुवृत्तौ शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः नित्त्वादाद्युदात्तः। इरज्यति कण्ड्वादिषु ईरजईर्ष्यायां अनैश्वर्यार्थः कण्ड्वादिभ्योयक् प्रत्ययस्वरेणान्तोदात्तः।पञ्च पचिव्यक्तीकरणे पचेश्चेतिकनिन् नित्त्वादाद्युदात्तः। क्षितीनाम् प्रातिपदिकस्वरेणान्तोदात्तः नामन्यतरस्यामितिविभक्तेरुदात्तत्वम्॥ ९ ॥

आश्विनंशंसिष्यन्निन्द्रंवोविश्वतस्परीतिजुहुयात् संस्थितेष्वाश्विनायस्तुवतइतिखण्डेबण्महांअसीतिद्वाभ्यामिन्द्रंवोविश्वतस्परीतिसूत्रितम् चतुर्विंशेहनिप्रातःसवनेब्राह्मणाच्छंसिनइन्द्रंवोविश्वतस्परीत्यारंभणीया चतुर्विंशइत्युपक्रम्य ऋजुनीतीनोवरुणइन्द्रंवोविश्वतस्परीतिसूत्रितम्।

तामेतांदशमीमृचमाह—

इन्द्रं॑वो वि॒श्वत॒स्परि॒ हवा॑महे॒ जने॑भ्यः। अ॒स्माक॑मस्तु॒ केव॑लः ॥१०॥१४॥

इन्द्र॑म्। वः॒। वि॒श्वतः॑। परि॑। हवा॑महे। जने॑भ्यः। अ॒स्माक॑म्। अ॒स्तु॒। केव॑लः ॥ १० ॥ १४ ॥

हेऋत्विग्यजमानाः विश्वतः सर्वेभ्योजनेभ्यः परिउपर्यवस्थितमिन्द्रं वोयुष्मदर्थंहवामहेआह्वयामः अतःसइन्द्रोस्माकंकेवलोसाधारणोस्तु इतरेभ्योप्यधिकमनुग्रहमस्मासुकरोत्वित्यर्थः॥ इन्द्रं रन्प्रत्ययान्तोनित्त्वादाद्युदात्तः।वः अनुदात्तंसर्वमित्यनुवृत्तौबहुवचनस्यवस्नसाविवित्वस्। विश्वतः लितीतिप्रत्ययात्पूर्वमुदात्तम्। परि निपातत्वादाद्युदात्तः संहितायांपञ्चम्याः परावध्यर्थेइतिविसर्जनीयस्यसत्वम् । हवामहे ह्वेञःशपि बहुलंछन्दसीतिसंप्रसारणपरपूर्वत्वे गुणावादेशौ। जनेभ्यः जन्यन्तेइतिजनाःजनयतेःकर्मणिघञ् जनिवध्योश्चेत्युपधायावृद्ध्यभावः ञित्त्वादाद्युदात्तत्वम् । अस्माकं अस्मच्छब्दोन्तोदात्तः शेषेलोपइत्यन्त्यलोपपक्षेसामआकमित्याकारेणएकादेशउदात्तः टिलोपपक्षेउदात्तनिवृत्तिस्वरेणआकारउदात्तः । केवलः वृषादेराकृतिगणत्वादाद्युदात्तः ॥ १० ॥

इतिप्रथमस्यप्रथमेचतुर्दशोवर्गः ॥ १४ ॥

इतिप्रथमेमण्डलेद्वितीयोनुवाकः ॥ २ ॥

अथसूक्तचतुष्टयात्मकेतृतीयानुवाके ऐन्द्रसानसिमित्यादिकंदशर्चंसूक्तम् सुरूपकृत्नुमित्यादिषुपञ्चसुपञ्चमम् ऋष्यादयस्तुपूर्ववत् विशेषविनियोगस्तुमहाव्रतेनिष्केवल्ये औष्णिहतृचाशीतावेन्द्रसानसिंरयिमित्यादिकेद्वेसूक्ते पञ्चमारण्यके औष्णिहीतृचाशीतिरितिखण्डेशौनकेनसूत्रितम्—सुरूपकृत्नुमूतयइतित्रीण्येन्द्रसानसिंरयिमितिद्वेइति । अतिरात्रेप्रथमपर्यायेऽच्छावाकशस्त्रेऐन्द्रसानसिमितिसूक्तम् सूत्रितंच—इन्द्रमिद्गाथिनोबृहदेन्द्रसानसिमिति दर्शयागेइन्द्रयाजिनःसान्नाय्यस्यानुवाक्याऐन्द्रसानसिमिति उक्तादेवताइत्यस्मिन्खण्डेऐन्द्रसानसिंमसत्राहिपेपुरुहूतशत्रूनितिसूत्रितम् ॥

तस्मिन्सूक्तेवामेतांप्रथमामृचमाह—

ऐन्द्रसानसिंरयिंसजित्वानंसदासहम् । वर्षिष्ठमूतयेभर ॥ १ ॥

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥ १ ॥

हेइन्द्र ऊतयेअस्मद्रक्षार्थंरयिंधनमाभर आहर कीदृशंरयिं सानसिंसंभजनीयंसजित्वानं समानशत्रुजयशीलं धनेनहिशूरान्भृत्यान्संपाद्यशत्रवोजीयन्ते सदासहं सर्वदाशत्रूणामभिभवहेतुम् वर्षिष्ठमतिशयेनवृद्धंप्रभूतमित्यर्थः॥ सानसिं षनषणसंभक्तावित्यस्मादसिप्रत्ययोवृद्धिरन्तोदात्तत्वंच सानसिधर्णसीत्यादिनानिपात्यते । रयिं प्रातिपदिकस्वरेणान्तोदात्तः । सजित्वानं समानानरीन्जेतुंशीलमस्य अन्येभ्योपिदृश्यन्तइतिक्वनिप् उपपदसमासः समानस्यछन्दस्यमूर्धप्रभृत्युदर्केष्विति समानस्यसभावः कृदुत्तरपदप्रकृतिस्वरेणधातुस्वरएवशिष्यते । वर्षिष्ठं वृद्धशब्दादतिशायनेतमबिष्ठनाविति इष्ठन् प्रियस्थिरेत्यादिनावृद्धशब्दस्यवर्षादेशः इष्ठनोनित्त्वादाद्युदात्तत्वम् । ऊतये उदात्तइत्यनुवृत्तौऊतियूतिजूतिसातीत्यादिनाक्तिन्नुदात्तोनिपातितः । भर हग्रहोर्भश्छन्दसीतिहकारस्यभकारः सेमाग्धातोरितिधातोःप्राक्प्रयोक्तव्यस्याङोव्यवहिताश्चेतिछन्दसिव्यवहितप्रयोगः ॥ १ ॥

द्वितीयामृचमाह—

निर्येनमुष्टिहत्ययानिवृत्राऋणधामहै । त्वोतासोन्यर्वता ॥ २ ॥

नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥ २ ॥

येनधनेनसंपादितानांभटानांनिमुष्टिहत्ययानितरांमुष्टिप्रहारेणवृत्राशत्रून् निरुणधामहैनिरुद्धान्करवाम तादृशंधनमाहरेत्यर्थः त्वोतासःत्वयारक्षितावयं अर्वताअस्मदीयेनाश्वेननिरुणधामहाइत्यनुषङ्गः पदातियुद्धेनाश्वयुद्धेनचशत्रून् विनाशयामेत्यर्थः ॥ मुष्टिहत्यया हनस्तचेतिसुबन्तेउपपदेक्यप् तत्सन्नियोगेननकारस्यतकारः कृदुत्तरपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमितिबहुलग्रहणेनत्रिचक्रादीनांछन्दस्यन्तोदात्तत्वाभिधानादन्तोदात्तत्वम् । नि आख्यातसंबद्धस्यापिनेरुपसर्गस्यव्यवहिताश्चेतिव्यवहितप्रयोगः । वृत्रा शेश्छन्दसिबहुलमितिशेर्लोपः नलोपः । रुणधामहै आट्संयोगेनपित्त्वात् श्नसोरल्लोपइत्यकारलोपोनभवति पित्त्वादेवचाख्यातस्यानुदात्तत्वेनविकरणस्यश्नमएवोदात्तत्वंशिष्यते ननुतिङ्ङतिङइतिनिघातेनभवितव्यम् न द्वेह्यत्रतिङ्विभक्ती निम्ऽइयामुष्ट्यानिरुणधामहाइत्यत्रमुख्याश्रुतैका अर्वतानिरुणधामहाइत्यत्रापिनिरुणधामहाइत्यनुषक्ताद्वितीया तयोःसमुच्चयार्थश्चकारोलुप्यते तेन चादिलोपेविभाषेतिप्रथमंयंतिङ्विभक्तिर्ननिहन्यते यथानात्मनांतृप्यति नान्यस्मैददातीत्यत्रहिसमुच्चयार्थस्यचशब्दस्य लोपात्तृप्यतीतिप्रथमातिङ्विभक्तिर्ननिहन्यते ददातीतिद्वितीयातुनिहन्यतएव ननु तत्रद्वेतिङ्विभक्तीश्रूयेते इहपुनरेकैवश्रुतासैवोत्तरत्रानुषज्यतेनान्याश्रूयतइतिद्वितीयाभावात्कथमियंप्रथमा न अनुषङ्गलब्धद्वितीयापेक्षमपिप्राथम्यमुपजीव्यनिघातनिषेधदर्शनात्पुरोडाशंचाधिश्रयत्याज्यंच प्रोक्षणीश्चासादयत्याज्यंचेत्यत्रह्यधिश्रयत्यासादयतीत्याख्यातयोःप्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैवप्राथम्यस्वीकारेणचवायोगेप्रथमेतिनिघातनिषेधोदृष्टइति । त्वयाऊतारक्षितास्त्वोतासः मत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशेदकारलोपश्छान्दसः अवतेर्निष्ठायामिडभावश्च ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यूठ् एत्येधत्यूठ्सुइतिवृद्ध्यभावश्छान्दसः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरेणआकारउदात्तः एकादेशउदात्तेनोदात्तइत्युदात्तः । अर्वता अर्वतिगच्छतीत्यर्वा अर्वगतौ अन्येभ्योऽपिदृश्यन्तइतिवनिप्प्रत्ययः नेड्वशिकृतीतीट्प्रतिषेधः लोपोव्योर्वलीतिवकारलोपः अर्वणस्त्रसावनञइतितकारः वनिपःपित्त्वाद्धातुस्वरएव ॥ २ ॥

तृतीयामृचमाह—

इन्द्र॒त्वोता॑स॒आव॒यंवज्रं॑घ॒नाद॑दीमहि । जये॑म॒संयु॒धिस्पृधः॑ ॥ ३ ॥

इन्द्र॑ । त्वाऽऊ॑तासः । आ । व॒यम् । वज्र॑म् । घ॒ना । द॒दी॒म॒हि॒ । जये॑म । सम् । यु॒धि । स्पृधः॑ ॥ ३ ॥

१ तै० सं. २.५.४. । २ तै० सं. १.६.९. ।

हेइन्द्रत्वोतासस्त्वयापालितावयंघनाघनंशत्रुप्रहरणायात्यन्तदृढं वज्रमायुधमाददीमहिस्वीकुर्मः तेनचवज्रेणयुधियुद्धेस्पृधः स्पर्धमानान्शत्रून्संजयेमसम्यक्जयेम ॥ त्वोतासः उक्तम्।वज्रं वजव्रजगतौ ऋज्रेन्द्राग्रेत्यादिनावज्रशब्दोरन्प्रत्ययान्तोनिपातितः। घना घनःकाठिन्यंतदस्यास्तीति अर्शआदित्वादच् चित्त्वादन्तोदात्तः सुपांसुलुगितिडादेशः। ददीमहि डुदाञ्दाने प्रार्थनायांलिङ् क्रियाफलस्यकर्तृगामित्वात्स्वरितञितइत्यात्मनेपदोत्तमपुरुषबहुवचनं ददीमहिजुहोत्यादित्वाच्छपःश्लुः श्लाविति‌द्विर्भावः लिङःसलोपोऽनन्त्यस्येतिसलोपः श्नाभ्यस्तयोरातइत्याकारलोपः। जयेम जिजये शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वराद् धातुस्वरएवशिष्यते छन्दसिपरेपीतिसमःपरमयोगः। युधि युधसंप्रहारे संपदादित्वाद्भावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्। स्पर्धन्तइतिस्पृधः स्पर्धसंघर्षे क्विप्चेतिक्विप् बहुलंछन्दसीतिरेफस्य संप्रसारणमृकारः अकारलोपश्च ॥ ३ ॥

चतुर्थीमृचमाह—

वयंशूरेभिरस्तृभिरिन्द्रत्वयायुजावयम्। सासह्यामपृतन्यतः ॥ ४ ॥

वयम्। शूरेभिः। अस्तृऽभिः। इन्द्र। त्वया। युजा। वयम्।
ससह्याम। पृतन्यतः ॥ ४ ॥

वयंकर्मानुष्ठातारः शूरेभिःशौर्ययुक्तैः अस्तृभिरायुधानांप्रक्षेप्तृभिर्भटैःसंयुज्येमहीतिशेषः हेइन्द्र तादृशाभटसहितावयंयुजासहायभूतेनत्वयापृतन्यतः सेनामिच्छतः शत्रून्सासह्याम अतिशयेनाभिभवेम ॥ शूरेभिः शुश्रुगतौ ऋन्नित्यनुवृत्तौशुषिचिञ्मीनांदीर्घश्चेतिक्रन् किरत्वाद्गुणाभावः नित्त्वादाद्युदात्तत्वम् बहुलंछन्दसीत्यैसोनिषिद्धत्वाद्बहुवचनेझल्येदित्येत्वं सहयोगेतृतीयावत्वाद्वयमित्यस्मत्पदसमभिव्याहाराच्चवयंसंयुज्येमहीतिगम्यम् विनापिसहशब्देनवृद्धोयूनेतिनिपातनादितिसुकम्। अस्तृभिः शस्त्रासप्रक्षेपणशीलैः तद्धर्मभिस्तत्साधुकारिभिर्वा असुक्षेपणे तृन्नितिताच्छील्यादिषुतृन् नित्त्वादाद्युदात्तः रधादिभ्यश्चेतिविकल्पविधानादयं इडभावः यस्तुतस्तु रधादावभावात्तृन्चौशंसिक्षदादिभ्यइत्यनेनअनिट्तृन्। त्वया युष्यसिभ्यांमदिक् किरत्वाद्गुणाभावः युष्मद् प्रत्ययस्वरेणअकारउदात्तः तृतीयैकवचनंटा त्वमावेकवचनेइतिमपर्यन्तस्यत्वादेशः अतोगुणेइतिपररूपत्वम् एकादेशउदात्तेनोदात्तइत्युदात्तः। युजा अश्रुयुजिऋञ्चांचेतिक्विन् सावेकाचइतिविभक्तेरुदात्तत्वम्। सासह्याम भृशंपुनःपुनःसहेमहि षहमर्षणे

१ पदकालेहस्वश्छान्दसः।

धात्वादेःषःसः धातोरेकाचोहलादेःक्रियासमभिहारेयङ् यङोचिचेतिलुक् सन्यङोरितिद्विर्भावः हलादिशेषः दीर्घोकितइतिदीर्घः प्रार्थनायांलिङ् चर्करीतंपरस्मैपदमदादिवच्चद्रष्टव्यमितिपरस्मैपदोत्तमपुरुषबहुवचनंमस् कर्तरिशप् अदादिवद्भावाल्लुक् नित्यंङितइत्यन्त्यसकारलोपः यासुट्परस्मैपदेषूदात्तोङिच्चेतियासुट् लिङःसलोपोऽनन्त्यस्येतिसकारलोपः सतिशिष्टत्वाद्यासुटएवोदात्तत्वंशिष्यते पादादित्वान्निघातः। पृतन्यतः योद्धुंपृतनामात्मनइच्छतः सुपआत्मनःक्यच् इतिक्यच् सनाद्यन्ताधातवइतिधातुसंज्ञायां सुपोधातुप्रातिपदिकयोरितिसुपोलुक् क्यचिचेत्यनुवृत्तौ कव्यध्वरपृतनस्यर्चिलोपइत्याकारलोपः पृतन्यधातुश्चित्त्वादन्तोदात्तः उपरिलटःशत्रादेशः कर्तरिशप् पित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणउदात्तेनसहैकादेशउदात्तेनोदात्तइतिपृतन्यच्छब्दोन्तोदात्तः शसःसुप्स्वरेणानुदात्तस्यान्तोदात्तादित्यनुवृत्तौ शतुरनुमोनद्यजादीइत्युदात्तत्वम्॥ ४॥

पञ्चमीमृचमाह—

म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑। द्यौर्न प्र॑थि॒ना शवः॑॥ ५॥ १५॥

म॒हान्। इन्द्रः॑। प॒रः। च॒। नु। म॒हि॒ऽत्वम्। अ॒स्तु। व॒ज्रिणे॑।
द्यौः। न। प्र॒थि॒ना। शवः॑॥ ५॥ १५॥

अयमिन्द्रोमहान् शरीरेणप्रौढः परश्चगुणैरुत्कृष्टोपि नु किञ्च वज्रिणेवज्रयुक्तायेन्द्रायमहित्वंपूर्वोक्तंद्विविधमाधिक्यंसर्वदास्तु स्वभावसिद्धस्यापिभक्त्याप्रार्थनमेतत् किञ्च द्यौर्न द्युलोकइव शवोबलमिन्द्रस्यसेनारूपंप्रथिनाप्रथिम्नापृथुत्वेनयुज्यतामितिशेषः यथाद्युलोकःप्रभूतः एवमस्यसेनाप्रभूता नुशब्दोयद्यपिक्षिप्रनामसु नुमक्ष्विति पठितः तथाप्यत्रतस्यान्वयाभावान्निपातत्वेनानेकार्थत्वसंभवाच्चसमुच्चयार्थोऽत्रगृहीतः नशब्दोलोकेप्रतिषेधार्थएव स्वाध्यायेतुप्रतिषेधार्थउपमानार्थश्चेतिद्विविधः येनपदेनान्वीयतेतस्मात्पूर्वंप्रयुज्यमानः प्रतिषेधार्थः उपरिष्टात्प्रयुज्यमानउपमानार्थः तथाचयास्कउदाहरति—उभयमन्वध्यायंनेन्द्रंदेवममंसतेतिप्रतिषेधार्थीयःपुरस्तादुपचारः तस्ययत्प्रतिषेधति दुर्मदासोनसुरायामित्युपमार्थीयउपरिष्टादुपाचारस्तस्ययेनोपमिमीतइति। अत्रोपमेयवाचिनोद्युशब्दस्यापिप्रयुक्तत्वादुपमार्थःस्वीकृतः अष्टाविंशतिसंख्याकेषुबलनामस्वोजःपाजःशवइतिपठितम्॥ महानितिनकारस्यसंहितायां दीर्घादटिसमानपादेइतिरुत्वम् आतोटिनित्यमितिपूर्वस्याकारस्यानुनासिकः भोभगोअघोअपूर्वस्ययोशीतियकारः तस्यलोपः तस्यासिद्धत्वात्स्वरसंधिर्नभवति महेरिन्नित्यौणादिकइन् महेर्भा-

नि० ११. २७.।

वोमहित्वं त्वइतिप्रत्ययस्वरेणोदात्तः सएवशिष्यते वज्रिणइकारःप्रत्ययस्वरेणोदात्तः द्यौः द्योशब्दःप्रातिपदिकस्वरेणान्तोदात्तः गोतोणिदितिविभक्तेर्णित्त्वादचोञ्णितीतिवृद्धिरान्तरतम्यादुदात्तैवभवति। प्रथिना प्रथिम्ना पृथोर्भावइत्यर्थेपृथ्व्यादिभ्यइमनिज्वेतीमनिच् रऋतोहलादेर्लघोरितिऋकारस्यरभावः तुरिष्ठेमेयःस्वित्यनुवृत्तौटेरितिटिलोपः प्रथिमनशब्दश्चित्त्वादन्तोदात्तः तृतीयैकवचनेभत्वादल्लोपोनइत्यकारलोपश्च छान्दसोमकारलोपः अनुदात्तस्यचयत्रोदात्तइतिविभक्तेरुदात्तत्वम्। शवः नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम्॥ ५॥

इतिप्रथमस्यप्रथमेपञ्चदशोवर्गः॥ १५॥

ऐन्द्रसानसिमितिसूक्तेषष्ठीमृचमाह—

**समो॒हे वा॒ य आश॑त॒ नर॑स्तो॒कस्य॒ सनि॑तौ। विप्रा॑सो वा धि॒या॒यवः॑॥६॥**

सम्ऽओ॒हे। वा॒। ये। आश॑त। नरः॑। तो॒कस्य॑। सनि॑तौ।
विप्रा॑सः। वा॒। धि॒या॒ऽयवः॑॥ ६॥

येनरः पुरुषाः समोहेसंग्रामे तोकस्यापत्यस्यसनितौलाभेवा आशतव्याप्तवन्तः इन्द्रं स्तुत्वेतिशेषः वाअथवा विप्रासोमेधाविनः धियायवः प्रज्ञाकामाः सन्तआशततेसर्वेलभन्तइत्यध्याहारः रणइत्यादिषुपद्चत्वारिंशत्संग्रामनामसु समोहेसमिथःइतिपठितम् पञ्चदशस्वपत्यनामसु तुक्तोकमितिपठितम्॥ समोहेप्रातिपदिकान्तोदात्तत्वम्। वा चादयोनुदात्ताइत्यनुदात्तः। आशत अशूव्याप्तौ छान्दसः च्लेर्लोपः आडागमउदात्तः सतिशिष्टत्वेनसएवशिष्यते। नरः प्रातिपदिकस्वरः। सनितौ स्त्रियांक्तिन् तितुत्रेष्वग्रहादीनामितिवचनात्त्रिगृहीतीर्निपठितेरितिषदिडागमः। विप्रासः ऋज्रेन्द्रेत्यादिनाविप्रशब्दोरन्प्रत्ययान्तोनिपातितः। धियायवः धीधारणे धीयते धार्यते अवबुध्यते श्रुतमर्थजातमनयेतिधियाप्रज्ञा तामात्मनइच्छन्तीतिक्यच् क्याच्छन्दसीत्युप्रत्ययः अतोलोपः प्रत्ययस्वरेणोदात्तः॥ ६॥

सप्तमीमृचमाह—

**यः कु॒क्षिः सो॑म॒पात॑मः समु॒द्र इ॑व॒ पिन्व॑ति। उ॒र्वीरापो॒ न का॒कुदः॑॥ ७॥**

यः। कु॒क्षिः। सो॒म॒ऽपात॑मः। स॒मु॒द्रःऽइ॑व। पिन्व॑ति। उ॒र्वीः।
आपः॑। न। का॒कुदः॑॥ ७॥

यः कुक्षिरस्येन्द्रस्यउदरप्रदेशः सोमपातमः अतिशयेनसोमस्यपाता सकुक्षिः समुद्रइवपिन्वतेवर्धते सेचनार्थोधातुरौचित्येनवृद्धिंलक्षयति काकुदोमुखसंबन्धिन्यउर्वीर्बह्व्यः आपोन जलानीवजिह्वासंबद्धमास्योदकंयथाकदाचिदपिनशुष्यति तथेन्द्रस्यकुक्षिः सोमपूरितोनशुष्यतीत्यर्थः यद्यपिश्लोकइत्यादिपुसप्तपञ्चाशत्सुवाङ्नामसुकाकुज्जिह्वेतिपठितम् तथाप्युदकसंबन्धसिद्ध्यर्थमत्रकाकुच्छब्देनमुखमुपलक्षितम् संबन्धवाचिनस्तद्धितस्यात्रछान्दसोलोपोद्रष्टव्यः ॥ सोमपातमः सोमंपिबतीतिसोमपाः आकारोधातुस्वरेणोदात्तः कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते तमपःपित्त्वादनुदात्तत्वम् । समुद्रशब्दःप्रातिपदिकत्वादन्तोदात्तः इवेनविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेति । पिन्वते पिविसेचने इदितोनुम्धातोरितिनुमागमः शपःपित्त्वेनानुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते । उर्वीःउरुशब्दोऽन्तोदात्तः वोतोगुणवचनादितिङीप् यणादेशःउदात्तयणोहल्पूर्वादितीकारउदात्तः जसासहएकादेशउदात्तेनोदात्तइत्येकादेशउदात्तः । आपः प्रातिपदिकस्वरः । काकुदः प्रातिपदिकस्वरेणान्तोदात्तः ॥ ७ ॥

अभिप्लवषडहगतेपृष्ठ्येपुतृतीयसवनेब्राह्मणाच्छंसिनएवाह्यस्यसूनृतेत्यनुरूपस्तृचः एह्यूषुब्रवाणितइतिखण्डे—अथब्राह्मणाच्छंसिनइत्युपक्रम्यएवाह्यसिवीरयुरेवाह्यस्यसूनृतेतिसूत्रितम्।

तस्मिंस्तृचेप्रथमांसूक्तेऽष्टमीमृचमाह—

एवाह्यस्यसूनृताविरप्शीगोमतीमही । पक्वाशाखानदाशुषे ॥ ८ ॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥ ८ ॥  25013

अस्येन्द्रस्यसूनृताप्रियसत्यरूपावाक्दाशुषेहविर्दत्तवतेयजमानायतदर्थंएवाहिएवंखलु अनन्तरपदवक्ष्यमाणगुणोपेताभवतीत्यर्थः कीदृशीविरप्शीविविधरपणोपेतवाक्ययुक्ता बहुविधोपचारवादिनीत्यर्थः गोमती बह्वीभिर्गोभिरुपेतागोप्रदेत्यर्थः अतएवमहीमहतीपूज्या यथोक्तवाचोदृष्टान्तः—पक्वाशाखान यथाबहुभिःपक्वैःफलैरुपेतापनसवृक्षादिशाखाप्रीतिहेतुस्तद्वत् यद्यपिमहन्नामसुबाधविरप्शीतिपठितम् तथाप्यत्रमहीत्यनेनपुनरुक्तिप्रसंगादवयवार्थोगृहीतः ॥ एव एवमादीनामन्तइत्यन्तोदात्तः संहितायांनिपातस्यचेतिदीर्घः । हि निपातआद्युदात्तः । अस्य प्रकृतस्येन्द्रस्यपरामर्शादिदमोन्वादेशेइत्यादिनाअशादेशोनुदात्तइतिसर्वानुदात्तः । ऊनपरिहाणे सुतरामूनयत्यप्रियमितिसूनृ साचासावृतासत्याचेतिसूनृताप्रियसत्यावाक् परादिश्छन्दसिबहुलमितिऋकारउदात्तः । विरप्शी विविधंरपणंविरप् रपलपव्यक्तायांवाचि संपदादित्वाद्भावेक्विप् त-

देपामस्तीतिविरप्शानिवाक्यानितानियस्यांवाचिसन्तिसावाकूविरप्शिनी अतइनिठनावितीनिः यस्येतिचेत्यकारलोपः ऋन्नेभ्योङीवितिङीप् इकारःप्रत्ययस्वरेणोदात्तः नकारलोपश्छान्दसः सवर्णदीर्घएकादेशउदात्तेनोदात्तइत्यनुदात्तः । गावःअस्यांसन्तीतिगोमती मतुम्ङीपौपित्त्वादनुदात्तौप्रातिपदिकस्वरएवशिष्यते । मही महती उगितश्चेतिङीप् तस्यपित्त्वादनुदात्तत्वेप्राप्तेशतुरनुमोनद्यजादीइत्यत्रबृहन्महतोरुपसंख्यानमित्युदात्तत्वं अच्छब्दलोपश्छान्दसः। पक्वा डुपचष्पाके निष्ठेतिक्तप्रत्ययः पचोवइतिवत्वं चोःकुरितिकुत्वं प्रत्ययस्वरेणान्तोदात्तः टापासवर्णदीर्घएकादेशउदात्तेनोदात्तइत्याद्युदात्तः। शाखा शाखृव्याप्तौ पचाद्यच् चित्त्वादन्तोदात्तेप्राप्ते वृषादेराकृतिगणत्वाद्वृषादित्वादाद्युदात्तत्वम् । दाशुषे दाशृदाने दाश्वान्साह्वान्मीढ्वांश्चेतिनिपातनात्क्वसौइडभावोद्विर्वचनाभावश्च चतुर्थ्येकवचनेयचिभमितिभसंज्ञायांवसोःसंप्रसारणमितिसंप्रसारणंवकारस्यउकारः परपूर्वत्वं शासिवसिघसीनांचेतिषत्वम् प्रत्ययस्वरेणोकारउदात्तः ॥ ८ ॥

नवमीमृचमाह—

ए॒वा हि ते॒ विभू॑तय ऊ॒तय॑ इन्द्र॒ माव॑ते । स॒द्यश्चि॒त्सन्ति॑ दा॒शुषे॑ ॥ ९ ॥

ए॒व । हि । ते॒ । विऽभू॑तयः । ऊ॒तयः॑ । इ॒न्द्र॒ । माऽव॑ते । स॒द्यः । चि॒त् । सन्ति॑ । दा॒शुषे॑ ॥ ९ ॥

हेइन्द्र तेतवविभूतयऐश्वर्यविशेषाः एवाहिएवंविधाःखलु किंविधाइतितदुच्यते मावते मत्सदृशायदाशुषेहविर्दत्तवतेयजमानायऊतयस्त्वदीयरक्षारूपाः सद्यश्चित्सन्ति यदाकर्मानुष्ठितं तदैवभवन्ति ॥ मावते मत्सदृशाय वतुप्प्रकरणेयुष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानमित्यस्मच्छब्दान्मतुप् मपर्यन्तस्यप्रत्ययोत्तरपदयोश्चेतिमादेशः अदृशब्देनसहअतोगुणेइतिपररूपत्वं दृग्दृशवतुष्विनिअनुवृत्तावासर्वनाम्नइतिदकारस्याकारः सवर्णदीर्घत्वं वतुपःपित्त्वात्प्रातिपदिकस्वरएवशिष्यते । सद्यः समानेद्यवीत्यर्थेसद्यःपरुत्परार्यैषमइत्यादिनानिपातितम् प्रत्ययस्वरेणान्तोदात्तत्वम्। चित् चादयोनुदात्ताइत्यनुदात्तः । सन्ति असभुवि लटःस्थानेझि झोऽन्तः अदिप्रभृतिभ्यःशपइतिशपोलुक् तिङ्प्रत्ययाद्युदात्तत्वं प्रत्ययलोपेप्रत्ययलक्षणमिति श्नसोरल्लोपइत्यकारलोपःश्नसोर्मितिनभवति वर्णाश्रयविधौप्रत्ययलक्षणंनास्तीतिनिषेधात् । दाशुषे गतमर्थेगतम् ॥ ९ ॥

दशमीमृचमाह—

एवाह्यस्य काम्या स्तोमं उक्थं च शंस्या। इन्द्राय सोमपीतये॥१०॥१६॥

एव। हि। अस्य। काम्या। स्तोमः। उक्थम्। च। शंस्या।
इन्द्राय। सोमऽपीतये॥ १०॥ १६॥

अस्येन्द्रस्य स्तोमः सामसाध्यं स्तोत्रं उक्थं च ऋक्साध्यं शस्त्रमपि एवाहि एते उभे एवंविधे खलु किंविधे इति तदुच्यते काम्या कामयितव्ये शंस्या ऋत्विग्भिः शंसनीये किमर्थं शंसनमिति तदुच्यते इन्द्राय सोमपीतये इन्द्रस्य सोमपानार्थम्॥ एवाहस्यत्यव्यवहितमत्रेगतम्। काम्या कर्मणिइन्नादचोमव् णेरनिटीतिणिलोपः तित्स्वरितमितिस्वरितेमाप्तेयतोनावइत्याद्युदात्तत्वं सुपोडादेशः। स्तोमः अर्तिस्तुसु इत्यादिनामन्प्रत्ययः। उक्थं वचपरिभाषणे पातृतुदिवचिरिचिसिचिभ्यस्थगितिथक् किच्वात्संप्रसारणंपरपूर्वत्वगुणाभावौ। शंस्या शंसुस्तुतौ ण्यन्तादचोयत् यतोनावइत्याद्युदात्तत्वम् सुपोडादेशः। सोमस्यपीतिः सोमपीतिः कृदुत्तरपदप्रकृतिस्वरे प्राप्तेव्यत्ययेनाद्युदात्तत्वं अथवा सोमस्यपीतिर्यस्येन्द्रस्येतिसोमपीतिरिन्द्रः बहुव्रीहौप्रकृत्यापूर्वपदमितिपूर्वपदप्रकृतिस्वरत्वम्॥ १०॥

इतिप्रथमस्यप्रथमेषोडशोवर्गः॥ १६॥

इन्द्रेहीत्यादिकंदशर्चंसूक्तमधुच्छन्दसऋषेरार्षंगायत्रंइन्द्रदेवताकं ऋष्यादयस्त्वस्यपूर्ववत् विशेषस्तुअतिरात्रेद्वितीयपर्यायेअच्छावाकशस्त्रे इन्द्रेहीत्यनुरूपस्तृचः अतिरात्रेपर्यायाणामितिखण्डे—इदंवसोसुतमन्धइन्द्रेहिमत्स्यन्धसइतिसूत्रितम्।

तस्मिन्सूक्तेप्रथमामृचमाह—

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा॥१॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्वऽभिः।
महान्। अभिष्टिः। ओजसा॥ १॥

हेइन्द्र एहि अस्मिन्कर्मणि आगच्छ आगत्य च विश्वेभिः सर्वैः सोमपर्वभिः सोमरसरूपैः अन्धसः अन्धोभिरन्नैः मत्सि माद्यहृष्टोभव ततऊर्ध्वमोजसा बलेन महान्भूत्वा अभिष्टिः शत्रूणामभिभविताभवेतिशेषः अष्टाविंशतिसंख्याकेषुबलनामस्वोजःपाजइतिपठितम्॥आइहि आङ्गुणः

इन्द्रएहि योह्युभयोःस्थानेलभतेऽसावन्यतरव्यपदेशमितिआङ्माङोरेकादेशस्याङ्व्यपदेशादोमाङोश्चेतिपररूपम् । मत्सि माद्य मदीहर्षग्लेपनयोः लेटःसिप् सर्वेविधयश्छन्दसिविकल्प्यन्तइतिसोर्हिरादेशोनभवति दिवादिभ्यःश्यन्नितिश्यन् बहुलंछन्दसीतिश्यनोलुक् नलुमताङ्गस्येतिप्रत्ययलक्षणप्रतिषेधात् शमामष्टानांदीर्घःश्यनीत्युपधादीर्घोनभवति सिपःपित्त्वाद्धातुस्वरएव । अन्धसः अदेर्नुम्धश्चेत्यसुन् व्यत्ययेनतृतीयाबहुवचनंकर्तव्यम् नित्त्वादाद्युदात्तः । विश्वेभिः अशूप्रुषीत्यादिनाक्वन् नित्त्वादाद्युदात्तत्वम् ऐसादेशोबहुलंछन्दसीतिनभवति सोमपर्वभिः लतारूपंसोमंपृणन्तिपूरयन्तीतिसोमपर्वाणः सोमरसाः पृपालनपूरणयोः अन्येभ्योऽपिदृश्यन्तेइतिवनिप्गुणोरपरत्वम् वनिपःपित्त्वाद्धातुस्वरएव उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणपुनःसएवभवति । अभिष्टिभिः गम्ला इषगतौ मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः सहिभावपरोऽपिभविनारंलक्षयन्ति किन्वाल्लघूपधगुणाभावः तितुत्रतथसिसुसरकसेषुचेति इडागमोनभवति अभिशब्दस्यइकार एमन्नादिषुपररूपत्वंवक्तव्यमितिपररूपत्वं प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । ओजसा उब्जेर्बलोपश्चेत्यसुन् नित्त्वादाद्युदात्तः ॥ १ ॥

द्वितीयामृचमाह—

एमेनंसृजतासुतेमन्दिमिन्द्रायमन्दिने । चक्रिंविश्वानिचक्रये ॥ २ ॥

आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने । चक्रिम् । विश्वानि । चक्रये ॥ २ ॥

ईमित्यनर्थकः पादपूरणायप्रयुक्तः हेअध्वर्यवः सुतेअभिषुतेचमसस्थेसोमेएनंसोममिन्द्राय इन्द्रार्थआसृजत पुनरभ्युन्नयतशुक्रामन्थिचमसगणेपुनरभ्युन्नयनमापस्तंबेनोक्तम् होत्रकाणांचमसाध्वर्यवःसकृत्सकृद्भुत्वाशुक्रस्याभ्युन्नीयोपावर्तध्वमितीति कीदृशमेनं मन्दिं हर्षहेतुं चक्रिंसाधुकरणशीलं कीदृशायेन्द्रायमन्दिनेहर्षयुक्ताय विश्वानिसर्वाणिकर्माणिचक्रयेकृतवते सर्वकर्मनिष्पादनशीलायेत्यर्थः ईमित्यस्यपदपूरणार्थयास्कआह—अथयेप्रवृत्तेऽर्थेमिताक्षरेषु ग्रन्थेषुवाक्यपूरणाआगच्छन्तिपदपूरणास्तेमिताक्षरेष्वनर्थकाःकमीमिद्विति । अस्यायमर्थः अन्येरेवपदैर्विवक्षितेऽर्थेसमानेसतियेशब्दाअमिताक्षरेषुछन्दोराहित्येनपरिमिताक्षररहितेषुब्राह्मणादिवाक्येषुवाक्यपूरणार्थादृश्याः मिताक्षरेषुछन्दोयुक्तेषुग्रन्थेषुपदपूरणार्थाः तेचकमीमित्यादयइति । ईमित्यस्यशब्दस्यानर्थक्यायैनामृचमुदाजहार—एमेनंसृजतासुतेआसृजतेनं

१ आपस्तंबसूत्रेअग्निष्टोमप्रकरणे ।

सुतइति। एनंइदमोद्वितीयायांद्वितीयाटौस्स्वेनइतिएनादेशोऽनुदात्तइत्यनुवृत्तेः सर्वानुदात्तः। सृजत संहितायामन्येषामपिदृश्यतइतिदीर्घः। मन्दिम् प्रमोदहेतुं मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु इदितोनुम् धातोरितिनुम् मन्दमानं प्रयुंक्तइत्यर्थे हेतुमतिचेतिणिच् ण्यन्तस्यअजन्तत्वादचइरितिइ-कारप्रत्ययः णेरनिटीतिणिलोपः प्रत्ययस्वरेणान्तोदात्तत्वम्। मन्दिने मन्देःपूर्ववच्चतुर्थ्येकवचने-अनपुंसकस्यापिव्यत्ययेननुमागमः। चक्रिं डुकृञ्करणे आदृगमहनजनःकिकिनौलिट्चेति त-च्छीलतद्धर्मतत्साधुकारिषुकर्तृषुकिन्प्रत्ययः तस्यकित्वाद्गुणाभावः यणादेशः लिड्वद्भावाद्विर्वचनं द्विर्वचनेचीतियणादेशस्यस्थानिवद्भावात्कृशब्दोद्विरुच्यते अभ्यासस्यउरत्वरपरत्वचुत्वहला-दिशेषाः किनोनित्त्वादाद्युदात्तः। विश्वानि विशेःक्वन् नित्त्वादाद्युदात्तः। अस्यचक्रयेइतिछन्द-स्तेनयोगेऽपिकर्तृकर्मणोः कृतीतिषष्ठीनभवति किकिनौलिट्चेतिकिकिनोर्लिड्वद्भावेन नलोका-व्ययनिष्ठाखलर्थतृनामितिनिषेधात्॥ २ ॥

तृतीयामृचमाह—

मत्स्वासुशिप्रमन्दिभिःस्तोमेभिर्विश्वचर्षणे। सचैषुसवनेष्वा ॥ ३ ॥

मत्स्व। सुऽशिप्र। मन्दिऽभिः। स्तोमेभिः। विश्वऽचर्षणे। सचा। एषु। सवनेषु। आ ॥ ३ ॥

सुशिप्र हेशोभनहनो शोभननासिकवा शिप्रेहनूनासिकेवेतियास्केनोक्तत्वात् तादृशहे-इन्द्र मन्दिभिःहर्षहेतुभिःस्तोमेभिःस्तोमैःस्तोत्रैः मत्स्वहृष्टोभव हेविश्वचर्षणेसर्वमनुष्ययुक्त सर्वैर्य-जमानैःपूज्येत्यर्थः तादृशइन्द्र त्वंएषुयागगतेषुत्रिषुसवनेषुसचादेवैरन्यैः सहागच्छेतिशेषः॥ मदि-स्तुतीत्यस्यलोटिअनित्यमागमशासनमितिकृत्वाइदितोनुमधातोरितिनुन्नभवति अनुदात्तेत्त्वा-त्तास्यनुदात्तेन्ङिददुपदेशादितिलसार्वधातुकानुदात्तत्वम् धातुस्वरएव संहितायांद्व्यचोतस्ति-ङइतिदीर्घत्वम्। सुशिप्रेत्यामन्त्रितनिघातः। मन्दिभिः गतमन्त्रेव्याख्यातम्। स्तोमेभिः मन्प्रत्य-यस्यनित्त्वादाद्युदात्तत्वम् बहुलंछन्दसीतिभिसऐसादेशोनभवति। विश्वचर्षणे निघातः। सचा उक्तः। एषु ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्॥ ३ ॥

चतुर्थीमृचमाह—

अस्रंग्रमिन्द्रतेगिरःप्रतित्वामुदहासत। अजोषावृषभंपतिम् ॥ ४ ॥

अर्त्सृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत ।
अजोषाः । वृषभम् । पतिम् ॥ ४ ॥

हेइन्द्र गिरस्त्वदीयाःस्तुतीरसृग्रंसृष्टवानस्मि ताश्चगिरःस्वर्गेवस्थितंत्वांप्रतिउदहासत उद्गत्यप्रापुवन् तादृशीर्गिरस्त्वं अजोषाः सेवितवानसि कीदृशंत्वांवृषभं कामानांवर्षितारं पतिं सोमस्यपातारंयजमानानांपालयितारंवा पातावापालयितावेतियास्केनोक्तत्वात् । असृग्रं असृजं सृजविसर्गे लङोमिप् तुदादिभ्यःशः बहुलंछन्दसीति अत्रविकरणस्यरुडागमः जकारस्यगकारः लुङ्लङ्लङ्क्ष्वडुदात्तइत्यडागमउदात्तः सतिशिष्टत्वात्सएवशिष्यते । गिरः प्रातिपदिकस्वरः । अहासत ओहाङ्गतौ लुङ्झस्यअदादेशः च्लेःसिच्अडागमःनिपातश्च । अजोषाःजुषीप्रीतिसेवनयोः लङस्थास् तुदादिभ्यःशः तस्यछन्दस्युभयथेतिआर्धधातुकत्वेनङित्वाभावाल्लघूपधगुणः थासस्थकारलोपश्छान्दसः सवर्णदीर्घः अडागमःसतिशिष्टत्वादुदात्तः शिष्यते । वृषभं वृषुवृषुपृषुमृषुसेचने अभजित्यनुवृत्तौ ऋषिवृषिभ्यांकिदित्यभच्प्रत्ययः कित्त्वाद्गुणाभावः चित्त्वादन्तोदात्तः । पतिं पारक्षणे पातेर्डतिः डित्त्वाट्टिलोपः प्रत्ययाद्युदात्तत्वम् ॥४॥

पञ्चमीमृचमाह—

संचोदयचित्रमर्वाग्राधइन्द्रवरेण्यम् । असदित्तेविभुप्रभु ॥ ५॥१७॥

सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् । असत् ।
इत् । ते । विऽभु । प्रऽभु । ५ ॥ १७ ॥

हेइन्द्र वरेण्यंश्रेष्ठं राधोधनं चित्रं मणिमुक्तादिरूपेणबहुविधं अर्वागस्मदभिमुखंयथाभवतितथासंचोदय सम्यक्प्रेरय भोगाययावत्पर्याप्तंतावद्विभुशब्देनोच्यते ततोऽप्यधिकंप्रभुशब्देन तादृशंधनंतेतवैवअसदित्अस्त्येव तस्मादस्मभ्यंप्रयच्छेत्यर्थः मघमित्यादिषुअष्टाविंशतिधननामसु रायःराधइतिपठितम् ॥चोदय चुदप्रेरणे ण्यन्ताल्लोट् तिङ्ङतिङइतिनिघातः।राधःराधुवन्त्यनेनेतिराधोधनं सर्वधातुभ्योऽसुन् नित्त्वादाद्युदात्तः । वरेण्यं वृञएण्यः वृषादित्वादाद्युदात्तः । असत् असभुवि लेट् तिप् इतश्चलोपइतीकारलोपः लेटोडाटावित्यडागमः अदिप्रभृतिभ्यःशपइतिशपोलुक् आगमाअनुदात्ताइतिअटोऽनुदात्तत्वाद्धातुस्वरएव । विभु विभवतीतिविभु भुवइत्यनुवृत्तौ विप्रसंभ्योड्वसंज्ञायामितिडुप्रत्ययः डित्त्वाट्टिलोपः प्रत्ययस्वरेणोकारउदात्तः कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते । एवंप्रभु ॥ ५ ॥

॥ इतिप्रथमस्यप्रथमेसप्तदशोवर्गः ॥ १७ ॥

१ नि० ८, ३. ।

इन्द्रेहीतिसूक्तेषष्ठीमृचमाह—

अस्मान्त्सुतत्रंचोदयेन्द्रंरायेरभस्वतः । तुविद्युम्नयशस्वतः ॥ ६ ॥

अस्मान् । सु । तत्रं । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥ ६ ॥

हेतुविद्युम्न प्रभूतधनेन्द्र रायेधनसिद्ध्यर्थमस्माननुष्ठातॄन्तत्रकर्मणिसुचोदयसुष्ठुप्रेरय कीदृशानस्मान् रभस्वतः उद्योगवतःयशस्वतः कीर्तिमतः॥तत्र तच्छब्दात्सप्तम्यास्त्रल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम्।इन्द्र आमन्त्रिताद्युदात्तत्वम् पादादित्वान्ननिघातः। राये ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। रभस्वतः रभराभस्ये राभस्यंकार्योपक्रमः सर्वधातुभ्योऽसुन् नित्त्वादाद्युदात्तः मतुपःपित्त्वादनुदात्तत्वम् स्वादिष्वसर्वनामस्थानेइतिनपदत्वम् तसौमत्वर्थेइतिभसंज्ञयाबाधितत्वात् आकडारादेकासंज्ञेतिनियमात्। तुविबहुद्युम्नंधनंयस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम्। यशस्वतः यशोस्यास्तीतिमतुप् अस्मायामेधास्रजोविनिरितिविनिनानबाध्यते मतुपःसर्वत्रसमुच्चयात् यशस्शब्दोनब्विषयस्यानिसन्तस्येत्याद्युदात्तः मतुपःपित्त्वात्सएवशिष्यते ॥ ६ ॥

सप्तमीमृचमाह—

संगोमदिन्द्रवाजवदस्मेपृथुश्रवोबृहत् । विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मेइति । पृथु । श्रवः । बृहत् । विश्वऽआयुः । धेहि । अक्षितम् ॥ ७ ॥

हेइन्द्र श्रवोधनं अस्मेसंधेहि अस्मभ्यंसम्यक्प्रयच्छ कीदृशंश्रवः गोमत् बह्वीभिर्गोभिरुपेतं वाजवत् प्रभूतेनान्नेनोपेतं[1] पृथु परिमाणेनाधिकं बृहत् गुणैरधिकं विश्वायुः कृत्स्नायुष्यकारणं अक्षितं विनाशरहितम्॥ गोमत् वाजवत् उभयत्रमतुपोऽनुदात्तत्वात्प्रातिपदिकस्वरएव वाजशब्दोवृषादिराद्युदात्तः । अस्मे अस्मच्छब्दाच्चतुर्थीबहुवचनस्यसुपांसुलुगित्यादिनाशेआदेशः शित्त्वात्सर्वादेशः प्रातिपदिकस्वरेणान्तोदात्तत्वम् शेपेलोपष्टिलोपइतिपक्षेउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् अन्त्यलोपपक्षेअतोगुणेइतिपररूपे एकादेशउदात्तेनोदात्तइतिउदात्तत्वम्। पृथु प्रथप्रख्याने प्रथिम्रदिभ्रस्जांसंप्रसारणंसलोपश्चेतिकुप्रत्ययः रेफस्यसं-

---

१ प्रभूतेनधनेनोपेतमितिपाठः।

प्रसारणस्त्कारः परपूर्वत्वं कोःकित्त्वान्नलघूपधगुणः । श्रूयतइतिश्रवोधनं असुन्प्रत्ययः नित्त्वादाद्युदात्तः । बृहत् प्रातिपदिकस्वरः । विश्वायुः विश्वमायुर्यस्मिन्धने विश्वशब्दःक्वन्प्रत्ययान्तः तस्यबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेप्राप्ते परादिश्छन्दसिबहुलमितिपूर्वपदान्तोदात्तत्वम् एकादेशउदात्तेनोदात्तइत्युदात्तः । अक्षितं क्षिक्षयेइत्यस्मादन्तर्भावितण्यर्थात्कर्मणिनिष्ठा तेन ण्यदर्थत्वान्निष्ठायामण्यदर्थे इतिनदीर्घत्वम् अतएवक्षियोदीर्घादितिननिष्ठानत्वम् नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हद्द्यु॒म्नं स॑हस्र॒सात॑मम् । इन्द्र॒ ता र॒थिनी॒रिषः॑ ॥ ८ ॥

अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् । द्यु॒म्नम् । स॒ह॒स्र॒ऽसात॑मम् ।
इन्द्र॑ । ताः । र॒थिनीः॑ । इषः॑ ॥ ८ ॥

हेइन्द्रबृहत्श्रवः महतींकीर्तिम् अस्मेधेहि अस्मभ्यंप्रयच्छ तथा सहस्रसातमं अतिशयेनसहस्रसंख्यादानोपेतं द्युम्नंधनमस्मेधेहि तथा ताः व्रीहियवादिरूपेण प्रसिद्धाः रथिनीर्बहुरथोपेताः इषोन्नान्यस्मेधेहि ॥ अस्मे सुपांसुलुगित्यादिनाशेआदेशः । धेहि ध्वसोरेद्धावभ्यासलोपश्चेत्येत्वाभ्यासलोपौ । श्रूयतइतिश्रवः असुनोनित्त्वादाद्युदात्तत्वम् सहस्रंसनुतेददातीतिसहस्रसाः षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्याकारादेशः धातुस्वरेणान्तोदात्तः पुनःकृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते । रथाआसांसन्तीतिरथिन्यइतिमत्ययस्याद्युदात्तत्वम् ऋन्नेभ्योङीप् सचपित्त्वादनुदात्तः । इषः यौगिकत्वेधातुस्वरः रूढत्वेप्रातिपदिकस्वरः ॥ ८ ॥

नवमीमृचमाह—

वसो॒रिन्द्रं॒ वसु॑पतिं गी॒र्भिर्गृ॒णन्त॑ ऋ॒ग्मिय॑म् । होम॒ गन्ता॑रमू॒तये॑ ॥ ९ ॥

वसोः॑ । इन्द्र॑म् । वसु॑ऽपतिम् । गीः॒ऽभिः । गृ॒णन्तः॑ । ऋ॒ग्मिय॑म् ।
होम॑ । गन्ता॑रम् । ऊ॒तये॑ ॥ ९ ॥

वसोर्वसुनोऽस्मदीयस्यधनस्योतयेरक्षार्थं इन्द्रंहोम वयमाह्वयामः किंकुर्वन्तः गीर्भिःस्तुतिभिर्गृणन्तः स्तुवन्तः कीदृशमिन्द्रं वसुपतिंधनपालकं ऋग्मियंऋचांमातारंगन्तारंयागदेशेगमन-

शीलम् ॥ वसोः वसनिवासे शृस्वृस्निहीत्यादिनाउन्प्रत्ययः निदित्यनुवृत्तेर्नित्वादाद्युदात्तः । वसुपतिं समासान्तोदात्तत्वेमाप्ते पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । गीर्भिः सावेकाचइतिविभक्तेरुदात्तत्वम्। गृणन्तः गृशब्दे लटःशतृ क्र्यादिभ्यःश्ना शतुः सार्वधातुकमपिदितिङित्त्वात् श्नाभ्यस्तयोरातइत्याकारलोपः शतुरकारस्यप्रत्ययस्वरेणोदात्तत्वम् । ऋग्मियं ऋचोमिमीतइतिऋग्मीः तंऋग्मियं माङ्मानेशब्देच क्विप्चेतिक्विप् घुमास्थेत्यादिनाईत्वम् चकारस्यचोः कुः झलांजशोन्तेइतिजस्त्वंगकारः द्वितीयैकवचनेअचिश्नुधात्वित्यादिनाइयङादेशः एरनेकाचइतियणादेशः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिनभवति कृदुत्तरपदप्रकृतिस्वरेणइकारउदात्तः । होम आह्वयामः ह्वेञ्स्पर्धायांशब्देच लट् तस्यअस्मदोबहुत्वेपिव्यत्ययेनमिप् इकारस्यव्यत्ययेनाकारः शपोबहुलंछन्दसीतिलुक् बहुलंछन्दसीतिह्वःसंप्रसारणं परपूर्वत्वं गुणः धातोरित्योकारउदात्तः मिपःपित्स्वरेणानुदात्तत्वम् । गन्तारं गमॢगतौ ताच्छील्येतृन् नित्वादाद्युदात्तः । ऊतये ऊतियूतिजूतीत्यादिनाक्तिन्नुदात्तोनिपातितः ॥ ९ ॥

दशमीमृचमाह—

सुतेसुते॒न्यो॑कसेबृ॒हद्बृ॑ह॒तएद॒रिः । इन्द्रा॑यशू॒षम॑र्चति ॥ १० ॥ १८ ॥

सु॒तेऽसु॑ते । निऽओ॑कसे । बृ॒हत् । बृ॒ह॒ते । आ । इत् । अ॒रिः ।
इन्द्रा॑य । शू॒षम् । अ॒र्च॒ति॒ ॥ १० ॥ १८ ॥

आकारइच्छब्दश्चपादपूरणौ यद्वा व्याप्तिवचनआकारः आईपदर्थेभिव्याप्तावित्यभिधानात् इच्छब्दोपिशब्दार्थः इयर्तिगच्छत्यनुष्ठेयंकर्मप्राप्नोतीत्यरिर्यजमानःएदरिःसर्वोपियजमानः इन्द्रायसुतेसुतेइन्द्रार्थमभिषुतेतत्तत्सोमेशूषंबलंअर्चतिस्तौति इन्द्रस्यपराक्रमंप्रशंसतीत्यर्थः कीदृशंशूषं बृहत्प्रौढं कीदृशायेन्द्राय न्योकसेनियतस्थानायबृहतेप्रौढाय ॥ सुतेसुते षुञ्अभिषवे क्तप्रत्ययः प्रत्ययस्वरेणोदात्तः नित्यवीप्सयोरितिवीप्सायांद्विर्भावः तस्यपरमाम्रेडितमिति द्वितीयस्याम्रेडितत्वेनानुदात्तंचेत्यनुदात्तत्वम्। न्योकसे नियतमोकोयस्यतस्मै निशब्दोनिपाताआद्युदात्ताइत्याद्युदात्तः । तस्ययणादेशेउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येत्योकारःस्वरितः। बृहते बृहन्महतोरुपसंख्यानमितिअजादिविभक्तेरुदात्तत्वम् । अरिः ऋगतौ अचइरितिइकारप्रत्ययः गुणोरपरत्वंप्रत्ययस्वरेणइकारउदात्तः । इन्द्राय ऋज्रेन्द्रेत्यादिनारन्प्रत्ययेइकारउदात्तः । शूषं प्रातिपदिकस्वरः । अर्चति निघातस्वरः ॥ १० ॥

॥इतिप्रथमस्यप्रथमेअष्टादशोवर्गः॥ १८ ॥

गायन्तीतिसूक्तस्यमन्त्रसंख्याछन्दोविशेषश्चैवमनुक्रम्यते— गायन्तिद्वादशानुष्टुभंत्विति

तुह्विवाइत्यादिपरिभाषायांतुशब्दस्यसूक्तद्वयेपरिभाषितत्वात् अस्यसूक्तस्यवक्ष्यमाणस्यचानुं-ष्टुभत्वंद्रष्टव्यम् ऋषिदेवतेपूर्ववत् अभिप्लवषडहस्योक्थ्येतृतीयसवनेच्छावाकस्यगायन्तीतिस्तो-त्रियस्तृचः एहूष्विति खण्डे—गायन्तित्वागायत्रिणआत्वागिरोरथीरिवेतिसूत्रितम् ।

अस्मिंस्तृचेप्रथमामृचमाह—

गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वाशतक्र तउद्वंशमिवयेमिरे ॥ १ ॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः । ब्रह्माणः । त्वा । शतक्रतोइतिशतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥ १ ॥

हेशतक्रतो बहुकर्मन् बहुप्रज्ञवेन्द्रत्वा त्वांगायत्रिणः उद्गातारोगायन्तिस्तुवन्ति अर्किणो-र्चनहेतुमन्त्रयुक्ताहोतारः अर्कमर्चनीयमिन्द्रमर्चन्तिशस्त्रगतैर्मन्त्रैःप्रशंसन्ति ब्रह्माणोब्रह्मप्रभृ-तयइतरेब्राह्मणास्त्वात्वामुद्येमिरे उन्नतिंप्रापयन्ति तत्रदृष्टान्तः—वंशमिव यथावंशाग्रेनृत्यन्तः शिल्पिनः प्रौढंवंशं उन्नतंकुर्वन्ति यथावासन्मार्गवर्तिनः स्वकीयंकुलमुन्नतंकुर्वन्ति तद्वत् एता-मृचंयास्कएवंव्याचष्टे—गायन्तित्वागायत्रिणःप्रार्चन्तितेऽर्कमर्किणोब्राह्मणास्त्वाशतक्रतउद्येमिरे-वंशमिववंशोवनशयोभवतिवननाच्छ्रूयतइतिवेति[1] ॥ अर्कशब्दंचबहुधाव्याचष्टे—अर्कोदेवो-भवतियदेनमर्चन्त्यर्कोमन्त्रोभवतियदनेनार्चन्त्यर्कमन्नंभवत्यर्चतिभूतान्यर्कोवृक्षोभवतिसंवृतःक-टुकिम्नेति[2] ॥ गायन्ति शप्तिपौपित्त्वात्सार्वधातुकत्वाच्चानुदात्तौ धातुरुदात्तः । गायत्रिणः गायत्रंसामयेषामुद्गातॄणामस्तितेअतइनिठनौ प्रत्ययस्वरेणइकारउदात्तः । अर्चन्ति अर्चपूजा-यां भौवादिकः शप्तिपावनुदात्तौ धातुस्वरएव पादादित्वान्ननिघातः । अर्क अर्चन्त्ये-भिरित्यर्कामन्त्राः तैरर्चनीयत्वात्तदात्मकइन्द्रोपिलक्षणयाअर्कः पुंसिसंज्ञायांघःप्रायेणेतिकर-णेघः चजोःकुघिण्ण्यतोरितिचकारस्यकुत्वंककारः प्रत्ययस्वरेणान्तोदात्तः अर्कामन्त्रायेषांसन्ती-त्यर्किणोहोतारः एकाक्षरात्कृतोजातेःसप्तम्यांचनतौस्मृताविति रुदन्तादिनिठनौयद्यपिप्रतिषि-द्धौतथाप्यत्रव्यत्ययादिनिः प्रत्ययस्वरेणेकारउदात्तः । ब्रह्माणःप्रातिपदिकस्वरेणान्तोदात्तः । शतक्रतो निघातः संहितायामवादेशे लोपःशाकल्यस्येतिवकारलोपः ।वंशशब्दःप्रातिपदिक-स्वरेणान्तोदात्तः इवेनसमासोविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेति सएवशिष्यते । येमिरे यमउपरमे तिङ्ङतिङइतिनिघातः ॥ १ ॥

---

१ नि० ५.५ । २ नि० ५.४. । ३ शप् तिपावनुदात्तौ इत्यत्र " शप् अन्ति " अनुदात्तौइतिपाठः । अयमेवयुक्तः अर्चन्तीतिबहुवचनेतिपत्वाभावात् ।

द्वितीयामृचमाह—

यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वम् । तदिन्द्रोऽअर्थंचेतति यूथेन वृष्णिरेजति ॥ २ ॥

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ।
तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ २ ॥

यद्यदासानोःसानुमारुहत् यजमानः सोमवल्लीसमिदाद्याहरणायएकस्मात्पर्वतभागादपरंपर्वतभागमारूढवान् तथाभूरिमभूतं कर्त्वंकर्मसोमयागरूपं अस्पष्ट स्पृष्टवानुपक्रान्तवानित्यर्थः तत्तदानीमिन्द्रः अर्थंयजमानस्यप्रयोजनंचेततिजानाति ज्ञात्वाचवृष्णिः कामानांवर्षितासन्यूथेनमरुद्गणेनसहएजति कंपतेस्वस्थानात् यज्ञभूमिमागन्तुमुद्युक्तइत्यर्थः॥ सानोः षणुदाने सनोतिददाति निवसतामवकाशमितिसानुः दृसनिजनिचरिचटिरहिभ्योञुण् णित्त्वादुपधावृद्धिः ञित्त्वादाद्युदात्तत्वंच । अरुहत् रुहेर्लेङितिपिशापिसंज्ञापूर्वकोविधिरनित्यइति लघूपधगुणोनभवति लुङ्लङ्लृङ्क्ष्वडुदात्तः सविशिष्टत्वात्सएवशिष्यते निपातैर्यद्यदिहन्तेतिनिषेधान्निघातोनभवति । भूरि अदिशदिभूशुभिभ्यःक्रिन् कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । अस्पष्ट स्पशबाधनस्पर्शनयोः स्वरितञितआत्मनेपदं लङःप्रथमपुरुषैकवचनम् बहुलंछन्दसीतिशपोलुक् झष्ठ्यादिपत्वंष्टुत्वं लुङ्लङ्लृङ्क्ष्वडुदात्तइत्यडागमउदात्तः सएवशिष्यते अनुपक्रमेणयच्छब्दयोगान्निघाताभावः । कर्त्वं डुकृञ्करणे अन्येभ्योऽपिदृश्यन्तइतिविच् गुणोरपरत्वम् विचःसर्वापहारीलोपः करोभावःकर्त्वम् । अर्थं अर्तेः उषिकुषिगार्तिभ्यस्थन् नित्त्वादाद्युदात्तः । यूथेन तिथपृष्ठगूथयूथप्रोथाइतिथक्प्रत्ययान्तोनिपातितः । वृष्णिःनिरित्यनुवृत्तौ सृवृषिभ्यांकिदितिनिप्रत्ययान्तः कित्त्वाद्गुणाभावः प्रत्ययस्वरेणान्तोदात्तः । एजति एजृकंपने तिङ्ङतिङइतिनिघातः ॥ २ ॥

तृतीयामृचमाह—

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा । अथानइन्द्रसोमपा गिरामुपश्रुतिंचर ॥ ३ ॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा । अथ ।
नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥

तुहिहवाइत्यादिपरिभाषायांतुशब्दस्यसूक्तद्वयेपरिभाषितत्वात् अस्यसूक्तस्यवक्ष्यमाणस्यचानुष्टुभत्वंद्रष्टव्यम् ऋषिदेवतेपूर्ववत् अभिप्लवषडहस्योक्थ्येतृतीयसवनेच्छावाकस्यगायन्तीतिस्तोत्रियस्तृचः एहूंष्वितिखण्डे—गायन्तित्वागायत्रिणआत्वागिरोरथीरिवेतिसूत्रितम् ।

अस्मिंस्तृचेप्रथमामृचमाह—

गाय॑न्तित्वागाय॒त्रिणोऽर्च॑न्त्य॒र्कम॒र्किण॑ः । ब्र॒ह्माण॑स्त्वाशतक्र
तु॒उद्वं॒शमि॑वयेमिरे ॥ १ ॥

गाय॑न्ति । त्वा॒ । गा॒य॒त्रिण॑ः । अर्च॑न्ति । अ॒र्कम् । अ॒र्किण॑ः । ब्र॒ह्मा
ण॑ः । त्वा॒ । श॒त॒क्र॒तो॒ऽइति॑शतऽक्रतो । उत् । वं॒शम्ऽइ॑व । ये॒मि॒रे ॥ १ ॥

हेशतक्रतो बहुकर्मन् बहुप्रज्ञवेन्द्रत्वा त्वांगायत्रिणः उद्गातारोगायन्तिस्तुवन्ति अर्किणोर्चनेहेतुमन्त्रयुक्ताहोतारः अर्कमर्चनीयमिन्द्रमर्चन्तिशस्त्रगतैर्मन्त्रैःप्रशंसन्ति ब्रह्माणोब्रह्मप्रभृतयइतरेब्राह्मणास्त्वात्वामुद्येमिरे उन्नतिंमापयन्ति तत्रदृष्टान्तः—वंशमिव यथावंशाग्रेनृत्यन्तः शिल्पिनः प्रौढंवंशं उन्नतंकुर्वन्ति यथावासन्मार्गवर्तिनः स्वकीयंकुलमुन्नतंकुर्वन्ति तद्वत् एतामृचंयास्कएवंव्याचष्टे—गायन्तित्वागायत्रिणःप्रार्चन्तितेऽर्कमर्किणोब्राह्मणास्त्वाशतक्रतउद्येमिरेवंशमिववंशोवनशयोभवतिवननाच्छ्रूयतइतिवेति[1] ॥ अर्कशब्दंचबहुधाव्याचष्टे—अर्कोदेवोभवतियदेनमर्चन्त्यर्कोमन्त्रोभवतियदनेनार्चन्त्यर्कमन्नंभवत्यर्चतिभूतान्यर्कोवृक्षोभवतिसंवृतःकटुकिम्नेति[2] ॥ गायन्ति शप्तिपोपित्त्वाह्लसार्वधातुकत्वाच्चानुदात्तौ धातुरुदात्तः । गायत्रिणः गायत्रंसामयेषामुद्गातॄणामस्तिते अतइनिठनौ प्रत्ययस्वरेणइकारउदात्तः । अर्चन्ति अर्चपूजायां भौवादिकः शप्तिपावनुदात्तौ धातुस्वरएव पादादित्वान्ननिघातः । अर्कं अर्चन्त्येभिरित्यर्कामन्त्राः तैरर्चनीयतयातदात्मकइन्द्रोपिलक्षणयाअर्कः पुंसिसंज्ञायांघःप्रायेणेतिकरणेघः चजोःकुघिण्ण्यतोरितिचकारस्यकुत्वंककारः प्रत्ययस्वरेणान्तोदात्तः अर्कामन्त्राएषांसन्तीत्यर्किणोहोतारः एकाक्षरात्कृतोजातेःसप्तम्यांचनतौस्मृताविति कृदन्तादिनिठनौयद्यपिमितिषिद्धौतथाप्यत्रव्यत्ययादिनिः प्रत्ययस्वरेणेकारउदात्तः । ब्रह्माणःप्रातिपदिकस्वरेणान्तोदात्तः । शतक्रतो निघातः संहितायामवादेशे लोपःशाकल्यस्येतिवकारलोपः । वंशशब्दःप्रातिपदिकस्वरेणान्तोदात्तः इवेनसमासोविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेति सएवशिष्यते । येमिरे यमउपरमे तिङ्ङतिङइतिनिघातः ॥ १ ॥

---

१ नि० ५.५ । २ नि० ५.४ । ३ शप् निपावनुदात्तौ इत्यत्र " शप् अन्ति " अनुदात्तौऽनिपाठः । अयमेवयुक्तः अर्चन्तीतिबहुवचनेनैतिपुत्वाभावात् ।

द्वितीयामृचमाह—

यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वम् । तदिन्द्रोऽअर्थंचेततियूथेन वृष्णिरेजति ॥ २ ॥

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ।
तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ २ ॥

यद्यदासानोःसानुमारुहत् यजमानः सोमवल्लीसमिदाद्याहरणायएकस्मात्पर्वतभागादपरंपर्वतभागमारूढवान् तथाभूरिप्रभूतं कर्त्वंकर्मसोमयागरूपं अस्पष्ट स्पृष्टवानुपक्रान्तवानित्यर्थः तत्तदानीमिन्द्रः अर्थंयजमानस्यप्रयोजनंचेततिजानाति ज्ञात्वाचवृष्णिः कामानांवर्षितासन्यूथेनमरुद्गणेनसहएजति कंपतेस्वस्थानात् यज्ञभूमिमागन्तुंप्रयुक्तइत्यर्थः॥ सानोः षणुदाने सनोतिददाति निवसतामवकाशमितिसानुः दृसनिजनिचरिचटिरहिभ्योञुण् णित्त्वादुपधावृद्धिः ञित्वादाद्युदात्तत्वंच । अरुहत् रुहेर्लुङितिपिशापिसंज्ञापूर्वकोविधिरनित्यइति लघूपधगुणोनभवति लुङ्लङ्लृङ्क्ष्वडुदात्तः सतिशिष्टत्वात्सएवशिष्यते निपातैर्यद्यदिहन्तेतिनिषेधान्निघातोनभवति । भूरि अदिशदिभूशुभिभ्यःक्रिन् कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । अस्पष्ट स्पशबाधनस्पर्शनयोः स्वरितञितआत्मनेपदं लङःप्रथमपुरुषैकवचनम् बहुलंछन्दसीतिशपोलुक् व्रश्चादिषत्वंष्टुत्वं लुङ्लङ्लृङ्क्ष्वडुदात्तइत्यडागमउदात्तः सएवशिष्यते अनुपद्वेणयच्छब्दयोगान्निघाताभावः । कर्त्वं डुकृञ्करणे अन्येभ्योऽपिदृश्यन्तइतिविच् गुणोरपरत्वम् विचःसर्वापहारीलोपः करोभावःकर्त्वम् । अर्थं अर्तेः उषिकुषिगार्तिभ्यस्थन् नित्त्वादाद्युदात्तः । यूथेन तिथपृष्ठगूथयूथप्रोथाइतिथक्प्रत्ययान्तोनिपातितः । वृष्णिःनिरित्यनुवृत्तौ सृवृषिभ्यां किदितिनिप्रत्ययान्तः कित्त्वाद्गुणाभावः प्रत्ययस्वरेणान्तोदात्तः । एजति एजृकंपने तिङ्ङतिङइतिनिघातः ॥ २ ॥

तृतीयामृचमाह—

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा । अथानइन्द्रसोमपा गिरामुपश्रुतिंचर ॥ ३ ॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा । अर्थ ।
नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥

हेसोमपाः सोमपानयुक्तेन्द्रहरीत्वदीयावश्वौ युक्ष्वाहिसर्वथासंयोजय अथानन्तरंनोऽस्मदीयानांगिरांस्तुतीनांउपश्रुतिंसमीपेश्रवणमुद्दिश्यचर तत्प्रदेशंगच्छ कीदृशौहरी केशिनास्कन्धप्रदेशेलम्बमानकेशयुक्तौ वृषणासेचनसमर्थौ युवानौ कक्ष्यप्रा अश्वस्योदरबन्धनरज्जुः कक्ष्या तस्याः पूरकौ पुष्टाङ्गावित्यर्थः ॥ युक्ष्व श्नमोलोपश्छान्दसः सतिशिष्टत्वेनप्रत्ययस्वरःशिष्यते द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । केशिना प्रशस्ताःकेशाःअनयोःसन्तीतिमत्वर्थीयइनिः प्रत्ययस्वरः सुपांसुलुगित्यादिनाद्विवचनस्याकारादेशः । वृषणा वृषुवृषुवृषुसेचने कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवइतिकनिन् ञ्नित्यादिर्नित्यमित्याद्युदात्तः वापपूर्वस्यनिगमेइत्युपधायाः पक्षेदीर्घाभावः पूर्ववदाकारः । कक्ष्यप्रा कक्ष्योर्भवंकक्ष्यंसूत्रं तत्प्रातः पूरयतःपुष्टत्वादितिकक्ष्यप्रौ प्रापूरणे आतोनुपसर्गेकइतिकःप्रत्ययः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं आकारःपूर्ववत् । अथ निपातस्येतिसंहितायांदीर्घः । नः अनुदात्तंसर्वमपादादावित्यनुवृत्तौबहुवचनस्यवस्नसावितिनसादेशोऽनुदात्तः । इन्द्रसोमपाइत्युभौआमन्त्रितस्यचेतिसर्वानुदात्तौ । गिरां सावेकाचस्तृतीयादिर्विभक्तिरितिविभक्तिरुदात्ता । उपशब्दोनिपातत्वादाद्युदात्तः श्रुतिशब्देनप्रादिसमासेकृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते तादौचनितिकृत्यतावितितुवर्जिततादिपरत्वात्कृतेःप्रकृतिस्वरः । चर निपातः ॥ ३ ॥

विशेषविनियोगस्तुयत्रश्रौतोनसूत्रितः स्मार्तंतत्रविजानीयाद्दृग्विधानादिसूत्रतः ॥एहिस्तोमानित्यृगेपासूत्रेविशेषाकारेणनविनियुक्ता साधारणविनियोगस्तु ब्रह्मयज्ञादौसर्वत्रानुसंधेयः ।

तामेतांसूक्तगतांचतुर्थीमृचमाह—

एहि॒स्तोमाँ॑अ॒भिस्व॑रा॒भिगृ॑णी॒ह्यारु॑व । ब्रह्म॑चनोवसो॒सचे॒न्द्रय॒ज्ञंच॑वर्धय ॥४

आ । इ॒हि । स्तोमा॑न् । अ॒भि । स्व॒र॒ । अ॒भि । गृ॒णी॒हि॒ । आ । रु॒व॒ ।
ब्रह्म॑ । च॒ । नः॒ । व॒सो॒ इति॑ । सचा॑ । इन्द्र॑ । य॒ज्ञम् । च॒ । व॒र्ध॒य॒ ॥ ४ ॥

हेवसोनिवासकारणभूतेन्द्र एहिअस्मिन्कर्मण्यागच्छ आगत्यचस्तोमानुद्गातृप्रयुक्तानि स्तोत्राणि अभिस्वरअभिलक्ष्यप्रशंसारूपंशब्दंकुरु तथाध्वर्यवमभिलक्ष्यगृणीहिशब्दंकुरु तथाहोतृप्रयुक्तानिशस्त्राण्यालक्ष्य रुव शब्दंकुरु परितोषेणसर्वानृत्विजः प्रशंसेत्यर्थः ततऊर्ध्वंनोऽस्माकं ब्रह्मचान्नंचयज्ञंचानुष्ठीयमानंकर्मच सचासहवर्धयसांगत्यसंपादनेनयज्ञंवर्धयेत्यातरूत्प्रमन्नंचप्रवृद्धंकुरु अन्नइत्यादिष्वष्टाविंशत्यन्ननामसुब्रह्मवचइतिपठितम् ॥ इहि इणूगतौ लोहिः हेरपित्त्वेनङित्त्वाद्गुणाभावः निघातः आङासहगुणेएकादेशउदात्तेनोदात्तइत्युदात्तः ।

स्तोमान् अतिस्तुस्वित्यादिनामन् निस्त्वादाद्युदात्तः उत्तरपदेनसंहितायांनकारस्यदीर्घादटिसमानपादेइतिरुत्वं आतोटिनित्यमित्याकारस्यानुनासिकः भोभगोअघोअपूर्वस्ययोशीतियत्वम् तस्यलोपःशाकल्यस्येतिलोपः तस्यासिद्धत्वात्स्वरसन्धिर्नभवति । अभि एवमादीनामन्तइत्यन्तोदात्तः । स्वर स्वृशब्दोपतापयोः निघातः । अभि गतम् । गृणीहि गृशब्दे सेहींपिच्चेतिहिः क्र्यादिभ्यःश्ना ईहल्यघोरितीत्वम् प्वादीनांह्रस्वइति ऋकारस्यऋकारः ऋवर्णाच्चेतिवक्तव्यमितिणत्वम् तिङ्ङतिङइतिनिघातः । रुव रुशब्दे सेर्ह्यपिच्च शपिप्राप्ते व्यत्ययेनशः तस्य ङित्त्वेनगुणाभावादुवङादेशः अतोहेरितिहेर्लुक् तिङ्ङतिङइतिनिघातः । ब्रह्म वृहिवृहिवृद्धौ मनिन्नित्यनुवृत्तौ बृंहेरम्नलोपश्चेतिमनिन् तत्सन्नियोगेननलोपः अमागमश्च मिदचोन्त्यात्परइतिऋकारात्परः यणादेशः मनिनोनित्त्वादाद्युदात्तत्वम् । वसो आमन्त्रितनिघातः । यज्ञं यजयाचेत्यादिनानङ् प्रत्ययस्वरः । वर्धय निघातः अत्रचकारद्वयश्रवणादियमेवतिङ्विभक्तिः पूर्ववाक्येप्वनुपज्यते अतःअनुषंकेवमप्रथमानश्रुवेत्यश्रुतायाश्चवायोगेप्रथमेतिनिघातनिषेधोनभवति ॥४॥

अभिप्लवषडहगतोक्थ्येषुअच्छावाकस्यतृतीयसवनेउक्थमिन्द्रायशंस्यमित्यनुरूपस्तृचः पर्यूष्वितिखण्डे—इन्द्रंविश्वाअवीवृधन्नुक्थमिन्द्रायशंस्यमितिसूत्रितम् ।

तस्मिंस्तृचेप्रथमांसूक्तेपञ्चमीमृचमाह—

उ॒क्थमिन्द्रा॑य॒शंस्यं॒वर्ध॑नंपुरुनि॒ष्षिधे॑ । श॒क्रोयथा॑सु॒तेषु॑णो रा॒रणं॑त्स॒ख्येषु॑च ॥ ५ ॥

उ॒क्थम् । इन्द्रा॑य । शंस्य॑म् । वर्ध॑नम् । पु॒रु॒नि॒ःऽसिधे॑ । श॒क्रः । यथा॑ । सु॒तेषु॑ । नः॒ । र॒रण॑त् । स॒ख्येषु॑ । च॒ ॥ ५ ॥

इन्द्रायेन्द्रार्थंवर्धनंवृद्धिसाधनमुक्थंशस्त्रंशंस्यमस्माभिःशंसनीयं कीदृशायेन्द्राय पुरुनिष्षिधेबहूनांशत्रूणांनिषेधकारिणे शक्रः शक्तइन्द्रोनोऽस्मदीयेषुसुतेषुपुत्रेषुसख्येषुचसखित्वेष्वपि यथायेनप्रकारेणरारणत् अतिशयेनशब्दंकुर्यात् तथाशंस्यमितिपूर्वत्रान्वयः अस्मदीयेनशस्त्रेण परितुष्टइन्द्रोऽस्माकंपुत्रानस्मत्सख्यानिचबहुधाप्रशंसत्वित्यर्थः ॥ उक्थं वचेस्थक्प्रत्ययउक्तः प्रत्ययस्वरः । शंस्यं शंसुस्तुतौ ण्यन्तादचोयत् णेरनिटीतिणिलोपः तित्स्वरितेप्राप्ते यतोनावइत्याद्युदात्तत्वम् । वर्धनं करणाधिकरणयोश्चेतिकरणेल्युट् लितीतिप्रत्ययात्पूर्वपदस्योदात्तत्वम् । पुरुनिष्षिधे बहूनांशत्रूणांनिषेधकाय षिधगत्यां धात्वादेःषःसः अत्रनिरित्युपसर्गस्यनिशब्दसमानार्थस्यप्रयोगः क्विप्चेतिक्विप् क्विपःसर्वापहारीलोपः कुगतिप्रादयइतिसमासः निसः

सकारेणइणोव्यवधानंछान्दसत्वादनादृत्यउपसर्गात्सुनोतीत्यादिनाधातुसकारस्यषत्वम् निसः सकारस्यष्टुनाष्टुरितिषत्वम् पुरुशब्देनकर्मणिषष्ठ्यन्तेनसमासः षिधोधातुस्वरेणोदात्तत्वम् नि ष्षिधइतिमादिसमासेकृदुत्तरपदप्रकृतिस्वरत्वम् कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणात्पुनःकारक-समासेऽपिसएवस्वरः। शक्नोतीतिशक्रः स्फायितञ्चिवञ्चिशकीत्यादिनारक् प्रत्ययस्वरः। यथा प्रकारवचनेथाल् लित्स्वरेणप्रत्ययात्पूर्वोकारउदात्तः। सुतेषु क्तः प्रत्ययस्वरेणोदात्तः। नः न-सोनकारस्यनश्चधातुस्थोरुषुभ्यइतिसंहितायांणत्वम्। रारणन् रणशब्दार्थः धातोरेकाचइति यङ् यङोचिचेतिलुक् प्रत्ययलक्षणेनद्विर्भावोहलादिशेषः दीर्घोकितइतिदीर्घः प्रत्ययलक्षणे-नसनाद्यन्ताधातवइतिधातुसंज्ञायांलिङर्थेलेटिविहेतुहेतुमद्भावलक्षणेलिङर्थेलेट् अत्रहीन्द्रकर्तृ-कंरारणनमुक्थशंसनस्यकर्तव्यत्वेहेतुः लेटस्तिप् इतश्चलोपःपरस्मैपदेष्वितीकारलोपः लेटोडाटा-वित्यडागमः कर्तरिशप् तस्यचर्करीतंपरस्मैपदमदादिवच्चद्रष्टव्यमित्यदादिवद्भावाददिप्रभृतिभ्यः शपइतिप्राप्तोलुग्बहुलंछन्दसीतिनिषिध्यते शपोनुदात्तत्वाद्धावोरन्त्योदात्तएवशिष्यते शपोल्सार्व-धातुकस्यव्यवधानात्तत्परतोविधीयमानमभ्यस्तानामादिरित्याद्युदात्तत्वंनभवति नचतिङ्ङतिङ-इतिनिघातः अत्रयथाशब्दयोगेन यावद्यथाभ्यामितिनिषेधात् चवायोगेप्रथमेतिवानिघातो-नभविष्यति अत्रत्युत्तरवाक्येपुसख्येपुचेतिचानुकृष्टविभक्त्यपेक्षयेयंप्रथमातिङ्विभक्तिः। सख्ये-पु सख्युःकर्माणिसख्यानितेपु कर्मणिचेत्यनुवृत्तौ सख्युर्यइतिसखिशब्दाद्यप्रत्ययः तत्रभसंज्ञायां यस्येतिचेतीकारलोपः प्रत्ययस्वरः ॥ ५ ॥

षष्ठीमृचमाह—

तमित्सखित्वईमहेतंरायेतंसुवीर्ये । सशक्रउतनःशकदिन्द्रो वसुदयमानः ॥ ६ ॥ १९ ॥

तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये । सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥ ६ ॥ १९ ॥

सखित्वेनिमित्तभूतेसति तमित् तमेवेन्द्रमीमहे प्राप्नुमः तथारायेधनार्थं तमीमहे तथा सुवीर्येशोभनसामर्थ्यनिमित्तंतमीमहे उतअपिच शक्रः शक्तिमान्सइन्द्रोनोऽस्मभ्यंवसुधनं दयमानः प्रयच्छन् शकत् अस्मदीयरक्षणेशक्तोऽभूत् साम्प्रदायाव्याकर्मस्वीमहेयामीतिपठि-तम् तदनुसारेणेन्द्रंयाचामहइतिव्याख्येयम् ॥ सख्युर्भावःसखित्वं तस्यभावस्त्वतलावितित्वः

१ अत्रपदकालेनसम्ध्यादसः।

प्रत्ययस्वरेणोदात्तः । ईमहे ईङ्गतौ ङित्वादात्मनेपदं दिवादिभ्यःश्यन् बहुलंछन्दसीतिश्यनोलुक् तिङ्ङतिङइतिनिघातः । राये ऊडिदमितिविभक्तेरुदात्तत्वम् । सुवीर्ये शोभनंवीर्यंयस्यासौसुवीर्यः भवितृवाचिनानेनभावोलक्ष्यते सुवीर्यत्वेइत्यर्थः बहुव्रीहावित्यनुवृत्तौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । शक्रोवीतिशक्रः स्फायितञ्चिवञ्चिशकीत्यादिनारक् प्रत्ययस्वरः । शकव् शकृशक्तौ धातुसंबन्धाधिकारे छन्दसिलुङ्लङ्लिटइतिलुङ् यतःशक्नोति अतस्तमीमहइतिधातुसंबन्धः लुङस्तिप् पुषादिद्युताद्यॢदितःपरस्मैपदेष्वितिच्लेरङादेशः बहुलंछन्दसीत्यडागमाभावः तिङ्ङतिङइतिनिघातः । वसु निदित्यनुवृत्तौ वसेरुप्रत्ययः नित्वादाद्युदात्तत्वम् । दयमानः दयदानगतिरक्षणहिंसादानेषु अनुदात्तेत्वादात्मनेपदम् लटःशानजादेशः शपः पित्वादनुदात्तत्वम् शानचश्चितइत्यन्तोदात्तत्वंबाधित्वा अदुपदेशाल्लसार्वधातुकत्वानुदात्तत्वम् धातुस्वरएवशिष्यते ॥ ६ ॥

॥ इतिप्रथमस्यप्रथमेएकोनविंशोवर्गः ॥ १९ ॥

गायन्तीतिसूक्तेसप्तमीमृचमाह—

सुविवृतंसुनिरजमिन्द्रत्वादातमिद्यशः । गवामपव्रजंवृधि कृणुष्वराधोअद्रिवः ॥ ७ ॥

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः । गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥

हेइन्द्र यशोन्नंकर्मफलभूतं सुविवृतं सुष्ठुसर्वत्रप्रसृतं सुनिरजंसुखेननिःशेषंप्राप्तुंशक्यं त्वादातमित् त्वयाशोधितंचसंपन्नमितिशेषः इतःपरंक्षीरादिरसलाभार्थंगवांव्रजं निवासस्थानं अपवृधि अपवृतमुद्घाटितद्वारंकुरु हेअद्रिवः पर्वतोपलक्षितवज्रयुक्तेन्द्र राधोधनंकृणुष्व संपादय ॥ सुविवृतं वृञ्वरणे कर्मणिक्तप्रत्ययः विशब्देनप्रादिसमासः विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरंबाधित्वाकर्मवाचिनिक्तान्तेपरतोगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमितिऋकारउदात्तः पुनः सुशब्देनसमासेकृदुत्तरपदप्रकृतिस्वरेणसएवऋकारउदात्तः । ननुवृतमित्येवकृदन्तंनतुविवृतमिति प्रत्ययग्रहणेयस्मात्सविहितस्तदादेस्तदन्तस्यग्रहणमितिवचनात् सुविवृतमित्यत्रच समासेवृतमित्येतावन्मात्रंनोत्तरपदं किंतु विवृतमिति तत्कथंकृदुत्तरपदप्रकृतिस्वरत्वमितिचेत् उच्यते—प्रत्ययग्रहणपरिभाषापवादेनकृद्ग्रहणेगतिकारकपूर्वस्यापि-

ग्रहणमित्यनेनविवृतमित्यस्यापिकृदन्तव्यपदेशोपपत्तेः ननुविवृतमित्यस्य यथाकृदन्तव्यपदेशः एवंक्तान्तव्यपदेशोप्यस्तितयैवपरिभाषया तथाच कर्मणिक्तान्तेउत्तरपदेपरतोगतिरनन्तरइति सुशब्दस्यप्रकृतिस्वरःप्राप्नोति नचात्रापिपरादिश्छन्दसिबहुलमित्येवंनास्तिविस्तरः तथाहिसति सुविवृतमित्यत्रविवृतमित्येवोत्तरपदमितितदादिरिकारएवोदात्तःस्यात् विवृतमितिसमासेयद्यपिऋकारःपदादिर्भवति तथापिसुविवृतमितिसमासस्यसतिशिष्टत्वेनबलीयस्त्वात्तत्र्यएवोत्तरपदादौइकारेएवोदात्तस्वरेणभवितव्यमिति उच्यते--गतिरनन्तरइत्यत्रक्तानुवृत्तेःकग्रहणेकृद्ग्रहणपरिभाषानाश्रीयते तदाश्रयणेव्यवहितगतावपि प्रकृतिस्वरेसत्यनन्तरग्रहणमनर्थकंस्यात् अनेनैवचाभिप्रायेणानन्तरग्रहणस्यप्रयोजनमभ्युद्धृतमित्यत्रव्यवहितस्याभिशब्दस्य माभूदितिप्रत्युदाहृतम् तस्मात्सुविवृतमितिऋकारएवोदात्तःइतिस्थितम् । सुनिरजं अनायासेन निरवशेषप्राप्यम् अजगतिक्षेपणयोः सुनिसोरुपसर्गयोःप्राक्प्रयोगः ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषुखल् नचात्रसुशब्दस्यनिसाव्यवधानंशंकनीयम् सुशब्दस्यसुपपदमात्रंखलोनिमित्तंनानन्तर्यं अतएवहिसुपरिहरं दुष्परिहरमित्यादयःप्रयोगाइति पूर्ववद्गतिसमासेलितिप्रत्ययात्पूर्वमुदात्तमितिधात्वकारउदात्तः निसासमासेकृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते पुनःसुशब्देनसमासे कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणमितिपरिभाषयाकृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते। त्वादातं त्वयाशोधनेनविशदीकृतं दैप्शोधने आदेचउपदेशेशितीत्यात्वं सत्यपिहिपकारेनानुबन्धकृतमनेजन्तत्वमित्येजन्तएवायं निष्ठेतिकर्मणिक्तः दाधाघ्वदापित्यत्रादापितिप्रतिषेधेनघुसंज्ञायाअभावाद्दोदद्घोरितिददादेशोनभवति ननु दाप्लवनेइतिप्रतिपदोक्तस्यैवदापस्तत्रादापिति निषेधः नपुनर्लाक्षणिकस्यदैपः लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैवग्रहणंनतुलाक्षणिकस्येतिनियमादितिचेत् न गामादाग्रहणेष्वविशेषइतिप्रतिप्रसवात् युष्मच्छब्दात्तृतीयैकवचनस्यसुपांसुलुगितिडादेशः त्वमावेकवचनेइतिमपर्यन्तस्यत्वादेशः अतोगुणेइतिपररूपत्वं भसंज्ञायांटेरित्यद्शब्दस्यलोपे उदात्तनिवृत्तिस्वरेणआकारउदात्तः कर्तृकरणेकृताबहुलमितितृतीयायाःसमासः तत्पुरुषेकृतिबहुलमितितृतीयायाअप्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । यशः अशूव्याप्तौ अशेर्युट्चेत्यसुन् तत्सन्नियोगेनधातोर्युडागमः नित्त्वादाद्युदात्तत्वम् । गवां प्रातिपदिकस्वरः सावेकाचइतिविभक्तेरुदात्तत्वंप्राप्तं नगोश्वन्साववर्णेतिनिषिध्यते । वृधि वृञ्वरणे श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः बहुलंछन्दसीतिशोरपिलुक् निघातः । कृणुष्व कृविहिंसाकरणयोश्च इदितोनुम् व्यत्ययेनात्मनेपदं लोटस्थास् थासःसे सवाभ्यांवामौ कर्तरिशपिप्राप्ते धिन्विकृण्व्योरचेतिउप्रत्ययः तत्सन्नियोगेनवकारस्यचअकारः तस्यअतोलोपइतिलोपः अचःपरस्मिन्पूर्वविधा-

वित्यकारलोपस्यस्थानिवद्भावाल्लघूपधगुणोनभवति अत्रसतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिसतिशिष्टमपिविकरणस्वरंबाधित्वातिङएवप्रत्ययाद्युदात्तत्वम् । राधः असुन्नन्तोनित्त्वादाद्युदात्तः । अद्रिर्वज्रंतदस्यास्तीतिमतुप् छन्दसीरइतिवत्वम् संबुद्धौ उगिदचामितिनुम् हल्ङ्याब्भ्यइतिसंयोगान्तलोपौ मतुवसोरुसंबुद्धौछन्दसिइतिरुत्वं विसर्जनीयः आमन्त्रितस्यच निघातः ॥ ७ ॥

अष्टमीमृचमाह—

नहित्वारोदसीउभेऋघायमाणमिन्वतः । जेषःस्वर्वतीरपः संगाअस्मभ्यंधूनुहि ॥ ८ ॥

नहि । त्वा । रोदसी इति । उभे इति । ऋघायमाणम् । इन्वतः । जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥

हेइन्द्र ऋघायमाणंशत्रुवधंकुर्वाणं त्वात्वां रोदसीद्यावापृथिव्यावपि त्वदीयंमहिमानंनहिइन्वतः व्याप्तुंनसमर्थेइत्यर्थः तादृशस्त्वंस्वर्वतीः स्वर्लोकयुक्ताअपोवृष्टिरूपाः जेषः जयेः प्रेरयेत्यर्थः अपांस्वर्गसंबन्धश्चान्यत्रादिवोवृष्टिंप्यावयतीतिश्रुतं किंच वृष्टिप्रदानादन्नसंपत्त्यर्थंअस्मभ्यंक्षीरादिरसप्रदागाः संधूनुहि सम्यक्प्रेरय ॥ नहि नञोहिशब्देनसह सुप्सुपेतिसमासः समासस्वरान्तोदात्तत्वम् । त्वा अनुदात्तंसर्वमित्यनुवृत्तौ त्वामौद्वितीयायाइतित्वादेशः । रोदसी रुदेरसुन् नित्त्वादाद्युदात्तः उगितश्चेतिङीप् । उभे प्रातिपदिकस्वरेणान्तोदात्तः शपासहैकादेशउदात्तः । ऋघायमाणं नृन्हन्तीतिविःऋघा अन्येभ्योऽपिदृश्यन्तइतिविच् हशिग्रहणस्यविध्यन्तरोपसंग्रहणार्थत्वान्नकारलोपोहकारस्यघकारः अनृघाऋघाभवतीत्यभूततद्भावेलोहितादिडाज्भ्यःक्यषितिक्यष्प्रत्ययोभवति ससाकृतिगणः लोपश्चहलइत्यनुवृत्तेर्नकारलोपश्च वाक्यषइत्यात्मनेपदं लटःशानच् शपःअदुपदेशात्पराच्छानचोऽसार्वधातुकानुदात्तत्वम् शपः पित्त्वादनुदात्तत्वम् क्यषःप्रत्ययस्वरः एकादेशस्योदात्तत्वम् । इन्वतः इविव्याप्तौ इदितोनुम्धातोरितिनुम् शपःपित्त्वादनुदात्तत्वम् लडादेशस्यतसश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते हिचेतिनिषेधात् तिङ्ङतिङइतिनिघातोनभवति ।जेषः जयेः प्रार्थनायांलिङर्थेलेट् तस्यमध्यमपुरुषैकवचनंसिप् इतश्चलोपःपरस्मैपदेष्वितीकारलोपः कर्तरिशपिप्राप्ते तदपवादः सिब्बहुलंलेटीतिसिप् अडागमस्यानुदात्तत्वात् धातुस्वरएवशिष्यते । स्वरआसामस्तीतिस्व-

र्येत्यः न्यङ्स्वरौस्वरिताविति स्वर्शब्दःस्वरितः मतुमङीपौपित्त्वादनुदात्तौ संहितायां स्वरितात्संहितायामनुदात्तानामित्येकश्रुतिः स्वरितएवशिष्यते । अपः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । धूञ्कंपने लोट् सेर्ह्यपिच्च स्वादिभ्यःश्नुः उतश्चप्रत्ययादसंयोगपूर्वादितिप्राप्तस्यलुकः छान्दसत्वादभावः ॥ ८ ॥

अभिप्लवषडहस्योक्थ्येषुतृतीयसवनेच्छावाकस्यषट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन्युगलेआश्रुत्कर्णेतितृचोनुरूपः एस्तूष्वितिखण्डे-श्रुधीहवंतिरश्च्याआश्रुत्कर्णश्रुधीहवमितिसूत्रितम्।

तस्मिन्स्तृचेप्रथमांसूक्तेनवमीमृचमाह—

**आश्रु॑त्कर्ण श्रु॒धी हवं॒ नू चि॑द्दधिष्व मे॒ गिरः॑ । इन्द्र॒ स्तोम॑मि॒मं मम॑ कृ॒ष्वा यु॒जश्चि॒दन्त॑रम् ॥ ९ ॥**

**आश्रु॑त्ऽकर्ण । श्रु॒धि । हव॑म् । नु । चि॒त् । द॒धि॒ष्व॒ । मे॒ । गिरः॑ । इन्द्र॑ । स्तोम॑म् । इ॒मम् । मम॑ । कृ॒ष्व । यु॒जः । चि॒त् । अन्त॑रम् ॥ ९ ॥**

हेआश्रुत्कर्ण सर्वतःश्रोतारौकर्णौयस्यतादृगिन्द्रहवमस्मदीयमाह्वानंनुक्षिप्रं श्रुधिशृणु मे ममहोतुर्गिरश्चित्स्तुतीरपिदधिष्वचित्तेधारय किञ्चममदीयमिमंस्तोमंस्तोत्ररूपंवाक्समूहंयुजश्चित्स्वकीयसख्युरपिअन्तरंकृष्वआसन्नंकुरु यथावचनंतस्यत्वंप्रियंमन्यसेतद्वदस्मदीयस्तुतिष्वपिप्रीतिंकुर्वित्यर्थः ॥ आश्रुत्कर्ण आसमन्ताच्छृणुतइत्याश्रुत् क्विप् ह्रस्वस्यपितिकृतितुक् तादृशौकर्णौयस्य आमन्त्रितस्यचेत्याद्युदात्तत्वम् । श्रुधि श्रुश्रवणे लोटोहिः श्रुवःशृचेतिविहितश्नोर्बहुलंछन्दसीतिलुक् तत्सन्नियोगशिष्टत्वाच्छृभावोपिनिवर्तते श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः सतिशिष्टत्वात्प्रत्ययस्वरः आमन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्त्वेनपदादपरत्वात्तिङ्ङतिङइतिनिघातोनभवति संहितायामन्येषामपिदृश्यतइतिदीर्घः । हवं ह्वेञ्स्पर्धायांशब्देच बहुलंछन्दसीत्यनैमित्तिकेसंप्रसारणेकृतेपश्चादुकारान्तत्वेनऋदोरबित्यप्प्रत्ययः अपःपित्त्वाद्धातुस्वरः । नु संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । चित् चादिरनुदात्तः । दधिष्व दधातेर्लोट् थासस्से सवाभ्यांवामौ शपःश्लुः अभ्यासस्यह्रस्वत्वम् यदि छन्दस्युभयथेत्यार्धधातुकस्यापिस्वीकारादिडागमः आकारलोपः निघातः । मम तवममौङसीत्यनेनमपर्यन्तस्यममादेशः प्रातिपदिकस्वरेणान्तोदात्तत्वेप्राप्ते युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । कृष्व डुकृञ्करणे लोट् थासःसे सवाभ्यांवामौ शपोबहुलंछन्दसीतिलुक् सतिशिष्टत्वात्प्रत्ययस्वरः पादादित्वान्ननिघातः । युजः सावेकाचस्तृतीयादिर्विभक्तिरिति विभक्तेरुदात्तत्वम् अन्तरं वृषादित्वादाद्युदात्तः ॥ ९ ॥

दशमीमृचमाह—

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् । वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥ १० ॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥ १० ॥

हेइन्द्र त्वात्वां विद्मजानीमः हिःपूरणः कीदृशंत्वांवृषन्तमं कामानामतिशयेनवर्षितारं वाजेषुसंग्रामेषु हवनश्रुतं अस्मदीयस्याह्वानस्यश्रोतारं वृषन्तमस्यअतिशयेनकामादीनांवर्षितुस्तवऊतिंरक्षामस्मद्विषयामुद्दिश्यहूमहे त्वामाह्वयामः कीदृशीमूतिं सहस्रसातमां अतिशयेनधनसहस्राणांदात्रीम् ॥ विद्म विदोलटोवेतिमसोमादेशः प्रत्ययस्वरेणान्तोदात्तः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । वृषन्तमं वृषुवृषुमृषुसेचने कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवइतिकनिन् नित्त्वादाद्युदात्तः तमपःपित्त्वात्सएवशिष्यते अयस्मयादीनिच्छन्दसीतिभत्वेनपदत्वाभावान्नलोपाभावः पदत्वाच्चटिलोपः । वाजेषु वाजशब्दोवृषादित्वादाद्युदात्तः । हवनश्रुतं ह्वइत्यनुवृत्तौ बहुलंछन्दसीतिल्युटिसंप्रसारणं हवनंशृणोतीति क्विप् तुगागमः । वृषन्तमस्यउक्तम् । हूमहे बहुलंछन्दसीतिसंप्रसारणं शपइत्यनुवृत्तौबहुलंछन्दसीतिशपोलुक् । ऊतिं ऊतियूतिजूतीत्यादिनान्तोदात्तोनिपातितः । सहस्रंसनोतीतिसहस्रसाः षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्याकारादेशःकृदुत्तरपदप्रकृतिस्वरत्वं तमपःपित्त्वात्तदेवशिष्यते ॥ १० ॥

एकादशीमृचमाह—

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब । नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥ ११ ॥

आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब । नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥ ११ ॥

हेइन्द्र तु क्षिप्रंनोऽस्मान्प्रत्यागच्छेतिशेषः हेकौशिककुशिकस्यपुत्रेन्द्र मन्दसानः हृष्टोमूत्वाशुतमभिषुतंसोमंपिब यद्यपिविश्वामित्रः कुशिकस्यपुत्रः तथापितद्रूपेणेन्द्रस्यैवोत्पन्नत्वात्कुशिकपुत्रत्वमविरुद्धम् अयंवृत्तान्तोनुक्रमणिकायामुक्तः कुशिकस्त्वैषीरथिरिन्द्रतुल्यंपुत्रमिच्छन्

ब्रह्मचर्यंचचार तस्येन्द्रएवगाथीपुत्रोजज्ञइति हेइन्द्र नव्यंसर्वैःदेवैः स्तुत्यंकर्मानुष्ठानपरंआयुर्जीवितम् प्रसूतिरमकर्षेणसुष्ठुवर्धय ततोमांसहस्रसांसहस्रसंख्याकलाभोपेतं ऋषिंअतीन्द्रियद्रष्टारंकृधि कुरु ॥ तु संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । नः संहितायांउदात्तादनुदात्तस्य स्वरितइतिस्वरितत्वम् । इन्द्र आमन्त्रितनिघातः । कौशिक निघातः । मन्दसानः हृष्यन्-मदिस्तुतिमोदमदस्वमकान्तिगतिषु असानजित्यनुवृत्तौऋञ्जिवृधिमन्दिसहिभ्यःकिदित्यसानच्प्रत्ययः चित्वादन्तोदात्तः । सुतं प्रत्ययस्वरः। नव्यं णुस्तुतौ अचोयत गुणः वान्तोयिप्रत्यये इत्यवादेशः यतोनावइत्याद्युदात्तत्वम् । आयुः उसि निदित्यनुवृत्तौ एतेर्णिच्चेत्युसिप्रत्ययः णित्वाद्वृद्ध्यायादेशौ नित्वादाद्युदात्तत्वम् । सु निपातस्यचेतिसंहितायांदीर्घत्वम् । तिर तरतेर्व्यत्ययेनशः ऋतइद्धातोरितिइत्वं अतोहेरितिहेर्लुक्। कृधि कृञ्करणे बहुलंछन्दसीतिशपोलुक् श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः। सहस्रसां उक्तम्। ऋषिं ऋषीगतौ इगुपधात्किच्च किरवादुणाभावः नित्वादाद्युदात्तत्वम् ॥ ११ ॥

प्रवर्ग्येपरित्वेत्यभिष्टुयात् स्पृष्टोदकमितिखण्डे—परित्वागिर्वणोगिरोधिद्वयोरदधाउक्थं वचइतिसूत्रितम् तथाहविर्धानप्रवर्तनेसैषंपरिधानीया हविर्धानेप्रवर्वयन्तीतिखण्डे—परित्वागिर्वणइतिपरिदध्यादितिसूत्रितम् तथाब्राह्मणंच—परित्वागिर्वणोगिरइत्युत्तमयापरिदधातीति ॥

तामेतांद्वादशीमृचमाह—

परि॑त्वागिर्वणो॒गिर॑इ॒माभ॑वन्तुवि॒श्वतः॑ । वृ॒द्धायु॒मनु॒वृद्ध॑यो॒जु॒ष्टाभ॑वन्तु॒जुष्ट॑यः ॥ १२ ॥ २० ॥

परि॑ । त्वा॒ । गि॒र्व॒णः॒ । गिरः॑ । इ॒माः । भ॒व॒न्तु॒ । वि॒श्वतः॑ ।
वृ॒द्धऽआ॑युम् । अनु॑ । वृद्ध॑यः । जुष्टाः॑ । भ॒व॒न्तु॒ । जुष्ट॑यः॥१२॥२०॥

हेगिर्वणःअस्मदीयस्तुतिभागिन्द्र विश्वतः सर्वेषुकर्मसुप्रयुज्यमानाइमागिरः अस्मदीयाः स्तुतयस्त्वात्वां परिभवन्तु सर्वतः प्राप्नुवन्तु कीदृश्योगिरः वृद्धायुमनु प्रवृद्धेणायुष्येणोपेतं त्वामनुसृत्यवृद्धयोवर्धमानाः किंचेतागिरः जुष्टास्त्वयासेविताःसत्योजुष्टयोऽस्माकंप्रीतिहेतवोभवन्तु ॥ गिर्वणः गीर्भिर्वन्यतइतिगिर्वणः वनषणसंभक्तौ सर्वधातुभ्योऽसुन् गिरउपधायादीर्घाभावश्छान्दसः आमन्त्रितनिघातः । विश्वतः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । वृद्धायुं वृधुवृद्धौ क्तप्रत्ययः उदितोवेतीटःक्त्वाप्रत्ययेविकल्पितत्वाद्यस्यविभाषेतिनिष्ठायामिडभावः प्रत्ययस्वरः इण्गतौ छन्दसीणइतिउण् णित्वाद्वृद्धिःआयादेशश्च वृद्धमायुर्यस्य बहुव्रीहिपूर्वपदम्

कृतिस्वरत्वम्। वृद्धयः वृधेःक्तिनि तितुत्रतथसिसुसरकसेषुचेतिइडभावः नित्त्वादाद्युदात्तत्वम् जुष्टाः श्वीदितोनिष्ठायामितीडभावः जुष्टार्पितइत्यनुवृत्तौ नित्यंमन्त्रेइत्याद्युदात्तत्वम्। जुष्टयः जुषीप्रीतिसेवनयोः क्तिन् तितुत्रेतीडभावः नित्त्वादाद्युदात्तः॥ १२॥

॥ इतिप्रथमस्यप्रथमेविंशोवर्गः॥ २०॥

इन्द्रंविश्वाइत्यष्टर्चस्यसूक्तस्यमधुच्छन्दसःपुत्रोजेतृनामकऋषिः तथाचानुक्रान्तम्—इन्द्रम-ष्टौजेतामाधुच्छन्दसइति छन्दस्त्वानुष्टुभमितिपूर्वसूक्तोक्तम् इन्द्रोदेवतानुवर्तते विनियोगस्तुमहाव्रतेनिष्केवल्येकस्लंसूक्तंशंसनीयम् उरूइतिखण्डेशौनकेनसूत्रितम्—इन्द्रंविश्वाअवीवृधन्नित्यानुष्टुभम् तस्यप्रथमायाःपूर्वमर्धर्चंशस्त्वोत्तरेणार्धर्चेनोत्तरस्याःपूर्वमर्धर्चंव्यतिषजतिपादैःपादाननुष्टुप्कारंमागुत्तमायाइति ब्राह्मणंचप्रथमारण्यकेपठ्यतेमवोमहइतिखण्डे—इन्द्रंविश्वाअवीवृधन्नितिपद्यानुषक्ताइति तथाप्रउगस्यपञ्चमेहनिनिष्केवल्येशस्त्रेइन्द्रंविश्वाअवीवृधन्नित्यनुरूपस्तृचः स्तोमेवर्धमानइतिखण्डेसूत्रितम्—उपनोहरिभिःसुतमिन्द्रंविश्वाअवीवृधन्निति।

अस्मिन्सूक्तेप्रथमामृचमाह—

इन्द्रं॒विश्वा॑अवीवृधन्त्समु॒द्रव्य॑चसं॒गिरः॑। र॒थीत॑मंर॒थीनां॒वाजा॑नां॒सत्प॑तिं॒पति॑म्॥ १॥

इन्द्र॑म्। विश्वाः॑। अ॒वी॒वृ॒ध॒न्। स॒मु॒द्रऽव्य॑चसम्। गिरः॑। र॒थिऽत॑मम्। र॒थिना॑म्। वाजा॑नाम्। सत्ऽप॑तिम्। पति॑म्॥ १॥

विश्वाःसर्वागिरोऽस्मदीयाःस्तुतयःइन्द्रमवीवृधन् वर्धितवत्यः कीदृशमिन्द्रं समुद्रव्यचसं समुद्रवद्व्याप्तवन्तं रथीनांरथयुक्तानांयोद्धॄणांमध्येरथीतमंअतिशयेनरथयुक्तं वाजानामन्नानांपतिंस्वामिनं सत्पतिंसतांसन्मार्गवर्तिनांपालकम्॥ विश्वाः विशेःक्वन् नित्स्वरः। अवीवृधन् वृधेर्णिचि चङि उऋदित्यनुवृत्तौ नित्यंछन्दसीतिऋकारस्यऋकारविधानाल्लघूपधगुणाभावः निघातस्वरः। समुद्रव्यचसं व्यचेरसुन् गाङ्कुटादिभ्योञ्णिन्ङिदितिप्राप्तस्यङित्त्वस्यव्यचेःकुटादित्वमनसीतिअसिनिषेधात् ग्रहिज्येत्यादिनाङितिविधीयमानंसंप्रसारणंनभवति समुद्रव्यचइवव्यचोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। रथीतमं रथीनां रथशब्दादुत्पन्नस्येनश्छान्दसंदीर्घत्वं मत्वर्थस्वरेणोदात्तत्वंच। वाजानां वृषादित्वादाद्युदात्तत्वम्। सत्पतिं पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम्॥१॥

द्वितीयामृचमाह–

सख्येतंइन्द्रवाजिनोमाभेमशवसस्पते । त्वामभिप्रणोनुमो जेतारमपराजितम् ॥ २॥

सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते । त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥ २ ॥

हेशवसस्पते बलस्यपालकेन्द्र तेतवसख्ये अनुग्रहप्रयुक्ते सखित्वे वर्तमानावयंवाजिनोऽन्नवन्तोभूत्वामाभेमशत्रुभ्योभीतिंमाप्राप्ताभूम अतस्त्वामभयहेतुं अभिप्रणोनुमः सर्वतःप्रकर्षेणस्तुमः कीदृशंत्वां जेतारं युद्धेषुजयशीलं अपराजितं क्वापिपराजयरहितम् ॥ सख्ये सख्युःकर्मसख्यं सख्युर्यः प्रत्ययस्वरः । वाजिनः वाजोन्नमेषामस्तीतिवाजिनः प्रत्ययस्वरः । भेम ञिभीभये लुङुत्तमबहुवचनंमस्नित्यंङितइतिसलोपः बहुलंछन्दसीतिच्लेर्लुक् छन्दस्युभयथेतितिङआर्धधातुकत्वेनङित्त्वाभावाद्गुणः नमाङ्योगइत्यडागमप्रतिषेधः । शवसः षष्ठ्याःपतिपुत्रपृष्ठपारपदपयस्पोषेष्वितिविसर्जनीयस्यसंहितायांसत्वं सुबामन्त्रितइतिपराङ्गवद्भावेनपदद्वयनिघातः । नोनुमः णुस्तुतौ णोनइतिनत्वं यङोलुक् प्रत्ययलक्षणेनसन्यङोरिति द्विर्भावः गुणोयङ्लुकोरित्यभ्यासस्यगुणः प्रत्ययलक्षणेनधातुसंज्ञायांलटोमस् अदादिवद्भावाच्छपोलुक् उपसर्गादसमासेऽपिणोपदेशस्येतिसंहितायांणत्वम् जेतारं जिजये । ताच्छील्यादिषुतृन् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् । अपराजितं अव्ययपूर्वपदप्रकृतिस्वरत्वेननञउदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह–

पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः । यदीवाजस्यगोमतःस्तोतृभ्योमंहतेमघम् ॥ ३ ॥

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः । यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥ ३ ॥

इन्द्रस्यसंबन्धिन्योरातयोधनदानानि पूर्वीःअनादिकालसिद्धाः प्रभूतावाअस्येन्द्रस्यसर्वदाप्रवृत्तंयोधनदानमयंस्वभावइत्यर्थः एवंसतिइदानींननोऽपियजमानः स्तोतृभ्यऋत्विग्भ्योगोमतोगोसहितस्यवाजस्यान्नस्यपर्याप्तंमघंधनंयदिमंहते दक्षिणारूपेणददाति तदानींऊतयो-

बहुधनदानपूर्वकाणीन्द्रस्यास्मद्विषयाणिरक्षणानिनविदस्यन्ति विशेषेणनोपक्षीयन्ते मघं रेक्णइत्यादिष्वष्टाविंशतिसंख्याकेषुधननामसु मघशब्दःपठितः दातिदाशतीत्यादिषु दशसु दानकर्मसु मंहतइतिपठितम् ॥ पूर्वीः पुरुशब्दस्यवोतोगुणवचनादितिङीप् आद्यस्योकारस्यदीर्घश्छान्दसः जसि दीर्घाज्जसिचेतिनिषेधंबाधित्वा वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् ङीषःप्रत्ययस्वरेणोदात्तत्वम् ।रातयः मन्त्रेवृषेषपचमनविदभूवीराउदात्तइतिक्तिनउदात्तत्वम् । दस्यन्ति दसुउपक्षये दिवादिभ्यःश्यन् निघातः। ऊतयः ऊतियूतीत्यादिनाक्तिन्नुदात्तः। यदि निपातत्वादाद्युदात्तः संहितायांनिपातस्यचेतिदीर्घत्वम् । स्तोतृभ्यः ष्टुञ्स्तुतौ धात्वादेःषःसः तृचश्चित्वादन्तोदात्तत्वम् । मंहते शपःपित्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणतिङ्ङतिङइतिनिघातोनभवति निपातैर्यद्यदिहन्तेतिनिषेधात् ॥ ३ ॥

अभिप्लवषडहस्योक्थ्येषुतृतीयसवनेच्छावाकस्यपुरांभिन्दुर्युवाकविरितिस्तोत्रियस्तृचः तथाचसूत्रितम्—एह्यूष्वित्युपक्रम्य पुरांभिन्दुर्युवाकविर्वृषाह्यसिराधसइति ।

तस्मिंस्तृचेप्रथमासूक्तेचतुर्थीमृचमाह—

पुरांभिन्दुर्युवाकविरमितौजाअजायत । इन्द्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ ४ ॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत । इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥

अयमिन्द्रउच्यमानगुणयुक्तोऽजायतसंपन्नः कीदृग्गुणकइतितदुच्यते पुरामसुरपुराणां भिन्दुर्भेत्ता युवाकदाचिदपिवलीपलितादिवार्धकरहितः कविर्मेधावी अमितौजाः प्रभूतबलः विश्वस्यकर्मणः कृत्स्नस्यज्योतिष्टोमादेर्धर्ता पोषकर्ता वज्री यजमानरक्षणार्थंसर्वदावज्रयुक्तः पुरुष्टुतः बहुविधंतत्तत्कर्मणिस्तुतः ॥ भिन्दुः भिदिर्विदारणे कुरित्यनुवृत्तौ मृभिदिव्यधिगृधिधृषिदृशिभ्यइतिकुप्रत्ययः तस्यछन्दस्युभयथेतिसार्वधातुकसंज्ञायां रुधादिभ्यःश्नम् मित्वादन्त्यादचःपरोभवति श्नसोरल्लोपः अनुस्वारपरसवर्णौ अचःपरस्मिन्पूर्वविधाविितिप्रात्स्यस्थानिवद्भावस्यनपदान्तेत्यादिनानिषेधः। युवा युमिश्रणामिश्रणयोः कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवइतिकनिन् नित्वादाद्युदात्तः। कविः कुशब्दे अचइरितिइः प्रत्ययस्वरः। अमितौजाः अमितशब्दस्याव्ययपूर्वपदप्रकृतिस्वरत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनतदेवशिष्यते। विश्वस्य अशुप्रुषीत्यादिनाक्वन् नित्वादाद्युदात्तः । कर्मणः अन्येभ्योऽपिदृश्यन्तइतिमनिन् नित्स्वरः।

धर्ता तृच् चित्त्वादन्तोदात्तः । वज्री मत्वर्थीयइनिः प्रत्ययस्वरः । पुरुष्टुतः स्तुतस्तोमयोश्छन्दसीतिषत्वम् बहुपुमदेशेपुस्तुतः थाथघञ्क्ताजबित्रकाणामित्यन्तोदात्तत्वम् तृतीयासमासेहि थाथादिस्वरापवादः तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरःस्यात् ॥ ४ ॥

पञ्चमीमृचमाह—

त्वंव॒लस्य॒गोम॒तोपा॑वरद्रिवो॒बिल॑म् । त्वांदे॒वाअबि॑भ्युपस्तु॒ज्यमा॑नासआविपुः ॥ ५ ॥

त्वम् । व॒लस्य॑ । गोऽमं॑तः । अप॑ । अ॒वः॒ । अ॒द्रि॒ऽव॒ः । बिल॑म् । त्वाम् । दे॒वाः । अबि॑भ्युषः । तु॒ज्यमा॑नासः । आ॒वि॒षुः॒ ॥ ५ ॥

वलनामकःकश्चिदसुरोदेवसंबन्धिनीर्गाअपहृत्यकस्मिंश्चिद्बिलेगोपितवान् तदानीमिन्द्रस्तद्बिलंस्वसैन्येनसमावृत्यतस्माद्बिलाद्गाः निःसारयामास तदिदमुपाख्यानं—इंद्रोवलस्यबिलमपौर्णोदित्यादिब्राह्मणेपुमन्त्रान्तरेपुचमसिद्धम् । तदेतद्धृदिनिधायायंमन्त्रःप्रवर्तते हेअद्रिवः वज्रयुक्तेन्द्र त्वंगोमतोवलस्यगोभिर्युक्तस्यवलनामकस्यासुरस्यसंबन्धिबिलंअपावः स्वसैन्यमुखेनापावृतवानसि तदानींतुज्यमानासोवलेनाहिंस्यमानादेवाअबिभ्युषः त्वदीयरक्षयाबलादभीताः सन्तः त्वामाविषुः प्राप्तवन्तः ॥ अप निपातत्वादाद्युदात्तः । अवः वृञ्वरणे लङ्सिप् इतश्चलोपः स्वादिभ्यःश्नुः तस्यबहुलंछन्दसीतिलुक् गुणोरपरत्वं हल्ङ्याादिलोपः विसर्जनीयः अडागमः । अद्रिवः अद्रिरस्यास्तीतिमतुप् छन्दसीरइतिवत्वम् संबोधने उगिदचामितिनुम् हल्ङ्यादिसंयोगान्तलोपौ मतुवसोरुसंबुद्धौछन्दसीतिरुत्वम् । बिलं नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् । अबिभ्युषः ञिभीभये लिट् द्विर्भावः अभ्यासस्यह्रस्वजश्त्वे क्वसुश्चेतिलिटःक्वसुरादेशः क्रादिनियमात्प्राप्तइट् वस्वेकाजाद्घसामितिनियमान्निवर्तते जसि सर्वनामस्थानेपिव्यत्ययेन भत्वाद्वसोःसंप्रसारणंपरपूर्वत्वं शासिवसिघसीनांचेतिषत्वम् अचिश्नुधात्वित्यादिनाप्राप्तमियङादेशंबाधित्वा एरनेकाचइतियणादेशः नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तुज्यमानासः तुजेर्हिंसार्थात्परस्यकर्मणिलटःस्थानेशानच् सार्वधातुकेयगितियक् तस्मादुपदेशादुत्तरस्यलसार्वधातुकस्यानुदात्तत्वम् यकएवप्रत्ययस्वरःशिष्यते । आविषुः अवरक्षणादिषु अस्माद्व्यत्ययांल्लुङोसिः तस्य सिजभ्यस्तविदिभ्यश्चेतिजुस् सिच् इडागमः आडजादीनामित्याडागमः आदेशप्रत्यययोरितिषत्वम् ॥ ५ ॥

---

१ तै० सं० २.१.५ ।

षष्ठीमृचमाह—

तवा॒हंशू॑ररा॒तिभि॒ःप्रत्या॑यं॒सिन्धु॑मा॒वद॑न् । उपा॑तिष्ठन्तगि
र्वणोवि॒दुष्टे॒तस्य॑का॒रवः॑ ॥ ६ ॥

तव॑ । अ॒हम् । शू॒र॒ । रा॒तिऽभिः॑ । प्रति॑ । आ॒य॒म् । सिन्धु॑म् ।
आ॒ऽवद॑न् । उप॑ । अ॒ति॒ष्ठ॒न्त॒ । गि॒र्व॒णः॒ । वि॒दुः । ते॒ । तस्य॑ ।
का॒रवः॑ ॥ ६ ॥

हेशूर संग्रामेशौर्ययुक्तेन्द्र तवरातिभिः कर्मसु त्वदीयैर्धनदानैर्निमित्तभूतैः अहंहोताप्रत्यायं त्वांपुनरागतोऽस्मि पुरावहुषुकर्मसुत्वत्तोधनस्यलब्धत्वादस्मिन्कर्मणिप्रत्यागमनमित्युच्यते किंकुर्वन् सिन्धुंस्यन्दमानं सोममावदन् सर्वतःकथयन् अस्मिन्सोमयागेत्वदीयांधनदानकीर्तिंप्रकटयन्नित्यर्थः हेगिर्वणः गीर्भिर्वननीयेन्द्र कारवःकर्तारः ऋत्विग्यजमानाः उपातिष्ठन्त पुराधनलाभार्थंत्वामुपस्थितवन्तः उपस्थायचतस्यतादृशस्यौदार्योपेतस्यतेतवधनदानंविदुर्जानन्ति गिर्वणस्शब्दंयास्कइत्थंनिर्ब्रूते—गिर्वणादेवोभवतिगीर्भिरेनंवनयन्तीति रेभोजरितेत्यादिपुत्रयोदशसुस्तोतृनामसु कारुशब्दःपठितः ॥ तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । रातिभिः मन्त्रेवृषेत्यादिनाक्तिन्नुदात्तः । आयं इणोलङ् तस्थस्थमिपामित्यमादेशः अदिप्रभृतिभ्यःशपइतिशपोलुक् आडागमःवृध्यायादेशौ तिङ्ङतिङइतिनिघातः । सिन्धुं स्यन्दूप्रस्रवणे निदित्यनुवृत्तौ स्यन्देःसंप्रसारणंधश्चेत्युप्रत्ययोधकारश्चान्तादेशः नित्त्वादाद्युदात्तः । आवदन् वदव्यक्तायांवाचि लटःशतृ शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते आङासहकुगतिप्रादयइतिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् । अतिष्ठन्त उपान्मन्त्रकरणेइत्यात्मनेपदम् । गिर्वणः वनषणसंभक्तौ असुन् आमन्त्रितस्यचेतिनिघातः । विदुः विदज्ञाने लट् अदिप्रभृतिभ्यःशपइतिशपोलुक् विदोलटोवेतिझेरुस् पादादित्वान्ननिघातः संहितायांयुष्मत्ततक्षुप्वन्तःपादमितिषत्वम् ष्टुनाष्टुरित्युत्तरस्यतकारस्यष्टुत्वम् ' तस्यसावेकाचइतिविभक्तेरुदात्तत्वंप्राप्तं नगोश्वन्साववर्णेतिनिषिध्यते । कारवः कृवापाजीत्यादिनाउण् प्रत्ययस्वरः ॥६॥

सप्तमीमृचमाह—

मा॒याभि॑रिन्द्रमा॒यिनं॒त्वंशुष्ण॒मवा॑तिरः । वि॒दुष्टे॒तस्य॒मेधि॑
रा॒स्तेषां॒श्रवां॒स्युत्ति॑र ॥ ७ ॥

मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।
विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥ ७ ॥

हेइन्द्र त्वंमायिनंनानाविधकपटोपेतंशुष्णंभूतानांशोषणहेतुमेतन्नामकमसुरं मायाभिः तत्प्रतिकूलैःकपटविशेषैः यद्वा तद्वधोपायगोचरप्रज्ञाभिः अवातिरः हिंसितवानसि एतच्चयास्केनोक्तम्–इन्द्रःशुष्णंजघानेति[1] । शुष्णंपिप्रुमित्यादिमन्त्रेचायमर्थोविस्पष्टः[2] ॥ मेधिराः मेधावन्तोनुष्ठातारः तस्यताद्दशस्यते तव महिमानं विदुर्जानन्ति तेषांजानतामनुष्ठातॄणां श्रवांस्यन्नानि उत्तिर वर्धय केतः केतुरित्यादिष्वेकादशसुप्रज्ञानामसु मायावयुनमितिपठितम् श्रवःशब्दं यास्कोनिर्वक्ति–श्रवइत्यन्ननामश्रूयतइतिसतइति[3] ॥ मायाभिः माङ्माने माछायासस्तिवस्योयइनियप्रत्ययः प्रत्ययस्वरः । मायिनं मायाअस्यास्तीतिमायी व्रीह्यादित्वादिनिप्रत्ययः प्रत्ययस्वरः । शुष्णं शुषशोषणे अस्मादन्तर्भावितण्यर्थान्निदित्यनुवृत्तौ तृषिशुषिरसिभ्यः किच्चेतिनप्रत्ययः नित्त्वादाद्युदात्तः । अतिरः तरतेर्लङिव्यत्ययेनशः तस्यङित्त्वेनगुणाभावात् ऋतइद्धातोरितीत्वम् रपरत्वम् । विदुष्टेतस्य गतमन्त्रेगतम् । मेधिराः मिधृमेधृमेधाहिंसनयोः औणादिकइरन् नित्त्वादाद्युदात्तः । श्रवांसि नविषयत्वादाद्युदात्तः ॥ ७ ॥

अष्टमीमृचमाह–

इन्द्रमीशानमोजसाभिस्तोमाअनूषत । सहस्रंयस्यरातय
उतवासन्तिभूयसीः ॥८ ॥ २१ ॥

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत । सहस्रम् ।
यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥ ८ ॥ २१ ॥

स्तोमाः स्तोतारऋत्विजः ओजसाबलेनईशानंजगतोनियामकमिन्द्रं अभ्यनूषत सर्वत्र स्तुतवन्तः यस्येन्द्रस्यरातयोधनदानानि सहस्रंसहस्रसंख्योपेतानिसन्ति उतवा अथवा भूयसीः सहस्रसंख्यायाअप्यधिकाःसन्ति तमिन्द्रमितिपूर्वत्रान्वयः ॥ इन्द्रं ऋज्रेन्द्रेत्यादिनारन् नित्त्वादाद्युदात्तः । ईशानं ईशः शानच् अदिप्रभृतिभ्यःशपइतिशपोलुक् धातोरनुदात्तेत्त्वात् तास्यनुदात्तेदित्यादिनाशानचोनुदात्तत्वम् । ओजसा नविषयत्वादाद्युदात्तः । स्तोमाः अर्तिस्तुसित्यादिना मन्प्रत्ययः नित्त्वादाद्युदात्तः । अनूषत णुस्तुतौ णोनः लुङ् व्यत्ययेनमस्य

१ नि० ३. ११. । २ ऋ० सं० १. ७. १७. । ३ नि० १०. ३. ।

अदादेशः चेः सिच् अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद्गुणाभावः इडभावश्छान्दसः दीर्घत्वं च अडागमः । सहस्रं कर्दमादीनां चेति द्वितीयाक्षरमुदात्तम् । रातयः मन्त्रे वृषेत्यादिना क्तिन् उदात्तः । उत प्रातिपदिकस्वरः । वा चादिरनुदात्तः । सन्ति प्रत्ययाद्युदात्तत्वम् तिङ्ङतिङ इति निघातो न भवति यद्वृत्तान्नित्यमिति निषेधात् स हि व्यवहितेऽपि भवतीत्युक्तम् । भूयसीः सहस्रादतिशयेन बह्व्यः भूयस्यः अत्र विभक्तव्यस्य सहस्रस्य संनिधिबलादुपपदत्वप्रतीतेः द्विवचनविभज्योपपदे तरबीयसुनाविति बहुशब्दादीयसुन् बहोर्लोपो भू च बहोरितीकारलोपः प्रकृतेर्भूरित्यादेशश्च ईयसुनो नित्त्वादाद्युदात्तत्वम् उगितश्चेति ङीप् ॥ ८ ॥

॥ इति प्रथमस्य प्रथमे एकविंशो वर्गः ॥ २१ ॥

इति तृतीयोनुवाकः ॥ ३ ॥

अथ सूक्तषट्कात्मके चतुर्थानुवाके अग्निं दूतमित्यादिकस्य द्वादशर्चस्य सूक्तस्य कण्वपुत्रो मेधातिथिर्ऋषिः अपवादाभावादनुवर्तमानं प्राग्घिरण्यस्तूपादित्युक्तं गायत्रमेव छन्दः अग्निदेवताकत्वं विस्पष्टं अत एवानुक्रम्यते—अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादो निर्मन्थ्य आहवनीयश्चेति विनियोगस्तु प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दस्यग्निं दूतमिति सूक्तम् अथैतस्यारात्रेर्विवासकालेइति खण्डे—अग्निमीळेग्निं दूतमिति सूत्रितम् तथा पृष्ठ्यषडहस्य द्वितीयेहनि इदमेव सूक्तमाज्यशस्त्रं पृष्ठ्यस्याभिप्लवेनोक्ते अहनी इति खण्डे सूत्रितम्—अग्निं दूतमिति द्वितीय इति दर्शपूर्णमासयोः सामिधेनीष्वग्निं दूतमित्येका नमःप्रवक्त इति खण्डे सूत्रितम्—ईळेन्यो नमस्यस्तिरोग्निं दूतं वृणीमह इति ।

अस्मिन्सूक्ते प्रथमामृचमाह—

अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥ १ ॥

अ॒ग्निम् । दू॒तम् । वृ॒णी॒म॒हे॒ । होता॑रम् । वि॒श्वऽवे॑दसम् । अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतु॑म् ॥ १ ॥

अग्नेर्दूतत्वमेतन्मन्त्रव्याख्यानेन तैत्तिरीयब्राह्मणे समाम्नायते—अग्निर्देवानां दूत आसीदुशनाः काव्योऽसुराणामिति । तादृशं देवदूतमग्निं अस्मिन्कर्मणि वृणीमहे संभजामः कीदृशं होतारं देवा-

१ तै० सं० २. ५. ८. ।

नामाह्वातारं विश्ववेदसं सर्वधनोपेतं अस्यप्रवर्तमानस्ययज्ञस्यनिष्पादकत्वेन सुक्रतुंशोभनकर्माणं शोभनप्रज्ञंवा मघमित्यादिष्वष्टाविंशतिसंख्याकेषुधननामसु वेदस्शब्दःपठितः ॥ होतारं ह्वेञ्स्पर्धायांशब्देच ताच्छील्यादिषुतृन् बहुलंछन्दसीतिसंप्रसारणपरपूर्वत्वे गुणः नित्त्वादाद्युदात्तः। विश्ववेदसं बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वम्। अस्य ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। सुक्रतुं क्रत्वादयश्चेत्याद्युदात्तत्वम्॥ १ ॥

द्वितीयामृचमाह—

अ॒ग्निम॑ग्निं॒ हवी॑मभिः॒ सदा॑ हवन्त वि॒श्पति॑म्। ह॒व्य॒वाहं॑ पुरुप्रि॒यम् ॥ २ ॥

अ॒ग्निम्ऽअ॑ग्निम्। हवी॑मऽभिः। सदा॑। ह॒व॒न्त॒। वि॒श्पति॑म्। ह॒व्य॒ऽवाह॑म्। पु॒रु॒ऽप्रि॒यम् ॥ २ ॥

यद्यप्यग्निःस्वरूपेणैकएव तथापिप्रयोगभेदादाहवनीयादिस्थानभेदात्पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमितिवीप्सा तं हवीमभिः आह्वानकरणैर्मन्त्रैःसदाहवन्त निरन्तरमनुष्ठातारआह्वयन्ति कीदृशं विश्पतिं विशांप्रजानांहोत्रादीनां पालकम् हव्यवाहं यजमानसमर्पितस्यहविषोदेवान्प्रतिवोढारं अतएवपुरुप्रियं बहूनांप्रीत्यास्पदम् ॥ अग्निमग्निं नित्यवीप्सयोरितिवीप्सायांद्विर्भावः तस्यपरमाम्रेडितमित्युत्तरस्याम्रेडितसंज्ञायां अनुदात्तंचेत्यनुदात्तत्वम्। हवीमभिः ह्वेञ्स्पर्धायांशब्देच आह्वानकरणभूतेषुमन्त्रेषुस्वव्यापारस्वातन्त्र्यात्कर्तृत्वविवक्षया अन्येभ्योऽपिदृश्यन्तइतिकर्तरिमनिन् तस्यछान्दसईडागमः बहुलंछन्दसीतिधातोः संप्रसारणंपरपूर्वत्वम् गुणावादेशौ नित्त्वादाद्युदात्तत्वम्। सदा सर्वैकान्येत्यादिनासर्वशब्दात् दाप्रत्ययः सर्वस्यसोन्यतरस्यांदीतिसभावः व्यत्ययेनाद्युदात्तत्वम्। हवन्त ह्वेञोलट् झस्यान्तादेशः टेरेत्वाभावश्छान्दसः शपि बहुलंछन्दसीतिसंप्रसारणं तिङ्ङतिङइतिनिघातः। विश्पतिं पत्यावैश्वर्यइतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमिति उत्तरपदाद्युदात्तत्वम्। हव्यवाहं वहप्रापणे वहश्चेतिण्विप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम्।पुरूणांप्रियं समासान्तोदात्तत्वम्॥२॥

तृतीयामृचमाह—

अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे। असि॒ होता॑ न॒ ईड्यः॑ ॥ ३ ॥

अग्ने॑। दे॒वान्। इ॒ह। आ। व॒ह॒। ज॒ज्ञा॒नः। वृ॒क्तऽब॑र्हिषे। असि॑। होता॑। नः॒। ईड्यः॑ ॥ ३ ॥

हेअग्ने जज्ञानः अरण्योरुत्पन्नस्त्वंवृक्तबर्हिषेआस्तरणार्थं छिन्नेनबर्हिषायुक्तायतंयजमानमनुग्रहीतुमिहकर्मणिहविर्भुजोदेवानावह नोऽस्मदर्थंहोता देवानामाह्वाता त्वमीड्यःस्तुत्योऽसि ॥ देवानित्यत्रसंहितायां दीर्घादटिसमानपादेइतिरुत्वम् आतोटिनित्यमित्यनुनासिकभावः । जज्ञानः जनीप्रादुर्भावे लिटःकानच् गमहनेत्युपधालोपः द्विर्वचनेचीतितस्यस्थानिवद्भावाद्द्विर्वचनम् चित्त्वादन्तोदात्तः । वृक्तबर्हिषे ओव्रश्चूछेदने निष्ठेतिक्तप्रत्ययः यस्यविभाषेतीट्प्रतिषेधः वृक्तंबर्हिर्यजमानाय येनवाऋत्विजा बहुव्रीहौपूर्वपदप्रकृतिस्वरः । असि अस्तेः सिप् अदिप्रभृतिभ्यःशपइतिशपोलुक् तासस्त्योर्लोपइतिसकारस्यलोपः पादादित्वान्ननिघातः । होता ह्वयतेस्ताच्छील्यादिपुतृन् बहुलंछन्दसीतिसंप्रसारणम् नित्त्वादाद्युदात्तः । ईड्यः ईडस्तुतौ ऋहलोर्ण्यत् तित्स्वरितेप्राप्ते ईडवंदवृशंसदुहांण्यतइत्याद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

तौँउंशतोविबोधययदंग्नेयासिदूत्यम् । देवैरासंत्सिबर्हिषि ॥ ४ ॥

तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् । देवैः ।
आ । सत्सि । बर्हिषि ॥ ४ ॥

हेअग्नेयद्यस्मात्कारणात् दूत्यंयासि देवानांदूतकर्मप्राप्नोषि तस्मात्कारणादुशतोहविः कामयमानान्तान्देवान् हविःस्वीकारार्थं विबोधय विबोध्यच बर्हिष्यस्मिन्कर्मणितैर्दे वैःसहआसत्सि आसीदआगत्योपविश ॥ तान् दीर्घादटिसमानपादेइतिसंहितायांरुत्वम् आतोटिनित्यमित्यनुनासिकभावः । उशतः वशकान्तौ लटःशतृ अदिप्रभृतिभ्यःशपइतिशपोलुक् ग्रहिज्येत्यादिनासंप्रसारणम् शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् । यासि यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । दूतस्यभागःकर्मवादूत्यं दूतस्यभागकर्मणीइतियत् तस्यतित्स्वरितापवादत्वेन यतोनावइतिप्राप्तमाद्युदात्तत्वम् सर्वेविधयश्छन्दसिविकल्प्यन्तइतिनिवर्तते अतस्तित्स्वरितमित्येवभवति शेषनिघातः । सत्सि सीदसि षद्लृविशरणगत्यवसादनेषु लटःसिपि शपोबहुलंछन्दसीतिलुक् नलुमताङ्गस्येतिप्रत्ययलक्षणप्रतिषेधात् पाघ्रेत्यादिनासीदादेशोनभवति । बर्हिषि बृहवृहिवृद्धौ बृंहेर्नलोपश्चेतिइसिप्रत्ययः प्रत्ययस्वरेणइकारउदात्तः ॥ ४ ॥

पञ्चमीमृचमाह—

घृताहवनदीदिवःप्रतिष्मरिषतोदह । अग्नेत्वंरक्षस्विनः ॥ ५ ॥

नामाह्वातारं विश्ववेदसं सर्वधनोपेतं अस्यप्रवर्तमानस्ययज्ञस्यनिष्पादकत्वेन सुक्रतुंशोभनकर्माणं शोभनप्रज्ञंवा मघमित्यादिष्वष्टाविंशतिसंख्याकेपुधननामसु वेदसुशब्दःपठितः ॥ होतारं ह्वेञ्स्पर्धायांशब्देच ताच्छील्यादिपुतृन् बहुलंछन्दसीतिसंप्रसारणपरपूर्वत्वे गुणः नित्त्वादाद्युदात्तः । विश्ववेदसं बहुव्रीहौविश्वंसंज्ञायामिति पूर्वपदान्तोदात्तत्वम् । अस्य ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । सुक्रतुं क्रत्वादयश्चेत्याद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

अ॒ग्निम॑ग्निं॒ हवी॑मभिः॒ सदा॑ हवन्त वि॒श्पति॑म् । ह॒व्य॒वाहं॑ पुरुप्रि॒यम् ॥ २ ॥

अ॒ग्निम्ऽअ॑ग्निम् । हवी॑मऽभिः । सदा॑ । ह॒व॒न्त॒ । वि॒श्पति॑म् । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽप्रि॒यम् ॥ २ ॥

यद्यप्यग्निःस्वरूपेणैकएव तथापिप्रयोगभेदादाहवनीयादिस्थानभेदात्पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमितिवीप्सा तं हवीमभिः आह्वानकरणैर्मन्त्रैःसदाहवन्त निरन्तरमनुष्ठातारआह्वयन्ति कीदृशं विश्पतिं विशांप्रजानांहोत्रादीनां पालकम् हव्यवाहं यजमानसमर्पितस्यहविषोदेवान्प्रतिवोढारं अतएवपुरुप्रियं बहूनांप्रीत्यास्पदम् ॥ अग्निमग्निं नित्यवीप्सयोरितिवीप्सायांद्विर्भावः तस्यपरमाम्रेडितमित्युत्तरस्याम्रेडितसंज्ञायां अनुदात्तंचेत्यनुदात्तत्वम् । हवीमभिः ह्वेञ्स्पर्धायांशब्देच आह्वानकरणभूतेषुमन्त्रेषुस्वव्यापारस्वातन्त्र्यात्कर्तृत्वविवक्षया अन्येभ्योऽपिदृश्यन्तइतिकर्तरिमनिन् तस्यछान्दसईडागमः बहुलंछन्दसीतिधातोः संप्रसारणंपरपूर्वत्वम् गुणावादेशौ नित्त्वादाद्युदात्तत्वम् । सदा सर्वैकान्येत्यादिनासर्वशब्दात् दाप्रत्ययः सर्वस्यसोन्यतरस्यांदीतिसभावः व्यत्ययेनाद्युदात्तत्वम् । हवन्त ह्वेञोलट् झस्यान्तादेशः टेरेत्वाभावश्छान्दसः शपि बहुलंछन्दसीतिसंप्रसारणं तिङ्ङतिङइतिनिघातः । विश्पतिं पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमिति उत्तरपदाद्युदात्तत्वम् । हव्यवाहं वहप्रापणे वहश्चेतिण्विप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । पुरूणांप्रियं समासान्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे । असि॒ होता॑ न॒ ईड्यः॑ ॥ ३ ॥

अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । ज॒ज्ञा॒नः । वृ॒क्तऽब॑र्हिषे । असि॑ । होता॑ । नः॒ । ईड्यः॑ ॥ ३ ॥

हेअग्ने जज्ञानः अरण्योरुत्पन्नस्त्वंवृक्तबर्हिषेआस्तरणार्थं छिन्नेनबर्हिषायुक्तायतंयजमानमनुग्रहीतुमिहकर्मणिहविर्भुजोदेवानावह नोऽस्मदर्थंहोता देवानामाह्वाता त्वमीड्यःस्तुत्योऽसि ॥ देवानित्यत्रसंहितायां दीर्घादटिसमानपादेइतिरुत्वम् आतोटिनित्यमित्यनुनासिकभावः । जज्ञानः जनीप्रादुर्भावे लिटःकानच् गमहनेत्युपधालोपः द्विर्वचनेचीतितस्यस्थानिवद्भावाद्विर्वचनम् चित्त्वादन्तोदात्तः । वृक्तबर्हिषे ओव्रश्चूछेदने निष्ठितिक्तप्रत्ययः यस्यविभाषेतीट्प्रतिषेधः वृक्तंबर्हिर्यजमानाय येनवाऋत्विजा बहुव्रीहौपूर्वपदप्रकृतिस्वरः । असि अस्तेः सिप् अदिप्रभृतिभ्यःशपइतिशपोलुक् तासस्त्योर्लोपइतिसकारस्यलोपः पादादित्वान्ननिघातः । होता हुयतेस्ताच्छील्यादिषुतृन् बहुलंछन्दसीतिसंप्रसारणम् नित्त्वादाद्युदात्तः । ईड्यः ईडस्तुतौ ऋहलोर्ण्यत् तित्स्वरितेप्राप्ते ईडवंदवृशंसदुहांण्यतइत्याद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

ताँउ॒शतो॒विबो॑धय॒यद॑ग्ने॒यासि॑दू॒त्य॑म् । दे॒वैरास॑त्सि॒ब॒र्हिषि॑ ॥ ४ ॥

तान् । उ॒श॒तः । वि । बो॒ध॒य॒ । यत् । अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् । दे॒वैः । आ । स॒त्सि॒ । ब॒र्हिषि॑ ॥ ४ ॥

हेअग्नेयद्यस्मात्कारणात् दूत्यंयासि देवानांदूतकर्मप्राप्नोषि तस्मात्कारणादुशतोहविःकामयमानान्तान्देवान् हविःस्वीकारार्थं विबोधय विबोध्यच बर्हिष्यस्मिन्कर्मणितैर्देवैःसह आसत्सि आसीदआगत्योपविश ॥ तान् दीर्घादटिसमानपादेइतिसंहितायांरुत्वम् आतोटिनित्यमित्यनुनासिकभावः । उशतः वशकान्तौ लटःशतृ अदिप्रभृतिभ्यःशपइतिशपोलुक् ग्रहिज्येत्यादिनासंप्रसारणम् शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् । यासि यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । दूतस्यभागःकर्मवादूत्यं दूतस्यभागकर्मणीइतियत् तस्यतित्स्वरितमितिस्वरितत्वेप्राप्ते यतोनावइतिप्राप्तमाद्युदात्तत्वम् सर्वेविधयश्छन्दसिविकल्प्यन्तइतिनिवर्तते अतस्तित्स्वरितमित्येवभवति शेषनिघातः । सत्सि सीदसि षद्लृविशरणगत्यवसादनेषु लटःसिपि शपोबहुलंछन्दसीतिलुक् नलुमताङ्गस्येतिप्रत्ययलक्षणप्रतिषेधात् पाघ्रेत्यादिनासीदादेशोनभवति । बर्हिषि वृहवृहिवृद्धौ वृंहेर्नलोपश्चेतिइसिप्रत्ययः प्रत्ययस्वरेणइकारउदात्तः ॥ ४ ॥

पञ्चमीमृचमाह—

घृता॑हवनदीदिवः॒प्रति॑ष्म॒रिष॑तोदह । अग्ने॒त्वंर॑क्ष॒स्विनः॑ ॥ ५ ॥

घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह । अग्ने । त्वम् । रक्षस्विनः ॥ ५ ॥

हेघृताहवन घृतेनाहूयमानदीदिवोदीप्यमानाग्ने त्वंरक्षस्विनोरक्षोयुक्तान् रिषतोहिंसकान्शत्रून्प्रतिअस्माकंप्रतिकूलान् दहस्म सर्वथाभस्मीकुरु ॥ घृतेनआहूयतेऽस्मिन्निितिकरणाधिकरणयोश्चेत्यधिकरणेल्युट् अत्रजुहोतेरविवक्षितकर्मत्वेनाकर्मकत्वात् घृतस्यकरणत्वमेवनतुकर्मत्वम् अतोनैषा तृतीयाचहोश्छन्दसीतिकर्मणितृतीया किंतु कर्तृकरणयोस्तृतीयेतिकरणवाचिन्येव अतः कर्तृकरणेकृताबहुलमितिसमासः तत्रपूर्वपदप्रकृतिस्वरापवादे कृदुत्तरपदप्रकृतिस्वरेप्रातिपदिकावस्थायामेवकृतेसति पश्चाद्विभक्तावुत्पन्नायामामन्त्रितस्यचेत्याद्युदात्तत्वम् । दीदिवः दीव्यतेर्लिटःक्वसुः तस्य वस्वेकाजाद्घसामितिनियमादिडभावः द्विर्वचनं हलादिशेषः उत्तरवकारस्य लोपोव्योर्वलीतिलोपः क्वसुः कित्त्वाद्गुणाभावः तुजादीनांदीर्घोभ्यासस्येतिदीर्घत्वमभ्यासस्यासंबुद्धौउगिदचामितिनुम् संयोगान्तस्यलोपइतिसकारलोपे नकारस्यमतुवसोरुसंबुद्धौछन्दसीतिरुत्वम् विसर्गः पदात्परत्वादामन्त्रितनिघातः ननुपूर्वामन्त्रितस्याविद्यमानत्वात् पादादित्वेननिघातोपपत्तिः नचनामन्त्रितेसमानाधिकरणेसामान्यवचनमित्यविद्यमानत्वप्रतिषेधः उभयोरग्निपदविशेषणत्वेनविशेषवचनत्वात् अतएवपरस्परमनन्वयेनासामर्थ्यात्समर्थःपदविधिरितिचनियमात्पूर्वस्यनपराङ्गवद्भावः येनैकपद्येननिघातःस्यादतएवहीडेरन्तेदितिसरस्वतीत्यादौपृथक्पृथगाद्युदात्तत्वमिति । उच्यते—अत्रदीदिवइतिनाग्निपदस्य विशेषणं किन्तु घृताहवनपदस्यैवद्योतनार्थं घृताहवनइतिविशेष्यत्वेनविवक्षितत्वात् विशिष्टस्य तु पश्चादग्निविशेषणता तत्रदीदिवःपदंप्रतिघृताहवनपदस्यविशेष्यत्वान्नामन्त्रितेसमानाधिकरणेइत्यविद्यमानवत्वप्रतिषेधान्निघातोपपत्तिः अतएवपरस्परविशेषणविशेष्यभावेनसामर्थ्यात्सुबामन्त्रितेइतिपराङ्गवद्भावेशेषनिघातेनापिस्वरोपपत्तिरिति ईडेरन्तइत्यादौतुनैवंपरस्परान्वयइतिवैषम्यम् । रिषतः रुषरिषहिंसार्थाइतिभौवादिकस्यलटःशत्रादेशे शपि छान्दसोगुणाभावः तौदादिकस्यवारुशरिशहिंसायामित्यस्यछान्दसंषत्वम् विकरणस्यशस्यङित्त्वाद्गुणाभावः । रक्षस्शब्दादस्मायामेधास्रजोविनिरितिमत्वर्थीयोविनिः तस्यप्रत्ययाद्युदात्तत्वम् ॥ ५ ॥

अग्निमन्थने अग्निनाग्निःसमिध्यतइत्येषानुवचनीया प्रातर्वैश्वदेव्यांप्रेषितइतिखण्डेसूत्रितम्—अग्निनाग्निःसमिध्यतेत्वंह्यग्नेअग्निनेति एषैवाग्निमतइत्यस्यानुवाक्या अथाग्नेय्यइतिखण्डे अग्नावग्निप्रणयनइत्युपक्रम्यसूत्रितम्—यद्वोवयंप्रमिनामव्रतान्यग्निनाग्निःसमिध्यतइति ।

तामेतांषष्ठीमृचमाह—

अ॒ग्निना॒ग्निः समि॑ध्यते क॒विर्गृ॒हप॑तिर्यु॒वा । ह॒व्य॒वाड्जु॒ह्वा॑स्यः ॥६॥२२॥

अ॒ग्निना॑ । अ॒ग्निः । सम् । इ॒ध्य॒ते॒ । क॒विः । गृ॒हऽप॑तिः । यु॒वा ।
ह॒व्य॒ऽवाट् । जु॒हुऽआ॑स्यः ॥ ६ ॥ २२ ॥

अग्निराहवनीयाख्यःस्वस्मिन्प्रक्षिप्यमाणेनाग्निनानिर्मथ्येनप्रणीतेनवासहसमिध्यते सम्यग्दीप्यते कीदृशोग्निः कविर्मेधावी गृहपतिर्यजमानगृहस्यपालकः युवा नित्यतरुणः हव्यवाट् हविषोवोढा जुह्वास्यः जुहूरूपेणमुखेनयुक्तः ॥ गृहपतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । युव युमिश्रणे कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवइतिकनिन् नित्त्वादाद्युदात्तः । हव्यंवहतीतिहव्यवाट् वहश्चेतिण्विप्रत्ययः णित्त्वादुपधावृद्धिः गतिकारकोपपदात्कृदुत्तरपदप्रकृतिस्वरत्वम् । जुह्वास्यः हूयतेऽनयेतिजुहूः हुवःश्लुवच्चेतिक्विप् तत्सन्नियोगादीर्घश्च श्लुवद्भावाद्द्विर्भावः श्रुत्वजश्त्वे प्रातिपदिकस्वरेणान्तोदात्तः । जुहूरास्यंयस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनसएवशिष्यते शेषनिघातः यणादेशउदात्तस्वरितयोर्यणःस्वरितोऽनुदात्तस्येत्याकारःस्वरितः ॥ ६ ॥

॥ इतिप्रथमस्यप्रथमेद्वाविंशोवर्गः ॥ २२ ॥

सूक्तेसप्तमीमृचमाह—

क॒विम॒ग्निमुप॑ स्तुहि स॒त्यध॑र्माणमध्व॒रे । दे॒वम॑मीव॒चात॑नम् ॥ ७ ॥

क॒विम् । अ॒ग्निम् । उप॑ । स्तु॒हि॒ । स॒त्यऽध॑र्माणम् । अ॒ध्व॒रे ।
दे॒वम् । अ॒मी॒व॒ऽचात॑नम् ॥ ७ ॥

हेस्तोतृसंघ अध्वरेक्रतौ अग्निमुपस्तुहि उपेत्यस्तुतिंकुरु कीदृशं कविंमेधाविनं सत्यधर्माणंसत्यवदनरूपेणधर्मेणोपेतं देवं द्योतमानं अमीवचातनं अमीवानांहिंसकानांशत्रूणां रोगाणां बाधकम् ॥ सत्यंधर्मोयस्येतिसत्यधर्मा धर्मादनिच्केवलादित्यनिच्समासान्तः अन्तःपदेनतस्यसमासत्वाभिधानात् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेशेषनिघातेनानुदात्तत्वम् । अमीवशब्दः अमरोगेइत्यस्माद्धातोर्विपक्वजिह्वामीवाअपामीवाइति वन्प्रत्ययेईडागमेचनिपातोनित्त्वादाद्युदात्तः चतेचदेयाचनेइत्यस्माद्धिंसार्थाण्णिजन्तान्नन्द्यादित्वाल्ल्युः योरनादेशः णेरनिटीतिणेर्लोपः लिनीनिघातोरकारस्योदात्तत्वम् नचस्वरेकर्तव्येणिलोपस्यस्थानिवद्भावः नपदान्तद्विर्वचनेत्यादिनातन्निषेधात् अमीवानांचातनइतिसमासे कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते ॥ ७ ॥

अष्टमीमृचमाह—

यस्त्वामंग्ने हविष्पतिर्दूतंदेव सपर्यति । तस्यस्मप्राविताभव ॥ ८ ॥

यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति ।
तस्य । स्म । प्रऽअविता । भव ॥ ८ ॥

हेअग्नेदेव योहविष्पतिर्यजमानः देवदूतंत्वांसपर्यति परिचरति तस्ययजमानस्य प्राविता भवस्म अवश्यंरक्षकोभव ॥ हूयतइतिहविः अर्चिशुचीत्यादिनाइसिः प्रत्ययस्वरेणइकार उदात्तः हविषःपतिः हविष्पतिः नित्यंसमासेनुत्तरपदस्थस्येतिषत्वम् पत्यावैश्वर्येइतिपूर्व-पदप्रकृतिस्वरत्वम् । सपरशब्दात्कण्ड्वादिभ्योयगितियक् धातुप्रकरणात् गुणप्रतिषेधाद्यर्था-धकःकित्वाच्चसपरशब्दस्यधातुत्वात्ततोविहितस्ययकआर्धधातुकत्वेसति अतोलोपइत्यलोपः सनाद्यन्ताधातवइतिधातुसंज्ञायांतिप् कर्तरिशप् तस्मिन्पूर्वस्यातोगुणेइतिपररूपत्वम् यकःप्रत्यय-स्वरेणोदात्तत्वं शपासहएकादेशस्यएकादेशउदात्तेनोदात्तइत्युदात्तत्वम् तिङ्ङतिङइतिनिघातो-नभवति यद्वृत्तान्नित्यमितिप्रतिषेधात् ॥ ८ ॥

गार्हपत्याहवनीययोः परस्परसंसर्गेविहितस्यहविषोयाज्या योअग्निंदेववीतयइत्येषा अथाग्नेय्यइष्टयइतिखण्डेसूत्रितम्—योअग्निंदेववीतयेकुविस्तुनोगविष्टयइति ।

तामेतांयाज्यांसूक्तगतांनवमीमृचमाह—

योअग्निंदेववीतयेहविष्माँआविवासति । तस्मैपावकमृळय ॥ ९ ॥

यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽविवासति ।
तस्मै । पावक । मृळय ॥ ९ ॥

हविष्मान्हविर्युक्तोयोयजमानोदेववीतये देवानांहविर्भक्षणहेतुयागार्थं अग्निमाविवास-ति अग्नेः समीपेविशेषेणागत्यपरिचर्यांकरोति हेपावकाग्ने तस्मैमृळय तंयजमानंसुखय॥ देववी-तये वीगतिप्रजनकान्त्यसनखादनेषु इत्यस्मादसनार्थाक्तिन् देवानांवीतिर्यस्मिन्यागेसदेववीतिः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । नब्विषयस्यानिसन्तस्येतिपर्युदासाद्धविःशब्दोन्तोदात्तः म-तुपःसर्वानुदात्तत्वात्सएवशिष्यते । आविवासति वागतिगन्धनयोः अस्मादन्तर्भावितण्य-र्थादागमयितुमिच्छतीत्यर्थेसन् आह्वानेच्छापरिचर्यांप्रापयवस्यतीतिविवासतिशब्दःपरिच-

यथैनिघंटौपठितः द्विर्भावः अभ्यासस्यह्रस्वः सन्यतइतिइत्वम् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् तिङ्‌ङतिङइतिनिघातोनभवति यद्वृत्तान्नित्यमितिप्रतिषेधात् तिङ्‌चोदात्तवतीत्याङोनिघातः सहसुपेत्यत्रसहेतियोगविभागादाङस्तिङासहसमासे समासान्तोदात्तत्वेप्राप्ते परादिश्छन्दसिब-हुलमित्युत्तरपदान्तोदात्तत्वम्। तस्मै क्रियाग्रहणंकर्तव्यमितिसंप्रदानेचतुर्थी ॥ ९ ॥

पवमानेष्टावग्नेःपावकस्यानुवाक्या सनःपावकदीदिवइति पौर्णमासेनेष्टिपशुसोमाउपदिष्टा-इतिखण्डेसूत्रितम्—सनःपावकदीदिवोग्नेपावकरोचिषेति ।

तामेतामनुवाक्यांसूक्तगतांदशमीमृचमाह—

सनःपावकदीदिवोऽग्नेदेवाँइहावह। उपयज्ञंहविश्चनः ॥ १० ॥

सः। नः। पावक। दीदिऽवः। अग्ने। देवान्। इह। आ।
वह। उप। यज्ञम्। हविः। च। नः ॥ १० ॥

हेदीदिवोदीप्यमानपावक शोधकाग्नेसत्वंनोऽस्मदर्थमिहदेवयजनदेशेदेवानावह ततोनोऽस्मदीयंयज्ञंतत्रत्यंहविश्चउप देवसमीपेप्रापयेतिशेषः ॥ दीदिवः दिवुक्रीडादौ छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् क्वसुः द्विर्भावःहलादिशेषःतुजादीनांदीर्घोभ्यासस्येत्यभ्यासस्यदीर्घत्वम् वस्वेकाजाद्घसामितिनियमाद्वसोरिट्प्रतिषेधः उत्तरवकारस्यलोपोव्योर्वलीतिवकारलोपः कित्वाद्गुणाभावः संबुद्धौउगिदचामितिनुम् हल्ङ्यादिलोपः संयोगान्तलोपः मतुवसोरितिरुत्वंविसर्गः।अग्ने पादादित्वान्ननिघातः। देवान् इहेत्यत्र दीर्घादटिसमानपादेइतिरुत्वम् आतोटिनित्यमित्याकारस्यानुनासिकः भोभगोअघोअपूर्वस्ययोशीतिरोर्यकारः लोपःशाकल्यस्येतियकारलोपः तस्यासिद्धत्वाद्गुणोनभवति। इह इदमोहइतिसप्तम्यन्ताद्धप्रत्ययः इदमइश् तद्धितान्तत्वात्प्रातिपदिकत्वे सुपोधातुप्रातिपदिकयोरितिसप्तम्यालुक् तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां अव्ययादाप्सुपइत्युत्तरस्याःसप्तम्यालुक् अकारः प्रत्ययस्वरेणोदात्तः ॥ १० ॥

एकादशीमृचमाह—

सनःस्तवानआभरगायत्रेणनवीयसा। रयिंवीरवतीमिषम् ॥ ११ ॥

सः। नः। स्तवानः। आ। भर। गायत्रेण। नवीयसा।
रयिम्। वीरऽवतीम्। इषम् ॥ ११ ॥

हेअग्ने नवीयसानवतरेणपूर्वैरप्यसंपादितेनगायत्रेणगायत्रीछन्दस्केनानेनसूक्तेनस्तवानः स्तूयमानः सत्वंनोऽस्मदर्थं रयिंधनं वीरवतीं शूरपुत्रप्रभृत्यपत्ययुक्तां इषमन्नंच आभर संपादय ॥ स्तवानः ष्टुञ्स्तुतौ धात्वादेःषःसः स्वरितञितइत्यात्मनेपदम् लटःशानच् कर्तरिशप् बहुलंछन्दसीतिलुगभावः गुणावादेशौ आनेमुगितिमुग्नभवति अनित्यमागमशासनमित्यागमानुशासनस्यानित्यत्वात् शपःपित्वादनुदात्तत्वम् शानचश्चित्त्वादन्तोदात्तस्यअदुपदेशाच्छपः परत्वाल्लसार्वधातुकानुदात्तत्वम् धातुस्वरएवशिष्यते । भर हृग्रहोर्भश्छन्दसीतिभत्वम् । गायत्रेण गायत्र्याःसंबन्धिगायत्रं तस्येदमित्यण् प्रत्ययस्वरः । नवीयसा नवशब्दादातिशायनिकईयसुन्प्रत्ययः नित्त्वादाद्युदात्तः । वीरवतीं मतुमङीपोः पित्त्वादनुदात्तत्वम् अकारःप्रातिपदिकस्वरेणोदात्तः ॥ ११ ॥

द्वादशीमृचमाह—

अग्ने॑शु॒क्रेण॑शो॒चिषा॒विश्वा॑भिर्दे॒वहू॑तिभिः । इ॒मंस्तोमं॑ जु॒षस्व॑नः ॥ १२ ॥ २३ ॥

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः । दे॒वहू॑तिऽभिः । इ॒मम् । स्तोम॑म् । जु॒षस्व॑ । नः॒ ॥ १२ ॥ २३ ॥

हेअग्ने शुक्रेणशोचिषात्वदीयश्वेतवर्णदीप्त्या विश्वाभिर्देवहूतिभिः त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्चयुक्तस्त्वंनोऽस्मदीयमिमंस्तोमंस्तोत्रविशेषंजुषस्वसेवस्व ॥ विश्वशब्दोविशेःक्वन्तो नित्त्वादाद्युदात्तः । देवहूतिभिः देवशब्दःपचाद्यजन्तः चित्त्वादन्तोदात्तः देवानांहूतयआह्वानान्यासुस्तुतिष्वितिदेवहूतयःस्तुतयः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । स्तूयतेऽनेनेतिस्तोमः अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन् इत्यादिनामन् नित्त्वादाद्युदात्तः ॥ १२ ॥

॥ इतिप्रथमस्यप्रथमेत्रयोविंशोवर्गः ॥ २३ ॥

सुसमिद्धइत्यादिकंद्वादशर्चमाप्रीसूक्तम् तस्यकाण्वोमेधातिथिर्ऋषिः गायत्रंछन्दः प्रत्यृचंप्रतीयमानाःसुसमिद्धतनूनपादादिकाद्वादशदेवताः तथाचानुक्रमणिकायामृक्संख्याद्यपिछन्दश्चानुवृत्तिबलात्सिद्धवत्कृत्य देवताउदाहृताः सुसमिद्धइतीध्मः समिद्धोवाग्निस्तनूनपान्नराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौप्रचेतसौतिस्रोदेव्यःसरस्वतीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयइतिप्रत्यृचंदेवताएतदाप्रीसूक्तमिति । विनियोगस्तु—पशौसुसमिद्धोनआवहेतिकाण्वमाप्रीसूक्तम् एकादशप्रयाजाइतिखण्डेसूत्रितम्—समिद्धोअद्येतिसर्वेषांयथर्षिवेति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

सुसंमिद्धोनआवहदेवाँअग्नेहविष्मते। होतःपावकयक्षिच ॥ १ ॥

सुऽसंमिद्धः। नः। आ। वह। देवान्। अग्ने। हविष्मते।
होतरिति। पावक। यक्षि। च ॥ १ ॥

हेअग्ने सुसमिद्धोनामकस्त्वंनोऽस्मदीयायहविष्मतेयजमानायतदनुग्रहार्थंदेवानावह हे-पावकशोधक होतःहोमनिष्पादकाग्ने यक्षिच यजच॥ सुसमिद्धः समःक्रियाविशेषणत्वेनगतिसंज्ञकत्वात्प्रादिसमासः शोभनवाचिनःसुशब्दस्यतु विशेषणंविशेष्येणबहुलमितिसमिद्धपदेन कर्मधारयःसमासः सुशब्दःप्रातिपदिकस्वरेणोदात्तः कर्मधारयेनिष्ठेतिपूर्वपदप्रकृतिस्वरत्वम् क्रियाविशेषणत्वेहिसुशब्दस्यगतित्वात्प्रादिसमासेगतिरनन्तरइतिसमोपउदात्तत्वम् तदेवकृदुत्तरपदप्रकृतिस्वरत्वेनस्थास्यतीतिसुशब्दोऽनुदात्तःस्यात्। देवान्अग्ने पूर्ववद्रुत्वानुनासिके। हविष्मते हविरस्यास्तीतिमतुप् तसौमत्वर्थेइतिभत्वेनपदत्वस्यबाधितत्वान्नरुत्वम्। होतःपावकशब्दयोरामन्त्रितयोःपृथक्पृथगेवक्रियान्वयेपरस्परमसामर्थ्यात्पराङ्गवद्भावाभावात्तन्निबन्धनमैकस्वर्यम् नचद्वितीयस्यामन्त्रितस्याष्टमिकनिघातेनैकस्वर्यम् आमन्त्रितंपूर्वमविद्यमानवदितिपूर्वस्याविद्यमानवत्त्वेनपदात्परत्वाभावात्पादादित्वाच्चपरस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वेसमानमेवाविद्यमानवत्त्वम्. अतएवाविद्यमानवत्त्वात्सामर्थ्येऽपिनपराङ्गवद्भावइतिनैकस्वर्यसिद्धिः अतोहोतरितिविशेष्यम्. अतःपुनातीतिपावकइत्यवयवप्रसिद्धिस्वीकारेण विशेषणत्वाद्धोतरितिविशेष्यम्. तच्चसामान्यवचनमितिनामन्त्रितेसमानाधिकरणेइत्यविद्यमानवत्त्वप्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेनवा पराङ्गवद्भावेसति शेषनिघातेनवासर्वानुदात्तत्वसिद्धिः। यक्षि यजेर्लोटःसिपि बहुलंछन्दसीतिशपोलुक् व्रश्चादिनाषत्वम् षढोःकःसीतिकत्वम् सेर्हिरादेशश्छान्दसत्वान्नभवति सिपःपित्त्वेनानुदात्तत्वाद्धातुस्वरएव शिष्यते नचतिङ्ङतिङइतिनिघातः पूर्वस्यपावकेत्यामन्त्रितस्याविद्यमानवत्त्वेनपदादपरत्वात् अतएवतस्याव्यवधायकत्वेनहोतरित्यपेक्ष्यइतिनिघातःस्यादितिचेत् न यक्षिपदापेक्षयाहोतरित्यस्यापिपूर्वत्वेनाविद्यमानत्वात् ननुनामन्त्रितेसमानाधिकरणेइतितस्यनिषिद्धमविद्यमानवत्त्वम्. नचपावकपदस्याविद्यमानवत्त्वेनसमानाधिकरणपरत्वाभावः यक्षिपदस्यैवहिकार्यमति पावकपदंपूर्वत्वादविद्यमानवत्स्यात् होतःपदकार्यमविद्यमानवत्त्वप्रतिषेधंप्रतिपरत्वाद्विद्यमानवदेवेतिभवत्ये-

वहोतरित्यस्याविद्यमानवत्त्वप्रतिषेधः अतस्तस्यविद्यमानवत्त्वात्तदपेक्षयायक्षीत्यस्यनिघातःप्रा-मोत्येव सत्यम् अत्रयक्षीत्यस्यचशब्दपरत्वाच्चादिषुचेतिनिघातप्रतिषेधोभविष्यतीत्यदोषः॥१॥

द्वितीयामृचमाह—

मधुमन्तंतनूनपाद्यज्ञंदेवेषुनःकवे । अद्याकृणुहिवीतये ॥ २ ॥

मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥ २ ॥

हेकवे मेधाविन् अग्नेतनूनपादेतन्नामकत्वंअद्यास्मिन्दिनेनोऽस्मदीयंमधुमन्तंरसवन्तं यज्ञंहविः वीतयेभक्षणार्थं देवेषु कृणुहि कुरु प्रापयेत्यर्थः ॥ मधुमन्तं फलिपाटिनमि-मनिजनांगुकपटिनाकिधतश्चेति मन्यतेरुप्रत्ययोधकारश्चान्तादेशः निदित्यनुवृत्तेः प्रत्यय-स्यनित्त्वादाद्युदात्तोमधुशब्दः। तनूनपात् आमन्त्रितनिघातः । अद्य सद्यःपरुत्परारीत्यादिना अस्मिन्कालेइत्यर्थेद्यप्रत्ययान्तोनिपातितःप्रत्ययस्वरेणान्तोदात्तः तद्धितश्चासर्वविभक्तिरित्यव्य-यत्वादव्ययादाप्सुपइत्युपरिसप्तम्यालुक् संहितायामन्येषामपिदृश्यतइतिदीर्घत्वम् कृणुहि कृ-विहिंसाकरणयोश्च इदितोनुम्धातोरितिनुम् लोटःसेर्हिरादेशः धिन्विकृण्व्योरचेतिशपोपवा-दोविकरणउप्रत्ययः तत्सन्नियोगेनचवकारस्यअकारः तस्यातोलोपइतिलोपः तस्यस्थानि-वद्भावाल्लघूपधगुणोनभवति उतश्चप्रत्ययादसंयोगपूर्वादितिहेर्लुग्नभवति उतश्चप्रत्ययाच्छन्दो-वावचनमितिवचनात् तिङ्ङतिङइतिनिघातः । वीतये मन्त्रेवृषेषपचमनविदभूवीराउदात्तइति क्तिन्नुदात्तः ॥ २ ॥

तृतीयामृचमाह—

नराशंसमिहप्रियमस्मिन्यज्ञउपह्वये । मधुजिह्वंहविष्कृतम् ॥ ३ ॥

नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये । मधुऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥

इहदेवयजनदेशेअस्मिन्प्रवर्तमानेयज्ञेनराशंसमेतन्नामकमग्निं उपह्वयेआह्वयामि की-दृशंप्रियंदेवानांप्रीतिहेतुं मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादकजिह्वोपेतंवा हविष्कृतं हविषोनिष्पादकम् ॥ नरशब्दोनृनयेइत्यस्मादपन्तः प्रत्ययस्यपित्त्वाद्धातुस्वरएवशिष्यते शं-सत्यस्मिन्निति शंसः हलश्चेत्यधिकरणेघञ् नराणांशंसइतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते

उभेवनस्पत्यादिषुयुगपदितिपूर्वोत्तरपदेप्रकृतिस्वरेभवतः अतएववनस्पत्यादिपाठान्नरशब्दस्यदीर्घत्वम् । इह इदमोहइतिहप्रत्ययः इदमइशिवीशादेशः प्रत्ययस्वरः । प्रियम् प्रीणातीतिप्रियः इगुपधज्ञाप्रीकिरःकइतिकः प्रत्ययस्वरः । अस्मिन् ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। ह्वये निघातः । मधुशब्दस्यआद्युदात्तत्वमुक्तम् बहुव्रीहौपूर्वपदप्रकृतिस्वरेणसएवशिष्यते । हविष्कृतं हविःकरोतीतिहविष्कृत् क्विपिह्रस्वस्यतुक् नित्यंसमासेनुत्तरपदस्थस्येतिषत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

अग्नेसुखतमेरथेदेवाँईळितआवह । असिहोतामनुर्हितः ॥ ४ ॥

अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह । असि होता । मनुःऽहितः ॥ ४ ॥

इट्शब्दाभिधेयहेअग्ने ईळितोऽस्माभिःस्तुतःसन् सुखतमेअतिशयेनसुखहेतौ कस्मिंश्चिद्रथे देवान्स्थापयित्वाकर्मभूमावावह इट्शब्दाभिधेयत्वमत्रसूचयितुंईडितइतिविशेषणम् मनुर्हितः मनुनामन्त्रेणमनुष्येणवायजमानादिरूपेणहितोऽत्रस्थापितः त्वंहोतादेवानामाह्वातासि सुखतमेसुखमस्मिन्नस्तीतिमतुप् तस्यगुणवचनेभ्योमतुपोलुग्वक्तव्यइतिलुक् अतिशयेनसुखःसुखतमः तमपोनुदात्तत्वात्प्रातिपदिकस्वरः । रथे रमुक्रीडायां रमन्तेऽस्मिन्निति रथः हनिकुषिनीरमिकाशिभ्यः क्थन्निति क्थन् एकाचउपदेशेऽनुदात्तात् इतीट्प्रतिषेधः अनुदात्तोपदेशेत्यादिनामकारलोपः नित्त्वादाद्युदात्तत्वम् । ईडितः ईडस्तुतौ निष्ठेतिक्तः इडागमः तस्य आगमाअनुदात्ताइत्यनुदात्तः प्रत्ययस्वरः । देवानितिनकारस्यसंहितायांदीर्घादटिसमानपादेइतिरुत्वम् आतोटिनित्यमित्याकारस्यानुनासिकभावः भोभगोअघोइत्यादिनारोर्यत्वम् तस्य लोपःशाकल्यस्येति यलोपः तस्यासिद्धत्वादाद्गुणोनभवति । आ निपातत्वादाद्युदात्तः । असि असभुवि लटःसिप् अदिप्रभृतिभ्यःशपइतिशपोलुक् तासस्त्योर्लोपइतिसकारस्यलोपः । होता तान्छील्येतृन् सौ ऋदुशनसित्यादिनाअनङ् ङित्वादन्तादेशः अप्तृन्नित्यादिनाउपधादीर्घः हल्ङ्यादिलोपो नित्त्वादाद्युदात्तः । मनुर्हितः मन्यतइतिमनुः मनज्ञाने शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययः वृत्रनिदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः हितः दधातेर्धातोर्निष्ठेतिकर्मणिक्तः दधातेर्हिरितिहिरादेशः मनुनाहितइतिसमासे तृतीयायाःस्थानेसुपांसुलुगित्यादिनासुइत्यादेशः तस्य रुत्वं रुगभावश्छान्दसः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥ ५ ॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः । यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

हेमनीषिणोबुद्धिमन्तऋत्विजः बर्हिर्दर्भं स्तृणीत वेदेरुपर्याच्छादयत अत्रापिबर्हिर्नामकोऽग्निःसूच्यते कीदृशं बर्हिरास्तरणीयम् आनुषक् अनुक्रमेणसक्तं परस्परसंबद्धम् घृतपृष्ठं घृतपूर्णानांस्रुचांबर्हिष्यासादितत्वाद्घृतं पृष्ठे उपरिभागेयस्यबर्हिषः तद्घृतपृष्ठं यत्रयस्मिन्बर्हिषि अमृतस्यामृतसमानस्यघृतस्यचक्षणंदर्शनंभवति यद्वा मरणरहितस्यदेवस्य बर्हिर्नामकस्याग्नेर्दर्शनंभवति तद्बर्हिःस्तृणीतेतिपूर्वत्रान्वयः ॥ स्तृणीत स्तृञ्आच्छादने लोण्मध्यमपुरुषस्यबहुवचनं लोटोलङ्वत् तस्थस्थमिपामितिथस्यतादेशः क्र्यादिभ्यःश्ना ईहल्यघोरितीत्वम् ऋवर्णाच्चेतिवक्तव्यमितिणत्वम् प्वादीनांह्रस्वइतिधातोर्ह्रस्वत्वम् सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यः अतस्तिङएवप्रत्ययस्वरेणोदात्तत्वम् । बर्हिः बृंहेर्नलोपश्चेतीसुप्रत्ययनलोपौ प्रत्ययस्वरः । आसमन्तादनुषजतीत्यानुषक् षंजसंगे धात्वादेःषःसः क्विप्चेतिक्विप् अनिदितामितिनलोपः आङन्वोरुपसर्गयोःप्राक्प्रयोगः गतिसमासः उपसर्गात्सुनोतीत्यादिनाषत्वम् । घृतपृष्ठं घृक्षरणदीप्त्योः निष्ठेतिक्तः प्रत्ययस्वरेणोदात्तः घृतयुक्तं पृष्ठमस्येतिबहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनीषिणः आमन्त्रितनिघातः । अमृतस्य नविद्यतेमृतंमरणमस्मिन्नित्यमृतम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वंबाधित्वा नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वेप्राप्ते नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । चक्षणं चक्षिङ्व्यक्तायांवाचि वागभिव्यक्तिवाचीधातुरिहाभिव्यक्तिमात्रंलक्षयतिल्युट्चेतिभावेल्युट् योरनादेशः तस्यार्धधातुकत्वात् चक्षिङःख्याञितिख्याञादेशेप्राप्ते अनसोश्चेतिप्रतिषेधः ॥ ५ ॥

षष्ठीमृचमाह—

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ॥ ६ ॥ २४ ॥

वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः । अद्य । नूनम् । च । यष्टवे ॥ ६ ॥ २४ ॥

द्वारोयज्ञस्यशालाद्वाराणि विश्रयन्तां कपाटोद्घाटनेनविश्रियन्तां कीदृश्यः ऋतावृधः ऋतस्यसत्यस्य यज्ञस्यवा वर्धयित्र्यः देवीर्द्योतमानाः असश्चतः असश्चन्त्यउद्घाटनेनप्रवेष्टृपुरुषसंगर-

हिताः यद्वा असश्वतः प्रविष्टपुरुषरहितान्यज्ञगृहान् चतुरुपप्रवेशायद्वाराभिमानिन्यएतत्संज्ञकाअग्निविशेषमूर्तयोविश्रयन्तां विशेषेणसेवन्ताम् द्वारसेवयातत्रपुरुषप्रवेशेनवाकिंप्रयोजनमितितदुच्यते अद्यास्मिन्दिनेनूनमवश्यं यष्टवे यष्टुं चकाराद्दिनान्तरेष्वपीतिद्रष्टव्यम् ॥ ऋतावृधः ऋतं वर्धयन्तीत्यर्थे वृधेरन्तर्भावितण्यर्थात्क्विप्चेतिक्विप् उपपदसमासः अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् वृधिर्धातुस्वरेणोदात्तः समासेकृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । देवीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् देवशब्दात्पचाद्यजन्तात्पुंयोगादाख्यायामितिङीप् प्रत्ययस्वरेणोदात्तः विभक्त्यासहैकादेशउदात्तेनोदात्तइत्युदात्तः । असश्वतः ष्वञ्जपरिष्वङ्गे जकारस्यव्यत्ययेनचकारः लटःशत्रादेशः द्वाराभावे नविद्यन्ते सश्चन्तोगच्छन्तोयेषुमार्गेवंशादिषुतान् असश्वतः । अद्य सद्यःपरुदित्यादिनाद्यप्रत्ययान्तोनिपातितः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञकत्वात्परस्याविभक्तेर्लुक् प्रत्ययस्वरेणान्तोदात्तः संहितायामन्येषामपिदृश्यतइतिदीर्घत्वम् । नूनं एवमादीनामन्तइत्यन्तोदात्तत्वम् । यष्टवे यजेस्तुमर्थेसेसेनित्यादिनातवेन्प्रत्ययः व्रश्चादिनाषत्वम् नित्त्वादाद्युदात्तः॥ ६ ॥

इतिप्रथमस्यप्रथमेचतुर्विंशोवर्गः ॥ २४ ॥

सूक्तेसप्तमीमृचमाह—

नक्तो॒षासा॑सु॒पेश॑सा॒स्मिन्य॒ज्ञउप॑ह्वये । इ॒दंनो॑ब॒र्हिरा॒सदे॑ ॥ ७ ॥

नक्तो॒षसा॑ । सु॒ऽपेश॑सा । अ॒स्मिन् । य॒ज्ञे । उप॑ । ह्व॒ये॒ । इ॒दम् । नः॒ । ब॒र्हिः । आ॒ऽसदे॑ ॥ ७ ॥

नक्तशब्दउषःशब्दश्चलोकेकालविशेषवाचिनौ इहतुतत्कालाभिमानिवह्निमूर्तिद्वयेप्रयुज्येते नक्तोषासा नक्तोषोनामिकेवह्निमूर्ती अस्मिन्प्रवर्तमानेयज्ञकर्मणि उपह्वये आह्वयामि किमर्थं नोऽस्मदीयमिदंवेद्यामास्तीर्णंबर्हिर्दर्भं आसदे आसत्तुंप्राप्तुं कीदृश्यौ सुपेशसा शोभनरूपयुक्ते ॥ नक्तंचउषाश्चनक्तोषासा द्वितीयाद्विवचनस्यसुपांसुलुगित्याकारः मलोपउपधादीर्घश्चछान्दसौ देवताद्वन्द्वेचेतिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । सुपेशसा शोभनंपेशोरूपंययोस्ते पूर्ववदाकारः । पेशःशब्दोनविषयत्वादाद्युदात्तः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वस्यापवादत्वेन आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । अस्मिन् ऊडिदमित्यादिनाविभक्तिरुदात्ता । आसदे षद्लृविशरणगत्यवसादनेषु धात्वादेःषःसः आङ्पूर्वात्स्मात्संपदादिःभावेक्विप् प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

तासुजिह्वाउपह्वयेहोतारादैव्याकवी । यज्ञंनोयक्षतामिमम् ॥ ८ ॥

ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवी इति ।
यज्ञम् । नः । यक्षताम् । इमम् ॥ ८ ॥

तच्छब्दोऽत्रसर्वनामत्वात्प्रसिद्धार्थवाची ता तौ याज्ञिकानांप्रसिद्धौद्वावग्नीउपह्वये आह्वयामि नोऽस्मदीयमिमंयज्ञं यक्षतां तावुभौयजतामनुतिष्ठताम् कीदृशौ सुजिह्वौ शोभनजिह्वोपेतौ प्रियवचनौशोभनज्वालौवेत्यर्थः होतारा होमनिष्पादकौ दैव्या दैव्यौ देवसंबन्धिनौ अतएवेमावग्नी दैव्यहोतृनामकौ कवी मेधाविनौ॥ता तौ द्वितीयाद्विवचनस्यसुपांसुलुगित्याकारः एकादेशउदात्तेनोदात्तइत्युदात्तः । सुजिह्वौ शोभनाजिह्वाययोस्तौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् पूर्ववदेकादेशस्वरः संहितायामावादेशः तस्य लोपःशाकल्यस्येतिलोपः । होतारा जुहोतेस्तृन् द्विवचनेऋतोङीतिगुणः अप्तृन्नित्युपधादीर्घः पूर्ववदाकारः नित्त्वादाद्युदात्तः । दैव्या देवानामिमौ देवाद्यञञावितियञ् यस्येतिचेत्यकारलोपः ञ्नित्यादिर्नित्यमित्याद्युदात्तः पूर्ववदाकारः । यक्षतां यजतां लोटिशपिपरतःसिब्बहुलंलेटीतिबहुलग्रहणात्सिप् कुत्वषत्वे ॥ ८ ॥

नवमीमृचमाह—

इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः । बर्हिःसीदन्त्वस्रिधः ॥ ९ ॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः ।
सीदन्तु । अस्रिधः ॥ ९ ॥

अत्रमहीशब्दोमहत्वगुणयुक्तांभारतीमाचष्टे अन्येष्वाप्रीसूक्तेषुसदृशेष्विळासरस्वतीभारतीत्याम्नातत्वादिळादिशब्दाभिधेयावह्निमूर्तयस्तिस्रोदेवीर्दीप्यमानाबर्हिर्वेद्यामास्तीर्णं सीदन्तुआभुवन्तु कीदृश्यः मयोभुवः सुखोत्पादिकाः अस्रिधः शोषेणक्षयेणवारहिताः ॥ इळा ईडस्तुतौ छान्दसंहृस्वत्वम् क्विप् धातुस्वरः टापंचैवहलन्तानांयथावाचानिशादिशेतिटाप् । सरस्वती सरः असुन्नन्तोनित्त्वादाद्युदात्तः तदस्यास्तीतिमतुप् अडुपधत्वाद्वत्वं तसौमत्वर्थेइतिभत्वेनपदत्वस्यबाधितत्वात् रुत्वाद्यभावः उगितश्चेतिङीप् मतुब्ङीपौपित्त्वादनुदात्तौ । मही महतीशब्देतकारलोपश्छान्दसः यस्येतिचेत्यकारलोपः उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम्

तिस्रः त्रिशब्दाज्जसि त्रिचतुरोःस्त्रियांतिसृचतसृइतितिस्रादेशः अचिरऋतइतिरेफादेशः तिसृभ्योजसइतिजसउदात्तत्वम्। देवीः देवानांपत्न्योदेव्यः पुंयोगादाख्यायामितिङीप् यस्येतिचेत्यकारलोपः प्रत्ययस्वरेणङीपउदात्तत्वम् जसि दीर्घाज्जसिचेतिनिषिद्धंदीर्घत्वं वाछन्दसीतिपक्षेऽभ्यनुज्ञायते । मयोभुवः मीञ्हिंसायां हिनस्तिदुःखमितिसुखंमयस्तद्भावयन्तीतिमयोभुवः अन्तर्भावितण्यर्थाद्भुवःक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम्।बर्हिः बृंहेर्नलोपश्चेतिइसिप्रत्ययः प्रत्ययस्वरः। सीदन्तु षद्लृविशरणादौ पाघ्रेत्यादिनासीदादेशः। अस्रिधः स्रिधेर्हिंसार्थस्यशोषणार्थस्यवासंपदादिभ्योभावेक्विपिनञाबहुव्रीहिः पूर्वपदप्रकृतिस्वरंबाधित्वानञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ९ ॥

पत्नीसंयाजेत्वष्टुःपुरोनुवाक्या इहत्वष्टारमग्रियमिति शंयुवाकायसंप्रेषितइतिखण्डेसूत्रितम्—सन्तेपयांसिसमुयन्तुवाजाइहत्वष्टारमग्रियमिति ।

तामेतांपुरोनुवाक्यांसूक्तेदशमीमृचमाह—

इहत्वष्टारमग्रियंविश्वरूपमुपह्वये । अस्माकमस्तुकेवलः ॥ १० ॥

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये ।
अस्माकम् । अस्तु । केवलः ॥ १० ॥

त्वष्टारंत्वष्टृनामकमग्निंइहकर्मण्युपह्वये कीदृशं अग्रियं श्रेष्ठं विश्वरूपं बहुविधरूपोपेतं सोऽस्माकंकेवलोसाधारणोऽस्तु इतरयजमानेभ्योऽप्यधिकमनुग्रहंकरोत्वित्यर्थः ॥ त्वष्टारं तक्षूत्वक्षूतनूकरणे तृन् स्वरतिसूतिसूयतिधूञूदितोवेतीडभावपक्षे स्कोःसंयोगाद्योरन्तेचेतिककारलोपः तुर्वं द्वितीयैकवचने ऋतोङिसर्वनामस्थानयोरितिगुणे अप्तृन्नित्यादिनाउपधायादीर्घः तृनोनित्त्वादाद्युदात्तत्वम्। अग्रियं अग्रादित्यनुवृत्तौ घच्छौचेतिघच् आयनेयीत्यादिनाघकारस्यइयादेशः यस्येतिचेत्यल्लोपः आयन्नादिषूपदेशिवचनंस्वरसिद्ध्यर्थमितिउपदेशिवद्भावात् प्रत्ययाद्युदात्तत्वात् घचश्चित्त्वादन्तोदात्तत्वम् । विश्वरूपं विश्वानिरूपाणि त्वष्टृत्वेनयस्य त्वष्टैवपशूनांमिथुनानांरूपकृदितिश्रुतेः[1] ॥ विश्वशब्दस्याद्युदात्तत्वात् पूर्वपदप्रकृतिस्वरत्वेप्राप्ते बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम्। अस्माकं असुक्षेपणे युष्यसिभ्यांमदिक् प्रत्ययस्वरेणान्तोदात्तः षष्ठीबहुवचनमाम् अत्रपरमपियोऽचीतियत्वंबाधित्वानित्यत्वात्प्रतिपदविधित्वाच्च साम आकमादेशेकृते अनादेशइति निषेधेनयत्वाभावाच्छेषेलोपइतिदकारलोपेअकरा-

---

1 तै० सं- ६. ३. ६.

न्तत्वेनपश्चात्प्राप्तस्यापिसुटः सामइतिनिर्देशेस्थानिन्यन्तर्भावेननिवृत्तिः एवमर्थएवसामइतिससुट्कनिर्देशः । केवलः वृषादेराकृतिगणत्वादाद्युदात्तः ॥ १० ॥

एकादशीमृचमाह—

अवसृजावनस्पतेदेवदेवेभ्योहविः । प्रदातुरस्तुचेतनम् ॥ ११ ॥

अव । सृज । वनस्पते । देव । देवेभ्यः । हविः । प्र । दातुः । अस्तु । चेतनम् ॥ ११ ॥

हेवनस्पते एतन्नामकाग्नेदेव हविर्भुग्भ्योदेवेभ्योस्मदीयंहविरवसृज समर्पयेत्यर्थः प्रदातुर्यजमानस्यचेतनंपरलोकविषयंविज्ञानं त्वत्प्रसादादस्तु ॥ वनस्पते आमन्त्रितनिघातः ॥ देव पादादित्वान्ननिघातः षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हविः इसःप्रत्ययस्वरः । दातुः ददाते स्तृच् चितइत्यन्तोदात्तः ङसि ऋतउदित्युत्वम् रपरत्वंच रात्सस्येतिसलोपः एकादेशस्वरेणोकारउदात्तः । चेतनं चितीसंज्ञाने करणेल्युट् योरनादेशः लघूपधगुणः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ ११ ॥

द्वादशीमृचमाह—

स्वाहायज्ञंकृणोतनेन्द्राययज्वनोगृहे । तत्रदेवाँउपह्वये ॥ १२ ॥ २५ ॥

स्वाहा । यज्ञम् । कृणोतन । इन्द्राय । यज्वनः । गृहे । तत्र । देवान् । उप । ह्वये ॥ १२ ॥ २५ ॥

स्वाहाशब्दोहविःप्रदानवाचीसन् एतन्नामकमग्निविशेषंलक्षयति तदग्निसंपादितंयज्ञं इन्द्रायइन्द्रतुष्ट्यर्थं यज्वनोयजमानस्यगृहे ऋत्विजः कृणोतन कुरुत तत्रयज्ञे देवानुपह्वये ॥ कृणोतन कृविहिंसाकरणयोश्च इदित्वान्नुम् लोण्मध्यमबहुवचनस्य तस्थस्थमिपामितितादेशः तप्तनप्तनथनाश्चेतितनबादेशः शपिप्राप्ते धिन्विकृण्व्योरचेतिउप्रत्ययः तत्सन्नियोगेनवकारस्यचअकारस्तस्यातोलोपइतिलोपस्तस्यअचःपरस्मिन्नितिस्थानिवद्भावादकारस्यलघूपधगुणोनभवति तनपःपित्त्वेनङित्त्वादुकारस्यगुणः । इन्द्राय ऋज्रेन्द्रेत्यादिनारन् नित्त्वादाद्युदात्तः । यज्वनः यजदेवपूजासंगतिकरणदानेषु सुयजोर्ङ्वनिप् ङसि भसंज्ञायामल्लोपेप्राप्ते नसंयोगाद्वमन्तादिति निषेधः वनिपःपित्त्वेनधातुस्वरएवशिष्यते गृहे ग्रहउपादाने गेहेकइतिकप्रत्ययः ग्रहिज्येत्यादिनासंप्रसारणं परपूर्वत्वं प्रत्ययस्वरः । तत्रत्रल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । देवाँ

उपेत्यत्रसंहितायां दीर्घादटीविनकारस्यरुत्वम् आतोटिनित्यमित्याकारस्यानुनासिकादेशः भो-भगोइतियत्वम् तस्य लोपःशाकल्यस्येतिलोपः ॥ १२ ॥

इतिप्रथमस्यप्रथमेपञ्चविंशोवर्गः ॥ २५ ॥

ऐभिरग्नेइत्यादिकस्यद्वादशर्चस्यसूक्तस्य ऋषिच्छन्दसीपूर्ववत् तत्रसूक्तंबहुदेवताकं अत-एवानुक्रम्यते ऐभिर्वैश्वदेवमिति विनियोगः व्यूढद्वादशाहस्यप्रथमेछन्दोमेतृतीयसवनेवैश्वदेव-शस्त्रे-ऐभिरग्नेदुवोगिरइतिसूक्तं तथाचसूत्रितम्-अथछन्दोमाःसमुद्रादूर्मिरित्युपक्रम्यैभिरग्ने-दुवोगिरइतिवैश्वदेवम् ।

प्रथमामृचमाह-

ऐभिरग्नेदुवोगिरोविश्वेभिःसोमपीतये । देवेभिर्याहियक्षिच ॥ १ ॥

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ।
देवेभिः । याहि । यक्षि । च ॥ १ ॥

हेअग्नेएभिरस्मिन्यज्ञेसंभावितैः विश्वेभिर्देवैःसहसोमपीतये सोमपानोपेतयागार्थंदुवोऽस्मदीयांपरिचर्यां गिरोऽस्मदीयाःस्तुतीश्चप्रति आयाहिआगच्छ यक्षिआगत्ययजच॥एभिःपूर्व-निर्दिष्टानांदेवानामिदमापरामर्शादिदमोऽन्वादेशेशनुदात्तस्तृतीयादावित्यशनुदात्तः शित्त्वात्सर्वा-देशः नेदमदसोरकोरितिभिसऐसादेशाभावः विभक्तिरनुदात्तैव नचऊडिदमित्यादिनाविभक्ते-रुदात्तत्वम् तत्रान्तोदात्तादित्यधिकारात् । दुवः नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् । वि-श्वेभिः विश्वशब्दोविशेःक्वन्नन्तोनित्त्वादाद्युदात्तः बहुलंछन्दसीतिभिसऐसन्नभवति बहुवचनेझ-ल्येदित्येत्वम् । सोमपीतये सोमशब्दः अर्तिस्तुसुहुस्रित्यादिनामन्नन्तोनित्त्वादाद्युदात्तः सोमस्य पीतिर्यस्मिन्यागेससोमपीतिः । तस्मै तादर्थ्येचतुर्थी । देवेभिः बहुलंछन्दसीतिभिसऐसादेशाभावः बहुवचनेझल्येदित्येत्वम् । यक्षि यजेर्लोटःसिप् बहुलंछन्दसीतिशपोलुक् व्रश्चादिनाषत्वम् षढोःकःसीतिकत्वं सेर्हिरादेशश्छान्दसत्वान्नभवति सिपःपित्त्वेनानुदात्तत्वाद्धातुस्वरएव ॥ १ ॥

द्वितीयामृचमाह-

आत्वाकण्वाअहूषतगृणन्तिविप्रतेधियः । देवेभिरग्नआगहि ॥ २ ॥

आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ।
देवेभिः । अग्ने । आ । गहि ॥ २ ॥

हेविप्र मेधाविन्नग्ने कण्वामेधाविनः ऋत्विजः त्वा यज्ञनिष्पादकंत्वामहूषत आह्वयन्ति तथा तेधियस्त्वदीयानिकर्माणि गृणन्ति कथयन्ति ततोहेअग्नेदेवेभिर्देवैः सहआगहिआगच्छ विप्रइत्यादिषुचतुर्विंशतिसंख्याकेषुमेधाविनामसुकण्वऋभुरितिपठितम् ॥ त्वा त्वामौद्वितीयाया-इतित्वादेशःसर्वानुदात्तः । कण्वाः कणशब्दार्थः अशिपृष्टिकणीपीत्यादिनाक्वन् नित्त्वादा-द्युदात्तः । अहूषत ह्वेञ्स्पर्धायांशब्देच छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङ् ङित्त्वादात्मनेपदं तस्यआत्मनेपदेष्वनतइत्यदादेशः च्लेःसिच् एकाचइतीट्प्रतिषेधः बहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं हलइतिदीर्घत्वं आदेशप्रत्यययोरितिषत्वं छान्दसत्वादूकारस्यनगुणः अडागमः । गृणन्ति गॄशब्दे लट् झि झोन्तः क्र्यादिभ्यःश्ना प्वादीनांह्रस्वइतिधातोर्ह्रस्वत्वं श्नाभ्यस्तयोरातइत्याकारलोपः ऋवर्णाच्चेतिवक्तव्यमितिणत्वं तिङ्स्वरएवशिष्यते । विप्र आमन्त्रितनिघातः । ते अनुदात्तमित्यनुवृत्तौ तेमयावेकवचनस्येतिषष्ठ्याः तेइत्यादेशः । देवेभिः छान्दसऐसोभावः । गहि गम्लृसृप्लृगतौ लोटःसिप् सेर्ह्यपिच्च कर्तरिशप् तस्यबहुलंछन्दसीतिलुक् अनुदात्तोपदेशेत्यादिनामकारलोपः तस्यासिद्धवदत्राभादित्यसिद्धत्वादतोहेरितिहेर्लुङ्नभवति ॥ २ ॥

तृतीयामृचमाह—

**इन्द्रवायूबृहस्पतिंमित्राग्निंपूषणंभगम् । आदित्यान्मारुतंगणम् ॥३॥**

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ।
आदित्यान् । मारुतम् । गणम् ॥ ३ ॥

इन्द्रादिदेवान्मारुतंमरुतांवायूनांसंबन्धिनंगणंच हेअग्ने यक्षीतिपदद्वयमनुवर्तते ॥ इन्द्रश्चवायुश्चइन्द्रवायू देवताद्वन्द्वेचेतिप्राप्तस्यानङउभयत्रवायोःप्रतिषेधोवक्तव्यइतिप्रतिषेधः देवताद्वन्द्वेचेतिप्राप्तस्योभयपदप्रकृतिस्वरस्य नोत्तरपदेनुदात्तादावितिनिषेधः समासान्तोदात्तत्वमेव । बृहस्पतिं तद्बृहतोःकरपत्योश्चोरदेवतयोरभिधेययोःसुट्तलोपोवक्तव्यइतितलोपः सुडागमश्च बृहच्छन्दमाद्युदात्तंकेचिद्वर्णयन्तीतिवामनः पारक्षणे पातीतिपतिः पातेर्डतिः प्रत्ययस्वरेणाद्युदात्तः समासे उभेवनस्पत्यादिषुयुगपदितिउभयपदप्रकृतिस्वरत्वम् । मित्रा द्वितीयायाःसुपांसुलुगित्यादिनाविभक्तेराजादेशः । आदित्यान् अदितेरपत्यानिआदित्याः दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः प्रत्ययस्वरः । मारुतं मरुतांविकारः अनुदात्तादेरञ् ञित्वादाद्युदात्तः ॥ ३ ॥

चतुर्थीमृचमाह—

**प्रवोभ्रियन्तइन्दवोमत्सरामादयिष्णवः । द्रप्सामध्वश्चमूषदः ॥ ४ ॥**

प्र । वः । भ्रियन्ते । इन्दवः । मत्सराः । मादयिष्णवः । द्रप्साः ।
मध्वः । चमूऽसदः ॥ ४ ॥

हेइन्द्रादिदेवाः वोयुष्मदर्थमिन्दवः सोमाः प्रभ्रियन्ते प्रकर्षेणसंपाद्यन्ते कीदृशाः मत्सरास्तृप्तिकराः मत्सरःसोमोमन्दतेस्तृप्तिकर्मणइतियास्कः । मादयिष्णवः हर्षहेतवः द्रप्साः बिन्दुरूपाः मध्वः मधुराः चमूषदःचमूषु चमसादिपात्रेष्ववस्थिताः ॥ प्र व्यवहिताश्चेतिव्यवहितमयोगः । भ्रियन्ते भ्रिञोयकि रिङ्शयग्लिङ्क्षुइतिरिङादेशः हृञोवा हृग्रहोर्भश्छन्दसीतिहकारस्यभकारः । इन्दवः उन्दीक्लेदने उन्दन्तिपात्राणीति निदित्यनुवृत्तौ उन्देरिच्चादेरितिउप्रत्ययः आदेरिकारश्च निन्त्वादाद्युदात्तत्वम् । मत्सराः मदतृप्तियोगे चिदित्यनुवृत्तौ कृधूमदिभ्यःकिदितिसरप्रत्ययः तितुत्रतथसिसुसरकसेषुचेतीट्प्रतिषेधः चित्वादन्तोदात्तः । मादयिष्णवः मदीहर्षग्लेपनयोः मदेर्ण्यन्तात् णेश्छन्दसीतिइष्णुच् णेरनिटीतिणिलोपेप्राप्ते अयामन्ताल्वाय्येत्न्विष्णुष्विति अयादेशः चित्वादन्तोदात्तः । मध्वः मधुशब्दआद्युदात्तउक्तः मधुशब्दस्यव्यत्ययेनपुंल्लिंगत्वम् संज्ञापूर्वकोविधिरनित्यइति जसिचेतिगुणोनभवति । चमूषदः चमुछमुजमुझमुअदने चम्यते भक्ष्यतेयेषुचमसेषु ते चम्वः कृषिचमीत्यादिनाऊः तत्रसीदन्तीतिचमूषदः सत्सूद्विषेत्यादिनाक्विप् सुषामादेराकृतिगणत्वात्षत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

ईळतेत्वामवस्यवःकण्वासोवृक्तबर्हिषः । हविष्मन्तोअरंकृतः ॥ ५ ॥

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः ।
हविष्मन्तः । अरम्ऽकृतः ॥ ५ ॥

हेअग्ने त्वां ईळते ऋत्विजःस्तुवन्ति कीदृशाः अवस्यवः अवनंरक्षणं तद्धेतून् देवानिच्छन्तः कण्वासोमेधाविनः वृक्तबर्हिषः आस्तरणार्थछिन्नदर्भाः हविष्मन्तोहविर्युक्ताः अरंकृतः अलंकर्तारः ॥ ईळते ईडस्तुतौ अनुदात्तेत्त्वाल्लटोझ अदिप्रभृतिभ्यःशपइतिशपोलुक् झस्यात्नादेशः टेरेत्वं तास्यनुदात्तेत्यादिनालसार्वधातुकस्यानुदात्तत्वात् धातुस्वरःशिष्यते । अवस्यवः अवन्तीत्यवादेवाः तानतिशयेनेच्छन्ति सुपआत्मनःक्यच् क्यचिचेतिईत्वंनभवति नछन्दस्यपुत्रस्येतिनिषेधात्सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइतिसुक् क्याच्छन्दसीत्युप्र-

नि० ११. २७. ।

त्ययः अतोलोपः प्रत्ययस्वरेणान्तोदात्तत्वम्। कण्वासः कणशब्दार्थः कणन्तिध्वनन्तिस्तोत्रादिपाठेनेतिकण्वाऋत्विजः असिपृषीत्यादिनाक्वन् नित्त्वादाद्युदात्तः आज्जसेरसुगित्यसुक्। वृक्तबर्हिषः वृक्तमुक्तम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। हविष्मन्तः हविरेषामस्तीतिहविष्मन्तः तसौमत्वर्थेइतिभत्वेन अपदत्वान्नरुत्वम्। अरंकृतः अलंकुर्वन्तीति अरंकृतः क्विप्चेतिक्विप् ह्रस्वस्यपितुक् कपिलादीनांसंज्ञाछन्दसोर्वालोरत्वमापद्यतेइतिलकारस्यरेफादेशः॥ ५॥

षष्ठीमृचमाह—

घृतपृष्ठामनोयुजोयेत्वावहन्तिवह्नयः। आदेवान्त्सोमपीतये॥६॥२६

घृतऽपृष्ठाः। मनःऽयुजः। ये। त्वा। वहन्ति। वह्नयः। आ।
देवान्। सोमऽपीतये॥ ६॥ २६॥

हेअग्नेत्वात्वां ये अश्वाः रथेनवहन्ति कीदृशाः घृतपृष्ठाः पुष्टाङ्गत्वेनदीप्तपृष्ठाः मनोयुजःमनःसंकल्पमात्रेणरथेयुज्यमानाः वह्नयोवोढारः तैरश्वैः सोमपानहेतुयागार्थंदेवानावहेतिशेषः॥ घृतपृष्ठाः घृक्षरणदीप्त्योः घृतंदीप्तंपृष्ठं येषांतेघृतपृष्ठाः घृतशब्दःप्रत्ययस्वरेणान्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। मनसायुंजतइतिमनोयुजः ऋत्विग्दधृगित्यादिनाक्विन् कृदुत्तरपदप्रकृतिस्वरत्वम्। त्वा त्वामौद्वितीयायाइत्यनुदात्तस्त्वादेशः। वहन्ति शप्तिपोरनुदात्तत्वाद्धातुस्वरः यद्वृत्तयोगान्निघाताभावः वह्नयः निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदिति निप्रत्ययः तस्यनित्त्वादाद्युदात्तत्वम्। सोमपीतये उक्तम् सकारेपरतोनकारस्य संहितायां नश्छव्यप्रशानितिरुत्वं खरिचेतिचर्त्वं चयोद्वितीयाःशरिपौष्करसादेरितिद्वितीयस्थकारः॥ ६॥

इतिप्रथमस्यप्रथमेषड्विंशोवर्गः॥ २६॥

सूक्तेसप्तमीमृचमाह—

तान्यजत्राँऋतावृधोग्नेपत्नीवतस्कृधि। मध्वःसुजिह्वपायय॥ ७॥

तान्। यजत्रान्। ऋतऽवृधः। अग्ने। पत्नीऽवतः। कृधि।
मध्वः। सुऽजिह्व। पायय॥ ७॥

हेअग्ने तानिन्द्रादीन्देवान्यजत्रान्यजनीयान् ऋतावृधः सत्यस्य यज्ञस्य वा वर्धकान् पत्नीवतः पत्नीयुक्तान् कृधिकुरु हेसुजिह्वशोभनजिह्वोपेत मध्वोमधुरस्यसोमस्यभागंदेवान्पाय-

य ॥ यजत्रान् अमिनक्षियजिवन्धिपतिभ्योऽत्रन्नितियजेरत्रन्प्रत्ययः । ऋतावृधः वृधुवृद्धौ अन्तर्भावितण्यर्थात्क्विप्चेतिक्विप् अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् वृधेर्धातुस्वरः समासेकृदुत्तरपदप्रकृतिस्वरत्वम् । अग्ने पादादित्वान्नामन्त्रितनिघातः षाष्ठिकमाद्युदात्तत्वम् । पत्नीवतः पत्युर्नोयज्ञसंयोगेइतिङीप् इकारस्यचनकारः तदस्यास्त्यस्मिन्नितिमतुप् छन्दसीरइतिवत्वं पतिशब्दोडतिप्रत्ययान्तत्वादाद्युदात्तः ङीब्मतुपोरनुदात्तत्वात्सएवशिष्यते । कृधि कृञोलोटःसिपःसेर्हपिच्चेतिहिः बहुलंछन्दसीतिविकरणलुक् श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः जित्वाद्गुणाभावः । मध्वउक्तः । सुजिह्व आमन्त्रितनिघातः । पायय पापाने पिबन्तंप्रयुंक्तेइति हेतुमतिचेतिणिच् शाच्छासाह्वाव्यावेपांयुगितियुक् पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वे अतएवाव्यवधायकत्वान्मध्वइत्यपेक्ष्य तिङ्ङतिङइतिनिघातः ॥ ७ ॥

अष्टमीमृचमाह—

येयजत्राय ईड्यास्तेतेपिबन्तुजिह्वया । मधोरग्नेवषट्कृति ॥ ८ ॥

ये । यजत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया ।
मधोः । अग्ने । वषट्ऽकृति ॥ ८ ॥

येदेवायजत्राः यष्टव्याः तथायेदेवाईड्याः स्तुत्याः तेसर्वेपि वषट्कृतिवषट्कारकालेवषट्कारयुक्ते यागेवा हेअग्ने तेत्वदीययाजिह्वयामधोःमधुरस्यसोमस्यभागंपिबन्तु ॥ ये यजत्राः गतम् । ईड्याः ईडस्तुतौ ऋहलोर्ण्यत् तित्स्वरितेप्राप्ते ईडवंदवृशंसदुहांण्यतइत्याद्युदात्तत्वम् द्वितीयस्य तेशब्दस्ययुष्मदादेशस्यसर्वानुदात्तत्वम् । मधोः प्रत्ययस्यनित्त्वादाद्युदात्तत्वमुक्तम् । अग्ने आमन्त्रितनिघातः । वषट्कृति करोतेःसंपदादिभ्योभावेक्विप् वषडित्यस्यकरणंयस्मिन्यागेइतिबहुव्रीहिः वषडित्यस्यनिपातनादाद्युदात्तत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

आकींसूर्यस्यरोचनाद्विश्वान्देवाँउषर्बुधः । विप्रोहोतेहवक्षति ॥ ९ ॥

आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः ।
विप्रः । होता । इह । वक्षति ॥ ९ ॥

विप्रोमेधावीहोता होमनिष्पादकोऽग्निः उषर्बुधःउषःकालेयागगमनायप्रबुध्यमानान्विश्वान्देवान्सूर्यस्यसंबन्धिनोरोचनात्स्वर्गलोकादिहकर्मणि आकीं वक्षति आवहतु ॥ आकीं

निपातआद्युदात्तः । सूर्यस्य सूर्यशब्दोराजसूयसूर्येत्यादिनाक्यप्प्रत्ययान्तोनिपातितः क्यपः पित्वाद्धातुस्वरेणाद्युदात्तः । रोचनात् रोचमानात् रुचदीप्तौ अनुदात्तेतश्चहलादेरितिकर्तरियुच् चितइत्यन्तोदात्तत्वम् । विश्वान् विशेः क्वन्तोनित्वादाद्युदात्तः। उपर्बुधः उपर्बुध्यन्तइत्युपर्बुधः क्विप्चेतिक्विप् धातुस्वरेणउकारउदात्तः समासेकृदुत्तरपदप्रकृतिस्वरत्वम्। विप्रः ऋज्रेन्द्रेत्यादिना रन् नित्वादाद्युदात्तः । होता ह्वयतेस्ताच्छील्येतृन् बहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं गुणः नित्वादाद्युदात्तः । इह इदमोहइतिहप्रत्ययः इदमइशितिइश् शित्वात्सर्वादेशः प्रत्ययस्वरः । वक्षति वहेःप्रार्थनायांलिङर्थेलेट् तस्यतिप् कर्तरिशप् शपिपरतः सिब्बहुलंलेटीतिसिप् ढत्वकत्वषत्वानि तिङ्ङतिङइतिनिघातः ॥ ९ ॥

अग्निष्टोमेप्रउगशस्त्रस्ययाज्याविश्वेभिःसोम्यंमध्विति स्तोत्रमग्नेशस्त्रादितिखण्डेसूत्रितम्-विश्वेभिःसोम्यंमध्वितियाज्येति ।

तामेतांयाज्यांसूक्तेदशमीमृचमाह—

विश्वेभिःसोम्यंमध्वग्नइन्द्रेणवायुना । पिबामित्रस्यधामभिः ॥ १० ॥

विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना । पिब । मित्रस्य । धामऽभिः ॥ १० ॥

हेअग्नेत्वंविश्वेभिःसर्वैःपूषभगादिभिर्देवैरिन्द्रेणवायुनामित्रस्यसंबन्धिभिर्धामभिस्तेजोभिर्मूर्तिविशेषरूपैश्चसहसोम्यंसोमसंबन्धिमधुमधुरंभागंपिब ॥ विश्वेभिःबहुलंछन्दसीतिभिसऐसादेशाभावः।सोम्यं सोममर्हतियइत्यनुवृत्तौमयेचेतियप्रत्ययः सोमस्यविकारइत्यर्थेयस्येतिचेतिलोपः प्रत्ययस्वरः । मधु फलिपाटिनमिमनीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेर्नित्वादाद्युदात्तः । वायुना कृवापाजीत्यादिनाउण् आतोयुक्चिण्कृतोरितियुक् प्रत्ययस्वरः । पिब पापाने लोटःसेर्हिरादेशः शपिपाघ्रेत्यादिनापिबादेशः अतोहेरितिहेर्लुक् शपःपित्वाद्धातुस्वरः पादादित्वान्निघातः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । धामभिः धाञ्आतोमनिन्निति मनिन् नित्स्वरः॥ १० ॥

एकादशीमृचमाह—

त्वंहोतामनुर्हितोग्नेयज्ञेषुसीदसि । सेमंनोअध्वरंयज ॥ ११ ॥

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमम् । नः । अध्वरम् । यज ॥ ११ ॥

हेअग्ने मनुर्हितः मनुषाहोत्रादिरूपेणमनुष्येणहितः संपादितोहोता होमनिष्पादकोयस्त्वंयज्ञेषुसीदसि तिष्ठसि सत्वंनोऽस्मदीयमिममध्वरंयज्ञंयजनिष्पादय ॥ मनुर्हितः मन्यतेइति मनुः जनेरुसिरित्यनुवृत्तौ बहुलमन्यत्रापीत्युस् अर्तिपृवपीत्यादिनानिदित्यनुवृत्तौ नित्त्वादाद्युदात्तः । हितः धाञोनिष्ठेतिक्तप्रत्ययः दधातेर्हिरितिहिरादेशः मनुषाहितोमनुर्हितः कर्तृकरणेकृताबहुलमितिसमासः कृत्स्वरापवादेनतृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । सीदसि षद्लृविशरणगत्यवसादनेषु लटःशप् शपिपाघ्राध्मेत्यादिनासीदादेशः निघातः । सेममित्यत्र संहितायां सोचिलोपेचेत्पादपूरणमितिसोर्लोपेगुणः । अध्वरं नविद्यतेध्वरोयस्मिन्सोध्वरः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं नोअध्वरमित्यत्रसंहितायामेङःपदान्तादतीतिपूर्वरूपंप्राप्तं प्रकृत्यान्तःपादमव्यपरेइतिप्रकृतिभावान्निवर्तते ॥ ११ ॥

द्वादशीमृचमाह—

युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः । ताभिर्देवाँइहावह ॥ १२ ॥ २७॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥ १२ ॥ २७ ॥

हेदेवाग्ने रोहितः रोहिच्छब्दाभिधेयास्त्वदीयावडवाः रथेयुक्ष्व युज योजय हिशब्दः पादपूरणार्थः कीदृशीः अरुषीः गतिमतीः हरितः हर्तुंरथारूढान्पुरुषान्नेतुंसमर्थाः ताभिर्वडवाभिरिहास्मिन्कर्मणिदेवानावह ॥ युक्ष्व युजिर्योगे लोट् स्वरितेत्त्वादात्मनेपदं थासःसे सवाभ्यांवामौ रुधादिभ्यःश्नम् तस्यबाहुलकाल्लुक् कुत्वषत्वे प्रत्ययस्वरेणान्तउदात्तः संहितायांद्व्यचोतस्तिङइतिदीर्घः । अरुषीः ऋगतौ रन्तिगच्छन्तीत्यरुष्योवडवाः ऋहनिभ्यामुषन् धातोर्गुणोरपरत्वम् नित्त्वादाद्युदात्तोरुषशब्दः तस्मात्स्त्रियांछान्दसोङीप् शसि प्रथमयोःपूर्वसवर्णइतिदीर्घः । रथे रमेरौणादिकःक्थन्प्रत्ययः नित्त्वादाद्युदात्तः । हरितः हृसृरुहियुषिभ्यइतिरितिहरतेरितिप्रत्ययः इकारःप्रत्ययस्वरेणोदात्तः । रोहितः रुहेरपितेनैवसूत्रेणइतिः इकारःप्रत्ययस्वरेणोदात्तः । ताभिः सावेकाचइतिविभक्तेःप्राप्तमुदात्तत्वं सावर्णेतिनिषिध्यते । देवानित्यत्रपूर्ववद्रुत्वानुनासिकौ ॥ १२ ॥

॥ इतिप्रथमस्यप्रथमेसप्तविंशोवर्गः ॥ २७ ॥

इन्द्रसोममित्यादिकस्यद्वादशर्चस्यसूक्तस्य ऋषिच्छन्दसीपूर्ववत् यद्यप्येतत्सूक्तं ऋतुदेवताकंतथापि प्रत्यृचमिन्द्रादिदेवतान्तराणिमिलितानि तथाचानुक्रम्यते—इन्द्रसोममृतव्यं

निपातआद्युदात्तः । सूर्यस्य सूर्यशब्दोराजसूयसूर्येत्यादिनाक्यप्प्रत्ययान्तोनिपातितः क्यपः पित्त्वाद्धातुस्वरेणाद्युदात्तः । रोचनात् रोचमानात् रुचदीप्तौ अनुदात्तेतश्चहलादेरितिकर्तरियुच् चितइत्यन्तोदात्तत्वम् । विश्वान् विशेः क्वन्नतोनित्त्वादाद्युदात्तः। उपर्बुधः उपर्बुध्यन्तइत्युपर्बुधः क्विप्चेतिक्विप् धातुस्वरेणउकारउदात्तः समासेकृदुत्तरपदप्रकृतिस्वरत्वम्। विप्रः ऋज्रेन्द्रेत्यादिना रन् नित्त्वादाद्युदात्तः । होता ह्वयतेस्ताच्छील्येतृन् बहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं गुणः नित्त्वादाद्युदात्तः । इह इदमोहइतिहप्रत्ययः इदमइशितिइश् शित्त्वात्सर्वादेशः प्रत्ययस्वरः । वक्षति वहेःप्रार्थनायांलिङर्थेलेट् तस्यतिप् कर्तरिशप् शपिपरतः सिब्बहुलंलेटीतिसिप् ढत्वकत्वषत्वानि तिङ्ङतिङइतिनिघातः ॥ ९ ॥

अग्निष्टोमेप्रउगशस्त्रस्ययाज्याविश्वेभिःसोम्यंमध्विति स्तोत्रमग्नेशस्त्रादितिखण्डेसूत्रितम्-विश्वेभिःसोम्यंमध्वितियाज्येति ।

तामेतांयाज्यांसूक्तेदशमीमृचमाह—

विश्वे॑भिः सो॒म्यं मध्वग्न॒ इन्द्रे॑ण वा॒युना॑ । पिबा॑ मि॒त्रस्य॒ धाम॑भिः ॥ १० ॥

विश्वे॑भिः । सो॒म्यम् । मधु॑ । अग्ने॑ । इन्द्रे॑ण । वा॒युना॑ । पिब॑ ।
मि॒त्रस्य॑ । धाम॑ऽभिः ॥ १० ॥

हेअग्नेत्वंविश्वेभिःसर्वैःपूषभगादिभिःदेवैरिन्द्रेणवायुनामित्रस्यसंबन्धिभिर्धामभिस्तेजोभि-र्मूर्तिविशेषरूपैश्चसहसोम्यंसोमसंबन्धिमधुमधुरंभागंपिब ॥ विश्वेभिःबहुलंछन्दसीतिभिसऐसादे-शाभावः। सोम्यं सोममर्हतियइत्यनुवृत्तौमयेचेतियप्रत्ययः सोमस्यविकारइत्यर्थे यस्येतिचेतिलोपः प्रत्ययस्वरः । मधु फलिपाटिनमिमनीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः । वायुना कृवापाजीत्यादिनाउण् आतोयुक्चिण्कृतोरितियुक् प्रत्ययस्वरः । पिब पापाने लोटःसे-र्हिरादेशः शपिपाघ्रेत्यादिनापिबादेशः अतोहेरितिहेर्लुक् शपःपित्त्वाद्धातुस्वरः पादादित्वान्ननिघा-तः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । धामभिः धाञ्आतोमनिन्निति मनिन् नित्स्वरः॥ १० ॥

एकादशीमृचमाह—

त्वं होता॒ मनु॑र्हितो॒ऽग्ने य॒ज्ञेषु॑ सीदसि । सेमं नो॑ अध्व॒रं य॑ज ॥ ११ ॥

त्वम् । होता॑ । मनुः॑ऽहितः । अग्ने॑ । य॒ज्ञेषु॑ । सीद॑सि । सः । इ॒मम् ।
नः॒ । अ॒ध्व॒रम् । य॒ज॒ ॥ ११ ॥

हेअग्ने मनुर्हितः मनुषाहोत्रादिरूपेणमनुष्येणहविः संपादितोहोता होमनिष्पादकोयस्त्वंयज्ञेषुसीदसि तिष्ठसि सत्वंनोऽस्मदीयमिममध्वरंयज्ञंयजनिष्पादय ॥ मनुर्हितः मन्यतेइति मनुः जनेरुसिरित्यनुवृत्तौ बहुलमन्यत्रापीत्युस् आर्तिपृवपीत्यादिनानिदित्यनुवृत्तौ नित्वादाद्युदात्तः । हितः धात्रोनिष्ठेतिक्तप्रत्ययः दधातेर्हिरितिहिरादेशः मनुषाहितोमनुर्हितः कर्तृकरणेकृतावहुलमितिसमासः कृत्स्वरापवादेनतृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । सीदसि षद्लृविशरणगत्यवसादनेषु लटःशप् शपिपाघ्राध्मेत्यादिनासीदादेशः निघातः । सेममित्यत्र संहितायां सोचिलोपेचेत्पादपूरणमितिसोर्लोपेगुणः । अध्वरं नविद्यतेध्वरोयस्मिन्सोध्वरः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं नोअध्वरमित्यत्रसंहितायामेङःपदान्तादतीतिपूर्वरूपंप्राप्तं प्रकृत्यान्तःपादमव्यपरेइतिप्रकृतिभावान्निवर्तते ॥ ११ ॥

द्वादशीमृचमाह—

युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः । ताभिर्देवाँइहावह ॥ १२ ॥ २७ ॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥ १२ ॥ २७ ॥

हेदेवाग्ने रोहितः रोहिच्छब्दाभिधेयास्त्वदीयावडवाः रथेयुक्ष्व युज योजय हिशब्दः पादपूरणार्थः कीदृशीः अरुषीः गतिमतीः हरितः हर्तुंरथारूढान्पुरुषान्नेतुंसमर्थाः ताभिर्वडवाभिरिहास्मिन्कर्मणिदेवानावह ॥ युक्ष्व युजिर्योगे लोट् स्वरितेत्त्वादात्मनेपदं थासःसे सवाभ्यांवामौ रुधादिभ्यःश्नम् तस्यबाहुलकाल्लुक् कुत्वषत्वे प्रत्ययस्वरेणान्तउदात्तः संहितायांद्व्यचोतस्तिङइतिदीर्घः । अरुषीः ऋगतौ रन्तिगच्छन्तीत्यरुष्योवडवाः ऋहनिभ्यामुषन् धातोर्गुणोरपरत्वम् नित्वादाद्युदात्तोरुषशब्दः तस्मात्स्त्रियांछान्दसोङीष् शसि प्रथमयोःपूर्वसवर्णइतिदीर्घः । रथे रमेरौणादिकःक्थन्प्रत्ययः नित्वादाद्युदात्तः । हरितः हसृरुहियुषिभ्यइतिरितिहरतेरितिप्रत्ययः इकारःप्रत्ययस्वरेणोदात्तः । रोहितः रुहेरपितेनैवसूत्रेणइतिः इकारःप्रत्ययस्वरेणोदात्तः । ताभिः सावेकाचइतिविभक्तेःप्राप्तमुदात्तत्वं सावर्णेतिनिषिध्यते । देवानित्यत्रपूर्ववद्रुत्वानुनासिकौ ॥ १२ ॥

॥ इतिप्रथमस्यप्रथमेसप्तविंशोवर्गः ॥ २७ ॥

इन्द्रसोमामित्यादिकस्यद्वादशर्चस्यपञ्चदशस्यसूक्तस्य ऋषिच्छन्दसीपूर्ववत् यद्यप्येतत्सूक्तं ऋतुदेवताकंतथापि प्रत्यृचमिन्द्रादिदेवतान्तराणिमिलितानि तथाचानुक्रम्यते—इन्द्रसोममृतव्यं

तत्रैन्द्रीमारुतीत्वाष्ट्र्याग्नेय्यैन्द्रीमैत्रावरुणीचतस्रोद्रविणोदसआश्विन्याग्नेय्यृतुदेवताःसर्वत्रेति । विनियोगस्तुस्मार्तोद्रष्टव्यः ।

तस्मिन्सूक्तेप्रथमामृचमाह—

इन्द्रसोमंपिबऋतुनात्वाविशन्त्विन्दवः । मत्सरासस्तदोकसः ॥ १ ॥

इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इन्दवः । मत्सरासः । तत्ऽओकसः ॥ १ ॥

हेइन्द्र ऋतुनासह सोमंपिब इन्दवःपीयमानाःसोमाः त्वा त्वांआविशन्तुकीदृशाः मत्सरासः तृप्तिकराः तदोकसस्तन्निवासाः सर्वदात्वदुदरस्थायिनइत्यर्थः ॥ इन्द्र पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । सोमं अर्तिस्तुसुस्वित्यादिनामन् नित्त्वादाद्युदात्तः । पिब पिबामित्रस्येत्यत्रोक्तम् आत्वाविशंत्वित्युत्तरवाक्यगताख्यातार्थेनसहसमुच्चयार्थश्चशब्दोलुप्तः अतश्चादिलोपेविभाषेतीयंप्रथमातिङ्विभक्तिर्ननिहन्यते । विशन्त्वितिचलोपसाम्येऽपिद्वितीयत्वान्निहन्यतएव संहितायामाद्गुणइतिप्राप्तस्यगुणस्यऋत्यकइतिशाकल्यमतेप्रकृतिभावादभावः । इन्दवः प्रवोभ्रियन्तइत्यत्रोक्तम् । मत्सरासः तत्रैवोक्तं आज्जसेरसुगित्यसुक् । तदेवओकःस्थानंयेषांतेतथोक्ताः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १ ॥

द्वितीयामृचमाह—

मरुतःपिबतऋतुनापोत्राद्यज्ञंपुनीतन । यूयंहिष्ठासुदानवः ॥ २ ॥

मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानवः ॥ २ ॥

हेमरुतः ऋतुनासह पोत्रात्पोतृनामकस्यऋत्विजः पात्रात्सोमंपिबत नोऽस्मदीयंयज्ञं पुनीतनशोधयत हेसुदानवः शोभनदातारोमरुतः हियस्माद्यूयंस्थ युष्माकंशोधयितृत्वंप्रसिद्धम् तस्माच्छोधयतेत्यर्थः ॥ पिबत अत्रतिङोदुपदेशाच्छपःपरत्वाल्लसार्वधातुकानुदात्तत्वं धातुस्वरः पूर्वामन्त्रितस्याविद्यमानवत्त्वेनपदात्परत्वान्निघाताभावः पूर्ववत्प्रकृतिभावः। पोत्रात् पोतुःसंबन्धिपात्रं पोत्रं तस्येदमित्यण् तद्धितेष्वचामादेरितिप्राप्तावृद्धिः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिनभवति नन्वेवमन्त्यस्यऋकारस्याचोञ्णितीतिवृद्धिःप्राप्नोति त्वाष्ट्रजागतइत्यत्रहि विप्रतिषेधेपरंकार्यमितिपरयाआदिवृध्याअन्त्योपधलक्षणावृद्धिर्वाध्यतेइत्युक्तं इहतुपरस्याआदिवृद्धेश्छान्द-

सत्वेननिवर्त्यत्वादन्त्यवृद्धिःप्राप्नोत्येवेति एवंतर्हिनाप्यादिवृद्धिरौकारःक्रियतां तस्यतु छान्दसओकारोभविष्यति।पुनीतन पूञ्पवने लोट् लोटोलङ्वदितिलङ्वद्भावात्तस्य तस्थस्थमिपामिततादेशः क्र्यादिभ्यःश्ना ईहल्यघोरितीकारः तप्तनप्तनथनाश्चेतितनादेशः प्वादीनांह्रस्वइतिह्रस्वः प्रत्ययद्वयस्यापिसार्वधातुकमपिदितिङित्त्वात्स्वस्वपूर्वयोरिकोर्गुणाभावः । यूयं युष्मदःपरस्यजसोङेप्रथमयोरमित्यमादेशः नविभक्तौतुस्माइतिमकारस्येत्संज्ञाप्रतिषेधः यूयवयौजसीतिमपर्यन्तस्ययूयादेशः शेषेलोपः अत्रयूयादेशात्प्रागेवान्तरङ्गत्वात्प्रातिपदिकस्यान्तोदात्तत्वम् शेषनिघातः ततोयूयादेशः स्थानेन्तरतमइतिसर्वानुदात्तः तत्रशेषेलोपोऽन्त्यलोपइतिपक्षेपूर्वसवर्णदीर्घत्वंबाधित्वायोयमिपूर्वइतिप्रातिपदिकान्त्येनउदात्तेनसहअनुदात्तस्यसुपएकादेशः सएकादेशउदात्तेनोदात्तइत्युदात्तः टिलोपपक्षेतुउदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्।स्थ अस् भुवि लटोमध्यमबहुवचनं थ अदिप्रभृतिभ्यःशपइतिशपोलुक् श्नसोरल्लोपइत्यकारलोपः व्यत्ययेन षत्वं हिचेतिनिषेधात्तिङ्ङतिङइतिनिघातोनभवति संहितायामन्येषामपिदृश्यतइतिदीर्घत्वम् अत्रहेसुदानवोयूयंहिस्थेतिविवक्षितम् । सुदानवःदाभाभ्यांनुः सोःप्रादिसमासः आमन्त्रितनिघातः अत्रयूयमित्युद्दिश्य सुदानवःस्थेतिनविधीयते येन अनामन्त्रितत्वान्निघातोनस्यात् किन्तुसुदानवइति सिद्धवद्दातृत्वेनसंबोध्यान्येपुतेपुमारुतस्तेकेपुमरुत्संप्रसिद्धात्मभावातिशयात् यूयंस्थेतियुष्मच्छब्देनप्रतिनिर्दिश्यपुनीतनेतिप्रार्थनेपवनेतेषांहेतुत्वंहिशब्देनोच्यते ॥ २ ॥

तृतीयामृचमाह—

अभियज्ञंगृणीहिनोग्नावोनेष्टःपिबंऋतुना। त्वंहिरत्नधाअसि ॥ ३ ॥

अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब ।
ऋतुना । त्वम् । हि । रत्नऽधाः । असि ॥ ३ ॥

ग्नाशब्दःस्त्रीवाची तथाचयास्कआह—मेनाग्नाइतिस्त्रीणांमेनामानयन्त्येनाग्नागच्छन्त्येनाइति । ग्नाः अस्यसन्तीतिग्नावान् नेष्टृशब्दोत्रत्वष्टारंदेवमाह कस्मिंश्चिद्देवसत्रेनेष्टृत्वेन त्वष्टुर्वृतत्वात् हेग्नावः पत्नीयुक्तनेष्टस्त्वष्टः नोऽस्मदीयंयज्ञमभिगृणीहि अभितोदेवानांसमीपे स्तुहि ऋतुनासहत्वंसोमंपिब हियस्मात्त्वं रत्नधाअसि रत्नानांदाताभवसि तस्मात्सोमंपातुमर्हसीत्यर्थः॥ अभि उपसर्गाश्चाभिवर्जमितिपर्युदासादभेरन्तोदात्तत्वम् । गृणीहि गृशब्दे लोटि सिपोहिः क्र्यादिभ्यःश्ना हेर्ङित्त्वादीहल्यघोरितीत्वम् श्नाप्रत्ययस्यङित्त्वाद्गुणाभावः प्वादीनां

१ नि० ३. २१.।

ह्रस्वः तिङ्ङतिङ इतिनिघातः । ग्राअस्यसन्तीतिमतुप् व्यत्ययेनवत्वम् संबुद्धौमतुवसोरुरितिरुत्वं विसर्गः पादादित्वेनामन्त्रितनिघाताभावात्पाष्ठिकामन्त्रिताद्युदात्तत्वम् ग्रावइत्यस्यविशेषणतयाविशेषवचनत्वान्नामन्त्रितेसमानाधिकरणेइतिनिषेधाभावादविद्यमानवत्त्वेनोत्तरस्यनेष्टृशब्दस्यपाष्ठिकमाद्युदात्तत्वम् । पिब शपःपित्त्वाद्धातुस्वरः पूर्वयोरामन्त्रितयोरविद्यमानवत्त्वेननिघाताभावः । रत्नानिदधातीतिरत्नधाः क्विप्चेतिक्विप् धातुस्वरः समासेऽकृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । असि सिपः पित्त्वाद्धातुस्वरः तिङ्ङतिङ इतिनिघातोनभवति हिचेतिप्रतिषेधात् ॥ ३ ॥

चतुर्थीमृचमाह–

अग्ने॑दे॒वाँइ॒हाव॑ह सा॒दया॒योनि॑षु त्रि॒षु । परि॑भूष॒पिब॑ऋ॒तुना॑ ॥ ४ ॥

अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । सा॒दय॑ । योनि॑षु । त्रि॒षु ।
परि॑ । भू॒ष॒ । पिब॑ । ऋ॒तुना॑ ॥ ४ ॥

हेअग्ने देवानिहास्मिन्कर्मण्यावह ततोयोनिषुस्थानेषुत्रिषुसवनेषुसादयदेवानुपवेशय तत्रस्तान्परिभूष अलंकुरु ऋतुनासह त्वंसोमंपिब ॥ अग्नेदेवानित्ययंपादोगतः । योनिषु युमिश्रणे वहिश्रीत्यादिनानिप्रत्ययः नित्त्वादाद्युदात्तः । त्रिषु षट्त्रिचतुर्भ्योहलादिरिति विभक्तेरुदात्तत्वम् । भूष भूषअलङ्कारे तिङ्ङतिङ इतिनिघातः । पिब ऋतुना गतौ ॥ ४ ॥

पञ्चमीमृचमाह–

ब्राह्म॑णादिन्द्र॒राध॑सः॒पिबा॒सोम॑मृ॒तूँरनु॑ ॥ तवेद्धिस॒ख्यमस्तृ॑तम् ॥ ५ ॥

ब्राह्म॑णात् । इ॒न्द्र॒ । राध॑सः । पिब॑ । सोम॑म् । ऋ॒तून् । अनु॑ ।
तव॑ । इत् । हि । स॒ख्यम् । अस्तृ॑तम् ॥ ५ ॥

हेइन्द्र ब्राह्मणात् ब्राह्मणाच्छंसिसंबन्धात् राधसोधनभूतात्पात्रात् सोमंपिब किंकृत्वाऋतूननु ऋतुदेवाननुसृत्य ऋतवोपिपिबन्त्वित्यर्थः हियस्मात्तवेव तवसख्यंअस्तृतमृतूनामविच्छिन्नं तस्मादृतुभिःसहपानंयुक्तम् ॥ ब्राह्मणात् ब्रह्मशब्देनात्रब्रह्मवर्गोद्वितीयोब्राह्मणाच्छंसीकथ्यते सचपुंलिङ्गेशेषनिपातेनानुदात्तादिः तस्यसंबन्धीउच्छिष्टभ्रमसः सच तस्यैवावयवनियतइत्यवयवविवक्षायामनुदात्तादेरञ् तेनञित्त्वादाद्युदात्तस्त्रमसपरोऽत्रब्राह्मणशब्दः । राधसः सर्वधातुभ्योसुन् नित्त्वादाद्युदात्तः । पिब पादादित्वादाद्युदात्तत्वम् द्व्यचोतस्तिङ इतिदीर्घत्वम् ऋतूँरन्वित्यत्र

दीर्घादटिसमानपादेइतिनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेत्यूकारस्यानुनासिकत्वम् । तव युष्मदस्मद्भ्यांङसोश् शित्त्वात्सर्वादेशः तवममौङसीतितवादेशः युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । सख्यं सख्युःकर्मसख्यं सख्युर्यः यस्येतिलोपः प्रत्ययस्वरः । अस्तृतं स्तृणोतेर्हिंसार्थस्यक्तः नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

षष्ठीमृचमाह—

युवंदक्षंधृतव्रतमित्रावरुणदूळभम् । क्रतुनायज्ञमाशाथे ॥ ६ ॥ २८ ॥

युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् । क्रतुना । यज्ञम् । आशाथे इति ॥ ६ ॥ २८ ॥

हेधृतव्रता स्वीकृतकर्माणौ मित्रावरुणाहेमित्रावरुणौ हेमित्रनामकवरुणनामकौदेवौ युवंउभौयुवां क्रतुनासह अस्मदीयंयज्ञमाशाथेव्यामुथः कीदृशंयज्ञं दक्षं प्रवृद्धं दूडभंदुर्दहंशत्रुभिर्दग्धुंविनाशयितुमशक्यमित्यर्थः ॥ युवं प्रथमाद्विवचनस्यङेप्रथमयोरमित्यमादेशः युवावौद्विवचनेइतिमपर्यन्तस्ययुवादेशः शेषेलोपइतिटिलोपोन्त्यलोपोवा अमिपूर्वत्वंभाषायामेवसात्वं टिलोपपक्षेउदात्तनिवृत्तिस्वरेण अमउदात्तत्वम् अन्त्यलोपपक्षेएकादेशउदात्तेनोदात्तः इत्युदात्तत्वम् । दक्षं दक्षवृद्धौ दक्षंत्यनेनेतिकरणेघञ् एवंहिपुंल्लिङ्गत्वनियमः अन्यस्यानियमइतिनपुंसकत्वम् । धृतव्रता मित्रावरुणा धृतानिव्रतानियाभ्यांतौधृतव्रतौ मित्रश्चवरुणश्चमित्रावरुणौ उभयत्र सुपांसुलुगित्यादिनाविभक्तेराकारः मित्रशब्दस्यदेवताद्वन्द्वेचेत्यानङादेशः प्रथमस्यामन्त्रितनिघातः द्वितीयस्यपादादित्वादाद्युदात्तत्वं संहितायांछान्दसंह्रस्वत्वम् । दूडभं दहभस्मीकरणे दुःखेन दह्यतइतिदुर्दहं ईषद्दुःसुष्वित्यादिनादुरित्युपपदेदग्धेःखल् व्यत्ययोबहुलमितिउशब्दस्यऊकारोरेफस्यलोपः दकारस्यडकारोहकारस्यभकारः लितीतिप्रत्ययात्पूर्वमुदात्तत्वं कदुत्तरपदत्वेनसएवशिष्यते । आशाथे अशूव्याप्तौ छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् मध्यमद्विवचनमाथां टेरेत्वं अतआदेरित्यभ्यासस्यदीर्घः अश्नोतेश्चेतिप्राप्तोनुडागमः अनित्यमागमशासनमिति निवर्तते ॥ ६ ॥

इतिप्रथमस्यप्रथमेष्टाविंशोवर्गः ॥ २८ ॥

सूक्तेसप्तमीमृचमाह—

द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे । यज्ञेषुदेवमीळते ॥ ७ ॥

द्रविणःऽदाः । द्रविणसः । ग्रावंऽहस्तासः । अध्वरे । यज्ञेषु ।
देवम् । ईळते ॥ ७ ॥

अध्वरेग्निष्टोमेप्रकृतिस्वरूपे यज्ञेषुविकृतिरूपेषु उक्थादिषुचदेवमग्निमीळतेऋत्विजः स्तुवन्ति कीदृशाऋत्विजः द्रविणसोधनार्थिनः ग्रावहस्तासः अभिषवसाधनपाषाणधारिणः कीदृशंदेवं द्रविणोदाः धनप्रदं यद्वा धनप्रदोऽग्निः सोमंपिबत्वितिविशेषः। तमेतंमन्त्रंयास्कएवंनिर्वक्ति–द्रविणोदाःकस्माद्धनंद्रविणमुच्यते यदेनदभिद्रवन्तिबलंवाद्रविणंयदेनेनाभिद्रवन्ति तस्य दातादद्रविणोदास्तस्यैषाभवति द्रविणोदाद्रविणसइत्यादि[1] ।सोयंयास्कोक्तोनिर्वचनप्रपञ्चः तस्मिन्नेवग्रन्थेवगन्तव्यः ॥ द्रविणोदाः द्रुदक्षिभ्यामिनन् नित्त्वादाद्युदात्तोद्रविणशब्दः तद्ददातीति द्रविणोदाः क्विप्चेतिक्विप् पूर्वपदस्यसकारोपजनश्छान्दसः रुत्वोत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् देवविशेषणत्वेनैकवाक्यतापक्षेद्वितीयायाःसुआदेशः अथवाद्रविणमात्मनइच्छन्तिद्रविणस्यन्ति सुपआत्मनःक्यच् सर्वप्रातिपदिकेभ्योलालसायांसुग्वक्तव्यइतिक्यचिपरतःसुगागमः द्रविणस्यतेः संपदादित्वाद्भावेक्विप् अतोलोपः क्वौलुप्तंनस्थानिवद्भवतीतितस्यस्थानिवत्त्वप्रतिषेधाद्यलोपः एवंद्रविणस्शब्दोधनेच्छावचनः द्रविणेच्छांदस्यतियथेष्टधनप्रदानेनोपक्षयतीत्यर्थे दसुउपक्षयेइत्यस्मादन्तर्भावितण्यर्थात्क्विप्चेतिक्विप् एवंद्रविणोदःशब्दःसकारान्तोभवति तथाच–द्राविणोदसाःप्रवादाभवन्तीति[2] नैरुक्तोव्यवहारउपपद्यते अतोद्रविणोदस्शब्दः भिन्नवाक्यत्वेस्वार्थे प्रथमा एकवाक्यत्वेतुव्यत्ययेनद्वितीयार्थोभवति द्रविणसइत्यत्रापिवाक्यभेदपक्षे द्रविणसः सोमस्येत्यर्थे सकारोपजनश्छान्दसः आद्युदात्तत्वंतुनियमेनस्थितम् ऋत्विग्विशेषणत्वेनैकवाक्यत्वपक्षेतुक्यजन्तात्क्विप् अतोलोपादिपूर्ववत् अत्रतुपक्षेक्यचश्चित्त्वेनान्तोदात्तत्वेप्राप्तेव्यत्ययेनाद्युदात्तत्वम् । ग्रावयुक्ताहस्तायेषांतेग्रावहस्तासः आज्जसेरसुक् ग्रावशब्दोवृषादित्वादाद्युदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अध्वरे नविद्यतेध्वरोहिंसायस्मिन् नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । ईळते अनुदात्तेत्त्वादात्मनेपदं अदिप्रभृतिभ्यइतिशपोलुक् झस्य अदादेशः ॥ ७ ॥

अष्टमीमृचमाह–

द्रविणोदार्ददातुनोवसूंनियानिंशृण्विरे । देवेषुतावंनामहे ॥ ८ ॥

द्रविणःऽदाः । ददातु । नः । वसूंनि । यानि । शृण्विरे । देवेषु ।
ता । वनामहे ॥ ८ ॥

---

१ नि० ८.१.। २ नि० ८.२.।

द्रविणोदादेवोनोऽस्मभ्यंवसूनिधनानिददातु यानिधनानिश्रृण्विरे हविरुपयुक्तत्वेनश्रूयन्ते ता तानिसर्वाणिधनानि देवेपुनिमित्तभूतेषुवनामहेसंभजामः धनैर्देवान्यष्टुं तानिस्वीकुर्महइत्यर्थः ॥ द्रविणोदाः गतम् । वसूनि शृस्वृस्निहीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेराद्युदात्तः । शृण्विरे श्रुश्रवणे छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् झ इरेच् छन्दस्युभयथेतिसार्वधातुकत्वेव्यत्ययेनश्नुः तत्सन्नियोगेनशृभावश्च उवङ्प्राप्ते हुश्नुवोः सार्वधातुकइतियणादेशः चितइत्यन्तोदात्तत्वं यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः शेश्छन्दसिबहुलमितिशेर्लोपः नलोपःप्रातिपदिकान्तस्येतिनलोपः । वनामहे वनषणसंभक्तौ व्यत्ययेनात्मनेपदम् ॥ ८ ॥

नवमीमृचमाह—

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत । नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥ ९ ॥

द्रविणोदाः देव ऋतुभिःसहनेष्ट्रात नेष्टृसंबन्धिपात्रात् पिपीषति सोमं पातुमिच्छति तस्माद्हेऋत्विजः इष्यत होमस्थानेगच्छत गत्वाच जुहोत होमंकुरुत हुत्वाप्रतिष्ठतच होमस्थानात्स्थानान्तरंमतिप्रस्थानमर्पिकुरुत ॥ द्रविणोदाः गतः । पिपीषति पापाने पातुमिच्छतीतिसन् छान्दसईकारः तिङ्ङतिङइतिनिघातः । जुहोत लोण्मध्यमबहुवचनं तस्यलङ्वद्भावात्तादेशः तस्य तप्तनप्तनथनाश्चेतितबादेशः तस्यपित्त्वाद्गुणः अभ्यस्तानामादिरित्यनुवृत्तौ अनुदात्तेचेत्यनुदात्तत्वेप्राप्ते भीह्रीभृहुमदजनधनदरिद्राजागरांप्रत्ययात्पूर्वंपितीत्योकारउदात्तः । तिष्ठत ष्ठागतिनिवृत्तौ लोट् मध्यमबहुवचनस्यथस्यलङ्वद्भावात्तादेशः शपिपाघ्राध्मेत्यादिनातिष्ठादेशः समवप्रविभ्यःस्थइत्यात्मनेपदंनभवति तत्रानुवृत्तस्यनिर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् अत्रचशब्देनव्यवधानात् तेप्राग्धातोरित्युपसर्गत्वेनप्राक्प्रयोक्तव्यस्यापिप्रशब्दस्य व्यवहिताश्चेति छन्दसिव्यवहितप्रयोगः अत्रचशब्दोजुहोतेतिपूर्वेणसहसमुच्चयार्थः नपुनरिष्यतेत्युत्तरेण तेनाप्रथ मत्वाचवायोगेप्रथमेतिनिषेधाभावात्तिङ्ङतिङइतिनिघातः । नेष्ट्रात पोताद्यज्ञंपुनीतनेत्यत्र पोत्रशब्दे यदुक्तं तदत्रद्रष्टव्यम् । इष्यत इषगतौ लोण्मध्यमबहुवचनम् ॥ ९ ॥

दशमीमृचमाह—

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव ॥ १० ॥

यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे ।
अध । स्म । नः । दुदिः । भव ॥ १० ॥

हेद्रविणोदोदेव यद्यस्मात्कारणादृतुभिःसहतुरीयंचतुर्णांपूरणं त्वा त्वांयजामहे अधेत्ययं निपातस्तच्छब्दार्थः तस्मात्कारणान्नोऽस्मभ्यं ददिर्धनस्यदाताभवस्म अवश्यंभव ॥ तुरीयं चतुर्णांपूरणं चतुरश्छयतावाद्यक्षरलोपश्चेतिछप्रत्ययः तस्यप्रत्ययस्वरेणोदात्तात्प्रागेव आयनेयीनीत्यादिनाईयादेशः आयन्नादिपूपदेशिवद्वचनंस्वरसिद्ध्यर्थमितिवचनात् कृतेआदेशे प्रत्ययस्वरेणइकारउदात्तः । द्रविणोदः उक्तम् पादादित्वादामन्त्रिताद्युदात्तत्वम् । यजामहे अत्रशपः पित्त्वेनतिङश्चलसार्वधातुकस्वरेणधातुस्वरएव पूर्वस्यामन्त्रितस्याप्यविद्यमानवत्त्वात् यद्वृत्तयोगाद्यानिघातः व्यवहितयोगेऽपिहिसनिपेधइत्युक्तम् । अध छान्दसोधकारः । स्म चादिरनुदात्तः संहितायांनिपातस्यचेतिदीर्घः । ददिः डुदाञ्दाने आदृगमहनजनःकिकिनौलिट्चेतिकिप्रत्ययः लिड्वद्भावाद्द्विर्वचनादि आतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरः ॥ १० ॥

एकादशीमृचमाह—

अश्विनापिबतंमधुदीद्यग्नीशुचिव्रता । ऋतुनायज्ञवाहसा ॥ ११ ॥

अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी ।
शुचिऽव्रता । ऋतुना । यज्ञऽवाहसा ॥ ११ ॥

हेअश्विनौ मधुमाधुर्योपेतं सोमंपिबतं कीदृशौदीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ शुचिव्रताशुद्धकर्माणौ ऋतुनाऋतुदेवतयासहयज्ञवाहसायज्ञस्यनिर्वाहकौ ॥ अश्विना संबोधनद्विवचनस्यसुपांसुलुगित्याकारः आमन्त्रिताद्युदात्तः । पिबतं शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते । मधु फलिपाटीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः । दीद्यग्नी दिवुक्रीडादौ अन्येभ्योऽपिदृश्यन्तइतिविच् वेरपृक्तलोपाद्वलिलोपोबलीयानितिमध्यमवकारस्यलोपः प्रथमंप्रत्ययलोपेहिवर्णाश्रयविधौप्रत्ययलक्षणंनास्तीतिनिषेधाद्वलिलोपोनस्यात् छान्दसंद्विर्वचनं तुजादित्वादभ्यासदीर्घत्वम् यङ्लुगन्ताद्वासंज्ञापूर्वकोविधिरनित्यइत्यभ्यासस्यगुणाभावः दीदिरग्निर्ययोस्तौदीद्यग्नी आमन्त्रिताद्युदात्तत्वम् पादादित्वान्निघातः। शुचिव्रता शुचिव्रतंययोस्तौसुपांसुलुगित्याकारः दीद्यग्निशब्दस्यसामान्यवचनत्वेननामन्त्रितइत्यविद्यमानवत्त्वप्रतिषेधादाष्टमिकनिघातत्वम् पूर्वस्यपराङ्गवद्भावात् ऐकस्वर्यम् । यज्ञवाहसा वहप्रापणे यज्ञंवहतइतियज्ञवाहसौ वहिहाधाञ्भ्यश्छन्दसीत्यसुन् तत्रहिगतिकारकयो-

रपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्सोपपदानामपिभवतीत्युक्तम् णिदित्यनुवृत्तेरुपधावृद्धिः सुपांसुलुगित्यादिनाविभक्तेराकारः आमन्त्रितनिघातः असामर्थ्यात्पूर्वस्यनपराङ्गवद्भावः ॥ ११ ॥

द्वादशीमृचमाह—

गार्हपत्येनसन्त्यऋतुनायज्ञनीरसि । देवान्देवयतेयज ॥ १२ ॥२९॥

गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि । देवान् । देवऽयते । यज ॥ १२ ॥ २९ ॥

हेसन्त्य फलप्रदाग्निदेव गार्हपत्येनगृहपतिसंबन्धिनारूपेणयुक्तःसन् ऋतुना ऋतुदेवेनसह यज्ञनीः यज्ञस्यनिर्वाहकोसि तस्मात्त्वंदेवयते देवविषयकामनायुक्तायजमानायदेवान्यज ॥ गार्हपत्येन गृहपतिनासंयुक्तेञ्यः यस्येतिलोपः ञित्वादादिवृद्धिरायुदात्तत्वंच गृहपतित्वमित्यर्थे पत्यन्तपुरोहितादिभ्यइतियक्तित्वन्तोदात्तत्वंस्यात् । सन्त्य सननेभव षणुदाने क्तिचूक्तौचेतिक्तिच् नक्तिचिदीर्घश्चेतिदीर्घनलोपाभावः भवेछन्दसीतियत् तत्रसाधुरितिवानिघातः । यज्ञंनयतीतियज्ञनीः सत्सूद्विषेत्यादिनाक्विप् कृदुत्तरपदप्रकृतिस्वरः । देवयते देवानात्मनइच्छतीतिदेवयन् तस्मै क्यचिचेतीत्वंनभवति नच्छन्दस्यपुत्रस्येतिनिषेधात् अश्वाघस्येत्यात्वविधानादात्वनिषेधेप्राप्तस्यदीर्घस्याप्येपनिषेधइत्युक्तम् शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् अत्रक्यचश्चित्वादन्तोदात्तत्वं शपःपित्त्वादनुदात्तत्वं शतुश्चलसार्वधातुकस्वरेण उभयोःक्यचासहैकादेशेएकादेशउदात्तेनोदात्तइत्युदात्तः तस्मादन्तोदात्तत्वात्परस्याविभक्तेः शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् ॥ १ ॥

इतिप्रथमस्यप्रथमेएकोनत्रिंशोवर्गः ॥ २९ ॥

चतुर्थेनुवाके आत्वावहन्त्वितिनवर्चंसूक्तम् ऋषिच्छन्दसीपूर्ववदनुवर्तेते विशेषादेशाभावादिन्द्रोदेवता विनियोगस्तुप्रातःसवनेमैत्रावरुणस्योन्नीयमानेसूक्तम् आत्वावहन्तुहरयइति तथाच द्विदेवत्यैश्चरन्तीतिखण्डेसूत्रितम्—उन्नीयमानेभ्योन्वाहात्वावहन्त्विति तथाषोडशिनिशस्त्रेआत्वावहन्तुहरयइतितिस्रः तथाचसूत्रितम् अथषोडशीतिखण्डे—आत्वावहन्तुहरयइतितिस्रोगायत्र्यइति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

आत्वावहन्तुहरयोवृषणंसोमपीतये । इन्द्रंत्वासूरचक्षसः ॥ १ ॥

आ। त्वा। वहन्तु। हरयः। वृषणम्। सोमऽपीतये। इन्द्र।
त्वा। सूरऽचक्षसः॥ १॥

हेइन्द्र वृषणंकामानांवर्षितारंत्वात्वांसोमपीतयेसोमपानार्थं हरयस्त्वदीयाअश्वावहन्तु अस्मिन्कर्मण्यानयन्तु तथासूरचक्षसः सूर्यसमानप्रकाशयुक्ताऋत्विजस्त्वांमन्त्रैःप्रकाशयन्त्विति शेषः॥ हरन्तीतिहरयः अचइः इन्सर्वधातुभ्यइतीन् नित्त्वादाद्युदात्तः। वृषणं कनिन्युवृषितक्षिराजीत्यादिनाकनिन् किच्त्वाल्लघूपधगुणाभावः वापपूर्वस्यनिगमेइतिविकल्पितमुपधादीर्घत्वम्। सोमपीतये ऐभिरग्नइत्यत्रोक्तम्। सूरचक्षसः चक्षिङ्व्यक्तायांवाचि सर्वधातुभ्योऽसुन् चक्षिङःख्याञ् इतिनभवति अनसोःप्रतिषेधोवक्तव्यइतिनिषेधात् पूप्रेरणे सुवतीतिसूरः सुसूधागृधिभ्यःक्रन्निति क्रन् किच्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः सूरवत् चक्षः ख्यानं प्रकाशोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥१॥

द्वितीयामृचमाह—

इमाधानाघृतस्नुवोहरीइहोपवक्षतः। इन्द्रंसुखतमेरथे ॥ २॥

इमाः। धानाः। घृतऽस्नुवः। हरी इति। इह। उप। वक्षतः।
इन्द्रम्। सुखऽतमे। रथे॥ २॥

हरिशब्दइन्द्ररथस्यवोढारावश्वावाचष्टे तथाचश्रुत्यन्तरम्—हर्योःस्थातेति[1] हरिभ्यांत्वेन्द्रोदेवतांगमयत्वितिच एतदेवाभिप्रेत्यनिघण्टुकारआह हरीइन्द्रस्येति तादृशौहरीइमायागार्थं वेधामासादितत्वेनपुरोवर्तिनीर्धानाः भृष्टयवतण्डुलानुद्दिश्य सुखतमेरथे इन्द्रमवस्थाप्य इहास्मिन्कर्मणिउपवक्षतः वेदिसमीपेवहतां कीदृशीर्धानाः घृतस्नुवः अलंकरणोपस्तरणाभिघारणेनघृतस्राविणीः॥ धीयन्तइतिधानाः धापृवस्यज्यतिभ्योनइतिनः प्रत्ययस्वरः। घृतस्नुवः घृतं स्नुवन्तीतिघृतस्नुवः क्विपि तुगभावश्छान्दसः धातुस्वरः समासेकृदुत्तरपदप्रकृतिस्वरत्वम् स्नोःसंयोगपूर्वत्वेनयणभावादुवङादेशः। हरी हृञ्हरणे सर्वधातुभ्यइन् नित्त्वादाद्युदात्तः प्रगृह्यत्वात्संहितायांप्रकृतिभावः। वक्षतः प्रार्थनाख्येलिङर्थेलेट् तस्यप्रथमपुरुषद्विवचनंतस् लेटोडाटावित्यडागमः शपिप्राप्ते सिब्बहुलंलेटीतिसिप् ढत्वकत्वषत्वानि तिङ्ङतिङइतिनिघातः। सुखतमे गतम्॥ २॥

तृतीयामृचमाह—

इन्द्रमिद्देवतातयइन्द्रंप्रयत्यध्वरे। इन्द्रंसोमस्यपीतये ॥ ३॥

---

१ तै० सं० १.४.२८.। २ तै० सं. १.६.४.।

इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे । इन्द्रम् ।
सोमस्य । पीतये ॥ ३ ॥

प्रातः कर्मारंभेप्रातःसवने इन्द्रंहवामहे आह्वयामः तथैवाध्वरेसोमयागे प्रयतिप्रगच्छति प्रारभ्यवर्तमानेसति माध्यंदिनसवनेतमिन्द्रंहवामहे तथायज्ञसमाप्त्यवसरे तृतीयसवनेसोमस्य पीतयेसोमपानार्थंहवामहे ॥ प्रातः स्वरादिष्वन्तोदात्तोनिपातितः । हवामहे ह्वेञोलटिशपिपरतोह्वःसंप्रसारणमित्यनुवृत्तौ बहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं गुणावादेशौ । प्रयति इण् गतौ लटःशतृ अदिप्रभृतिभ्यःशपइतिशपोलुक् शतुर्ङित्त्वाद्गुणाभावः प्रादिसमासः कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणमितिवचनात्प्रत्ययग्रहणइतिनियमाभावात् शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् । अध्वरे उक्तं संहितायांउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येति अकारस्य स्वरितत्वम् । पीतये पापाने क्तिनि छान्दसमन्तोदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

उप॑नः सु॒तमाग॑हि॒हरि॑भिरिन्द्रके॒शिभिः॑ । सु॒तेहित्वा॒हवा॑महे ॥ ४ ॥
उप॑ । नः॒ । सु॒तम् । आ । ग॒हि॒ । हरि॑ऽभिः । इ॒न्द्र॒ । के॒शिऽभिः॑ ।
सु॒ते । हि । त्वा॒ । हवा॑महे ॥ ४ ॥

हेइन्द्र केशिभिःकेसरयुक्तैर्हरिभिरश्वैस्त्वंनोऽस्मदीयंसुतमभिषुतंसोमंप्रतिउपसमीपेआगहि आगच्छ सुते अभिषुतेसोमेनिमित्तभूतेसति हियस्मात्कारणात्त्वाहवामहेत्वामाह्वयामः तस्मादागच्छेतिपूर्वत्रान्वयः ॥ गहि गमेर्लोटःसेर्हिः शपइत्यनुवृत्तौबहुलंछन्दसीतिशपोलुक् इपुगमियमांछइतिछत्वंनभवति नलुमतांगस्येतिप्रतिषेधात् अनुदात्तोपदेशेत्यादिनाअनुनासिकलोपः तस्यासिद्धवदत्राभादित्यसिद्धत्वादतोहेरितिहेर्लुग्नभवति । केशिभिः क्लिशेरन् लोलोपश्चेतिअन् मत्वर्थीयइनिः प्रत्ययस्वरः । हवामहे ह्वइत्यनुवृत्तौ बहुलंछन्दसीतिसंप्रसारणं शपःपित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरएव तिङ्ङतिङइतिननिघातः हिचेतिप्रतिषेधात् ॥ ४ ॥

पञ्चमीमृचमाह—

सेमंनः॒स्तोम॒माग॒ह्युपे॒दंसव॑नंसु॒तम् । गौ॒रोनतृ॑षि॒तः पि॑ब ॥ ५ ॥ ३० ॥

सः । इ॒मम् । नः॒ । स्तोम॑म् । आ । ग॒हि॒ । उप॑ । इ॒दम् । सव॑नम् ।
सु॒तम् । गौ॒रः । न । तृ॒षि॒तः । पि॒ब॒ ॥ ५ ॥ ३० ॥

हेइन्द्र सत्वंनोऽस्मदीयमिमंस्तोमंस्तुतिं प्रतिआगहिआगच्छ आगमनेहेतुरुच्यते उप देवयजनसमीपे सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठीयमानंसवनं प्रातःसवनादिरूपंकर्मवर्तते तस्माद्गौरोन गौरमृगइवतृषितःसन्निमंसोमंपिब ॥ सः इममित्यत्रसंहितायांसोचिलोपेचेत्पादपूरणमितिसुलोपः । गहि गतम् । सवनं सूयतेस्मिन्सोमइत्यधिकरणेल्युट् लितीतिमत्ययात्पूर्वस्योदात्तत्वं ल्युडन्तात्सप्तम्याः सुपांसुपोभवन्तीतिवक्तव्यमितिवचनात् द्वितीया अभिषुतसोमयुक्तमिदंसवनमितिकर्मण्येववाद्वितीया तदाक्षुतशब्दादर्शआदित्वादच् । तृषितः ञितृषापिपासायां निष्ठा निष्ठेतिक्तः प्रत्ययस्वरेणोदात्तः पश्चादिट् आगमाअनुदात्ताइत्यनुदात्तत्वम् ॥ ५ ॥

इतिप्रथमस्यप्रथमेत्रिंशोवर्गः ॥ ३० ॥

सूक्तेषष्ठीमृचमाह—

इमेसोमासइन्दवःसुतासोअधिबर्हिषि । ताँइन्द्रसहसेपिब ॥ ६ ॥

इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि । तान् ।
इन्द्र । सहसे । पिब ॥ ५ ॥

इन्दुशब्दः उन्दीक्लेदनेइतिधातोरुत्पन्नः इन्दवः क्लेदनयुक्ताइमेवेद्यामवस्थिताः सोमासः तत्तत्पात्रगताःसोमाबर्हिषियज्ञे अधिआधिक्येनसुतासः अभिषुताः हेइन्द्र सहसे बलार्थं तान्सोमान् पिब ॥ सोमासः आज्जसेरसुगिति जसोऽसुगागमः । इन्दवः उक्तम् । सुतासः पूर्ववदसुक् संहितायांप्रकृत्यान्तःपादमव्यपरेइतिप्रकृतिभावात्पूर्वत्वंनभवति । बर्हिषि बृंहेर्नलोपश्चेतिइस् प्रत्ययस्वरः । ताँइन्द्रेत्यत्रदीर्घादटिसमानपादेइतिरुत्वं यत्वयलोपौ अनुनासिकः । सहसे षहमर्षणे असुन्नन्तोनित्त्वादाद्युदात्तः ॥ ६ ॥

सप्तमीमृचमाह—

अयंतेस्तोमोअग्रियोहृदिस्पृगस्तुशन्तमः । अथासोमंसुतंपिब ॥ ७ ॥

अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः ।
अथ । सोमम् । सुतम् । पिब ॥ ६ ॥

हेइन्द्रअयमस्माभिःक्रियमाणःस्तोमः स्तोत्रविशेषः अग्रियः श्रेष्ठःसन् तेतव हृदिस्पृक् मनस्यंगीकृतः शन्तमः सुखतमोऽस्तु अथस्तुतेरनन्तरं सुतमभिषुतंसोमंपिब ॥ अग्रियः अग्रादित्यनुवृत्तौ घच्छौचेतिघच् चित्वादन्तोदात्तः । हृदिस्पृशतीतिहृदिस्पृक् स्पृशोनु-

दकेक्किन् तत्पुरुषेकृतिबहुलमित्यलुक् क्किन्प्रत्ययस्यकुरितिशकारस्यकुत्वं कृदुत्तरपदप्रकृतिस्वरत्वम्। शन्तमः सुखकरद्रव्यवचनोऽत्रशम्शब्दः ततस्तमप् अत्रसुखप्रकर्षस्यगुणद्वारागुणनिष्ठद्रव्येसंक्रान्तत्वाद्द्रव्यप्रकर्षइतिनिषेधाभावकिमेत्तिङव्ययेत्यादिनाआम्नभवति द्रव्यस्यस्वतःप्रकर्षाभावात् ईदृगर्थएवहिसनिषेधः। अथासोमं संहितायांनिपातस्यचेतिदीर्घः॥ ७ ॥

अष्टमीमृचमाह—

विश्वमित्सवनंसुतमिन्द्रोमदायगच्छति। वृत्रहासोमपीतये ॥ ८ ॥

विश्वम्। इत्। सवनम्। सुतम्। इन्द्रः। मदाय। गच्छति।
वृत्रऽहा। सोमऽपीतये ॥ ७ ॥

वृत्रहाशत्रुघातकइन्द्रः सोमपीतयेसोमपानायमदायतत्पानजन्यहर्षायच विश्वमित्सर्वमपिसुतमभिषुतसोमयुक्तंसवनं प्रातःसवनादिरूपंकर्मगच्छति ॥ विश्वं अशिप्रुषीत्यादिनाक्कन् निच्वादाद्युदात्तः। सवनं सुतं पूर्ववत्। मदाय मदोनुपसर्गेइत्यप्प्रत्ययः पित्त्वाद्धातुस्वरः। गच्छति इषुगमियमांछः। वृत्रहा वृत्रंहतवान् ब्रह्मभ्रूणवृत्रेषुक्किप् इनहन्पूषन्नित्यादिनानिवृत्तंदीर्घत्वं सौचेतिप्रतिप्रसवाद्भवति कृदुत्तरपदप्रकृतिस्वरत्वम्। सोमपीतये व्यधिकरणबहुव्रीहिरित्युक्तम् तत्पुरुषेवा दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्॥ ८ ॥

नवमीमृचमाह—

सेमन्नःकाममापृणगोभिरश्वैःशतक्रतो। स्तवामत्वास्वाध्यः ॥९॥२१॥

सः। इमम्। नः। कामम्। आ। पृण। गोभिः। अश्वैः।
शतक्रतो इति शतऽक्रतो। स्तवाम। त्वा। सुऽआध्यः ॥ ८ ॥२१॥

हेशतक्रतो सत्वंनोस्मदीयमिमंकामंकाम्यमानंफलंगोभिरश्वैश्चसह आपृणसर्वतःपूरय वयमपिस्वाध्यः सुष्ठुसर्वतोध्यानयुक्ताःसन्तस्त्वात्वांस्तवाम ॥ सेमं संहितायां सोचिलोपेचेत्पादपूरणमितिसुलोपः। कामं कमेर्घञि कर्षात्वतोघञोन्तउदात्तइत्यन्तोदात्तत्वेप्राप्ते वृषादिषुपाठादाद्युदात्तत्वम्। पृण पृणप्रीणने लोटःसेर्हिः तुदादिभ्यःशः तस्यङित्त्वाद्गुणाभावः अतोहेरितिहेर्लुक्। गोभिः सावेकाचइतिप्राप्तंविभक्तेरुदात्तत्वंनगोश्वन्साववर्णेतिप्रतिषिध्यते। अश्वैः क्कन्नित्युक्तं असामर्थ्यान्नपराङ्गवद्भावः। स्तवाम ष्टुञ्स्तुतौ धात्वादेःषःसः लोडुत्तमबहुवचनस्यलो-

दोळङ्विदितिळङ्न्द्रावाद नित्यंङितइतिसकारस्यलोपः आडुत्तमस्यपिच्चेत्याडागमः प्रत्ययस्यपि-त्त्वादनुदात्तत्वं धातुस्वरएव । स्वाध्यः ध्यैचिन्तायां स्वाङोरुपसर्गयोःप्राक्प्रयोगः अन्येभ्योऽपिदृश्यन्तइतिक्विप् दृशिग्रहणस्यविध्यन्तरोपसंग्रहणार्थत्वादत्रसंप्रसारणेसतिपरपूर्वत्वं हल्इति दीर्घः जसिपरनेकाचइतियणादेशः गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं उदात्तयणो-हल्पूर्वादितिजसउदात्तत्वंनभवति तत्रासर्वनामस्थानमित्यनुवृत्तेः अतउदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येतिस्वरितत्वमेवभवति ॥ ९ ॥

इतिप्रथमस्यप्रथमेएकत्रिंशोवर्गः ॥ ३१ ॥

इन्द्रावरुणयोरित्यादिकंनवर्चंसूक्तं अतएवनवशब्दानुवृत्तावनुक्रम्यते–इन्द्रावरुणयोरिन्द्रा-वरुणंयुवाकुपादनिचृताविति अत्रदेवताविस्पष्टा ऋषिच्छन्दसीपूर्ववदनुवर्तेते अयंतुविशेषः युवा-कुहीत्यादिकेद्वेऋचौपादनिचृन्नामकच्छन्दोयुक्ते विनियोगस्तुस्मार्तोलैंगिकोवाकश्चिदवगन्तव्यः।

तस्मिन्सूक्तेप्रथमामृचमाह–

इन्द्रावरुणयोरहंसम्राजोरवआवृणे । तानोमृळातईदृशे ॥ १ ॥

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ।
ता । नः । मृळातः । ईदृशे ॥ १ ॥

अहमनुष्ठातासम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा इन्द्रावरुणयोर्देव-योःसंबन्धि अवोरक्षणंआवृणेसर्वतःप्रार्थये वा तौदेवौ ईदृशेएवंविधेऽस्मदीयवरणेनिमित्तभूतेस-तिमृळातः अस्मान्सुखयतः॥ इन्द्रशब्दोरन्प्रत्ययान्तः वरुणशब्दउनन्प्रत्ययान्तः उभौनित्त्वादा-द्युदात्तौ समासे देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः उभेयुगपदित्यनुवृत्तौदेवताद्वन्द्वेचेतियुगपदुभ-यपदप्रकृतिस्वरत्वम्। सम्राजोः राजृदीप्तौ सत्सूद्विषेत्यादिनाक्विप् समोमोऽनुस्वारइत्यनुस्वारेप्रा-प्ते मोराजिसमःक्वावितिमकारादेशः कृदुत्तरपदप्रकृतिस्वरत्वं कर्तृकर्मणोःकृतीतिकर्तरिषष्ठी। अ-वरक्षणादिषुभावेअसुन् नित्त्वादाद्युदात्तः । ता सुपांसुलुगित्यादिनाद्विवचनस्याडादेशः टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः। मृळातः मृडसुखने प्रार्थनायांलिङर्थेलेट् द्विवचनं तस्य तस् लेटो-डाटावित्याडागमः तुदादिभ्यःशः ङित्त्वाल्लघूपधगुणाभावः । ईदृशे त्यदादिषुदृशोनालोचने-कञ्चेतिइदम्शब्देउपपदेदृशेःकञ् उपपदसमासे इदंकिमोरीश्कीइतीदमईश् शित्वात्सर्वादेशः कञः कित्त्वाद्गुणाभावः ञित्त्वादुत्तरपदस्याद्युदात्तत्वम् उपपदसमासेकृदुत्तरपदप्रकृतिस्वरत्वे-नवदेवशिष्यते ॥ १ ॥

द्वितीयामृचमाह—

गन्तारा॒हि॒स्थोव॑से॒हवं॒विप्र॑स्य॒माव॑तः । ध॒र्तारा॑चर्षणी॒नाम् ॥ २ ॥

गन्तारा॑ । हि । स्थः । अव॑से । हव॑म् । विप्र॑स्य । माऽव॑तः ।
ध॒र्तारा॑ । च॒र्ष॒णी॒नाम् ॥ २ ॥

हेइन्द्रावरुणौ अवसे अवितुमनुष्ठातारं रक्षितुं मावतोमद्विधस्यविप्रस्य ब्राह्मणर्त्विजो-हवमाह्वानंगन्तारौस्थोहि प्राप्तशीलौभवथःखलु कीदृशौ चर्षणीनांमनुष्याणांधर्तारौ योग-क्षेमसंपादनेनधारयितारौ ॥ गन्तारा गमेस्ताच्छील्येतृन् द्विवचनस्यसुपांसुलुगित्यादिनाआ-कारादेशः ऋदृशोऽङिगुणः अप्तृन्नित्यादिनोपधादीर्घत्वं तृनोनित्त्वादाद्युदात्तत्वम् । स्थः अस् भुवि लङ्मध्यमपुरुषद्विवचनंथस् अदिप्रभृतिभ्यःशपइतिशपोलुक् हिचेतिनिघातप्रतिषेधः।अव-से अवरक्षणे तुमर्थेसेसेनित्यसेन् नित्त्वादाद्युदात्तः । हवं ह्वेञोबहुलंछन्दसीत्यनैमित्तिकेसंप्र-सारणेपरपूर्वत्वेच ऋदोरबित्यप् गुणावादेशौ अपःपित्त्वादनुदात्तत्वं धातुस्वरएव । विप्रस्य टुव-पूबीजसंताने अस्यऋज्रेन्द्रेत्यादिनारन्निपातितोनित्त्वादाद्युदात्तः । मावतः वतुप्प्रकरणे यु-ष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानं वतुप् प्रत्ययोत्तरपदयोरस्मदोमपर्यन्तस्यमादेशः आसर्व-नाम्नइतिदकारस्यआकारः सवर्णदीर्घः मतुपःपित्त्वादनुदात्तत्वम् प्रातिपदिकान्तोदात्तत्वे सएवशिष्यते । धर्तारा धृञ्धारणे ण्वुल्तृचावितितृच् एकाचउपदेशेऽनुदात्तादितीट्प्रतिषेधः गुणोरपर-त्वं अप्तृन्नित्यादिनाउपधादीर्घः सुपांसुलुगित्याकारः तृचश्चित्त्वादन्तोदात्तत्वम् । चर्षणीनां कृषेरादेश्चचइतिअनिप्रत्ययः तत्सन्नियोगेनककारस्यचकारः प्रत्ययाद्युदात्तत्वंबाधित्वा छा-न्दसमन्तोदात्तत्वम् अतएवनामन्यतरस्यामितिविभक्तेरुदात्तत्वम् तर्हि मतुपि मोह्रस्वान्तः अन्तोदात्तःस्वउत्तरस्यनाम्नउदात्तत्वमितिव्याख्यातम्॥ २ ॥

तृतीयामृचमाह—

अ॒नु॒का॒मंत॑र्पयेथा॒मिन्द्रा॑वरुण॒रा॒यआ । तावां॒नेदि॑ष्ठमीमहे ॥ ३ ॥

अ॒नु॒ऽका॒मम् । त॒र्प॒ये॒था॒म् । इन्द्रा॑वरुणा । रा॒यः । आ । ता ।
वा॒म् । नेदि॑ष्ठम् । ई॒म॒हे॒ ॥ ३ ॥

इन्द्रावरुणा हेइन्द्रावरुणौ अनुकामं अस्मदीयाभिलाषमनुरायोधनस्यप्रदानेन आतर्प-येथां सर्वतोस्मांस्तृप्तान्कुरुतं वयंयदायदाधनंकामयामहेतदातदाप्रयच्छतमित्यर्थः ता वां

पूर्वपदस्यानङ् आमन्त्रितायुदात्तत्वम् संहितायांछान्दसंह्रस्वत्वम्। हुवे ह्वयतेर्लट्उत्तमैकवचनं इट् शपइत्यनुवृत्तौबहुलंछन्दसीतिलुक् ह्वइत्यनुवृत्तौबहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं अचिश्नुधात्वित्यादिनाउवङ् नचहुश्नुवोरित्यादिनायणादेशः जुहोतेरेवहिमतिपदोकस्यतदत्रपुनरस्य लाक्षणिकत्वात् इटःप्रत्ययस्वरेणोदात्तत्वं पादादित्वान्ननिघातः। रावसे असुन् नित्त्वादाद्युदात्तत्वम्।अस्मान् शसि द्वितीयायांचेत्यात्वम् शसोनइतिनत्वम्। जिग्युपः जिजये लिटःक्वसुश्चेति क्वसुः द्विर्भावः सन्लिटोर्जेरितिद्वितीयस्यकुत्वं क्वसोःकित्त्वाद्गुणाभावः क्रादिनियमात्प्राप्तस्येटोवस्वेकाजाद्घसामितिनियमेननिवृत्तिः द्वितीयाबहुवचनंशस् भसंज्ञायां वसोःसंप्रसारणमिति संप्रसारणंपरपूर्वत्वं एरनेकाचइतियणादेशः शासिवसिघसीनांचेतिपत्वं प्रत्ययस्वरेणउकार उदात्तः। कृतं कृञ्करणे लोण्मध्यमद्विवचनस्य लङ्वद्भावात्तमादेशः शपोबहुलंछन्दसीतिलुक् तिङ्ङतिङइतिनिघातः॥ ७॥

अष्टमीमृचमाह—

इन्द्रा॑वरुणनूनुवा॑सिषा॑सन्ती॒षुधी॒ष्वा। अ॒स्मभ्यं॒शर्म॑यच्छतम्॥ ८॥

इन्द्रा॑वरुणा। नु। नु। वा॒म्। सिसा॑सन्तीषु। धी॒षु। आ। अ॒स्मभ्य॑म्। शर्म॑। य॒च्छ॒त॒म्॥ ८॥

इन्द्रावरुणा हेइन्द्रावरुणौ धीष्वस्मदीयबुद्धिषुवां युवां सिषासन्तीषु सनितुं संभक्तुं सम्यक् सेवितुमिच्छन्तीषुतदानीमासमन्तादस्मभ्यं शर्मसुखं नूनु अतिशयेनक्षिप्रंयच्छतंदत्तं षड्विंशतिसंख्याकेषुक्षिप्रनामसु नुमक्षितिपठितम् तस्यद्विरावृत्त्यबलात् अतिशयोलक्ष्यते॥इन्द्रावरुणा उक्तम्। नूनु ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामिति पूर्वस्यदीर्घत्वम्। सिषासन्तीषु षनषणसंभक्तौ धात्वादेःषःसः इच्छायांसन् द्विर्भावोहलादिशेषः सन्यतइतीत्वं आदेशप्रत्यययोरितिषत्वं सनीवन्तेत्यादिनाविकल्पादिडभावः जनसनखनांसञ्झलोरितिनकारस्यआकारः उपरिलटः शतृ कर्तरिशप् उगितश्चेतिङीप् शप्श्यनोर्नित्यमितिनुम् ङीपःशपश्चपित्त्वाच्छतुश्चलसार्वधातुकत्वेनचानुदात्तत्वम् सनोनित्त्वादाद्युदात्तत्वम् तदेवशिष्यते। धीषु सावेकाचइतिविभक्तेरुदात्तत्वम्। अस्मभ्यं अस्मान्यममतिप्कृतइत्यत्रोक्तम्। यच्छतं दाणदाने शपि पाघ्रेत्यादिनायच्छादेशः ॥ ८ ॥

नवमीमृचमाह—

प्रवा॑मश्नोतुसुष्टु॒तिरिन्द्रा॑वरुण॒यांहु॒वे। याम॒धाथे॑स॒धस्तु॑तिम्॥९॥२३॥

प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे । याम् । ऋधाथे इति । सधऽस्तुतिम् ॥ ९ ॥ ३३ ॥

इन्द्रावरुणा हेइन्द्रावरुणौ यामस्मत्कर्तृकांशोभनस्तुतिंमतिहुवेयुवामुभावाह्वयामि किञ्च सधस्तुतिं युवयोरुभयोःसाहित्येनक्रियमाणयास्तवक्रियययायुक्तां यां सुष्टुतिं प्रतिलभ्य ऋधाथे युवांवर्धाथे तादृशीसुष्टुतिः शोभनस्तुतिहेतुभूतऋक्समूहोवामश्नोतु युवां व्याप्नोतु ॥ अश्नोतु अशूव्याप्तौ लोटोव्यत्ययेनविप् स्वादिभ्यःश्नुः । सुष्टुतिः नविंधेअस्यसुष्टुतिमित्यत्रोक्तम् । इन्द्रावरुणाहुवेउक्ते अत्रतु यच्छब्दयोगादनिघातः । ऋधाथे ऋधुवृद्धौ लट् व्यत्ययेनात्मनेपदम मध्यमद्विवचनेश्नोर्बहुलंछन्दसीतिलुक् प्रत्ययस्वरेणआकारउदात्तः यच्छब्दयोगान्ननिघातः । सधस्तुतिं सहस्तुतिर्यस्यांसुष्टुतौसासधस्तुतिः अत्रसुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्यस्तूयतेअनयेतिकरणसाधनत्वेनऋक्परत्वे अयंस्तुतिशब्दोभावसाधनतयास्तवनक्रियापरः तस्मिन्भावसाधनत्वेनक्रियापरे अयंकरणसाधनतयाऋक्परइतिसमस्यमानपदार्थान्यः सहेत्यत्रहकारस्यव्यत्ययेनधकारः सहशब्दएवमादित्वादन्तोदात्तः बहुव्रीहित्वेनपूर्वपदप्रकृतिस्वरत्वम् ॥ ९ ॥

॥इतिप्रथमस्यप्रथमेत्रयस्त्रिंशोवर्गः॥ ३३ ॥

इतिचतुर्थोनुवाकः ॥ ४ ॥

सोमानमित्यादिषट्सूक्तात्मकेपञ्चमानुवाकेसोमानमित्यादिकंनवर्चंसूक्तम् ऋषिच्छन्दसी पूर्ववत् देवताविशेषस्त्वेवमनुक्रम्यते सोमानमितिपञ्चब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्चसोमश्च पञ्चम्यांदक्षिणाचान्त्याःसादसस्पत्यानाराशंसीवान्त्येति सूक्तगताआद्याःपञ्चर्चोब्रह्मणस्पतिदेवताकाः तासांमध्येसघावीरइत्येतस्याश्चतुर्थ्याऋचोब्रह्मणस्पतिरिन्द्रश्चसोमश्चेतितिस्रोदेवताः त्वन्तमित्येतस्याःपञ्चम्यादक्षिणयासहपूर्वोक्तास्तिस्रोदेवताः षष्ठीमारभ्यतिसृणांसदसस्पतिर्देवता नराशंसमित्येतस्यानवम्याःसदसस्पतिर्नराशंसोवाविकल्प्यते विनियोगस्तुपूर्ववत् ॥

तस्मिन्सूक्तेप्रथमामृचमाह—

सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवन्तंयऔशिजः ॥ १ ॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ॥ १ ॥

हेब्रह्मणस्पते एतन्नामकदेव सोमानमभिषवस्यकर्तारंमांअनुष्ठातारंस्वरणंदेवेषुप्रकाशनवन्तं कृणुहि कुरु अत्रदृष्टान्तः—कक्षीवन्तंएतन्नामकमृषिं इवशब्दोऽत्राध्याहर्तव्यः कक्षीवान्यथादेवेषुप्रसिद्धः तद्वदित्यर्थः यःकक्षीवानृषिरौशिजःउशिजःपुत्रःतमिवेतिपूर्वत्रयोजना कक्षीवतोनुष्ठातृप्रमुनिषुप्रसिद्धिःतैत्तिरीयैराम्नायते—एतंवैपरआट्णारःकक्षीवाँऔशिजोवीतहव्यः श्रायसस्त्रसदस्युःपौरुकुत्स्यःप्रजाकामाअचिन्वतेति[1] । ऋगन्तरेऽप्यृषिलकथनेनुष्ठातृप्रसिद्धिः सूच्यते—अहंकक्षीवाँऋषिरस्मिविप्रईति[2] । तस्मादस्यानुष्ठातारंप्रतिदृष्टान्तत्वंयुक्तं सोयंमन्त्रोयास्केनैवंव्याख्यातः—सोमानंसोतारंप्रकाशनवन्तंकुरुब्रह्मणस्पतेकक्षीवन्तमिवयऔशिजःकक्षीवान्कक्ष्यावानौशिजउशिजःपुत्रउशिग्वष्टेःकान्तिकर्मणोपित्वयंमनुष्यकक्षएवाभिप्रेतःस्यात्तंसोमानंसोतारंमाप्रकाशनवन्तंकुरुब्रह्मणस्पतइति[3] । अस्मिन्मन्त्रेसोमानमितिपदेनब्रह्मणइतिपदेनसूचितंतात्पर्यं तैत्तिरीयाआमनन्ति—सोमानंस्वरणमित्याह सोमपीथमेवावरुन्धे कृणुहिब्रह्मणस्पतइत्याह ब्रह्मवर्चसमेवावरुन्धइति[4] ॥ सोमानं सुनोतीति पुञ्अभिषवे अन्येभ्योऽपिदृश्यन्तइति मनिन् दृशिग्रहणस्यविध्यन्तरोपसंग्रहणार्थत्वान्नित्त्वेऽपिनाद्युदात्तत्वं किंतुप्रत्ययस्वरएव उञ्छादिषुवासोमन्शब्दोद्रष्टव्यः बहुलग्रहणादौणादिकोवामनिर्द्रष्टव्यः । स्वरणं प्रख्यातं स्वृशब्दोपतापयोः कृत्यल्युटोबहुलमितिकर्मणिल्युट् लितीत्यकारउदात्तः । कृणुहि कृविर्हिंसाकरणयोश्च इदितोनुम्धातोरितिनुम् लोटःसिपोहिःशपिप्राप्तेधिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्यचाकारः तस्यातोलोपइतिलोपः तस्यस्थानिवद्भावान्नपूर्वस्यलघूपधगुणः हेर्ङित्वादुकारस्यनगुणः उतश्चप्रत्ययाच्छन्दोवावचनमितिहेर्नलुक् सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिवचनाद्धेरेवप्रत्ययस्वरेणोदात्तत्वम् पादादित्वान्ननिघातः । ब्रह्मणः षष्ठ्याःपतिपुत्रेत्यादिनासंहितायांविसर्जनीयस्यसकारः सुबामन्त्रितपराङ्गवद्भावात्पदद्वयस्यामन्त्रितनिघातः । कक्षीवन्तं कक्षेभवाकक्ष्या अश्वोदरसंबन्धिनीरज्जुः भवेछन्दसीतियत्प्रत्ययः साअस्यास्तीत्यर्थेआसंदीवदष्ठीवच्चक्रीवत्कक्षीवदितिऋषिविशेषनामकक्षीवच्छब्दोनिपातितः छन्दसीरइतिवत्वं यप्रत्ययस्वरेणतदादेशोनिपातितईकारउदात्तः मतुप्सुपौपित्त्वादनुदात्तौ । औशिजः वशकान्तौ इजीत्यनुवृत्तौ वशेःकिच्चेतिइजिप्रत्ययः तस्यकित्त्वाद्ग्रहिज्येत्यादिनासंप्रसारणं परपूर्वत्वेगुणाभावः सतस्यापत्यमितिप्राग्दीव्यतोऽण् आदिवृद्धिः प्रत्ययस्वरेणान्तोदात्तत्वम् ॥१॥

द्वितीयामृचमाह—

**योरे॒वान्यो अ॑मीव॒हा व॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥ २ ॥**

---

१ तै०सं. ५. ६. ५. । २ ऋ० ३. ६. १५. । ३ नि० ६. १०. । ४ तै० सं. १. ५. ७. ।

यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः ।
सः । नः । सिसक्तु । यः । तुरः ॥ २ ॥

योब्रह्मणस्पतिः रेवान्धनवान्यश्चामीवहारोगाणांहन्ता वसुविद्धनस्यलब्धा पुष्टिवर्धनः पुष्टेर्वर्धयिता यश्चतुरःत्वरोपेतः शीघ्रफलदः सब्रह्मणस्पतिर्नोऽस्मान् सिषक्तुसेवतां परिगृह्यानुगृह्णात्वित्यर्थः अत्रसिषक्तुशब्दस्यसेवार्थत्वंयास्कआह—सिषक्तुसचतइतिसेवमानस्येति । प्रत्यायकौशब्दावितिशेषः ॥ रेवान् रयिरस्यास्तीतिमतुप् रयेर्मतौबहुलमितियकारस्यसंप्रसारणं परपूर्वत्वं छन्दसीरइतिवत्वं आद्गुणः ननुवत्वस्यासिद्धत्वाद्बहिरङ्गत्वाच्चप्रागेवगुणेकृते इवर्णाभावान्नवत्वं नचान्तादिवच्चेत्यादिवद्भावेनइवर्णसंपादनम् वर्णाश्रयविधौतत्प्रतिषेधात् अन्यथाखट्वाभिरित्यत्रसवर्णदीर्घस्यान्तवद्भावेनअकारत्वादतोभिसऐसित्यैसादेशःस्यात् नचनिरवकाशत्वेनवत्वस्यानवकाशत्वम् अग्निवान्वेदर्भस्तंबैः । उपब्रह्माणिहरिवइत्यादाववकाशलाभात् सत्यं अत्रगुणप्रवृत्तेः प्रागिकारात्परोमतुप्कदाचिदिवर्णात्परस्यमतुपःपश्चादेकादेशेनइवर्णाभावेऽपिभवतिवत्वमितिछन्दसीरइतिसूत्रकृताविवक्षितम् अमुनैवाभिप्रायेण हरिवइत्यादिकमुदाहृत्यापि अन्तेवृत्तिकृताआरेवानित्यप्युदाहृतम् ह्रस्वनुड्भ्यामित्यत्रआरेशब्दान्मतुपइत्युदात्तत्वंवक्तव्यमित्यत्रारेशब्दोरेशब्दस्याप्युपलक्षणम् अतएवहि रेवाँइन्द्रेत्यादौमतुपउदात्तत्वंदृष्टम् अथवाह्रस्वनुड्भ्यामित्यत्रापिकदाचिद्ध्रस्वात्परस्यमतुपउदात्तत्वमित्येवव्याख्येयं एवं चसंप्रसारणपरपूर्वत्वयोःकृतयोर्गुणात्प्राक्ह्रस्वात्परोमतुबितिरेवानारेवानित्यादौसर्वत्रोदात्तत्वंसिध्यति अयमेवसूत्रकृतोभिप्रायोवार्तिककृताव्याख्यातइति । अमीवहा अमरोगइत्येतस्माद्वन्प्रत्ययेनअमीवशब्दोनिपातितः तंहन्तीतिबहुलंछन्दसीतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । वसुवित् वसुविन्दतीतिवसुवित् क्विप्चेतिक्विप् उत्तरपदप्रकृतिस्वरत्वम् । पुष्टिवर्धनः वर्धयतेर्नन्द्यादित्वाल्ल्युः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वं पुष्टेर्वर्धनइतिकर्मणिषष्ठ्यासमासः कृदुत्तरपदप्रकृतिस्वरत्वम् । सिषक्तु षचसमवाये लोटि बहुलंछन्दसीतिशपःश्लुः श्लाविति द्वित्वे हलादिशेषेच बहुलंछन्दसीत्यभ्यासाकारस्यइकारः । तुरः तुरत्वरणे इगुपधज्ञाप्रीकिरःकः प्रत्ययस्वरः ॥२॥

तृतीयामृचमाह—

मा नः॒ शंसो॒ अर॑रुषो धू॒र्तिः प्रण॒ङ्मर्त्य॑स्य । रक्षा॑ णो ब्रह्मणस्पते ॥ ३ ॥

मा । नः॒ । शंसः॑ । अर॑रुषः । धू॒र्तिः । प्रणक् । मर्त्य॑स्य । रक्ष॑ ।
नः॒ । ब्र॒ह्म॒णः॒ । प॒ते॒ ॥ ३ ॥

१ नि० ३. २१. । २ तै० ब्रा० २. २. १. । ३ ऋ० सं० १. १. ५. । ४ तै० सं० २. २. १२. ।

अररुषोमर्त्यस्यउपद्रवंकर्तुमस्मत्समीपंप्राप्तस्यशत्रुरूपस्यमनुष्यस्यधूर्तिःहिंसकःशंसः शंसनमधिक्षेपइत्यर्थः तादृशोवाग्विशेषोनोस्मान्माप्रणक्मासंपृणक्तु शत्रुणाप्रयुक्तोविक्षेपः कदाचिदस्मान्माप्राप्नोत्वित्यर्थः तदर्थंहेब्रह्मणस्पते नोऽस्मान् रक्षपालय ॥ मा निघातः । शंसनंशंसः भावेघञ् ञित्त्वादाद्युदात्तः । अररुषः अर्तेररुरित्यन्तर्भावितण्यर्थात् ऋगतावित्यस्मादरुस् गुणोरपरत्वं प्रत्ययस्वरेप्राप्ते वृषादित्वादाद्युदात्तः । धूर्तिः धुर्वीहिंसायां क्तिच्क्तौचसंज्ञायामितिक्तिच् तितुत्रतथसिसुसरकसेषुचेतीट्प्रतिषेधः उपधायाश्चेत्युपधादीर्घत्वं वलिलोपंबाधित्वाऽठिप्राप्ते राल्लोपइतिवकारलोपः । प्रणक् पृचीसंपर्के लङस्तिप् इतश्चेतीकारलोपः हल्ङ्यादिलोपः कुत्वं रुधादिभ्यःश्नम् तस्यव्यत्ययोबहुलमित्यडागमः यणादेशः अकारस्यागमानुदात्तत्वंबाधित्वा व्यत्ययेनउदात्तत्वम् चादिलोपेविभाषेतिनिघाताभावः । मर्त्यस्य मृङ्प्राणत्यागे असिदसिभ्यइत्यादिनाऔणादिकस्तन्प्रत्ययः मर्तेषु भवइत्यर्थेभवेछन्दसि इतियत् यतोनावइत्याद्युदात्तत्वम् । रक्ष रक्षपालने शपःपित्त्वादनुदात्तत्वं धातुस्वरएवशिष्यते पादादित्वान्ननिघातः । रक्षाणः द्यचोतस्तिङइतिदीर्घः उपसर्गाद्बहुलमितिबहुलग्रहणात् अनुपसर्गादपिनसोणत्वम् । ब्रह्मणस्पते षष्ठ्याःपतिपुत्रेतिसंहितायांविसर्गस्यसकारः सुबामन्त्रितपराङ्गवद्भावात्पदद्वयस्यामन्त्रितनिघातः ॥ ३ ॥

चतुर्थीमृचमाह—

सघावीरोनरिष्यतियमिन्द्रोब्रह्मणस्पतिः । सोमोहिनोतिमर्त्यम् ॥४॥

सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः ।
सोमः । हिनोति । मर्त्यम् ॥ ४ ॥

इन्द्रोदेवोयंमर्त्यंयक्ष्यमाणंहिनोतिप्राप्नोतिवर्धयतिवा तथाब्रह्मणस्पतिर्देवोहिनोतितथासोमोहिनोति सघ सएवयजमानःवीरोवीर्ययुक्तःसन् नरिष्यति नविनश्यति ॥ घ चादिरनुदात्तः संहितायां ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । ब्रह्मणस्पतिः उक्तम् । हिनोति हिगतौवृद्धौच स्वादिभ्यःश्नुः तिपःपित्त्वात्श्नुप्रत्ययस्वरएवशिष्यते ॥ ४ ॥

पञ्चमीमृचमाह—

त्वंतंब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् । दक्षिणापात्वंहसः ॥ ५ ॥ ३४ ॥

णिनैः रैःप्रशस्योभवतीति । अत्राग्निवत्सदसस्पतेरपिनरैःशस्यमानत्वान्नराशंसत्वं एतमेवाभिप्रायंहृदिनिधायब्राह्मणमेवमाम्नायते—प्रजावैनरोवाक्शंसइति । अतोमनुष्यैःशस्यमानोयःसदसस्पतिर्योवानराशंसनामकोदेवः तमपश्यंशास्त्रदृष्ट्यादृष्टवानस्मि कीदृशंसुधृष्टमंअत्याधिक्येनधार्ष्ट्ययुक्तंसप्रथस्तमं अतिशयेनप्रख्यातंसद्मम खसंप्राप्ततेजस्कं तत्रदृष्टान्तः—दिवोन द्युलोकानिव आदित्यचन्द्रादिभिरधिष्ठितद्युलोकविशेषायथातेजस्विनः तद्वदयंनराशंसःतेजस्वीत्यर्थः । सुधृष्टमं शोभनंधृष्णोतीतिसुधृक् क्विप्चेतिक्विप् अतिशायनिकस्तमप् पकारस्यजश्त्वाभावश्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वेनऋकारउदात्तः । अपश्यं पाघ्राध्मेत्यादिनापश्यादेशः लुङ्लङ्लृङ्क्ष्वडुदात्तइत्यटउदात्तत्वम् पादादित्वादनिघातः । सप्रथस्तमं प्रथप्रख्याने प्रथनंप्रथः सर्वधातुभ्योसुन् नित्त्वादाद्युदात्तत्वं सहप्रथसावर्ततइति तेनसहेतितुल्ययोगेइतिबहुव्रीहिसमासः वोपसर्जनस्येतिसादेशः पूर्वपदप्रकृतिस्वरत्वेप्राप्ते परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम् ॥ दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । सद्ममखसं सीदतीतिसद्म षद्लृविशरणादौ अन्येभ्योऽपिदृश्यन्तइतिमनिन् नित्त्वादाद्युदात्तः सद्ममहोयस्येतिबहुव्रीहौहकारस्यव्यत्ययेनखकारः ॥ ९ ॥

इतिप्रथमस्यप्रथमेपञ्चत्रिंशोवर्गः ॥ ३५ ॥

प्रतित्यमितिनवर्चंसूक्तं ऋषिश्छन्दसीपूर्ववत् देवतात्वनुक्रम्यते—प्रतित्यमाग्निमारुतमिति कारीरीष्टौप्रतित्यमेषाधाय्या तथाचसूत्रितम्—वर्षकामेष्टिःकारीरीतस्यां प्रतित्यंचारुमध्वरमीळे अग्निस्वयसंनमोभिरितिधाय्येइति ।

तामेतांसूक्तगतांप्रथमामृचमाह—

प्रति॒त्यंचारु॑मध्व॒रंगो॑पी॒थाय॒प्रहू॑यसे । म॒रुद्भि॑रग्न॒आग॑हि ॥ १ ॥

प्रति॑ । त्यम् । चारु॑म् । अ॒ध्व॒रम् । गो॒ऽपी॒थाय॑ । प्र । हू॒य॒से ।
म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ १ ॥

त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः हेअग्ने योयज्ञः चारुःवैकल्यरहितः तं तथाविधं चारुमध्वरंप्रतिलक्ष्य गोपीथायसोमपानायप्रहूयसे प्रकर्षेणत्वंहूयसे तस्मादस्मिन्नध्वरे त्वं मरुद्भिः देवविशेषैःसहआगहि आगच्छ सेयमृक् यास्केनैवंव्याख्याता—तंप्रतिचारुमध्वरंगो-

मपांनायमहूयसेसोमेमरुद्भिःसहागच्छेति॥ प्रति निपातआद्युदात्तः। त्यं त्यदादीनामः प्रातिपदिकस्वरः। चारुं दृसनिजनिचरीत्यादिनाञ्युण् अतउपधायाइतिवृद्धिः ञित्वादाद्युदात्तः। गोपीथाय निशीथगोपीथावगथाइतिथक्प्रत्ययान्तोनिपातितः। प्र निपातस्वरः॥ १॥

द्वितीयामृचमाह—

नहिदेवोनमर्त्योमहस्तवक्रतुंपरः। मरुद्भिरग्नआगहि॥ २॥

नहि। देवः। न। मर्त्यः। महः। तव। क्रतुम्। परः। मरुत्ऽभिः। अग्ने। आ। गहि॥ २॥

हे अग्ने महोमहतस्तवसंबन्धिक्रतुं कर्मविशेषमुल्लंघ्य परोनहि उत्कृष्टोदेवोनभवति खलु तथा मर्त्योमनुष्यश्चपरोनभवति येमनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति येच देवास्त्वदीयेकर्ताविज्यन्तेतएवोत्कृष्टाइत्यर्थः मरुद्भिरित्यादिपूर्ववत्। नहि एवमादीनामित्यन्तोदात्तः। देवः पचाद्यजन्तश्चित्त्वादन्तोदात्तः। महः महतस्तलोपश्छान्दसः बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वम्। तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम्। क्रतुं कृञःकतुः प्रत्ययाद्युदात्तत्वं गहि गम्लृसृप्लृगतौ लोटःसेर्हिः बहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनाअनुनासिकलोपः तस्यासिद्धवदत्राभादित्यसिद्धत्वादतोहेरितिलुङ्नभवति निघातः॥ २॥

तृतीयामृचमाह—

येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः। मरुद्भिरग्नआगहि॥ ३॥

ये। महः। रजसः। विदुः। विश्वे। देवासः। अद्रुहः। मरुत्ऽभिः। अग्ने। आ। गहि॥ ३॥

हे अग्ने येमरुतोमहोरजसोमहत्त्वं उदकस्यवर्षणप्रकारं विदुः तैर्मरुद्भिरित्यन्वयः कीदृशामरुतः विश्वे सर्वे सप्तविधगणोपेताः। सप्तगणावैमरुतइतिश्रुतेः। देवासोद्योतमानाः अद्रुहोद्रोहरहिताः वर्षणेनसर्वभूतोपकारित्वात् तथाचोपरिष्टादाम्नायते—उदीरयथामरुतःसमुद्रतोयूयंवृष्टिंवर्षयथापुरीषिणइति। शाखान्तरेपि मन्त्रान्तरस्यब्राह्मणमेवमाम्नायते—मरुतांपृषतयःस्थेत्याह। मरुतोवैवृष्ट्याईशतइति। रजःशब्दोयास्केनबहुधाव्याख्यातः—रजोरजतेर्ज्यो-

१ तै०सं. २. २. ५. । २ ऋ०सं. ४. २. १७. । ३ तै०ब्रा० ३. ३. ९. । ४ नि०.१९.।

तीरजउच्यतउदकंरजउच्यतेलोकारजांस्युच्यन्तेसृगहनीरजसीउच्येतेइति ॥ रजसः नविषयस्यानिसन्तस्येत्याद्युदात्तः विदुः विदज्ञाने विदोलटोवेतिझेर्जुसादेशः प्रत्ययस्वरः यद्वृत्तयोगान्निघाताभावः । विश्वे । विशेःक्वन्नन्तस्य नित्वादाद्युदात्तत्वम् । देवासः आज्जसेरसुक् देवशब्दःपचाद्यजन्तः चित्त्वादन्तोदात्तः । अद्रुहः संपदादित्वाद्भावेक्किपिसति बहुव्रीहौ नञ्सुभ्यामित्यन्तोदात्तत्वम् कर्तरिवाक्विप् तत्पुरुषेहिअव्ययपूर्वपदप्रकृतिस्वरत्वंस्यात् नचकृदुत्तरपदप्रकृतिस्वरत्वं यतोनञ् नगतिर्नचकारकइति ॥ ३ ॥

चतुर्थीमृचमाह—

यउ॒ग्रा अ॒र्कमा॑नृ॒चुरना॑धृष्टास॒ ओज॑सा । म॒रुद्भि॑रग्न॒ आग॑हि ॥४ ॥

ये । उ॒ग्राः । अ॒र्कम् । आ॒नृ॒चुः । अना॑धृष्टासः । ओज॑सा ।
म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ ४ ॥

ये मरुतः उग्रांस्तीव्राःसन्तः अर्कमुदकं आनृचुः अर्चितवन्तः वर्षणेन संपादितवन्तइत्यर्थः तैर्मरुद्भिरित्यन्वयः कीदृशामरुतः ओजसाबलेन अनाधृष्टासः अतिरस्कृताः सर्वेभ्योऽपिप्रबलाइत्यर्थः अर्कशब्दस्योदकवाचित्वंवाजसनेयिनआमनन्ति—आपोवाअर्कइति तन्निर्वचनंचतएवामनन्ति—सोर्चन्नचरत्तस्यार्चतआपोजायन्तार्चतेवैमेकमभूदितितदेवार्कस्यार्कत्वमिति । सजगत्स्रष्टा हिरण्यगर्भउदकंस्रष्टुमुद्युक्तअर्चन् उदकसत्यसंकल्पत्वमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत् तथा पूजयतोहिरण्यगर्भस्यसकाशादुदकमुत्पन्नं तदानीमर्चतोमत्तः कमभूदित्यवोचत् तेनोदकस्यार्कनामनिष्पन्नमित्यर्थः । आनृचुः अर्चतेरपस्पृधेथामित्यादिनानिपातितः प्रत्ययस्वरः यद्वृत्तयोगान्ननिघातः । अनाधृष्टासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ओजसा उब्जेर्बलेबलोपश्चेत्यसुन् नित्वादाद्युदात्तः ॥ ४ ॥

पञ्चमीमृचमाह—

येशु॒भ्रा घो॒रव॑र्पसः सुक्ष॒त्रासो॑ रि॒शाद॑सः । म॒रुद्भि॑रग्न॒ आग॑हि ॥ ५॥ ३६॥

ये । शु॒भ्राः । घो॒रऽव॑र्पसः । सु॒ऽक्ष॒त्रासः॑ । रि॒शाद॑सः । म॒रुत्ऽभिः॑ ।
अ॒ग्ने॒ । आ । ग॒हि॒ ॥ ५ ॥ ३६ ॥

१ उपग्रग्दोरवप्रत्ययान्तः ऋक्षेन्द्रेतिसूत्रेण तत्रहिछन्दस्यानुरोधेनरन्प्रत्ययान्तारवप्रत्ययान्ताश्चनिपातिताः । २ अकारस्यस्थानेऋकारोनिपात्यते. ।

येमरुतः शुभ्रत्वादिगुणोपेताः तैर्मरुद्भिरित्यन्वयः शुभ्राः शोभनाः घोरवर्पसःउग्ररूपधराः सुक्षत्रासः शोभनधनोपेताः रिशादसः हिंसकानांभक्षकाः मघमित्यादिष्वष्टाविंशतिसंख्याकेषुधननामसुक्षत्रंभगइतिपठितम् ॥ शुभ्राः स्फायितञ्चीत्यादिनाशुभेरौणादिकोरक् प्रत्ययस्वरः । घोरवर्पसः घोरंवर्पोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सुक्षत्रासः बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं आद्युदात्तंद्व्यच्छन्दसीत्येवतुनभवति क्षत्रशब्दस्यान्तोदात्तत्वात् रिशंतिहिंसन्तीतिरिशाः तानदन्तीतिरिशादसः सर्वधातुभ्योसुन्प्रत्ययः नित्स्वरेणउत्तरपदमाद्युदात्तं कृदुत्तरपदप्रकृतिस्वरेणसएवशिष्यते ॥ ५ ॥

इतिप्रथमस्यप्रथमेषट्त्रिंशोवर्गः ॥ ३६ ॥

सूक्तेषष्ठीमृचमाह—

**येनाकस्याधिरोचनेदिविदेवासआसते । मरुद्भिरग्नआगहि ॥ ६ ॥**

**ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ।**

**मरुत्ऽभिः । अग्ने । आ । गहि ॥ ६ ॥**

येमरुतोनाकस्याधि दुःखरहितस्यसूर्यस्योपरि दिवियुलोके रोचने दीप्यमाने येदेवासः स्वयमपिदीप्यमानाआसते तैर्मरुद्भिरित्यन्वयः ॥ नाकस्य कंसुखंतद्यस्मिन्नास्ति असावकइतिबहुव्रीहिंकृत्वा पश्चान्नञ् नअकोनाकइतिनञ्तत्पुरुषः नलोपोनञइतिनलोपोनभवति नभ्राण्नपादित्यादिनाप्रकृतिभावात् तत्पुरुषेतुल्यार्थेत्यादिनाअव्ययपूर्वपदप्रकृतिस्वरत्वेनउदात्तत्वं प्रथमंतत्पुरुषंकृत्वा पश्चाद्बहुव्रीहौउत्तरपदान्तोदात्तत्वंस्यात् । अधिशब्दउपर्यर्थे उपसर्गप्रतिरूपकोनिपातः । रोचने रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् चितइत्यन्तोदात्तत्वम् । दिवि ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । देवासः आज्जसेरसुगित्यसुक् । आसते आसउपवेशने अनुदात्तेत्त्वादात्मनेपदं झस्यअदादेशः अदिप्रभृतिभ्यःशपइतिशपोलुक् अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम् यद्वृत्तयोगान्ननिघातः ॥ ६ ॥

सप्तमीमृचमाह—

**यईङ्खयन्तिपर्वतान्तिरःसमुद्रमर्णवम् । मरुद्भिरग्नआगहि ॥ ७ ॥**

**ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ।**

**मरुत्ऽभिः । अग्ने । आ । गहि ॥ ७ ॥**

येमरुतः पर्वतान्मेघानीङ्खयन्तिचालयन्ति तथा अर्णवंउदकयुक्तंसमुद्रं तिरस्कुर्वन्तीति शेषः निश्चलस्यजलस्यतरंगाद्युत्पत्तयेचाळनंतिरस्कारः तैर्मरुद्भिरित्यन्वयः ॥ ईङ्खयन्ति

उखणखेत्यादावीखिर्गत्यर्थः हेतुमतिचेतिणिच् इदितोनुम्धातोरितिनुम् णिजन्तधातोश्चित-इत्यन्तोदात्तत्वम् शपःपित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते । पर्व-तान् पुर्वपर्वमर्वपूरणे औणादिकोतच् प्रत्ययस्वरः ॥ ७ ॥

अष्टमीमृचमाह–

आयेतन्वन्तिरश्मिभिस्तिरःसमुद्रमोजसा । मरुद्भिरग्नआगहि ॥ ८ ॥

आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥ ८ ॥

येमरुतोरश्मिभिः सूर्यकिरणैःसह आतन्वन्ति आप्नुवन्ति आकाशमितिशेषः किंच ओजसास्वकीयेनबलेनसमुद्रंतिरस्कुर्वन्ति तैर्मरुद्भिरित्यन्वयः ॥ तनुविस्तारे लटोझोऽन्तः तना-दिकृञ्भ्यउः सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतितिङएवाद्युदात्तत्वम् । रश्मिभिः नियोमिरित्यनुवृत्तौ अश्नोतेरशचेतिमिः प्रत्ययस्वरः । समुद्रं उन्दीक्लेदने स्फायीतंचीतिरक् समासेकृदुत्तरपदप्रकृतिस्वरः ॥ ८ ॥ नवमीमृचमाह–

अभित्वापूर्वपीतयेसृजामिसोम्यंमधु । मरुद्भिरग्नआगहि॥९॥३७॥१।

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ।

मरुत्ऽभिः । अग्ने । आ । गहि ॥ ९ ॥ ३७ ॥ १।

हेअग्ने पूर्वपीतयेपूर्वकाले प्रवृत्तायपानाय त्वांप्रतिसोम्यंमधु सोमसंबन्धिनंमधुररसं अभि-सृजामि सर्वतःसंपादयामि अतस्त्वंमरुद्भिःसहात्रआगच्छ ॥ अभि एवादीनामन्तइत्यन्तो-दात्तः । त्वामौद्वितीयायाइतित्वादेशःसर्वानुदात्तः । पूर्वपीतये पूर्वाचासौपीतिश्च पुंवत्कर्मधार-येत्यादिनापुंवद्भावः । सृजामि सृजविसर्गे मिपःपित्त्वादनुदात्तत्वं विकरणस्वरः । सोम्यं सोममर्हतियइतियः ।प्रत्ययस्वरेणान्तोदात्तः । मधु फलिपाटिनमीत्यादिनाउप्रत्ययः निदित्यनुवृ-त्तेराद्युदात्तत्वम् । अन्यद्गतम् ॥ अत्रयास्कः–अभिसृजामित्वापूर्वपीतयेपूर्वपानायसोम्यंमधुसो-ममयंसोमेमरुद्भिःसहागच्छेति ॥ ९ ॥

॥ इतिप्रथमस्यप्रथमेसप्तत्रिंशोवर्गः ॥ ३७ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसाय-णाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेप्रथमोऽध्यायःसंपूर्णः॥१॥

---

१ भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् । २ नि० १०. ३७ ।

# ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
अथप्रथमाऽष्टकेद्वितीयोध्यायआरभ्यते । तत्रायंदेवायेत्यष्टर्चंसूक्तं तस्य ऋषिच्छन्दसीपूर्ववत् ऋभुदेवताकत्वमनुक्रम्यते—अयमष्टावार्भवमिति। विनियोगस्तुसूक्तस्यलैङ्गिकःस्मार्तोवादृष्टव्यः। व्यूढस्यप्रथमेछन्दोमे वैश्वदेवशस्त्रे अयंदेवायजन्मनइत्यार्भवस्तृचः अथछन्दोमाइतिखण्डेसूत्रितम्—अभितादेवसवितःप्रेतांयज्ञस्यशम्भुवायंदेवायजन्मनइति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

## ॐम् अयंदेवायजन्मनेस्तोमोविप्रेभिरासया ॥ अकारिरत्नधातमः॥१॥

अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया ।
अकारि । रत्नऽधातमः ॥ १ ॥

ऋभवोहिमनुष्याःसन्तस्तपसादेवत्वंप्राप्ताः तेचात्रसूक्तेदेवताः तत्सङ्घोजायमानवाचिनाजन्मशब्देनैकवचनान्तेनात्रनिर्दिश्यते जन्मने जायमानायऋभुसंघरूपायदेवायतत्प्रीत्यर्थं अयं स्तोमः स्तोत्रविशेषः विप्रेभिः मेधाविभिर्ऋत्विग्भिरासयास्वकीयेनास्येन अकारि निष्पादितः कीदृशः स्तोमः रत्नधातमः अतिशयेनरमणीयमणिमुक्तादिधनप्रदः स्तोत्रेण तुष्टाऋभवोधनंप्रयच्छन्तीत्यर्थः ॥ आसया आस्यशब्दात्तृतीयैकवचनस्यसुपांसुलुगित्यादिनायाजादेशः व्यत्ययेनप्रकृतियकारस्यलोपः चितइत्यन्तोदात्तः । रत्नधातमः रत्नानिदधातीतिरत्नधाः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

द्वितीयामृचमाह—

## यइन्द्रायवचोयुजाततक्षुर्मनसाहरी ॥ शमीभिर्यज्ञमाशत ॥ २ ॥

ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरी इति । शमीभिः ।
यज्ञम् । आशत ॥ २ ॥

येऋभवः इन्द्राय इन्द्रप्रीत्यर्थंवचोयुजाताडनादिकंविनावाङ्मात्रेणरथेयुज्यमानौसुशिक्षितौहरीएतन्नामकावश्वौमनसाततक्षुः संपादितवन्तः ऋभूणांसत्यसङ्कल्पत्वात्तत्सङ्कल्पमात्रेणे-

न्द्रस्याश्वौसंपन्नावित्यर्थः तेऋभवः शमीभिः ग्रहचमसादिनिष्पादनरूपैःकर्मभिः यज्ञमस्मदीयमाशतव्याप्नवन्तः अपःअमइत्यादिपुपठिंशतिसंख्याकेषुकर्मनामसुशमीशिमीतिपठितम् ॥ वचोयुजा वचसायुज्ञाते सत्सूद्विषेत्यादिनाक्विप् सुपांसुलुगित्यादिनाविभक्तेराकारः कृदुत्तरपदप्रकृतिस्वरः। ततक्षुः तक्षूत्वक्षूतनूकरणे लिटि झेरुसादेशः पादादित्वादनिघातः। शमीभिः शमयन्तिपापानीतिशम्यःकर्माणि औणादिकइन्कृदिकारादक्तिनइतिङीप् वृषादित्वादाद्युदात्तः। आशत अशूव्याप्तौ लुङि झस्य अदादेशः स्वादिभ्यःश्नुः तस्यबहुलंछन्दसीतिलुक् अडागमः तिङ्ङतिङइतिनिघातः ॥ २ ॥

तृतीयामृचमाह—

तक्षन्नासत्याभ्यांपरिज्मानंसुखंरथम् ॥ तक्षंन्धेनुंसबर्दुघाम् ॥ ३ ॥

तक्षन्। नासत्याभ्याम्। परिऽज्मानम्। सुऽखम्। रथम्। तक्षन्। धेनुम्। सबःऽदुघाम् ॥ ३ ॥

नासत्याभ्यांअश्विदेवमीत्यर्थरथंतक्षन् ऋभवोदेवाः कंचिद्रथमतक्षन् तक्षणेनसंपादितवन्तः कीदृशंपरिज्मानं परितोगन्तारं सुखंउपर्युपवेशनेसुखकरं किञ्चधेनुं कांचिद्गांतक्षन् धातूनामनेकार्थत्वात्तक्षतिरत्रसंपादनवाची कीदृशींधेनुं सबर्दुघां सबरःक्षीरस्यदोग्ध्रीम् ॥ तक्षन् बहुलंछन्दसीत्यडभावः। नासत्याभ्यां नविद्यतेसत्यंययोस्तावसत्यौ नअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानलोपाभावः। परिज्मानं अजेःपरिपूर्वस्यश्वन्नुक्षन्नित्यादिनामनप्रत्ययेअकारलोपआद्युदात्तत्वंचनिपात्यते। सबर्दुघां सबःपयोदोग्धीतिसबर्दुघा दुहःकबघश्चेतिकप् सबरितिरेफान्तंप्रातिपदिकंक्षीरवाचीतिसंप्रदायविदः कपःपित्त्वादनुदात्तत्वं धातुस्वरएवशिष्यते समासेकृदुत्तरपदप्रकृतिस्वरः ॥ ३ ॥

द्वितीयेछन्दोमेवैश्वदेवशस्त्रेयुवानापितरापुनरित्याभवस्तृचः द्वितीयस्याग्निंवोदेवमिति खण्डेसूत्रितम्—महीद्यौःपृथिवीचनोयुवानापितरापुनरितितृचाविति।

तस्मिंस्तृचेप्रथमासूक्तेचतुर्थीमृचमाह—

युवानापितरापुनःसत्यमंत्राऋजूयवः ॥ ऋभवोविष्ट्यक्रत ॥४ ॥

युवाना। पितरा। पुनरिति। सत्यऽमंत्राः। ऋजुऽयवः। ऋभवः। विष्टी। अक्रत ॥ ४ ॥

ऋभवएतन्नामकादेवाःपितरोस्वकीयौमातापितरौपूर्वंवृद्धावपिपुनर्युवानातरुणावकृतकृतव-न्तः कीदृशाः सत्यमन्त्राः अवितथमन्त्रसामर्थ्योपेताः पुरश्चरणाद्यनुष्ठानेनसिद्धमन्त्रत्वाद्यद्यत्फल-मुद्दिश्यमन्त्राःप्रयुज्यन्तेतत्तत्फलंतथैवसंपद्यते तस्माज्जीर्णयोःपित्रोर्युवत्वंसंपादयितुंसमर्थाइत्यर्थः ऋजूयवः ऋजुत्वमात्मनइच्छन्तः छलरहिताइत्यर्थः अतएवैतेषामनुष्ठितामन्त्राःसिद्ध्यन्ति विष्टी विष्टयोव्याप्तियुक्ताःसर्वेषुकार्येषुएतदीयस्यमन्त्रसामर्थ्यस्याप्रतिघातोत्रव्याप्तिरुच्यते ऋभुशब्दंया-स्कएवंनिर्वक्ति—ऋभवउरुभान्तीतिवर्तेनभान्तीतिवर्तेनभवन्तीतिवेति[1]॥ युवाना युवन्शब्दोयौतेः कनिन्नन्तोनित्त्वादाद्युदात्तः सुपांसुलुगित्यादिनाविभक्तेराकारः। पितरा पूर्ववदाकारः। सत्यम-न्त्राःबहुव्रीहौपूर्वपदप्रकृतिस्वरः। ऋजुशब्दोभावपरः ऋजुत्वमात्मनइच्छन्तीतिक्यच् अकृत्सार्वधा-तुकयोर्दीर्घइतिदीर्घः। क्याच्छन्दसीत्युप्रत्ययः प्रत्ययस्वरः। विष्टी विष्लृव्याप्तौ क्तिच्क्तौचसंज्ञा-यामितिक्तिच् तितुत्रेत्यादिनाइट्प्रतिषेधः तस्माजसइयाडियाजिकाराणामुपसंख्यानमिति तस्यईकारादेशः सचालोन्त्यस्येति सकारस्यभवति ततआद्गुणइतिगुणेकृतेप्रथमयोःपूर्वसवर्णइति पूर्वसवर्णदीर्घः तंबाधित्वा परत्वात् जसिचेतिह्रस्वस्यगुणेनभवितव्यमितिचेत् न संज्ञापूर्वकस्य विधेरनित्यत्वात्। अकृत कृञोलुङ् आत्मनेपदं झस्यअदादेशः मन्त्रेघसेत्यादिनाच्लेर्लुक् यणादे-शःअडागमः निघातः ॥ ४ ॥

पञ्चमीमृचमाह—

सं॒वो॒मदा॑सोअग्म॒तेन्द्रे॑णचम॒रुत्व॑ता ॥ आ॒दि॒त्येभि॑श्च॒राज॑भिः॥५॥१॥

सम्। वः॒। मदा॑सः। अ॒ग्म॒त॒। इन्द्रे॑ण। च॒। म॒रुत्व॑ता।
आ॒दि॒त्येभिः॑। च॒। राज॑ऽभिः ॥ ५ ॥ १ ॥

हेऋभवोयुष्माकंसंबन्धिनोमदासोमदहेतवःसोमाः इन्द्रेणचादित्येभिरादित्यैश्चसमग्मतस-ङ्गताःऋभूणामिन्द्रादित्यैःसहसोमपानंतृतीयसवनेस्ति अतएवावाहननिगदआश्वलायनेनैवंपठितः-इन्द्रमादित्यवन्तंऋभुमन्तंविभुमन्तंवाजवन्तंबृहस्पतिमन्तंविश्वदेव्यावन्तमावहेति । कीदृशेनेन्द्रे-ण मरुत्वतामरुद्भिर्युक्तेन अतएवमन्त्रान्तरमेवमाम्नायते—मरुद्भिरिन्द्रसख्यंतेअस्त्विति[2]।कीदृशैरा-दित्येभिःराजभिःदीप्यमानैः॥मदासः माद्यन्तेएभिरितिमदाःसोमाः मदोनुपसर्गेइत्यप् तस्यपित्त्वा-दनुदात्तत्वं धातुस्वरएवशिष्यते। आज्जसेरसुगितिजसोसुक्। अग्मत गमेःसंपूर्वाल्लुङ् समोगम्यृ-च्छीत्यादिनाआत्मनेपदं झस्यअदादेशः मन्त्रेघसेत्यादिनाच्लेर्लुक् गमहनेत्यादिनाउपधालोपःव्यत्य-

१ नि० ११. १५.। २ ऋ० सं० ६. ४. ३३.।

हिताश्चेतिसमोव्यवहितप्रयोगः निघातः। मरुत्वता मरुतःअस्यसन्तीतिमरुत्वान् तसौमत्वर्थेइ-विभसंज्ञयापदसंज्ञायाबाधितत्वाजश्त्वाभावः झयइतिमतुपोवत्वम्। आदित्येभिः बहुलंछन्द-सीतिभिसऐसादेशाभावेबहुवचनेझल्येदित्येत्वम्। राजभिः राजन्शब्दस्यकनिन्नन्तत्वेननित्त्वा-दाद्युदात्तत्वम् ॥ ५ ॥

इतिप्रथमस्यद्वितीयेप्रथमोवर्गः ॥ १ ॥

सूक्तेषष्ठीमृचमाह—

उ॒त त्यं च॑म॒सं नवं॒ त्वष्टु॑र्दे॒वस्य॒ निष्कृ॑तम् ॥ अक॑र्त च॒तुरः॒ पुनः॑ ॥ ६ ॥

उ॒त । त्यम् । च॒म॒सम् । नव॑म् । त्वष्टुः॑ । दे॒वस्य॑ । निःऽकृ॑तम् ।
अक॑र्त । च॒तुरः॑ । पु॒न॒रिति॑ ॥ ६ ॥

उतअपिच त्वष्टुः एतन्नामकस्यदेवस्यसंबन्धितक्षणव्यापारः नवंनूतनंत्यंचमसंतंसोमधा-रणक्षमंकाष्ठपात्रविशेषंनिष्कृतं निःशेषेणसंपादितमकरोदितिशेषः तक्षणव्यापारकुशलस्यत्व-ष्टुः शिष्याऋभवः तेननिर्मितंतमेकंचमसंपुनरपिचतुरोकर्त चतुर्धाविभक्तांश्चमसानकृतवन्तः एक-स्यचतुर्विधत्वकरणरूपोयमर्थोमन्त्रान्तरेपिविस्पष्टः—एकंचमसंचतुरःकृणोतनेति॥ नवं णुस्तुतौ नूयतइतिनवं कर्मणिअप्प्रत्ययः सहिघञोपवादत्वात् घञर्थेसर्वत्रभवति घञ्प्रत्ययश्च अकर्त-रिचकारकेसंज्ञायामितिकर्तृव्यतिरिक्तेसर्वत्रकारकेभवति यद्यपितत्रसंज्ञायामित्युक्तंतथापिचका-रस्यसंज्ञाव्यभिचारार्थत्वादसंज्ञायामपिभवत्येव। संवध्यतेइतिसंबन्धः कर्मणिघञित्युकम्। त्वष्टुः तक्षूत्वक्षूतनूकरणे औणादिकस्तृन् ऊदित्त्वात्पक्षेइडभावः स्कोःसंयोगाद्योरन्तेचेतिक-कारलोपः। निष्कृतं कृञोनिरुपसृष्टात्कर्मणिक्तः प्रादिसमासे नित्यंसमासेनुत्तरपदस्थस्येतिषत्वं अत्र कर्तृकर्मणोःकृतीतिप्राप्तापष्ठी यद्यपिनलोकाव्ययेतिनिषिद्धा तथापिकर्तुःशेषत्वेनविव-क्षितत्वात्कर्तृकरणयोस्तृतीयेत्येतस्याःप्राप्तेःशैषिकीषष्ठी यथाकर्मणिशेषत्वेनविवक्षिते माषाणा-मश्नीयादिति गतिरनन्तरइतिनिसउदात्तत्वम्। अकर्तअकृपत कृञोलुङि झस्य व्यत्ययेनतादे-शः मन्त्रेघसेत्यादिनाच्लेर्लुक् छन्दस्युभयथेतितिङआर्धधातुकत्वात्ङित्त्वाभावेनगुणः। चतुरः चतुरःशसीत्युकारउदात्तः। पुनः स्वरादिष्वाद्युदात्तःपठितः ॥ ६ ॥

तृतीयेछन्दोमे वैश्वदेवशस्त्रे वेनोरत्नानिधत्तनेतिद्वेऋचावाचार्यो तृतीयस्यागन्ममहेति खण्डेसूत्रितम्—इन्द्रपेद्दाशुनस्तेनोरत्नानिधत्तनेत्येकाद्वेचेति।

१ अत्यमिघमीत्यादिनाअसचुविन्वादन्तोदात्तः। २ ऋ० सं० २. ३. ४.।

वयोरायांसूक्तेसप्तमीमृचमाह–

तेनोरत्नांनिधत्तनत्रिरासाप्तांनिसुन्वते ॥ एकंमेकंसुशस्तिभिः ॥ ७ ॥

ते । नः । रत्नांनि । धत्तन । त्रिः । आ । साप्तांनि । सुन्वते ।
एकंम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥

पूर्वास्वृक्षु येप्रतिपादिताऋभवस्तेयूयं सुशस्तिभिः शोभनैरस्मदीयशंसनैर्युक्ताः सन्तोनोस्माकं संबन्धिने सुन्वते सोमाभिषवंकुर्वतेयजमानाय. रत्नानिरमणीयानि सुवर्णमणिमुक्तादीनि धनानि एकमेकं क्रमेणप्रत्येकं धत्तन प्रयच्छत सुवर्णादीनांमध्ये प्रतिद्रव्यंयावदपेक्षितं तावदितिविवक्षया एकमेकमित्युक्तं कीदृशानिरत्नानि त्रिरा त्रिवारमावृत्तानि उत्तमानिमध्यमानिअधमानिचेत्येवंरत्नानांत्रिरावृत्तिः किञ्च साप्तानिसप्तसंख्यानिष्पन्नवर्गरूपाणि कर्माणि च धत्तन संपादयत कीदृशानिसाप्तानि त्रिरा त्रिवारमावृत्तानि अग्न्याधेयदर्शपूर्णमासादीनांसप्तानांहविर्यज्ञानामेकोवर्गः । औपासनहोमोवैश्वदेवइत्यादीनांसप्तानांपाकयज्ञानांवर्गोद्वितीयः । अग्निष्टोमोत्यग्निष्टोमइत्यादीनांसप्तानांसोमसंस्थानांवर्गस्तृतीयः ॥ रत्नानि रमुक्रीडायां निदित्यनुवृत्तौ रमेस्तचेति नप्रत्ययः तत्सन्नियोगेनमकारस्यतकारः नित्वादाद्युदात्तः । धत्तन तप्तनप्तनथनाश्चेतितशब्दस्यतनादेशः । सप्तानांवर्गःसाप्तं सप्तनोञ्छन्दसीतिवर्गे अञ्प्रत्ययः नस्तद्धितइतिटिलोपः ञित्वादादिवृद्धिः आद्युदात्तत्वंच अत्रवर्गवचनेनचानेन वर्गिणोलक्ष्यन्ते तेनबहुवचनं अन्यथाह्येकएववर्गस्त्रिरावृत्तइत्येकवचनमेवस्यात् । सुन्वते शतुरनुमइतिविभक्तेरुदात्तत्वम् । एकमेकं नित्यवीप्सयोरितिवीप्सायांद्विर्भावः एकशब्दः इणः कन्प्रत्ययान्तोनित्वादाद्युदात्तः द्वितीयस्यैकशब्दस्य तस्यपरमाम्रेडितमित्याम्रेडितसंज्ञायां अनुदात्तंचेतिअनुदात्तत्वम् । सुशस्तिभिः शस्यतेआभिरितिशस्तयऋचः शंसुस्तुतौ करणेक्तिन् तस्य कित्वान्नलोपः शोभनाःशस्तयइतिप्रादिसमासे यद्यपिचक्तिनोनित्वादाद्युदात्तत्वेनकृदुत्तरपदप्रकृतिस्वरत्वेन तदेवप्राप्तं तत्तुपरेणमन्क्तिन्व्याख्यानेत्यादिना उत्तरपदान्तोदात्तत्वेनबाध्यते ॥७॥

---

१ अग्न्याधेयदर्शपूर्णमासाग्निहोत्राग्रयणचातुर्मास्यनिरूढपशुबन्धसौत्रामणीतिसप्तहविर्यज्ञसंस्थाः । २. पञ्चमहायज्ञाअष्टकाश्राद्धंपार्वणश्राद्धंश्रवणाकर्मप्रत्यवरोहणंशूलगवः आश्वयुजीकर्मेतिसप्तपाकयज्ञसंस्थाः । औपासनहोमवैश्वदेवयोर्ग्रहणंपञ्चमहायज्ञोपलक्षणम् ।
३ अग्निष्टोमोत्यग्निष्टोमउक्थ्यः षोडशीवाजपेयोतिरात्रोप्तोर्यामइतिसप्तसोमयज्ञसंस्थाः ।

अष्टमीमृचमाह—

अधा॑रयन्त॒वह्न॑यो॒ऽभ॑जन्तसुकृ॒त्यया॑ ॥ भा॒गंदे॒वेषु॑य॒ज्ञिय॑म् ॥ ८ ॥ २ ॥

अधा॑रयन्त । वह्न॑यः । अभ॑जन्त । सु॒ऽकृ॒त्यया॑ । भा॒गम् । दे॒वेषु॑ । य॒ज्ञिय॑म् ॥ ८ ॥ २ ॥

वह्नयश्चमसादिसाधननिष्पादनेनयज्ञस्यवोढारऋभवःअधारयन्तपूर्वंमनुष्यत्वेन मरणयोग्याअप्यमृतत्वलाभेनप्राणान्धारितवन्तः तथाचमन्त्रान्तरमाम्नायते—मर्तासःसन्तोअमृतत्वमानशुरिति । किञ्चैतेसुकृत्ययायज्ञसाधनद्रव्यसंपादनरूपेणशोभनव्यापारेणदेवेषुमध्येस्थित्वा यज्ञियंयज्ञार्हंभागंहविर्लक्षणंअभजन्तसेवितवन्तः अयमर्थः सौधन्वनायज्ञियंभागमानशुरित्यादिमन्त्रान्तरेषुविस्पष्टः । ब्राह्मणेपि ऋभवोवैदेवेषुतपसासोमपीथमभ्यजयन्नित्याद्युपाख्यानंविस्पष्टम् ॥ वह्नयः निदित्यनुवृत्तौ वहिश्रीत्यादिनानिप्रत्ययः । अभजन्त पादादित्वान्निघातः । सुकृत्यया विभाषाकृवृषोरिति कृञःकर्मणिक्यप् शोभनंकृत्यमस्याभजनक्रियायाः सासुकृत्या बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वंबाधित्वा नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं ननु कृत्यशब्देक्यपःपित्त्वेनानुदात्तत्वाद्धातुस्वरेणआदिरुदात्तः ततश्चाद्युदात्तंद्व्यच्छन्दसीत्यनेनाद्युदात्तत्वेनभवितव्यं तेनहिपुरस्तादपवादेनपरमपिनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंबाध्यतइत्युक्तं एवंतर्हिकृञःशचेति स्त्रियांभावेक्यप्प्रत्ययान्तःकृत्याशब्दः क्यपःपित्त्वेपिप्रत्ययेनउदात्तत्वं मादिसमासेकृदुत्तरपदप्रकृतिस्वरत्वेनतदेवशिष्यते । भागं कर्षात्वतइत्यन्तोदात्तः । यज्ञियं यज्ञमर्हतीत्यर्थे यज्ञर्त्विग्भ्यांघखञाविति घः तस्यइयादेशः प्रत्ययस्वरः ॥ ८ ॥

॥ इतिप्रथमस्यद्वितीयेद्वितीयोवर्गः ॥२॥

इहेन्द्राग्नीइत्यादिकंपञ्चर्चंसूक्तं ऋषिच्छन्दसीपूर्ववत् देवतात्वनुक्रम्यते—इहपञ्चैन्द्राग्नमिति । विनियोगस्तु अग्निष्टोमे अच्छावाकशस्त्रे इहेन्द्राग्नीउपह्वयइतिसूक्तम् स्तोत्रमग्रेशस्त्रादितिखण्डे-इहेन्द्राग्नीउपेपंवामस्यमन्मनइतिनवेतिसूत्रितत्वात् । तथा अभिप्लवषडहेप्रातःसवनेअच्छावाकशस्त्रेस्तोमातिशंसनार्थमेतदेवसूक्तम् तथाचसूत्रितम्—अभिप्लवपृष्ठ्याहानीत्युपक्रम्येहेन्द्राग्नीइन्द्राग्नीआगतमिति ।

तस्मिन्सूक्तेप्रथमामृचमाह—

इ॒हेन्द्रा॒ग्नीउप॑ह्वये॒तयो॒रित्स्तोम॑मुश्मसि ॥ तासोमं॑सोम॒पात॑मा ॥ १ ॥

१ ऋ० सं० १. ७. ३०. । २ ऋ० सं० ३. ४. ७. । ३ ऐ० ब्रा० ३. ३०. ।

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् ।
उश्मसि । ता । सोमम् । सोमऽपातमा ॥ १ ॥

इहास्मिन्कर्मणिइन्द्राग्नीदेवावुपह्वयेआह्वयामि तयोरेवइन्द्राग्न्योरेवस्तोमंस्तोत्रमुश्मसिका- मयामहे सोमपातमा अतिशयेनसोमंपातुंक्षमौतौद्वौदेवौसोमंपिबतामितिशेषः ॥ इन्द्राग्नी अत्र देवताद्वन्द्वेपिपूर्वपदस्यानङ्नभवति तत्रहिद्वन्द्वइत्यनुवृत्तौपुनर्द्वन्द्वग्रहणाल्लोकप्रसिद्धसाहचर्याणा- मेवद्वन्द्वेआनङित्युक्तं तस्मादत्रावग्रहेह्रस्वइन्द्रशब्दः समासस्येत्यन्तोदात्तत्वं देवताद्वन्द्वेचेत्युभ- यपदप्रकृतिस्वरत्वंतुनभवति अग्निशब्दस्यानुदात्तादित्वेननोत्तरपदेनुदात्तादावितिप्रतिषेधात् । उश्मसि वशकान्तौ लटोमस् इदन्तोमसिरितिइकारोपजनः अदादित्वात् शपोलुक् मसोङित्त्वा- द्ग्रहिज्येत्यादिनासंप्रसारणं । ता सोमपातमा उभयत्र सुपांसुलुगित्याकारः ॥ १ ॥

द्वितीयामृचमाह—

तायज्ञेषुप्रशंसतेन्द्राग्नीशुंभतानरः ॥ तागायत्रेषुगायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुंभत । नरः । ता ।
गायत्रेषु । गायत ॥ २ ॥

हेनरोमनुष्याऋत्विजस्तापूर्वोक्तौ ताविन्द्राग्नीयज्ञेषुअनुष्ठीयमानकर्मसुप्रशंसत शस्त्रैः तथा शुंभत नानाविधैरलङ्कारैः शोभितौकुरुत तथा तापूर्वोक्ताविन्द्राग्नी गायत्रेषुगायत्रीछन्दस्केषुमन्- त्रेषुसामरूपेणगायत ॥ ता सुपांसुलुगित्याकारः । शुंभत अन्येषामपिदृश्यतइति दीर्घः ॥ २ ॥

तृतीयामृचमाह—

तामित्रस्यप्रशस्तयइन्द्राग्नीताहवामहे ॥ सोमपासोमपीतये ॥ ३ ॥

ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नी इति । ता । हवामहे । सोमऽपा ।
सोमऽपीतये ॥ ३ ॥

मित्रस्यस्नेहविषयस्यममानुष्ठातुः प्रशस्तयेतापूर्वोक्तौदेवौसंपद्येवामितिशेषः यद्वा मित्र- स्यममसंबन्धिनौ ताविन्द्राग्नीप्रशस्तयेप्रशंसितुमिच्छामइतिशेषः सोमपानक्षमौतापूर्वोक्ताविन्द्रा-

ग्नीसोमपीतयेसोमपानार्थं हवामहेआह्वयामः। प्रशस्तये तुमर्थाच्चभाववचनादितिचतुर्थी कृदुत्तरपदप्रकृतिस्वरत्वंबाधित्वातादौचनितिकृत्यतावितिगतेःप्रकृतिस्वरत्वम्। सोमपीतये सोमस्य पीतिर्यस्मिन्कर्मणितस्मै बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् सोमस्यपीतिरितितत्पुरुषेवा दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्॥ ३ ॥

चतुर्थीमृचमाह—

उ॒ग्रा स॒न्ता॑ हवामह॒ उपे॒दं सव॑नं सु॒तम्। इ॒न्द्रा॒ग्नी एह ग॑च्छताम् ॥ ४ ॥

उ॒ग्रा। सन्ता॑। ह॒वा॒म॒हे॒। उप॑। इ॒दम्। सव॑नम्। सु॒तम्।
इ॒न्द्रा॒ग्नी इति॑। आ। इ॒ह। ग॒च्छ॒ता॒म्॥ ४॥

सुतंअभिषवोपेतंइदमनुष्ठीयमानं सवनंप्रातःसवनादिरूपंकर्मउपसामीप्येनप्राप्तुंउग्रासन्तौ वैरिवधादिषु क्रूरौसन्तौदेवौहवामहे आह्वयामः इन्द्राग्नीदेवौइहकर्मण्यागच्छताम् ॥ सन्ता अस्तेः शतरि श्नसोरल्लोपः। सवनं सुतमितिद्वयं सेमंनःस्तोममागहीत्यत्रोक्तम्॥ ४ ॥

पञ्चमीमृचमाह—

ता म॒हान्ता॒ सद॒स्पती॒ इन्द्रा॑ग्नी॒ रक्ष॑ उब्जतम्॥ अप्र॑जाः सन्त्व॒त्रिणः॑ ॥५॥

ता। म॒हान्ता॑। स॒द॒स्पती॒ इति॑। इन्द्रा॑ग्नी॒ इति॑। रक्षः॑। उ॒ब्ज॒त॒म्।
अप्र॑जाः। स॒न्तु॒। अ॒त्रिणः॑॥ ५॥

तौपूर्वोक्ताविन्द्राग्नीरक्षोराक्षसजातिंउब्जतं ऋजुकुरुतंक्रौर्यंपरित्याजयतमित्यर्थः कीदृशौमहान्तामहान्तौ गुणैरधिकौ सदस्पती सभापालकौ तयोःप्रसादात्अत्रिणोभक्षकाराक्षसाः अप्रजाअनुत्पन्नाःसन्तु ॥ महान्ता सान्तमहतःसंयोगस्येतिदीर्घः। सदस्पती सदसस्पतीइति समासे षष्ठ्यालुकिप्रातिपदिकसकारस्यरुत्वाभावश्छान्दसः उभेवनस्पत्यादिषुयुगपदिति उभयपदप्रकृतिस्वरत्वम्। इन्द्राग्नी आमन्त्रिताद्युदात्तत्वम्। अप्रजाः प्रजायन्तइतिप्रजाः अन्येष्वपि दृश्यतइतिजनेर्डप्रत्ययः नप्रजाअप्रजाःप्रजाशब्दस्यबहुव्रीहौहि नित्यमसिच्प्रजामेधयोरित्यसिजादेशःस्यात् अव्ययपूर्वपदप्रकृतिस्वरः। अत्रिणः तृजन्तस्यअत्रिशब्दस्यजसश्छान्दसइनुडागमः चितइति ऋकारउदात्तः तस्ययणादेशे उदात्तयणोहल्पूर्वात् इतिइकारउदात्तः॥ ५॥

षष्ठीमृचमाह—

तेन॑ स॒त्येन॑ जागृत॒मधि॑ प्रचे॒तुने॑ प॒दे ॥ इन्द्रा॑ग्नी॒ शर्म॑ यच्छतम् ॥ ६ ॥ ३॥

१ अदेस्त्रिनिश्चेतित्रिन् प्रत्ययस्वरेणान्तोदात्तः।

तेन॑ । स॒त्येन॑ । जा॒गृ॒तम् । अधि॑ । प्र॒ऽचे॒तुने॑ । प॒दे । इन्द्रा॑ग्नी॒ इति॑ ।
शर्म॑ । य॒च्छ॒त॒म् ॥ ६ ॥ ३ ॥

हेइन्द्राग्नी सत्येन अवश्यफलप्रदानादवितथेन तेनास्माभिरनुष्ठितेनकर्मणाप्रचेतुने प्रकर्षेणफलभागज्ञापकेपदेस्वर्गलोकादिस्थानेअधिजागृतं आधिक्येनसावधानौभवतं ततोस्मभ्यंशर्मप्रच्छतंसुखंगृहंवादत्तम् गयःकृदरइत्यादिपुद्वाविंशतिसंख्याकेपुगृहनामसुशर्मवर्मेत्युक्तम् ॥ जागृतं जागृनिद्राक्षये अदिप्रभृतिभ्यःशपइतिशपोलुक् तिङ्ङतिङइतिनिघातः । प्रचेतुने चितीसंज्ञानेइत्यस्माद्ण्यन्ताद्वशकेरुनोन्वइतिविहितत्वाद्बाहुलकादौणादिकउनप्रत्ययः समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्राग्नी इहेन्द्राग्नीइत्यत्रोक्तम् आमन्त्रितत्वादाद्युदात्तत्वमत्रविशेषः । शृणातिहिनस्तिदुःखमितिशर्म शृहिंसायां अन्येभ्योपिदृश्यन्तइतिमनिन् । यच्छतं इषुगमियमांछइतिछः ॥ ६ ॥

॥ इतिप्रथमस्यद्वितीयेतृतीयोवर्गः ॥ ३ ॥

प्रातर्युजेत्यादिकमेकविंशत्यृचंसूक्तं तस्यकण्वऋषिश्छन्दसीपूर्ववत् देवताविशेषस्त्वनुक्रम्यते— प्रातर्युजासैकाचतस्रआश्विन्यस्तथासाविच्यआग्नेय्यौद्वेदेवीनामेकैकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्येपार्थिवीषड्वैष्णव्योतोदेवादेवीवेति सूक्तसंख्यानुवर्ततइत्यस्मिन्खण्डे—अनिरुक्ता संख्याविंशतिरितिपरिभाषितत्वात् । प्रातर्युजेतिसूक्ते संख्याविशेषस्यानिरुक्तासंख्याविंशतिसंख्याद्रष्टव्या साचविंशतिःएकयाअधिकयासहवर्ततइतिसैका तत्रादौचतस्रऋचोश्विदेवताकाः पञ्चमीमारभ्याष्टम्यन्ताश्चतस्रःसवितृदेवताकाः नवमीदशमीचोभेअग्निदेवताके एकादश्याऋचोदेवसंबन्धिन्योदेव्योदेवताः द्वादश्याइन्द्रवरुणाग्निपत्न्यइन्द्राणीवरुणान्यग्नाय्योदेवताः त्रयोदशीचतुर्दश्यौद्यावापृथिवीदेवताके पञ्चदशीपार्थिवी षोडश्याद्याःषड्विष्णुदेवत्याः षोडशीदेवदेवत्यावा ॥ अत्रसूक्तेविनियोगोलैङ्गिकः प्रातरनुवाकेआश्विनेक्रतौप्रातर्युजाविबोधयेतिचतस्रऋचः सूत्रितंच—अथाश्विनएषोउषाःप्रातर्युजेतिचतस्रइति । आश्विनग्रहस्यप्रातर्युजेत्येकापुरोनुवाक्या द्विदेवत्यैश्चरन्तीतिखण्डेसूत्रितम्—आश्विनस्यप्रातर्युजाविबोधयेति ।

तत्रप्रथमामृचमाह—

प्रा॒त॒र्युजा॒ वि बो॑धया॒श्विना॒वेह ग॑च्छताम् ॥ अ॒स्य सोम॑स्य पी॒तये॑ ॥१॥

---

१ पृथिवींदेवीदेवताकाषोडशीमारभ्यैकविंशत्यन्त्याःषड्विष्णुदेवताकाः अतोदेवाइत्यस्याः षोडश्यास्तुकृत्स्नादेवाविष्णुर्वाविकल्पेनदेवता ।

प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् ।
अस्य । सोमस्य । पीतये ॥ १ ॥

अत्रहोताध्वर्युमुद्दिश्यब्रूते हेअध्वर्योप्रातर्युजाप्रातःसवनग्रहेणसंयुक्तावश्विनौदेवौविबोधय विशेषेणप्रबुद्धौकुरु अश्विनौप्रबुद्धौ तावश्विनौदेवौअस्याभिषवसंस्कारयुक्तस्यसोमस्यपीतयेसोमपानायइहकर्मण्यागच्छताम्।।प्रातर्युंजातेगृह्यमाणेनग्रहेणसहेतिप्रातर्युजा सत्सूद्विषेत्यादिनाक्विप् सुपांसुलुगित्याकारः कृदुत्तरपदप्रकृतिस्वरत्वम् । अस्य ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । पीतये व्यत्ययेनक्तिनउदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

यासुरथारथीतमोभादेवादिविस्पृशा । अश्विनाताहवामहे ॥ २ ॥

या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ।
अश्विना । ता । हवामहे ॥ २ ॥

योभाश्विनादेवायावुभावश्विनौदेवौ सुरथाशोभनरथयुक्तौ रथीतमारथिनांमध्ये अतिशयेनरथिनौ दिविस्पृशाद्युलोकनिवासिनौ ताहवामहे तादृशावश्विनावाह्वयामहे ॥ येत्यादिष्वष्टसुपदेषुसुपांसुलुगितिद्विवचनस्याकारः । सुरथा शोभनोरथोययोस्तौसुरथौ समासान्तोदात्तत्वापवादंवहुव्रीहौपूर्वपदप्रकृतिस्वरंबाधित्वा नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वेप्राप्ते आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । रथीतमा अन्येषामपिदृश्यतइतिसंहितायामिकारस्यदीर्घत्वम् । दिविस्पृशा दिविस्पृशतइतिदिविस्पृशौ क्विप्चेतिक्विप् तत्पुरुषेकृतिबहुलमित्यलुक् गतिकारकोपपदात्कृदितिकृदुत्तरपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह—

यावांकशामधुमत्यश्विनासूनृतावती । तयायज्ञंमिमिक्षतम् ॥ ३॥

या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया ।
यज्ञम् । मिमिक्षतम् ॥ ३ ॥

अश्विना हेअश्विनौदेवौ वांयुवयोःसंबन्धिनी या कशा अश्वताडनीविद्यते तयासहआगत्य यज्ञमस्मदीयं मिमिक्षतं सोमरसेनसेक्तुमिच्छतं कशयाश्वंदृढंताडयित्वा सहसा-

मागत्यभवद्विषयांसोमरसाहुतिंनिष्पादयितुमुद्युक्तौभवतमित्यर्थः कीदृशीकशामधुमती अर्णः क्षोदमित्यादिषुएकशतसंख्याकेषुउदकनामसुमधुपुरीषमितिपठितं तस्मादुदकवतीत्युक्तंभवति अश्वस्यशीघ्रगत्यायत्स्वेदोदकंस्रवतितेनेयंकशाक्लिन्नेत्यर्थः सूनृतावती प्रियसत्यवाग्युक्ता तीव्रेणकशाताडनेनयोऽश्वनिर्निण्णयवेताडनवेलायांअश्वारूढेनचयआक्रोशःक्रियतेतदुभयंशीघ्रगमनहेतुत्वेनयजमानस्यप्रियं यद्वा श्लोकःधारेत्यादिषुसप्तपञ्चाशद्वाङ्नामसुकशाधिषणेतिपठितं अश्विनोर्यावाक्मधुमतीमाधुर्येपेतापारुष्यरहिता सूनृतावती प्रियत्वसत्यत्वोपेताफलप्रदानविषयेत्यर्थः तयावाचायुक्तौयज्ञंमिमिक्षतमितियोजनीयम् ॥ कशा कशगतिशासनयोः पचाद्यच् वृषादित्वादाद्युदात्तः । सूनृतावती ऊनपरिहाणे सुष्ठुऊनयत्यप्रियमितिसूनृ तथाविधमृतंसत्यं यस्यां वाचिसासूनृता नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंबाधित्वापरादिश्छन्दसिबहुलं इतिऋकारउदात्तः सायस्याअस्तिसाकशासूनृतावतीतिकशायाःसंज्ञा एवंनामाकशेत्यर्थः संज्ञायामितिमतुपोवत्वम् । मिमिक्षतं मिहेःसन् हलन्ताच्चेतिकित्त्वाद्गुणाभावः ढत्वकत्वषत्वानि ॥ ३ ॥

चतुर्थीमृचमाह—

न॒हि वा॑मस्ति॑ दूर॒के यत्रा॒ रथे॑न॒ गच्छ॑थः ॥ अश्वि॑ना सो॒मिनो॑ गृ॒हम् ॥ ४ ॥

न॒हि । वा॒म् । अस्ति॑ । दू॒र॒के । यत्र॑ । रथे॑न । गच्छ॑थः । अश्वि॑ना । सो॒मिन॑ः । गृ॒हम् ॥ ४ ॥

अश्विना हेअश्विनौ देवौयुवांसोमिनः सोमवतोयजमानस्यगृहंप्रतिरथेनगच्छथः समागौवांयुवयोर्दूरकेदूरदेशेनह्यस्तिनवर्ततेखलु यद्वा यत्रगृहेगच्छथः तच्चगृहंदूरेनभवति॥नहि एवमादीनामन्तइत्यन्तोदात्तः । अस्ति चादिलोपेविभाषेतिनिघाताभावः । अत्रहिगृहंदूरेचनास्ति युवांचरथेनगच्छथइतिसमुच्चयश्चार्थोगम्यते चशब्दोनप्रयुज्यतइतिचलोपेप्रथमातिङ्विभक्तिरस्तीति । यत्र निपातस्यचेतिसंहितायांदीर्घत्वम् । गच्छथः इयंयद्यपिप्रथमातथापि यत्रेतियद्वृत्तयोगान्नानिघातः ॥ ४ ॥

व्यूढस्यद्वितीयेछन्दोमेवैश्वदेवशस्त्रेहिरण्यपाणिमूतयइतिसावित्रत्र्यस्तत्रस्तः द्वितीयस्येतिखण्डेसूत्रितम्—हिरण्यपाणिमूतयइतिचतस्रोमहीद्यौःपृथिवीचनइति ।

तत्रप्रथमांसूक्तेपञ्चमीमृचमाह—

हिर॑ण्यपाणिमू॒तये॑ सवि॒तार॒मुप॑ ह्वये । स चेत्ता॑ दे॒वता॑ प॒दम् ॥ ५ ॥ १ ॥

हिर॑ण्यऽपाणिम् । ऊ॒तये॑ । स॒वि॒तार॑म् । उप॑ । ह्व॒ये॒ । सः । चेत्ता॑ । दे॒वता॑ । प॒दम् ॥ ५ ॥ ४ ॥

ऊतये अस्मद्रक्षणार्थंसवितारं देवमुपह्वये आह्वयामि सचसवितादेवएतन्मन्त्रप्रतिपाद्यदेवताभूत्वापदंयजमानेनप्राप्यंस्थानंचेत्ताज्ञापयिताभवति कीदृशं सवितारं हिरण्यपाणिंयजमानायदातुंहस्तेसुवर्णधारिणं यद्वा देवताकर्तृकेयागेसवितास्वयमृत्विग्भूत्वाब्रह्मत्वेनावस्थितः तदानींकस्यांचिदिष्टावध्वर्यवः तस्मैसवित्रेब्रह्मणे प्राशित्रनामकंपुरोडाशभागंदत्तवन्तः तच्च प्राशित्रंहस्तेसवित्रागृहीतंसत्तदीयपाणिंचिच्छेद ततः प्राशित्रस्यदातारोध्वर्यवः सुवर्णमयं पाणिं निर्मायप्रक्षिप्तवन्तः सोयमर्थःकौषीतकिब्राह्मणेसमाम्नातः—सवित्रेप्राशित्रंप्रतिजह्रुस्तस्य पाणी प्रचिच्छेदतस्मैहिरण्मयौप्रतिदधुस्तस्माद्धिरण्यपाणिरितिश्रुतइति । पाणिशब्दंहिरण्यशब्दंचयास्कएवंनिर्वक्ति—हिरण्यंकस्माद्ध्रियतआयम्यमानमितिवाह्रियतेजनाज्जनमितिवाहितरमणंभवतीतिवाहृदयरमणंभवतीतिवाहर्यतेर्वास्यात्प्रेप्साकर्मणइति । तथापाणिः पणायतेःपूजाकर्मणइति ॥ हिरण्यशब्दोनब्विषयत्वादाद्युदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरः । ऊतये उदात्तइत्यनुवृत्तावूतियूतिजूतिसातीत्यादिनाक्तिन्नन्तोन्तोदात्तोनिपातितः । सवितारं तृचश्चित्त्वादन्तोदात्तत्वम् । चेत्ता चिती संज्ञाने अस्मादन्तर्भावितण्यर्थात्ताच्छील्येतृन् अनित्यमागमशासनमितीडभावः नित्त्वादाद्युदात्तः । देवता देवात्तलितिस्वार्थेतल् लितीतिप्रत्ययात्पूर्वमुदात्तम । पदशब्दः पचाद्यजन्तः चितः इत्यन्तोदात्तः ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेचतुर्थोवर्गः ॥ ४ ॥

सूक्तेषष्ठीमृचमाह—

अ॒पां नपा॑त॒मव॑से सवि॒तार॒मुप॑स्तुहि । तस्य॑ व्र॒तान्यु॑श्मसि ॥ ६ ॥

अ॒पाम् । नपा॑तम् । अव॑से । स॒वि॒तार॑म् । उप॑ । स्तु॒हि॒ । तस्य॑ । व्र॒तानि॑ । उ॒श्म॒सि॒ ॥ ६ ॥

अत्रहोतासामर्थ्यादृत्विजमन्यंवाशास्तिरणंब्रूते अवसे अस्मद्रक्षितुंसवितारं उपस्तुहि तस्यसवितुःसंबन्धीनिव्रतानिकर्माणि सोमयागादिरूपाणि उश्मसि कामयामहे कीदृशं सवितारं अपांनपातं जलस्यनपालकं सन्तापेनशोषकमित्यर्थः ॥ अपां ऊडिदमित्यादिना विभक्तेरुदात्तत्वम् । नपातं पारक्षणेअस्यशत्रन्तःपाच्छब्दः तस्यनञासमासे नभ्राण्नपादित्या-

१ नि० २. १०. । २ नि० २. २६. ।

दिनानलोपप्रतिषेधइतिवृत्तिकारः अग्निर्हि अपोनपातितच्छोषकत्वात् तर्हिकथमपामितिषष्ठी नलोकाव्ययनिष्ठाखलर्थतृनामितिकर्मणिषष्ठ्याःप्रतिषेधात् इतिचेत्तर्हि एषाशेषलक्षणास्तु अग्न्यादित्यौ अपांकरणतया संबन्धिनौ अग्नेरापइतिश्रुतेः। आदित्याज्जायतेवृष्टिरितिस्मृतेश्च। अस्मिन्पक्षे उगिदचामितिनुमभावोपिनिपातनादेवेतिमन्तव्यं पातेःक्विबन्तस्यतुग्वानिपातनात् द्रष्टव्यः अथवानपातयतीतिनपात् पत्लृगतावितिधातोर्ण्यन्तात्क्विप् अग्न्यादित्यौह्यपांनपातकौ मरयुनतच्छोषकौ अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अवसे तुमर्थेसेसेन् इत्यादिनाअसेन् नित्त्वादाद्युदात्तः। उश्मसि वशकान्तौ अदिप्रभृतिभ्यइतिशपोलुक् इदन्तोमसिः इतीकारोपजनः॥ ६॥

सप्तमीमृचमाह—

विभक्तारंहवामहेवसोश्चित्रस्यराधसः। सवितारंनृचक्षसम्॥ ७॥

विऽभक्तारम्। हवामहे। वसोः। चित्रस्य। राधसः। सवितारम्। नृऽचक्षसम्॥ ७॥

वसोः निवासहेतोश्चित्रस्यसुवर्णरजतादिरूपेण बहुविधस्यराधसोधनस्यविभक्तारंअस्य यजमानस्यैतावद्धनदानमुचितमितिविभागकारिणं नृचक्षसं मनुष्याणांप्रकाशकारिणंसवितारंहवामहे कौषीतकिनएतस्याऋचोव्याख्यानरूपेब्राह्मणे सवितुर्विभागहेतुत्वमेवसमामनन्ति— यदेवद्रुतः चित्रंराधस्तदेषसवितविभक्ताभ्यःप्रजाभ्योविभजतीति॥ विभक्तारं तृचश्चित्त्वादन्तोदात्तत्वं कृदुत्तरप्रकृतिस्वरत्वेनतदेवशिष्यते। हवामहे ह्वयतेर्बहुलंछन्दसीतिसंप्रसारणम्। वसोः वसनिवासेशृस्वृस्निहीत्यादिनाउः निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः।राधसः असुन्नन्तोनित्त्वादाद्युदात्तः। नृचक्षसं नॄंश्चष्टइतिनृचक्षाः तंनृचक्षसं चक्षेर्बहुलंशिच्चेत्यसुन् शित्त्वादनार्धधातुकत्वेनख्याञादेशाभावः कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ७॥

अष्टमीमृचमाह—

सखायआनिषीदतसवितास्तोम्योनुनः। दाताराधांसिशुंभति॥ ८॥

सखायः। आ। नि। सीदत। सविता। स्तोम्यः। नु। नः। दाता। राधांसि। शुंभति॥ ८॥

सखिभूताहेऋत्विजः आनिषीदत सर्वत्रोपविशतनोस्माकमयंसविताक्षिप्रंस्तोम्यःस्तुतियोग्यः राधांसिधनानिदाताप्रदातुमुद्युक्तः एषसविता शुंभति शोभते॥ समानाःसन्तःख्यान्ति

१ तै. आ. अष्टमप्रपाठके।

प्रकाशन्तइतिसखायः ख्यामकथने समानेख्यश्चोदात्तइतीण्प्रत्ययः तत्सन्नियोगेनडित्त्वंयलोपश्च डित्त्वादाकारलोपः समानस्यच्छन्दसीत्यादिनासमानशब्दस्यसादेशः इण् सन्नियोगेनोदात्तत्वं जसि सख्युरसंबुद्धौइतिणित्त्वाद्वृद्धिरायादेशश्च । निषीदत सदिरप्रतेरितिषत्वम् । स्तोमेषुप्रतिपाद्यत्वेनभवः स्तोम्यः भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् । दाता दानशीलः ताच्छील्येतृन् नित्त्वादाद्युदात्तः । राधांसि गतं कर्तृकर्मणोःकृतीतिभाषायाःषष्ठ्याः नलोकाव्ययेतिप्रतिषेधः ॥ ८ ॥

अग्निष्टोमेप्रातःसवने अग्नेपत्नीरिहावहेतिनेष्टुःप्रस्थितयाज्या प्रशास्ताब्राह्मणाच्छंसीतिखण्डेसूत्रितम्—अग्नेपत्नीरिहावहहोत्राग्नायवशान्नायेति ।

तामेतांसूक्तेनवमीमृचमाह—

अग्ने॒पत्नी॑रि॒हाव॑हदे॒वाना॑मुश॒तीरुप॑ । त्वष्टा॑रं॒सोम॑पीतये ॥ ९ ॥

अग्ने॑ । पत्नीः॑ । इ॒ह । आ । व॒ह॒ । दे॒वाना॑म् । उ॒श॒तीः । उप॑ । त्वष्टा॑रम् । सोम॑ऽपीतये ॥ ९ ॥

हेअग्नेउशतीःकामयमानाःदेवानांपत्नीरिन्द्राण्याद्याः इहदेवयजनदेशेआवह तथात्वष्टारं देवंसोमपीतयेसोमपानार्थंउपसमीपे आवह ॥ पत्नीः इत्यन्तःपतिशब्दआद्युदात्तः पत्युर्नोयज्ञसंयोगेइतिङीप् तत्संनियोगेनतकारश्च ङीपःपित्त्वात् इतिस्वरएव । उशतीः वशकान्तौ लटःशतृ अदिप्रभृतिभ्यःशपइतिशपोलुक् शतुर्ङित्त्वात् ग्रहिज्यादिनासंप्रसारणं उगितश्चेतिङीप् शतुरनुमइतिङीप्उदात्तः ॥ ९ ॥

दशमीमृचमाह—

आग्ना अ॑ग्नइ॒हाव॑से॒होत्रां॑यविष्ठ॒भार॑तीम् ॥ वरू॑त्रीं॒धि॒षणां॑वह ॥१०॥५॥

आ । ग्नाः । अ॒ग्ने॒ । इ॒ह । अव॑से । होत्रा॑म् । य॒वि॒ष्ठ॒ । भार॑तीम् । वरू॑त्रीम् । धि॒षणा॑म् । व॒ह॒ ॥ १० ॥ ५ ॥

हेअग्ने अवसेअस्मानवितुंग्नादेवपत्नीरिहावह तथाहेयविष्ठयुवतमाग्ने होत्रांहोमनिष्पादकामग्निपत्नींभारतींभरतनामकस्यादित्यस्यपत्नींवरूत्रींवरणीयांधिषणांवाग्देवींचावह वाग्वैधिषणेतिवाजसनेयकम् । भरतआदित्यइतियास्केनोक्तत्वात् तस्यपत्नीभारतीत्युच्यते ॥ गम्यन्तइ-

१ नि॰ ८. १३.

तिम्राः गमृसृपृगतौ औणादिकोद्भत्ययः डित्त्वाट्टिलोपः प्रत्ययस्वरः । होत्रां हुयामसिभसिभ्यस्त्रन्निति त्रन्नन्तोनित्त्वादाद्युदात्तः अतिशयेनयुवायविष्ठः अतिशायनेतमविष्ठनौ स्थूलदूरेत्यादिनायणादिपरस्यलोपः पूर्वस्यचगुणः । भारतीं शार्ङ्गरवादेरवृत्कृवत्वाव्ङीनन्तोनित्त्वादाद्युदात्तः । वरूत्रीं ग्रसितस्कभितइत्यादौ यद्यपिवरूतृशब्दस्तृजन्तइत्युक्तं तथाप्यन्तेइतिकरणस्यप्रदर्शनार्थत्वात् वरूतृशब्दस्तृन्नन्तोपिद्रष्टव्यः तेननित्त्वादाद्युदात्तत्वं शेषनिघातेनऋकारस्यानुदात्तत्वात् उदात्तयणोहल्पूर्वात् इत्यपिनङीपउदात्तत्वम् । धिषणां क्युप्रत्ययानुवृत्तौधृषेर्धिपचसंज्ञायामितिक्युः ॥ १० ॥

॥ इतिप्रथमस्यद्वितीयेपञ्चमोवर्गः ॥ ५ ॥

सूक्तेएकादशीमृचमाह—

अ॒भि नो॑ दे॒वीरव॑सा म॒हः शर्म॑णा नृ॒पत्नीः॑ ॥ अच्छि॑न्नपत्राः सचन्ताम् ॥११॥

अ॒भि । नः॒ । दे॒वीः । अव॑सा । म॒हः । शर्म॑णा । नृ॒ऽपत्नीः॑ ।
अच्छि॑न्नऽपत्राः । स॒च॒न्ता॒म् ॥ ११ ॥

देवीर्देव्योदेवपत्न्यःअवसारक्षणेनमहोमहताशर्मणाचसुखेनचसहनोस्मान् अभिसचन्तां आभिमुख्येनसेवन्तां कीदृश्योदेव्यः नृपत्नीः मनुष्याणांपालयित्र्यः अच्छिन्नपत्राःअच्छिन्नपक्षाःनहिपक्षिरूपाणांदेवपत्नीनांपक्षाः केनचिच्छिद्यन्ते ॥ देवीः पुंयोगादाख्यायांइतिङीपन्तः प्रत्ययस्वरेणान्तोदात्तः दीर्घाज्जसिचेतिप्रतिषेधस्य वाछन्दसीतिपाक्षिकत्वोक्तेः पूर्वसवर्णदीर्घत्वम् । अवसा अवरक्षणे असुन् नित्त्वादाद्युदात्तः । महः महपूजायां क्विप् सुपांसुलुगितिविभक्तेर्लुक् । नृपत्नीः समासान्तोदात्तत्वेप्राप्ते परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । अच्छिन्नपत्राः न छिन्नानिअच्छिन्नानि अव्ययपूर्वपदप्रकृतिस्वरत्वं अच्छिन्नानिपत्राणियासांताः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ११ ॥

द्वादशीमृचमाह—

इ॒हेन्द्रा॒णीमुप॑ ह्वये वरुणा॒नीं स्व॒स्तये॑ । अ॒ग्नायीं॒ सोम॑पीतये ॥१२॥

इ॒ह । इ॒न्द्रा॒णीम् । उप॑ । ह्व॒ये॒ । व॒रु॒णा॒नीम् । स्व॒स्तये॑ । अ॒ग्नायी॑म् ।
सोम॑ऽपीतये ॥ १२ ॥

इहास्मिन्कर्मणि स्वस्तये अस्माकमविनाशाय सोमपीतयेसोमपानायच इन्द्रवरुणाग्नीनांपत्नीराह्वयामि ॥ इन्द्राणींवरुणानीं इन्द्रवरुणेत्यादिनापुंयोगेङीप्प्रत्ययः आनुगागमश्च प्रत्ययस्वरः। अग्नायीं वृषाकप्यग्निकुसितकुसिदानामुदात्तइतिङीप् तत्सन्नियोगेन इकारस्यैकारउदात्तः। सोमपीतये असकृत्पूर्वोक्तम्॥ १२॥

द्वितीयेछन्दोमेवैश्वदेवशस्त्रेमहीद्यौःपृथिवीचनइतिद्यावापृथिव्यनिविद्धानीयस्तृचः द्वितीयस्याग्निंवइतिखण्डेसूत्रितम्—महीद्यौःपृथिवीचनोयुवानापितरापुनरिति । आग्रयणेष्टौ महीद्यौरित्येषाद्यावापृथिव्यैककपालस्यानुवाक्या आग्रयणंव्रीहिश्यामाकेतिखण्डेसूत्रितम्—येकेचज्मामहिनोअहिमायामहीद्यौःपृथिवीचनइति। अग्निमन्थनेप्येषाविनियुक्ता मात्वैश्वदेव्यावितिखण्डेसूत्रितम्—अभित्वादेवसवितर्महीद्यौःपृथिवीचनइति। विष्यन्दमानंसान्नाय्यं अनयैवाहवनीयदेशेनिनयेत विष्यपराधइतिखण्डेतथैवसूत्रितम्—विष्यन्दमानंमहीद्यौःपृथिवीचनइतिअन्तःपरिधिदेशेनिनयेयुरिति । आश्विनशस्त्रेप्येषा संस्थितेष्वाश्विनायेतिखण्डेसूत्रितम्—महीद्यौःपृथिवीचनस्तेहिद्यावापृथिवीविश्वशंभुवेति।

तामेतांसूक्तेत्रयोदशीमृचमाह—

महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षताम्। पिपृतांनोभरीमभिः॥१३॥

मही। द्यौः। पृथिवी। च। नः। इमम्। यज्ञम्। मिमिक्षताम्।
पिपृताम्। नः। भरीमऽभिः॥ १३॥

महीमहतीद्यौर्द्युलोकदेवता पृथिवीभूमिदेवताच नोस्मदीयमिमंयज्ञंमिमिक्षतां स्वकीयसारभूतेनरसेन मिमिक्षतां सेक्तुमिच्छतां तथा भरीमभिः भरणैःपोषणैर्नोस्मान् पिपृतामुभेदेव्यौपूरयताम्॥ मही महच्छब्दात् उगितश्चेतिङीप् अत्शब्दलोपःछान्दसः बृहन्महतोरुपसंख्यानमितिङीपउदात्तत्वम्। द्यौः दिवृशब्दःप्रातिपदिकस्वरेणान्तोदात्तः गोतोणिदितिनतः परस्यसोर्णिद्वद्भावाद्वन्तीवृद्धिरपिस्थानिवद्भावेनोदात्ता । पृथिवी प्रथप्रख्याने प्रथेःषिवन् संप्रसारणंचेतिषिवन्प्रत्ययः षिद्गौरादिभ्यश्चेतिङीष् प्रत्ययस्वरः। मिमिक्षतां मिहसेचने सनि द्विर्भावहलादिशेषौ ढत्वकत्वषत्वानि। पिपृतां पृपालनपूरणयोः ह्रस्वइत्येके लोट् तसस्ताम् शपःश्लुः अर्तिपिपर्त्योश्चेत्यभ्यासस्याकारस्यइकारः लिड्प्रत्ययस्वरः। भरीमभिः डुभृञ्धारणपोषणयोः हृसृभृस्तृसृभ्यइमनितीमन् नित्त्वादाद्युदात्तः॥ १३॥

चतुर्दशीमृचमाह—

तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ १४ ॥

तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः । गन्धर्वस्य । ध्रुवे । पदे ॥ १४ ॥

गन्धर्वस्यध्रुवंपदंअन्तरिक्षं तथाचतापनीयशाखायांसमाम्नायते—यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षमिति । तेनान्तरिक्षेणोपलक्षिते आकाशेवर्तमानयोस्तयोरिव द्यावापृथिव्योरेवसंबन्धिपयोजलंघृतवत् घृतसदृशं विप्रामेधाविनः प्राणिनोधीतिभिःकर्मभिः रिहंतिलिहन्ति यद्वा घृतवद्धृतंसारंतेनोपेतंरिहन्तिलिहेर्व्यत्ययेनरेफः ॥ गन्धर्वस्य धृञ्धारणे गविधृञोगम्चइतिवप्रत्ययः तत्सन्नियोगेनगोशब्दस्यचगमादेशः ॥ १४ ॥

स्योनापृथिवीत्येषामहानाम्नीव्रतेभूमिस्पर्शनेविनियुक्ता एतद्विदंब्रह्मचारिणमितिखण्डेसूत्रितम्—स्योनापृथिविभवेतिसमाप्येति । स्मार्तेहेमन्तप्रत्यवरोहणेप्येषाऋक्जप्या मार्गशीर्ष्यांप्रत्यवरोहणमितिखण्डेसूत्रितम्—तस्मिन्नुपविश्यस्योनापृथिविभवेतिजपित्वेति ।

तामेतांसूक्तेपञ्चदशीमृचमाह—

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १५ ॥ ६ ॥

स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥ १५ ॥ ६ ॥

हेपृथिवि स्योनत्वादिगुणयुक्ताभव स्योनशब्दोविस्तीर्णवाची तथाचवाजसनेयब्राह्मणेस्योनशब्दोपेतंकंचिन्मन्त्रमुदाहृत्यव्याख्यातम्—इन्द्रस्योरुमाविशस्योनःस्योनमिति विस्तीर्णोविस्तीर्णमित्येवैतदाहेति । यद्वास्योनशब्दः सुखवाची तथाचयास्कवाक्यमुदाहरिष्यते—अनृक्षराकण्टकरहिता निवेशनी निवेशस्थानभूतासप्रथोविस्तारभूतं शर्मशरणंनोस्मभ्यं यच्छ हेपृथिवि देहि । तामेतामृचमुदाहृत्ययास्कएवंव्याचष्टे—सुखानःपृथिविभवानृक्षरानिवेशन्यृक्षरःकण्टकऋच्छतेर्यच्छनःशर्मयच्छन्तुशरणंसर्वतःपृथ्विति[1] ॥ स्योना षिवुतन्तुसन्ताने सिवेष्टेयोंचेतिनप्रत्ययः टेश्चयोइत्यादेशः प्रत्ययस्वरः स्योनापृथिवीत्यनयोर्भवेत्याख्यातेनैवान्वयोनपरस्परं अतोसामर्थ्येनैवपराङ्गवद्भावादोकारस्य नामन्त्रिताद्युदात्तत्वम् । अनृक्षरा ऋषीगतौ गच्छत्यन्त-

---

१ नि० ९. ३२ ।

रित्युक्षरः कण्टकः तन्यृषिभ्यांक्सरन् पद्योःकःसीतिकत्वं आदेशप्रत्यययोरितिषत्वं नञोबहुव्रीहिः तस्मान्नुडचीतिनुडागमः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। निविशत्यस्यामितिनिवेशनी करणाधिकरणयोश्चेतिल्युट् टिड्ढाणञितिङीप् ल्तितीतिप्रत्ययात्पूर्वस्योदात्तत्वम्। यच्छ दाणूदाने पाघ्रेत्यादिना यच्छादेशः द्व्यचोतस्तिङइतिदीर्घः। सप्रथः प्रथप्रख्याने असुन् प्रथसासहवर्ततइति तेनसहेतितुल्ययोगेइतिसमासः वोपसर्जनस्येतिसभावः कृत्स्वरः॥ १५॥

॥ इतिप्रथमस्यद्वितीयेपष्ठोवर्गः॥ ६॥

प्रातःसवनेसोमातिरेके एकंशस्त्रंशंसनीयं तत्रअतोदेवाइत्याद्याःपळ्चः सोमातिरेकइतिखण्डेसूत्रितम्—महाँइन्द्रोयओजसाअतोदेवाअवन्तुनइत्यैन्द्रीभिर्वैष्णवीभिश्चेति। अग्नेर्यांमैच्छावाकातिरिक्तोक्थेपिएताःषड्ऋचःस्तोत्रियानुरूपार्थाः तथाचयस्यपशवइतिखण्डेसूत्रितम्—अतोदेवाअवन्तुनइतिस्तोत्रियानुरूपाविति। दर्शपूर्णमासयोःप्रायश्चित्तहोमेप्याद्येविनियुक्ते तथैववेदंपत्न्याइतिखण्डेसूत्रितम्—अतोदेवाअवन्तुनइतिद्वाभ्यांव्याहृतिभिश्चेति। याज्यानुवाक्ययोर्मध्येलौकिकभाषणेअतोदेवाइत्येषाजप्या सूत्रितंहि—आपद्यतोदेवाअवन्तुनइतिजपेदिति।

तामेतांसूक्तेषोडशीमृचमाह—

अतो॑दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विचक्र॒मे। पृ॒थि॒व्याः स॒प्त धाम॑भिः॥ १६॥

अतः। दे॒वाः। अ॒व॒न्तु॒। नः॒। यतः॑। विष्णुः॑। वि॒ऽच॒क्र॒मे।
पृ॒थि॒व्याः। स॒प्त। धाम॑ऽभिः॥ १६॥

विष्णुःपरमेश्वरः सप्तधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिःसाधनभूतैः यतः पृथिव्याःयस्माद्भूप्रदेशाद्विचक्रमे विविधंपादक्रमणंकृतवान् अतोस्मात्पृथिवीप्रदेशान्नोस्मान्देवाअवन्तु विष्णोःपृथिव्यादिलोकेषुछन्दोभिःसाधनैःजयंतैत्तिरीयाआमनन्ति—विष्णुर्मुखावैदेवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्निति। विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्यपृथिव्यपादानंपृथिवीप्रदेशाद्रक्षणंनामभूलोकेवर्तमानानांपापनिवारणम्॥ अतः एतच्छब्दात् पञ्चम्यास्तसिल् इतितस्मिन् एतदोशित्यशादेशः लित्स्वरेणाकारउदात्तः। यतः तसिलःप्राग्दिशोविभक्तिरितिविभक्तिसंज्ञायां त्यदाद्यत्वं लित्स्वरः। विष्णुः विषेःकिच्चेतिनुप्रत्ययः किच्चा-

१ पादादिश्छन्दसि इतिउत्तरपदाद्युदात्तत्वम्। २ तै० सं० ५. २. १. १

न्गुणः निरित्यनुवृत्तेराद्युदात्तत्वम् । विचक्रमे सुप्तिति योगविभागाद् विशब्दस्य समासः समासान्तोदात्तत्वं यद्वृत्तयोगान्निघातः । सप्त सुपांसुलुगिति भिसो लुक् । धामभिः दधातेरातो मनिन्निति मनिन् नित्स्वरः ॥ १६ ॥

वैष्णवोपांशुयाजस्य इदं विष्णुरित्येषानुवाक्या उक्ता देवता इति खण्डे सूत्रितम्—इदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामिति । गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणे अनयैव श्वपदे पुभस्म प्रक्षिपेत् विध्यपराध इति खण्डे सूत्रितम्—भस्मना श्वुनःपदं प्रतिवपेदिदं विष्णुर्विचक्रम इति । आतिथ्यायां प्रधानस्य हविष एषैवानुवाक्या अथातिथ्येळावेति खण्डे सूत्रितम्—इदं विष्णुर्विचक्रमे तदस्य प्रियमभि पाथो अश्यामिति । उपसत्सु वैष्णवस्यैषैवानुवाक्या अथोपसदिति खण्डे सूत्रितम्—गयस्फानो अमीवहेदं विष्णुर्विचक्रम इति ।

तामेतां सूक्ते सप्तदशीमृचमाह—

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥ १७ ॥

इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् ।
समूऽळ्हम् । अस्य । पांसुरे ॥ १७ ॥

विष्णुस्त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य विचक्रमे विशेषेण पादक्रमणं कृतवान् तदा त्रेधा त्रिभिः प्रकारैः पदं निदधे स्वकीयं पादं प्रक्षिप्तवान् अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूळ्हं इदं सर्वं जगत् सम्यगन्तर्भूतम् सेयमृक् यास्केनैवं व्याख्याता—विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किंच तद्विक्रमते विष्णुस्त्रेधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् समूळ्हमस्य पांसुर इव पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वेति[1] ॥ त्रेधा एधाच्च इत्येधाच्प्रत्ययः चितोऽन्तोदात्तः । समूळ्हं वह प्रापणे निष्ठेति क्तः वचिस्वपीत्यादिना संप्रसारणं ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम् । अस्य इदमोन्वादेशेऽशनुदात्तः प्रत्ययश्च सुप्स्वरेण । पांसुरे नगपांसुपाण्डुभ्यश्चेति वक्तव्यमिति मत्वर्थीयो रः प्रत्ययस्वरः ॥ १७ ॥

उपसद्वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या त्रीणि पदेत्येषा सूत्रितं च—त्रीणि पदा वि चक्रम इति स्विष्टकृदादि लुप्यत इति ।

---

1 नि० १२. १९.

तामेतामष्टादशीमृचमाह—

त्रीणिपदाविचंक्रमेविष्णुर्गोपाअदाभ्यः । अतोधर्माणिधारयन्॥१८॥

त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः ।
अतः । धर्माणि । धारयन् ॥ १८ ॥

अदाभ्यः केनापिहिंसितुमशक्यः गोपाः सर्वस्यजगतोरक्षकोविष्णुःपृथिव्यादिस्थानेषु अतएतेषुत्रीणिपदानिविचक्रमे किंकुर्वन् धर्माण्यग्निहोत्रादीनिधारयन् पोषयन् ॥ पदा सुपांसुलुगित्यादिनाविभक्तेर्डादेशः तस्यस्थानिवद्भावेनानुदात्तत्वेप्राप्ते उदात्तनिवृत्तिस्वरेणोदात्तत्वम्।गोपाः गोपाप्रतस्येत्यत्रोक्तम्॥अदाभ्यः दभेर्कंहलोर्ण्यदितिण्यत् नञ्समासः अव्ययपूर्वपदप्रकृतिस्वरत्वम्। धारयन् शपःपित्त्वादनुदात्तत्वं शतुश्चलसार्वधातुकस्वरेणणिचएवस्वरः शिष्यते ॥ १८ ॥

एकोनविंशीमृचमाह—

विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे । इन्द्रस्ययुज्यःसखा॥१९॥

विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य ।
युज्यः । सखा ॥ १९ ॥

हेऋत्विगादयः विष्णोःकर्माणिपालनादीनिपश्यत यतोयैःकर्मभिःव्रतान्यग्निहोत्रादीनि पस्पशेसर्वोयजमानः स्पृष्टवान् विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः तादृशोविष्णुरिन्द्रस्ययुज्योयोग्योनुकूलः सखाभवति विष्णोरिन्द्रानुकूल्यं त्वष्टाहतपुत्रइत्यनुवाकेअथहवैतर्हिविष्णुरित्यादिनाप्रपञ्चेनतैत्तिरीयाआमनन्ति—पस्पशे स्पशबाधनस्पर्शनयोः लिट् द्विर्भावे शर्पूर्वाःखयइतिपकारःशिष्यते सकारोलुप्यते यद्वृत्तयोगादनिघातः।युज्यः युजेर्बाहुलकात्क्यप् कित्त्वाद्गुणाभावः क्यपःपित्त्वादनुदात्तत्वं धातुस्वरः ॥ १९ ॥

विंशीमृचमाह—

तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः । दिवीवचक्षुराततम् ॥ २०॥

तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ।
दिविऽइव । चक्षुः । आऽततम् ॥ २० ॥

---

१ तै० २. ४. १२.।

सूरयोविद्वांसः ऋत्विगादयः विष्णोःसंबन्धिपरमपुत्कृष्टं तच्छास्त्रप्रसिद्धंपदंस्वर्गस्थानं शास्त्रदृष्ट्या सर्वदापश्यन्ति तत्रदृष्टान्तः—दिवीव आकाशेयथाआततं सर्वतः प्रसृतंचक्षुर्निरोधाभावेन विशदंपश्यतितद्वत्॥ सदा सर्वैकान्येतिदाप्रत्ययः सर्वस्यसोन्यतरस्यांदीतिसर्वशब्दस्य सभावः व्यत्ययेनाद्युदात्तत्वम्। दिवि ऊडिदमित्यादिनाविभक्तेरुदात्तत्वं इवेनविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेतितदेवशिष्यते। चक्षुः नविषयस्येत्याद्युदात्तत्वम्। आततं तनोतेःकर्मणिक्तः यस्यविभाषेतीट्प्रतिषेधः अनुदात्तोपदेशेत्यादिनानलोपः कुदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते गतिरनन्तरइतिगतेरुदात्तत्वम्॥ २०॥

एकविंशीमृचमाह—

तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांस॒ः समि॑न्धते। विष्णो॒र्यत्प॑र॒मं प॒दम्॥२१॥७

तत्। विप्रा॑सः। वि॒प॒न्यवः॑। जा॒गृ॒ऽवांसः॑। सम्। इ॒न्ध॒ते॒। विष्णोः॑। यत्। प॒र॒मम्। प॒दम्॥ २१॥ ७॥

पूर्वोक्तं विष्णोर्यत्परमंपदमस्ति तत्पदंविप्रासोमेधाविनः समिन्धतेसम्यक् दीपयन्ति कीदृशाः विपन्यवः विशेषेणस्तोतारः जागृवांसः शब्दार्थयोःप्रमादराहित्येनजागरूकाः॥ विप्रासः आज्जसेरसुक्। विपन्यवः स्तुत्यर्थस्यपनेर्बाहुलकादौणादिकोयुप्रत्ययः तत्र प्रत्ययस्वरः। जागृवांसः जागृनिद्राक्षये लिटःक्वसुः क्रादिनियमात्प्राप्तस्येटोवस्वेकाजाद्घसामितिनियमान्निवृत्तिः॥ २१॥

इतिप्रथमस्यद्वितीयेसप्तमोवर्गः॥ ७॥

तीव्राइतिचतुर्विंशत्यृचंसूक्तं अत्रेयमनुक्रमणिका—तीव्राश्चतुर्विंशतिर्वायव्यैकैन्द्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः शिष्टाआप्योन्त्याध्यर्धाग्नेय्यप्स्वन्तःपुरउष्णिक् परानुष्टुप् त्रिलश्चान्त्याएकविंशीप्रतिष्ठेति। ऋषिश्चान्यस्मादितिपरिभाषयानुवर्तमानान्मेधातिथिःकाण्वऋषिः अप्स्वन्तरित्येषापुरउष्णिक् प्रथमपादस्यद्वादशाक्षरेण आद्यश्चेत्पुरउष्णिगितिलक्षणसद्भावात्अप्सुमेसोमइत्येषानुष्टुप् इदमापइत्याद्यास्तिस्रोनुष्टुभः शिष्टाएकोनविंशतिसंख्याकाऋचोगायत्र्यः आदौगायत्रमितिपरिभाषितत्वात् आद्यावायुदेवताकाततोद्वेऋचाविन्द्रवायूदेवताके ततः एकस्तृचोमित्रावरुणदेवत्यः ततउत्तरतृचस्यमरुद्गणविशिष्टेन्द्रोदेवता ततएकस्तृचोवैश्वदेवः तदनन्तरभावीपौष्णः शिष्टाऋचोब्देवताकाः पयस्वानग्नइत्यर्धर्चयुक्ता संमाग्नइत्येषात्वग्निदेवताका सूक्तविनियोगोलिङ्गादवगन्तव्यः अभिप्लवषडहस्यद्वितीयेहनिप्र-

उगशस्त्रेवायव्यतृचस्यतीव्राःसोमासइत्येषातृतीया द्वितीयस्यचतुर्विंशेनेतिखण्डेसूत्रितम्—तीव्राः सोमासआगहीत्येकेति पृष्ठ्यपडहेपिद्वितीयेहनिप्रउगेएषा ।

तामेतांसूक्तेप्रथमामृचमाह—

तीव्राःसोमासआगह्याशीर्वन्तःसुताइमे। वायोतान्प्रस्थितान्पिब॥ १॥

तीव्राः सोमासः । आ । गहि । आशीःऽवन्तः । सुताः । इमे ।
वायो इति । तान् । प्रऽस्थितान् । पिब ॥ १ ॥

हेवायो इमेसोमासः ऐन्द्रवायवग्रहादिरूपाः सोमाः सुताःअभिषुताः तेचतीव्राःप्रभूतत्वात् तर्पयितुंसमर्थाः आशीर्वन्तः आशिरयुक्ताः अतस्त्वमागहि अस्मिन्कर्मण्यागच्छ प्रस्थितानुत्तरवेदिंप्रत्यानीतान्सोमान् पिब॥सोमासः आज्जसेरसुक् । गहि मरुद्भिरग्नआगहीत्यत्रोक्तम्। आशीर्वन्तः श्रित्रूपाके अपस्पृधेथामित्यादिसूत्रे आङ्पूर्वस्य क्विपिशिरादेशोनिपातितः करणस्यापिश्रयणद्रव्यस्यस्वव्यापारेकर्तृत्वविवक्षयाकर्तरिक्विप्नविरुध्यते आशीरेषामस्तीत्याशीर्वन्तः छन्दसीरइतिवत्वम् । वायो आमन्त्रिताद्युदात्तत्वम् । प्रस्थितान् प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वंबाधित्वा व्यत्ययेन अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १ ॥

पूर्वोक्तएवशस्त्रे उभादेवादिविस्पृशेतिद्वेऐन्द्रवायवतृचस्यप्रथमाद्वितीये । तथाचद्वितीयस्येतिखण्डेसूत्रितम्—उभादेवादिविस्पृशेतिद्वेइति ।

तयोःप्रथमांसूक्तेद्वितीयामृचमाह—

उभादेवादिविस्पृशेन्द्रवायूहवामहे । अस्यसोमस्यपीतये ॥ २ ॥

उभा । देवा । दिविऽस्पृशा । इन्द्रवायू इति । हवामहे । अस्य ।
सोमस्य । पीतये ॥ २ ॥

दिविस्पृशाद्युलोकवर्तिनौ उभादेवा द्वौदेवाविन्द्रवायूहवामहे आह्वयामः किमर्थं अस्यसोमस्यपीतये असकृद्व्याख्यातम् ॥ उभादेवा सुपांसुलुगित्याकारः । दिविस्पृशा हलदन्तात्सप्तम्या संज्ञायामित्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्रवायू इन्द्रश्चवायुश्चेतिद्वन्द्वः उभयत्रवायोःप्रतिषेधोवक्तव्यइत्यानङोनिषेधः देवताद्वन्द्वेचेतिप्राप्तस्योभयपदप्रकृतिस्व-

१ तीव्राः तिर्जानिशाने रक्दीर्घत्वं जस्यत्र इतिऋजेन्द्रेत्यत्रमनोरमा.

त्वस्यनोत्तरपदेनुदात्तादौ इतिनिषेधात्समासान्तोदात्तत्वमवशिष्यते। हवामहे ह्वेञ्स्पर्धायां शब्देच बहुलंछन्दसीतिसंप्रसारणं संप्रसारणाच्चेतिपरपूर्वत्वं शप् गुणावादेशौ शपःपित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणपदस्याद्युदात्तत्वेप्राप्ते तिङ्ङतिङइतिआष्टमिकोनिघातः। अस्य ऊडिदमित्यादिनापष्ठ्याउदात्तत्वम्। पीतये पानाय स्थागापापचइतिभावेक्तिन् घुमास्थेतीत्वं व्यत्ययेनान्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

इन्द्रवायूमनोजुवाविप्राहवन्तऊतये। सहस्राक्षाधियस्पती ॥ ३ ॥

इन्द्रवायू इति। मनःऽजुवा। विप्राः। हवन्ते। ऊतये।
सहस्रऽअक्षा। धियः। पती इति ॥ ३ ॥

विप्रामेधाविनऋत्विग्यजमानाः ऊतयेरक्षणार्थमिन्द्रवायूहवन्तेआह्वयन्ति कीदृशौ मनोजुवौ मनइववेगयुक्तौ सहस्राक्षा सहस्रनयनयुक्तौ यद्यपीन्द्रएवसहस्राक्षः तथापिछत्रिन्यायेन वायुरपितथोच्यते धियस्पतीकर्मणोबुद्धेर्वापालकौ। मनोजुवा जवतिर्गतिकर्मा मनोवज्जवतइतिमनोजुवा मनइववेगयुक्तौ कृदुत्तरपदप्रकृतिस्वरत्वं सुपांसुलुगित्याकारः। विप्राः औणादिकोरन्प्रत्ययान्तआद्युदात्तः। ऊतये ऊतियूतीत्यादिनाक्तिनउदात्तत्वम्। सहस्राक्षासहस्रमक्षीणि ययोस्तौ बहुव्रीहौसक्थ्यक्ष्णोः इतिषच्समासान्तः बहुव्रीहिस्वरेप्राप्ते षचःसमासान्तप्रत्ययस्यसतिशिष्टत्वात् चितइत्यन्तोदात्तत्वम्। धियः सावेकाचइतिङसउदात्तत्वं षष्ठ्याःपतिपुत्रेतिसंहितायांविसर्जनीयस्यसकारः। पतीइत्यन्तःआद्युदात्तः ॥ ३ ॥

चतुर्विंशकेहनिप्रातःसवनेमैत्रावरुणशस्त्रेमित्रंवयंहवामहइतितृचःपळहस्तोत्रियः चतुर्विंशइतिखण्डेसूत्रितम्—आनोमित्रावरुणामित्रंवयंहवामहइति। अभिप्लवषडहेप्रातःसवनेमैत्रावरुणस्यायंतृचआवापार्थः अभिप्लवपृष्ठ्याहानीतिखण्डेसूत्रितम्—परिशिष्टानावापानुद्धृत्यमित्रंवयंहवामहइति। मैत्रावरुणस्यमित्रंवयंहवामहइत्येषाप्रातःसवनेप्रस्थितयाज्या प्रशास्ताब्राह्मणाच्छंसीत्युपक्रम्यइदंतेसोम्यंमधुमित्रंवयंहवामहेइतिसूत्रितम्।

तामेतांसूक्तेचतुर्थीमृचमाह—

मित्रंवयंहवामहेवरुणंसोमपीतये। जज्ञानापूतदक्षसा ॥ ४ ॥

मित्रम्। वयम्। हवामहे। वरुणम्। सोमऽपीतये। जज्ञाना।
पूतऽदक्षसा ॥ ४ ॥

वयमनुष्ठातारः सोमपीतये सोमपानार्थं मित्रंवरुणंचोभावाह्वयामः कीदृशावुभौ जज्ञाना कर्मप्रदेशेप्रादुर्भवन्तौ पूतदक्षसाशुद्धबलौ ॥ वरुणं वृञ्वरणे कृवृदारिभ्यउनन् नित्वादाद्युदात्तः । सोमपीतये दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । जज्ञाना जनीप्रादुर्भावे छन्दसि लिट् तस्यलिटःकानज्वा इतिकानजादेशः गमहनेत्यादिनाउपधालोपः तस्य अचःपरस्मिन्निति स्थानिवद्भावाज्जन्शब्दस्यद्विर्वचनं स्तोश्चुनाश्चुरितिनकारस्यञकारः चितइत्यन्तोदात्तत्वं पूर्ववदाकारः । पूतदक्षसा पूञ्पवने निष्ठेतिक्तः श्र्युकःकितीतीट्प्रतिषेधः पूतंदक्षोययोस्तौ बहुव्रीहौप्रकृत्येतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

ऋ॒तेन॒ यावृ॑ता॒वृधा॑वृ॒तस्य॒ ज्योति॑ष॒स्पती॑ । ता मि॒त्रावरु॑णा हुवे ॥५॥ ८॥

ऋ॒तेन॑ । यौ । ऋ॒त॒ऽवृधौ॑ । ऋ॒तस्य॑ । ज्योति॑षः । पती॒ इति॑ ।
ता । मि॒त्रावरु॑णा । हु॒वे॒ ॥ ५ ॥ ८ ॥

यौमित्रावरुणौ ऋतेन सत्यवचनेन यजमानानुग्रहकारिणा ऋतावृधौ ऋतमवश्यंभावितयासत्यंकर्मफलंतस्यवर्धकौ ऋतस्यसत्यस्य प्रशस्तस्यज्योतिषः प्रकाशस्यपती पालकौ श्रुत्यन्तरे मित्रावरुणयोरदितिपुत्रत्वेनश्रुतत्वाद्द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिःपालकत्वंयुक्तं श्रुत्यन्तरेच अष्टौपुत्रासोअदितेरित्युपक्रम्य मित्रश्चवरुणश्चेत्यादिकमाम्नातम् । तामित्रावरुणा तथाविधौ मित्रावरुणौ हुवेआह्वयामि ॥ ऋतावृधौ वृधुवृद्धौ क्विप्चेतिक्विप् अन्येषामपिदृश्यतइतिदीर्घः कृदुत्तरपदप्रकृतिस्वरत्वम् । ज्योतिषः द्युतदीप्तौ द्युतेरिसिन्नादेश्चजइतिइसिन्प्रत्ययोनित्वादाद्युदात्तः षष्ठ्याःपतिपुत्रेतिसंहितायां विसर्जनीयस्यसः षत्वम् । मित्रावरुणा देवताद्वन्द्वेचेत्यानङ् देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वं सुपांसुलुगितिपूर्वसवर्णदीर्घआकारः । हुवे ह्वेञ् आत्मनेपदोत्तमपुरुषैकवचनेसंप्रसारणे परपूर्वत्वेचकृते बहुलंछन्दसीतिशपोलुक् टेरेत्वं गुणप्राप्ते क्ङितिचेतिप्रतिषेधः उवङादेशः तिङ्ङतिङइतिनिघातः ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेष्टमोवर्गः ॥ ८ ॥

षष्ठीमृचमाह—

वरु॑णः प्रावि॒ता भु॑वन्मि॒त्रो विश्वा॑भिरू॒तिभिः॑ । कर॑तां नः सु॒राध॑सः ॥६॥

वरु॑णः । प्र॒ऽअ॒वि॒ता । भु॒व॒त् । मि॒त्रः । विश्वा॑भिः । ऊ॒तिऽभिः॑ ।
कर॑ताम् । नः॒ । सु॒ऽराध॑सः ॥ ६ ॥

अयं वरुणोस्माकंमाविताभुवत् प्रकर्षेणरक्षकोभवतु मित्रश्च विश्वाभिरूतिभिः सर्वाभीरक्षाभिः माविताभुवत् तावुभावपि नोस्मान् सुराधसः प्रभूतधनयुक्तान् करतां कुरुताम् ॥ अविता तृचश्चित्त्वादन्तोदात्तत्वं मादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेवशिष्यते। भुवत् भूसत्तायां लेटस्तिप् लेटोडाटौ इत्यडागमः इतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपोलुक् गुणेप्राप्ते भूसुवोस्तिङीतिप्रतिषेधः उवङादेशः तिङ्ङतिङइतिनिघातः। विश्वाभिः अशूप्रुषीत्यादिनाक्वन्नन्तोविश्वशब्दआद्युदात्तः टाप्सुपोरनुदात्तत्वात्तदेवशिष्यते। ऊतिभिः ऊतियूतीत्यादिनाक्तिन्नुदात्तः। करतां कृञ्करणे भौवादिकः लोटः तस् तसस्तां कर्तरिशप् गुणोरपरत्वं शपःपित्त्वादनुदात्तत्वं तिङश्च लसार्वधातुकस्वरेणधातुस्वरःशिष्यते। सुराधसः राधसाधसंसिद्धौ राध्नोत्यनेनेतिराधोधनं शोभनंराधोयेषांते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेप्राप्ते नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वंप्राप्तं सोर्मनसीअलोमोषसी इत्युत्तरपदाद्युदात्तत्वेनबाध्यते ॥ ६ ॥

सप्तमीमृचमाह—

मरुत्वन्तंहवामहइन्द्रमासोमपीतये। सजूर्गणेनतृंपतु ॥ ७ ॥

मरुत्वन्तम्। हवामहे। इन्द्रम्। आ। सोमऽपीतये। सऽजूः। गणेन। तृंपतु ॥ ७ ॥

मरुत्वन्तं मरुद्भिर्युक्तमिन्द्रं सोमपीतयेसोमपानाय आहवामहे आह्वयामः सचेन्द्रोगणेनमरुत्समूहेन सजूःसहतृंपतुतृप्तोभवतु॥मरुतोस्यसन्तीतिमरुत्वान् झयइतिमतुपोवत्वं तसौमत्वर्थेइतिभसंज्ञयापदसंज्ञायाबाधितत्वात् जश्त्वाभावः मतुप्सुपौपित्त्वादनुदात्तौ ननु ह्रस्वनुड्भ्यां मतुप् इतिमतुपउदात्तत्वेनभवितव्यंस्वरविधौव्यञ्जनमविद्यमानवदितितकारस्याविद्यमानवत्त्वेन ह्रस्वात्परत्वात् न ह्रस्वनुड्भ्यामित्यत्र नुड्ग्रहणसामर्थ्यादविद्यमानपरिभाषानाश्रीयतइतिवृत्तावुक्तं अतोमरुच्छब्दस्यस्वरएवशिष्यते। सजूः जुषीप्रीतिसेवनयोः संपदादिलक्षणःक्विप् समानाप्रीतिर्यस्येतिबहुव्रीहिः समानस्यच्छन्दसीतिसभावःससजुषोरुरितिरुत्वं र्वोरुपधायादीर्घः बहुव्रीहिस्वरेप्राप्तेत्रिचक्रादीनांछन्दसीत्युत्तरपदान्तोदात्तत्वम्। तृंपतु तृपतृंपतृप्तौ तुदादिभ्यःशः शेतृंफादीनामितिनुमागमः ॥ ७ ॥

अष्टमीमृचमाह—

इन्द्रज्येष्ठामरुद्गणादेवासःपूषरातयः। विश्वेममश्रुताहवम् ॥ ८ ॥

इन्द्रऽज्येष्ठाः । मरुत्ऽगणाः । देवासः । पूषऽरातयः । विश्वे । मम । श्रुत । हवम् ॥ ८ ॥

हेदेवासः इन्द्रमरुद्रूपाविश्वेसर्वेयूयं ममहवमाह्वानंश्रुतशृणुत कीदृशाःइन्द्रज्येष्ठाः इन्द्रोज्येष्ठोमुख्योयेषुते तथाविधाः मरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्योदेवोरातिर्दाता येषामिन्द्रमरुतांतेपूषरातयः ॥ इन्द्रज्येष्ठाः आमन्त्रिताद्युदात्तत्वं पादादित्वादनिघातः । मरुद्गणाः विभाषितंविशेषवचनेबहुवचनमितिपूर्वस्याविद्यमानवत्त्वादनिघातः । देवासः पूषरातयः पूर्ववत् । श्रुत श्रुश्रवणे लोण्मध्यमबहुवचनं थ तस्थस्थमिपामितितादेशः व्यत्ययेनशप् बहुलंछन्दसीतिशपोलुक् सार्वधातुकार्धधातुकयोरितिगुणेप्राप्तेग्क्ङितिचेतिप्रतिषेधः द्व्यचोतस्तिङइतिदीर्घः । हवं ह्वेञ्स्पर्धायांशब्देच भावेनुपसर्गस्येत्यप् संप्रसारणं परपूर्वत्वं गुणावादेशौ अपःपित्त्वादनुदात्तत्वं धातुस्वरःशिष्यते ॥ ८ ॥

नवमीमृचमाह—

हतवृत्रंसुदानवइन्द्रेणसहसायुजा । मानोदुःशंसईशत ॥ ९ ॥

हत । वृत्रम् । सुऽदानवः । इन्द्रेण । सहसा । युजा । मा । नः । दुःऽशंसः । ईशत ॥ ९ ॥

हेसुदानवः शोभनदानयुक्ताः मरुद्गणाः सहसाबलवता युजायोग्येनेन्द्रेणसहवृत्रं शत्रुं हतनाशयत दुःशंसः दुष्टेनशंसनेनकीर्तनेनयुक्तोवृत्रोनोस्मान् प्रतिमेशत समर्थोमाभूत् ॥ हत हनहिंसागत्योः लोटस्थ तस्यत अदिप्रभृतिभ्यःशपइतिशपोलुक् अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः । सुदानवः डुदाञ्दाने दाभाभ्यांनुरित्यौणादिकोनुप्रत्ययः मादिसमासेआमन्त्रितनिघातः । युजा युजिर्योगे ऋत्विगित्यादिनाक्विन् सावेकाचइतितृतीयैकवचनस्योदात्तत्वम् । दुःशंसः ईषद्दुःसुष्विति खल् ञ्नितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । ईशत ईशऐश्वर्ये माङ्लिङ्प्राप्ते छन्दसिलुङ्लङ्लिटइतिव्यत्ययेनलङ् तस्यतः बहुलंछन्दसीतिशपोलुगभावः नमाङ्योगेइत्याडागमाभावः तिङ्ङतिङइतिनिघातः ॥ ९ ॥

दशमीमृचमाह—

विश्वान्देवान्हवामहेमरुतःसोमपीतये । उग्राहिपृश्निमातरः ॥ १० ॥ ९ ॥

विश्वा॑न् । दे॒वान् । ह॒वा॒म॒हे॒ । म॒रुतः॑ । सोम॑ऽपीतये । उ॒ग्राः । हि । पृश्नि॑ऽमातरः ॥ १० ॥ ९ ॥

मरुतोमरुत्संज्ञकान् विश्वान्सर्वान्देवान् सोमपीतयेहवामहे सोमपानार्थमाह्वयामः तेच मरुतः उग्राः शत्रुभिरसह्यबलाः पृश्निमातरः पृश्नेर्नानावर्णयुकायाभूमेःपुत्राः हिशब्दः प्रसिद्ध्यर्थः ब्राचमसिद्धिः पृश्नेःपुत्राइतिमन्त्रान्तरादवगन्तव्या ॥ पृश्निर्मातायेषांते पृश्निशब्दो- घृणिपृश्निरित्युणादावाद्युदात्तोनिपातितः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

इतिप्रथमस्यद्वितीयेनवमोवर्गः ॥ ९ ॥

एकादशीमृचमाह—

जय॑तामिव तन्य॒तुर्म॒रुता॑मेति धृष्णु॒या । यच्छुभं॑ या॒थना॑ नरः ॥ ११ ॥

जय॑ताम्ऽइव । त॒न्य॒तुः । म॒रुता॑म् । ए॒ति॒ । धृ॒ष्णु॒ऽया । यत् । शुभ॑म् । या॒थन॑ । न॒रः॒ ॥ ११ ॥

मरुतांदेवानां तन्यतुःशब्दः धृष्णुया धार्ष्ट्ययुक्तःसन्नेतिगच्छति केषामिव जयतांविजययुक्तानां शूराणांभटानामिव हेनरोनेतारोमरुतोयूयं यदा शुभंशोभनंदेवयजनं याथन प्राप्नुथ तदात्वदीयःशब्दोगच्छतीतिपूर्वत्रान्वयः ॥ तन्यतुः तनुविस्तारे ऋतन्यञ्जीत्यादिना यतुच्प्रत्ययः । धृष्णुया ञिधृषाप्रागल्भ्ये असिगृधिधृषिक्षिपेःक्नुरितिक्नुः सुपांसुलुगिति सोर्याजादेशः कित्त्वादन्तोदात्तः । याथन तप्तनप्तनथनाश्चेतिथनादेशः यच्छब्दयोगा- न्निघाताभावः ॥ ११ ॥

द्वादशीमृचमाह—

ह॒स्का॒राद्वि॒द्युत॒स्पर्यतो॑ जा॒ता अ॑वन्तु नः । म॒रुतो॑ मृळयन्तु नः ॥ १२ ॥

ह॒स्का॒रात् । वि॒ऽद्युतः॑ । परि॑ । अतः॑ । जा॒ताः । अ॒व॒न्तु॒ । नः॒ । म॒रुतः॑ । मृ॒ळ॒य॒न्तु॒ । नः॒ ॥ १२ ॥

हस्कारादीप्तिकारात् विद्युतोविशेषेणद्योत्यमानात् अतःअन्तरिक्षात्परिजाताः सर्वतउत्पन्नाः मरुतोनोस्मानवन्तुरक्षन्तु तथाविधामरुतोनोस्मान्मृळयन्तुसुखयन्तु ॥ हस्कारात् हसेहसने अत्रतुप्रकाशमात्रेवर्तते अस्मात्संपदादिलक्षणःक्विप् अस्मिन्नुपपदे डुकृञ्करणेइत्यस्मा-

१ ऋ० ४. ३. २३. ।

त्व कर्मण्यण् इत्यणूप्रत्ययः तत्पुरुषेतुल्यार्थेत्यादिनापूर्वपदप्रकृतिस्वरत्वेप्राप्ते गतिकारकेत्यादिनाकृदुत्तरपदप्रकृतिस्वरत्वं अतःकृकमीत्यादिनाविसर्जनीयस्यसत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह–

आपूषञ्चित्रबर्हिषमाघृणेधरुणंदिवः। आजानष्टंयथापशुम् ॥ २३ ॥

आ। पूषन्। चित्रऽबर्हिषम्। आघृणे। धरुणम्। दिवः।
आ। अज। नष्टम्। यथा। पशुम् ॥ १३ ॥

हेपूषन् चित्रबर्हिषं विचित्रैर्दर्भैर्युक्तं धरुणंयागस्यधारकंसोमंदिवआ द्युलोकादाहरेतिशेषः पूषाविशेष्यते आघृणे आगतदीप्तियुक्त तत्रदृष्टान्तः हेअज गमनशील यथालोकेनष्टंपशुंमहारण्यादावन्वीक्ष्यकश्चिदाहरतितद्वत् ॥ आघृणे घृक्षरणदीप्त्योरित्यस्माद्घृणिपृश्नीतिनिप्रत्ययोनिपातितः ऋवर्णाच्चेतिवक्तव्यमितिणत्वं प्रादिसमासः आमन्त्रिताद्युदात्तत्वम्। धरुणं धृञ्धारणेअस्माद्ण्यन्ताद्धातोरर्जैर्णिलुक्चेत्युनन्प्रत्ययः व्यत्ययेननित्स्वराभावेप्रत्ययस्वरः। दिवः ऊडिदमित्यादिनापञ्चम्याउदात्तत्वम्। अज अजगतिक्षेपणयोः पचादित्वादच् ॥ १३ ॥

चतुर्दशीमृचमाह–

पूषाराजानमाघृणिरपगूळ्हंगुहाहितम्। अविन्दच्चित्रबर्हिषम् ॥ १४ ॥

पूषा। राजानम्। आघृणिः। अपऽगूळ्हम्। गुहा। हितम्।
अविन्दत्। चित्रऽबर्हिषम् ॥ १४ ॥

आघृणिः पूषाराजानं सोममविन्दत् अलभत कीदृशं अपगूळ्हं अत्यन्तंगूढं तत्रहेतुः गुहाहितं गुहासदृशेदुर्गमेद्युलोकेस्थितं तथाचित्रबर्हिषम् ॥ अपगूळ्हं गुहूसंवरणे निष्ठेतिकर्मणिक्तः होढइतिढत्वं झषस्तथोर्धोधइतिधकारः ष्टुत्वढ्लोपदीर्घाः समासे गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। गुहा सुपांसुलुगितिसप्तम्यालुक्। हितं निष्ठायांदधातेर्हिः ॥ १४ ॥

पञ्चदशीमृचमाह–

उतोसमह्यमिन्दुभिःषड्युक्ताँअनुसेषिधत्। गोभिर्यवंनचर्कृषत् ॥ १५ ॥ १० ॥

उतो इति। सः। मह्यम्। इन्दुऽभिः। षट्। युक्तान्।
अनुऽसेसिधत्। गोभिः। यवम्। न। चर्कृषत् ॥ १५ ॥ १० ॥

उतो अपिच सपूपामस्वयजमानाय इन्दुभिः यागहेतुभिः सोमैर्युक्तान् पड्सन्नादीन् क्रतून् अनुसेषिधत् अनुक्रमेणपुनःपुनर्नयत् वर्ततइतिशेषः तत्रदृष्टान्तः—गोभिर्बलीवर्दैर्यवं चर्कृषत् नशब्दउपमार्थः यथायवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनःकर्षतितद्वत् ॥ मह्यं ङयिचेत्याद्युदात्तत्वम् । इन्दुभिः उन्दीक्लेदने उन्देरिचादेरितिउप्रत्ययः उकारस्येकारादेशश्च निदित्यनुवृत्तेराद्युदात्तत्वम् । युक्तान् दीर्घादटिसमानपादेइतिसंहितायां नकारस्यरुत्वं आतोटिनित्यमितिसानुनासिकआकारः । सेषिधत् षिधुगत्यां धातोरेकाचइतियङ् यङोचिच इतितस्यलुक् प्रत्ययलक्षणेन सन्यङोरितिद्विर्भावः हलादिशेषः गुणोयङ्लुकोरित्यभ्यासस्यगुणः इणकोरितिषत्वं सनाद्यिन्ताधातुसंज्ञायां लटःशतृ कर्तरिशप् अदादिवच्चेतिवचनाच्छपोलुक् नाभ्यस्ता-च्छतुः इतिनुम्प्रतिषेधः प्रत्ययस्वरेप्राप्तेअभ्यस्तानामादिरित्याद्युदात्तत्वम् । गोभिः सावेकाचइतिभिसउदात्तत्वेप्राप्ते नगोश्वन्नितिप्रतिषेधः । चर्कृषत् कृषविलेखने यङ्लुकिद्विर्भावहलादिशेषोरत्वचर्त्वानि रुग्रिकौचलुकि इत्यभ्यासस्यरुगागमः अस्माद्यङ्लुगन्ताल्लेटस्तिप् इतश्चलोपः लेटोडाटावित्यडागमः अदिप्रभृतिभ्यः शपइतिशपोलुक् लघूपधगुणेप्राप्ते नाभ्यस्तस्याचिपितीतिनिषेधः तिङ्ङतिङइतिनिघातः ॥ १५ ॥

॥ इतिप्रथमस्यद्वितीयेदशमोवर्गः ॥ १० ॥

अपोनप्त्रीयेएकधनास्वानीतासुस्वयमन्वगच्छन्अंबयइतिद्वेअनुब्रूयात् तृतीयया अपोदेवीरित्यनयैकधनासुहविर्धानंप्रविष्टासु स्वयमनुप्रविशेत् तथैवसूत्रितम्—अंबयोयन्त्यध्वभिरिति तिसृभिरुत्तमयानुप्रपद्येतेति ।

अस्मिन्स्तृचेप्रथमांत्र्यृचेषोडशीमृचमाह—

अ॒म्बयो॑ य॒न्त्यध्व॑भिर्जा॒मयो॑ अध्वरीय॒ताम् । पृ॒ञ्च॒तीर्मधु॑ना॒ पयः॑ ॥ १६ ॥

अ॒म्बयः॑ । य॒न्ति॒ । अध्व॑ऽभिः । जा॒मयः॑ । अ॒ध्व॒रि॒ऽय॒ताम् । पृ॒ञ्च॒तीः । मधु॑ना । पयः॑ ॥ १६ ॥

अध्वरीयतां अध्वरमात्मनइच्छतां अस्माकं अंबयोमातृस्थानीयाआपः तथाचकौषीतकिब्राह्मणेसमाम्नायते—अंबयोयन्त्यध्वभिरित्यापोवाअंबयइति । ताआपः अध्वभिर्देवयजनमार्गैर्यन्ति गच्छन्ति कीदृश्यआपः जामयोहितकारिण्योबन्धवः तथामधुनामाधुर्यरसेनयुक्तंपयःपृञ्चतीः गवादिपुष्टोजयन्त्यः ॥ अंबयः रबिल्टविअविशब्दे एतस्मात् अचइरितिप्रकरणेबाहुलकात् इः प्रत्ययस्वरः । अध्वभिः अदेर्ध्वचेतिक्वनिप् पित्त्वात्प्रत्ययस्यानुदात्तत्वेधातुस्वरः । जामयः

जमुअदने बाहुलकात् इः । अध्वरीयतां अध्वरशब्दात्सुपआत्मनःक्यजितिक्यच् क्यचिचेतीत्वं अपुत्रादीनामितिवक्तव्यमितिवचनात् नच्छन्दस्यपुत्रस्येतीत्वनिषेधाभावः सर्वेविधयश्छन्दसि विकल्प्यन्तेइतिकव्यध्वरपृतनस्येत्यकारलोपोपिनभवति क्यच्प्रत्ययान्तधातोर्लटःशतृ शपः पित्त्वादनुदात्तत्वं शतुश्चलसार्वधातुकस्वरेण तयोःक्यचासहैकादेशः एकादेशउदात्तेनोदात्तः इत्यन्तोदात्तत्वेसति शतुरनुमोनद्यजादीइतिषष्ठ्याउदात्तत्वम् । पृञ्चतीः पृचीसंपर्के लटः शतृ रुधादिभ्यःश्नम् श्नसोरल्लोपः अनुस्वारपरसवर्णौ उगितश्चेतिङीप् वाछन्दसीतिपूर्वसवर्णदीर्घत्वं शतुरनुमइतिङीपउदात्तत्वम् ॥ १६ ॥

सप्तदशीमृचमाह—

अमूर्याउप सूर्येयाभिर्वासूर्यःसह । तानोहिन्वन्त्वध्वरम् ॥ १७ ॥

अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः । नः । हिन्वन्तु । अध्वरम् ॥ १७ ॥

या अमूरापः सूर्ये उपसमीपेनावस्थिताः आपःसूर्येसमाहिताइतिश्रुत्यन्तरात् वा अथवा सूर्योयाभिरद्भिःसहवर्तते पूर्वत्रापांप्राधान्यं उत्तरत्रसूर्यस्येतिविशेषः तास्तादृश्यआपोनोस्मदीयमध्वरंयागं हिन्वन्तु प्रीणयन्तु ॥ याभिः सावेकाचइतिविभक्त्युदात्तस्य नगोश्वन्सावर्णेतिप्रतिषेधः । शेषाप्रक्रियास्पष्टा ॥ १७ ॥

अष्टादशीमृचमाह—

अपोदेवीरुपह्वयेयत्रगावःपिबन्तिनः । सिन्धुभ्यःकर्त्वंहविः ॥ १८ ॥

अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ १८ ॥

नोस्मदीयागावोयत्रयास्वप्सुपिबन्तिपानंकुर्वन्ति ताअपोदेवीरुपह्वये आह्वयामि सिन्धुभ्यः स्यन्दनशीलाभ्योऽद्भ्योदेवताभ्यः हविः कर्त्वं अस्माभिः कर्तव्यम् ॥ अपः ऊडिदमित्यादिनाशसउदात्तत्वम् । पिबन्ति पाघ्रेत्यादिनापिबादेशः शपःपित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणाद्युदात्तत्वं निपातैर्यद्यदीत्यादिना निघाताभावः । कर्त्वं डुकृञ्करणे कृत्यार्थेतवेकेन्केन्यत्वनइतिकर्मणित्वन्प्रत्ययः गुणः नित्स्वरेणाद्युदात्तत्वम् ॥ १८ ॥

---

१ तै० आ० प्रथमप्रपाठके.

एकोनविंशीमृचमाह—

अप्स्व१न्तरमृतमप्सुभेषजमपामुतप्रशस्तये। देवाभवतवाजिनः ॥१९॥

अप्ऽसु। अन्तः। अमृतम्। अप्ऽसु। भेषजम्। अपाम्।
उत। प्रऽशस्तये। देवाः। भवत। वाजिनः ॥ १९ ॥

अप्सुजलेषु अन्तर्मध्ये अमृतं पीयूषंवर्तते वस्याविकारत्वात् अमृतंवाआपइतिश्रुत्यन्तराच्च तथैवाप्सुभेषजमौषधंवर्तते क्षुद्रोगनिवर्तकास्यान्नस्यापक्कार्यत्वात् उतअपिच तादृशीनामपांदेवतानां प्रशस्तये प्रशंसार्थं हेदेवाऋत्विजादयोब्राह्मणाःएतेवैदेवाःप्रत्यक्षंयद्ब्राह्मणाइतिश्रुत्यन्तरात्। वाजिनोवेगवन्तोभवत शीघ्रंस्तुतिंकुरुतेत्यर्थः॥ अप्सु ऊडिदमित्यादिनासप्तम्याअनुदात्तत्वं संहितायां उदात्तस्वरितयोर्यणःस्वरितइतिस्वरितत्वम्। अमृतं नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम्। प्रशस्तयेबादीचनितीतिगतेःप्रकृतिस्वरत्वम्। भवत आमन्त्रितंपूर्वमविद्यमानवदिति पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः ॥ १९ ॥

कारीर्यामुत्तरस्याज्यभागस्यअप्सुमइत्येषानुवाक्या वर्षकामेतिखण्डे—अप्स्वग्नेसधिष्टवाप्सुमेसोमोअब्रवीदितिसूत्रितम्।

विंशीमृचमाह—

अप्सुमेसोमोअब्रवीदन्तर्विश्वानिभेषजा। अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥२०॥ ११ ॥

अप्ऽसु। मे। सोमः अब्रवीत्। अन्तः। विश्वानि। भेषजा। अग्निम्।
च। विश्वऽशंभुवम्। आपः। च। विश्वऽभेषजीः ॥ २०॥ ११ ॥

अप्सुजलेषु अन्तर्मध्ये विश्वानिभेषजा सर्वाण्यौषधानिसन्तीति मेमह्यंमन्त्रदर्शिनेमुनये सोमोदेवोऽब्रवीत् तथाविश्वशंभुवं सर्वस्यजगतः सुखकरमेतन्नामकंचाग्निंचाप्सुवर्तमानं सोमोऽब्रवीत् तथाचतैत्तिरीयाअग्नेस्त्रयोज्यायांसइत्यनुवाके—सोपःप्राविशदित्यग्नेरप्सुप्रवेशमामनन्ति दृतागुल्मवृक्षमूलादीनामोषधीनां वृष्टिजन्यत्वेनजलवर्तित्वंप्रसिद्धं विश्वभेषजीः विश्वानिभेषजानियासुतयाविधाआपोप्यब्रवीत् ॥ भेषजा सुपांसुलुगित्याकारः । विश्वशं-

१ तै०सं. ५. ६. २. । २ तै० सं० १. ७. २. । ३ तै० सं० २. ६. ६. ।

भुवं भयतेरन्तर्भावितण्यर्थात्क्विप् व्यत्ययेनपूर्वपदप्रकृतिस्वरत्वं यद्वा विश्वेसर्वेपिव्यापाराः सुखकरायस्य बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । आपः कर्मणिशसिमाप्तेव्यत्ययेन जस् अप्तृन्नित्यादिनोपधादीर्घः । विश्वभेषजीः विश्वशंभुरितिवत् ॥ २० ॥

॥ इतिप्रथमस्यद्वितीयेएकादशोवर्गः ॥ ११ ॥

एकविंशीमृचमाह—

आपः॑पृणी॒तभे॑ष॒जंवरू॑थंत॒न्वे॒३॑मम॑ । ज्योक्च॒सूर्यं॑दृ॒शे ॥ २१ ॥

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ २१ ॥

हेआपः ममतन्वेशरीरार्थंवरूथंरोगनिवारकंभेषजमौषधंपृणीतपूरयत किंच ज्योक्चिरं सूर्यंदृशेद्रष्टुं नीरोगावयंशक्तामेतिशेषः ॥ पृणीत पृपालनपूरणयोः लोण्मध्यमबहुवचनं थ तस्य तस्थस्थमिपामितितादेशः क्र्यादिभ्यःश्ना प्वादीनांह्रस्वइतिह्रस्वः ईहल्यघोरितीत्वं ऋवर्णाच्चेतिणत्वं सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतितिङ्स्वरःशिष्यते आपइत्यस्यामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्त्वेपादादित्वान्निघाताभावः। वरूथं वृञ्वरणे जॄवृञ्भ्यामूथन् नित्त्वादाद्युदात्तः । तन्वे ङितिह्रस्वश्चेतिनदीसंज्ञापाक्षिकीत्याडागमाभावः उदात्तयणोहल्पूर्वादितिविभक्त्युदात्तत्वेमाप्तेव्यत्ययेनोदात्तस्वरितयोरितिस्वरितत्वम् । दृशे दृशेविख्येचेति तुमर्थेनिपात्यते ॥ २१ ॥

पशोमार्जने इदमापःप्रवहतेत्येपाविनियुक्ता हुतायांवपायामितिखण्डेसूत्रितम्—इदमापःप्रवहतेति । एषैवावभृथेष्टौस्नानेविनियुक्ता पत्नीसंयाजैश्चरित्वेतिखण्डे—इदमापःप्रवहतसुमित्र्यानआपओषधयःसन्त्विविसूत्रितम् ।

तामेतांसूक्तेद्वाविंशीमृचमाह—

इ॒दमा॑पः॒प्रव॑हत॒यत्किंच॑दुरि॒तंमयि॑ । यद्वा॒हम॑भिदु॒द्रोह॒यद्वा॑शे॒प उ॒तानृ॑तम् ॥ २२ ॥

इ॒दम् । आ॒पः॒ । प्र । व॒ह॒त॒ । यत् । किम् । च॒ । दुः॒ऽइ॒तम् । मयि॑ । यत् । वा॒ । अ॒हम् । अ॒भि॒ऽदु॒द्रोह॑ । यत् । वा॒ । शे॒पे । उ॒त । अनृ॑तम् ॥ २२ ॥

मयियजमानेयत्किंचदुरितं अज्ञानान्निष्पन्नं वा अथवा अहंयजमानःअभिदुद्रोहसर्वतोबुद्धिपूर्वकंद्रोहंकृतवानस्मि वा अथवा शेपेसाधुजनंशप्तवानस्मीतियदस्ति उतअपिच अनृतमुक्तवानितियदस्तितदिदंसर्वमपराधजातं हेआपः प्रवहत मत्तोपनीयप्रवाहेणान्यतोनयत॥ मयि मपर्यन्तस्य त्वमावेकवचनेइतिमादेशेकृते अतोगुणेइतिपररूपेचसतियोचीतिइकारस्ययकारादेशः एकादेशस्वरेणमकारात्परस्याकारस्योदात्तत्वम्। दुद्रोह द्रुहजिघांसायां णलि गुणे द्विर्वचनहस्वहलादिशेषाः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वं यद्वृत्तयोगान्निघाताभावः । शेपे शपआक्रोशे लिटि व्यत्ययेनतङ् उत्तमैकवचनमिट् टेरेत्वं अतएकहल्मध्येइत्येत्वाभ्यासलोपौ प्रत्ययस्वरेणान्तोदात्तत्वं पूर्ववन्निघाताभावः॥ २२॥

पश्चादाहवनीयोपस्थाने आपोअद्यान्वचारिषमित्येषा मनोतायैसंमेषितइतिखण्डेसूत्रितम्—एत्योपतिष्ठन्तआपोअद्यान्वचारिषमिति।

तामेतांसूक्तेत्रयोविंशीमृचमाह—

आपो॒ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि । पय॑स्वानग्न॒ आग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा ॥ २३ ॥

आपः॑ । अ॒द्य । अनु॑ । अ॒चा॒रि॒ष॒म् । रसे॑न । सम् । अ॒ग॒स्म॒हि॒ । पय॑स्वान् । अग्ने॑ । आ । ग॒हि॒ । तम् । मा॒ । सम् । सृ॒ज॒ । वर्च॑सा ॥ २३ ॥

अद्यास्मिन्दिनेअवभृथार्थमापोऽन्वचारिषंजलान्यनुप्रविष्टोस्मिप्रविश्यचरसेनजलसारेणसमगस्महि संगतास्मः हेअग्ने पयस्वान् जलेवर्तमानत्वेन पयोयुक्तस्त्वं आगहि अस्मिन्कर्मण्यागच्छ तंतादृशंस्नातंमांवर्चसावेजसासंसृजसंयोजय॥ आपः कर्मणिशसिप्राप्तेव्यत्ययेनजस्। अचारिषं चरगत्यर्थः लुङि च्लेःसिच् आर्धधातुकस्येड्वलादेरितीट् नेटीतिवृद्धिप्रतिषेधेप्राप्ते तदपवादतया अतोल्रान्तस्येत्युपधायावृद्धिः । अगस्महि समोगम्यृच्छीत्यात्मनेपदं च्लेःसिच् मन्त्रेघसेत्यादिनाच्लेर्लुग्भावश्छान्दसः एकाचउपदेशेनुदात्तादितीट्प्रतिषेधः यागमइतिसिचःकित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः। गहि लोटिगमःसिपोहिः अपित्त्वेनङित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः अतोहेरितिलुग्नभवति असिद्धवदत्राभाद इतिमलोपस्यासिद्धत्वात्॥ २३ ॥

चतुर्विंशीमृचमाह—

संमाग्नेवर्चसासृजसंप्रजयासमायुषा। विद्युर्मेअस्यदेवाइन्द्रोविद्यात्सहऋषिभिः ॥ २४ ॥ १२ ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा । विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ २४ ॥ १२ ॥

हेअग्नेवर्चसाप्रजायुर्भिर्मां संसृजसंयोजय देवाःसोमपातारः अस्यमे यजमानस्य विद्युः अनुष्ठानंजानीयुः किञ्च इन्द्रश्चऋषिभिःऋषिगणैःसहममानुष्ठानंविद्यात्जानीयात् ॥ विद्युः विदज्ञाने लिङिझेर्जुस् यासुट् लिङःसलोपइतिसकारलोपः उस्यपदान्तादितिपररूपत्वं यासुटउदात्तत्वेनैकादेशउकारोप्युदात्तः । अस्य इदमोन्वादेशइत्यशुदात्तः विभक्तिरपिसुत्वेनानुदात्ता । सहऋषिभिरित्यत्र ऋत्यकइतिप्रकृतिभावः ॥ २४ ॥

इतिप्रथमस्यद्वितीयेद्वादशोवर्गः ॥ १२ ॥

इतिप्रथमेमण्डलेपञ्चमोनुवाकः ॥ ५ ॥

प्रथममण्डलस्यषष्ठेनुवाकेसप्तसूक्तानि तत्रकस्यनूनमितिपञ्चदशर्चंप्रथमंसूक्तं अजीगर्तपुत्रस्यशुनःशेपस्यार्षंत्रैष्टुभं अभित्वादेवेतितृचोगायत्रः आद्यायाअनिरुक्तत्वात्प्रजापतिर्देवता अग्नेर्वयमित्यस्यअग्निः अभित्वादेवेत्यस्यतृचस्यसविता भगभक्तस्येत्येषाभगदेवताकावा शेषावारुण्यः तथाचानुक्रान्तम्—कस्यपञ्चोनाजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातोवारुणंतुत्रैष्टुभमादौकाप्याग्नेय्यौसावित्रस्तृचोगायत्रोस्यान्त्याभागीवेति । राजसूयेभिषेचनीयेहनिमरुत्वतीयेपरिसमाप्तेसतिएतदादिकंसूक्तसप्तकमभिषिक्तस्यपुत्रादिभिःपरिवृतस्यराज्ञःपुरस्ताद्धोत्राआख्यातव्यं तथाचसूत्रेभिहितम्—संस्थितेमरुत्वतीयेदक्षिणतआहवनीयस्यहिरण्यकशिपावासीनोभिषिक्तायपुत्रामात्यपरिवृतायराज्ञेशौनःशेपमाचक्षीतेति ब्राह्मणंचभवति—तदेतत्परःऋक्शतगाथंशौनःशेपमाख्यानंतद्धोताराज्ञेभिषिक्तायाचष्टे हिरण्यकशिपावासीनआचष्टे हिरण्यकशिपावासीनःप्रतिगृणातीति[1] ।

1 ऐ० ब्रा० ७. १८. ।

तस्मिन्सूक्ते प्रथमामृचमाह—

कस्यनूनंकतमस्यामृतानांमनामहेचारुदेवस्यनाम । कोनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच ॥ १ ॥

कस्य । नूनम् । कतमस्य । अमृतानाम् । मनामहे । चारु ।
देवस्य । नाम । कः । नः । मह्यै । अदितये । पुनः । दात् ।
पितरम् । च । दृशेयम् । मातरम् । च ॥ १ ॥

कस्येत्यनयर्चाशुनःशेपोयूपेबद्धःकांदिशीकः कंदेवमुपधावामीतिविचिकित्सति तथा चाम्नायते—हन्ताहंदेवताउपधावामीतिसप्रजापतिमेवप्रथमंदेवतानामुपससारेति । वयंशुनःशेपनामकाअमृतानां देवानांमध्येकतमस्यकिंजातीयस्यकस्यदेवस्यचारुशोभनंनाममनामहेउच्चारयामः नूनमितिविचिकित्सति कोदेवोनःअस्मान्मांमुमूर्षुंपुनरपिमह्यैमहत्यैअदितयेपृथिव्यैदाद्दद्यात् तेनदानेनाहमप्यतःसन् पितरंचमातरंचदृशेयं पश्येयं कोवैनामप्रजापतिरितिश्रुतेः कस्येतिशब्दसामान्यादनयाप्रजापतिरेवोपस्तुतइतिगम्यते ॥ कतमस्य किंशब्दात् वाबहूनांजातिपरिप्रश्नेडतमच् चितइत्यन्तोदात्तत्वम् । अमृतानां नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वेप्राप्ते नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । मनामहे मनज्ञाने व्यत्ययेनशप् पादादित्वादनिघातः । मह्यै उदात्तयणोहल्पूर्वात् इतिविभक्तेरुदात्तत्वम् । दात् गातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । दृशेयं दृशिर्प्रेक्षणे आशीर्लिङि मिपोम् दृशेरग्वक्तव्यइतिअक्प्रत्ययः शपोपवादः कित्त्वाल्लघूपधगुणाभावः लिङ्याशिष्यङित्यङिहिसति ऋदृशोऽङिगुणइतिगुणःस्यात् यासुट् सुलोपः अतोयेयः आद्गुणः यासुटःस्वरेणैकारउदात्तः मातरंचेत्यत्रचशब्दात् दृशेयमित्यनुषज्यते अतस्तदपेक्षयैपातिङ्विभक्तिःप्रथमेतिचवायोगेति ननिहन्यते ॥ १ ॥

द्वितीयामृचमाह—

अग्नेर्वयंप्रथमस्यामृतानांमनामहेचारुदेवस्यनाम । सनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच ॥ २ ॥

अग्नेः । वयम् । प्रथमस्य । अमृतानाम् । मनामहे । चारु ।
देवस्य । नाम । सः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् ।
च । दृशेयम् । मातरम् । च ॥ २ ॥

१ ऐ० ब्रा० ७. १६. । २ ऐ० ब्रा० ३. २१. ।

इत्थंप्रथमयर्चाविचिकित्सांकृत्वा प्रजापतेःसकाशात्तंदेवमग्निंनिश्चित्य अनयातुष्टाव। तथा-चश्रूयते—तंप्रजापतिरुवाचाग्निर्वैदेवानांनेदिष्ठस्तमेवोपधावेति सोग्निमुपससाराग्नेर्वयंप्रथमस्या-मृतानामित्येतयर्चेति[1]। पूर्ववद्योजना दात् ददातु दृशेयं पश्यानीत्येवमाशीःपरत्वेनपदद्वयंयो-ज्यम् ॥ २ ॥

प्रथमेछन्दोमेवैश्वदेवशस्त्रेअभित्वादेवसवितरितिसावित्रस्तृचःसूक्तस्थानीयः अथच्छ-न्दोमाइतिखण्डे—अभित्वादेवसवितःप्रेतांयज्ञस्यशंभुवेतिसूत्रितम्। अभित्वेत्येषाअग्निमन्थनेपि-विनियुक्ता प्रातर्वैश्वदेव्यामितिखण्डे—अभित्वादेवसवितर्महीद्यौःपृथिवीचनइतिसूत्रितम् श्रूयते-च—अभित्वादेवसवितरितिसावित्रीमन्वाहेति। तथामवर्ग्येप्येषैवविनियुक्ता अथोत्तरइतिखण्डे-अभित्वादेवसवितःसमीवत्संनमातृभिरितिसूत्रितं तथाग्रावस्तोत्रेपिएतस्मिन्कालेग्रावस्तुदितिख-ण्डे—मध्यमस्वरेणेदंसवनमभित्वादेवसवितरितिसूत्रितम्।

तामेतांसूक्तेतृतीयामृचमाह—

अ॒भित्वादे॑वसवित॒रीशा॑नं॒वार्या॑णाम्। सदा॑वन्भा॒गमी॑महे ॥ ३ ॥

अ॒भि। त्वा॒। दे॒व॒। स॒वि॒तः॒। ईशा॑नम्। वार्या॑णाम्। सदा॑।
अ॒व॒न्। भा॒गम्। ई॒म॒हे॒ ॥ ३ ॥

अथाग्निनामेरितः सन्सवितारमभित्वेत्यनेनतृचेनमार्थयते तथैवश्रूयते—तमग्निरुवाचस-वितावैप्रसवानामीशेतमेवोपधावेतिससवितारमुपससाराभित्वादेवसवितरित्येतेनतृचेनेति[2]।हेसदा-अवन् सदा सर्वदारक्षक हेसवितर्देव वार्याणांवरणीयानांधनानामीशानंस्वामिनं त्वात्वांप्रतिभा-गंभजनीयं धनंअभिसर्वतईमहेयाचामहे ॥ ईशानं ईशऐश्वर्ये लटःशानच् तास्यनुदात्तेदि-तिलसार्वधातुकानुदात्तत्वेधातुस्वरः। वार्याणां वृङ्संभक्तौ ऋहलोर्ण्यत् ईडवन्देत्यादिनाआ-द्युदात्तत्वम्। अवन् आमन्त्रितनिघातः। भागंकर्षात्वतइतिघञोन्तउदात्तः ॥ ३ ॥

चतुर्थीमृचमाह—

यश्चि॒द्धित॑इ॒त्थाभगः॑शशमा॒नःपु॒रानि॒दः। अ॒द्वे॒षोहस्त॑योर्द॒धे ॥ ४ ॥

यः। चि॒त्। हि। ते॒। इ॒त्था। भगः॑। श॒श॒मा॒नः। पु॒रा। नि॒दः।
अ॒द्वे॒षः। हस्त॑योः। द॒धे ॥ ४ ॥

---

१ ऐ० ब्रा० ७. १६. । २ ऐ० ब्रा० ७. १६. ।

हेसवितर्योभगोभजनीयोधनविशेषस्तेतवहस्तयोर्दधे धृतोभूव् तंधनविशेषं ईमहे इतिपूर्वान्वयः चिच्छब्दःपूजार्थे हिशब्दःप्रसिद्धौ धनस्यपूज्यत्वंसर्वत्रप्रसिद्धं वामेवपूज्यत्वप्रसिद्धिं विशदयति—इत्थाशशमानः अनेनप्रकारेणशस्यमानःस्तूयमानः धनस्तुतिप्रकारंचसर्वेजानन्ति ननुस्वकीयेधनेवैरिभिरपहृतेसतिवैरिगृहीतंधनंसर्वोलोकोनिन्दतिद्वेष्टिच अतोधनस्तुतिर्नियतेत्याशंक्याह निदःपुरा अद्वेषः निन्दायाःपूर्वस्वकीयत्वेनव्यवस्थितेसतितदानींद्वेषरहितः तस्मात्स्वकीयत्वाभिप्रायेणस्तूयमानत्वमुक्तमित्यर्थः॥ इत्था प्रकारवचनेइदमस्थमुः एतेतौरथोरितिइदमइव् सुपांसुलुगितिव्यत्ययेनविभक्तेर्डादेशः टिलोपेउदात्तनिवृत्तिस्वरेण आकारउदात्तः। शशमानः शशप्लुतगतौ इहतुस्तुत्यर्थः ताच्छील्यवयोवचनेतिताच्छीलिकश्चानश् कर्तरिशप् चितइत्यन्तोदात्तत्वम्। निदः णिदिकुत्सायां संपदादिलक्षणःक्विप् नुमभावश्छान्दसः सावेकाचइतिपञ्चम्याउदात्तत्वम् । अद्वेषः नविद्यते द्वेषोस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। दधे कर्मणिलिट् तस्यआर्धधातुकत्वेनअभ्यस्तानामादिरित्याद्युदात्तोनभवति तेनप्रत्ययस्वरएवशिष्यते यद्वृत्तयोगान्निघाताभावः॥ ४॥

पञ्चमीमृचमाह—

भर्गभक्तस्यतेवयमुदशेमतवावसा। मूर्धानंरायआरभे॥ ५॥ १३॥

भर्गऽभक्तस्य। ते। वयम्। उत्। अशेम। तव। अवसा।
मूर्धानम्। रायः। आऽरभे॥ ५॥ १३॥

हेसवितः तेत्वदीयावयंशुनःशेपनामानः भगभक्तस्यधनेनसंयुक्तस्य तवावसारक्षणेन उदशेम उत्कर्षेणव्याप्नुमः किंकर्तुं रायोधनस्यमूर्धानं उत्कर्षमारभे मारब्धुं धनिकत्वप्रसिद्ध्याव्याप्ताभूयास्मेत्यर्थः॥ भगशब्दोवृषादित्वादाद्युदात्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। अशेम अशूव्याप्तौ लुङि व्यत्ययेनपरस्मैपदं शप्। रायः ऊडिदमितिपञ्चम्याउदात्तत्वम्। आरभे कृत्यार्थेतवैकेनिति तुमर्थेकेन्प्रत्ययः नित्स्वरेणाद्युदात्तत्वम्॥ ५॥

इतिप्रथमस्यद्वितीयेत्रयोदशोवर्गः॥ १३॥

षष्ठीमृचमाह—

नहितेक्षत्रंनसहोनमन्युंवयश्चनामीपतयन्तआपुः। नेमाआपोअनिमिषंचरन्तीर्नयेवातस्यप्रमिनन्त्यभ्वम्॥ ६॥

नहि । ते । क्षत्रम् । न । सहः । न । मन्युम् । वयः । चन । अमी इति ।
पतयन्तः । आपुः । न । इमाः । आपः । अनिऽमिषम् ।
चरन्तीः । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥ ६ ॥

अथसवित्राप्रेरितःशुनःशेपएतदादिसूक्तशेषेणोत्तरेणचसूक्तेनवरुणंतुष्टाव तथाचश्रूयते—तंसवितोवाचवरुणायवैराज्ञेनियुक्तोसितमेवोपधावेतिसवरुणंराजानमुपससारातउत्तराभिरेकत्रिंशतेति[1] । हेवरुण पतयन्तः प्रौढेवियत्युत्पतन्तः अमीदृश्यमानाःवयश्चन श्येनादयःपक्षिणोपितेक्षत्रंत्वदीयंशरीरबलं नह्यापुःनैवप्राप्ताः त्वत्सदृशंशारीरबलंपक्षिणामपिनास्तीत्यर्थः तथासहः त्वदीयंपराक्रमंतवसामर्थ्यमपिनमापुः तथामन्युंत्वदीयंकोपमपिनमापुः त्वयिक्रुद्धेसतिसोढुमशक्ताइत्यर्थः अनिमिषंसर्वदाचरन्तीः प्रवाहरूपेणगच्छन्त्यइमाआपःत्वदीयंबलंनमापुः वातस्यपायेयेगतिविशेषाः त्वदीयमभ्वंवेगंनप्रमिनन्तिनहिंसन्ति अतिक्रमंकर्तुंनशक्ताइत्यर्थः तेपिनमापुरितिपूर्वेणान्वयः ॥ पतयन्तः पतगतौचुरादिरदन्तः लटःशतृ शप् गुणायादेशौ अदुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचःस्वरः । आपुः आपॢव्याप्तौ लिट्युसि द्विर्भावहलादिशेषौ,अतआदेरित्यात्वं अत्रनसहोनमन्युमित्यादिभिरापुरित्यस्यसंबन्धात् तदपेक्षयाप्राथम्याच्चादिलोपेविभाषेतिप्रथमातिङ्विभक्तिर्ननिहन्यते । चरन्तीः वाछन्दसीतिपूर्वसवर्णदीर्घः । प्रमिनन्ति मीञ्हिंसायां क्र्यादिभ्यःश्ना श्नाभ्यस्तयोरातइत्याकारलोपः मीनातेर्निगमेइतिह्रस्वत्वं प्रत्ययस्वरः तिङिचोदात्तवतीतिगतिरनुदात्तः यद्वृत्तयोगादनिघातः ॥६॥

सप्तमीमृचमाह—

अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः । नीचीनाःस्थुरुपरिबुध्नएषामस्मेअन्तर्निहिताःकेतवःस्युः॥ ७ ॥

अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते ।
पूतऽदक्षः । नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मे इति ।
अन्तः । निऽहिताः । केतवः । स्युरिति स्युः ॥ ७ ॥

पूतदक्षः शुद्धबलोवरुणोराजाअबुध्नेमूलरहितेन्तरिक्षेतिष्ठन् वनस्यवननीयस्यतेजसःस्तूपंसंघं ऊर्ध्वमुपरिदेशेददते धारयति नीचीनाःस्थुः ऊर्ध्वदेशेवर्तमानस्यवरुणस्यरश्मयस्त्य-

1 ऐ० ब्रा० ७. १६. ।

ध्याहार्यं तेह्यधोमुखास्तिष्ठन्ति एषांरश्मीनांबुध्नोमूलंउपरिविद्यतीतिविशेषः तथासतिकेतवः प्रज्ञापकाःप्राणाः अस्मेअस्मास्वन्तर्निहिताः स्थापिताःस्युः मरणंनभविष्यतीत्यर्थः ॥ अबुध्ने नविद्यतेबुध्नोमूलमस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । स्तूपं स्त्यैशब्दसंघातयोः स्त्यःसंप्रसारणमूङ्चेतिप्रत्ययः तत्सन्नियोगेनयकारस्यसंप्रसारणं परपूर्वत्वं ऊकारादेशश्च निदित्यनुवृत्तेराद्युदात्तत्वम् । ददते भौवादिकः । नीचीनाः निपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः न्यच्शब्दात्स्वार्थे विभाषाञ्चेरदिक्स्त्रियामितिखः आयन्नित्यादिनातस्यईनादेशः आयन्नादिषूपदेशिवद्वचनंस्वरसिद्ध्यर्थमितिवचनादीकारउदात्तः अचइत्यकारलोपे चावितिदीर्घत्वम् । स्थुः गातिस्थेत्यादिनासिचोलुक् आतइतिझेर्जुसादेशः उस्यपदान्तादितिपररूपत्वं बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ।अस्मे सुपांसुलुगितिसप्तम्याःशेआदेशः । निहिताः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । स्युः अस्तेर्लिङिश्नसोरल्लोपः॥७॥

अष्टमीमृचमाह—

उरुंहिराजावरुणश्चकारसूर्यायपन्थामन्वेतवाउ । अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित ॥ ८ ॥

उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् ।
अनुऽएतवे । ऊम् इति । अपदे । पादा । प्रतिऽधातवे । अकः ।
उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥

वरुणोराजासूर्यायसूर्यस्यपन्थांमार्गंउरुंविस्तीर्णं चकार हिशब्दःप्रसिद्धौ उत्तरायणदक्षिणायनमार्गस्यविस्तारःप्रसिद्धः किमर्थमेवंकृतवानितितदुच्यते—अन्वेतवाउ अनुक्रमेणोदयास्तमयौगन्तुमेव तथा अपदे पादरहितेन्तरिक्षे पादाप्रतिधातवे पादौप्रक्षेप्तुं अकःमार्गंकृतवान् पूर्वत्ररथस्यमार्गः अत्रपादयोरितिविशेषः यद्वा अपदेयूपेबद्धेनमयागंतुमशक्येभूमदेशे पादौ प्रक्षेप्तुमुपायंचन्धविमोचनरूपंकरोत्वित्यर्थः उतअपिच हृदयाविधश्चिद् शत्रोरपिअपवक्ता अपवदिता निराकर्ताभवतु ॥ चकार लित्स्वरेणआकारउदात्तः हिचेतिनिघातप्रतिषेधः । पन्थां पथिमथ्यृभुक्षामादितिद्वितीयायामपिव्यत्ययेनात्वं पथिन्शब्दस्य पतस्थचेतिनिप्रत्ययान्तत्वेन अन्तोदात्तत्वेप्राप्ते पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम् । अन्वेतवे अनुपूर्वादेतेस्तुमर्थे सेसेनसेनिति तवेप्रत्ययःतवेचान्तश्चयुगपद् इत्याद्यन्तयोरुदात्तत्वम् ।पादा सुपांसुलुगित्याकारः।

प्रतिधातवे दधातेस्तुमर्थेइतिसूत्रेणैवतवेन्प्रत्ययः तादौचनितीतिगतेःप्रकृतिस्वरत्वम् । अकः करोतेश्छन्दसिलुङ्लङ्लिटइतिलोडर्थेलङ् तस्यतिप् मन्त्रेघसेत्यादिना च्लेर्लुक् गुणोरपरत्वं हल्ङ्याब्भ्यइतितिपोलोपः अडागमः । हृदयाविधः हृञ्हरणे वृहोःपुक्दुकौचेति क्यन् व्यधताडने क्विप् नहिवृतीत्यादिनापूर्वपदस्यदीर्घत्वं कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

शतंतेराजन्भिषजःसहस्रमुर्वीगभीरासुमतिष्टेअस्तु । बाधस्वदूरेनिर्ऋतिंपराचैःकृतंचिदेनःप्रमुमुग्ध्यस्मत् ॥ ९ ॥

शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु । बाधस्व । दूरे । निःऽऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥ ९ ॥

हेराजन्वरुण तेतवशतंभिषजः सहस्रंचन्धनिवारकाणि शतसहस्रसंख्याकान्यौषधानि वैद्यावासन्ति तेतवसुमतिरस्मदनुग्रहबुद्धिः उर्वीविस्तीर्णागभीरागांभीर्योपेतास्थिरास्तु निर्ऋतिमस्मदनिष्टकारिणींनिर्ऋतिंपापदेवतां पराचैः पराङ्मुखांकृत्वा दूरेअस्मत्तोव्यवहितेदेशे स्थापयित्वा तांबाधस्व कृतंचित् अस्माभिरनुष्ठितमपिएनःपापं अस्मत्तःप्रमुमुग्धिप्रकर्षेणमुक्तं नष्टंकुरु ॥ सुमतिः तादौचेतिपूर्वपदप्रकृतिस्वरत्वेप्राप्ते मन्क्तिन्नित्यादिनोत्तरपदान्तोदात्तत्वं संहितायांविसर्जनीयसकारस्ययुष्मत्तत्ततक्षुष्वन्तःपादमितिषत्वम् । बाधस्व बाधृविलोडने शपःपित्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते । निर्ऋतिं तादौचेतिगतेःप्रकृतिस्वरत्वम् । मुमुग्धि मुच्लृमोक्षणे बहुलंछन्दसीतिश्लुः हुझल्भ्योहेर्धिः तस्यापित्वेनङित्त्वाद्गुणाभावः चोःकुरितिकुत्वम् ॥ ९ ॥

दशमीमृचमाह—

अमीयऋक्षानिहितासउच्चानक्तंददृश्रेकुहचिद्दिवेयुः । अदब्धानिवरुणस्यव्रतानिविचाकशच्चन्द्रमानक्तमेति ॥ १० ॥ १४ ॥

अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः । अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥ १० ॥ १४ ॥

अमीरात्रावस्माभिर्दृश्यमाना ऋक्षाःसप्तऋषयः तथाचवाजसनेयिनआमनन्ति—ऋक्षाइतिहस्मवैपुरासप्तऋषीनाचक्षतइति । यद्वा ऋक्षाःसर्वेपिनक्षत्रविशेषाः ऋक्षाःस्तृभिरितिनक्षत्राणामितियास्केनोक्तत्वात् । उच्चा उच्चैरुपरिप्रदेशे निहितासः स्थापितायेसन्तितेऋक्षाःनक्तंरात्रौददृश्रे सर्वैरपिदृश्यन्ते दिवाअहनिकुहचित् ईयुःक्वापिगच्छेयुः नदृश्यन्तइतिभावः वरुणस्यराज्ञोव्रतानिकर्माणिनक्षत्रदर्शनादिरूपाणिअदब्धानिकेनाप्यहिंसितानि किञ्च वरुणस्याज्ञयैवचन्द्रमा नक्तंरात्रौ विचाकशद्विशेषेणदीप्यमानएतिगच्छति ॥ निहितासः आज्जसेरसुक् थाथादिस्वरेणोत्तरपदान्तोदात्तत्वेप्राप्ते गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । ददृश्रे इरयोरिटि इरयोरे इतिरेआदेशः व्यत्ययेनाद्युदात्तत्वं यद्वृत्तयोगादनिघातः । कुह वाहचच्छन्दसीतिकिंशब्दादुत्तरस्यप्रत्ययस्यहादेशः कुतिहोः इतिकिंशब्दस्यकुआदेशः स्थानिवद्भावाल्लित्स्वरेणाद्युदात्तत्वम् । विचाकशत् काशृदीप्तावित्यस्माद्यङ्लुगन्ताच्छतृप्रत्ययः अभ्यस्तानामादिरित्याद्युदात्तत्वं समासेकृत्स्वरः यद्वा काशतेर्वाव्यत्ययेनोपधाह्रस्वत्वम् । चन्द्रमाः चन्द्रेमोडिदितिअसिप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

इतिप्रथमस्यद्वितीयेचतुर्दशोवर्गः ॥ १४ ॥

एकादशिनस्यवारुणस्यपशोर्वपापुरोडाशयोस्तत्त्वायामीतिद्वेऋचौयाज्ये सूत्रितंच—तत्त्वायामिब्रह्मणावन्दमानइतिद्वे अस्तभ्नाद्यामिति वरुणप्रघासेषुवरुणस्यहविषोयाज्या तत्त्वायामीत्येषा पञ्चम्यांपौर्णमास्यामित्यत्रसूत्रितम्—इमंमेवरुणश्रुधिवत्त्वायामिब्रह्मणावन्दमानइति ।

तामेतांसूक्ते एकादशीमृचमाह—

**तत्त्वा॑यामि॒ब्रह्म॑णा॒वन्द॑मान॒स्तदा॑शा॒स्ते॒यज॑मानोह॒विर्भिः॑ । अहे॑ळमानोवरुणे॒हबो॒ध्युरु॑शंस॒मान॒आयुः॒प्रमो॑षीः ॥ ११ ॥**

तत् । त्वा॒ । या॒मि॒ । ब्रह्म॑णा । वन्द॑मानः । तत् । आ । शा॒स्ते॒ ।
यज॑मानः । ह॒विःऽभिः॑ । अहे॑ळमानः । व॒रु॒ण॒ । इ॒ह । बो॒धि॒ ।
उरु॑ऽशंस । मा । नः॒ । आयुः॑ । प्र । मो॒षीः॒ ॥ ११ ॥

हेवरुण मुमूर्षुरहंत्वात्वांप्रतितदायुर्यामियाचे कीदृशः ब्रह्मणामन्त्ररूपेणस्तोत्रेणवन्दमानः स्तुवन् सर्वत्रयजमानोपिहविर्भिस्तदायुराशास्तेप्रार्थयते त्वंचेहकर्मण्यहेळमानः अनादरम-

१ नि० ३. २. । २ गतिकारकयोरितिपूर्वसूत्रात्पूर्वपदप्रकृतिस्वरत्वमनुवर्तते तेनपूर्वपदप्रकृतिस्वरः । ३ ब्रह्मणावन्दमानःवेदेनाभिवदमानः ।

कुर्वन् बोधिअस्मदपेक्षितंबुध्यस्व हेउरुशंसबहुभिःस्तुत्य नोस्मदीयमायुः मामप्रमोषीः प्रमुषितं माकुरु सप्तदशसंख्याकेषुपाञ्चाकर्मस्वीमहेयामीतिपठितं चाशब्दलोपश्छान्दसः ॥ अहेळमानः हेडृअनादरेअदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपश्चपित्त्वादनुदात्तत्वेसतिधातुस्वरःशिष्यते ततोनञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम्। बोधि बुधअवगमने लोटःसेर्हिः बहुलंछन्दसीतिविकरणस्यलुक् वाछन्दसीत्यपित्त्वाभावेनङित्त्वाभावाल्लघूपधगुणः हुझल्भ्योहेर्धिरितिहेर्धिरादेशः धातोरन्त्यलोपश्छान्दसः । मोषीः मुषस्तेये लोडर्थेछान्दसोलुङ् वदव्रजेतिप्राप्तायावृद्धेर्नेटीतिप्रतिषेधेसतिलघूपधगुणः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥ ११ ॥

द्वादशीमृचमाह—

तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदआविचष्टे । शुनःशेपोयमह्वद्गृभीतःसोअस्मान्राजावरुणोमुमोक्तु ॥ १२ ॥

तत् । इत् । नक्तम् । तत् । दिवा । मह्यम् । आहुः । तत् । अयम् । केतः । हृदः । आ । वि । चष्टे । शुनःशेपः । यम् । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ १२ ॥

तदित्तदेववरुणस्यविषयंस्तोत्रंनक्तंरात्रौमह्यंशुनःशेपायआहुः कर्तव्यत्वेनअभिज्ञाःकथयन्ति तथादिवापितदेवाहुः हृदोमदीयमनसोनिष्पन्नोयंकेतः प्रज्ञाविशेषोपितदेवकर्तव्यत्वेनाविचष्टेसर्वतोविशेषेणप्रकाशयति गृभीतः गृहीतोयूपेबद्धः शुनःशेपएतन्नामकोजनः यंवरुणमह्वत् आहूतवान्सचवरुणोराजाअस्मान्शुनःशेपान् मुमोक्तु बन्धाद्मुक्तान्करोतु ॥ मह्यं ङयिचेत्याद्युदात्तत्वम् । आहुः ब्रुवःपञ्चानामितिब्रूञोलटिझेरुसादेशः धातोराहादेशश्च । हृदः पद्न्नित्यादिनाहृदयशब्दस्यहृदादेशः ऊडिदंपदादितिपञ्चम्याउदात्तत्वम् । शुनःशेपःशुनइवशेपोयस्येतिसमासे शुनःशेपपुच्छलाङ्गूलेषुसंज्ञायांषष्ठ्याअलुग्वक्तव्यइत्यलुक् पूर्वपदप्रकृतिस्वरत्वेप्राप्ते उभेवनस्पत्यादिष्वितिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ।अह्वत् ह्वेञोलुङि लिपिसिचिह्वश्चेतिच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः अडागमउदात्तः यद्वृत्तयोगादनिघातः हिचेतिनिघातप्रतिषेधः । गृभीतः ह्रग्रहोर्भइतिभत्वं सोअस्मान् प्रकृत्यान्तःपादमितिप्रकृतिभावः । मुमोक्तु बहुलंछन्दसीतिविकरणस्यश्लुः ॥ १२ ॥

१ श्वन्नुक्षन्नितिकनिन्प्रत्ययान्तःश्वन्शब्दः, वृङ्शीङ्भ्यांरूपस्वांगयोःपुट्चेतिअसुन्प्रत्यये शेपः ।

त्रयोदशीमृचमाह—

शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः । अवैनंराजावरुणः ससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान् ॥ १३ ॥

शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

गृभीतोबन्धनायगृहीतः त्रिषुत्रिसंख्याकेषुद्रुपदेषु द्रोःकाष्ठस्ययूपस्यपदेषुप्रदेशविशेषेषुबद्धःशुनःशेपआदित्यमदितेःपुत्रंयंवरुणं अह्वत् आहूतवान् हियस्मादेवंतस्मात् सवरुणोराजाएनंशुनःशेपमवससृज्यात् अवसृष्टं बन्धनाद्विमुक्तंकरोतु विमोकप्रकारएवस्पष्टीक्रियते—विद्वान् विमोकप्रकाराभिज्ञः अदब्धः केनाप्यहिंसितोवरुणःपाशान्बन्धनरज्जुविशेषान् विमुमोक्तु विच्छिद्यैनंमुक्तंकरोतु ॥ त्रिषु षट्त्रिचतुर्भ्योहलादिरितिविभक्तेरुदात्तत्वं संहितायां उदात्तस्वरितयोर्यणइतिपरआकारःस्वर्यते । ससृज्यात् सृजविसर्गे प्रार्थनायांलिङ् बहुलंछन्दसीतिविकरणस्यश्लुः । विद्वान् विदज्ञाने विदेःशतुर्वसुः उगिदचामितिनुम् हल्ङ्याादिसंयोगान्तलोपौ संहितायां दीर्घादटिसमानपादेइतिनकारस्यरुत्वं आतोटिनित्यमितिसानुनासिकआकारः । अदब्धः दंभुदंभे निष्ठायामनिदितामितिनलोपेझषस्तथोर्धोधइतिधत्वं अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १३ ॥

अवभृथेअवतेहेळइतिद्वेऋचौवरुणस्यहविषोयाज्यानुवाक्ये पत्नीसंयाजेश्वरित्वेतिखण्डे सूत्रितम्—अवतेहेळोवरुणनमोभिरिति ।

तयोराद्यांसूक्तेचतुर्दशीमृचमाह—

अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ १४ ॥

अव । ते । हेळः । वरुण । नमःऽभिः । अव । यज्ञेभिः । ईमहे । हविःऽभिः । क्षयन् । अस्मभ्यम् । असुर । प्रचेत इति प्रऽचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥ १४ ॥

हेवरुणतेतवहेळःक्रोधं नमोभिः नमस्कारैः अवेमहे अवनयामः तथा यज्ञेभिः यज्ञैः सांगानुष्ठानेनपूज्यैर्हविर्भिः अवेमहे वरुणंपरितोष्यक्रोधमपनयामः हेअसुरअनिष्टक्षेपणशीलप्रचेतः प्रकर्षेणप्रज्ञायुक्तराजन्दीप्यमानवरुण अस्मभ्यं अस्मदर्थं क्षयन् अस्मिन् कर्मणिनिवसन् कृतानिअस्माभिरनुष्ठितानि एनांसिपापानि शिश्रथः श्रथितानिशिथिलानिकुरु ॥ हेळः असुनोनित्त्वादाद्युदात्तत्वम् । यज्ञेभिः बहुलंछन्दसीत्यैसभावः । ईमहे ईङ्गतौविकरणस्यलुक् । क्षयन् क्षिनिवासगत्योः लटःशतृ व्यत्ययेनशप् आमन्त्रितायुदात्तत्वम् ।असुर असेरुरन् आमन्त्रितनिघातः । शिश्रथः श्रथदौर्बल्येचुरादिरदन्तः छान्दसेलुङि णिश्रिद्रुस्रुभ्यइतिच्लेश्चङ् द्विर्भावहलादिशेषौअग्लोपित्वात्सन्वद्भावाभावेपि बहुलंछन्दसीत्यभ्यासस्येत्वं पूर्ववदडभावः॥१४॥

पञ्चदशीमृचमाह—

उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय । अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ १५ ॥ १५ ॥

उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् ।
वि । मध्यमम् । श्रथय । अथ । वयम् । आदित्य । व्रते ।
तव । अनागसः । अदितये । स्याम ॥ १५ ॥ १५ ॥

हेवरुणउदुत्तममुत्कृष्टंशिरसिबद्धंपाशं अस्मत् अस्मत्तः उच्छ्रथाय उत्कृष्यशिथिलंकुरु अधमंनिकृष्टंपादेअवस्थितंपाशंअवश्रथायअवज्ञाय अधस्तादवकृष्य शिथिलीकुरु मध्यमंनाभिप्रदेशगतंपाशं विश्रथाय वियुज्यशिथिलीकुरु अथानन्तरं हेआदित्यअदितेःपुत्रवरुण वयंशुनःशेपाः तवव्रते त्वदीयेकर्मणिअदितयेखण्डनराहित्याय अनागसःअपराधरहिताः स्यामभवेम ॥ उत्तमं तमपःपित्त्वादनुदात्तत्वेनआद्युदात्तत्वेमाप्ते उत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिपाठादन्तोदात्तत्वम् । अधमं अवद्यावमाधमार्वरेफाःकुत्सितेइतिअवतेरमच् वस्य धः । श्रथाय श्रथदौर्बल्ये संहितायांछान्दसोदीर्घः ।तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् । अनागसः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं नञ्सुभ्यामितितुव्यत्ययेननप्रवर्तते यद्वा आगस्शब्दात् अस्मायामेधेतिमत्वर्थीयोविनिः तस्य विन्मतोर्लुक्इतिलुक् नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यद्वितीयेपञ्चदशोवर्गः ॥ १५ ॥

यच्चिद्धीत्येकविंशत्यृचं द्वितीयं सूक्तं तथाचानुक्रान्तम्—यच्चित्सैकेति ऋषिश्चान्यस्मादिति परिभाषया शुनःशेप एव ऋषिः आदौ गायत्रमिति परिभाषितत्वात् गायत्रीछन्दः वारुणं त्विति पूर्वोक्तत्वात् तुह्यादिपरिभाषया वरुणो देवता विनियोग उक्तः शौनःशेपाख्याने विशेषविनियोगस्तु अभिप्लवषडहे इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थं अभिप्लवपृष्ठ्याहानीति खण्डे तथैव सूत्रितम्—यच्चिद्धिते विश इति वारुणमेतस्य तृचमावपेतमैत्रावरुण इति ।

तस्मिन्सूक्ते प्रथमामृचमाह—

यच्चिद्धिते विशो यथा प्रदेव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥ १ ॥

यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण ।
व्रतम् । मिनीमसि । द्यविऽद्यवि ॥ १ ॥

हे वरुण यथा लोके विशः प्रजाः कदाचित्प्रमादं कुर्वन्ति तथा वयमपि ते तव संबन्धि यच्चिद्धि यदेव किञ्चिद्व्रतं कर्म द्यविद्यवि प्रतिदिनं प्रमिनीमसि प्रमादेन हिंसितवन्तः यदपि व्रतं प्रमादपरिहारेण साङ्गं कुर्वीत इति शेषः ॥ यथा लित्स्वरेणाद्युदात्तत्वे प्राप्ते यथेति पादान्ते इति सर्वानुदात्तत्वम् । मिनीमसि मीञ्हिंसायां इदन्तो मसिः क्र्यादिभ्यः श्ना मीनातेर्निगमे इति ह्रस्वत्वं ईहल्यघोरितीकारः सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनात् तिङ एव स्वरः शिष्यते यद्वृत्तयोगान्निघाताभावः ॥ १ ॥

द्वितीयामृचमाह—

मानो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे ॥ २ ॥

मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः । मा ।
हृणानस्य । मन्यवे ॥ २ ॥

हे वरुण जिहीळानस्य अनादरं कृतवतः हत्नवे हन्तुः पापिहननशीलस्य तव संबन्धिने त्वत्कर्तृकाय वधाय नोस्मान्मा रीरधः संसिद्धान् विषयभूतान्मा कुरु हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः ॥ वधाय हनश्च वध इति अदन्तो वधशब्दः उञ्छादिषु पाठादन्तोदात्तः । हत्नवे हनहिंसागत्योः कृहनिभ्यां क्त्नुरिति क्त्नुप्रत्ययः धात्वोर्नकारस्य तकारः । जिहीळानस्य हेडृ अनादरे अस्माल्लिटः कानच् द्विर्भावहलादिशेषह्रस्वत्वचुत्वजश्त्वानि एकारस्य ईकारादेशश्छान्दसः चित इत्यन्तोदात्तत्वम् । रीरधः राधसाधसंसिद्धौ चङि णिलोपे उपधायाह-

स्वत्वं द्विर्वचनहलादिशेषह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः नमाङ्योगेइत्यडभावः। हृणानस्य हृणीङ्लज्जायां अस्माद्व्यानचि पृषोदरादित्वादभिमतरूपसिद्धिः ॥ २ ॥

तृतीयामृचमाह—

विमृळीकायतेमनोरथीरश्वंनसंदितम्। गीर्भिर्वरुणसीमहि ॥ ३ ॥

वि। मृळीकाय। ते। मनः। रथीः। अश्वम्। न। सम्ऽदितम्।

गीःऽभिः। वरुण। सीमहि ॥ ३ ॥

हेवरुण मृळीकायअस्मत्सुखायतेतवमनोगीर्भिःस्तुतिभिः विसीमहिविशेषेणबध्नीमः प्रसादयामइत्यर्थः तत्रदृष्टान्तः—रथीःरथस्वामीसन्दितंसम्यक्खण्डितं दूरगमनेनश्रान्तं अश्वं अश्वमिव यथास्वामीश्रान्तमश्वं घासप्रदानादिना प्रसादयतितद्वत् ॥ रथीः मत्वर्थीयईकारः। सन्दितं दोअवखण्डने निष्ठेतिक्तः द्यतिस्यतिमास्थामितीकारान्तादेशः गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम्। गीर्भिः सावेकाचइतिभिसउदात्तत्वम्। सीमहि षिवुतन्तुसन्ताने व्यत्ययेनात्मनेपदं बहुलंछन्दसीतिविकरणस्यलुक् वलिलोपः यद्वा षिञ्बन्धनेइत्यस्माद्विकरणस्यलुक् दीर्घश्छान्दसः ॥ ३ ॥

चतुर्थीमृचमाह—

पराहिमेविमन्यवःपतन्तिवस्यइष्टये। वयोनवसतीरुप ॥ ४ ॥

परा। हि। मे। विऽमन्यवः। पतन्ति। वस्यःऽइष्टये। वयः।

न। वसतीः। उप ॥ ४ ॥

हेवरुण मेममशुनःशेपस्यविमन्यवः क्रोधरहितावुद्धयः वस्यइष्टये वसीयसोतिशयेन वसुमतोजीवनस्यप्राप्तये परापतन्तिपराङ्मुखाः पुनरावृत्तिरहिताःप्रसरन्ति हिशब्दोस्मिन्नर्थे सर्वजनप्रसिद्धिमाह परापतनेदृष्टान्तः—वयोन पक्षिणोयथावसतीर्निवासस्थानानिउपसामीप्येनप्राप्नुवन्ति तद्वत् ॥ पतन्ति पादादित्वान्निघाताभावः। वस्यइष्टये वसुमच्छब्दाद्विन्मतोर्लुगितिमतुपोलुकि टिलोपे ईयसुनोयकारलोपश्छान्दसः। वसतीः शतुरनुमइतिङीपउदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

कदाक्षत्रश्रियंनरमावरुणंकरामहे। मृळीकायोरुचक्षसम् ॥ ५ ॥ १६ ॥

कदा। क्षत्रऽश्रियम्। नरम्। आ। वरुणम्। करामहे।

मृळीकाय। उरुऽचक्षसम् ॥ ५ ॥ १६ ॥

मृळीकाय अस्मत्सुखाय वरुणंकदाकस्मिन्काले आकरामहे अस्मिन्कर्मण्यागतं करवाम कीदृशंक्षत्रश्रियं बलसेविनं नरंनेतारं उरुचक्षसंबहूनांद्रष्टारम् ॥ क्षत्रश्रियं क्षत्राणिश्रयतीतिक्षत्रश्रीः क्विप्वचेत्यादिनाक्विप्दीर्घश्च कृदुत्तरपदप्रकृतिस्वरत्वम्। नरं ऋदोरबिति अबन्तआद्युदात्तः। करामहे करोतेर्व्यत्ययेनशप्। उरुचक्षसं चक्षेर्बहुलंशिचेत्यसुन् शिद्वद्भावात्ख्याञादेशाभावः ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेषोडशोवर्गः ॥ १६ ॥

षष्ठीमृचमाह–

तदित्स॑मा॒नमा॑शाते॒वेन॑न्ता॒नप्रयु॑च्छतः। धृतव्र॑ताय दा॒शुषे॑ ॥ ६ ॥

तत्। इत्। स॒मा॒नम्। आ॒शा॒ते॒ इति॑। वेन॑न्ता। न। प्र।

यु॒च्छ॒तः। धृत॒ऽव्र॑ताय। दा॒शुषे॑ ॥ ६ ॥

धृतव्रताय अनुष्ठितकर्मणे दाशुषेहविर्दत्तवतेयजमानायवेनन्तौकामयमानौमित्रावरुणाविति शेषः तावुभौसमानंसाधारणं तदित्अस्माभिर्दत्तं वेदेवहविः आशाते अश्नुवाते नप्रयुच्छतः कदाचिदपिप्रमादंनकुरुतः ॥ आशाते अश्नोतेर्लिटिद्विर्भावहलादिशेषौ अतआदेरित्यात्वं अनित्यमागमशासनमितिवचनादश्नोतेश्चेतिनुडभावः। वेनन्ता वेनतिःकान्तिकर्मा। सुपां सुलुगित्याकारः। प्रयुच्छतः युच्छप्रमादे। दाशुषे दाशृदानेइत्यस्मात् दाश्वान्साह्वानितिक्वसुप्रत्ययोनिपातितः वसोःसंप्रसारणमितिसंप्रसारणं शासिवसिघसीनांचेतिषत्वम् ॥ ६ ॥

सप्तमीमृचमाह–

वेदा॒योवी॒नांप॒दम॒न्तरि॑क्षेणप॒त॑ताम्। वेद॑ना॒वःस॑मु॒द्रियः॑ ॥ ७ ॥

वेद॑। यः। वी॒नाम्। प॒दम्। अ॒न्तरि॑क्षेण। पत॑ताम्। वेद॑।

ना॒वः। स॒मु॒द्रियः॑ ॥ ७ ॥

अन्तरिक्षेणपततां आकाशमार्गेणगच्छतां वीनांपक्षिणांपदंयोवरुणोवेद तथा समुद्रियः समुद्रेवस्थितोवरुणः नावोजलेगच्छन्त्याःपदं वेद जानाति सोस्मान् बन्धनान्मोचयत्विति शेषः ॥ वेद विदज्ञाने विदोलटोवेतिनिपोणल् लित्स्वरेणाद्युदात्तत्वं द्व्यचोतस्तिङइतिसंहितायां दीर्घः। वीनां नामन्यतरस्यामितिनामउदात्तत्वम्। पततां शपःपित्त्वादनुदात्तत्वं शतुश्चलसा-

१ नि० १०. ३८. १

र्वधातुकस्वरेणधातुस्वरः । नावः सावेकाचइतिपष्ठ्याउदात्तत्वम् । समुद्रियः भवार्थेसमुद्राभ्रा-द्घइतिघप्रत्ययः ॥ ७ ॥

अष्टमीमृचमाह—

वेद॒मा॒सोधृ॒तव्र॑तो॒द्वाद॑शप्र॒जाव॑तः । वेदा॒यउ॑प॒जाय॑ते ॥ ८ ॥

वेद॑ । मा॒सः । धृ॒तऽव्र॑तः । द्वाद॑श । प्र॒जाऽव॑तः । वेद॑ । यः । उ॒प॒ऽजाय॑ते ॥ ८ ॥

धृतव्रतः स्वीकृतकर्मविशेषोयथोक्तमहिमोपेतः वरुणः प्रजावतः तदातदोत्पद्यमानप्रजायुक्तान् द्वादशमासः चैत्रादीन् फाल्गुनान्तान्वेदजानाति यस्त्रयोदशोधिकमासउपजायते संवत्सरसमी-पेस्वयमेवउत्पद्यतेतमपिवेद वाक्यशेषःपूर्ववत् ॥ मासः पद्दन्नित्यादिनामासशब्दस्यमासित्यादे-शः ऊडिदमित्यादिनाशसउदात्तत्वम् । द्वादश द्वौचदशचेतिद्वन्द्वः द्व्यष्टनःसंख्यायामि-त्यात्वं संख्येतिसूत्रेणपूर्वपदप्रकृतिस्वरत्वम् । प्रजावतः जनीप्रादुर्भावे प्रपूर्वाज्जनसनखनक्र-मगमोविट्प्रत्ययः विड्वनोरित्यात्वं कृदुत्तरपदप्रकृतिस्वरत्वं प्रजाएषांसन्तीति तदस्यास्त्य-स्मिन्नितिमतुप् मादुपधायाइतिमतुपोवत्वम् । उपजायते जनेःकर्मकर्तरिलट् कर्मवद्भावादा-त्मनेपदं यक् जनादीनांउपदेशएवातंवकव्यमितिवचनादचःकर्तृयकीत्याद्युदात्तत्वं तिङिचो-दात्तवतीत्युपसर्गस्यनिघातः नचतिङ्कतिङइतिनिघातः यद्वृत्तान्नित्यमितिप्रतिषेधात् ॥ ८ ॥

नवमीमृचमाह—

वेद॒वात॑स्यवर्त॒निमु॒रोर्ऋ॒ष्वस्य॑बृह॒तः । वेदा॒येअ॒ध्यास॑ते ॥ ९ ॥

वेद॑ । वात॑स्य । व॒र्त॒निम् । उ॒रोः । ऋ॒ष्वस्य॑ । बृ॒ह॒तः । वेद॑ । ये । अ॒धि॒ऽआस॑ते ॥ ९ ॥

उरोर्विस्तीर्णस्यऋष्वस्यदर्शनीयस्य बृहतोगुणैरधिकस्यवातस्य वायोर्वर्तनिंमार्गंवेदव-रुणोजानाति येदेवाः अध्यासते उपरितिष्ठन्तितानपिवेदजानाति ॥ वातस्य असिहसीत्या-दिनातन्प्रत्ययान्तोवातशब्दोनित्त्वादाद्युदात्तः । वर्तनिं वर्ततेअनेनेतिवर्तनिः स्तोत्रवाचकस्यवर्त-निशब्दस्यअन्तोदात्तत्वसिद्ध्यर्थंमुञ्छादिषुपाठादस्यप्रत्ययस्वरेणमध्योदात्तत्वेप्राप्तेव्यत्ययेनान्तो-दात्तत्वम् । बृहतः बृहन्महतोरुपसंख्यानमितिङसउदात्तत्वम् । अध्यासते लसार्वधातुकानु-दात्तत्वेसतिधातुस्वरः ॥ ९ ॥

दशमीमृचमाह—

निषसादधृतव्रतोवरुणःपस्त्या३स्वा । साम्राज्यायसुक्रतुः॥१०॥१७॥

नि । ससाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ । साम्ऽराज्याय । सुऽक्रतुः ॥ १० ॥ १७ ॥

धृतव्रतःपूर्वोक्तोवरुणः पस्त्यासुदैवीषु प्रजासु आनिषसादआगत्यनिषण्णवान्किमर्थं प्रजानांसाम्राज्यसिध्यर्थं सुक्रतुःशोभनकर्मा ॥ निषसाद सदिरप्रतेरितिषत्वम् । साम्राज्याय सम्राजोभावःसाम्राज्यं गुणवचनब्राह्मणादिभ्यइतिष्यञ् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम्। सुक्रतुः क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम्॥ १० ॥

॥ इतिप्रथमस्यद्वितीयेसप्तदशोवर्गः ॥ १७ ॥

एकादशीमृचमाह—

अतोविश्वान्यद्भुताचिकित्वाँअभिपश्यति । कृतानियाचकर्त्वा॥११॥

अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति । कृतानि । या । च । कर्त्वा ॥ ११ ॥

अतोऽस्माद्वरुणाद्विश्वान्यद्भुतासर्वाण्याश्चर्याणि चिकित्वान्प्रज्ञावानभिपश्यतिसर्वतोवलोकयति याकृतानियान्याश्चर्याणिपूर्वंवरुणेनसंपादितानिचकारादन्यानि यान्याश्चर्याणि कर्त्वा इतःपरंकर्तव्यानितानिसर्वाण्यभिपश्यतीतिपूर्वत्रान्वयः ॥ अद्भुता शेश्छन्दसिबहुलमिति शेर्लोपः प्रत्ययलक्षणेन नपुंसकस्यझलचइतिनुम् नलोपः । चिकित्वान् कितज्ञाने लिटः क्वसुः अभ्यासहलादिशेषचुत्वानि वस्वेकाजाद्घसामितिनियमादिडभावः रुत्वानुनासिकावुकौसंहितायाम । पश्यति पाघ्रेत्यादिनादृशेःपश्यादेशः। कर्त्वा कृत्यार्थेतवैकेनितिकरोतेस्त्वन् नित्त्वादाद्युदात्तत्वं पूर्ववच्छेर्लोपः ॥ ११ ॥

द्वादशीमृचमाह—

सनोविश्वाहासुक्रतुरादित्यःसुपथाकरत् । प्रणआयूंषितारिषत् ॥१२॥

सः । नः । विश्वाहा । सुऽक्रतुः । आदित्यः । सुऽपथा । करत्। प्र । नः । आयूंषि । तारिषत् ॥ १२ ॥

सुक्रतुः शोभनप्रज्ञः स आदित्यो वरुणः विश्वाहा सर्वेष्वहःसु नोस्मान् सुपथा शोभनेन मार्गेण सहितान् करत् करोतु किञ्च नोस्माकमायूंषि प्रतारिषत् प्रवर्धयतु ॥ सुपथा स्वतीपूजायामितिसमासे नपूजनादितिसमासान्तप्रतिषेधः अव्ययपूर्वपदप्रकृतिस्वरत्वेप्राप्ते परादिश्छन्दसिबहुलमिति उत्तरपदाद्युदात्तत्वम् यद्वा तृतीयायाआजादेशः अव्ययपूर्वपदप्रकृतिस्वरत्वंलित्स्वरेणबाध्यते क्रत्वादयश्चेत्येतन्नभवति अबहुव्रीहित्वात् बहुव्रीहौहितद्विधीयते आद्युदात्तंद्व्यच्छन्दसीत्येतदपिनभवति पथिनशब्दस्यान्तोदात्तत्वात् । करत् करोतेर्लेटिव्यत्ययेनशप् शपोबालुकि लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः यद्वा छान्दसेलुङि कृमृदृरुहिभ्यइतिच्लेरङ् ऋदृशोङिगुणइतिगुणः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । प्रणः उपसर्गाद्बहुलमितिनसोणत्वम् । तारिषत् तारयतेर्लेटयडागमः सिब्बहुलंलेटीतिसिप् आदेशप्रत्यययोरितिषत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

विभ्रद्द्रापिंहिरण्ययंवरुणोवस्तनिर्णिजम् । परिस्पशोनिषेदिरे ॥१३॥

विभ्रत् । द्रापिम् । हिरण्ययम् । वरुणः । वस्त । निःऽनिजम् ।
परि । स्पशः । नि । सेदिरे ॥ १३ ॥

हिरण्ययंसुवर्णमयंद्रापिंकवचंबिभ्रत् धारयन् वरुणोनिर्णिजंपुष्टंस्वशरीरं वस्त आच्छादयति स्पशः हिरण्यस्पर्शिनोरश्मयः परिनिषेदिरेसर्वतोनिषण्णाः ॥ बिभ्रत् बिभर्तेः शतरि नाभ्यस्ताच्छतुरितिनुमभावः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । द्रापिं द्राकुत्सायांगतौ द्रापयतीपून्कुत्सितांगतिंभापयतीतिद्रापिःकवचं अर्तिह्रीत्यादिनापुगागमः औणादिकइप्रत्ययेणिलोपः । हिरण्ययं ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि इतिहिरण्यशब्दाद्विकारार्थेविहितस्यमयटोमशब्दलोपोनिपातितः । वस्त वसआच्छादने लङि अदादित्वाच्छपोलुक् पूर्ववदडभावः । निर्णिजं णिजिर्शौचपोषणयोः । स्पशः स्पशबाधनस्पर्शनयोः क्विप्चेतिक्विप् । निषेदिरे षद्लृविशरणगत्यवसादनेषु अस्मादत्ययर्थात्कर्मणिलिटिएत्वाभ्यासलोपौ सदिरप्रतेरितिषत्वम् ॥१३॥

चतुर्दशीमृचमाह—

नयंदिप्सन्तिदिप्सवोनद्रुह्वाणोजनानाम् । नदेवमभिमातयः ॥ १४ ॥

न । यम् । दिप्सन्ति । दिप्सवः । न । द्रुह्वाणः । जनानाम् । न ।
देवम् । अभिऽमातयः ॥ १४ ॥

दिप्सवः हिंसितुमिच्छन्तोवैरिणः यंवरुणंनदिप्सन्तिभीताः सन्तोहिंसितुमिच्छांपरित्यजन्ति जनानांप्राणिनां द्रुह्वाणोद्रोग्धारोपियंवरुणंप्रतिनद्रुह्यन्ति अभिमातयः पाप्मानः पाप्मावाअभिमातिरितिश्रुत्यन्तराव्। देवं तंवरुणंनस्पृशन्ति ॥ दिप्सन्ति दंभुदंभे अस्मात्सनि सनीवन्तर्धेत्यादिनाइडभावः हलन्ताच्चेत्यत्रहल्ग्रहणस्यजातिवाचित्वात् सनःकित्वात् दंभइच्चेति इकारात्परस्याकारस्येकारः अनिदितामितिनलोपः अपूभावाभावश्छान्दसः अत्रलोपोभ्यासस्येत्यभ्यासलोपः शपःपित्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेण सनोनित्त्वान्नित्स्वरेणाद्युदात्तत्वं यद्वृत्तयोगादनिघातः। दिप्सवः सन्नन्ताद्दंभेः सनाशंसभिक्षउरित्युप्रत्ययः प्रत्ययस्वरः। द्रुह्वाणः द्रुहजिघांसायां अन्येभ्योपिदृश्यन्तेइतिक्वनिप् प्रत्ययस्यपित्वादनुदात्तत्वेधातुस्वरेणाद्युदात्तत्वम् ॥ १४ ॥

पञ्चदशीमृचमाह—

**उ॒तयोमानु॑षे॒ष्वायश॑श्च॒क्रेअसा॒म्या। अ॒स्माक॑मु॒दरे॒ष्वा ॥१५॥१८॥**

**उ॒त। यः। मानु॑षेषु। आ। यशः॑। च॒क्रे। असा॑मि। आ।**
**अ॒स्माक॑म्। उ॒दरे॑षु। आ ॥ १५ ॥ १८ ॥**

उतअपिचयोवरुणोमानुषेषुयशोन्नं आचक्रेसर्वतःकृतवान् सवरुणः कुर्वन्नपिआसर्वतः असामिसंपूर्णंचक्रे नतुन्यूनंकृतवान् विशेषतोस्माकमुदरेषुआसर्वतश्चक्रे ॥ मानुषेषु मनोर्जातावञ्यतौषुक्चेत्यञ् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम्। चक्रे प्रत्ययस्वरः। असामि अव्यये नञ्कुनिपातानामितिवक्तव्यमित्यव्ययपूर्वपदप्रकृतिस्वरत्वम्। यशः अशेर्युट्चेत्यसुन्। उदरेषु उदिदृणातेरजलोपूर्वपदान्त्यलोपश्चेतिअच् लित्स्वरः गतिकारकोपपदादितिउत्तरपदप्रकृतिस्वरत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यप्रथमेअष्टादशोवर्गः ॥ १८ ॥

षोडशीमृचमाह—

**परा॑मेयन्ति॒धी॒तयो॒गावो॒नगव्यू॑ती॒रनु॑। इ॒च्छन्ती॑रुरु॒चक्ष॑सम् ॥ १६ ॥**

**परा॑। मे॒। य॒न्ति॒। धी॒तयः॑। गावः॑। न। गव्यू॑तीः। अनु॑।**
**इ॒च्छन्तीः॑। उ॒रु॒ऽचक्ष॑सम् ॥ १६ ॥**

उरुचक्षसंबहुभिर्द्रष्टव्यंवरुणंइच्छन्तीर्मेधीतयःशुनःशेपस्यबुद्धयः परायन्तीपराङ्मुखानिवृत्तिरहितागच्छन्ति तत्रदृष्टान्तः—गावोन यथागावः गव्यूतीरनु गोष्ठानिअनुलक्ष्यगच्छन्तितद्व-

१ तै॰ सं. २.१.३.१

द॥ गव्यूतीः गावोत्रयूयन्तेइत्यधिकरणेक्तिन् गोर्यूतौछन्दसीतिअवादेशः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं यद्वा यूतिर्यवनं गवांयवनमत्रेतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। इच्छन्तीः इष इच्छायां लटःशतृ तुदादिभ्यःशः इषुगमियमांछइतिछत्वं अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरःशिष्यते ॥ १६ ॥

सप्तदशीमृचमाह—

संनु॒वो॑चावहै॒पुन॒र्यतो॑मे॒मध्वाभृ॑तम् । होते॑व॒क्षद॑से॒प्रि॒यम् ॥ १७ ॥

सम् । नु । वो॒चा॒व॒है॒ । पुनः॑ । यतः॑ । मे॒ । मधु॑ । आऽभृ॑तम् ।

होता॑ऽइव । क्षद॑से । प्रि॒यम् ॥ १७ ॥

यतोयस्मात्कारणात् मेममजीवनार्थं मधुरंहविः आभृतं अज्ञःसवास्येकर्मणिसंपादितं अतःकारणात् होतेव होमकर्तेव त्वमपिप्रियंहविः क्षदसे अश्नासि पुनर्हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहंच नु अवश्यं संवोचावहै संभूयप्रियवार्ताकरवावहै ॥ वोचावहै लोडर्थे छान्दसेलुङि ब्रुवोवचिः अस्यतिवक्तीतिच्लेरङादेशः वचउमित्युमागमेगुणः व्यत्ययेनटेरेत्वं यद्वा लोटएवलुङादेशः स्थानिवद्भावादेत्वम् । आभृतं हृग्रहोर्भः गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम् ॥ १७ ॥

अष्टादशीमृचमाह—

दर्शं॒नु वि॒श्वद॑र्शतं॒दर्शं॒रथ॒मधि॒क्षमि॑ । ए॒ताजु॑षत॒मे॒गिरः॑ ॥ १८ ॥

दर्श॑म् । नु । वि॒श्वऽद॑र्शतम् । दर्श॑म् । रथ॑म् । अधि॑ । क्षमि॑ । ए॒ताः ।

जु॒ष॒त॒ । मे॒ । गिरः॑ ॥ १८ ॥

विश्वदर्शतं सर्वैर्दर्शनीयमस्मदनुग्रहार्थमत्राविर्भूतंवरुणंदर्शंनु अहंदृष्टवान्खलु क्षमिक्षमायां भूमौरथंवरुणसंबन्धिनंअधिदर्शं आधिक्येनदृष्टवानस्मि एताउच्यमानामेगिरोमदीयाः स्तुतीःजुषत वरुणःसेवितवान् ॥ दर्शं दृशेरिरितोवेतिच्लेरङादेशः ऋदृशोङिगुणइतिगुणः । विश्वदर्शतं दृशेर्भृमृदृशीत्यादिनाअतच्प्रत्ययान्तोदर्शतशब्दः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् यद्वा विश्वंदर्शनीयमस्येतिबहुव्रीहिः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । क्षमि आतोधातोरित्यत्र आतइतियोगविभागादाकारलोपः ॥ १८ ॥

वरुणप्रघासेष्विदंमेवरुणेतिवरुणस्यहविषोनुवाक्या पञ्चम्यांपौर्णमास्यामितिखण्डेसूत्रितम्—इमंमेवरुणश्रुधितत्त्वायामिब्रह्मणावन्दमानइति ।

तामेतांसूक्तेएकोनविंशीमृचमाह—

इमंमेंवरुणश्रुधीहवंमद्याचंमृळय। त्वामंवस्युराचंके ॥ १९ ॥

इमम्। मे। वरुण। श्रुधि। हवंम्। अद्य। च। मृळय।

त्वाम्। अवस्युः। आ। चके ॥ १९ ॥

हेवरुणमेमदीयमिमंहवमाह्वानंश्रुधिशृणु किञ्च अद्यास्मिन्दिनेमृळयअस्मान्सुखय अवस्युः रक्षणेच्छुरहंत्वांवरुणंआभिमुख्येन चके शब्दयामिस्तौमीत्यर्थः ॥ श्रुधि श्रुश्रवणे लोटोहिःश्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक् अन्येषामपिदृश्यते इतिसंहितायांदीर्घः। अवस्युः अवसूशब्दात् सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः। आचके कैगैशब्दे अस्माल्लिटि आदेचइत्यात्वं द्विर्भावचुत्वे आतोलोपइटिचेत्याकारलोपः तिङ्ङतिङइतिनिघातः ॥ १९ ॥

विंशीमृचमाह—

त्वंविश्वंस्यमेधिरदिवश्चग्मश्चंराजसि। सयामंनिप्रतिंश्रुधि ॥ २० ॥

त्वम्। विश्वंस्य। मेधिर। दिवः। च। ग्मः। च। राजसि।

सः। यामंनि। प्रतिं। श्रुधि॥ २० ॥

हेमेधिरमेधाविन् वरुण त्वं दिवश्चद्युलोकस्यापि ग्मश्चभूलोकस्यापि विश्वस्य सर्वस्य जगतोमध्ये राजसिदीप्यसे सतादृशस्त्वं यामनिक्षेमप्रापणे अस्मदीये प्रतिश्रुधिप्रतिश्रवणमाज्ञापनंकुरु रक्षिष्यामीतिमत्युत्तरंदेहीत्यर्थः ॥ दिवः ऊडिदमित्यादिनाषष्ठ्याउदात्तत्वम्। ग्मः ग्मेत्येतद्भूनामसुपठितं आतोधातोरित्यत्रआवइतियोगविभागादावोलोपइतिप्रतिषेधेपिव्यत्ययेनाकारलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। यामनि याप्रापणे आतोमनिन्क्वनिब्वनिपश्चेतिमनिन् नित्त्वादाद्युदात्तत्वम्। श्रुधि उक्तम् ॥ २० ॥

एकविंशीमृचमाह—

उदुंत्तमंमुंमुग्धिनोविपाशंमध्यमंचृंत। अवांधमानिजीवसें ॥ २१ ॥ १९ ॥

उत्। उत्ऽतमम्। मुमुग्धि। नः। वि। पाशंम्। मध्यमम्।

चृत। अवं। अधमानि। जीवसें ॥ २१ ॥ १९ ॥

नोस्माकं उत्तमंशिरोगतं पाशं उन्मुमुग्धि उत्कृष्यमोचय मध्यमं उदरगतं पाशं विचृतवियुज्यनाशय जीवसे जीवितुं अधमानि मदीयान् पादगतान् पाशान् अवचृतअवकृष्यना-

शय ॥ उत्तमं उञ्छादिषुपाठादन्तोदात्तत्वम् । मुमुग्धि मुचृमोक्षणे बहुलंछन्दसीतिविकरणस्य श्लुः द्विर्भावः हलादिशेषः हुझल्भ्योहेर्धिरितिहेर्धिरादेशः तिङ्ङतिङइतिनिघातः । चृत चृती-हिंसाग्रन्थनयोः लोटोहिः तुदादिभ्यःशः अतोहेरितिहेर्लुक् । जीवसे जीवप्राणधारणे तुमर्थे-सेसेनिति असेप्रत्ययः प्रत्ययस्वरः ॥ २१ ॥

॥ इतिप्रथमस्यद्वितीयेएकोनविंशोवर्गः ॥ १९ ॥

वसिष्वेतिदशर्चंतृतीयंसूक्तं अत्रानुक्रम्यते—वसिष्वदशाग्नेयंतिति शुनःशेपऋषिः गायत्रीछन्दः इदमुत्तरंचसूक्तमाग्नेयं प्रातरनुवाकेआग्नेयेक्रतौगायत्रेछन्दसि एतदादिसूक्तद्वयमनुक्रम्यं तथाचसूत्रितम्—वसिष्वाहीतिसूक्तयोरुत्तमामुद्धरेदिति ।

अस्मिन्सूक्तेप्रथमामृचमाह—

वसि॑ष्वा॒हि मि॑येध्य॒वस्त्रा॑ण्यूर्जांपते । सेमंनो॑अध्व॒रंयंज ॥ १ ॥

वसि॑ष्व । हि । मि॒ये॒ध्य॒ । वस्त्रा॑णि । ऊ॒र्जा॒म् । प॒ते॒ । सः । इ॒मम् । नः॒ । अ॒ध्व॒रम् । य॒ज॒ ॥ १ ॥

वरुणेनअग्निस्तुतिंप्रेरितःशुनःशेपः एतदादिसूक्तद्वयेनाग्निमस्तौत् तथाचाम्नायते—तंवरुणउवाचाग्निर्वैदेवानांमुखंसुहृदयतमस्तन्नुस्तुह्यथत्वोत्स्रक्ष्यामइतिसोग्निंतुष्टावातउत्तराभिर्द्वाविंशत्येति । हेमियेध्य मेध्यस्ययज्ञस्ययोग्य ऊर्जांपते अन्नानांपालकाग्ने वस्त्राणिआच्छादकानि तेजांसिवसिष्वआच्छादयप्रज्वलितस्तेजसाभवेत्यर्थः हियस्मात्प्रज्वलितः तस्मात्त्वमादृतस्त्वं नोस्मदीयमिममध्वरं यजनिष्पादय ॥ वसिष्व वसआच्छादने लोटिथासःसे सवाभ्यांवामौ छन्दस्युभयथेत्यार्धधातुकत्वात् आर्धधातुकस्येड्वलादेरितीडागमः लसार्वधातुकानुदात्तत्वेधातुस्वरः अन्येषामपिदृश्यतइतिसंहितायांदीर्घः । मियेध्य मकारेकारयोर्मध्ये इयागमश्छान्दसः । ऊर्जांपते सुबामन्त्रितइतिपराङ्गवद्भावात् षष्ठ्यामन्त्रितस्यसमुदायस्याष्टमिकोनिघातः । सेमं सोचिलोपेचेत्पादपूरणमितिसोर्लोपः ॥ १ ॥

द्वितीयामृचमाह—

निनो॒होता॒वरे॑ण्यः॒सदा॑यविष्ठ॒मन्म॑भिः । अग्ने॑दि॒वित्म॑ता॒वचः॑ ॥ २ ॥

नि । नः॒ । होता॑ । वरे॑ण्यः । सदा॑ । य॒वि॒ष्ठ॒ । मन्म॑ऽभिः । अग्ने॑ । दि॒वित्म॑ता । वचः॑ ॥ २ ॥

---

१ ऐ० ब्रा० ७. १६. ।

सदायविष्ठ सर्वदायुवतम हेअग्ने वरेण्योवरणीयस्त्वंनोस्मत्कंहोताहोमनिष्पादकोभूत्वा दिवित्मतादीप्तिमतावचोवचसास्तूयमानःसन् निषीदेतिशेषः कीदृशस्त्वं मन्मभिर्ज्ञापकैस्तेजोभिर्युक्तइतिशेषः ॥ यविष्ठ युवशब्दादिष्ठनि स्थूलदूरेत्यादिनायणादिपरस्यलोपः पूर्वस्योकारस्य गुणश्च अवादेशः आमन्त्रितनिघातः। मन्मभिः मनज्ञाने अन्येभ्योपिदृश्यन्तइतिमनिन्प्रत्ययः नित्त्वादाद्युदात्तत्वम्। दिवित्मता दिवुक्रीडादौ इक्श्तिपौधातुनिर्देशेइतिइक्प्रत्ययः तेनच धातुवाचिनादिविशब्देनधात्वर्थोदीप्तिर्लक्ष्यते यद्वा औणादिकोभावेकिप्रत्ययः दिविशब्दान्मतुप्तकारोपजनश्छान्दसः। वचः सुपांसुलुगितितृतीयैकवचनस्यलुक् ॥ २ ॥

तृतीयामृचमाह—

आहि॒ष्मासू॒नवे॑पि॒तापि॒र्यज॑त्या॒पये॑। सखा॒सख्ये॒वरे॑ण्यः ॥ ३ ॥

आ। हि। स्म॒। सू॒नवे॑। पि॒ता। आ॒पिः। यज॑ति। आ॒पये॑। सखा॑। सख्ये॑। वरे॑ण्यः ॥ ३ ॥

हेअग्नेवरेण्योवरणीयः पिता पितृस्थानीयस्त्वं सूनवेपुत्रस्थानीयाय मह्यंअभीष्टंदेहीतिशेषः हिस्मेतिनिपातद्वयंसर्वथेत्यमुमर्थमाचष्टे अभीष्टदानेदृष्टान्तद्वयमुच्यते—यथाआपिर्बंधुरापयेबन्धवे आयजतिहिस्म सर्वथाददातीतिशेषः सखामित्रः सख्येमित्रायअभीष्टंसर्वथा यथाददातितथात्वमपिदेहि ॥ स्मासूनवे निपातस्यचेतिदीर्घः। यजतीत्यस्यसखासख्यइत्यत्राप्यनुषंगात्तदपेक्षयाइयंप्रथमेति चादिलोपेविभाषेतिननिहन्यते यद्वा हिचेतिनिघातप्रतिषेधः। सख्ये . समानेख्यःसचोदात्तइतिसखिशब्दइप्रत्ययान्तआद्युदात्तः सुपःपित्त्वादनुदात्तत्वेसएव शिष्यते ॥ ३ ॥

चतुर्थीमृचमाह—

आनो॑ब॒र्ही रि॒शाद॑सो॒वरु॑णोमि॒त्रोअ॑र्य॒मा। सीद॑न्तु॒मनु॑षोयथा ॥ ४ ॥

आ। नः॒। ब॒र्हिः। रि॒शाद॑सः। वरु॑णः। मि॒त्रः। अ॒र्य॒मा। सीद॑न्तु। मनु॑षः। य॒था ॥ ४ ॥

हेअग्ने वरुणादयोदेवास्त्वद्वन्धवस्त्वयाप्रेरिताः रिशादसः हिंसकानअदन्तःनोस्मदीयंबर्हिस्तंआसीदन्तु तत्रदृष्टान्तः—यथामनुषः प्रजापतेर्यज्ञमासीदन्तितद्वत् ॥ बर्हीरिशादसः विस-

जनीयस्यरुत्वेळते रोरीतिरेफलोपः ढ्रलोपेपूर्वस्यदीर्घोणइतिइकारस्यदीर्घत्वम् । रिशादसः रिशहिंसायां रिशन्तिहिंसन्तीतिरिशाःशत्रवः इगुपधज्ञाप्रीकिरःकः तानदन्तीतिरिशादसः सर्वधातुभ्योसुन् कृदुत्तरपदप्रकृतिस्वरत्वम् । सीदन्तु षद्लृविशरणगत्यवसादनेषु पाघ्रेत्यादिनासीदादेशः शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरःशिष्यते । मनुपः मनज्ञाने मन्यतेजानातीतिमनुःप्रजापतिः जनेरुसिर्नित्चेत्यनुवृत्तौ बहुलमन्यत्रापीत्यौणादिकउसिप्रत्ययः नित्त्वादाद्युदात्तत्वम् । यथा यथेतिपादान्तेइतिसर्वानुदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

पूर्व्यहोतरस्यनोमन्दस्वसख्यस्यच । इमाउषुश्रुधीगिरः ॥ ५ ॥ २० ॥

पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च । इमाः । ऊम् इति । सु । श्रुधि । गिरः ॥ ५ ॥ २० ॥

हेपूर्व्यअस्मदादेःपूर्वमुत्पन्न होतःहोमनिष्पादकाग्ने नोस्मदीयस्यास्यप्रवर्तमानस्ययज्ञस्य सख्यस्यचास्मदनुग्रहस्यच सिद्ध्यर्थंमन्दस्वहृष्टोभव इमाअस्माभिःप्रयुज्यमानाःगिरः उषु स्तुतिरूपावाचोपिश्रुधिशृणु ॥ पूर्व्य आमन्त्रिताद्युदात्तत्वम् । होतरित्यस्यनामन्त्रितेसमानाधिकरणे इतिपूर्वस्याविद्यमानवत्त्वात् आष्टमिकोनिघातः । अस्य ऊडिदमितिपष्ठ्याउदात्तत्वम् । मन्दस्व मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु शपःपित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरः अपादादावितिपर्युदासादाष्टमिकोनिघाताभावः । सख्यस्य सख्युःकर्मसख्यं सख्युर्यइतियप्रत्ययः यस्येतिलोपेप्रत्ययस्वरः । उषु सुञइतिषत्वम् । श्रुधि श्रुश्रवणे श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः बहुलंछन्दसीतिशपोलुक् ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेविंशोवर्गः ॥ २० ॥

षष्ठीमृचमाह—

यच्चिद्धिशश्वतातनादेवंदेवंयजामहे । त्वेइद्धूयतेहविः ॥ ६ ॥

यत् । चित् । हि । शश्वता । तना । देवम्ऽदेवम् । यजामहे । त्वे इति । इत् । हूयते । हविः ॥ ६ ॥

हेअग्ने यच्चिद्धियद्यपिशश्वताशाश्वतेननित्येनतनाविस्तृतेनहविषादेवंदेवं अन्यमन्यं वरुणेन्द्रादिरूपंनानाविधंदेवताविशेषंयजामहे तथापितद्धविः सर्वंत्वेइत्त्वय्येवहूयते अतोदेवता-

न्तरविषयोयागोपि त्वदीयैवसेवेत्यर्थः ॥ तना तनुविस्तारे क्विप्चेतिक्विप् यद्वा पचाद्यच् सुपांसुलुगितितृतीयायाआकारः । देवंदेवं नित्यवीप्सयोरितिद्विर्भावः तस्यपरमाम्रेडितमितिउत्तरस्याम्रेडितसंज्ञायां अनुदात्तंचेतिसर्वानुदात्तत्वम् । यजामहे निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः । त्वे युष्मच्छब्दात्सप्तम्येकवचनस्यसुपांसुलुगितिशेआदेशः त्वमावेकवचनेइतिमपर्यन्तस्य त्वादेशः शेषलोपे अतोगुणेइतिपररूपत्वं शेइतिप्रगृह्यसंज्ञायां प्लुतप्रगृह्याअचीतिप्रकृतिभावः । हूयते अकृत्सार्वधातुकयोर्दीर्घइतिदीर्घः ॥ ६ ॥

सप्तमीमृचमाह—

प्रि॒योनो॑अस्तुवि॒श्पति॒र्होता॑म॒न्द्रोवरे॑ण्यः । प्रि॒याःस्व॒ग्नयो॑व॒यम् ॥ ७ ॥

प्रि॒यः । नः॒ । अ॒स्तु॒ । वि॒श्पतिः॑ । होता॑ । म॒न्द्रः । वरे॑ण्यः । प्रि॒याः ।
सु॒ऽअ॒ग्नयः॑ । व॒यम् ॥ ७॥

विश्पतिर्विशांप्रजानांपालकोहोताहोमनिष्पादकोमन्द्रोहृष्टःवरेण्योवरणीयोग्निर्नोस्माकं प्रियोस्तु वयमपिस्वग्नयःशोभनाग्नियुक्ताःसन्तस्तवप्रियाभूयास्मेतिशेषः ॥ विश्पतिः पत्यावैश्वर्ये इतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । वरेण्यः वृञएण्यः वृषादित्वादाद्युदात्तः । स्वग्नयः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

स्व॒ग्नयो॒हिवार्यं॑दे॒वासो॑दधि॒रेच॑नः । स्व॒ग्नयो॑मनामहे ॥ ८ ॥

सु॒ऽअ॒ग्नयः॑ । हि । वार्य॑म् । दे॒वासः॑ । द॒धि॒रे । च॒ । नः॒ । सु॒ऽअ॒ग्नयः॑ ।
म॒ना॒म॒हे॒ ॥ ८ ॥

स्वग्नयः शोभनाग्नियुक्तादेवासोदीप्यमानाऋत्विजोनोस्मदीयंवार्यंवरणीयंहविःहियस्माद्दधिरेधृतवन्तः तस्माद्वयंस्वग्नयःशोभनाग्नियुक्ताःसन्तोमनामहेत्वांयाचामहे॥वार्यं वृञ्वरणे वृङ्संभक्तौ ऋहलोर्ण्यत् ईडवन्देत्यादिनाआद्युदात्तत्वम् । दधिरे इरेचश्चित्त्वादन्तोदात्तत्वम् हिचेति निघातप्रतिषेधः । मनामहे मनज्ञानेव्यत्ययेनशप् ॥ ८॥

नवमीमृचमाह—

अथा॑नउ॒भये॑षा॒ममृ॑त॒मर्त्या॑नाम् । मि॒थःस॑न्तु॒प्रश॑स्तयः ॥ ९ ॥

अर्थ । नः । उभयेषाम् । अमृत । मर्त्यानाम् । मिथः । सन्तु ।
प्रऽशस्तयः ॥ ९ ॥

हेअग्नेअमृतमरणरहिताग्ने अथकर्मानुष्ठानानन्तरं मर्त्यानांमनुष्याणां नोस्माकमस्मत्स्वामिनस्तवचोभयेषांमिथःपरस्परं प्रशस्तयःप्रशंसारूपावाचःसन्तु सम्यगनुष्ठितमितियजमानविषयप्रशंसा सम्यगनुगृहीतमित्यग्निविषया ॥ अथ निपातस्यचेतिसंहितायांदीर्घः । अमृत अपादादावितिपर्युदासात्पाष्ठिकमाद्युदात्तत्वम् । मर्त्यानां मृङ्प्राणत्यागे असिहसीत्यादिनातन्प्रत्यान्तोमर्तशब्दः तस्माद्भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् । सन्तु श्नसोरल्लोपः । प्रशस्तयः तादौचेतिगतेःप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

विश्वेभिरग्नेअग्निभिरिमंयज्ञमिदंवचः । चनोधाःसहसोयहो ॥ १० ॥ २१ ॥

विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः । चनः ।
धाः । सहसः । यहो इति ॥ १० ॥ २१ ॥

सहसोबलस्ययहोपुत्रहेदेवतारूपाग्ने विश्वेभिरग्निभिःसर्वैराहवनीयादिभिर्युक्तस्त्वंइमंअस्मदीयंयज्ञंइदमस्मदीयंवचःस्तोत्रंचसेवमानः चनोन्नं धाः अस्मभ्यंधेहि विश्वेभिः बहुलंछन्दसीति भिसऐसादेशाभावः । चनः चायृपूजानिशामनयोः चायेरन्नेह्रस्वश्चेत्यसुन् तत्संनियोगेननुडागमश्च नित्वादाद्युदात्तत्वम् । धाः लुङिगातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । सहसोयहोइतिसुबामन्त्रितइतिपराङ्गवद्भावादामन्त्रितस्यचेतिषष्ठ्यामन्त्रितसमुदायोनिहन्यते ॥ १० ॥

इतिप्रथमस्यद्वितीयेएकविंशोवर्गः ॥ २१ ॥

अश्वंनत्वेतित्रयोदशर्चंचतुर्थंसूक्तंपूर्ववदृष्यादयः त्रयोदश्यानमोमहद्भ्यइत्यस्यास्त्रिष्टुप्छन्दः विश्वेदेवादेवता तथाचानुक्रान्तम्—अश्वंसप्तोनागायत्रंन्त्यावैश्वदेवीत्रिष्टुबिति । प्रातरनुवाकाश्विनशस्त्रयोरुत्तमावर्जितस्यसूक्तस्यविनियोगः ।

तस्मिन्सूक्तेप्रथमामृचमाह—

अश्वंनत्वावारवन्तंवन्दध्याअग्निंनमोभिः । सम्राजन्तमध्वराणाम् ॥ १ ॥

अश्वम् । न । त्वा । वारंऽवन्तम् । वन्दध्यै । अग्निम् । नमःऽभिः ।
सम्ऽराजन्तम् । अध्वराणाम् ॥ १ ॥

अध्वराणांयज्ञानां सम्राजंतंसम्राट्स्वरूपंस्वामिनंअग्निंत्वां नमोभिः स्तुतिभिः वन्दध्यैव-न्दितुंप्रवृत्ताइतिशेषः अत्रदृष्टान्तः—वारवन्तंवालयुक्तंअश्वंन अश्वमिव अश्वोयथावालैःबाधका-न्मशकमक्षिकादीन्परिहरति तथात्वमपिज्वालाभिरस्मद्विरोधिनःपरिहरसीत्यर्थः ॥ वारवन्तं मतुपःपित्त्वादनुदात्तत्वं घञोञित्त्वादाद्युदात्तोवारशब्दः कर्षात्वतइत्यन्तोदात्तत्वंव्यत्ययेननप्रवर्त-ते यद्वा वारयतिदंशकानितिवारः पचाद्यच् कपिलादित्वाल्लत्वविकल्पः वृषादिः । वन्दध्यै वदिअ-भिवादनस्तुत्योः इदितोनुम्धातोरितिनुम् तुमर्थेसेसेनित्यध्यैप्रत्ययः प्रत्ययस्वरः सम्राजन्तं शपः पित्त्वादनुदात्तत्वं शतुश्चलसार्वधातुकस्वरेणधातुस्वरःशिष्यते समासेऽप्युत्तरप्रकृतिस्वरेणसएव । अध्वराणां नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

सघानःसूनुःशवसापृथुप्रगामासुशेवः । मीढ्वाँअस्माकंबभूयात् ॥ २ ॥

सः । घ । नः । सूनुः । । शवसा । पृथुऽप्रगामा । सुऽशेवः ।
मीढ्वान् । अस्माकम् । बभूयात् ॥ २ ॥

सघ सएवाग्निर्नोस्माकं सुशेवः सुसुखोभवत्वितिशेषः कीदृशः शवसाबलस्यसूनुःपुत्रः पृथुप्रगामापृथुप्रगमनः किञ्च अस्माकंमीढ्वान्कामानां वर्षिताबभूयात् भवतु ॥ सघानः ऋचितुनु-घमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः । शवसा सुपांसुलुगिति सुपोलुग्भवन्तीतिङसद्यदेशः । पृथुःप्रगामा प्रकर्षे-णगमनंप्रगामः हलश्चेतिघञ् पृथुःप्रगामोयस्यासौपृथुप्रगामा सुपांसुलुगितिपूर्वसवर्णदीर्घआका-रः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सुशेवः इण्शीङ्भ्यांवन्निति शेवशब्दोवन्प्रत्ययान्तआद्यु-दात्तः ततोबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वेप्राप्ते आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्यु-दात्तत्वम् । मीढ्वान् मिहसेचने इत्यस्मात्क्वसुप्रत्ययान्तोदाश्वान्साह्वान्मीढ्वांश्चेतिनिपातितः । बभूयात् भवतेश्छान्दसत्यलिटः विङांतिङोभवन्तीतिलिङादेशः यासुट् स्थानिवद्भावादार्ध-धातुकत्वाच्छबभावः द्विर्वचनेभवतेरइत्यत्वम् तिङ्तिङइतिनिघातः यद्वा एतस्मादेवलिङि छा-न्दसःश्लुः भवतेरइतिलिटिविहितमभ्यासस्यसर्वेविधयश्छन्दसिविकल्प्यन्तइत्यत्वम् ॥ २ ॥

तृतीयामृचमाह—

सनोदूराच्चासाच्चनिमर्त्यादघायोः । पाहिसदमिद्विश्वायुः ॥ ३ ॥

सः । नः । दूरात् । च । आसात् । च । नि । मर्त्यात् । अघऽयोः । पाहि । सदम् । इत् । विश्वऽआयुः ॥ ३ ॥

हेअग्ने विश्वायुःव्याप्तगमनः सत्वं दूराच्च दूरेपि आसाच्च आसन्नदेशेपि अघायोःअघंपापमनिष्टंकर्तुमिच्छतोमर्त्यात् मनुष्याद्वैरिणोनोस्मान् सदमित् सर्वदैवनिपाहिनितरांपालय । अघायोः सुपआत्मनःक्यच् अश्वाघस्यादित्यात्वम् । पाहि पादादित्वादनिघातः । विश्वायुः इणगतावित्यस्मात् भावे एतेर्णिच्चेत्युसिः । विश्वमयनंगमनंयस्येतिबहुव्रीहिः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

इममूषुत्वमस्माकंसनिंगायत्रंनव्यांसम् । अग्नेदेवेषुप्रवोचः ॥ ४ ॥

इमम् । ऊम् इति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् । अग्ने । देवेषु । प्र । वोचः ॥ ४ ॥

हेअग्ने त्वमस्माकमस्मत्संबन्धिनं इममूषु पुरोदेशेनुष्ठीयमानमपि सनिंहविर्दानंनव्यांसं नवतरंगायत्रंस्तुतिरूपंवचोपि देवेषुदेवानामग्रेप्रवोचः प्रब्रूहि ॥ ऊषु निपातस्यचेतिसंहितायां दीर्घत्वं सुञइतिषत्वम् । नव्यांसं नवशब्दादीयसुनि ईकारलोपश्छान्दसः ईयसुनोनित्त्वादाद्युदात्तत्वम् । वोचः छन्दसिलुङ्लङ्लिटइतिलोडर्थेप्रार्थनायांलुङि अस्यतिवक्तीतिच्लेरङादेशः वचउम् ॥ ४ ॥

पञ्चमीमृचमाह—

आनोभजपरमेष्वावाजेषुमध्यमेषु । शिक्षावस्वोअन्तमस्य ॥ ५ ॥ २२ ॥

आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्षं । वस्वः । अन्तमस्य ॥ ५ ॥ २२ ॥

हेअग्नेपरमेषूत्कृष्टेषु द्युलोकवर्तिषुवाजेष्वन्नेषु नोस्मानाभजसर्वतः प्रापय मध्यमेष्वन्तरिक्षलोकवर्तिषु वाजेष्वाभज अन्तमस्यअन्तिकतमस्यभूलोकस्यसंबन्धिनिवस्वोवसूनि शिक्षदेहि ॥ शिक्ष शिक्षविद्योपादाने शपःपित्त्वाद्धातुस्वरः द्व्यचोतस्तिङइतिसंहितायांदीर्घः । अन्तमस्य अन्तिकतमस्यतमेतादेश्चेतितिकशब्दलोपः ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेद्वाविंशोवर्गः ॥ २२ ॥

षष्ठीमृचमाह—

विभक्तासिचित्रभानोसिन्धोरूर्मीउपाकआ। सद्योदाशुषेक्षरसि ॥६॥

विऽभक्ता। असि। चित्रभानो इति चित्रऽभानो। सिन्धोः। ऊर्मौ। उपाके। आ। सद्यः। दाशुषे। क्षरसि ॥ ६ ॥

हेचित्रभानो विचित्ररश्मियुक्ताग्ने विभक्ता विशिष्टस्यधनस्य प्रापयितासि तत्रदृष्टान्तउच्यते—आकारउपमार्थः यथासिन्धोर्नद्याउपाकेसमीपे ऊर्मौऊर्मितरङ्गोपलक्षितंकुल्यादिरूपं प्रवाहंविभजन्तितद्वत् दाशुषेहविर्दत्तवतेयजमानायसद्यस्तदानीमेव क्षरसिकर्मफलभूतांवृष्टिंकरोषि ॥ सिन्धोः स्यन्दूप्रस्रवणे स्यन्देःसंप्रसारणंधश्चेत्युप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम्। ऊर्मिः अर्तेरूच्चेतिमिः प्रत्ययस्वरः। दाशुषे घृतवतायदाशुषेइत्यत्रोक्तम् ॥ ६ ॥

सप्तमीमृचमाह—

यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः। सयन्ताशश्वतीरिषः ॥ ७ ॥

यम्। अग्ने। पृत्ऽसु। मर्त्यम्। अवाः। वाजेषु। यम्। जुनाः। सः। यन्ता। शश्वतीः। इषः ॥ ७॥

हे अग्ने पृत्सुसंग्रामेषु यंमर्त्यंयजमानमवाः अवसिरक्षसि यंपुरुषंवाजेषुसंग्रामेषुजुनाःप्रेरयसिसनरःयजमानः शश्वतीरिषः नित्यान्यन्नानियन्ता नियन्तुंसमर्थोभवति ॥ पृत्सु पदादिषुमांस्पृत्स्नूनामुपसंख्यानमितिपृतनाशब्दस्यपृदादेशः सावेकाचइतिविभक्तेरुदात्तत्वम्। अवाः आवः अकाराकारयोर्विपर्ययः यद्वा लेटयाडागमः इतश्चेतिसिप् इकारस्यलोपः। जुनाः जूइतिगत्यर्थः सौत्रोधातुः लङःसिप् क्र्यादिभ्यःश्ना बहुलंछन्दस्यमाङ्योगेपीत्यडभावः यद्वृत्तयोगादनिघातः। यन्ता तृनोनित्वादाद्युदात्तत्वम्। शश्वतीः उगितश्चेतिङीप् ॥ ७ ॥

अष्टमीमृचमाह—

नकिरस्यसहन्त्यपर्येताकयस्यचित्। वाजोअस्तिश्रवाय्यः ॥ ८ ॥

नकिः। अस्य। सहन्त्य। परिऽएता। कयस्य। चित्। वाजः। अस्ति। श्रवाय्यः ॥ ८ ॥

हेसहन्त्य शत्रूणामभिभवनशीलाग्ने अस्यत्वद्भक्तस्ययजमानस्य कयस्यचित् कस्यापिपर्येतानकिः आक्रमितानास्ति किञ्चास्ययजमानस्यश्रवाय्यः श्रवणीयोवाजोस्तिबलविशेषोस्ति ॥ कयस्य यकारोपजनश्छान्दसः । श्रवाय्यः श्रुदक्षिस्पृहिग्रहिभ्यआय्यइत्याय्यप्रत्ययः ॥ ८ ॥

नवमीमृचमाह–

सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता । विप्रेभिरस्तुसनिता ॥ ९ ॥

सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता ।
विप्रेभिः । अस्तु । सनिता ॥ ९ ॥

विश्वचर्षणिः सर्वैर्मनुष्यैरुपेतः सोग्निरर्वद्भिरश्वैर्वाजंसंग्रामं तरुतातारयितास्तु विप्रेभिः मेधाविभिः ऋत्विग्भिःसहितस्तुष्टोग्निः सनिताफलस्यदातास्तु ॥ विश्वेचर्षणयोयस्य बहुव्रीहौ विश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । अर्वद्भिः ऋगतौ अन्येभ्योपिदृश्यन्तइतिवनिप् भिसिअर्वणस्त्रसावनञइतिनकारस्य तृइत्ययमादेशः । तरुता तॄप्लवनतरणयोः अस्मात् ग्रसितस्कभितेत्यादौतृन्नन्तोनिपातितः निपातनादेवेकारस्योत्वम् ॥ ९ ॥

आप्तोर्यामेहोतुरतिरिक्तोक्थेजराबोधतद्विविड्डीतिस्तोत्रियस्तृचः यस्यपशवोनोपधरेरन्नितिखण्डेसूत्रितम्–अतिरिक्तोक्थानिजराबोधतद्विविड्डीति ।

तामेतांसूक्तेदशमीमृचमाह–

जराबोधतद्विविड्ढिविशेविशेयज्ञियाय।स्तोमंरुद्रायदृशीकम्॥१०॥२३

जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् ।
रुद्राय । दृशीकम् ॥ १० ॥ २३ ॥

हेजराबोध जरयास्तुत्याबोध्यमानाग्नेविशेविशे तत्तद्यजमानरूपप्रजानुग्रहार्थं यज्ञियाय यज्ञसंपन्न्यनुष्ठानसिद्ध्यर्थं तद्देवयजनंविविड्ढिप्रविश यजमानोपिरुद्रायक्रूरायाग्नयेतुभ्यंदृशीकंदर्शनीयंरमणीयं स्तोमंस्तोत्रंकरोतीतिशेषः अत्रयास्कएवंव्याख्यातवान्–जरास्तुतिर्जरतेःस्तुतिकर्मणस्तांबोधतयाबोधयितरिनिवा तद्विविड्ढितत्कुरुमनुष्यस्यमनुष्यस्ययज्ञियायस्तोमंरुद्रायदर्शनीयमिति ॥ जराबोध नुप्रनयोहानौ अत्रस्तुत्यर्थः पिद्भिदादिभ्योङित्यङ्प्रत्ययः तत्तदा

१ नि० १०. ८ ।

जरयास्तुत्याबोधोयस्यासौजराबोधः यद्वा जरयाबोध्यतइतिजराबोधः कर्मणिघञ् आमन्त्रितायुदात्तत्वम्। विविड्ढि विशप्रवेशने लोटोहिः बहुलंछन्दसीतिशपःश्लुः अभ्यासहलादिशेषौ हुझल्भ्योहेर्धिरितिहेर्धिरादेशः षत्वष्टुत्वे यद्वा विपृव्याप्तावित्यस्माल्लोण्मध्यमैकवचने अभ्यासस्यगुणाभावः। विशेविशे सावेकाचइतिचतुर्थ्याउदात्तत्वं अनुदात्तंचेत्याम्रेडितानुदात्तत्वम्। यज्ञियाय यज्ञर्त्विग्भ्यांघखञावितिघः। दृशीकं अनिदृशिभ्यांचेतिकीकन्प्रत्ययः नित्वादाद्युदात्तः॥ १०॥

इतिप्रथमस्यद्वितीयेत्रयोविंशोवर्गः॥ २३॥

एकादशीमृचमाह—

सनो॑म॒हाँ अ॑निमा॒नोधू॒मके॑तुःपुरु॒श्च॒न्द्रः। धि॒येवाजा॑यहिन्वतु॥ ११॥

सः। नः। म॒हान्। अ॒नि॒ऽमा॒नः। धू॒मऽके॑तुः। पु॒रु॒ऽच॒न्द्रः। धि॒ये। वाजा॑य। हि॒न्व॒तु॥ ११॥

सोग्निर्नोस्मान् धियेकर्मणे वाजायान्नायचहिन्वतुप्रीणयतु कीदृशः महान् गुणाधिकः अनिमानः निमानवर्जितः अपरिच्छिन्नइत्यर्थः धूमकेतुः धूमेनज्ञाप्यमानः पुरुश्चन्द्रः बहुदीप्तिः॥ महाँअनीत्यत्रसंहितायांनकारस्यरुत्वानुनासिकावुक्तौ। अनिमानः नविद्यतेनिमानोऽस्येतिबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। धूमकेतुः इषियुधीन्धिदसिश्याधूसूभ्योमक् चायःकिः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। पुरुश्चन्द्रः चदिआह्लादनेदीप्तौच अस्मात्स्फायितञ्चीत्यादिनाकर्तरिरक् पुरुश्चासौचन्द्रश्चेतिसमासान्तोदात्तत्वं ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रे इतिसुट् तस्यश्चुत्वेनशकारः। धिये सावेकाचइतिचतुर्थ्याउदात्तत्वम्। हिन्वतु हिविप्रीणनार्थः इदितोनुम्धातोरितिनुम्॥ ११॥

द्वादशीमृचमाह—

सरे॒वाँइ॑वविश्प॒ति॒र्दैव्यः॑के॒तुःशृ॒णोतु॑नः। उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः॥ १२॥

सः। रे॒वान्ऽइ॑व। वि॒श्पतिः॑। दैव्यः॑। के॒तुः। शृ॒णोतु॑। नः। उ॒क्थैः। अ॒ग्निः। बृ॒हत्ऽभा॑नुः॥ १२॥

सोग्निःउक्थैःस्तोत्रैर्युक्तानस्मान्शृणोतु तत्रदृष्टान्तः—रेवानिव यथालोकेधनवान्राजा वन्दिनांस्तोत्रंशृणोतितद्वत् कीदृशः विश्पतिःप्रजापालकः दैव्यःदेवानांसंबन्धी अग्निर्वैदेवानांहो-

तेतिश्रुत्यन्तराद् । केतुः दूतवद्ज्ञापकः अग्निर्देवानांदूतआसीदितिश्रुतेः । बृहद्भानुः प्रौढरश्मिः॥ सरेवान् एतत्तदोरितिसोर्लोपः रयेर्मतौबहुलमितिसंप्रसारणं परपूर्वत्वं आद्गुणः छन्दसीरइतिमतुपो-वत्वं आरेशब्दाच्चमतुपउदात्तत्वंवक्तव्यमितिमतुपउदात्तत्वम्। विश्पतिः परादिश्छन्दसिबहुलमि-त्युत्तरपदाद्युदात्तत्वम् । बृहद्भानुः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १२ ॥

दर्शपूर्णमासयोःस्रुगादापनात्पूर्वभाविनिजपेनमोमहद्भ्यइत्येषा ब्रह्मौदनेप्राशिष्यमाणइति खण्डे—सूर्योनोदिवस्पातुनमोमहद्भ्योनमोअर्भकेभ्यइतिसूत्रितम् ।

तामेतांत्रयोदशीमृचमाह—

नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ । यजा॑म दे॒वान्यदि॑ शक्न॒वाम॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥ १३ ॥ २४ ॥

नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः । नमः॑ । आ॒शि॒नेभ्यः॑ । यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा । ज्याय॑सः । शंस॑म् । आ । वृ॒क्षि॒ । दे॒वाः॒ ॥ १३ ॥ २४ ॥

अग्निनाप्रेरितःशुनःशेपोविश्वान्देवाननयातुष्टाव तथाचाम्नायते—तमग्निरुवाचविश्वान्नु देवान्स्तुह्यथत्वोत्स्रक्ष्यामीतिसविश्वान्देवान्तुष्टावनमोमहद्भ्योनमोअर्भकेभ्यइत्येतयर्चेति। महा-न्तोगुणैरधिकाः अर्भकागुणैर्न्यूनायुवानस्तरुणाःआशिनावयसाव्याप्ताःवृद्धाः यथोक्तचतुर्विधदे-हयुक्तेभ्योदेवेभ्योनमोस्तु यदिशक्नवाम कथंचिद्धनादिसंपत्त्याशक्ताश्चेव तदानींदेवान्यजामहेदेवाः ज्यायसोज्येष्ठस्यदेवताविशेषस्य आ सर्वतःप्रसृतंशंसंस्तोत्रंमावृक्षि अहंविच्छिन्नंमाकार्षम्॥आ-शिनेभ्यः अशूव्याप्तौ बहुलमन्यत्रापीत्यौणादिकइनच्प्रत्ययः चितइत्यन्तोदात्तत्वम्। यजाम शपः पित्त्वादनुदात्तत्वं तिङश्चलसार्वधातुकस्वरेणधातुस्वरः। शक्नवाम शकॢशक्तौ आडुत्तमस्यपिच्चेति तिङःपित्त्वाभावादनुदात्तत्वेसतिविकरणस्वरः निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः। ज्यायसः प्र-शस्यशब्दादीयसुनिज्यचेतिज्यादेशः ज्यादादीयसइतिईयसुनईकारस्यात्वं नित्त्वादाद्युदात्तत्वम्। शंसं हलश्चेतिघञ्। वृक्षि ओव्रश्चूछेदने व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनं इट् च्लेःसिच् स्वर-तिसूतीत्यादिनाइडभावः स्कोःसंयोगाद्योरित्युपधासकारलोपः व्रश्चादिनाषत्वं षढोःकःसीतिकत्वं आदेशप्रत्यययोरितिषत्वं नमाङ्योगइत्यडभावः ॥ १३ ॥

इतिप्रथमस्यद्वितीयेचतुर्विंशोवर्गः ॥ २४ ॥

१ तै० सं. २.५.९.। २ तै०स. २.५.८.। ३ ऐ० ब्रा० ७.१६.।

यत्रग्रावेतिपञ्चमंसूक्तंनवर्चं आदितःषळनुष्टुभः आयजीइत्याद्यास्तिस्रोगायत्र्यः आदितश्चतसृणामिन्द्रोदेवता ततोद्वेउलूखलदेवत्ये तदनन्तरभाविन्यौउलूखलमुसलोभयदेवताके अन्त्यायाउच्छिष्टमित्यस्याहरिश्चन्द्राधिषवणचर्मसोमानामन्यतमोदेवता तथाचबृहद्देवतायामुक्तम्— चर्माधिषवणीयंवासोमंवान्त्याप्रशंसतीति। तदुक्तमनुक्रमण्यां यत्रग्रावानवषळनुष्टुवादियश्चिन्द्यौ-लूखल्यौपरेमौसल्यौचप्रजापतेर्हरिश्चन्द्रस्यान्त्याचर्मप्रशंसावेति । आद्याश्चतस्रोऽजःसवेहोमेविनियुक्ताः पञ्चम्याद्याश्चतस्रोभिषवे अन्त्याद्रोणकलशेसोमावनयने तथाचब्राह्मणम्—अथहैतंशुनःशेपोऽजःसवंददर्शतमेताभिश्चतसृभिरभिसुपावयश्चिद्धित्वंगृहेगृहइत्यथैनंद्रोणकलशमभ्यवनिनायोच्छिष्टंचम्वोर्भरेत्येतयर्चाथहास्मिन्नन्वारब्धेपूर्वाभिश्चतसृभिःसस्वाहाकाराभिर्जुहवांचकारेति ॥

तत्रप्रथमामृचमाह—

यत्रग्रावापृथुबुंध्नऊर्ध्वोभवतिसोतवे। उलूखलसुतानामवेद्विन्द्रजल्गुलः ॥१

यत्रं । ग्रावा । पृथुऽबुंध्नः । ऊर्ध्वः । भवति । सोतवे । उलूखलऽसुतानाम् । अवं । इत् । ऊम् इति । इन्द्र । जल्गुलः ॥ १ ॥

हेइन्द्र यस्मिन्नजःसवेकर्मणिसोतवेभिषवार्थंग्रावापाषाणः पृथुबुध्नः स्थूलमूलऊर्ध्वउन्नतोभवति तस्मिन्कर्मणि उलूखलसुतानांउलूखलेनाभिषुतानांरसंअवेव स्वकीयत्वेनावगत्यैवजल्गुलोभक्षय ॥ पृथुबुध्नः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः । सोतवे षुञ्अभिषवे तुमर्थेसेसेनितितवेन्प्रत्ययः नित्वादाद्युदात्तत्वम् । उलूखलसुतानां उलूखलेनसुतानांतृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । जल्गुलः गलअदने अस्माद्यङ्लुकि लेण्मध्यमैकवचने लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः उपधायाउत्वंहलादिशेषाभावश्चपृषोदरादित्वात् ॥ १ ॥

द्वितीयामृचमाह—

यत्रद्वाविवजघनाधिषवण्याकृता। उलूखलसुतानामवेद्विन्द्रजल्गुलः॥२॥

यत्रं । द्वौऽइंव । जघना । अधिऽसवन्यां । कृता । उलूखलऽसुतानाम् । अवं । इत् । ऊम् इति । इन्द्र । जल्गुलः ॥ २ ॥

---

१ ऐ० ब्रा० ७. १७.

यत्रयस्मिन्कर्मणिअधिपवण्याउभेअधिपवणफलकेद्वाविवजघनाद्वौजघनप्रदेशाविव जघनंजङ्घन्यतइतियास्कः । कृताविस्तीर्णेकृतेसंपादिते अन्यत्पूर्ववत् ॥ जघना हन्तेः शरीरावयवेद्वेचेतिहन्धातोः अच् द्वित्वं कर्दमादित्वान्मध्योदात्तः सुपांसुलुगित्याकारः । अधिषवण्या पुत्रूअभिषवे ल्युट् भवेच्छन्दसीतियत् उपसर्गात्सुनोतीतिषत्वं तित्स्वरितमितिस्वरितः नच यतोनावइत्याद्युदात्तत्वं तत्रहिनिष्ठाचद्व्यजनादित्यस्यानुवृत्तेः द्व्यच्कस्यैवतदिति । कृता पूर्ववदाकारः ॥ २ ॥

तृतीयामृचमाह—

यत्रनार्यपच्यवमुपच्यवंचशिक्षते।उलूखलसुतानामवेदिन्द्रजल्गुलः॥३॥

यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते । उलूखलऽसुतानाम् । अव । इत् । ऊम् इति । इन्द्र । जल्गुलः ॥३॥

यत्रयस्मिन्कर्मणिनारीपत्नी अपच्यवं शालायानिर्गमनं उपच्यवंच शालामांप्रतिचशिक्षते अभ्यासंकरोति अन्यत्पूर्ववत् ॥ अपच्यवं च्युङ्गतौ ऋदोरवित्यप् गुणावादेशौ थाथादिनोत्तरपदान्तोदात्तत्वं एवमुपच्यवम् । शिक्षते शिक्षविद्योपादाने अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः ॥ ३ ॥

चतुर्थीमृचमाह—

यत्रमन्थांविबध्नतेरश्मीन्यमितवाइव।उलूखलसुतानामवेदिन्द्रजल्गुलः॥४

यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव । उलूखलऽसुतानाम् । अव । इत् । ऊम् इति इन्द्र । जल्गुलः ॥ ४ ॥

यस्मिन्कर्मणिमन्थां आशिरमथनहेतुंमन्थानंविबध्नन्ति तत्रदृष्टान्तः—रश्मीनश्वबन्धनार्थान्प्रग्रहान् यमितवाइवनियन्तुमिवअन्यत्पूर्ववत् ॥ मन्थां पथिमथ्यृभुक्षामात्इतिद्वितीयायामपि व्यत्ययेनात्वं प्रातिपदिकस्वरेणान्तोदात्तत्वेप्राप्ते पथिमथोःसर्वनामस्थानइत्याद्युदात्तत्वं यद्वा मथ्यते अनयेतिमन्था मथिविलोडनेइत्यस्मात् हलश्चेतिकरणेघञ् ततष्टाप् ञित्त्वादाद्युदात्तत्वम् । विबध्नते बन्धबन्धने क्र्यादिभ्यःश्ना अनिदितामितिनलोपे श्नाभ्यस्तयोरातइत्याकारलोपः प्रत्ययस्वरः तिङिचोदात्तवतीतिगतेर्निघातः । यमितवै यमउपरमे तुमर्थेसेसेनितितवैप्रत्ययः इडागमश्छान्दसः यद्वा ण्यन्तात्तवैप्रत्ययस्येडागमेसति णिलोपश्छान्दसः अन्तश्चतवैयुगपदित्याद्यन्तयोरुदात्तत्वम् ॥४॥

---

१ नि० ९. २०.

अभिषवेविनियुक्तांचतसृषुमध्येपथमांसूक्तेपञ्चमीमृचमाह—

यच्चिद्धित्वंगृहेगृहउलूखलकयुज्यसे । इहद्युमत्तमंवदजयतामिवदुन्दुभिः ॥ ५ ॥ २५ ॥

यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ॥ ५ ॥ २५ ॥

हे उलूखलक यच्चिद्धि यद्यपित्वं अवघातार्थंगृहेगृहेयुज्यसे तथापीहवैदिकेकर्मणितीव्रमुसलप्रहारेणद्युमत्तमं अतिशयेनदीप्तंमभूतध्वनियुक्तंशब्दंवद तत्रदृष्टान्तः—जयतामिवदुन्दुभिः यथायुद्धेजयंप्राप्नुवतांराज्ञांदुन्दुभिर्महान्तंध्वनिंकरोतितद्वत् उलूखलशब्दंयास्कएवंव्याख्यातवान्—उलूखलमुरुकरंवोर्कंरंवोर्ध्वखंवोरुमेकुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरंचैतत्तदुलूखलमित्याचक्षतेपरोक्षेणेतिचब्राह्मणमिति[1] ॥ उलूखलक अपादादावितिपर्युदासादाष्टमिकनिघाताभावेपाष्ठिकमाद्युदात्तत्वम् । युज्यसे अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयक्स्वरःशिष्यते नचतिङ्ङतिङइतिनिघातः निपातैर्यद्यदिहन्तेतिप्रतिषेधात् । द्युमत्तमं दीव्यतेर्दीप्त्यर्थस्यसंपदादिलक्षणः क्विप् दिवउदित्युत्वं यणादेशे ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वं ननुदिवउदित्यत्रमातिपदिकंगृह्यते नधातुरित्युक्तत्वात् अक्षद्यूरित्यादाविवात्राप्यूठाभवितव्यं एवंतर्हिदीप्तिमत्स्वर्गवाचकेनदिवुप्रातिपदिकेनदीप्तिर्लक्ष्यतइत्युत्वंभविष्यति ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेपञ्चविंशोवर्गः ॥२५॥

षष्ठीमृचमाह—

उतस्मतेवनस्पतेवातोविवात्यग्रमित् । अथोइन्द्रायपातवेसुनुसोममुलूखल ॥ ६ ॥

उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् । अथो इति । इन्द्राय । पातवे । सुनु । सोमम् । उलूखल ॥ ६ ॥

उतअपिचहेवनस्पते उलूखलरूपवृक्ष तेअग्रमित् तवपुरतएव वातोविवातिस्म त्वरोपेतमुसलप्रहारैर्वायुर्विशेषेणप्रसरतित्यर्थः अथोऽनन्तरं हेउलूखल इन्द्रायइन्द्रोपकारार्थंपातवे

1 नि० ९. २०. ।

पातुंसोमंसुनु सोमाभिषवंकुरु ॥ वनस्पते पारस्करादित्वात्सुट् कार्येकारणशब्दः । पातवे पा- पाने तुमर्थेसेसेनितितवेन्प्रत्ययः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् । सुनु उतश्चप्रत्ययादसंयो- गपूर्वादितिहेर्लुक् विकरणस्वरेणान्तोदात्तत्वं पादादित्वादनिघातः । उलूखल उर्ध्वंखम- स्येत्युलूखलः पृषोदरादिः ॥ ६ ॥

सप्तमीमृचमाह—

आ॒य॒जी वा॑ज॒सात॑मा॒ ता ह्यु१॒॑च्चा वि॑ज॒र्भृ॒तः॑ । हरी॑इ॒वान्धां॑सि॒ बप्स॑ता ॥ ७ ॥

आ॒य॒जी इत्या॑ऽय॒जी । वा॒ज॒ऽसात॑मा । ता । हि । उ॒च्चा ।
वि॒ऽज॒र्भृ॒तः । हरी॑इ॒वेति॒ हरी॑ऽइव । अन्धां॑सि । बप्स॑ता ॥ ७ ॥

येउलूखलमुसले आयजीसर्वतोयज्ञसाधने वाजसातमाअतिशयेनान्नप्रदे ताहि ते खलु उच्चाप्रौढध्वनिर्यथाभवतितथाविजर्भृतः विशेषेणपुनःपुनर्विहारंकुरुतः तत्रदृष्टान्तः—अन्धांस्यन्ना- निचणकादीनिखादानिबप्सन्तौभक्षयन्तौहरीइव इन्द्रस्याश्वाविव अत्रयास्कएवंव्याचख्यौ— आयजीआयष्टव्येअन्नानांसंभक्ततमेतेतुच्चैर्विह्रियेतेहरीइवाचानिभक्षयन्ताविति[1] ॥ आय- जी यजेरौणादिकःकरणेइप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । वाजसातमा वाजंसनोती- तिवाजसाः षणुदाने जनसनेत्यादिनाविट्प्रत्ययः विड्वनोरनुनासिकस्यादित्यात्वं कृ- दुत्तरप्रकृतिस्वरत्वं आतिशायनिकस्तमप् सुपांसुलुगितिपूर्वसवर्णदीर्घः । विजर्भृतः हृञ्हरणे अस्माद्यङ्लुकिअभ्यासहलादिशेषोरवजशुत्वेपुकृतेषु रुग्रिकौचलुकीतिरुगागमः ततः प्रत्य- यलक्षणेनधातुसंज्ञायांलिटिद्विवचनंतस् अदादिवच्चेतिवचनाच्छपोलुक् गुणेप्राप्तेग्क्ङितिचेतिप्रति- षेधः हृग्रहोर्भश्छन्दसीतिभत्वं प्रत्ययस्वरः हिचेतिनिघातप्रतिषेधः । बप्सता भसभक्षणदी- प्त्योः लटःशतृ जुहोत्यादिभ्यःश्लुः घसिभसोर्हलिचेत्युपधालोपः नाभ्यस्ताच्छतुरितिनुमप्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

तानो॑अ॒द्य व॑नस्पती ऋ॒ष्वावृ॒ष्वेभिः॑ सो॒तृभिः॑ । इन्द्रा॑य॒ मधु॑मत्सुतम् ॥ ८ ॥

ता । नः॒ । अ॒द्य । व॒न॒स्प॒ती॒ इति॑ । ऋ॒ष्वौ । ऋ॒ष्वेभिः॑ । सो॒तृऽभिः॑ ।
इन्द्रा॑य । मधु॑ऽमत् । सु॒तम् ॥ ८ ॥

---

1 नि० ९. ३६.

अद्यास्मिन्कर्मणिहेवनस्पती उलूखलमुसलरूपौ वीयुवांकृत्वेभिर्दर्शनीयैः सोतृभिःअभिषवहेतुभिः सहरूपौदर्शनीयौभूत्वाइन्द्रायइन्द्रार्थंमधुमत् माधुर्योपेतंसोमद्रव्यं नोस्मदीयंसुतंअभिषुणुतम् ॥ ता सुपांसुलुगित्याकारः । नोअद्य प्रकृत्यान्तःपादमितिप्रकृतिभावः । वनस्पती उभयपदप्रकृतिस्वरेप्राप्ते आमन्त्रितस्येतिसर्वानुदात्तत्वं ईदूतौचसप्तम्यर्थेइतिप्रगृह्यत्वे प्लुतप्रगृह्याअचीतिप्रकृतिभावः । सुतं षुञ्अभिषवे बहुलंछन्दसीतिविकरणस्यलुक्निघातः ॥ ८ ॥

सोमावनयनेविनियुक्तांसूक्तेनवमीमृचमाह—

उच्छिष्टंचम्वोर्भरसोमंपवित्रआसृज । निधेहिगोरधित्वचि॥ ९॥२६॥

उत् । शिष्टम् । चम्वोः । भर । सोमम् । पवित्रे । आ । सृज । नि । धेहि । गोः । अधि । त्वचि ॥ ९ ॥ २६ ॥

हेऋत्विग्विशेष हरिश्चन्द्र देवतापक्षेहेहरिश्चन्द्रेतिवा चम्वोः सोमस्यभक्षत्वसंपादकयोरधिषवणफलकयोः शिष्टं अभिषवराहित्येनावशिष्टंसोमंउद्भर शकटस्योपरिहर सोमंअभिषुतंसोमं पवित्रेदशापवित्रे आसृज आनीयप्रक्षिप प्रक्षेपेसत्यवशिष्टंसोमं गोस्त्वचिआनडुहेचर्मणिअधिनिधेहि अध्यारोप्यस्थापय ॥ चम्वोः चमुअदने चम्यतेभक्ष्यतेनेनेतिचमूः कृषिचमीत्यादिना औणादिकऊःप्रत्ययः प्रत्ययस्वरः सप्तमीद्विवचनस्य उदात्तस्वरितयोर्यणःस्वरितइतिस्वरितत्वं उदात्तयणोहल्पूर्वादितिव्यत्ययेनन भवति । भर हृग्रहोर्भः । धेहि घ्वसोरेद्धावभ्यासलोपश्चेत्येत्वाभ्यासलोपौ निघातः । त्वचि सावेकाचइतिविभक्तेरुदात्तत्वम्॥ ९ ॥

इतिप्रथमस्यद्वितीयेपञ्चविंशोवर्गः ॥ २६ ॥

यच्चिद्धिसत्यसोमपाइतिसप्तर्चंसूक्तंसप्तर्चंशुनःशेपस्यार्षं पाङ्क्तमैन्द्रं अनुक्रमणिकाच—यच्चिद्धिसप्तपाङ्क्तमिति पृष्ठ्यषडहस्यपञ्चमेहनिमाध्यंदिनेसवनेहोत्रकायच्चिद्धीतिसप्तर्चंसूक्तंशींस्तृचानुरूपत्वाय्स्वशस्त्रेएकैकंतृचमावपेरन् चतुर्थेहनीतिखण्डे—यच्चिद्धिसत्यसोमपाइत्येकैकमेवमेवेति सूत्रितम् । तत्रप्रथमामृचमाह—

यच्चिद्धिसत्यसोमपाअनाशस्ताइवस्मसि । आतूनइन्द्रशंसयगोष्वश्वेषु शुभ्रिषुसहस्रेषुतुवीमघ ॥ १ ॥

यत् । चित् । हि । सत्य । सोमऽपाः । अनाशस्ताःऽइव । स्मसि । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ १ ॥

विश्वैर्देवैःप्रेरितःशुनःशेपःएतदादिकाभिर्द्वाविंशतिसंख्याकाभिः ऋग्भिरिन्द्रंतुष्टाव तथाचब्राह्मणम्—तंविश्वेदेवाऊचुरिन्द्रोवैदेवानामोजिष्ठोबलिष्ठःसहिष्ठःसत्तमःपारयिष्णुतमस्तंनुस्तुह्यथत्वोत्स्रक्ष्यामइति सइन्द्रंतुष्टावयच्चिद्धिसत्यसोमपाइत्येतेनसूक्तेनउत्तरस्यपञ्चदशभिरिति ॥ हे सोमपाःसोमस्यपातः सत्य सत्यवादिन् इन्द्र यच्चिद्धियद्यपिवयंअनाशस्ताइवस्मसि अप्रशस्ताइवभवामः तथापि हेतुवीमघवहुधनेन्द्र त्वंगोषुअश्वेषुशुभ्रिषुशोभनेषु सहस्रेषुसहस्रसंख्याकेषुच निमित्तभूतेषु नोस्मानाशंसयसर्वतःप्रशस्तान्कुरु अस्मद्दोषमनपेक्ष्यगवादीन् प्रयच्छेत्यर्थः ॥ सोमपाः विजन्तः आमन्त्रितनिघातः । अनाशस्ताइव शंसुस्तुतौ निष्ठेतिभावेक्तः यस्यविभाषेतीट्प्रतिषेधः नञावहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । स्मसि इदन्तोमसिः। नूःऋचितुनुघेत्यादिनादीर्घः । गोषु सावेकाचइतिप्राप्तस्यविभक्त्युदात्तस्य नगोश्वन्सावर्वणेतिप्रतिषेधः । अश्वेषु अश्नुतेध्वानमित्यश्वः अशूप्रुषीत्यादिनाक्वन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । शुभ्रिषुशुभदीप्तौ अदिशदिभूशुभिभ्यःक्रिन्निति क्रिन्प्रत्ययः व्यत्ययेनान्तोदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

**शिप्रि॑न्वाजानां पते॒ शची॑व॒स्तव॑ दं॒सना॑ । आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ २ ॥**

शिप्रि॑न् । वा॒जा॒ना॒म् । प॒ते॒ । शची॑ऽवः । तव॑ । दं॒सना॑ । आ । तु । नः॒ । इ॒न्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ २ ॥

हेशचीवःशक्तिमन् शिप्रिन् शोभनहनूयुक्त वाजानांपतेअन्नानांपतेतवदंसनाकर्मविशेषोनुग्रहरूपःसर्वदावर्तते अन्यत्पूर्ववत् ॥ शिप्रिन् शिप्रेहनूनासिकेवेतियास्कः । अतइनिठनाविति मत्वर्थीयइनिः आमन्त्रिताद्युदात्तत्वम् । वाजानांपते सुबामन्त्रितइतिपराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायनिघातः नचामन्त्रितंपूर्वमविद्यमानवदिति शिप्रिन्नित्यस्याविद्यमानवत्त्वेनपदादपरत्वात् पादादित्वाचनिघातः नामन्त्रितेसमानाधिकरणेसामान्यवचनमितिअविद्यमानवत्त्वप्रतिषेधात् । शचीवः छन्दसीरइतिमतुपोवत्वं मतुवसोरुरिनिरुत्वे खरवसानयोर्विसर्जनीयः पादादित्वादामन्त्रितनिघाताभावः ॥ २ ॥

---

१ ऐ० ब्रा० ७. १६. । २ नि० ६. १७. ।

तृतीयामृचमाह–

निष्वांपयामिथूदृशासस्तामबुंध्यमाने । आतूनंइन्द्रशंसयगोष्वश्वेंषु शुभ्रिर्षुसहस्रेंपुतुवीमघ ॥ ३ ॥

नि । स्वापय । मिथुऽदृशां । सस्ताम् । अबुंध्यमाने इति । आ । तु । नः । इन्द्र । शंसय । गोर्षु । अश्वेंषु । शुभ्रिर्षु । सहस्रेंषु । तुविऽमघ ॥ ३ ॥

मिथूदृशा परस्परसङ्गतत्वेन दृश्यमानेयमदूत्यौनिष्वापय नितरांसुप्तेकुरु तेचास्मान्मारयितुमबुध्यमानेसत्यौसस्तांनिद्रांप्राप्नुतं अन्यत्पूर्ववत् ॥ निष्वापय सुषामादित्वात्षत्वं अन्येषामपिदृश्यतइतिदीर्घः । मिथूदृशा मिथुनतयायुगलरूपेणपश्यतइतिमिथूदृशा क्विप्चेतिदृशेःकर्तरिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वं पूर्ववत्पूर्वपदस्यदीर्घः सुपांसुलुगितिविभक्तेराकारः । सस्तां षसस्वप्ने लोटि तसस्तां अदिप्रभृतिभ्यःशपइतिशपोलुक् प्रत्ययस्वरः पादादित्वान्निघाताभावः । अबुध्यमाने नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

चतुर्थीमृचमाह–

सुसन्तुत्याअरांतयोबोधंन्तुशूररातयंः । आतूनंइन्द्रशंसयगोष्वश्वेंषु शुभ्रिर्षुसहस्रेंपुतुवीमघ ॥ ४ ॥

सुसन्तुं । त्याः । अरांतयः । बोर्धन्तु । शूर । रातयंः । आ । तु । नः । इन्द्र । शंसय । गोर्षु । अश्वेंषु । शुभ्रिर्षु । सहस्रेंषु । तुविऽमघ ॥ ४ ॥

त्याः अस्माभिर्दृश्यमानाःपरोक्षास्ताअरातयःअदानशीलाःशत्रवःससन्तु निद्रांकुर्वन्तु हे शूर शौर्ययुक्तेन्द्र रातयोदानशीलाः बन्धवोबोधन्तुअस्मान् बुध्यतां अन्यत्पूर्ववत् ॥ससन्तु प्रत्ययस्वरः । अरातयः रादाने मन्त्रेवृषेष्यादिनाभावेक्तिन् नविद्यतेरातिरेषामितिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं नञ्सुभ्यामितिनुसर्वेविधयश्छन्दसिविकल्प्यन्तइतिनभवति यद्वा क्तिच्क्तौचसंज्ञायामितिकर्तरिक्तिच् नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बोधन्तु पादादित्वात्तिङ्ङतिङइति निघाताभावः ॥ ४ ॥

पञ्चमीमृचमाह—

**समिन्द्रगर्दभंमृणनुवन्तंपापयामुया । आतूनंइन्द्रशंसयगोष्वश्वेपुशुभ्रिपुंसहस्रेपुतुवीमघ ॥ ५ ॥**

सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया । आ । तु । नः । इन्द्र । शंसय । गोपु । अश्वेपु । शुभ्रिपु । सहस्रेपु । तुविऽमघ ॥ ५ ॥

हेइन्द्र अमुया अनयास्माभिःश्रूयमाणया पापया निन्दारूपयावाचा नुवन्तंस्तुवन्तं अपकीर्तिंप्रकटयन्तमित्यर्थः तादृशंगर्दभंगर्दभसमानवैरिणं संमृणसम्यक्मारय यथागर्दभः श्रोतुमशक्यंपरुषंशब्दंकरोति तथाशत्रुरपि अन्यत्पूर्ववत् ॥ गर्दभं नर्दगर्दशब्दे कृगृशृशलिगर्दिभ्योभच् चितइत्यन्तोदात्तत्वम् । मृण मृणहिंसायां तौदादिकः शस्यङित्त्वाद्गुणाभावः । नुवन्तं णुस्तुतौ शतरि अदिप्रभृतित्वाच्छपोलुक् शतुर्ङित्त्वाद्गुणाभावे उवङादेशः प्रत्ययाद्युदात्तत्वम् ॥ ५ ॥

षष्ठीमृचमाह—

**पतातिकुण्डृणाच्यादूरंवातोवनादधि । आतूनंइन्द्रशंसयगोष्वश्वेपुशुभ्रिपुंसहस्रेपुतुवीमघ ॥ ६ ॥**

पताति । कुण्डृणाच्या । दूरम् । वातः । वनात् । अधि । आ । तु । नः । इन्द्र । शंसय । गोपु । अश्वेपु । शुभ्रिपु । सहस्रेपु । तुविऽमघ ॥ ६ ॥

वातोस्मत्प्रतिकूलोवायुः कुण्डृणाच्याकुटिलगत्यासत्वास्मान्परित्यज्य वनादधि अरण्यादप्यधिकंदूरदेशं पतातिपततु अन्यत्पूर्ववत् ॥ पताति लेटचाडागमः । कुण्डृणाच्या कुडिदाहे अस्मात् ल्युडन्ते कुण्डनशब्दे इकारात्परस्याकारस्यऋकारश्छान्दसः ऋवर्णाच्चेतिवक्तव्यमितिणत्वं तदञ्चतीतिकुण्डृणाची ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपे अञ्चतेश्चेतिङीप् अचइत्याकारलोपः चावितिपूर्वपदस्यदीर्घत्वं चावित्याकारस्योदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

सर्वंपरिक्रोशंजहिजंभयांकृकदाश्वंम् । आतूनंइन्द्रशंसयगोष्वश्वेषु शुभ्रिषुंसहस्रेषुतुवीमघ ॥ ७ ॥

सर्वम् । परिऽक्रोशम् । जहि । जम्भयं । कृकदाश्वंम् । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषुं । सहस्रेषु । तुविऽमघ ॥ ७ ॥ २७ ॥

परिक्रोशं अस्मद्विषये सर्वतआक्रोशकर्तारं सर्वंपुरुषं जहि मारय कृकदाश्वं अस्मद्विषयेहिंसाप्रदंशनं जंभय मारय अन्यत्पूर्ववत् ॥ परिक्रोशं क्रुशआह्वाने परितःक्रोशयतीतिपरिक्रोशः पचाद्यच् कृदुत्तरपदप्रकृतिस्वरत्वम् । जहि हनहिंसागत्योः हन्तेर्जइतिजादेशः तस्यासिद्धवदत्राभादिति असिद्धत्वादतोहेरितिहेर्लुक्नभवति । जंभय जभिनाशने चुरादित्वात्स्वार्थिकोणिच् शपःपित्त्वादनुदात्तत्वे णिचएवस्वरःशिष्यते । कृकदाश्वं कृञ्हिंसायां कृदाधारार्चिकलिभ्यःकन्नितिभावेकन्प्रत्ययः किदित्यनुवृत्तेर्गुणाभावः तथाच कृकोहिंसा तां दाशति प्रयच्छतीतिकृकदाशुः बहुलग्रहणाद्दाशतेरपि कृकउपपदे कृकेवचःकश्चेत्युण् प्रत्ययस्वरेणान्तोदात्तः द्वितीयायामपिपूर्वत्वेप्राप्ते वाछन्दसीति तस्यबाधितत्वाद्यणादेशः उदात्तस्वरितयोर्यणइतिविभक्तेःस्वरितत्वम् ॥ ७ ॥

इतिप्रथमस्यद्वितीयेसप्तविंशोवर्गः ॥ २७ ॥

आवइन्द्रमितिद्वाविंशत्यृचंसप्तमंसूक्तं शुनःशेपस्यार्षंमापत्रं अस्माकमित्येषापादनिचृद्गायत्री त्रयःसप्तकाःपादनिचृदित्युक्तत्वात् शश्वदिन्द्रइत्येषात्रिष्टुप् आदितःषोडशर्चऐन्द्र्यः आश्विनावश्वावत्येत्याद्यास्तिस्रआश्विन्यः कस्तउषइत्याद्यास्तिस्रउषोदेवताकाः तथाचानुक्रमणिका—आवोद्व्यधिकास्माकंपादनिचृत् शश्वत्त्रिष्टुप्परौतृचावाश्विनोषस्याविति ॥

प्रथमामृचमाह—

आवइन्द्रंक्रिविंयथावाजयन्तःशतक्रतुम् । मंहिष्ठंसिञ्चइन्दुभिः ॥ १ ॥

आ । वः । इन्द्रंम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् । मंहिष्ठम् । सिञ्चे । इन्दुंऽभिः ॥ १ ॥

वाजयन्तोन्नमिच्छन्तोवयंशुनःशेपाः हेऋत्विग्यजमानावोयुष्माकंसंबन्धिनमिममिन्द्रं इन्दुभिः सोमैरासिञ्चे सर्वतःसिञ्चामहे तर्पयामः कीदृशंशतक्रतुं शतसंख्याककर्मोपेतं मंहिष्ठमतिशयेनप्रवृद्धं सेचनेदृष्टान्तः—यथायेनप्रकारेण क्रिविमवटं जलेनपूरयन्तितद्वत् क्रिविशब्दोवत्रःकाटइत्यादिषुचतुर्दशसुकूपनामसु क्रिविःकूपःसूदइतिपठितम् ॥ क्रिविं कृतीछेदने कृत्यतइतिक्रिविः कृविघृष्विछविरथवीत्यादौक्रिनप्रत्ययान्तोनिपातितः अतएवतशब्दलोपः निच्चादाद्युदात्तत्वम् । यथा यथेतिपादान्ते इतिसर्वानुदात्तत्वम् । वाजयन्तः वाजआत्मनइच्छन्तः सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घत्वयोर्निषेधः अश्वाघस्यादिति पुनर्दीर्घविधानावज्ञापकात् । मंहिष्ठं महिवृद्धौ अतिशयेनमंहितामंहिष्ठः तुश्छन्दसीतितृजन्तादिष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः इष्ठनोनित्त्वादाद्युदात्तत्वम् । सिञ्चे षिचिरक्षरणे व्यत्ययेनैकवचनं शेमुचादीनामितिनुमागमः ॥ १ ॥

द्वितीयामृचमाह—

शतंवायःशुचीनांसहस्रंवासमाशिराम् । एदुनिम्नंनरीयते ॥ २ ॥

शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । सम्ऽआशिराम् ।
आ । इत् । ऊम् इति । निम्नम् । न । रीयते ॥ २ ॥

यइन्द्रः शुचीनां शुद्धानां सोमानांशतंवा शतसंख्याकंसमूहंवा समाशिरां समीचीनेन आशिराख्येन श्रयणद्रव्येणोपेतानां सोमानां सहस्रंवासहस्रसंख्याकं समूहंवा एदुरीयते आगच्छत्येव सोस्माननुगृह्णात्विति शेषः सोमप्राप्तौदृष्टान्तः—निम्नं यथानिम्नप्रदेशं आपःआगच्छन्तितद्वत् ॥ समाशिरां श्रित्रपाकेइत्यस्यसमाङ्पूर्वकस्य अपस्पृधेथामित्यादौ आशीरादेशो निपातितः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । रीयते रीङ्श्रवणे दिवादिभ्यःश्यन् ॥ २ ॥

तृतीयामृचमाह—

संयन्मदायशुष्मिणएनाह्यस्योदरे । समुद्रोनव्यचोदधे ॥ ३ ॥

सम् । यत् । मदाय । शुष्मिणे । एना । हि । अस्य । उदरे ।
समुद्रः । न । व्यचः । दधे ॥ ३ ॥

---

१ दशपार्थापंचपाथांअत्रापिचक्रिविशब्दोऽस्कारवान्साधनिकयाभवति वस्तुनस्तुकृञ्करणेकिन्निडागमश्चनिपात्यतेइतिनिघण्टुभाष्यम् ।

यत्पूर्वोक्तं शतंसहस्रंवाशुष्मिणे वलवतइन्द्रस्य मदायमदार्थसंगतंभवति एनाहि अनेनैव शतेनसहस्रेणचअस्येन्द्रस्योदरे व्यचोव्याप्तिर्दधेवृता भवति तत्रदृष्टान्तः—समुद्रोन समुद्रइव यथा समुद्रमध्येजलंव्याप्तंतद्वत् ॥ एना सुपांसुलुगितितृतीयायाडादेशः। व्यचः व्यचेःकुटादिलमनसी-ति ङिद्वद्भावस्यप्रतिपिद्धत्वात् ग्रहिज्येत्यादिनासंप्रसारणंनभवति असुनोनित्त्वादाद्युदात्तत्वम्। दधे दधातेः कर्मणिअभ्यासहस्वजश्त्वेपुकृतेषु आतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरेणान्तो-दात्तत्वं हिचेतिप्रतिषेधान्निघाताभावः ॥ ३ ॥

चतुर्थीमृचमाह—

अयमुंतेसमंतसिकपोतंइवगर्भुधिम्। वचुस्तच्चिन्नओहसे ॥ ४ ॥

अयम्। ऊम् इति। ते। सम्। अतसि। कपोतःऽइव।
गर्भुऽधिम्। वचः। तत्। चित्। नः। ओहसे ॥ ४ ॥

हेइन्द्र अयमु अयमपिदृश्यमानःसोमःतेत्वदर्थंसंपादितःयंसोमंसमतसि सम्यक्सातत्येनमा-प्नोपि तत्रदृष्टान्तः—कपोतइव यथाकपोताख्यःपक्षी गर्भधिंगर्भधारिणींकपोतींप्राप्नोतितद्वत् तच्चि-वतस्मादेवकारणान्नोस्मदीयंवचओहसेप्राप्नोषि ॥ अतसि अतसातत्यगमने लटिसिप् शप् ति-ङ्ङतिङइतिनिघातः। गर्भधिं गर्भोस्यांधीयतइतिगर्भधिः कर्मण्यधिकरणेचेतिकिप्रत्ययः कृदुत्त-रपदप्रकृतिस्वरत्वम्। ओहसे तुहिर्दुहिर्उहिर्अर्दने व्यत्ययेनात्मनेपदम् ॥ ४ ॥

पञ्चमीमृचमाह—

स्तोत्रंराधानांपतेगिर्वाहोवीरयस्यंते। विभूतिरस्तुसूनृता ॥५॥ २८॥

स्तोत्रम्। राधानाम्। पते। गिर्वाहः। वीर। यस्य। ते।
विऽभूतिः। अस्तु। सूनृता ॥ ५ ॥ २८ ॥

हेइन्द्र राधानांपते धनानांपालक गिर्वाहोगीर्भिरुह्यमान वीरशौर्योपेत यस्यतेतवस्तोत्रमीदृशं भवतितस्यतवविभूतिर्लक्ष्मीःसूनृताप्रियसत्यरूपास्तु ॥ स्तोत्रं दाम्नीशसेतिष्ट्रन्प्रत्यय अर्शआद्यच् अथवा स्तोतुःइदं इत्यर्थेअण् संज्ञापूर्वकोविधिरनित्यइतिवृद्धिर्न। राधानांपते राध्नुवन्त्येभिरितिरा-

१ उदरे उदिरणातेरितिअर्। २ कपोतइव कवेरोतच्पश्चेत्योतच् व्यत्ययेनमध्योदात्तः अथवाअव्युत्पन्नएवत्व्यावन्तेइतिगुरुदात्तः।

धानिधनानि सुवामन्त्रितइतिपराङ्गवद्भावात्पष्ठयामन्त्रितसमुदायस्यनिघातः । गिर्वाहः वहप्रापणे वहिहाधाञ्भ्यश्छन्दसीतिकारकपूर्वस्यापिवहतेरसुन्प्रत्ययः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्युक्तत्वात् णिदित्यनुवृत्तेरुपधावृद्धिःपूर्वपदस्य वोंरुपधायाइतिदीर्घस्याभावश्छान्दसः पाष्ठिकमामन्त्रितायुदात्तत्वम् । विभूतिः तादौचनितीतिगतेःप्रकृतिस्वरत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेष्टाविंशोवर्गः ॥ २८ ॥

षष्ठीमृचमाह—

ऊर्ध्वस्तिष्ठानऊतयेस्मिन्वाजेशतक्रतो । सम्न्येषुंब्रवावहै ॥ ६ ॥

ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतो इति शतऽक्रतो । सम् । अन्येषु । ब्रवावहै ॥ ६ ॥

हेशतक्रतो शतसंख्याककर्मोपेत अस्मिन्प्रसक्तेवाजेसंग्रामेनोस्माकमूतयेरक्षणायऊर्ध्वउन्नतः उत्सुकस्तिष्ठभव त्वंचाहंचमिलित्वाअन्येषुकार्यान्तरेषुसंब्रवावहै सम्यक्विचारयावः॥ तिष्ठ द्व्यचोतस्तिङइतिसंहितायांदीर्घः । ऊतये ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् । अस्मिन् ऊडिदमित्यादिनासप्तम्याउदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

योगेयोगेतवस्तरंवाजेवाजेहवामहे । सखायइन्द्रमूतये ॥ ७ ॥

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

योगेयोगे प्रवेशे तत्तत्कर्मोपक्रमे वाजेवाजेकर्मविघातिनितस्मिन्सङ्ग्रामे तवस्तरंअतिशयेन बलिनमिन्द्रंऊतयेरक्षार्थसखायःसखिवत्प्रियावयंहवामहेआह्वयामः ॥ योगेयोगे युजिर्योगे हलश्चेतिघञ् चजोःकुघिण्ण्यतोरितिकुत्वं घञोञित्त्वादाद्युदात्तत्वं नित्यवीप्सयोरितिवीप्सायांद्विर्भावेसतिआम्रेडितानुदात्तत्वम् । तवस्तरं तवसःशब्दात् अस्मायामेधेतिमत्वर्थीयोविनिः तस्यछान्दसोलोपः ॥ ७ ॥

अष्टमीमृचमाह—

आघागमद्यदिश्रवंत्सहस्रिणीभिरूतिभिः । वाजेभिरुपनोहवम् ॥ ८ ॥

आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिऽभिः । वाजेभिः । उप । नः । हवम् ॥ ८ ॥

यदिश्रवत् यद्ययमिन्द्रोनोस्मदीयंहवमाह्वानंश्रृणुयात् तदानींस्वयमेवसहस्रिणीभिरूतिभिःबहुभिःपालनैः वाजेभिरन्नैश्चउपसमीपे आगमत् अवश्यमागमत् आगच्छेत् ॥ घ ऋचितुनुघेत्यादिनासंहितायांदीर्घः । गमत् लिङर्थेलेट् लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः यद्वा छान्दसेलुङि पुषादिद्युताद्यॢदितःपरस्मैपदेष्वितिच्लेरङादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । श्रवत् श्रुश्रवणे पूर्ववत् लेटचडागमः । वाजेभिः बहुलंछन्दसीतिभिसऐसादेशाभावः । हवं भावेनुपसर्गस्येतिह्वयतेरप्संप्रसारणंच अपःपित्त्वादनुदात्तत्वेधातुस्वरेणाद्युदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

अनु॑प्र॒त्नस्यौक॑सोहु॒वेतु॑विप्र॒तिंनर॑म् । यंते॒पूर्वं॑पि॒ताहु॒वे ॥ ९ ॥

अनु॑ । प्र॒त्नस्य॑ । ओक॑सः । हु॒वे । तु॒वि॒ऽप्र॒तिम् । नर॑म् । यम् । ते॒ । पूर्व॑म् । पि॒ता । हु॒वे ॥ ९ ॥

प्रत्नस्य पुरातनस्य ओकसःस्थानस्यस्वर्गरूपस्यतत्सकाशात् तुविप्रतिं बहून्यजमानान्प्रतिगन्तारंनरंपुरुषमिन्द्रं अनुहुवे अनुक्रमेणकर्मस्वाह्वयामि यं तेत्वामिन्द्रं पिता अस्मदीयोजनकः पूर्वंपुरास्वकीयानुष्ठानकाले हुवेआहूतवान् तंआह्वयामीतिपूर्वत्रान्वयः ॥ ओकसः नब्विषयस्येत्याद्युदात्तत्वम् । हुवे ह्वेञ्स्पर्धायांशब्देच इटि बहुलंछन्दसीतिसंप्रसारणं परपूर्वत्वं गुणेप्राप्ते ग्क्ङितिचेतिप्रतिषेधः उवङादेशः प्रत्ययस्वरेणान्तोदात्तत्वं पादादित्वादनिघातः । तुविप्रतिं तुवीनांबहूनांप्रतिगन्तारं अत्रप्रतिशब्दोभीमसेनोभीमइतिवत् प्रतिगन्तृशब्दं लक्षयित्वातद्द्वारातदर्थंलक्षयति अतः प्रतिःप्रविनिधिप्रतिदानयोरितिवत् सत्त्ववचनत्वेनानिपातत्वादनव्ययत्वेनपूरणगुणेत्यादिनानषष्ठीसमासनिषेधः । हुवे ह्वेञोलटिबहुलंछन्दसीतिपूर्ववत्संप्रसारणपरपूर्वत्वे द्विर्वचनप्रकरणे छन्दसिवेतिवक्तव्यमितिद्विर्वचनाभावः यद्वृत्तयोगादनिघातः ॥ ९ ॥

दशमीमृचमाह—

तंत्वा॑व॒यंवि॑श्ववा॒रा शा॑स्महेपुरुहूत । सखे॑वसोजरि॒तृभ्यः॑ ॥१०॥२१॥

तम् । त्वा॒ । व॒यम् । वि॒श्व॒ऽवा॒र॒ । आ । शा॒स्म॒हे॒ । पु॒रु॒ऽहू॒त॒ । सखे॑ । व॒सो॒ इति॑ । ज॒रि॒तृऽभ्यः॑ ॥ १० ॥ २१ ॥

जादेशः अचिश्नुधात्वित्यादिनाइयङादेशः द्विर्वचनप्रकरणे छन्दसिवेतिवक्तव्यमितिवचनाद-भ्यासोनक्रियते चितइत्यन्तोदात्तत्वम्।ऋणोः ऋणगतौ लङि व्यत्ययेनतिपःसिपि इतश्चेतीकार-लोपः तनादिकृञ्भ्यउः सार्वधातुकगुणः बहुलंछन्दस्यमाङ्योगेपीत्याडागमाभावः विक-रणस्वरेणान्तोदात्तत्वम्। अक्षं अक्षस्यादेवनस्येत्याद्युदात्तत्वम्। चक्र्योः अकारस्येकार-श्छान्दसः॥ १४॥

पञ्चदशीमृचमाह—

आयद्दुवःशतक्रतवाकामंजरितॄणाम्। ऋणोरक्षंनशचीभिः॥१५॥३०

आ। यत्। दुवः। शतक्रतो इति शतऽक्रतो। आ। कामम्। जरितॄणाम्। ऋणोः। अक्षम्। न। शचीभिः॥ १५॥ ३०॥

हेशतक्रतो इन्द्र यद्दुवोधनं कामितार्थरूपं आस्तोतृभिराप्तव्यमस्तितंकामंजरितॄणां स्तोतॄ-णांअनुग्रहाय आऋणोःआनीयमक्षिपसि तत्रदृष्टान्तः शचीभिः कर्मभिः शकटोचितव्यापारवि-शेषैः अक्षंन यथाअक्षंमक्षिपन्तितद्वत्॥शचीभिः शचीशब्दःशार्ङ्गरवादिङीनन्तआद्युदात्तः॥१५॥

॥ इतिप्रथमस्यद्वितीयेत्रिंशोवर्गः ॥३०॥

षोडशीमृचमाह—

शश्वदिन्द्रःपोप्रुथद्भिर्जिगायनानदद्भिःशाश्वसद्भिर्धनानि। सनोहिरण्यरथंदंसनावान्त्सनःसनितासनयेसनोदात्॥ १६॥

शश्वत्। इन्द्रः। पोप्रुथत्ऽभिः। जिगाय। नानदत्ऽभिः। शाश्वसत्ऽभिः। धनानि। सः। नः। हिरण्यऽरथम्। दंसनाऽवान्। सः। नः। सनिता। सनये। सः। नः। अदात्॥ १६॥

तुष्टेनेन्द्रेणदत्तंहिरण्यरथं अनयाप्रतिजग्राह तथाचब्राह्मणम्—तस्माइन्द्रःस्तूयमानः प्रीतोमनसाहिरण्यरथंददौतमेतयाप्रतीयायशश्वदिन्द्रइतीति[1]। इन्द्रः शश्वत्सर्वदाधनानिवैरि-संबन्धीनि जिगायजितवान् अश्वैरितिशेषः कीदृशैः पोप्रुथद्भिः घासभक्षणानन्तरभाविनमो-ष्ठशब्दंकुर्वद्भिः नानदद्भिः नादमास्यगतंहेषाशब्दंकुर्वद्भिः शाश्वसद्भिः पुनःपुनर्भृशंवाश्व-सद्भिः दंसनावान् कर्मवान् सनितादाता सइन्द्रोनोस्माकं सनयेसंभजनार्थं हिरण्यरथंदुवर्गेन

१ ऐ० ब्रा० ७. १६.।

निर्मितंरथं अदावद्दत्तवान् ॥ सनः सनोद्विरुक्तिरादरार्थं । पोपुथद्भिः प्रोथृपर्याप्तौ अस्माद्यङ्लुकि अभ्यासहलादिशेषौ ह्रस्वइतिह्रस्वत्वेकृते गुणोयङ्लुकोरितिगुणः धातोरुपधायाउत्वंछान्दसं अस्माद्यङ्लुगन्ताच्छतरि अभ्यस्तानामादिरित्याद्युदात्तत्वम् । जिगाय जिजये लिटोणलि वृद्धिः द्विर्वचनेचीतिस्थानिवद्भावाज्जिइत्यस्यद्विर्वचनं सन्लिटोर्जेरितिअभ्यासादुत्तरस्यकुत्वम् । नानदद्भिः णदअव्यक्तेशब्दे पूर्ववद्यङ्लुकि दीर्घोकितइतिअभ्यासस्यदीर्घः पूर्ववदाद्युदात्तत्वम् । शाश्वसद्भिः श्वसप्राणने अन्यत्सर्वंपूर्ववत् । हिरण्यरथं समासस्येत्यन्तोदात्तत्वम् । अदात् गातिस्थेतिसिचोलुक् । दंसनावान् दंसशब्दः अमोदंसोवेपइतिकर्मनामसुपठितः दंसएवदंसना तदस्यास्तीतिमतुप् दस्यतेअनेनेतिदंसना ॥ १६ ॥

प्रातरनुवाके आश्विनेक्रतौगायत्रेछन्दसि आश्विनावश्वावत्येतितृचः अथाश्विनइतिखण्डे—अश्विनायज्वरीरिषः आश्विनावश्वावत्येतिसूत्रितम् ।

तृचेप्रथमांसूक्तेसप्तदशीमृचमाह—

आश्विनावश्वावत्येषायातंशवीरया । गोमद्दस्राहिरण्यवत् ॥ १७ ॥

आ । अश्विना । अश्वऽवत्या । इषा । यातम् । शवीरया ।
गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥

इन्द्रेणप्रेषितःशुनःशेपः अश्विनौतुष्टाव तथाचब्राह्मणम्—तमिन्द्रउवाचाश्विनौनुस्तुह्यथत्वोत्स्रक्ष्यामइतिसोश्विनौतुष्टावातउत्तरेणतृचेनेति । हेअश्विनौ अश्वावत्याबहुभिरश्वैर्युक्तयाशवीरयाप्रेर्यमाणयाइषान्नेनसहआयातं अस्मिन्कर्मण्यागच्छतं हेदस्राअश्विनौ युवयोःप्रसादाद्गोमत् बहुभिर्गोभिर्युक्तं हिरण्यवत् बहुनाहिरण्येनयुक्तमस्मदीयंगृहमस्त्विति शेषः ॥ अश्वावत्या मन्त्रेसोमाश्वेन्द्रियविश्वदेव्यस्यमतावितिदीर्घत्वम् । इषा सावेकाचइति तृतीयायाउदात्तत्वम् । यातं यात्राप्रापणे लोटिथसस्तं अदादित्वाच्छपोलुक् । शवीरया शुगतौ कॄगॄशॄपृकुटिपटिशौटिभ्यईरन्नितीरन्प्रत्ययोबहुलवचनादस्मादपिभवति नित्त्वादाद्युदात्तत्वम् ॥ १७ ॥

अष्टादशीमृचमाह—

समानयोजनोहिवांरथोदस्रावमर्त्यः । समुद्रेअश्विनेयते ॥ १८ ॥

१ ऐ० ब्रा० ७. १६. ।

समान॑ऽयोजनः । हि । वा॒म् । रथः॑ । द॒स्रौ॒ । अम॑र्त्यः ।
स॒मु॒द्रे । अ॒श्वि॒ना॒ । ईय॑ते ॥ १८ ॥

हेदस्रावश्विनौ वांयुवयोः संबन्धीरथः समानयोजनः तुल्ययोजनः युवयोर्द्वयोरेकरथारूढत्वादुभयार्थसकृदेवयुज्यते युक्तःसरथः अमर्त्योविनाशरहितः अप्रतिहतगतिरित्यर्थः अतएव हेअश्विनौ हियस्मात्समुद्रेन्तरिक्षे ईयतेगच्छति अन्तरिक्षनामसुपठितं समुद्रशब्दं यास्कएवंव्याचख्यौ—समुद्रःकस्मात्समुद्द्रवन्त्यस्मादापःसमभिद्रवन्त्येनमापःसंमोदन्तेस्मिन्भूतानिसमुद्कोभवतिसमुनत्तीतिवेति[1] ॥ समानयोजनः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अमर्त्यः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ईयते ईङ्गतौ अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयनोनित्त्वादाद्युदात्तत्वम् हिचेतिनिघातप्रतिषेधः ॥ १८ ॥

एकोनविंशीमृचमाह—

न्य॑घ्न्यस्य॑मू॒र्धनि॑च॒क्रंरथ॑स्ययेमथुः । परि॒द्याम॒न्यदी॑यते ॥ १९ ॥

नि । अ॒घ्न्यस्य॑ । मू॒र्धनि॑ । च॒क्रम् । रथ॑स्य । ये॒म॒थुः॒ । परि॑ ।
द्याम् । अ॒न्यत् । ई॒य॒ते॒ ॥ १९ ॥

हे अश्विनौ युवां अघ्न्यस्यहन्तुंविनाशयितुमशक्यस्यदृढस्यपर्वतस्यमूर्धनिउपरिचक्रं भवदीयरथसंबन्धिएकंचक्रंनियेमथुः नियमितवन्तौ अन्यच्चक्रं परिद्यांद्युलोकस्यपरितः ईयतेगच्छति ॥ अघ्न्यस्य अहननमघ्नः घञर्थेकविधानं स्थास्नापाव्यधिहनियुध्यर्थमितिहन्तेःकः प्रत्ययः अघ्नमर्हतिअघ्न्यः छन्दसिचेतियप्रत्ययःप्रत्ययस्वरेणान्तोदात्तत्वम् । येमथुः यमउपरमे क्थितिलिटिअतएकहल्मध्यइत्यत्वाभ्यासलोपौ ॥ १९ ॥

प्रातरनुवाके आश्विनेशस्त्रेउपस्येककौगायत्रेछन्दसिकस्तउपइतितृचः अथोपस्यइतिखण्डे—कस्तउपइतितिस्रइतिसूत्रितम् ।

तस्मिंस्तृचेप्रथमांसूक्तेविंशीमृचमाह—

कस्त॑उपः॑कधप्रियेभु॒जेमर्तो॑अमर्त्ये । कंन॑क्षसेविभावरि ॥ २० ॥

कः । ते॒ । उ॒पः॒ । क॒ध॒ऽप्रि॒ये॒ । भु॒जे । मर्तः॑ । अम॑र्त्ये । कम् ।
न॒क्ष॒से॒ । वि॒भा॒ऽव॒रि॒ ॥ २० ॥

1 नि० २. १०. ।

अश्विभ्यांप्रेरितःशुनःशेपः उपसंतुष्टाव तथाचब्राह्मणम्—तमश्विनाऊचतुरुषसंनुस्तुह्यथत्वोत्स्रक्ष्यावइतिसउपसंतुष्टावात्रउत्तरेणतृचेनतस्यहस्मर्च्यृच्युक्तायांविपाशोमुमुचेकनीयऐक्ष्वाकस्योदरंभवत्युत्तमस्यामेवर्च्युक्तायांविपाशोमुमुचेगदऐक्ष्वाकआसेति । हेकधप्रिये स्तुतिप्रिये अमर्त्येमरणरहिते उषः एतच्छन्दाभिधेयेउषःकालाभिमानिनिदेवते भुजेतवभोगायमर्तोमनुष्यःकोविद्यते हेविभावरि विशेषभभावयुक्तेउषोदेवि कंपुरुषंनक्षसेआप्नोषि तवोचितंभोगंदातुंनकोपिमनुष्यःसमर्थः अतएवत्वंकमपिपुरुषंभोगापेक्षयानप्राप्नोषि ईदृशस्त्वमहिमेत्यर्थः॥ ते तेमयावेकवचनस्येतियुष्मच्छन्दस्यतेआदेशः सर्वानुदात्तः। कधप्रिये कथवाक्यप्रबन्धे चुरादिरदन्तः णौअतोलोपस्यस्थानिवद्भावात् उपधावृद्ध्यभावः चिन्तिपूजिकथिकुंबिचर्चश्चेत्यङ्प्रत्ययः णेरनिटीतिणिलोपः ततष्टाप् षष्ठीसमासे ङ्यापोःसंज्ञाछन्दसोर्बहुलमितिह्रस्वत्वं थकारस्यधकारश्छान्दसः आमन्त्रितानुदात्तत्वम् । भुजे भुजपालनाभ्यवहारयोः संपदादिलक्षणःक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्। मर्तः असिहसीत्यादिनातन्प्रत्ययान्तआद्युदात्तः। नक्षसे नक्षद्गक्षणक्षगतौ । विभावरि भातेर्मो विपूर्वादस्मादातोमनिन्क्वनिब्वनिपश्चेति वनिप् वनोरचेतिङीप् तत्सन्नियोगेननकारस्यरेफादेशः अंबार्थनद्योर्ह्रस्वइतिह्रस्वत्वम्॥ २०॥

एकविंशीमृचमाह—

वयंहितेअमन्मह्यान्तादापराकात् । अश्वेनचित्रेअरुषि ॥ २१ ॥

वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् ।
अश्वे । न । चित्रे । अरुषि ॥ २१॥

अश्वेव्यापनशीले चित्रेचायनीये येअरुषिआरोचमाने उषःकालाभिमानिनिदेवते तवस्वरूपं आन्तात्समीपपर्यन्तं आपराकात् दूरपर्यन्तंवयंमनुष्याःनामन्महिनबोद्धुंसमर्थाः हिशब्दः प्रसिद्धौ देवतामहिम्नःपारावारयोरज्ञानमस्मासुप्रसिद्धमित्यर्थः॥ अमन्महि मनज्ञाने बहुलंछन्दसीतिबहुलवचनाच्छ्य नोलुक् लुङ्लङ्लृङ्क्ष्वडुदात्तः हिचेतिनिघातप्रतिषेधः। अश्वे अशूव्याप्तौ अशुपुषीत्यादिनाक्वन्प्रत्ययः आमन्त्रिताद्युदात्तत्वम् ॥ २१ ॥

द्वाविंशीमृचमाह—

त्वंत्येभिरागहिवाजेभिर्दुहितर्दिवः । अस्मेरयिंनिधारय ॥ २२ ॥३१॥

१ ऐ० ब्रा० ७. १६. । २ अरुषिआर्तिपृवपोन्यादिनाअर्तेरुसिन्निन् आमन्त्रितनिघातः ।
३ अन्तात् अमधातोः हसिमृग्रिणेतितन् ४ पराकात् परापूर्वात् । क्रिरतेरन्येष्वपीतिडः ।

त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः ।
अस्मे इति । रयिम् । नि । धारय ॥ २२ ॥ ३१ ॥

हेदिवोदुहितः द्युदेवतायाःपुत्रि उषोदेवि त्येभिर्वाजेभिः तैरन्नैः सहत्वमागहि अत्राग-च्छ अस्मे अस्मासुरयिंधनंनिधारयनितरांस्थापय॥ त्येभिः बहुलंछन्दसीतित्यदुशब्दाव् भिस-ऐसादेशाभावः । गहि असकृदुक्तम् । दुहितर्दिवः परस्यापिदिवइत्यस्यदिवोदुहितरितिअन्वयेस-तिपूर्वत्वात् सुबामन्त्रितइतिपराङ्गवद्भावेनपष्ठ्यामन्त्रितसमुदायस्यसर्वानुदात्तत्वम् यद्वा कार्य-कालंहिसंज्ञापरिभाषमितिन्यायेन सुबामन्त्रितेइति अस्यामन्त्रितस्यचेत्याष्टमिकेनयोगेनैकवा-क्यत्वेसति परत्वात् पराङ्गवद्भावेसतिसर्वानुदात्तत्वं कृतस्वरयोःपष्ठ्यामन्त्रितयोःपश्चाद्व्यत्ययो-बहुलमितिव्यत्ययस्तप्रयोगः । अस्मे सुपांसुलुगितिसप्तम्याःशेआदेशः ॥ २२ ॥

इतिप्रथमस्यद्वितीयेएकत्रिंशोवर्गः ॥ ३१ ॥

इतिप्रथमेमण्डलेषष्ठोनुवाकः ॥ ६ ॥

सप्तमेनुवाकेपञ्चसूक्तानि तत्रत्वमग्नेप्रथमइतिप्रथमंसूक्तमष्टादशर्चं आङ्गिरसोहिरण्यस्तूप-ऋषिः अष्टमीषोडश्यष्टादश्यस्त्रिष्टुभः शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः अग्निर्देवता तथा-चानुक्रमणिका—त्वमग्नेऽष्टानाहिरण्यस्तूपआग्नेयंत्रिष्टुबन्त्याष्टमीषोळश्यौचेति । प्रातरनुवाकेआ-ग्नेयेक्रतौआश्विनशस्त्रेचात्वमग्नेप्रथमइतिसूक्तं अथैतस्यारात्रेरितिखण्डे—त्वमग्नेप्रथमोअङ्गिराऋ-षिर्नूचित्सहोजाअमृतोनितुन्दतइतिसूत्रितम् अभिप्लवषडहस्यतृतीयेहनिआग्निमारुतेशस्त्रेइदंसू-क्तंजातवेदस्यनिविद्धानीयं तथाचतृतीयस्यत्र्यर्यमेतिखण्डेसूत्रितम्—त्वमग्नेप्रथमोअङ्गिराइत्या-ग्निमारुतमिति । वाजपेयेआग्निमारुतेएतत्सूक्तं जातवेदस्यंनिविद्धानीयं तृतीयेनाभिप्लविकेनो-क्तंतृतीयसवनमित्यतिदिष्टत्वात् ।

तस्मिन्सूक्तेप्रथमामृचमाह—

त्वमग्नेप्रथमोअङ्गिराऋषिर्देवोदेवानामभवःशिवःसखा । तवव्रतेकव योविद्मनापसोजायन्तमरुतोभ्राजदृष्टयः ॥ १ ॥

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् ।
अभवः । शिवः । सखा । तव । व्रते । कवयः । विद्मनाऽअपसः ।
अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥ १ ॥

हेअग्नेत्वंप्रथमःआद्यः आङ्गिरसानामृषीणांसर्वेषांजनकत्वात् तादृशोऽङ्गिरोनामकऋषिः अभवः तथाचब्राह्मणम्—येऽङ्गाराआसंस्तेऽङ्गिरसोऽभवन्निति।[1] तथास्वयंदेवोभूत्वादेवानामन्येषांशिवःशोभनःसखाभव तवव्रतेत्वदीयेकर्मणिकवयोमेधाविनोविद्मनापसोज्ञानेनव्याप्नुवानाः ज्ञातकर्माणोवाभ्राजदृष्टयः दीप्यमानायुधाः मरुतोमरुत्संज्ञकादेवाअजायन्त॥ विद्मनापसः विदज्ञाने विद्मोवेदनं बहुलग्रहणादौणादिकोमक्प्रत्ययः तदस्यास्तीतिपामादिलक्षणोनः प्रत्ययस्वरेणान्तोदात्तत्वं विद्मनान्यपांसियेषांतेविद्मनापसः पूर्वपदस्य अन्येषामपिदृश्यतइतिदृशिग्रहणादवग्रहसमयेपिदीर्घत्वम्। अजायन्त जनीप्रादुर्भावे तस्यश्यनि ज्ञाजनोर्जेतिजादेशः। भ्राजदृष्टयः भ्राजृदीप्तौ व्यत्ययेनशत्रन्तस्य लसार्वधातुकानुदात्तत्वेधातुस्वरः ऋषीगतावित्यस्मात्क्तिच्क्तौचसंज्ञायामितिक्तिजन्तऋष्टिशब्दः ततोबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥ १॥

द्वितीयामृचमाह—

**त्वम॑ग्ने प्रथ॒मो अङ्गि॑रस्तमः क॒विर्दे॒वानां॒ परि॑ भूषसि व्र॒तम्। वि॒भुर्विश्व॑स्मै॒ भुव॑नाय॒ मेधि॑रो द्विमा॒ता श॒युः क॑ति॒धा चि॑दा॒यवे॑ ॥ २ ॥**

त्वम्। अ॒ग्ने॒। प्र॒थ॒मः। अङ्गि॑रःऽतमः। क॒विः। दे॒वाना॑म्।
परि॑। भू॒ष॒सि॒। व्र॒तम्। वि॒ऽभुः। विश्व॑स्मै। भुव॑नाय।
मेधि॑रः। द्वि॒ऽमा॒ता। श॒युः। क॒ति॒धा चि॒त्। आ॒यवे॑ ॥ २ ॥

हेअग्ने त्वंप्रथमआद्यः अङ्गिरस्तमः अतिशयेनाङ्गिराभूत्वाकविर्मेधावीसन्देवानामन्येषांव्रतंकर्मपरिभूषसिपरितोऽलङ्करोषि कीदृशस्त्वं विश्वस्मैभुवनायसमस्तलोकानुग्रहार्थंविभुःबहुविधः आहवनीयाद्यनेकरूपधारीत्यर्थः मेधिरोमेधावान् द्विमाताद्वयोररण्योरुत्पन्नः यद्वा द्वयोर्लोकयोर्निर्माता आयवेमनुष्यार्थंकतिधाचित्कतिभिःप्रकारैःसर्वत्रशयुः शयानः तत्तन्मनुष्यगृहेवस्थितस्यतवप्रकाराइयन्तइतिनकेनापिज्ञायतइत्यर्थः॥ भूषसि भूषअलङ्कारे भौवादिकः। विभुः विप्रसंभ्योड्वसंज्ञायामितिविपूर्वाद्भवतेर्डुप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम्। भुवनाय भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् योरनादेशेनित्स्वरेणाद्युदात्तत्वम्। मेधिरः मेधृसङ्गमेच अस्माद्बाहुलकःइरन्प्रत्ययः नित्स्वरः। द्विमाता द्वेमातरौयस्यासौद्विमाता नद्यृतश्चेतिकप्प्रत्ययोनभवति मातृमातृकयोर्भेदेनोपादानात् नद्यृतश्चेतिकब्विधिर्भाष्यतइतितस्यमातृशब्दविषयेपाक्षिकत्वात् त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् यद्वा द्वयोर्मातादिमाता समासस्येत्यन्तोदात्तत्वम्। शयुः शीङ्स्वप्ने भृमृदृशी-

१ ऐ॰ ब्रा॰ ३. ३४.।　　२ अङ्गिरः अङ्गेरसिरुडागमःआद्युदात्तश्चनिपात्यते।
३ शिवःसर्वंनिघृष्वेत्यत्रशीङ्धातोर्ह्रस्वत्वंवन्अन्तोदात्तत्वंचनिपात्यते।

त्यादिनाउमत्ययः । कतिधा इत्यन्तस्यकिमशब्दस्य बहुगणवतुडतिसंख्येतिसंख्यासंज्ञायांसं-ख्यायाविधार्थेधेतिधाप्रत्ययः । आयवे छन्दसीणइत्येतेरुण्प्रत्ययः ॥ २ ॥

तृतीयामृचमाह—

त्वमग्नेप्रथमोमातरिश्वनआविर्भवसुक्रतूयाविवस्वते । अरेजेतांरोदसीहोतृवूर्येसंघ्नोर्भारमयजोमहोवसो ॥ ३ ॥

त्वम् । अग्ने । प्रथमः । मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते । अरेजेताम् । रोदसी इति । होतृऽवूर्ये । असंघ्नोः । भारम् । अयजः । महः । वसो इति ॥ ३ ॥

हेअग्ने त्वंमातरिश्वनेप्रथमोमुख्योभूत्वावर्तसे अग्निर्वायुरादित्यइतिवाय्वपेक्षयासर्वत्रमुख्यत्वावगमात् तादृशस्त्वंसुक्रतूयाशोभनकर्मेच्छयाविवस्वतेपरिचरतेयजमानायाविर्भवप्रकटोभव तवसामर्थ्यंदृष्ट्वारोदसीद्यावापृथिव्यौ अरेजेतां अकंपेताम् भ्यसतेरेजतइतिभयवेपनयोरितिपास्कः। होतृवूर्येहोतृवरेणयुक्तेकर्मणिभारंभरणं असघ्नोःऊढवानसि हेवसोनिवासहेतोवह्ने महःपूज्यान्देवानयजःइष्टवानसि मातरिश्वनेनिर्माणहेतुत्वान्मातान्तरिक्षं तत्रश्वसितिमाणिनीतिमातरिश्वावायुः श्वन्नुक्षन्नित्यादौमातरिश्वन्शब्दःकन्प्रत्ययान्तोनिपातितः । सुक्रतूया सुक्रतुमात्मनइच्छतिसुपआत्मनःक्यच् । अकृत्सार्वधातुकयोरितिदीर्घः क्यजन्तस्यधातुसंज्ञायांअप्रत्ययादितिभावेअकारप्रत्ययः ततष्टाप् सुपांसुलुगितितृतीयैकवचनस्यडादेशः टिलोपे उदात्तनिवृत्तिस्वरेणतस्योदात्तत्वं संहितायामन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः । विवस्वते विवासतिःपरिचरणकर्मा । अस्मात्संपदादिलक्षणःक्विप् व्यत्ययेनोपधाह्रस्वत्वं तदस्यास्तीतिमतुप् मादुपधायाइतिमतोर्वत्वं तसौमत्वर्थइतिभत्वेनपदत्वाभावाद्रुत्वाभावः मतुपःपित्त्वादनुदात्तत्वं धातुस्वरःशिष्यते । रोदसी वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । होतृवूर्ये होतावृणीयतइतिहोतृवूर्योयज्ञः वृञ्वरणे बहुलग्रहणादौणादिकःक्यप् उदोष्ठ्यपूर्वस्येत्युत्त्वं हलिचेतिदीर्घः यद्वा वृञ्वरणेइत्यस्मादेतिस्तुशास्वित्यादिनाक्यप् अनित्यमागमशासनमितितुगभावः अकृत्सार्वधातुकयोरितिदीर्घत्वे पूर्ववदुत्त्वदीर्घौ प्रत्ययस्यपित्त्वानुदात्तत्वे धातुस्वरः कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । असघ्नोः षघहिंसायां अत्रतुवहनार्थः स्वादिभ्यःश्नुः पादादित्वादनिघातः । अयजः भारमित्यस्यपूर्वपदस्यवाक्यान्तरगतत्वात् तदपेक्षयास्यनिघातोनभवति समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइतिवचनात् । महः

१ नि० ३.२१. । २ नि० ११.२३. ।

महपूजायां क्विप्चेतिक्विप् सुपांसुपोभवन्तीतिशसोङसादेशः सावेकाचइतितस्योदात्तत्वम् यद्वा शसिमहच्छब्दस्य अच्छान्दसोपश्छान्दसः बृहन्महतोरुपसंख्यानमितिशसउदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

त्वमग्नेमनवेद्यामवाशयःपुरूरवसेसुकृतेसुकृत्तरः । श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनः ॥ ४ ॥

त्वम् । अग्ने । मनवे । द्याम् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः । श्वात्रेण । यत् । पित्रोः । मुच्यसे । परि । आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥ ४ ॥

हेअग्ने त्वंमनवेमनोरनुग्रहार्थंद्यांद्युलोकंअवाशयः शब्दितवानसि पुण्यकर्मभिःसाध्योद्युलोकइतिमकटितवानसि सुकृते तवपरिचरणंकुर्वते पुरूरवसे एतन्नामकस्यराज्ञोनुग्रहार्थंसुकृत्तरः अतिशयेनशोभनफलकार्यभूः यद्यदापित्रोररण्योः श्वात्रेणक्षिप्रमथनेनपरिमुच्यसेपरितोमुक्तोभवसिउत्पद्यसइत्यर्थः तदानींत्वाअरण्योरुत्पन्नंत्वां पूर्वं वेदेःपूर्वदेशंआनयन् आहवनीयत्वेन स्थापितवन्तः पुनःपश्चादपरंपश्चिमंदेशंआनयन् गार्हपत्यरूपेणप्रापितवन्तः आहवनीयकर्मानुष्ठानादूर्ध्वंगार्हपत्यरूपेणधारितवन्तइत्यर्थः॥अवाशयः वाशृशब्दे पुरूरवसेपुरुरौतीतिपुरूरवाः रुशब्दे अस्मादौणादिकेऽसुनि पुरसिचपुरूरवाइतिपूर्वपदस्यदीर्घोनिपात्यते । सुकृते सुकर्मपापमन्त्रपुण्येषुकृञइतिक्विप् ततस्तुक् । पित्रोः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । मुच्यसे अदुपदेशाल्लसार्वधातुकानुदात्तत्वं यद्यपिसतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइति वचनाद्विकरणस्वरःसतिशिष्टोपिलसार्वधातुकस्वरस्यबाधकोनभवति तथापिधातुस्वरंबाधतएव धातुस्वरंआस्वरइत्युक्तत्वात् अतोयकएवस्वरेप्राप्ते व्यत्ययेनाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

त्वमग्नेवृषभःपुष्टिवर्धनउद्यतस्रुचेभवसिश्रवाय्यः । यआहुतिंपरिवेदावषट्कृतिमेकायुरग्रेविशआविवाससि ॥ ५ ॥ ३२ ॥

त्वम् । अग्ने । वृषभः । पुष्टिऽवर्धनः । उद्यतऽस्रुचे । भवसि । श्रवाय्यः । यः । आऽहुतिम् । परि । वेद । वषट्ऽकृतिम् । एकऽआयुः । अग्रे । विशः । आऽविवाससि ॥ ५ ॥ ३२ ॥

हेअग्ने त्वंवृषभः कामानांवर्षितापुष्टिवर्धनोयजमानस्यधनादिपोषाभिवृद्धिहेतुः उद्यतस्रुचे उद्धृतयास्रुचायुक्तायजमानायतदनुग्रहार्थंश्रवाय्यः मन्त्रैःश्रवणीयोभवसि योयजमानोवषट्कृतिं वषट्कारयुक्तामाहुतिंपरिवेदपरितोजानातिसमर्पयतीत्यर्थः एकायुःमुख्यान्नः त्वमग्नेप्रथमंतंयजमानंविशः तदनुकूलाःप्रजाःआविवासिसि सर्वतःप्रकाशयसि ॥ पुष्टिवर्धनः वृधुवृद्धौ अस्मात् णिजन्तान्नन्द्यादित्वाल्ल्युः लित्स्वरेणोत्तरपदस्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । उद्यतस्रुचे यमउपरमे अस्मादुत्पूर्वान्निष्ठेतिक्तप्रत्यये अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् उद्यतास्रुग्येनेतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । वेद द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेद्वात्रिंशोवर्गः ॥ ३२ ॥

षष्ठीमृचमाह—

**त्वमग्नेवृजिनवर्तनिंनरंसक्मन्पिपर्षिविदथेविचर्षणे । यःशूरसाताप रितक्म्येधनेदभ्रेभिश्चित्समृतासिभूयसः ॥ ६ ॥**

त्वम् । अग्ने । वृजिनऽवर्तनिम् । नरम् । सक्मन् । पिपर्षि । विदथे । विऽचर्षणे । यः । शूरऽसाता । परिऽतक्म्ये । धने । दभ्रेभिः । चित् । सम्ऽऋता । हंसि । भूयसः ॥ ६ ॥

हेविचर्षणे विशिष्टज्ञानयुक्ताग्ने त्वंवृजिनवर्तनिंविस्तृतमार्गंसदाचाररहितंनरंपुरुषंसक्मन् सचनीयेसमवेतुंयोग्येविदथेकर्मणि पिपर्षिपालयसिपूरयसिवासत्कर्मानुष्ठानयुक्तंकरोषीत्यर्थः यस्त्वंपरितक्म्येपरितोगन्तव्येधने धनवत्शूराणांप्रियतमे शूरसाता शूरैःसंभजनीयेयुद्धेदभ्रेभिश्चिदल्पैरपिशौर्यरहितैःपुरुषैः दभ्रमर्भकमित्यल्पस्येतियास्कः । समृतासम्यक्प्रयोद्धुंप्राप्तेसतितदनुग्रहार्थंभूयसःप्रौढान्प्रतिपक्षिणः शत्रून्हंसिमारयसि ईदृशस्तवमहिमेत्यर्थः ॥ वृजिनवर्तनिं वृजिना वर्तनिर्यस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सक्मन् षचसमवाये अन्येभ्योपिदृश्यन्तइतिमनिन् नेड्वशिकृतीतिइट्प्रतिषेधः न्यंक्वादित्वात्कुत्वं सुपांसुलुगितिसप्तम्यालुक् । पिपर्षि पृपालनपूरणयोः सिपि श्लौ द्विर्भावह्रस्वोरदत्वहलादिशेषाः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्त्वम् । शूरसा-

१ वृषभः ऋषिवृषिभ्यांकिदित्यभच् । २ स्रुचे स्रुवःकःचिक्चइकारउच्चारणार्थः ककारःअवशिष्यते । ३ श्रवाय्यःश्रुदक्षीत्यादिनाआय्यः ४ वृजिनवर्तनिं वृजेःकिच्चेतिइनच् वृतेश्चेतिअनिः ५ विदथे रुदिविदिभ्यांङिदितिअथप्रत्ययः । ६ नि० ३. २०. ।

ता शुगतौ शुषिचिमीनांदीर्घश्चेतिशूरशब्दोरन्प्रत्ययान्तआद्युदात्तः वनषणसंभक्तावित्यस्मा-
त् क्तिन्नन्तःसातिशब्दः जनसनखनांसञ्झलोरित्यात्वम् शूराणांसातिः संभजनमत्रेति
बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं सुपांसुलुगितिसप्तम्याडादेशः । परितक्म्ये तकहसने अस्मादौ-
णादिकोभावेमक् तदर्हतीतिछन्दसिचेतियः प्रादयोगताद्यर्थेप्रथमयेतिसमासे अव्ययपूर्वपदप्र-
कृतिस्वरत्वम्। दभ्रेभिः दंभुदंभे स्फायितञ्चीत्यादिनारक् बहुलंछन्दसीतिभिसऐसादेशाभावः ।
सघ्नता गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं पूर्ववदाकारः । हंसि हन्तेःसिपि नश्चापदान्तस्यझली-
त्यनुस्वारः यद्वृत्तयोगादनिघातः । भूयसः बहोर्लोपोभूचबहोरितिबहुशब्दादुत्तरस्येयसुनई-
कारलोपः बहोर्भूभावश्च नित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

त्वंतम॑ग्नेअमृत॒त्वउ॑त्त॒मेमर्तं॑दधासि॒श्रव॑सेदि॒वेदि॑वे।यस्ता॑तृषा॒णउ॒भया॑य॒जन्म॑ने॒मयः॑कृ॒णोषि॒प्रय॒आच॑सू॒रये॑ ॥ ७ ॥

त्वम् । तम् । अ॒ग्ने॒ । अ॒मृ॒त॒ऽत्वे । उ॒त्ऽत॒मे । मर्त॑म् । द॒धा॒सि॒ । श्रव॑से । दि॒वेऽदि॑वे । यः । त॒तृ॒षा॒णः । उ॒भया॑य । जन्म॑ने । मयः॑ । कृ॒णोषि॑ । प्रयः॑ । आ । च॒ । सू॒रये॑ ॥ ७॥

हेअग्नेत्वंतंमर्तं तथाविधंत्वत्सेविनंमनुष्यं दिवेदिवे प्रतिदिनं श्रवसेन्नार्थं उत्तमे अमृ-
तत्वे उत्कृष्टे मरणरहितेपदेदधासि धारयसि योयजमानउभयायजन्मने द्विविधजन्मार्थं द्वि-
पदांचतुष्पदांलाभायेत्यर्थः ततृषाणः अतिशयेनतृष्णायुक्तोभवति तस्मैसूरये अभिज्ञाययजमा-
नाय मयः सुखं यद्वैसुखंतन्मयइतिश्रुत्यन्तरात्। प्रयश्च अन्नमपि आकृणोषिसर्वतःकरोषि ॥
ततृषाणः ञितृषापिपासायां लिटःकानच् चित्त्वादन्तोदात्तत्वं संहितायांदीर्घश्छान्दसः। कृणोषि
कृविहिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः चादिलोपेविभाषेति निघातप्रतिषेधः॥ ७॥

अष्टमीमृचमाह—

त्वंनो॑अग्ने॒स॒नये॒धना॑नांय॒शसं॑का॒रुंकृ॑णुहि॒स्तवा॑नः । ऋ॒ध्याम॒कर्मा॒पसा॒नवे॑न॒देवै॒र्द्यावापृथिवी॒प्राव॑तंनः ॥ ८ ॥

---

१ तै० ब्रा० २.२.९ ।

त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् ।
कृणुहि । स्तवानः । ऋध्याम । कर्म । अपसा । नवेन । देवैः ।
द्यावापृथिवी इति । प्र । अवतम् । नः ॥ ८ ॥

हेअग्ने स्तवानः स्तूयमानस्त्वंनोस्माकं धनानांसनयेदानार्थं यशसंयशोयुक्तं कारुंकर्मणांकर्तारंपुत्रंकृणुहिकुरु नवेननूतनेन अपसाप्राप्तेन त्वद्दत्तेनपुत्रेणकर्मयागदानादिरूपं ऋध्यामवर्धयामहे द्यावापृथिवीउभेदेवते देवैरन्यैःसहनोस्मान् प्रावतं प्रकर्षेणरक्षतम् ॥ यशसं अर्शआदित्वादच्प्रत्ययः व्यत्ययेनप्रत्ययात्पूर्वस्योदात्तत्वं यद्वा सर्वप्रातिपदिकेभ्यःक्विब्वक्तव्यइतियशस्शब्दात्क्विप् तस्यप्रत्ययान्तस्य सनाद्यन्तधातुसंज्ञायां क्विप्चेतिक्विप् प्रत्ययान्तधातोःसतिशिष्टत्वाद्धातोरित्यन्तोदात्तत्वम् । कृणुहि उतश्चप्रत्ययाच्छन्दोवावचनमितिहेर्लुगभावः । स्तवानः सम्यानच्स्तुवइतिबहुलवचनात् केवलस्यापिस्तौतेरानच्प्रत्ययः वृषादित्वादाद्युदात्तत्वम् । ऋध्याम ऋधुवृद्धौ बहुलंछन्दसीतिविकरणस्यलुक् यासुटउदात्तत्वम् । द्यावापृथिवी दिवोद्यावेतिद्यावादेशः आमन्त्रितानुदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

त्वंनोअग्नेपित्रोरुपस्थआदेवोदेवेष्वनवद्यजागृविः । तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिपे ॥ ९ ॥

त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु ।
अनवद्य । जागृविः । तनूऽकृत् । बोधि । प्रऽमतिः । च ।
कारवे । त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिपे ॥ ९ ॥

हेअनवद्य दोषरहिताग्ने देवेषु सर्वेषुमध्ये जागृविर्जागरूकस्त्वं पित्रोर्मातापितृरूपयोर्द्यावापृथिव्योरुपस्थे समीपस्थाने वर्तमानःसन् नोस्माकंतनूकृत् पुत्ररूपशरीरकारीभूत्वा बोधिबुध्यस्व अनुगृहाणेत्यर्थः तथा कारवे कर्मकर्त्रे यजमानायप्रमतिश्चअनुग्रहरूपप्रकृष्टमतियुक्तश्चभवेतिशेषः हेकल्याणमङ्गलरूपाग्नेत्वंविश्वंवसुसर्वमपिधनं ओपिपे यजमानार्थमावपसि ॥ उपस्थे सुपिस्थइतिनिष्ठितेःकःप्रत्ययः आतोलोपइटिचेत्याकारलोपः मरुद्वृधादीनांछन्दस्युपसंख्यानमितिपूर्वपदान्तोदात्तत्वम् । जागृविः जागृनिद्राक्षये जॄशॄस्तृजागृभ्यःक्विन्निति क्विन् नित्त्वादाद्युदात्तत्वम् । बोधि बुधअवगमने बहुलंछन्दसीतिशपोलुक् वाछन्दसीतिहेरपित्त्वस्य

विकल्पितत्वेनपित्त्वात् अङित्त्वेसति अङितश्चेतिहेर्धिरादेशः लघूपधगुणः धातोरन्त्यलोपश्छान्दसः। प्रमतिः मनज्ञाने क्तिनि अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः प्रकृष्टामतिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। ऊषिषे टुवप्बीजसन्ताने छान्दसेलिटि थासःसे वचिस्वपीत्यादिनासंप्रसारणपरपूर्वत्वे द्विर्भावहलादिशेषौ क्रादिनियमादिट्॥९॥

दशमीमृचमाह—

त्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयम्। संत्वारायः शतिनःसंसहस्रिणःसुवीरंयन्तिव्रतपामदाभ्य॥१०॥३३॥

त्वम्। अग्ने। प्रऽमतिः। त्वम्। पिता। असि। नः। त्वम्। वयःऽकृत्। तव। जामयः। वयम्। सम्। त्वा। रायः। शतिनः। सम्। सहस्रिणः। सुऽवीरम्। यन्ति। व्रतऽपाम्। अदाभ्य॥१०॥३३॥

हेअग्ने त्वंप्रमतिः अस्मदनुग्रहरूपप्रकृष्टमतियुक्तोसि तथात्वंनोस्माकं पितापालकोसि तथात्वंवयस्कृत् आयुष्यप्रदोसि वयमनुष्ठातारस्तवजामयोबन्धवः हेअदाभ्य केनाप्यहिंसनीयाग्ने सुवीरं शोभनपुरुषयुक्तं व्रतपां कर्मणःपालकं त्वात्वां शतिनःशतसंख्यायुक्ताः रायो-धनानि संयन्ति सम्यक्प्राप्नुवन्ति तथासहस्रिणः सहस्रसंख्याकाःरायः संयन्ति॥ सुवीरं बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वेप्राप्ते वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्। अदाभ्य दभिःप्रकृत्यन्तरमस्तीतिकेचिदाहुः दभेश्चेतिवक्तव्यमितिण्यत्॥१०॥

॥इतिप्रथमस्यद्वितीयेत्रयस्त्रिंशोवर्गः॥३३॥

एकादशीमृचमाह—

त्वामग्नेप्रथममायुमायवेदेवाअकृण्वन्नहुषस्यविश्पतिम्। इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायते॥११॥

त्वाम्। अग्ने। प्रथमम्। आयुम्। आयवे। देवाः। अकृण्वन्। नहुषस्य। विश्पतिम्। इळाम्। अकृण्वन्। मनुषस्य। शासनीम्। पितुः। यत्। पुत्रः। ममकस्य। जायते॥११॥

हेअग्ने त्वां प्रथमंपुरा देवाः आयवेआयोर्मनुष्यरूपस्यनहुषस्यएतन्नामकराजविशेषस्य आयुंमनुष्यरूपं विश्पतिंसेनापतिंअकृण्वनकृतवन्तः तथामनुष्यस्यमनोः इळां एतन्नामधेयांपुत्रींशासनींधर्मोपदेशकर्त्रीमकृण्वनकृतवन्तः तथाचतैत्तिरीयैराम्नायते—इडावैमानवीयज्ञानुकाशिन्यासीदिति[२]। वाजसनेयिनोप्येवमामनन्ति—प्रयाजानुयाजानांमध्येमामवकल्पयमया सर्वानवाप्स्यंसिकामानितिसामनुमन्वशादितियवशादिति। यत्यदामममकस्यमदीयस्यहिरण्यरूपसंबन्धिनोयःपिताङ्गिरास्तस्यपितुःपुत्रोजायते तदानींहेअग्नेत्वमेवपुत्ररूपआसीरितिशेषः॥ आयवेषष्ठ्यर्थेचतुर्थीवक्तव्येतिचतुर्थी। नहुषस्य णहबन्धने नहिकलिहन्यर्तिलसिभ्यउषच् वृषादित्वादाद्युदात्तत्वम्। विश्पतिं परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम्। मनुषस्य मनेर्नित्युषच् नित्वादाद्युदात्तत्वम् बाहुलकाद्वृद्ध्यभावः। शासनीं शिष्यतेअनयेतिशासनी करणाधिकरणयोश्चेतिल्युट् टिड्ढाणञित्यादिनाङीप् लित्स्वरेणाद्युदात्तत्वम्। ममकस्य ममेदमित्यर्थेतस्येदमित्यणि तवकममकावेकवचनेइत्यस्मच्छब्दस्यममकादेशः संज्ञापूर्वकोविधिरनित्यइतिवृद्ध्यभावः व्यत्ययेनाद्युदात्तत्वम्॥ ११॥

द्वादशीमृचमाह—

**त्वंनो॑अग्ने॒तव॑देव॒पा॒युभि॑र्म॒घोनो॑रक्ष॒त॒न्व॑श्चवन्द्य। त्रा॒ता॒तो॒कस्य॒तन॑ये॒गवा॑म॒स्यनि॑मेषं॒रक्ष॑माण॒स्तव॑व्र॒ते ॥ १२ ॥**

त्वम्। नः॒। अ॒ग्ने॒। तव॑। दे॒व॒। पा॒यु॒ऽभिः॑। म॒घोनः॑। र॒क्ष॒। त॒न्वः॑। च॒। व॒न्द्य॒। त्रा॒ता। तो॒कस्य॑। तन॑ये। गवा॑म्। अ॒सि॒। अनि॑ऽमेषम्। रक्ष॑माणः। तव॑। व्र॒ते॥ १२॥

हेवन्द्य वन्दनीयाग्नेदेव तवपायुभिस्त्वदीयैःपालनैःमघोनोधनयुक्तान्नोस्मान्रक्ष तथातन्वश्च तनूःपुत्रदेहानपिरक्ष तोकस्यास्मदीयस्यपुत्रस्ययस्तनयोस्मत्पौत्रादिस्तस्मिन्तवव्रतेत्वदीयेकर्मणि अनिमेषंनिरन्तरंरक्षमाणः सावधानोवर्ततेतस्मिन्यागावःसन्तितासांगवांत्राताऽरक्षकोसि ईदृशस्यतवास्मद्रक्षणेकिमुवक्तव्यमित्यर्थः॥ मघोनः शसि श्वयुवमघोनामतद्धितइतिसम्प्रसारणम्। तन्वः सुपांसुलुगिति शसोजसादेशः पूर्वसवर्णदीर्घस्यदीर्घाज्जसिचेतिप्रतिषेधः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् शसि हि उदात्तयणोहल्पूर्वादितिविभक्त्युदात्तत्वंस्यात्॥ १२॥

---

१ इलां इलस्वप्नक्षेपणयोःक्विप्हलन्तत्वादाप्। २ तै० ब्रा० १. १. ४.।

त्रयोदशीमृचमाह—

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे । यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् ॥ १३ ॥

त्वम् । अग्ने । यज्यवे । पायुः । अन्तरः । अनिषङ्गाय । चतुःऽअक्षः । इध्यसे । यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मन्त्रम् । मनसा । वनोषि । तम् ॥ १३ ॥

हेअग्ने त्वंयज्यवेयज्योर्यजमानस्यपायुःपालकः अन्तरःसमीपवर्तीसन् अनिषङ्गायरक्षोभिरसंबद्धाययज्ञाय चतुरक्षःदिक्चतुष्टयेपिइन्द्रियस्थानीयज्वालायुक्तः इध्यसेदीप्यसे अवृकायाहिंसकायधायसेपोषकायतुभ्यंरातहव्योदत्तहविष्कोयोयजमानोस्ति कीरेश्चित् स्तोतुरेव सतस्तस्यसबन्धिनंमन्त्रंत्वदीयस्तोत्ररूपंमनसात्वदीयेनचित्तेनवनोषियाचसि ॥ यज्यवे यजिमनिशुन्धीत्यादिनायजतेर्युप्रत्ययःवृषादित्वादाद्युदात्तः। पायुः कृवापाजीत्यादिनाउण्प्रत्ययः आतोयुक्चिण्कृतोरितियुगागमः। अनिषङ्गाय षञ्जसङ्गे नविद्यतेनिषङ्गोस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। चतुरक्षः चत्वार्यक्षीणिज्वालारूपाणियस्यासौचतुरक्षः बहुव्रीहौसक्थ्यक्ष्णोरितिसमासान्तःषच्प्रत्ययः चितइत्यन्तोदात्तत्वम्। धायसे वहिहाधाञ्भ्यश्छन्दसीत्यसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुगागमः। कीरेः कॄतसंशब्दने अस्माण्ण्यन्तादचइरितीप्रत्यये णिलोपेधातोरन्त्यलोपश्छान्दसः। मन्त्रं मत्रिगुप्तभाषणे पचाद्यचि वृषादिषुपाठादाद्युदात्तत्वम्। वनोषि वनुयाचने तनादिकृञ्भ्यउः प्रत्ययस्वरः ॥ १३ ॥

चतुर्दशीमृचमाह—

त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥ १४ ॥

त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः । परमम् । वनोषि । तत् । आध्रस्य । चित् । प्रऽमतिः । उच्यसे । पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ॥ १४ ॥

---

१ सृवृभूशुषीत्यादिनाकनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्।

हेअग्नेत्वं उरुशंसाय बहुभिःस्तोतव्याय वाघते ऋत्विजेतदुपकारार्थंस्पार्हस्पृहणीयं परममुत्तमंयद्रेक्णोधनमस्तितद्धनंवनोषिअनुष्ठातालभतामितिकामयसे तथात्वंआध्रस्यचित्‌ सर्वतोधारणीयस्यपोषणीयस्यदुर्बलस्ययजमानस्यापिप्रमतिः प्रकृष्टबुद्धियुक्तःपितापालकइत्यभिरुच्यसे तथाविदुष्टरोतिशयेनाभिज्ञस्त्वंपाकंशिशुं पोतःपाकोर्भकोडिंभइत्यभिधानात्‌ यास्कोप्येवमाह—पाकःपक्तव्योभवति[1]। तथाविधंयजमानंप्रशास्सि । प्रकर्षेणानुशिष्टंकरोषि तथादिशः प्राच्यादिकाः प्रशास्सित्वदीयशासनाभावेनुष्ठातॄणांविभ्रमःस्यात्‌ तथाचश्रूयते—देवावैदेवयजनमध्यवसायदिशोनप्राजानन्निति । सप्रमोदक्षिणदिग्गतोग्निनानिवर्त्यते तदपितत्रैवाम्नातम्‌—पथ्याःस्वस्तिमयजन्प्राचीमेवतयादिशंप्राजानन्नग्निनादक्षिणेति[2] । ऐतरेयिणापितथैवाम्नातम्‌—अथोएनंवरमवृणीतमयैवप्राचींदिशंप्रजानाथाग्निनादक्षिणामिति[3] ॥ उरुशंसाय शंसुस्तुतौ शस्यतइतिशंसः कर्मणिघञ्‌ ञित्स्वरेणाद्युदात्तत्वं ऋदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । स्पार्हं स्पृहासंबन्धि तस्येदमित्यण्‌ । रेक्णः रिचिर्‌विरेचने रिचेर्धनेचिचेत्यसुन्‌ चकारान्नुडागमः चजोःकुघिण्यतोरितिकुत्वम्‌ । आध्रस्य ध्रैतृप्तौ आदेचउपदेशेशितीत्यात्त्वे आतश्चोपसर्गेइतिकप्रत्ययः । शास्सि शासुअनुशिष्टौ अदादित्वाच्छपोलुक्‌ पित्त्वादनुदात्तत्वेधातुस्वरः । पाकंचप्रशास्सि दिशश्चप्रशास्सीतिअत्रचार्थोगम्यते अतश्चादिलोपेविभाषेतिप्रथमातिङ्विभक्तिर्ननिहन्यते । विदुष्टरः विद्वच्छब्दात्तरपि अयस्मयादीनिच्छन्दसीतिभसंज्ञायां वसोःसंप्रसारणमितिसंप्रसारणं परपूर्वत्वं शासिवसीतिषत्वं तरपःपित्त्वादनुदात्तत्वे वसोः स्वरेणोकारउदात्तः ॥ १४ ॥

पञ्चदशीमृचमाह—

त्वम॑ग्ने॒प्रय॑तदक्षिणं॒नरं॒वर्मे॑वस्यू॒तंपरि॑पासिवि॒श्वतः॑ । स्वा॒दु॒क्षद्मा॒योव॑ स॒तौस्यो॑न॒कृज्जी॑वया॒जंयज॑ते॒सोप॒मादि॒वः ॥ १५ ॥३४॥

त्वम्‌ । अ॒ग्ने॒ । प्रय॑तऽदक्षिणम्‌ । नर॑म्‌ । वर्म॑ऽइव । स्यू॒तम्‌ । परि॑ । पा॒सि॒ । वि॒श्वतः॑ । स्वा॒दु॒ऽक्षद्मा॑ । यः । व॒स॒तौ । स्यो॒न॒ऽकृत्‌ । जी॒व॒ऽया॒जम्‌ । यज॑ते । सः । उ॒प॒ऽमा । दि॒वः ॥ १५ ॥३४॥

हेअग्ने त्वंप्रयतदक्षिणंयेनयजमानेनऋत्विग्भ्योदक्षिणादत्ता तादृशं नरंपुरुषंयजमानं विश्वतः सर्वतः परिपासिसम्यक्‌पालयसि तत्रदृष्टान्तः—स्यूतं निश्छिद्रत्वेनसूचीभिः सम्यक्‌

1 नि० ३. १२ । 2 तै० सं. ६. १. ५ । 3 ऐ० ब्रा० १. ७ ।

निष्पादितं वर्मेव यथाकवचंयुद्धेपालयतितद्वत् स्वादुक्षद्मास्वादन्नः वसतौ निवासभूतेस्वगृहे स्योनकृत्अतिथीनांसुखकारी योयजमानोजीवयाजं जीवयजनसहितंयज्ञं यद्वा जीवनिष्पाद्यंयजते अनुतिष्ठति सयजमानोदिवः स्वर्गस्योपमादृष्टान्तोभवति यथास्वर्गोनुष्ठातॄन्सुखयति तथात्वमपिऋत्विगादीनित्यर्थः ॥ स्यूतं षिवुतन्तुसन्ताने निष्ठेतिक्तः यस्यविभाषेतीट्प्रतिषेधः छ्वोःशूडनुनासिकेचेतिवकारस्यऊठादेशः । स्वादुक्षद्मेतीतिस्वादुक्षद्मा क्षदतिरत्तिकर्मा अन्येभ्योपिदृश्यन्तइ तिमनिन् नित्त्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं बहुव्रीहौतुव्यत्ययेन । जीवयाजं जीवाऋत्विजइज्यन्तेदक्षिणाभिःपूज्यन्तेत्रेत्यधिकरणेघञ् कुत्वाभावश्छान्दसः यद्वा जीवैःपशुभिर्योजनंजीवयाजः याजयतेर्घञ् णेरनिटीतिणिलोपस्य अचःपरस्मिन्नितिस्थानिवद्भावाच्चजोःकुघिण्ण्यतोरितिकुत्वाभावः थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । सोपमा सोचिलोपेचेत्पादपूरणमितिसंहितायांसोर्लोपः । दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् ॥ १५ ॥

इतिप्रथमस्यद्वितीयेचतुस्त्रिंशोवर्गः ॥ ३४ ॥

इमामग्नइत्यनयाअनाहिताग्निरार्त्विज्यंकृत्वास्वाग्नावाहुतिंजुहुयात् ऋत्विजोवृणीतइतिखण्डे—एवमनाहिताग्निर्गृहइमामग्नेशरणिंमीमृषोनइतिसूत्रितम् ।

तामेतांसूक्तेषोडशीमृचमाह—

इ॒माम॑ग्ने श॒र॒णिं मी॑मृषो न इ॒मम॑ध्वा॒नं॒ यमगा॑म दू॒रात् । आ॒पिः पि॒ता प्रम॑तिः सो॒म्याना॒ं भृमि॑रस्यृषि॒कृन्मर्त्या॑नाम् ॥ १६ ॥

इ॒माम् । अ॒ग्ने॒ । श॒र॒णिम् । मी॒मृ॒षः॒ । नः॒ । इ॒मम् । अ॒ध्वान॑म् । यम् । अगा॑म । दू॒रात् । आ॒पिः । पि॒ता । प्रऽम॑तिः । सो॒म्याना॑म् । भृमिः॑ । अ॒सि॒ । ऋ॒षि॒ऽकृत् । मर्त्या॑नाम् ॥ १६ ॥

हेअग्ने नोस्मत्संबन्धिनींइमामिदानींसंपादितांशरणिंहिंसांव्रतलोपरूपां मीमृषः क्षमस्व तथा त्वदीयसेवां अग्निहोत्रादिरूपांपरित्यज्यदूराद्दूरदेशंयमिममध्वानं अगाम वयंगतवन्तः तमपिक्षमस्वेतिशेषः सोम्यानांसोमार्हाणामनुष्ठातॄणांमर्त्यानांत्वमाप्यादिगुणयुक्तोसि आपिःप्रापणीयः पिता पालकः प्रमतिःप्रकृष्टमननयुक्तः भृमिःभ्रामकःकर्मनिर्वाहकइत्यर्थः ऋषिकृद्दर्शनकारी अनुजिघृक्षयाप्रत्यक्षोभवसीत्यर्थः ॥ शरणिं शॄहिंसायामित्यस्मादौणादिकःअनिप्रत्ययः । मीमृषः

सृपस्तितिक्षायां अस्माण्णौ चङि गुणेभावे नित्यंछन्दसीतिउपधाऋकारस्यऋकारादेशःणिलोप-द्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि तिङ्ङतिङइतिनिघातः । अगाम इण्गतौ इणो-गालुङीतिगादेशः गातिस्थेतिसिचोलुक् अडागमउदात्तः । भूमिः भ्रमुअनवस्थाने भ्रमेःसंप्रसा-रणंचेतीन्प्रत्ययः संप्रसारणेपरपूर्वत्वं इगुपधात्किदित्यनुवृत्तेःकित्त्वाद्गुणप्रतिषेधः नित्त्वादाद्युदा-त्तत्वम् ॥ १६ ॥

सप्तदशीमृचमाह—

मनुष्वदग्नेअङ्गिरस्वदङ्गिरोययातिवत्सदनेपूर्ववच्छुचे । अच्छयाह्या वहादैव्यंजनमासादयबर्हिषियक्षिचप्रियम् ॥ १७ ॥

मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ १७ ॥

हेशुचे शुद्धियुक्त अङ्गिरोङ्गनशीलहविरादानायतत्रतत्रगमनशीलाग्ने अच्छ आभिमुख्येन सदनेदेवयजनदेशेयाहिगच्छ तत्रचत्वारोदृष्टान्ताः—मनुष्वत् यथामनुरनुष्ठानदेशेगच्छति अङ्गि-रस्वत् यथाचाङ्गिरागच्छति ययातिवत् यथाययातिर्नामराजागच्छति पूर्ववत् अन्येचपूर्वपुरुषाय-थागच्छन्ति यथामन्वादयोयज्ञेगच्छन्तितद्वत् अथवा मन्वादीनांयज्ञेयथात्वंगच्छसितद्वत् गत्वा-चदैव्यंदेवतासमूहरूपंजनमावह अस्मिन्कर्मण्यानय आनीयचबर्हिषिआस्तीर्णेदर्भेआसादय ता-न्देवानुपवेशय उपवेश्यच प्रियमभीष्टंहविर्यक्षिच देहि ॥ मनुष्वत् तेनतुल्यमितिप्रथमार्थेवात्र तस्येवेतिषष्ठ्यर्थेवावतिः अयस्मयादित्वेनभत्वाद्रुत्वाद्यभावः प्रत्ययस्वरः एवमङ्गिरस्वदित्यादि-षु । वहद्व्यचोतस्तिङइतिसंहितायांदीर्घः । यक्षि लोटिबहुलंछन्दसीतिशपोलुक् सेसंपिचेतिहेर-भावश्छान्दसः षत्वकत्वे ॥ १७ ॥

साग्निचयनेऋतौ उपासंभरणीयायामिष्टावग्नेर्ब्रह्मण्वतःपुरोनुवाक्याएतेनाग्नइत्येषा दर्शपू-र्णमासाभ्यामिष्ट्वेतिखण्डे—एतेनाग्नेब्रह्मणावावृधस्वब्रह्मचतेजातवेदोनमश्चेतिसूत्रितम् ।

तामेतांसूक्तेष्टादशीमृचमाह—

एतेनाग्नेब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा । उतप्रणेष्यभिवस्योअस्मान्त्संनःसृजसुमत्यावाजवत्या ॥ १८ ॥ ३५ ॥

एतेन॑ । अ॒ग्ने॒ । ब्रह्म॑णा । व॒वृ॒ध॒स्व॒ । शक्ती॑ । वा॒ । यत् । ते॒ ।
च॒कृ॒म । वि॒दा । वा॒ । उ॒त । प्र । ने॒षि॒ । अ॒भि । वस्यः॑ ।
अ॒स्मान् । सम् । नः॒ । सृ॒ज॒ । सु॒ऽम॒त्या । वाज॑ऽवत्या ॥ १८ ॥३५॥

हेअग्ने एतेनअस्मत्प्रयुक्तेनब्रह्मणामन्त्रेणववृधस्वअभिवृद्धोभव शक्तीवाविदावाअस्मदीयशक्त्यावास्मदीयज्ञानेनचतेतवयत्स्तोत्रंचकृम वयंकृतवन्तः एतेनब्रह्मणेतिपूर्वेणान्वयः उतअपिचअस्माननुष्ठातॄन्वस्यःवसुमत्तरत्वलक्षणंश्रेयः प्रणेषिप्रकर्षेणप्रापय नोस्मान् वाजवत्याप्रभूतान्नयुक्तयासुमत्याअनुष्ठानविषयया शोभनबुद्ध्यासंसृजसंयोजय। ववृधस्व वृधुवृद्धौ लेट्यडागमः बहुलंछन्दसीतिशपःश्लुः द्विर्भावहलादिशेषोरदत्वानि अभ्यासस्यसंहितायांदीर्घश्छान्दसः । शक्ती सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घत्वं क्तिनोनित्त्वादाद्युदात्तत्वम् । विदा सावेकाचइतितृतीयायाउदात्तत्वम् । नेषि णीञ्प्रापणे बहुलंछन्दसीतिशपोलुक् उपसर्गादसमासेऽपीतिणत्वम् । सुमत्या मन्क्तिन्नित्यादिनोत्तरपदान्तोदात्तत्वंप्रथमाध्यायेप्रपञ्चितं उदात्तयणोहल्पूर्वादिति विभक्तेरुदात्तत्वम् ॥ १८ ॥

इतिप्रथमस्यद्वितीयेपञ्चत्रिंशोवर्गः ॥ ३५ ॥

इन्द्रस्यनुवीर्याणीतिपञ्चदशर्चंद्वितीयंसूक्तं आङ्गिरसोहिरण्यस्तूपऋषिस्त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रस्यपञ्चोनेत्यनुक्रमणिका अग्निष्टोमेमाध्यंदिनसवने निष्केवल्यशस्त्रे इन्द्रस्यनुवीर्याणीतिनिविद्धानीयंसूक्तं निष्केवल्यस्येतिखण्डेसूत्रितम्—इन्द्रस्यनुवीर्याणीत्येतस्मिन्नैन्द्रींनिविदंदध्यादिति। विषुवत्यपितस्मिन्शस्त्रेएतद्विनियुक्तं विषुवान्दिवाकीर्त्यइतिखण्डेसूत्रितम्—इन्द्रस्यनुवीर्याणीत्येतस्मिन्नैन्द्रींनिविदंशस्त्वेति । महाव्रतेनिष्केवल्येपि एतदेवविनियुक्तं राथंतरोदक्षिणःपक्षइतिखण्डे—चतस्रः सतीःषड्बृहतीःकरोतीन्द्रस्यनुवीर्याणिप्रवोचमिति ।

तत्रप्रथमामृचमाह—

इन्द्र॑स्य॒नुवी॒र्या॑णि॒प्रवो॑च॒ंयानि॑च॒कार॑प्रथ॒मानि॑व॒ज्री । अह॒न्नहि॒मन्व॒पस्त॑तर्द॒प्रव॒क्षणा॑अभि॒न॒त्पर्व॑तानाम् ॥ १ ॥

इन्द्र॑स्य । नु । वी॒र्या॑णि । प्र । वो॒च॒म् । यानि॑ । च॒कार॑ । प्र॒थ॒मानि॑ । व॒ज्री । अह॑न् । अहि॑म् । अनु॑ । अ॒पः । त॒त॒र्द॒ । प्र । व॒क्षणाः॑ । अ॒भि॒न॒त् । पर्व॑तानाम् ॥ १ ॥

वज्रीवज्रयुक्तइन्द्रः प्रथमानिपूर्वसिद्धानिमुख्यानिवीर्याणिपराक्रमयुक्तानिकर्माणिचकार तस्येन्द्रस्यतानिवीर्याणि नु क्षिप्रंप्रब्रवीमि कानिवीर्याणिइतितदुच्यते अहिंमेघं अहन्हतवान् तदेतदेकंवीर्यं अनुपश्चादपोजलानि ततर्द हिंसितवान् भूमौनिपातितवानित्यर्थः इदंद्वितीयंवीर्यं पर्वतानांसंबन्धिनीर्वक्षणाः प्रवहणशीलानदीः प्राभिनत् भिन्नवान् कूलद्वयकर्षणेनप्रवाहितवानित्यर्थः इदंतृतीयंवीर्यं एवमुत्तरत्रापिद्रष्टव्यम् ॥ वीर्याणि शूरवीरविक्रान्तौ ण्यन्तादचोयदितियत् णेरनिटीतिणिलोपः तित्स्वरितमितिस्वरितत्वं यतोनावइत्याद्युदात्तत्वं नभवति आद्युदात्तत्वेहिसुशब्देनबहुव्रीहौ आद्युदात्तंद्व्यच्छन्दसीत्यनेनैवोत्तरपदाद्युदात्तत्वस्यसिद्धत्वात् वीरवीर्यौचेतिपुनस्तद्विधानमनर्थकंस्यात् अतोवगम्यते यतोनावइत्याद्युदात्तत्वंवीरशब्देनप्रवर्ततइति अतःपरिशेषात्तित्स्वरितमितिप्रत्ययस्यस्वरितत्वमेव । प्रोचं अस्यतिवक्तिख्यातिभ्योऽङितिच्लेरङादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः चकार णलि लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् यद्वृत्तयोगादनिघातः । अहन् लङि इतश्चेतीकारलोपे हल्ङ्याब्भ्यइतितकारलोपः । अहिं आङ्पूर्वाद्धन्तेराङि श्रिहनिभ्यांह्रस्वश्चेतीण्प्रत्ययः आङोह्रस्वत्वंच चशब्देनवेञोडिव् समानेख्यश्चोदात्तइतिडित्त्वं पूर्वपदान्तोदात्तत्वंचानुकृष्यते तत्टिलोपेपूर्वपदस्योदात्तत्वम् । ततर्द उतृदिर्हिंसानादरयोः तिङ्ङतिङइतिनिघातः । वक्षणाः वक्षरोषे क्रुधमण्डार्थेभ्यश्चेतियुच् तित्स्वरंबाधित्वाव्यत्ययेनप्रत्ययस्वरः ॥ १ ॥

द्वितीयामृचमाह—

अहन्नहिंपर्वतेशिश्रियाणंत्वष्टास्मैवज्रंस्वर्यंततक्ष । वाश्राइवधेनवःस्यन्दमानाअञ्जःसमुद्रमवजग्मुरापः ॥ २ ॥

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै ।
वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः । स्यन्दमानाः ।
अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥

शेषयजादेशाः चितइत्यन्तोदात्तत्वम् । स्वर्यं ऋगतौ अस्मादसुपूर्वाद्वृहलोर्ण्यदितिण्यत् संज्ञा-पूर्वकोविधिरनित्यइतिवृद्ध्यभावः यद्वा स्तृशब्दोपतापयोरित्यस्मात् णिति पूर्ववद्वृद्ध्यभावः ति-त्स्वरितमितिस्वरितत्वम् । वाश्यन्तइतिवाश्राः वाशृशब्दे स्फायितञ्चीत्यादिनारक् । जग्मुः उ-सिगमहनेत्युपधालोपः ॥ २ ॥

तृतीयामृचमाह—

**वृषायमाणोऽवृणीतसोमंत्रिकद्रुकेष्वपिबत्सुतस्य । आसायकंमघवादत्तवज्रमहन्नेनंप्रथमजामहीनाम् ॥ ३ ॥**

वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् ।
सुतस्य । आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् ।
एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

वृषायमाणः वृषइवाचरन्निन्द्रः सोममवृणीतवृतवान् त्रिकद्रुकेषुज्योतिर्गौरायुरित्येतन्नामकास्त्रयोयागास्त्रिकद्रुकाउच्यन्ते तेषुसुतस्याभिषुतस्यसोमस्यांशमपिबत्पीतवान् मघवाधनवानिन्द्रः सायकंबन्धकंवज्रं आदत्तस्वीकृतवान् तेनवज्रेणाहीनांमेघानांमध्येप्रथमजांप्रथमोत्पन्नंमेघंअहन्हतवान् ॥ वृषायमाणः वृषइवाचरन् कर्तुःक्यङ्सलोपश्चेतिक्यङ् अकृत्सार्वधातुकयोरितिदीर्घः अदुपदेशाद्धातोरन्तोदात्तत्वे क्यङन्ताद्धातोरन्तोदात्तत्वम् । सायकं षिञ्बन्धने सिनोतीतिसायकः ण्वुल् लित्स्वरेणाद्युदात्तत्वम् । प्रथमजां प्रथमंजायतइतिप्रथमजाः जनसनखनक्रमगमोविट् विड्वनोरित्यात्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

**यदिन्द्राहन्प्रथमजामहीनामान्मायिनामभिनाःप्रोतमायाः । आत्सूर्यंजनयन्द्यामुषासंतादीत्नाशत्रुंनकिलाविवित्से ॥ ४ ॥**

यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् ।
मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् ।
जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल ।
विवित्से ॥ ४ ॥

१ पदकालेहस्वश्छन्दसः ।

उतअपिच हेइन्द्र यत्यदाअहीनांमेघानांमध्येप्रथमजांप्रथमोत्पन्नंमेघंअहन् हतवानसि आत्तदनन्तरं मायिनांमायोपेतानामसुराणांसंबन्धिनीर्मायाःप्रामिनाः प्रकर्षेणनाशितवानसि अनन्तरंसूर्यमुषसं उपःकालंद्यामाकाशंचजनयन्नुत्पादयन्नावरकमेघनिवारणेनप्रकाशयन्वर्तसे तादीत्नातदानीं आवरकान्धकाराभावाच्छत्रुंघातकंवैरिणंनविवित्सेकिल त्वंनलब्धवान् खलु॥ अहन् हन्तेर्लङिहल्ङ्याब्भ्यइतिसिलोपः अडागमउदात्तः यद्वृत्तयोगादनिघातः। मायिनां मायाशब्दस्यव्रीह्यादिपुपाठाद्व्रीह्यादिभ्यश्चेतिमत्वर्थीयइनिः । अमिनाः मीञ्हिंसायां क्रैयादिकः मीनातेर्निगमेइतिह्रस्वत्वम। तादीत्ना तदानीमित्यस्यपृषोदरादित्वाद्वर्णविपर्ययः।किल निपातस्यचेतिदीर्घत्वम्। विवित्से विद्लृलाभे क्रादिनियमात्प्राप्तइड्व्यत्ययेननभवति ॥४॥

पञ्चमीमृचमाह—

अहन्वृत्रंवृत्रतरंव्यंसमिन्द्रोवज्रेणमहतावधेन। स्कन्धांसीव कुलिशेनाविवृक्णाहिःशयतउपपृक्पृथिव्याः॥५॥३६॥

अहन्। वृत्रम्। वृत्रऽतरम्। विऽअंसम्। इन्द्रः। वज्रेण। महता। वधेन। स्कंधांसिऽइव। कुलिशेन। विऽवृक्णा। अहिः। शयते। उपऽपृक्। पृथिव्याः॥ ५॥ ३६॥

अयमिन्द्रोवज्रेणसंपादितोयोमहान्वधः तेनवज्रेण वृत्रतरंअतिशयेनलोकानामावरकमन्धकाररूपं यद्वा वृत्रैरावरणैः सर्वान्शत्रून् तरति तंवृत्रमेतन्नामकमसुरं व्यंसं विगतांसंछिन्नबाहुंयथाभवतितथाअहनहतवान् अंसच्छेदेदृष्टान्तः—कुलिशेनकुठारेण विवृक्णाविशेषतः छिन्नानिस्कंधांसीवयथावृक्षस्कन्धाश्छिन्नाभवन्तितद्वत्तथासति अहिर्वृत्रः पृथिव्याउपरिउपपृक्सामीप्येनसंपृक्तःशयतेशयनंकरोति छिन्नकाष्ठवद्भूमौपततीत्यर्थः॥ वृत्रतरं वृतुवर्तने स्फायितञ्चीत्यादिनाभावे रक्प्रत्ययान्तोवृत्रशब्दः वृत्रेणावरणेनसर्वंतरतीतिवृत्रतरः तरतेः पचाद्यच् परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वं तरपित्युव्यत्ययेन । व्यंसं बहुव्रीहौपूर्वपदप्रकृतिस्वरितत्वे उदात्तस्वरितयोर्यणइतिस्वरितत्वम्। वधेन हनश्चवधइतिभावेअप् तत्सन्नियोगेनधातोर्वधादेशः सचान्तोदात्तः अन्त्यस्याकारस्य अतोलोपइतिलोपे उदात्तनिवृत्तिस्वरेणप्रत्ययस्योदात्तत्वम्। विवृक्णा ओव्रश्चूछेदने कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः ओदितश्चेतिपरत्वान्निष्ठानत्वं तनोवश्चप्रस्जेतिपत्वेप्राप्तेनिष्ठादेशः पत्वस्वरप्रत्ययेड्विधिपुसिद्धोवक्तव्यइति नत्वस्यसिद्धत्वेन झल्परत्वाभावात्पत्वंनभवति कुत्वेतुकर्तव्येतदसिद्धमेवेति चोःकुरितिकुत्वं

शेश्छन्दसिबहुलमितिशेर्लोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । शयते बहुलंछन्दसीति शेःपरस्यशपोलुगभावः । पृथिव्याः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यद्वितीयेषट्त्रिंशोवर्गः ॥ ३६ ॥

षष्ठीमृचमाह–

अयोद्धेवदुर्मदआहिजुह्वेमहावीरंतुविबाधमृजीषम् । नातारीदस्य समृतिंवधानांसंरुजानाःपिपिषइन्द्रशत्रुः ॥ ६ ॥

अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

दुर्मदोदुष्टमदोपेतोहर्पयुक्तोवृत्रः अयोद्धेवयोद्धृरहितइवइन्द्रंआजुह्वेहि आहूतवान्खलु कीदृशं इन्द्रं महावीरंगुणैर्महान्भूत्वा शौर्योपेतं तुविबाधंबहूनांबाधकं ऋजीषं शत्रूणामपार्जकं अस्येदृशस्येन्द्रस्यसंबन्धिनोयेशत्रुवधाःसन्तितेषांवधानांसमृतिंसङ्गमंनातारीव पूर्वोक्तोदुर्मदः तरीतुंनाशक्नोत् इन्द्रशत्रुः इन्द्रःशत्रुर्घातकोयस्यवृत्रस्यतादृशोवृत्रः इन्द्रेणहतोनदीषुपतितःसन्रुजानाः नदीः संपिपिषे सम्यक्पिष्टवान् सर्वांल्लोकानावृण्वतोवृत्रदेहस्यपातेननदीनांकूलानितत्रत्यंपाषाणादिकंचचूर्णीभूतमित्यर्थः ॥ अयोद्धेव नविद्यतेयोद्धास्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं समासान्तविधेरनित्यत्वान्नद्युतश्चेतिकबभावः । जुह्वे ह्वेञ्स्पर्धायां शब्देच अभ्यस्तस्यचेतिसंप्रसारणं उवङादेशाभावश्छान्दसः यद्वा छन्दस्युभयथेतिसार्वधातुकसंज्ञायांहुश्नुवोःसार्वधातुकइतियणादेशः अत्रलक्षणप्रतिपदोक्तपरिभाषालक्ष्यानुरोधान्नाश्रीयते इतरथाहिआजुह्वानइत्यादिपुयणादेशोनस्यात् नचैवंसतिसातयेहुवेवामित्यादावपितथास्यादितिवाच्यं अनेकाच्त्वाभावात् अनेकाचइतिहितत्रानुवर्तते प्रत्ययस्वरेणान्तोदात्तत्वं हिचेतिनिघातप्रतिषेधः । महावीरं महांश्चासौवीरश्चमहावीरः आन्महतइतिआत्वम् । तुविबाधं बाधृविलोडने तुवीन् प्रभूतानबाधतेइतितुविबाधः पचाद्यच् कृदुत्तरपदप्रकृतिस्वरत्वम् । समृतिं तादौचेतिगतेःप्रकृतिस्वरत्वम् । रुजानाः रुजोभङ्गे रुजन्तिकूलानीतिरुजानानद्यः रुजानानद्योभवन्तिरुजन्तिकूलानीतियास्कः।व्यत्ययेनशानच् तुदादिभ्यःशः नुमभावश्छान्दसः अदुप-

१ऋजीषं अर्जेर्ऋजचेतिईषनअर्शआद्यच्यत्सोमस्यपूयमानस्यातिरिच्यतेतदृजीषंतद्वान्।
२ नि० ६.४.।

देशात्सार्वधातुकानुदात्तत्वेविकरणस्वरः । पिपिषे पिषृसंचूर्णने व्यत्ययेनलिट् । दन्द्वशत्रुः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

अपादहस्तोअपृतन्यदिन्द्रमास्यवज्रमधिसानौजघान । वृष्णोव ध्रिःप्रतिमानंबुभूषन्पुरुत्रावृत्रोअशयद्व्यस्तः ॥ ७ ॥

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

अपात् वज्रेणछिन्नत्वात्पादरहितः अहस्तःहस्तरहितोपिमः इन्द्रमुद्दिश्यअपृतन्यत् पृतनां युद्धमैच्छत् द्वेपाधिक्येनबहुधाविद्धोपियुद्धंनपरित्यक्तवानित्यर्थःअस्यहस्तपादहीनस्यवृत्रस्य सानौपर्वतसानुसदृशेप्रौढस्कन्धेअधिउपरिवज्रं आजघान इन्द्रआभिमुख्येनप्रक्षिप्तवान् अश-क्तस्यापियुद्धेच्छायांदृष्टान्तः—वध्रिः छिन्नमुष्कःपुरुषः वृष्णोरेतःसेचनसमर्थस्य पुरुषान्तर-स्यप्रतिमानंसादृश्यंबुभूषन् प्राप्तुमिच्छन् यथानशक्नोतितद्वदयमितिशेषः सवृत्रः पुरु-त्राबहुष्ववयवेषुव्यस्तः विविधंक्षिप्तः ताडितःसन् अशयत् भूमौपतितवान् ॥ अपात् बहुव्रीहौ पादशब्दस्यान्त्यलोपश्छान्दसः । अहस्तः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । अपृ-तन्यत् सुपआत्मनःक्यच् कव्यध्वरपृतनस्येत्यन्त्यलोपः । बुभूषन् सनिग्रहगुहोश्चेतीट्प्रतिषेधः । पुरुत्रा देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलमितिसप्तम्यर्थेत्राप्रत्ययः । अशयत् व्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिशपोलुगभावः । व्यस्तः असुक्षेपणइत्यस्मात् कर्मणिक्तः यस्यविभाषेतीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् संहितायामुदात्तस्वरितयोर्यणइ-तिपरस्यानुदात्तस्यस्वरितत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

नदंनभिन्नममुयाशयानंमनोरुहाणाअतियन्त्यापः । याश्चिद्वृत्रो महिनापर्यतिष्ठत्तासामहिःपत्सुतःशीर्बभूव ॥ ८ ॥

नदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥

अमुया अमुष्यां पृथिव्यां शयानंपतितं मृतं वृत्रं आपोजलानि अतियन्ति अतिक्रम्य गच्छन्ति तत्रदृष्टान्तः—भिन्नंबहुधाभिन्नकूलंनदं सिन्धुमिव यथावृष्टिकालेप्रभूताआपोनद्याः कूलंभित्त्वातिक्रम्यगच्छन्तितद्वत् कीदृश्यआपः मनोरुहाणाः नृणांचित्तमारोहन्त्यः पुरावृत्रे जीवतिसति तेननिरुद्धामेघस्थिताआपोभूमौवृष्टानभवन्ति तदानींनृणांमनःखिद्यते मृतेतु वृत्रे निरोधरहिताआपोवृत्रशरीरमुल्लंघ्यप्रवहन्ति तदावृष्टिलाभेनमनुष्यास्तुष्यन्तीत्यर्थः त-देतदुत्तरार्धेनस्पष्टीक्रियते—वृत्रोजीवनदशायां महिनास्वकीयेनमहिम्नायाश्चित् याएवमेघग-ताआपः पर्यतिष्ठत् परिवृत्य स्थितवान् अहिर्वृत्रोमेघः तासामपांपत्सुतःशीः पादस्याधःशया-नोबभूव यद्यप्यपांपादोनास्ति तथाप्यद्भिर्वृत्रस्याभिव्याप्तत्वात् पादस्याधःशयनमुपपद्यते ॥ भिन्नं रदाभ्यांनिष्ठातोनइतिनत्वम् । अमुया सुपांसुलुगितिसप्तम्यायाजादेशः । शयानं शी-ङःसार्वधातुकेइतिगुणः धातोर्ङित्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । रुहाणाः रुहबीजजन्म-निप्रादुर्भावेच व्यत्ययेनशानच् कर्तरिशपिप्राप्तेव्यत्ययेनशः अनित्यमागमशासनमितिवचना-न्मुगभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरेप्राप्ते व्यत्ययेनधातुस्वरः । महिना महपूजायां इन्सर्वधातुभ्यइतीन्प्रत्ययः व्यत्ययेनविभक्तेरुदात्तत्वम् यद्वा महिना महिम्ना महच्छब्दस्यपृथ्वादिपुपाठात् तस्यभावइत्यस्मिन्नर्थे पृथ्वादिभ्यइमनिज्वेतिइमनिच्प्रत्ययः टेरितिटिलोपः चितइत्यन्तोदात्तत्वम् तृतीयैकवचने अल्लोपेसति उदात्तनिवृत्तिस्वरेणतस्यो-दात्तत्वं मकारलोपश्छान्दसः । पत्सुतःशीः पादस्याधःशेतइतिपत्सुतःशीः क्विप्चेतिक्विप् तस्मिं पद्दन्नित्यादिनापादशब्दस्यपदादेशः शस्प्रभृतिष्वितिप्रभृतिशब्दःप्रकारवचनेइतिशलादो-पगोत्यत्रापिद्रोपन्नादेशोभवतीत्युक्तत्वात् मध्येसुडितिशब्दोपजनश्छान्दसः यद्वा पादशब्दस्य सप्तमीबहुवचने पदादेशेकृते इतराभ्योपिदृश्यन्तइतिसप्तम्यर्थेतसिल् लुगभावश्छान्दसः ॥ ८ ॥

नवमीमृचमाह—

नीचावयाअभवद्वृत्रपुत्रेन्द्रोअस्याअववधंर्जभार । उत्तरासूरधरः पुत्रआसीद्दानुःशयेसहवत्सानधेनुः ॥ ९ ॥

नीचाऽवयाः । अभवत् । वृत्रऽपुत्रा । इन्द्रः । अस्याः । अव । वधः । जभार । उत्ऽतरा । सूः । अधरः । पुत्रः । आसीत् । दानुः । शये । सहऽवत्सा । न । धेनुः ॥ ९ ॥

वृत्रपुत्रा वृत्रःपुत्रोयस्याः मातुः सेयंमाता वृत्रपुत्रा नीचावयाः न्यग्भावं प्राप्ताहताभवत् पुत्रं महाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्चीपतितवतीत्यर्थः तदानीमयमिन्द्रः अस्यामातुःअव अधोभागे वृत्रस्योपरिवधं हननसाधनमायुधंजभार प्रहृतवान् तदानीं सूर्माता उत्तराउपरिस्थितासीत् पुत्रस्तुअधोभागस्थितआसीत् साचदानुर्दानवीवृत्रमाता शये मृता शयनंकृतवती तत्र दृष्टान्तः—धेनुर्लोकप्रसिद्धागौः सहवत्सान यथावत्ससहिताशयनंकरोतितद्वत् ॥ नीचावयाः वेतिखादतीतिवयोबाहुः औणादिकोसिप्रत्ययः न्यञ्चौवयसीयस्याःसानीचावयाः न्यञ्च्‌शब्दादुत्तरस्याविभक्तेः सुपांसुपोभवन्तीतितृतीयैकवचनादेशः अचइत्यकारलोपेचाविति दीर्घत्वं अञ्चेश्छन्दस्यसर्वनामस्थानमितितस्योदात्तत्वं समासेलुगभावश्छान्दसः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् यद्वा नीचौनिकृष्टौ वयसीयस्याःसा पूर्वपदस्यदीर्घश्छान्दसः । वधः हन्यते अनेनेतिवधः अर्हुनिहन्तेर्वधादेशः निस्वादाद्युदात्तत्वम् । जभार हृग्रहोर्भइतिभत्वम् । सूः पूङ्प्राणिगर्भविमोचने सूते गर्भविमुञ्चतीतिसूर्माता क्विप्चेतिक्विप् । दानुः दोअवखण्डने दाभाभ्यांनुः । शये लटि लोपस्तआत्मनेपदेष्वितितलोपः शीङःसार्वधातुकेइतिगुणे अयादेशः ॥९॥

दशमीमृचमाह—

अतिष्ठन्तीनामनिवेशनानांकाष्ठानांमध्येनिहितंशरीरम् । वृत्रस्यंनिण्यंविचरन्त्यापोदीर्घंतमआशयदिन्द्रशत्रुः ॥ १० ॥ ३७ ॥

अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥ १० ॥ ३७ ॥

वृत्रस्यशरीरमापोविचरन्ति विशेषेणोपर्याक्रम्यप्रवहन्ति कीदृशं शरीरं निण्यं निर्नामधेयं अप्सुमग्नत्वेनगूढत्वात्तदीयंनामनकेनापिज्ञायते एतदेवस्पष्टीक्रियते—काष्ठानामपांमध्ये निहितं निक्षिप्तं कीदृशानांकाष्ठानां अतिष्ठन्तीनां स्थितिरहितानां अनिवेशनानां उपवेशनरहितानां ·प्रवहणस्वभावत्वादेतासांमनुष्यवत्नकापिस्थितिःसंभवति इन्द्रशत्रुः वृत्रोजलमध्येशरीरेप्रक्षिप्तेसति दीर्घतमोदीर्घनिद्रात्मकं मरणं यथाभवतितथा आशयत् सर्वतःपतितवान् । अतिष्ठन्तीनां अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अनिवेशनानां निविशन्त्यस्मिन्निति निवेशनंस्थानं करणाधिकरणयोश्चेत्यधिकरणेल्युट् तद्रहितानां बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । क्रान्त्वास्थिताःकाष्ठाः पृषोदरादिः । निहितं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं अत्रयास्कः—अनिष्ठन्तीनामनिविशमानानामित्यस्थावराणांकाष्ठानांमध्येनिहितं

शरीरंमेघःशरीरंशरीरंशृणातेःशम्नातेर्वावृत्रस्यनिण्यंनिर्णामंविचरन्तिविजानन्त्यापइतिदीर्घंद्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोस्यशमयितावाशातयितावातस्मादिन्द्रशत्रुस्तत्कोवृत्रोमेघइतिनैरुक्तास्त्वाष्ट्रोसुरइत्यैतिहासिकाइति ॥ १० ॥

॥ इतिप्रथमस्यद्वितीयेसप्तत्रिंशोवर्गः॥ ३७॥

एकादशीमृचमाह—

दासपत्नीरहिगोपाअतिष्ठन्निरुद्धाआपःपणिनेवगावः । अपांबिलमपिहितंयदासीद्वृत्रंजघन्वाँअपतद्ववार ॥ ११ ॥

दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निःऽरुद्धाः । आपः । पणिनाऽइव । गावः । अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ ११ ॥

दासपत्नीःदासोविश्वोपक्षयहेतुर्वृत्रःपतिःस्वामीयासामपांताः दासपत्नीः अतएवाहिगोपाअहिर्वृत्रोगोपारक्षकोयासांताःगोपनंनामस्वच्छन्देनयथानप्रवहन्तितथानिरोधनं एतदेवस्पष्टीक्रियते—आपोनिरुद्धाअतिष्ठन्नितितत्रदृष्टान्तः—पणिनेवगावः पणिनामकोसुरः गाअपहृत्यबिलेस्थापयित्वातद्बिलद्वारमाच्छाद्ययथानिरुद्धवांस्तथेत्यर्थः अपांयद्बिलंप्रवहणद्वारंअपिहितं वृत्रेणनिरुद्धमासीत् तद्बिलंप्रवहणद्वारंवृत्रंजघन्वान् हतवानिन्द्रः अपववार अपवृतमकरोत् वृत्रकृतमपांनिरोधंपरिहृतवान् अत्रयास्कः—दासपत्नीर्दासाधिपत्न्योदासोदस्यतेरुपदासयतिकर्माण्यहिगोपाअतिष्ठन्नहिनागुप्ताअहिरयनादेत्यन्तरिक्षेऽयमपीतरोहिरेतस्मादेवनिर्ह्रसितोपसर्गआहन्तीतिनिरुद्धाआपःपणिनेवगावःपणिर्वणिग्भवतिपणिःपणनाद्वणिक्पण्यंनेनेक्ति अपांबिलमपिहितंयदासीत् बिलंभरंभवतिबिभर्तेर्वृत्रंजघ्निवानपववारतद्वृत्रोवृणोतेर्वावर्ततेर्वावर्धतेर्वायदवृणोत्तद्वृत्रस्यवृत्रत्वमितिविज्ञायतेयदवर्ततत्तद्वृत्रस्यवृत्रत्वमितिविज्ञायतेयदवर्धततत्तद्वृत्रस्यवृत्रत्वमितिविज्ञायतइति ॥ दासपत्नीः दसुउपक्षये दासयतीतिदासोवृत्रःपचाद्यच् चितइत्यन्तोदात्तत्वम् दासःपतिर्यासां विभाषासपूर्वस्येतिङीप् तत्सन्नियोगेनइकारस्यनकारः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं यद्वा दासस्यपाल्ययित्र्यः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । अहिगोपाः गुपूरक्षणे गोपायतीतिगोपाः आयादयआर्धधातुकेवेत्यायःप्रत्ययः ततःक्विप् अतोलोपः वेरपृक्तलोपाद्वलिलोपोवलीयानितिपूर्वंयकारलोपः नचाचःपरस्मिन्नितिअतोलोपस्यस्थानिवत्त्वं नपदान्तद्विर्वचने-

१ नि० २. १६. । २ नि० २. १७. ।

तिप्रतिषेधात् अहिर्गोपायासां पूर्ववत्स्वरः । निरुद्धाः रुधिर्आवरणे झषस्तथोर्धोधइतिनिष्ठात-कारस्यधकारः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जघन्वान् हन्तेर्लिटःक्वसुः अभ्यासाच्चेत्यभ्या-सादुत्तरस्यहकारस्यकुत्वम् क्रादिनियमप्राप्तस्येटोविभाषागमहनेत्यादिनाविकल्पविधानादभावः संहितायां नकारस्यरुत्वानुनासिकावुक्तौ ॥ ११ ॥

द्वादशीमृचमाह—

अश्व्यो॒वारो॑अभव॒स्तदि॑न्द्रसृ॒के यत्त्वा॑प्र॒त्यह॑न्दे॒वए॒कः॑ । अज॑यो॒गा अज॑यःशूरसोम॒मवा॑सृजः॒सर्त॑वेस॒प्तसिन्धू॑न् ॥ १२ ॥

अश्व्यः॑ । वारः॑ । अ॒भ॒वः॒ । तत् । इ॒न्द्र॒ । सृ॒के । यत् । त्वा॒ । प्र॒ति॒ऽअह॑न् । दे॒वः । एकः॑ । अज॑यः । गाः । अज॑यः । शू॒र॒ । सोम॑म् । अव॑ । अ॒सृ॒जः॒ । सर्त॑वे । स॒प्त । सिन्धू॑न् ॥ १२ ॥

सृकेवज्रे सृकःवृकइतिवज्रनामसुपठितत्वात् देवोदीप्यमानः सर्वायुधकुशलः एकः अद्वितीयोवृत्रः यद्यदात्वात्वांप्रत्यहन् प्रतिकूलत्वेनप्रहृतवान् तत्तदानींत्वं अश्व्योवारः अश्वसंबन्धीवालोभवः यथाअश्वस्यवालोऽनायासेनमक्षिकादीन्निवारयतितद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः किंच गाःपणिनापहृतास्त्वमजयः जितवान्हेशूरशौर्ययुक्तेन्द्र सोममजयो-जितवान् तथाचतैत्तिरीयाः त्वष्टाहतपुत्रइत्यस्मिन्नुपाख्यानेसमामनन्ति—सयज्ञवेशसंकृत्वामा-सहासोममपिबदिति । सप्तसिन्धून् इमंमेगङ्गइत्यस्यामृच्याम्नातागङ्गाद्याःसप्तसंख्याकानदीः सर्तवेसर्तुंप्रवाहरूपेणगन्तुं अवासृजः त्यक्तवान् वृत्रकृतंप्रवाहनिरोधंनिराकृतवानित्यर्थः । अश्व्यः अश्वेभवः भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् वारयतिदंशमशकानितिवारः पचाद्यच् कपिलकादित्वाल्लत्वविकल्पः वृषादित्वादाद्युदात्तत्वम् । प्रत्यहन् यद्वृत्तान्नित्य-मितिनिघातप्रतिषेधः तिङिचोदात्तवतीतिगतेरनुदात्तत्वम् । अजयः गाःइत्यस्यवाक्यान्तर-गतत्वात् तदपेक्षयास्यतिङ्ङतिङइतिनिघातोनभवति समानवाक्येनिघातयुष्मदस्मदादेशावक्त-व्याइतिवचनात् । सर्तवे तुमर्थेसेसेनितितवेनप्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

नास्मै॑वि॒द्युन्नत॑न्य॒तुः सि॑षेध॒नयां॒मिह॒मकि॑रद्ध्रा॒दुनिं॑च । इन्द्र॑श्च॒यद्यु॑यु॒धाते॒अहि॑श्चो॒ताप॒रीभ्यो॒मघ॒वावि॑जिग्ये ॥ १३ ॥

न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् ।
अकिरत् । ह्रादुनिम् । च । इन्द्रः । च । यत् । युयुधाते इति ।
अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥ १३ ॥

इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः सोऽयमर्थोऽनेन मन्त्रेणोच्यते अस्मै इन्द्रार्थं निर्मिता विद्युत् न सिषेध इन्द्रं न प्राप्नोत् तथा तन्यतुः गर्जनं यां मिहं सेचनं यां वृष्टिं अकिरत् वृत्रो विक्षिप्तवान् साऽपि वृष्टिर्न सिषेध ह्रादुनिं च अशनिमपि यां वृत्रः प्रयुक्तवान् साऽपि न सिषेध इन्द्रश्चाहिश्च इन्द्रवृत्रावुभावपि यद्यदा युयुधाते युद्धं कृतवन्तौ तदानीं विद्युदादयो न प्रापुरिति पूर्वत्रान्वयः उत अपि च मघवा धनवानिन्द्रः अपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् विजिग्ये विशेषेण जितवान् ॥ सिषेध षिधु गत्याम् । मिहं मिह सेचने मेहति सिञ्चतीति मिट् वृष्टिः क्विप् चेति क्विप् । अकिरत् कॄ विक्षेपे तुदादिभ्यः शः ऋत इद्धातोरितीत्वं अडागम उदात्तः यद्वृत्तयोगादनिघातः । युयुधाते युध संप्रहारे लिटि प्रत्ययस्वरः । जिग्ये सन्लिटोर्जेरिति अभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥ १३ ॥

चतुर्दशीमृचमाह—

अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् । नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥

अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते ।
जघ्नुषः । भीः । अगच्छत् । नव । च । यत् । नवतिम् । च ।
स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥ १४ ॥

हे इन्द्र जघ्नुषो वृत्रं हतवतः तव हृदि चित्ते यत् यदि भीः अगच्छत् न हतवानस्मीति बुद्ध्या भयं प्रापत् तर्हि अहेर्वृत्रस्य यातारं हन्तारं कमपश्यः त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि तादृशस्य पुरुषान्तरस्याभावात् माभूत्तव भयमित्यर्थः यद्यस्मात्कारणात्त्वं नव च नवतिं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकानि अतरः तीर्णवानसि तत्र दृष्टान्तः—श्येनो न श्येननामको बलवान्पक्षीव दूरगमनात्तव भयमासीदिति गम्यते तद्भयं माभूदित्यभिप्रायः तच्च दूरगमनं ब्राह्मणे समाम्नातं—इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छदिति । तैत्तिरीयाश्चामनन्ति—इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमान इति ॥ हृदि पद्दन्नित्यादिना हृदयशब्दस्य

१ कृतन्यञ्जीत्यादिना तनोतेर्यतुच् । २ श्येनः श्यास्त्याहृविभ्य इनच् ।
३ ऐ० ब्रा० ३. १५. । ४ तै० सं. २. ५. ३. ।

ह्यादेशः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । जघ्नुषः हन्तेर्लिटःक्वसुः षष्ठ्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणं परपूर्वत्वे शासिवसिघसीनांचेतिषत्वं नचषत्वतुकोरसिद्धइतिएकादेशस्यासिद्धत्वात्षत्वंनप्राप्नुयादितिवाच्यं संप्रसारणङीट्सुप्रतिषेधोवक्तव्यइति असिद्धवद्भावस्यप्रतिषिद्धत्वात् गमहनेत्यादिनोपधालोपः नचासिद्धवदत्राभादितिसंप्रसारणस्यासिद्धवद्भावः भिन्नाश्रयत्वात् संप्रसारणंहिषष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्तीः स्रुगतौ शप्श्यनोर्नित्यमितिनुमागमः शपःपित्त्वादनुदात्तत्वं शतुश्चलसार्वधातुकस्वरेणाद्युदात्तत्वम् । अतरः यद्वृत्तयोगादनिघातः ॥ १४ ॥ पञ्चदशीमृचमाह—

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः । सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५ ॥ ३८ ॥

इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः । सः । इत् । ऊ॒म् इति॑ । राजा॑ । क्ष॒य॒ति॒ । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व॒ ॥ १५ ॥ ३८ ॥

वज्रबाहुरिन्द्रःशत्रोर्हन्तेसतिनिःसपत्नोभूत्वायातोगच्छतोजङ्गमस्यअवसितस्यएकत्रैवस्थितस्यस्थावरस्यशमस्यशान्तस्यशृङ्गराहित्येनप्रहरणादावप्रवृत्तस्याश्वगर्दभादेःशृङ्गिणःशृङ्गोपेतस्योग्रस्यमहिषबलीवर्दादेश्चराजाभूत् सेदुसएवेन्द्रः चर्षणीनांमनुष्याणांराजाभूत्वाक्षयति निवसति ता तानिपूर्वोक्तानिजङ्गमादीनिसर्वाणिपरिबभूवव्याप्तवान् तत्रदृष्टान्तः—अरान्ननेमिः यथारथचक्रस्यपरितोवर्तमानानेमिररान्नाभौकीलितान्काष्ठविशेषान्व्याप्नोतितद्वत् ॥ यातः यामापणे यातिगच्छतीतियात् लटःशतृ सावेकाचइतिविभक्तेरुदात्तत्वम् । सः सोचिलोपेचेत्पादपूरणमितिसंहितायांसोर्लोपः । ता शेश्छन्दसिबहुलमितिशेर्लोपः । बभूव भवतेर्लिटोणलि भवतेरइत्यभ्यासस्यात्वं कृताकृतप्रसङ्गित्वाद्वुगागमस्यनित्यत्वाद्वृद्धेःपूर्वंवुगागमः यद्वा इन्धिभवतिभ्यांचेतिलिटःकित्त्वाद्वृद्ध्यभावः नचासिद्धवदत्राभादितितस्यासिद्धत्वादुवङादेशःशङ्कनीयः वुग्युटावुवङ्यणोःसिद्धौभवतइतितस्यसिद्धत्वात् तिङ्ङतिङइतिनिघातः ॥ १५ ॥

इतिप्रथमस्यद्वितीयेऽष्टत्रिंशोवर्गः ॥ ३८ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणामात्येनविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेद्वितीयोऽध्यायःसमाप्तः ॥ २ ॥

# ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥ अथतृतीयाध्यायआरभ्यते ॥ त्वमग्नेप्रथमइतिसप्तमानुवाकेपञ्चसूक्तानि तत्रएतायामेतिपृथ्वी-यंसूक्तंपञ्चदशर्चं ऋषिश्चान्यस्मादितिपरिभाषयाआंगिरसोहिरण्यस्तूपऋषिः अनुक्तत्वादिन्द्रोदे-वता त्रिष्टुप्छन्दः एतइत्यनुक्रमणिका गोसववीवधयोर्निष्केवल्येएतायामेतिसूक्तंविनियुक्तं त-थाचसूत्रितम्—अतिमूर्तिनायक्ष्यमाणइतिखण्डे—गोसववीवधौपशुकामइन्द्रसोममेतायामेतिम-ध्यन्दिनइति ।

तत्रप्रथमामृचमाह—

ॐम् एतायामोपंगव्यन्तइन्द्रमस्माकंसुप्रमंतिंवावृधाति ।
अनामृणःकुविदादस्यरायोगवांकेतंपरमावर्जतेनः ॥ १ ॥

आ । इत । अयाम । उप । गव्यन्तः । इन्द्रम् । अस्माकम् ।
सु । प्रऽमतिम् । ववृधाति । अनामृणः । कुवित् । आत् । अस्य ।
रायः । गवाम् । केतम् । परम् । आऽवर्जते । नः ॥ १ ॥

देवाः परस्परमेवंकथयन्ति हेदेवाः गव्यन्तः पणिनामकेनासुरेणअपहृताअस्मदीयाः गाः प्राप्तुमिच्छन्तोयूयं एतआगच्छत युष्माभिः सहितावयं इन्द्रंगवानयनक्षमंउपायामप्राप्नुवाम स-चेन्द्रः अनामृणः हिंसकरहितःसन् अस्माकंदेवानांप्रमतिंगोलाभेनहर्षयित्वाप्रकृष्टांबुद्धिंसु-ववृधाति सुष्ठुवर्धयति आत् अनन्तरं सइन्द्रः अस्यरायोधनस्यगवांगोरूपस्यसम्बन्धिपरंके-तंउत्कृष्टं ज्ञानंनोस्माकंकुविदावर्जतेअधिकंप्रापयति ॥ इत इणगतौ अदादित्वाच्छपोलुक् । अयाम एतेर्लोडुत्तमबहुवचने आडुत्तमस्यपिच्चेत्याडागमः पिद्वद्भावात्सार्वधातुकलक्षणेगुणे अयादेशः नचेणोयणितियणादेशः मध्येपवादाःपूर्वान्विधीन्बाधन्तइतिवचनात्तस्येयङादे-शापवादत्वात् अतःपरत्वात् गुणेनयणादेशोबाध्यते पिद्वद्भावात्प्रत्ययस्यानुदात्तत्वेधातुस्वरेणा-द्युदात्तत्वम् । गव्यन्तः गाआत्मनइच्छन्तः सुपआत्मनःक्यजितिगोशब्दात्कर्मणःक्यच् वा-न्तोयिप्रत्ययेइत्यवादेशः प्रत्ययान्ताद्धातोर्लटःशतृ तस्याद्युपदेशाल्लसार्वधातुकानुदात्तत्वेधातु-स्वरः । प्रमतिं मन्यतेःक्तिनि अनुदात्तोपदेशेत्यादिनानुनासिकलोपः तादौचेतिगतेःप्रकृतिस्वर-

त्वम्। ववृधाति वृधुवृद्धौ लेट्याडागमः बहुलंछन्दसीतिशपःश्लुः संहितायामभ्यासस्यदीर्घश्छान्दसः। अनाधृष्णः धृषहिंसायां धृष्णन्तिहिंसन्तीतिधृष्णाः इगुपधलक्षणःकः नसन्त्याधृष्णाअस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अस्य रायः ऊडिदमित्युभयत्रविभक्तेरुदात्तत्वम्। गवां सावेकाचइतिप्राप्तस्यविभक्त्युदात्तस्यनगोश्वन्साववर्णेतिप्रतिषेधः। केतं कितज्ञाने घञन्तआद्युदात्तः। आवर्जते वृजीवर्जने अदादित्वाच्छपोलुकिप्राप्ते बहुलंछन्दसीतितदभावः शपःपित्वादनुदात्तत्वम् तिङश्चलसार्वधातुकत्वेनधातुस्वरः तिङ्ङ्चोदात्तवतीतिगतेरनुदात्तत्वम् कुविद्योगान्निपातैर्यद्यदिहन्तेत्यादिनानिघातप्रतिषेधः॥ १॥

द्वितीयामृचमाह—

उपेदहंधनदामप्रतीतंजुष्टांनश्येनोवसतिंपतामि।
इन्द्रंनमस्यन्नुपमेभिरर्कैर्यःस्तोतृभ्योहव्योअस्तियामन्॥ २॥

उप। इत्। अहम्। धनऽदाम्। अप्रतिऽइतम्। जुष्टाम्। न।
श्येनः। वसतिम्। पतामि। इन्द्रम्। नमस्यन्। उपऽमेभिः।
अर्कैः। यः। स्तोतृऽभ्यः। हव्यः। अस्ति। यामन्॥ २॥

यइन्द्रः स्तोतृभ्यः स्तोतृणामनुष्ठातृणामनुग्रहार्थंयामन् तदीयशत्रुभिःसहप्रवृत्ते युद्धे हव्योस्तितैराह्वातव्योभवति तमिन्द्रमहमनुष्ठाताउपेत् पतामि उपागोम्येव किंकुर्वन् उपमेभिः उपमानस्थानीयैरुत्तमैरर्कैःस्तोत्रैःसहनमस्यन्पूजयन् कीदृशमिन्द्रं धनदां धनप्रदं अप्रतीतंअप्रतिगतं बलिभिरतिरस्कृतमित्यर्थः इन्द्रप्राप्तौदृष्टान्तः—जुष्टांपूर्वसेवितांवसतिं स्वकीयनीडरूपांनिवासभूमिंश्येनोन यथाश्येननामकोवेगवान्पक्षीस्वकीयस्थानंप्रत्यादरेणधावति तद्वदहमिन्द्रंत्वरयाप्राप्नोमि॥ धनदां धनंददातीतिधनदाः आतोमनिन्नित्यादिनाविच्। अप्रतीतं शत्रुभिर्नप्रतिगतं अव्ययपूर्वपदप्रकृतिस्वरत्वम्। जुष्टाम् जुषीप्रीतिसेवनयोः श्वीदितोनिष्ठायामितीट्प्रतिषेधः नित्यंमन्त्रइत्याद्युदात्तत्वम्। पतामि लेट्याडागमः। नमस्यन् नमसःशब्दात्पूजार्थे नमोवरिवइतिक्यच् प्रत्ययस्वरः अदुपदेशाल्लसार्वधातुकानुदात्तस्यएकादेशस्वरेणोदात्तत्वम्। उपमीयन्तेएभिरित्युपमाः माङ्माने घञर्थेकविधानमितिकः बहुलंछन्दसीतिभिसऐसादेशाभावः कृदुत्तरपदप्रकृतिस्वरत्वम्। हव्यः ह्वेञोबहुलंछन्दसीतिसम्प्रसारणम् अचोयदितियत् गुणे धातोस्तन्निमित्तस्यैवेत्यवादेशः यतोनावइत्याद्युदात्तत्वम्। यामन् यापापणे मनिनोनित्वादाद्युदात्तत्वम् सुपांसुलुगितिसप्तम्यालुक्॥ २॥

तृतीयामृचमाह—

निसर्वसेनइषुधीँरसक्तसमर्योगाअजतियस्यवष्टि ।
चोष्कूयमाणइन्द्रभूरिवाममापणिर्भूरस्मदधिप्रवृद्ध ॥ ३ ॥

नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सम् । अर्यः । गाः । अजति । यस्य । वष्टि । चोष्कूयमाणः । इन्द्र । भूरि । वामम् । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

सर्वसेनः कृत्स्नसेनायुक्तः इषुधीन् बाणानामाधारभूतान् निषङ्गानन्यपक्तनितरांपृष्ठभागेसंयोजितवान् अर्यःस्वामिरूपइन्द्रः यस्यदेवस्यवष्टिअसुरेणापहृताः गाः प्रदातुंकामयते तस्य देवस्य गृहेताःगाः समजतिसम्यक्प्रापयति हेप्रवृद्धप्रकृष्टवृद्धियुक्तइन्द्र भूरिवामंप्रभूतंगोरूपंधनंचोष्कूयमाणः अस्मभ्यंप्रयच्छन् अस्मदधिअस्मासुपणिर्माभूः व्यवहारीमाभूयाः गवांमूल्यंमायाचस्वेत्यर्थः ॥ सर्वसेनः इनेनसहवर्ततइतिसेना वोपसर्जनस्येतिसभावः सर्वासरणशीलासेनायस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् प्रत्ययलक्षणेनाप्ययंस्वरइष्यतइतिवचनात्प्रत्ययलक्षणेनसर्वस्य सुपीतिसर्वशब्दआद्युदात्तः । इषुधीन् इषवःएषुधीयन्तइतिइषुधयः कर्मण्यधिकरणेचेतिकिप्रत्ययः संहितायांदीर्घादटीत्यादिनानकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिपूर्वस्वरोनुनासिकः । असक्त पचसमवाये बहुलंछन्दसीतिशपोलुक् । अर्यः अर्यःस्वामिवैश्ययोरितियत्प्रत्ययान्तोनिपातितः अर्यःस्वाम्याख्याचेत्यन्तोदात्तत्वम् । अजति अजगतिक्षेपणयोः । वष्टि वशकान्तौ अदादित्वाच्छपोलुक् व्रश्चादिषत्वेष्टुत्वम् । चोष्कूयमाणः स्कुञ्आप्रवणे धातोरेकाचइतियङ् अकृत्सार्वधातुकयोर्दीर्घः द्विर्वचने शर्पूर्वाःखयइतिककारःशिष्यते सकारोलुप्यते कुहोश्चुरितिकुत्वे गुणोयङ्लुकोरितिगुणः सुषामादित्वात्षत्वम् यङन्तात् लटः शानच् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । भूः गातिस्थेतिसिचोलुक् ॥ ३ ॥

चतुर्थीमृचमाह—

वधीर्हिदस्युंधनिनंघनेनँएकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधिविषुणक्तेव्यायन्नयज्वानःसनकाःप्रेतिमीयुः ॥ ४ ॥

वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् ।
उपऽशाकेभिः । इन्द्र । धनोः । अधि । विपुणक् । ते । वि ।
आयन् । अयज्वानः । सनकाः । प्रऽइतिम् । ईयुः ॥ ४ ॥

हेइन्द्र धनिनंबहुधनोपेतंदस्युंचोरंवृत्रंघनेनकठिनेनवज्रेणवधीर्हि त्वंहतवान्खलु धनित्वंवाजसनेयिनोपिस्पष्टमामनन्ति—वृत्रस्यान्तःसर्वेदेवाःसर्वाश्चविद्याःसर्वाणिहवींषिचासन्निति । उपशाकेभिः समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितोभूत्वाएकश्चरन्प्रहर्तुंस्वयमेकएवगच्छन् यद्यपिमरुतः समीपेवर्तन्ते तथापितेप्रोत्साहयन्त्येव नतुवृत्रंप्रहरन्ति प्रहर्तातुस्वयमेकएव तथाचब्राह्मणेसमाम्नातम्—मरुतोहैनंनाजहुःप्रहरभगवोजहिवीरयस्वेत्येवैनमेतांवाचंवदन्तउपातिष्ठन्तेति[1] । धनोरधि इन्द्रसंबन्धिनोधनुषउपरि विपुणक् विविधंनाशमुद्दिश्य यद्वा विष्वक्सर्वतः तेवृत्रानुचराः व्यायन्विविधमागच्छन् आगत्यचअयज्वानः यज्ञविरोधिनःसन्तः सनकाएतन्नामकावृत्रानुचराःप्रेतिमीयुः मरणंप्राप्ताः ॥ वधीः हनहिंसागत्योः लुङिचेतिवधादेशः सचादन्तः तस्यातोलोपइतिलोपेसतिस्थानिवद्भावादतोहलादेरितिवृद्ध्यभावः इटईटीतिसिचोलोपः आगमानुदात्तत्वेधात्वकारस्योदात्तत्वम् । घनेनँएकः ईषाअक्षादिषुछन्दसिप्रकृतिभावमात्रंवक्तव्यमिति संहितायांप्रकृतिभावःअनुनासिकश्छान्दसः।उपशाकेभिः उपशक्तंकुर्वन्तीतिउपशाकाःशकॢशक्तौ अस्माद्धेतुमण्ण्यन्तात्पचाद्यच् थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । विपुणक् विपुपूर्वाद्वणशेः सम्पदादिलक्षणःक्विप् नशेर्वेतिकुत्वम् यद्वा विपुपूर्वस्याश्चतेर्नुडागमः।सनकाइत्यसुराणांनाम षणुदाने सनन्तिददतीतिसनाः दातारःपचाद्यच् सनान्कायन्तिशब्दयन्तीतिसनकाः आतोनुपसर्गे कः आतोलोपइटिचेत्याकारलोपः कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रेतिं तादौचनितीतिगतेःप्रकृतिस्वरत्वम् । ईयुः एतेरुसिपरत्वादिणोयणितियणादेशेद्विर्वचनेचीतिस्थानिवद्भावादिकारस्य द्विर्वचनम् दीर्घइणःकितीत्यभ्यासस्यदीर्घत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

पराचिच्छीर्षावंवृजुस्तइन्द्रायज्वानोयज्वभिःस्पर्धमानाः ।
प्रयद्दिवोहरिवःस्थातरुग्रनिरव्रताँअधमोरोदस्योः ॥ ५ ॥ १ ॥

परा । चित् । शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः । यज्वऽभिः ।
स्पर्धमानाः । प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः ।
अव्रतान् । अधमः । रोदस्योः ॥ ५ ॥ १ ॥

[1] ऐ० ब्रा० ३. २०. ।

हेइन्द्र तेवृत्रानुचराः शीर्षास्वकीयानिशिरांसिपराचित्पराङ्मुखान्येवकृत्वावबृजुः गतवन्तः कीदृशास्तेअयज्वानः स्वयंयागरहिताः प्रत्युतयज्वभिः यागानुष्ठातृभिःसहस्पर्धमानाः हे-हरिवःहरिनामकाश्वयुक्त स्थातःस्थितियुक्त युद्धेपलायनरहित उग्र शौर्ययुक्तेन्द्र यद्यदादिवोन्त-रिक्षात् रोदस्योः द्यावापृथिव्योः सकाशाच्चअव्रतान्व्रतरहितान् वृत्रानुचरान् निष्प्राधमः निःशेषेणधमनंकृतवानसि तदानींत्वदीयमुखवायुनानुन्नाःसन्तोवबृजुरितिपूर्वत्रान्वयः ॥ शीर्षा शेश्छन्दसिबहुलमितिशेर्लोपः। ववृजुः वृजीवर्जने असंयोगाल्लिट्किदितिकित्त्वाद्गुणाभावः।अय-ज्वानः यजतेःसुयजोर्ङ्वनिबिति भूतेङ्वनिप्प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरेणाद्युदात्तत्वम् नञ्-समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् । दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् । हरिवः हरीअस्य स्तइतिहरिवान् छन्दसीरइतिमतुपोवत्वम् संबुद्धौमतुवसोरितिरुत्वम्। अव्रतान् बहुव्रीहौनञ्सु-भ्यामित्युत्तरपदान्तोदात्तत्वम् दीर्घादटीतिसंहितायांनकारस्यरुत्वम् आतोटिनित्यमितिसानुना-सिकआकारः। अधमः ध्माशब्दाग्निसंयोगयोः लुङि सिपि शपि पाघ्रेत्यादिनाधमादेशः ॥ ५॥

इतिप्रथमस्यतृतीयेप्रथमोवर्गः ॥ १ ॥

षष्ठीमृचमाह—

अयुयुत्सन्ननवद्यस्यसेनामयातयन्तक्षितयोनवग्वाः ।
वृषायुधोनवध्र्योनिरष्टाःप्रवद्भिरिन्द्राच्चितयन्तआयन् ॥ ६ ॥

अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः ।
नवऽग्वाः । वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः ।
इन्द्रात् । चितयन्तः । आयन् ॥ ६ ॥

अनवद्यस्य गर्हणीयदोषरहितस्येन्द्रस्य सेनांप्रतिअयुयुत्सन् वृत्रस्यानुचरायोद्धुमैच्छन् तदानीं नवग्वाः नवनीतगतयः स्तोतव्यचरित्राः यद्वा अङ्गिरसांसत्रमासीनानांमध्येयेनवभि-र्मासैरवाप्तफलाःउत्थिताः तेषांनवग्वाइतिसंज्ञा नवग्वासःसुतसोमासइन्द्रमित्यादिपुतथा-भिहितत्वात् क्षितयोमनुष्याः अङ्गिरःप्रभृतयः क्षितयःकृष्टयइतितन्नामसुपाठात् अयातयन्त युद्धार्थमिन्द्रंनानाविधैर्मन्त्रैःप्रोत्साहितवन्तः इन्द्रेयोद्धुंगतेसतिनिरष्टाःवेनेन्द्रेणनिराकृताःवृत्रानुच-राश्चितयन्तःस्वकीयामशक्तिंज्ञापयन्तःइन्द्रात् इन्द्रस्यसकाशात्प्रवद्भिः प्रवणैः पलायितुंसुशकै-र्मार्गैरायन्दूरेगतवन्तः तत्रदृष्टान्तः—वृषायुधः वृषेणसेचनसमर्थेनपुंस्त्वयुक्तेनशूरेणसहयुद्धंकुर्वतो-

१ ऋ०सं ४. १. २५।

वधप्रयोग नपुंसकादिव निसर्गपण्डोवध्रिश्चेत्यादिस्मृतिप्रयोगात् तेयथाप्रबलेनद्गूरेनिराकृताभवन्तितद्वत् ॥ अयुयुत्सन् युधसम्प्रहारे सनि हलन्ताच्चेतिसनःकित्त्वाद्गुणाभावः एकाचउपदेशेनुदात्तादितीट्प्रतिषेधः व्यत्ययेनपरस्मैपदम् । सेनाम् इनेनसहवर्ततइतिसेना वोपसर्जनस्येतिसहशब्दस्यसभावः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अयातयन्त यतीप्रयत्ने हेतुमतिचेति णिच् क्षितयः क्षिनिवासगत्योः क्षियन्तिगच्छन्तीतिक्षितयोमनुष्याः क्तिच्क्तौचसंज्ञायामिति क्तिच् । नवग्वाः नवभिर्मासैर्गच्छन्तीतिनवग्वाः गमेरौणादिकोड्वप्रत्ययः यद्वा क्विपि गमः क्वावित्यनुनासिकलोपे ऊङ्चगमादीनामितिवक्तव्यमितिअकारस्यऊकारः जसि ओःसुपीतियणादेशः दीर्घश्छान्दसः । वृषायुधः क्विप्चेतिक्विप् क्विप्चेत्यत्रसोपपदेभ्योनिरुपपदेभ्यइत्युक्तत्वादत्रसोपपदेभ्यःक्विप् अन्येषामपिदृश्यतइतिपूर्वपदस्यसंहितायांदीर्घः । निरष्ठाः अशूव्याप्तौ भावेनिष्ठा यस्यविभाषेतीट्प्रतिषेधः व्रश्चादिनाषत्वेष्टुत्वम् निष्ठाचबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् यद्वा निरस्ताइत्यत्रसकारस्यषत्वंछान्दसं तदानीं अस्ताइत्येतत्कर्मणिनिष्ठेतिगतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । प्रवद्भिः वनषणसंभक्तौ अस्मात्प्रपूर्वात्क्विप् गमादीनामितिवक्तव्यमित्यनुनासिकलोपः ततस्तुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । चितयन्तः चितीसंज्ञाने अस्मात् ण्यन्तात् लटःशतृ शप् अनित्यमागमशासनमितिवचनाल्लघूपधगुणाभावः ॥६॥

सप्तमीमृचमाह—

त्वमे॒ताञ्रु॑द॒तो ज॒क्षत॒श्चायो॑धयो॒ रज॑स इन्द्र पा॒रे ।
अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑मावः ॥ ७ ॥

त्वम् । ए॒तान् । रु॒द॒तः । जक्ष॑तः । च॒ । अयो॑धयः । रज॑सः । इ॒न्द्र॒ । पा॒रे । अव॑ । अ॒द॒हः॒ । दि॒वः । आ । दस्यु॑म् । उ॒च्चा । प्र । सु॒न्व॒तः । स्तु॒व॒तः । शंस॑म् । आ॒वः॒ ॥ ७ ॥

हेइन्द्र त्वंरुदतोरोदनंकुर्वतःजक्षतःभक्षणंहसनंवाकुर्वतश्चएतान्द्विविधानपिवृत्रानुचरान्रजसःपारेअन्तरिक्षस्यपरभागेरजःशब्दोन्तरिक्षवाची लोकारजांस्युच्यन्तइत्युक्तत्वात् अयोधयःयुद्धमकरोःयुद्धेनमारितवानित्यर्थः दस्युं उपक्षयितारंवृत्रं दिवआ द्युलोकादानीयउच्चाउत्कर्षेणअवादहः दग्धवानसि वृत्रंसपरिवारंविनाश्यततऊर्ध्वंसुन्वतःसोमाभिषवंकुर्वतः स्तुवतःस्तोत्रं

१ नि० ४. १९. ।

कुर्वतोयजमानस्यशंसंस्तुतिंमावःप्रकर्षेणरक्षितवानसि ॥ रुदतः रुदिर्अश्रुविमोचने लटःशतृ अदादित्वाच्छपोलुक् प्रत्ययस्वरेणान्तोदात्तत्वम् शतुरनुमइतिशसउदात्तत्वम् । जक्षतः जक्ष-भक्षहसनयोः पूर्ववच्छपोलुक् जक्षित्यादयःषडितिअभ्यस्तसंज्ञा अतःअभ्यस्तानामादिरित्याद्यु-दात्तत्वम् । सुन्वतः सुनोतेःशतरि स्वादिभ्यःश्नुः हुश्नुवोरित्यादिनायणादेशः शतुरनुमइति विभक्तेरुदात्तत्वम् । स्तुवतः ष्टुञ्स्तुतौ अदादित्वाच्छपोलुक् उवङादेशः पूर्ववत्स्वरः ॥ ७ ॥

अष्टमीमृचमाह—

चक्राणासःपरीणहंपृथिव्याहिरण्येनमणिनाशुंभमानाः ।
नहिन्वानासस्तितिरुस्तइन्द्रंपरिस्पशोअदधात्सूर्येण ॥ ८ ॥

चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुंभमानाः । न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥ ८ ॥

येवृत्रानुचराः पृथिव्याःभूमेःपरीणहमाच्छादनंसर्वतोव्याप्तिंचक्राणासःकुर्वाणाःहिरण्येनहिरण्ययुक्तेनमणिनाकण्ठबाह्वादिगतेनमण्याद्याभरणेनशुंभमानाः शोभमानाः हिन्वानासः वर्धमानाःसन्तोवर्तन्ते तेतथाविधावृत्रानुचराइन्द्रंयुद्धायोद्यन्तंनतितिरुः जेतुंनसमर्थाआसन् तदानींसइन्द्रः स्पशोबाधकान्वृत्रानुचरान्सूर्येणादित्येनपर्यदधात्परिहितान्व्यवहितानकरोत्। तथाचब्राह्मणम्—आदित्योसेवोद्यन्पुरस्ताद्रक्षांस्यपहन्तीति ॥ चक्राणासः करोतेश्छन्दसिलिडिति वर्तमानेलिटःकानच् ततोसुक् चितइत्यन्तोदात्तत्वम् । परीणहं परिणहनंपरीणट् परिपूर्वोनह्यतेर्भावेक्विपिनहिवृतीत्यादिनापूर्वपदस्यदीर्घः । पृथिव्याः उदात्तयणइतिविभक्तेरुदात्तत्वम् । हिन्वानासः हिगतौवृद्धौच ताच्छीलिकश्चानश् । तितिरुः तिरतिर्गत्यर्थः ॥ ८ ॥

नवमीमृचमाह—

परियदिन्द्ररोदसीउभेअबुभोजीर्महिनाविश्वतःसीम् ।
अमन्यमानाँअभिमन्यमानैर्निर्ब्रह्मभिरधमोदस्युमिन्द्र ॥ ९ ॥

१ तै० सं. २. ६. ६. ।

परि॑ । यत् । इ॒न्द्र॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । अबु॑भोजीः । म॒हि॒ना ।
वि॒श्वतः॑ । सी॒म् । अम॑न्यमानान् । अ॒भि । मन्य॑मानैः । निः ।
ब्र॒ह्मऽभिः॑ । अ॒धमः॒ । दस्यु॑म् । इ॒न्द्र॒ ॥ ९ ॥

हेइन्द्र यद्यदारोदसीउभेद्युलोकावुभौमहिनात्वदीयेनमहिम्नाविश्वतःसीं सर्वतःपरिगृह्यपर्यबुभोजीः परितोभुक्तवानसि तदानीं त्वं अमन्यमानान्मन्त्रार्थमनुध्यातुंअशक्तानपिकेवलपाठकान्यजमानान् अभिमन्यमानैः अस्मदीयाएतेयजमानाःरक्षणीयाइत्यभिमानंकुर्वद्भिर्ब्रह्मभिर्मन्त्रैर्दस्युंचोरंवृत्रादिरूपमसुरंनिरधमः निःसारितवानसि धमतिर्गतिकर्मेतियास्कः ॥ अबुभोजीः भुजपालनाभ्यवहारयोः लुङि सिपि बहुलंछन्दसीतिविकरणस्यश्लुः बहुलंछन्दसीतीडागमः अडुदात्तः यद्वृत्तयोगादनिघातः ।महिना महिम्ना महच्छब्दात्पृथ्वादिलक्षणोभावेइमनिच् टेरितिटिलोपः तृतीयेकवचने अल्लोपेसति उदात्तनिवृत्तिस्वरेणउदात्तत्वं मलोपश्छान्दसः । अमन्यमानान् मन्यन्तेजानन्तीतिमन्यमानाः मनज्ञाने दिवादिभ्यःश्यन् श्यनोनित्त्वादाद्युदात्तत्वम् समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् संहितायांरुत्वानुनासिकावुक्तौ ॥ ९ ॥

दशमीमृचमाह—

नयेदि॒वःपृ॑थि॒व्याअन्त॑मा॒पुर्नमा॒याभि॑र्ध॒नदां॒पर्यभू॑वन् ।
यु॒जंवज्रं॑वृष॒भश्च॑क्र॒इन्द्रो॒निर्ज्योति॑षा॒तम॑सो॒गाअ॑दुक्षत् ॥ १० ॥ २ ॥

न । ये । दि॒वः । पृ॒थि॒व्याः । अन्त॑म् । आ॒पुः । न । मा॒याभिः॑ ।
ध॒न॒ऽदाम् । प॒रि॒ऽअभू॑वन् । यु॒जम् । वज्र॑म् । वृ॒ष॒भः । च॒क्रे ।
इन्द्रः॑ । निः । ज्योति॑षा । तम॑सः । गाः । अ॒धु॒क्ष॒त् ॥ १० ॥ २ ॥

येजलविशेषादिवोद्युलोकात्पृथिव्याअन्तंभूमेःस्थानंनापुःनप्राप्ताः मेघरूपमापन्नेनवृत्रेणनिरुद्धत्वात् अतएवभूमिप्राप्त्यभावात् धनदांधनप्रदांभूमिंमायाभिःसस्योपकारादिभिः कर्मभिः नपर्यभूवन्परितोनव्याप्ताः जलपानसस्याभिवृद्ध्याद्युपकारंनचक्रुरित्यर्थः तदानीमयमिन्द्रोमेघभेदनायवज्रंयुजंस्वहस्तयुक्तंचक्रेततोज्योतिषाद्योतमानेनवज्रेणतमसःअन्धकाररूपान्मेघात् गाः गमनशीलान्युदकानिनिरधुक्षत् निःशेषेणदुग्धवान् मेघंभित्त्वाजलंवृष्टवानित्यर्थः॥दिवः ऊडिदमितिपञ्चम्याउदात्तत्वम् । आपुः आप्लृव्याप्तौ लिटयुसिरूपम् यद्वृत्तयोगादनिघातः । पर्यभूवन् अत्रापि

१ नि० ६. २.

यच्छब्दस्यानुपक्षात् निघाताभावः। युजं युजिर्योगे ऋत्विगित्यादिनाक्विन् अनित्यमागमशासनमितिवचनान्नुमभावः। अधुक्षत दुहप्रपूरणे लुङिशलइगुपधादनिटःक्सइतिच्लेःक्सादेशः दादेर्धातोर्घइतिघत्वम् एकाचोबशइत्यादिनाभष्भावः संहितायांभष्भावाभावश्छान्दसः ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेद्वितीयोवर्गः ॥ २ ॥

एकादशीमृचमाह—

अनु॒स्व॒धाम॑क्षर॒न्नापो॑अ॒स्यावर्ध॑त॒मध्य॒आना॒व्या॑नाम्।
स॒ध्री॒ची॒नेन॒मन॑सा॒तमिन्द्र॒ओजि॑ष्ठेन॒हन्म॑नाह॒न्न॒भिद्यून् ॥११॥

अनु॑। स्व॒धाम्। अ॒क्ष॒र॒न्। आपः॑। अ॒स्य॒। अव॑र्धत। मध्ये॑।
आ। ना॒व्या॑नाम्। स॒ध्री॒ची॒नेन॑। मन॑सा। तम्। इन्द्रः॑। ओजि॑ष्ठेन।
हन्म॑ना। अ॒ह॒न्। अ॒भि। द्यून् ॥ ११ ॥

आपोजलानिअस्येन्द्रस्यस्वधामन्नंनीसादिरूपंअनुलक्ष्याक्षरन्नेवाप्नृष्टाअभवन् तदानीमयंवृत्रोनाव्यानांनावातरणयोग्यानांबह्वीनांअपांमध्येआसमन्तात् अवर्धतवृद्धिंमाप्तः प्रभूतजलेवर्तमानोपिनममार किन्त्वभिवृद्धएव तदानीमिन्द्रःसध्रीचीनेनसहगच्छतामनसायुक्तंतंवृत्रंओजिष्ठेनअतिबलयुक्तेनहन्मनाहननसाधनेनवज्रेणअभिद्यून्कतिचिद्दिवसानभिलक्ष्यअहन् तेपुदिवसेपुहतवान्जलमध्यपतितस्यापिवृत्रस्यमनोयत्रेन्द्रस्तिष्ठतितत्रैवसहगच्छति तादृशमभिज्ञायहतवानित्यर्थः॥ अक्षरन् क्षरसञ्चलने। नाव्यानां नावातार्याणाम् नौवयोधर्मेत्यादिनायत् वान्तोयिप्रत्ययेइत्यावादेशः अनावइतिपर्युदासात् तित्स्वरितमितिप्रत्ययस्यस्वरितत्वम्। सध्रीचीनेन सह अञ्चतीतिसध्र्यङ् सहस्यसध्रिरितिसध्र्यादेशः विभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखप्रत्ययः तस्यआयन्नित्यादिनाईनादेशः अचइत्यकारलोपेचाविति दीर्घत्वम् खादेशस्योपदेशिवद्वचनादीकारउदात्तः। ओजिष्ठेन ओजोस्यास्तीतिओजस्वी अस्मायामेधेतिविनिः ततआतिशायनिकइष्ठन् विन्मतोर्लुगितिविनोलुक्टेरितिटिलोपःनित्वादाद्युदात्तत्वम्। हन्मना हन्यतेअनेनेतिहन्म अन्येभ्योपिदृश्यन्तइतिदृशिग्रहणात् करणेपिमनिन् नित्वादाद्युदात्तत्वम् तृतीयैकवचनेअल्लोपेमाप्तेनसंयोगाद्वमन्तादितिप्रतिषेधः ॥ ११ ॥

द्वादशीमृचमाह—

न्यांविध्यदिलीविशस्यदृह्लाविशृङ्गिणंमभिनच्छुष्णमिन्द्रः ।
यावत्तरोमघवन्यावदोजोवज्रेणशत्रुमवधीःपृतन्युम् ॥ १२ ॥

नि । अविध्यत् । इलीविशस्य । दृह्ला । वि । शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः । यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥१२॥

इलीविशस्यइलायाभूमेर्बिलेशयानस्यवृत्रस्यसम्बन्धिनी इलीबिलशयस्येतियास्कः । दृह्लादृंहितानिअसुरेणनिरुद्धानिमभूतान्युदकानिइन्द्रोन्यविध्यत्नितरांविद्धवान् यद्वा दृह्लानिमबलानिसैन्यानि नितरांविद्धवान् ततऊर्ध्वंशृङ्गिणंगोमहिषादिशृंगसमानैरायुधैरुपेतंशुष्णंजगतः शोषकंवृत्रंव्यभिनत्विविधंताडितवान् हेमघवन् धनयुक्तेन्द्र तवयावत्तरः यावान्वेगोस्तियावदोजः यावद्बलमस्तितेनसर्वेणयुक्तस्त्वंपृतन्युं पृतनांयुद्धंइच्छन्तंशत्रुंवृत्रंवज्रेणावधीः हतवानसि ॥ अविध्यत् व्यधताडने श्यनि ग्रहिज्येत्यादिनासम्प्रसारणम् तिङ्ङतिङइतिनिघाते उदात्तस्वरितयोर्यणइतिसंहितायां अडागमस्यस्वरितत्वम् । इलीविशस्य पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । दृह्ला दृंहेर्निष्ठायां दृढः स्थूलबलयोरितिनिपात्यते शेश्छन्दसिबहुलमितिशेर्लोपः । अभिनत् भिदिर्विदारणे लङि रुधादिभ्यःश्नम् इतश्चेतीकारलोपेहल्ङ्याब्भ्यइतितिलोपः । शुष्णं शुषशोषणे शोषयतीतिशुष्णः तृषिशुषिरसिभ्यःकिच्चेतिनप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम् । अवधीः लुङिचेतिहन्तेर्वधादेशः । पृतन्युम् पृतनाशब्दात् क्यचि कव्यध्वरपृतनस्येति अन्त्यलोपः क्याच्छन्दसीतिउप्रत्ययः ॥ १२ ॥

त्रयोदशीमृचमाह—

अभिसिध्मोअजिगादस्यशत्रून्वितिग्मेनवृषभेणापुरोभेत् ।
संवज्रेणासृजद्वृत्रमिन्द्रःप्रस्वांमतिमतिरच्छाशदानः ॥ १३ ॥

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

---

१ नि० ६. १९ ।

अस्येन्द्रस्यसिध्मः साधकोवज्रः शत्रूनभिइन्द्रवैरिणोभिलक्ष्य अजिगात् गतवान् जिगातिर्गतिकर्मा गातिजिगातीतिगतिकर्मसुपाठात् सचेन्द्रस्तिग्मेनतीक्ष्णेनवृषभेणश्रेष्ठेनायुधेनतेन वज्रेणपुरः वृत्रस्यपुराणिव्यभेत्विविधंभिन्नवान् ततःसइन्द्रोवज्रेणस्वकीयेनवृत्रंसमसृजत् संयोजितवान् संयोज्यचशाशदानः वृत्रंहिंसन् स्वांमर्तिस्वकीयां हर्षेपितांबुद्धिमातिरत्मकर्षेणवर्धितवान्॥ सिध्मः पिधुसंराद्धौ अस्मादौणादिकोमक् कित्त्वादगुणः प्रत्ययस्वरःशिष्यते । अजिगात् गास्तुतौ अत्रतुगत्यर्थः जुहोत्यादित्वाच्छ्लुः द्विर्भावेबहुलंछन्दसीत्यभ्यासस्येत्त्वम्। अभेत् भिदिर्विदारणे श्रमिमाथे व्यत्ययेनशप् तस्यबहुलंछन्दसीतिलुक् लघूपधगुणेहल्ङ्याब्भ्यइतितिलोपः यद्वा लुङि च्लेर्लुक् ।अतिरत् मपूर्वस्तिरतिर्वर्धनार्थः यद्वा तरतेर्व्यत्ययेनशः ऋतइद्धातोरितीत्वम्। शाशदानः शद्लृशातने अस्माद्यङन्ताच्शानच् तस्यछन्दस्युभयथेति आर्धधातुकत्वादतोलोपयलोपौ सार्वधातुकत्वादभ्यस्तानामादिरित्याद्युदात्तत्वम्॥ १३ ॥

चतुर्दशीमृचमाह—

**आवः कुत्समिन्द्रयस्मिञ्चाकन्प्रावोयुध्यन्तंवृषभंदशद्युम् ।**
**शफच्युतोरेणुर्नक्षतद्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ ॥ १४ ॥**

आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् वृषभम् । दशऽद्युम् ।। शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ।१४॥

हेइन्द्रकुत्संएतन्नामकंगोत्रप्रवर्तकमृषिं आवःरक्षितवानसि यस्मिन्कुत्सेचाकन्स्तुतिंकामयमानोवर्तसे तंकुत्समितिपूर्वत्रान्वयः तथादशद्युंएतन्नामकंदशसुदिक्षुदीप्यमानमृषिंप्रावः प्रकर्षेणरक्षितवानसि कीदृशं युध्यन्तंस्वकीयैःशत्रुभिःसहयुद्धंकुर्वन्तं वृषभंगुणैःश्रेष्ठंशफच्युतःत्वदीयाश्वस्यशफात्पतितोरेणुर्धूलिर्द्यांद्युलोकंनक्षतप्राप्नोति श्वैत्रेयः श्वित्राख्यायायोषितःपुत्रः पुराशत्रुभयाज्जलेमग्नः सन्त्वदनुग्रहात् नृसह्याय नृभिःपुरुषैःसोढव्याय उत्तस्थौजलादुत्थितवान् ॥ चाकन् चकतृप्तौ अस्माण्ण्यन्तान्शतृ छन्दस्युभयथेत्यार्धधातुकत्वाण्णिलोपः शत्रभावश्च प्रत्ययस्वरेणान्तोदात्तत्वम् यद्वा कमुकान्तावित्यस्मात् यङ्लुगन्ताल्लङि सिपि अभ्यासस्यनुगभावश्छान्दसः दीर्घोकितइतिदीर्घत्वम् सिलोपे मोनोधातोरितिमकारस्यनकारः धातुस्वरः यद्वृत्तयोगादनिघातः । युध्यन्तं व्यत्ययेनपरस्मैपदम् । दशद्युं दीव्यतेःप्रकाशार्थात् सम्पदादिल-

क्षणःक्विप् छ्योःशूडित्यूठ् दशसुदिक्षुद्युर्यस्यासौदशद्युः छान्दसंह्रस्वत्वम् यद्वा द्युशब्दोहर्नामसुपठितः तेनप्रवृत्तिनिमित्तभूतःप्रकाशोलक्ष्यते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । शफच्युतः शफेनच्युतः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । नक्षत णक्षगतौ व्यत्ययेनात्मनेपदम् । श्वैत्रेयः श्वित्रायाअपत्यं स्त्रीभ्योढक् । नृपह्याय शकिसहोश्चेतिकर्मणियत् यतोनावइत्याद्युदात्तत्वम् । समासेकृदुत्तरपदप्रकृतिस्वरत्वम् पूर्वपदादितिपत्वम् संहितायांदीर्घश्छान्दसः ॥ १४ ॥

पञ्चदशीमृचमाह—

आ वः॒ शर्म॑ वृष॒भं तुग्र्या॑सु क्षेत्रजे॒षे म॑घव॒ञ्छ्वित्र्यं॒ गाम् ।
ज्योक्चि॒दत्र॑ तस्थि॒वांसो॑ अक्रञ्छत्रूय॒ताम॑ध॒रा वेद॑नाकः ॥ १५ ॥ ३ ॥

आ । वः॒ । शर्म॑ । वृ॒ष॒भम् । तुग्र्या॑सु । क्षे॒त्र॒ऽजे॒षे । म॒घ॒ऽव॒न् ।
श्वि॒त्र्य॑म् । गाम् । ज्योक् । चि॒त् । अत्र॑ । त॒स्थि॒ऽवांसः॑ । अ॒क्र॒न् ।
श॒त्रु॒ऽय॒ताम् । अध॑रा । वेद॑ना । अ॒क॒रित्य॑कः ॥ १५ ॥ ३ ॥

हेमघवन् धनवन्निन्द्रश्वित्र्यंश्वित्रायाःपुत्रंपूर्वोक्तंपुरुषंआवः रक्षितवानसि किमर्थं क्षेत्रजेषे शत्रुभिःसहयुद्धवेलायांक्षेत्रमाप्त्यर्थं कीदृशं शर्म त्वदीयपरिपालनेनचित्तव्याकुलतांपरित्यज्य शान्तंवृषभंगुणैःश्रेष्ठं तुग्र्यासुगांजलेपुगतंमग्नमित्यर्थः तुग्र्यावर्बुरमितिउदकनामसुपठितत्वात् अत्र अस्माभिःसहयुद्धेज्योक्चित् चिरकालमपितस्थिवांसः अवस्थिताःसन्तः अक्रन् येवैरिणः शत्रुत्वमकुर्वन् शत्रूयतां शत्रूनात्मनइच्छतांतेपां अधरा वेदना निकृष्टानिदुःखानि त्वं अकःकुरु । तुग्र्यशब्दोन्तरिक्षवचनः तत्रभवास्तुग्र्याः तुग्राद्घन्निितिघन् घस्येयादेशः इकारलोपश्छान्दसः नित्त्वादाद्युदात्तत्वम् । क्षेत्रजेषे जेषृणेषृएषृप्रेषृगतौ अस्मात्सम्पदादिलक्षणःक्विप् क्षेत्रस्यजेट्क्षेत्रजेट् समासान्तोदात्तत्वम् अन्तोदात्तादुत्तरपदादित्यादिनाविभक्तेरुदात्तत्वम् । श्वित्र्यं श्वित्रायांभवः भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् । तस्थिवांसः तिष्ठतेःक्वसुः वस्वेकाजाद्घसामितीडागमः । अक्रन् करोतेर्लुङिमन्त्रेघसेत्यादिनाच्लेर्लुक् । शत्रूयतां शत्रूनात्मनइच्छन्तीतिशत्रूयन्तः सुपआत्मनःक्यजितिक्यचृवदन्ताच्छतृ तस्यलसार्वधातुकानुदात्तत्वे एकादेशस्वरेणोदात्तत्वम् तस्यचपूर्वत्रासिद्धत्वंनेष्यतइत्युक्तत्वाच्छत्रन्तमन्तोदात्तत्वमिति शतुरनुमोनद्यजादीइतिविभक्तेरुदात्तत्वम् । अधरावेदनेत्युभयत्रशेश्छन्दसिबहुलमितिशेर्लोपः । अकः करोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् गुणः ॥ १५ ॥

इतिप्रथमस्यतृतीयेतृतीयोवर्गः ॥ ३ ॥

त्रिश्चिन्नोअद्येतिचतुर्थंसूक्तंद्वादशर्चं ऋषिश्चान्यस्मादृषेरितिपरिभाषयाआङ्गिरसोहिरण्यस्तूपऋषिः अश्विनौदेवता ऋतीचक्रेतिनवमीआनोअश्विनेतिद्वादशीचत्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः त्रिश्चिद्द्वादशाश्विनंनवम्यन्त्येत्रिष्टुभावित्यनुक्रमणिका । प्रातरनुवाकेआश्विनेक्रतौजागतेछन्दसिइदंसूक्तम् अथाश्विनइतिखण्डेसूत्रितम्–त्रिश्चिन्नोअद्येळेद्यावापृथिवीइतिजागतमिति । आश्विनशस्त्रेप्येतत्सूक्तम् प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् ।

तत्रप्रथमामृचमाह–

त्रिश्चिन्नोअद्याभवतंनवेदसाविभुर्वांयामउतरातिरश्विना ।
युवोर्हियन्त्रंहिम्येववाससोभ्यायंसेन्याभवतंमनीषिभिः ॥ १ ॥

त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम् ।
यामः । उत । रातिः । अश्विना । युवोः । हि । यन्त्रम् । हिम्याऽइव ।
वाससः । अभिऽआयंसेन्या । भवतम् । मनीषिऽभिः ॥ १ ॥

हेनवेदसाश्विनामेधाविनावश्विदेवौ नवेदाइतिमेधाविनाम नवेदाःकविःमनीषीतितन्नामसुपठितत्वात् तादृशौयुवांत्रिश्चित्त्रिवारमपिअद्यास्मिन्कर्मणि नः अस्मदर्थंभवतंआगतौभवतम् अत्रत्रिरितिवचनंसवनत्रयापेक्षंआदरातिशयद्योतनार्थंवात्रिपत्याहिदेवाइतिश्रुत्यन्तरात् वांयुवयोःयामोगमनसाधनभूतोरथोविभुःव्याप्तःउतअपिचरातिः दानंविभुरितिशेषः युवोर्युवयोरुभयोर्यन्त्रंहि परस्परनियमनरूपःसम्बन्धविशेषोस्तिखलु तत्रदृष्टान्तः–वाससःसूर्यरश्म्याच्छादनयुक्तस्यवासरस्यहिम्येव हिमयुक्तयारात्र्येव यथारात्र्यासहदिवसस्यसम्बन्धःकदाचिदपिनापैतितद्वत् युवामुभौमनीषिभिः मेधाविभिःऋत्विग्भिः मनीषीतिमेधाविनाम मनीषीमनीषीतितन्नामसुपठितत्वात् अभ्यायंसेन्या अभितोनियन्तव्यौअनुग्रहवशात्तदधीनौभवतम् ॥ अद्य निपातस्यचेतिसंहितायांदीर्घः।नवेदसा विपरीतंनवित्तइतिनवेदसौ विदज्ञानेइत्यस्मादौणादिकोसुन् नञ्समासे नभ्राण्नपादित्यादिनानकारस्यप्रकृतिभावः सुपांसुलुगित्याकारः आमन्त्रितनिघातः । यामः यायतेगम्यतेनेनेतियामोरथः अर्तिस्तुस्वित्यादिनामन् नित्त्वादाद्युदात्तत्वम् यद्वा यमउपरमेइत्यस्मात्कर्मणिघञ् वृषादिषुपाठादाद्युदात्तत्वम् । रातिः रादानेइत्यस्मात् भावेक्तिन् मन्त्रेवृषेत्यादिनातस्योदात्तत्वम् । युवोः सुपांसुपोभवन्तीतिषष्ठीद्विवचनस्यषष्ठीद्विवचनादेशः अतश्चादेशविषयत्वाद्योचीतियत्वंनभवति योपेलोपइतिटिलोपेउदात्तनिवृत्तिस्वरेणविभक्ते-

रुदात्तत्वम् अन्त्यलोपपक्षेतुएकादेशस्वरेण । हिम्याइव हिमेतिरात्रिनाम ऊधःपयः हिमेतितन्नाम-सुपठितत्वात् ततउत्तरस्यतृतीयैकवचनस्यसुपांसुलुगितिडयादेशः ततष्टिलोपेउदात्तनिवृत्तिस्वरे-णतस्योदात्तत्वम् । वाससः वसआच्छादने वासयतिप्रकाशेनाच्छादयतीत्यहर्वासः । अभ्यायं-सेन्या अभ्याङित्युपसर्गद्वयोपसृष्टाद्यमउपरमेइत्यस्माद्धोणादिकःसेन्यप्रत्ययः सुपांसुलुगित्या-कारः ॥ १ ॥

द्वितीयामृचमाह—

त्रयःपवयोमधुवाहनेरथेसोमस्यवेनामनुविश्वइद्विदुः ।
त्रयःस्कंभासःस्कभितासआरभेत्रिर्नक्तंयाथस्त्रिर्वश्विनादिवा ॥२॥

त्रयः । पवयः । मधुऽवाहने । रथे । सोमस्य । वेनाम् । अनु । विश्वे । इत् । विदुः । त्रयः । स्कंभासः । स्कभितासः । आऽरभे । त्रिः । नक्तम् । याथः । त्रिः । ऊम् इति । अश्विना । दिवा ॥ २ ॥

मधुवाहनेमधुद्रव्याणांनानाविधखाद्यादीनांवाहनेनयुक्ते अश्विनोःसम्बन्धिरथेपवयः वज्रसमानाद्दृढाःचक्रविशेषास्त्रयःत्रिसंख्याकाःसन्ति इत् इत्थंचक्रत्रयसद्भावप्रकारंविश्वेसर्वेदेवाः सोमस्यचन्द्रस्यवेनांकमनीयांभार्यांअनुलक्ष्ययात्रायांविदुर्जानन्ति यदासोमस्यवेनयासहविवाहः तदानींनानाविधखाद्ययुक्तंचक्रत्रयोपेतंप्रौढंरथमारुह्याश्विनौगच्छतइतिसर्वेदेवाजानन्तीत्यर्थःत-स्यरथस्योपरिस्कंभासःस्तम्भविशेषास्त्रयः त्रिसंख्याकाः स्कभितासः स्थापिताः किमर्थमारभे-आरब्धुंअवलम्बितुं यदारथस्त्वरयायातितदानींपतनभीतिनिवृत्त्यर्थंहस्तालम्बनभूताःस्तम्भाइ-त्यर्थः हेअश्विना युवांतादृशेनरथेननक्तंरात्रौत्रिर्याथः त्रिवारंगच्छथः तदादिवादिवसेपित्रिर्याथः रात्रावहनिचरथमारुह्यपुनःपुनःक्रीडथइत्यर्थः ॥ मधुवाहने मधुवाह्यते अनेनेतिमधुवाहनः करणेल्युट् । विदुः वेत्तेर्लटिविदोलटोवेतिझेरुसादेशः । स्कम्भासः ष्टभिस्कभिगतिप्रतिबन्धेस्क-भ्नन्तेप्रतिबद्धाभवन्तीतिस्कम्भाः पचाद्यच् । स्कभितासः स्कम्भुःसौत्रोधातुः अस्मान्निष्ठायां यस्यविभाषेतीट्प्रतिषेधेप्राप्ते ग्रसितस्कभितेत्यादिनेडागमोनिपातितः । आरभे रभराभस्ये अ-स्मादाङ्पूर्वात्सम्पदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह—

समानेअहन्त्रिरवद्यगोहनात्रिरद्ययज्ञंमधुनामिमिक्षतम् ।
त्रिर्वाजवतीरिषोअश्विनायुवंदोषाअस्मभ्यमुषसश्चपिन्वतम् ॥ ३॥

समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् ।
मधुना । मिमिक्षतम् । त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् ।
दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ॥ ३ ॥

हेअश्विनाअश्विदेवौयुवंयुवामुभौसमानेअहन्नेकस्मिन्ननुष्ठानदिनेत्रिरवद्यगोहना त्रिवारमनुष्ठानगतानांदोषाणांसंवरणकारिणौभवतम् अद्यास्मिन्दिनेयज्ञंयज्ञगतंहविःमधुनामधुररसेनत्रिर्मिमिक्षतंत्रिवारंसिञ्चतम् किञ्च दोषाउपसश्चरात्रीर्दिवसांश्चरात्रिषुदिवसेषुचनैरन्तर्येणवाजवतीःबलकारिणीरिषोन्नानिअस्मभ्यंपिन्वतंसिञ्चतंमयच्छतमित्यर्थः॥ अहन् सुपांसुलुगितिसप्तम्यालुक्।अवद्यगोहना गुहूसंवरणे अवद्यगूहयितारौ नन्द्यादित्वात् ल्युः ऊदुपधायागोहइतिप्राप्तस्यऊत्वस्याभावश्छान्दसः । मिमिक्षतं मिहसेचने सनिएकाचउपदेशेनुदात्तादितीट्प्रतिषेधः हलन्ताच्चेतिसनःकित्त्वाल्लघूपधगुणाभावः द्विर्भावहलादिशेषौ ढत्वकत्वषत्वानि । वाजवतीः उगितश्चेतिङीप् । पिन्वतं पिविमिविणिविसेचने इदित्वान्नुम् कर्तरिशप् ॥ ३ ॥

चतुर्थीमृचमाह—

त्रिर्वर्तिर्यातंत्रिरनुव्रतेजनेत्रिःसुप्राव्येत्रेधेवशिक्षतम् । त्रिर्नान्द्यंवहतमश्विनायुवंत्रिःपृक्षोअस्मेअक्षरेवपिन्वतम् ॥ ४॥

त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये ।
त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना ।
युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराःऽइव । पिन्वतम् ॥ ४॥

हेअश्विनायुवंत्रिर्वर्तिर्यातंअस्मदीयवर्तनसाधनंगृहंत्रिर्यातंत्रिवारंप्राप्नुतम् तथा अनुव्रतेअस्मदनुकूलव्यापारयुक्तेजनेत्रिर्यातंत्रिवारंतदनुग्रहायगच्छतम् त्रिःसुप्राव्येत्रिवारंसुष्टुप्रकर्षेणभवद्भ्यांरक्षणीयेप्रवर्तमानानस्मान्त्रेधेवत्रिभिरेवप्रकारैःशिक्षतंपुनःपुनरनुष्ठानमुपदेष्टव्यमित्यर्थः तथा नान्द्यंनन्दनीयंसन्तोषकरंफलंत्रिर्वहतंप्रापयतम् अस्मे अस्मासुपृक्षोन्नंत्रिःपिन्वतंत्रिवारंप्रयच्छतम् तत्रदृष्टान्तः—अक्षरेवअक्षराण्युदकानि अक्षरास्रोतः क्षुभिरितितन्नामसुपाठात् तानिपर्जन्योयथा प्रयच्छतितद्वत् ॥ वर्तिः वर्ततेत्रेतिवर्तिर्गृहम् हृपिषिरुहिवृतीत्यादिनाइप्रत्ययः सुपांसुलुगितिद्वितीयैकवचनस्यसुआदेशः।सुप्राव्ये उपसर्गद्वयोपसृष्टाद्ववतेःकर्मणिण्यत् संज्ञापूर्वकोविधिरनित्यइतिवृद्ध्यभावः तित्स्वरितमितिस्वरितत्वम् । शिक्षतं शिक्षविद्योपादाने । नान्द्यं ण्पदन्तः । पृक्षः

पृचीसम्पर्के असुनिसुडागमः । अस्मे सुपांसुलुगितिशेआदेशः । अक्षराइव अश्नुवंतेव्यामुवन्तीत्यक्षराणिउदकानि औणादिकः क्सरःप्रत्ययः शेर्लोपः ॥ ४ ॥

पञ्चमीमृचमाह—

त्रिर्नोर॒यिंवंहतमश्विनायु॒वंत्रिर्दे॒वता॑तात्रिरु॒ताव॑तंधियः॑ । त्रिःसौ॑भ
ग॒त्वंत्रिरु॒तःश्रवां॑सिनस्त्रि॒ष्ठंवां॒सूरे॑दुहि॒तारु॑ह॒द्रथ॑म् ॥ ५ ॥

त्रिः । नः॒ । र॒यिम् । व॒ह॒त॒म् । अ॒श्वि॒ना॒ । यु॒वम् । त्रिः । दे॒वऽता॑ता ।
त्रिः । उ॒त । अ॒व॒त॒म् । धियः॑ । त्रिः । सौ॒भ॒ग॒ऽत्वम् । त्रिः । उ॒त ।
श्रवां॑सि । नः॒ । त्रि॒ऽस्थम् । वा॒म् । सूरे॑ । दु॒हि॒ता । आ । रु॒ह॒त् । रथ॑म् ॥ ५ ॥

हेअश्विना युवंयुवांनोस्मान् रयिंधनंत्रिर्वहतंत्रिवारंप्रापयतंदेवतातौ दैवेयुक्तिकर्मणित्रिः त्रिवारमागच्छतमितिशेषः उतअपिचधियोस्मद्बुद्धीःत्रिःत्रिवाररक्षतंसौभगत्वम् सौभाग्यंत्रिर्वहतमितिशेषः उतअपिच श्रवांस्यन्नानिनःअस्मभ्यंत्रिर्वहतम् वांयुवयोःसम्बन्धिनंत्रिष्ठंचक्रत्रयेवस्थितंरथंसूरेःसूर्यस्यदुहितापुत्री दुहितादुर्हितादूरेहितेतियास्कः । साआरूढवती ॥ देवताता सर्वदेवात्तातिलितिस्वार्थिकस्तातिल्प्रत्ययः तेनदेवतातिशब्देनदेवसम्बद्धोयज्ञोलक्ष्यते देवताना मखइतितन्नामसुपठितत्वात् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् सुपांसुलुगितिसप्तम्याडादेशः । त्रिष्ठं त्रिपुचक्रेपुनिष्ठतीतित्रिष्ठः सुपिस्थइतिकः अम्बाम्बेत्यादिनासकारस्यपत्वम् । सूरे पूप्रेरणे सुसूधागृधिभ्यःक्रन् इतिक्रन नित्वादाद्युदात्तः विभक्तिव्यत्ययः। रुहत् कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः ॥ ५ ॥

षष्ठीमृचमाह—

त्रिर्नो॑अश्विनादि॒व्यानि॑भेष॒जात्रिःपार्थि॑वानि॒त्रिरु॑दत्तम॒द्भ्यः ।
ओ॒मानं॑शं॒योर्मम॑कायसू॒नवे॑त्रि॒धातु॒शर्म॑वहतंशुभस्पती ॥ ६ ॥ ४ ॥

त्रिः । नः॒ । अ॒श्वि॒ना॒ । दि॒व्यानि॑ । भे॒ष॒जा । त्रिः । पार्थि॑वानि ।
त्रिः । ऊँ॒म् इति॑ । द॒त्त॒म् । अ॒त्ऽभ्यः । ओ॒मान॑म् । श॒म्ऽयोः ।
मम॑काय । सू॒नवे॑ । त्रि॒ऽधातु॑ । शर्म॑ । व॒ह॒त॒म् । शु॒भः॒ । प॒ती॒ इति॑ ॥ ६ ॥ ४ ॥

१ नि० ६. १२.।

हे अश्विना नः अस्मभ्यं दिव्यानिद्युलोकवर्तीनि भेषजाऔषधानि त्रिर्दत्तं तथापार्थिवानिपृथिव्यामुत्पन्नानिऔषधानित्रिर्दत्तंअद्भ्यउ अन्तरिक्षसकाशादपिऔषधानित्रिर्दत्तंआपइत्यन्तरिक्षनाम आपःपृथिवीभूरितितन्नामसुपाठात् शंयोरेतन्नामकस्यबृहस्पतिपुत्रस्य तेशंयुं बार्हस्पत्यमंवृधन्नितिब्राह्मणान्तरात् तस्यसम्बन्धिनमोमानंसुखविशेषंममकाय सूनवेमदीयायपुत्रायदत्तं हे शुभस्पतीशोभनस्यौषधजातस्यपालकौयुवांत्रिधातु वातपित्तश्लेष्मधातुत्रयशमनविषयंसुखंवहतंमापयतम् ॥ दिव्यानि दण्डादित्वाद्यत्प्रत्ययः । अद्भ्यः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । ओमानं अवतेरन्येभ्योपिदृश्यन्तइतिमनिन् ज्वरत्वरेत्यादिना अकारवकारयोरूठ् सार्वधातुकार्धधातुकलक्षणोगुणः यदिज्वरत्वरेत्यत्रानुनासिकेचेतिनानुवर्तेत तर्हिपूर्वेणैव सूत्रेणवकारस्यऊठादेशोभविष्यति । शुभस्पती शुभदीप्तौ सम्पदादिलक्षणःक्विप् षष्ठ्याःपतिपुत्रेतिसंहितायांविसर्जनीयस्यसत्वम् सुबामन्त्रितेइतिपराङ्गवद्भावात्षष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् ॥ ६ ॥

इतिप्रथमस्यतृतीयेचतुर्थोवर्गः ॥ ४ ॥

सप्तमीमृचमाह—

त्रिर्नोअश्विनायजतादिवेदिवेपरित्रिधातुपृथिवीमशायतम् ।
तिस्रोनासत्यारथ्यापरावतआत्मेववातःस्वसराणिगच्छतम् ॥ ७ ॥

त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि । त्रिऽधातु ।
पृथिवीम् । अशायतम् । तिस्रः । नासत्या । रथ्या । पराऽवतः ।
आत्माऽइव । वातः । स्वसराणि । गच्छतम् ॥ ७ ॥

हेअश्विनादिवेदिवे प्रतिदिनं दिवेदिवेयविद्यवीत्यहर्नामसुपठितत्वात् यजतायष्टव्यौयुवांनोस्मदीयांपृथिवींवेदिरूपांभूमिं परि सर्वतःप्राप्य त्रिधातुकस्यात्रयपयुक्तेआस्तीर्णेबर्हिषिअशायतंशयनंकुरुतम् हेरथ्यारथ्यौरथस्वामिनौ तिस्रस्त्रिसंख्याकाऐष्टिकपाशुकसौमिकरूपावेदीर्गच्छतम् तत्रदृष्टान्तः—स्वसराणिशरीराणिआत्मेववातः यथाप्राणिनामात्मभूतःप्राणवायुः तदीयानिशरीराणिगच्छतितद्वत् ॥ यजता यजतेर्भृमृदृशीत्यादिनाअतच् चितइत्यन्तोदात्तत्वम् । त्रिधातु त्रेधाधीयतेनिधीयतइतित्रिधातु सितनिगमीत्यादिनाधाञस्तुन् नित्त्वादाद्युदात्तत्वम् समासेकृदुत्तरपदप्रकृतिस्वरत्वेनतदेवशिष्यते सुपांसुलुगितिसप्तम्याः लुक् । अशायतम् अदादित्वाच्छपोलुक् अशायातामित्यस्यहस्वदीर्घयोर्व्यत्यासः । नासत्या सत्युसाधूस-

त्यौनसत्यौअसत्यौ नअसत्यौ सत्यावेवनासत्यावित्यौर्णवाभइतियास्कः । नभ्राणनपादित्यादिनानञःप्रकृतिभावः।रथ्या रथाहौस्वामिनावित्यर्थः छन्दसिचेतियप्रत्ययः। स्वसराणि सरन्तिगच्छन्तीतिसराइन्द्रियाणि स्वकीयाःसरायेषांशरीराणाम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह–

त्रिर॑श्विना॒सिन्धु॑भिः॒सप्तमा॑तृभि॒स्त्रय॑आहा॒वास्त्रे॒धाह॒विष्कृ॒तम् ।
ति॒स्रःपृ॑थि॒वीरु॒परि॑प्र॒वा॒दि॒वोनाकं॑रक्षेथे॒द्युभि॑र॒क्तुभि॒र्हि॑तम् ॥ ८ ॥

त्रिः । अ॒श्वि॒ना॒ । सिन्धु॑ऽभिः । स॒प्तमा॑तृऽभिः ।त्रयः॑ । आ॒ऽहा॒वाः ।
त्रे॒धा । ह॒विः । कृ॒तम् । ति॒स्रः । पृ॒थि॒वीः । उ॒परि॑ । प्र॒वा । दि॒वः ।
नाक॑म् । र॒क्षे॒थे॒ इति॑ । द्युऽभिः॑ । अ॒क्तुऽभिः॑ । हि॒तम् ॥ ८ ॥

हेअश्विना सप्तमातृभिःइमंमेगङ्ग इत्यादिमन्त्रोक्ताःसप्तसंख्याकाःगङ्गाद्यानद्योमातरःउत्पादिकायेषांजलविशेषाणांतेसप्तमातरःतैःसिन्धुभिःस्यन्दनस्वभावैःजलैः वसतीवरीनामभिः त्रिःसोमाभिषवःकृतइतिशेषः तथाचान्यत्रब्राह्मणेसमाम्नातम्–अष्टौकृत्वोभिषुणोतिएकादशकृत्वोद्वितीयंद्वादशकृत्वस्तृतीयमिति।आहावाः यथोक्तजलयुक्तस्यसोमस्याधारभूताःकृपसदृशास्त्रयःत्रिसंख्याकाद्रोणकलशाधवनीयपूतभृदाख्यानिष्पन्नाइतिशेषः तेषुत्रिषुपात्रविशेषेषुत्रेधात्रिभिःप्रकारैःसवनत्रयगतैः हविष्कृतंसोमाख्यंहविःसम्पादितंद्रव्यंवर्ततइतिशेषः तिस्रःपृथिवीरुपरित्रिस्थःपृथिव्यादिलोकेस्थऊर्ध्वंप्रवामवन्तौगच्छन्तौयुवां दिवोनाकंद्युलोकसम्बन्धिनमादित्यंरक्षेथे कीदृशंनाकंद्युभिरहोभिरक्तुभिरात्रिभिश्चहितंस्थापितंअहनिसूर्यउदेतिरात्रावस्तंगच्छति इत्येवमहोरात्राभ्यांसूर्योव्यवस्थापितइत्यर्थः ॥ सप्तमातृभिः बहुव्रीहिस्वरः । आहावाः निपानमाहावइतिआङ्पूर्वाद्ह्वयतेरप्रत्ययः सम्प्रसारणंवृद्धिश्चनिपातनात् थाथादिनोत्तरपदान्तोदात्तत्वम् । प्रवा प्लुङ्प्लुङ्गतौ प्रवेतेगच्छतइतिप्रवौ पचाद्यच् सुपांसुलुगित्याकारः। नाकं नास्मिन्नकमस्तीतिनाकः नभ्राणनपान्नित्यादिनानञःप्रकृतिभावः । द्युभिः ऊडिदमित्यादिनाप्राप्तस्य विभक्त्युदात्तस्यदिवोझल्इतिप्रतिषेधः ॥ ८ ॥

नवमीमृचमाह–

क्व॑[1]त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य॒ क्व॑[1]त्रयो॑ व॒न्धुरो॒ ये सनी॑ळाः ।
क॒दा योगो॑ वा॒जिनो॒ रास॑भस्य॒ येन॑ य॒ज्ञं ना॑सत्योप॒याथः॑ ॥ ९ ॥

१ नि० ६.१३. । २ तै० सं० ६.४.५. ।

क्वं । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्वं । त्रयः । वन्धुरः । ये । सऽनीळाः । कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञम् । नासत्या । उपऽयाथः ॥ ९ ॥

हेनासत्यावश्विनौ त्रिवृतः त्रिसंख्याकैरश्रिभिरुपेतस्यभवदीयस्यरथस्यईषाद्वयं पूर्वभागेसंयुज्यतेसेयमेकाश्रिः पृष्ठभागेवियुज्यतेतत्रकोणद्वयंसम्पद्यते ईदृशस्यरथस्यसम्बन्धीनि त्रीचक्रा त्रीणिचक्राणि क्व कुत्रस्थितानिइत्यस्माभिर्नदृश्यन्ते येकाष्ठविशेषाः सनीळाः नीडंगृहसदृशंरथस्योपर्युपवेशनस्थानं तेनसहवर्तन्तइतिसनीळाः तेकाष्ठविशेषाः वन्धुरः नीडबन्धनाधार भूतास्त्रयः अक्षेणसहितेद्वेईषेत्येवंत्रिसंख्याकाः क्वकुत्रस्थिताइत्यस्माभिर्नज्ञायन्ते वाजिनोबलवतोरासभस्यभवदीयाश्वस्थानीयस्यगर्दभस्ययोगोरथेयोजनंकदाकस्मिन्कालेनिष्पन्नमित्यस्माभिर्नदृश्यते येनचक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेनरथेनयज्ञमस्मदीयंयागस्थानंउपयाथः युवांप्राप्नुथः तादृशस्यरथस्येतिपूर्वत्रान्वयः ॥ त्रीचक्रा उभयत्रापिशेश्छन्दसिबहुलमिति शेर्लोपः । वन्धुरः वन्धेरौणादिकउरप्रत्ययः वत्वंछान्दसम् । सनीळाः वोपसर्जनस्येतिसभावः ॥ ९ ॥

दशमीमृचमाह—

आनासत्यागच्छतंहूयतेहविर्मध्वःपिबतंमधुपेभिरासभिः । युवोर्हिपूर्वंसवितोपसोरथमृतायचित्रंघृतवन्तमिष्यति ॥१०॥

आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । युवोः । हि । पूर्वम् । सविता । उषसः । रथम् । ऋताय । चित्रम् । घृतऽवन्तम् । इष्यति ॥ १० ॥

हे नासत्यौ अश्विनौ इहकर्मण्यागच्छतम् अत्रास्माभिर्हविर्हूयते युवांचमधुपेभिः मधुरद्रव्यपानयुक्तैरासभिः भवदीयैरास्यैः मध्वोमधुरद्रव्याणिहवींषिपिबतं सवितासूर्यउषसःपूर्वं उषःकालात्पुरापूर्वयोरश्विनोःसम्बन्धिनंरथंऋतायास्मद्यज्ञार्थमिष्यतिहिप्रेरयतिखलु कीदृशं चित्रं पूर्वोक्तैश्चक्रत्रयादिभिः विचित्रं घृतवन्तं अक्षाञ्जनसाधनेनघृतेनोपेतम् ॥ गच्छतम् अनुदात्तोपदेशादिनानुनासिकलोपः … धातुस्वरः … अत्रगच्छतंपिबतंचेतिचार्थप्रदेशात्…सार्वधातुकानुदात्तत्वेशपःपित्वादनुदात्तत्वम्

तीतेश्चादिलोपेविभाषेतिमथमायास्तिङ्विभक्तेर्निघातमतिषेधः। हूयते लसार्वधातुकस्वरानुदात्तत्वे यकःस्वरः। मध्वः लिङ्गव्यत्ययः शसियणादेशश्छान्दसः। मधुपेभिः मधुपिबन्तीतिमधुपानि आतोनुपसर्गेकइतिकमत्ययः। आसभिः पद्दन्नित्यादिनाआस्यशब्दस्यासन्नादेशः। युवोः युवोर्हियच्चमित्यत्रोक्तम्। इष्यति इषगतौ श्यनोनित्त्वादाद्युदात्तत्वम् हिचेतिनिघातमतिषेधः॥१०॥

एकादशीमृचमाह—

आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यातंमधुपेयमश्विना।
मायुस्तारिष्टंनीरपांसिमृक्षतंसेधतंद्वेषोभवतंसचाभुवा॥ ११॥

आ। नासत्या। त्रिऽभिः। एकादशैः। इह। देवेभिः। यातम्। मधुऽपेयम्। अश्विना। प्र। आयुः। तारिष्टम्। निः। रपांसि। मृक्षतम्। सेधतम्। द्वेषः। भवतम्। सचाऽभुवा॥ ११॥

हेनासत्या असत्येनानृतेनरहितौअश्विनाअश्विदेवौयुवांत्रिभिरेकादशैः येदेवासोदिव्येकादशस्थेत्यादिमन्त्रमतिपादितैस्त्रिसंख्याकैः एकादशात्मकवर्गत्रयगतैर्देवैःसहमधुपेयंसोमात्मकमधुरद्रव्यपानमभिलक्ष्य इहास्मिन्देवयजनदेशेआयातमागच्छतम् आयुरस्मदीयमायुष्यंमतारिष्टंमवर्धयतं रपांस्यस्मदीयानिपापानिनिर्मृक्षतंनिःशेषेणशोधयतं द्वेषःद्वेषकर्तॄन् सेधतंमतिषेधतं सचाभुवा अस्माभिःसहावस्थितौभवतम्॥ त्रिभिः षट्त्रिचतुर्भ्यइतिविभक्तेरुदात्तत्वम्। एकादशैः एकादशानांपूरणैः तस्यपूरणइतिडट्। मधुपेयं पापाने अचोयदितिकर्मणियत् ईद्यतीत्याकारस्यईकारादेशः यतोनावइत्याद्युदात्तत्वम् मधुचतत्पेयमितिसमासेकृदुत्तरपदप्रकृतिस्वरत्वम्। तारिष्टम् तॄप्लवनतरणयोः छान्दसेमार्थनायांलुङिच्लेःसिच् इडागमः वृतोवेतिमाप्तस्येटोदीर्घस्य सिचिचपरस्मैपदेष्वितिमतिषेधः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः अत्रतारिष्टंमृक्षतंचेतिचशब्दार्थमतीतेस्तस्यचाप्रयोगाच्चादिलोपेविभाषेतिनिघातमतिषेधः आदिःसिचोन्यतरस्यामित्याद्युदात्तत्वम्। मृक्षतम् मृशआमर्शने छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् शलइगुपधादनिटःक्सइति क्सादेशः एकाचउपदेशेनुदात्तादितीट्प्रतिषेधः षत्वकुत्वे पूर्ववदडभावः। सेधतम् षिधुगत्याम् अत्रकेवलोपिषिधिः मतिपूर्वस्यार्थेवर्तते मार्थनायांलोट् शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणधातुस्वरः पादादित्वान्निङःपरत्वाद्वानिघाताभावः। द्वेषः अन्येभ्योपिदृश्यन्तेइतिकर्मणिविच् भवतंद्वेषइत्यस्यवाक्यान्तरगतत्वात्तदपेक्षयास्यनिघातोनभवति समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइतिवचनात्। सचाभुवा सचेत्ययंनिपातःसहशब्दसमानार्थः तथाच

यास्कः—सचासहेत्यर्थइति । सचाभवतइतिसचाभुवौ क्विप् ओःसुपीतियणादेशस्यनभूसुधियो-रितिप्रतिषेधः सुपांसुलुगितिविभक्तेराकारः ॥ ११ ॥

द्वादशीमृचमाह—

आनोअश्विनात्रिवृतारथेनार्वाञ्चंरयिंवहतंसुवीरम् ।
शृण्वन्तावामवसेजोहवीमिवृधेचनोभवतंवाजसातौ ॥ १२ ॥५॥

आ । नः । अश्विना । त्रिऽवृता । रथेन । अर्वाञ्चम् । रयिम् ।
वहतम् । सुऽवीरम् । शृण्वन्ता । वाम् । अवसे । जोहवीमि ।
वृधे । च । नः । भवतम् । वाजऽसातौ । १२ ॥ ५ ॥

हेअश्विना त्रिवृतारथेनअप्रतिहतगतित्वात्त्रिषुलोकेषुवर्तमानेनरथेनसह नोस्माकंअर्वाञ्चं अभिमुखंसुवीरंशोभनैर्वीरैःपुत्रभृत्यादिभिरुपेतंरयिंधनंआवहतंआनीयप्रापयतम् शृण्वन्ता अस्मदीयस्तुतिंशृण्वन्तौयुवांअवसेअस्मद्रक्षणार्थंजोहवीमिआह्वयामि नोस्माकंवाजसातौसंग्रामेवाजसातौमहाधनइतिसंग्रामनामसुपाठात् वृधेवर्धनायभवतम्॥ सुवीरं शोभनावीरायस्येतिबहुव्रीहौवीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्। शृण्वन्ता श्रुश्रवणे शतरि श्रुवःश्रृचेतिश्नुःश्रृभावश्च हुश्नुवोःसार्वधातुकइतियणादेशः सुपांसुलुगितिआकारः । जोहवीमि ह्वेञ्स्पर्धायांशब्देच यङ्लुकि अभ्यस्तस्यचेतिकृतसम्प्रसारणादस्माल्लडुत्तमैकवचनेयङोवेतिईडागमः । वृधे वृधुवृद्धौ इत्यस्मात्सम्पदादिलक्षणोभावेक्विप् । वाजसातौ षणुदाने क्तिनि तितुत्रेत्यादिनाइट्प्रतिषेधः जनसनेत्यादिनाआत्वम् वाजानांसातिर्यस्मिन्निति पूर्वपदप्रकृतिस्वरत्वम्॥ १२ ॥

॥ इतिप्रथमस्यतृतीयेपञ्चमोवर्गः ॥ ५ ॥

ह्वयाम्यग्निमित्येकादशर्चंपञ्चमंसूक्तम् हिरण्यस्तूपऋषिः आद्यानवमीचजगतीछन्दस्केशिष्टास्त्रिष्टुभः कृत्स्नस्यसूक्तस्यसवितादेवता आद्यायाःह्वयाम्यग्निमित्यस्याअग्निमित्रावरुणरात्रिसवित्राख्यालिङ्गोक्तादेवताः तथाचानुक्रान्तम्—ह्वयाम्येकादशसावित्रं नवमीजगत्याद्यासालिङ्गोक्तदेवतपादाइति । अभिप्लवषडहस्यचतुर्थेहनिवैश्वदेवशस्त्रेइदंसूक्तंसावित्रंनिविद्धानं तृतीयस्यन्त्यर्थमेतिखण्डेसूत्रितम्—ह्वयाम्यग्निमस्यमेद्यावापृथिवीइतितिसृइति ।

१ नि० ५ ५.

तत्रप्रथमामृचमाह—

ह्वया॑म्य॒ग्निंप्र॑थ॒मंस्व॒स्तये॒ह्वया॑मिमि॒त्रावरु॑णावि॒हाव॑से ।
ह्वया॑मि॒रात्रीं॒जग॑तोनि॒वेश॑नीं॒ह्वया॑मिदे॒वंस॑वि॒तार॑मू॒तये॑ ॥ १ ॥

ह्वया॑मि । अ॒ग्निम् । प्र॒थ॒मम् । स्व॒स्तये॑ । ह्वया॑मि । मि॒त्रावरु॑णौ ।
इ॒ह । अव॑से । ह्वया॑मि । रात्री॑म् । जग॑तः । नि॒ऽवेश॑नीम् । ह्वया॑मि ।
दे॒वम् । स॒वि॒तार॑म् । ऊ॒तये॑ ॥ १ ॥

स्वस्तयेअस्माकंअविनाशाय स्वस्तीत्यविनाशिनामेतियास्कः[1] । प्रथममादौअग्निंह्वयामि-इहास्मिन्कर्मण्यवसेस्मद्रक्षणायमित्रावरुणौह्वयामि जगतोजङ्गमस्यप्राणिजातस्यनिवेशनींउप-वेशनहेतुभूतांरात्रींरात्रिदेवतांह्वयामि जङ्गमाःसर्वेप्राणिनोदिवसेस्वस्वव्यापारान्कृत्वास्वस्वगृहे रात्रावुपविशन्तीतिप्रसिद्धम् ऊतयेअस्मद्रक्षार्थं सवितारंदेवंह्वयामि ॥ मित्रावरुणौ देवताद्वन्द्वेचे-तिपूर्वपदस्यानङादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । रात्रीं रात्रेश्चाजसाविति ङीप् । नि-वेशनीं निविशन्त्यस्यामितिनिवेशनी करणाधिकरणयोश्चेतिल्युट् टिड्ढाणञित्यादिनाङीप् । ऊ-तये अवतेःक्तिनि ज्वरत्वरेत्यादिनावकारस्यउपधायाश्चऊठ् ऊतियूतीत्यादिनाक्तिनउदात्त-त्वम् ॥ १ ॥

द्वितीयामृचमाह—

आकृ॒ष्णेन॒रज॑सा॒वर्त॑मानोनिवे॒शय॑न्न॒मृतं॒मर्त्यं॑च ।
हि॒र॒ण्यये॑नसवि॒तार॒थे॒नादे॒वोया॑ति॒भुव॑नानि॒पश्य॑न् ॥ २ ॥

आ । कृ॒ष्णेन॑ । रज॑सा । वर्त॑मानः । नि॒ऽवे॒शय॑न् । अ॒मृत॑म् ।
मर्त्य॑म् । च॒ । हि॒र॒ण्यये॑न । स॒वि॒ता । रथे॑न । आ । दे॒वः । या॒ति॒ ।
भुव॑नानि । पश्य॑न् ॥ २ ॥

सवितासूर्यः कृष्णेनरजसाकृष्णवर्णेनलोकेन कृष्णंकृष्यतेर्निकृष्टोवर्णइतियास्कः[2] । लो-कारजांस्युच्यन्तइतिच अन्तरिक्षलोकोहिसूर्यागमनात्पुराकृष्णवर्णोभवति तेनान्तरिक्षमार्गे-

---

१ नि० ३.२१. । २ नि० २.२०. ।

णआवर्तमानःपुनःपुनरागच्छन्अमृतंदेवंमर्त्यंमनुष्यंचनिवेशयन्स्वस्वस्थानेवस्थापयन्यद्वा अमृतंमरणरहितंप्राणंमर्त्यंमरणसहितंशरीरंचनिवेशयन् तथाचारण्यकाण्डेअमर्त्योमर्त्येनासयोनिरित्येतस्यमन्त्रभागस्यव्याख्यानरूपेब्राह्मणेयथोक्तार्थोवगम्यते-मर्त्यानिहीमानिशरीराण्यमृतैषादेवतेति । यथोक्तगुणोपेतः सवितादेवोभुवनानिसर्वान्लोकान्पश्यन्अवेक्षमाणः प्रकाशयन्नित्यर्थः हिरण्ययेनसुवर्णनिर्मितेनरथेनआयातिअस्मत्समीपमागच्छति ॥ अमृतं मृतंमरणं नास्त्यस्येतिबहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । मर्त्यं मर्तभवं भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् । हिरण्ययेन ऋत्व्यवास्त्व्येत्यादिनामयटोमकारस्यलोपोनिपातितः यस्येतिलोपेप्रत्ययस्वरः । भुवनानि भूसत्तायां भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन्प्रत्ययः योरनादेशेउवङादेशः नित्वादाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

**यातिदे॒वःप्र॒वता॒यात्यु॒द्वता॒याति॑शु॒भ्राभ्यां॒यज॒तोहरि॑भ्याम् ।**
**आदे॒वोया॑तिसवि॒तापरा॒वतोप॒विश्वा॑दुरि॒ताबाध॑मानः ॥ ३॥**

याति॑ । दे॒वः । प्र॒ऽवता॑ । याति॑ । उ॒त्ऽवता॑ । याति॑ । शु॒भ्राभ्या॑म् ।
य॒ज॒तः । हरि॑ऽभ्याम् । आ । दे॒वः । या॒ति॒ । स॒वि॒ता । प॒रा॒ऽवतः॑ ।
अप॑ । विश्वा॑ । दुः॒ऽइ॒ता । बाध॑मानः ॥ ३ ॥

देवोदीप्यमानः सविताप्रवताप्रवणवतामार्गेणयातिगच्छति तथाउद्वताउत्कृष्टेनऊर्ध्वदेशयुक्तेनमार्गेणयाति उदयानन्तरंआमध्याह्नंऊर्ध्वोमार्गः ततउपरिआसायं प्रवणोमार्गइतिविवेकः तथा यजतोयष्टव्यःसदेवः शुभ्राभ्यांश्वेताभ्यांहरिभ्यामश्वाभ्यांयातिदेवयजनदेशेगच्छति सवितादेवोविश्वादुरितासर्वाणिपापान्यपबाधमानोविनाशयन्परावतःदूरदेशात्परावतइतिदूरनामसुपठितत्वात् तादृशात् द्युलोकात्आयातियागदेशेआगच्छति ॥ प्रवता वनषणसम्भक्तौ अस्मात्पूर्वात्क्विप् गमादीनामितिवक्तव्यमित्यनुनासिकलोपः ततस्तुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । उद्वता उत्पूर्वाद्वनतेः पूर्ववत्प्रक्रिया । यजतः भृमृदृशीत्यादिनायजेःकर्मण्यतच्प्रत्ययः । विश्वा दुरिता उभयत्रशेश्छन्दसिबहुलमितिशेर्लोपः ॥ ३ ॥

चतुर्थीमृचमाह—

**अ॒भीवृ॑तं॒कृश॑नैर्वि॒श्वरू॑पं॒हिर॑ण्यशम्यं॒यज॒तोबृ॒हन्त॑म् ।**
**आस्था॒द्रथं॑सवि॒ताचि॒त्रभा॑नुःकृ॒ष्णारजां॑सि॒तवि॑षीं॒दधा॑नः ॥ ४ ॥**

अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् । आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥ ४ ॥

सवितारथमास्थात् आस्थितवानारूढवानित्यर्थः कीदृशं अभीवृतंअभितोवर्तमानं तथाकृशनैर्विश्वरूपंसुवर्णेननानारूपं कृशनंलोहमितिसुवर्णनामसुपाठात् क्वचित्सुवर्णनिर्मितगजपंक्तिः क्वचिदश्वपंक्तिः क्वचिन्मनुष्यपङ्क्तिरित्येवंबहुरूपत्वं हिरण्यशम्यंअश्वानांस्कन्धेपुरथयोजनवेलायांनियन्तुंप्रक्षेप्यमाणाः शङ्कवःशम्याः ताःसुवर्णमय्योरथेवर्तन्तेबृहन्तंमौढम् कीदृशः सविता यजतःयष्टव्यःचित्रभानुः विविधरश्मियुक्तः कृष्णारजांसिअन्धकारयुक्ततयाकृष्णवर्णान्लोकानुद्दिश्यतमोनिवारणार्थंतविषींबलंस्वकीयंप्रकाशरूपंदधानः॥ अभीवृतं अभितोवर्ततइत्यभीवृत् वृतुवर्तने क्विप् नहिवृतीत्यादिनापूर्वपदस्यदीर्घत्वम् । विश्वरूपं विश्वानिरूपाणियस्यासौविश्वरूपः बहुव्रीहौविश्वंसंज्ञायामितिव्यत्ययेनासंज्ञायामपिपूर्वपदान्तोदात्तत्वम् । हिरण्यशम्यं हर्यगतिकान्त्योः हर्यतेःकन्यन्हिरचेतिकन्यन्प्रत्ययोधातोर्हिरादेशश्च नित्त्वादाद्युदात्तत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्।अस्थात् तिष्ठतेर्लुङि गातिस्थेतिसिचोलुक्। कृष्णा कृषेर्वर्णेइतिनक्प्रत्ययः शेश्छन्दसिबहुलमितिशेर्लोपः। तविषीं तविःसौत्रोधातुः तवतेर्णिद्वेतिटिषच् टित्त्वात् टिड्ढाणञित्यादिनाङीप् व्यत्ययेनाद्युदात्तत्वम् वृषादित्वाद्वद्रष्टव्यम् । दधानः शानचि अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

विजनाञ्छ्यावाःशितिपादोअख्यन्रथंहिरण्यप्रउगंवहन्तः ।
शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुवनानितस्थुः ॥ ५ ॥

वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः । शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

श्यावाःएतन्नामकाःसूर्यस्याश्वाःश्यावाःसवितुरितिनिघण्टावुक्तत्वात् तेचशितिपादः श्वेतैःपादैरुपेताः हिरण्यप्रउगंरथस्यमुखमीषयोरग्रंयुगबन्धनस्थानंप्रउगमित्युच्यते तच्चात्रसुवर्णमयं तद्युक्तंरथंवहन्तोजनान्प्राणिनोव्यख्यन् विशेषेणप्रकाशितवन्तइत्यर्थः शश्वत्सर्वदाविशः प्रजाः

दैव्यस्यइतरदेवसम्बन्धिनः सवितुःप्रेरकस्यसूर्यस्यउपस्थेसमीपस्थानेतस्थुः स्थितवत्यः नकेवलंमजाः किंतर्हि विश्वाभुवनानिसर्वेचलोकाः प्रकाशायसूर्यसमीपेतस्थुः ॥ शितिपादः शितयः श्वेतवर्णाः पादायेषांतेशितिपादाः सुपांसुलुगितिजसः सुआदेशः यद्वा शितिःश्वेतवर्णः स्फटिकादिःसइवपादोयेषां पादस्यलोपोहस्त्यादिभ्यइतिसमासान्तः पादशब्दस्यान्त्यलोपः उपमानादितिविहितत्वानुवर्तते पादशब्दस्यवृषादित्वादाद्युदात्तत्वम् तस्यबहुव्रीहौसमासेशितेर्नित्याबह्वच्बहुव्रीहावभसत्वइतिप्रकृतिस्वरत्वम्। अख्यन् ख्यातेर्लुङि अस्यतिवक्तीत्यादिनाच्लेरङादेशः । हिरण्यप्रउगम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । वहन्तः शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरः कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । दैव्यस्य तस्येदमित्यर्थेदेवाद्यञञावितिदेवशब्दात्प्राग्दीव्यतीयोञ् तद्धितेष्वचामादेरित्यादिवृद्धिः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम्। उपस्थे आतश्चोपसर्गेइतिकः आतोलोपइटिचेत्याकारलोपः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् ॥ ५ ॥

षष्ठीमृचमाह—

ति॒स्रो द्याव॑ः सवि॒तुर्द्वा उ॒पस्थाँ॒ एका॑ य॒मस्य॒ भुव॑ने विरा॒षाट् ।
आ॒णिं न रथ्य॑म॒मृताधि॑ तस्थुरि॒ह ब्र॑वीतु॒ य उ॒ तच्चिके॑तत् ॥ ६ ॥ ६ ॥

ति॒स्रः । द्याव॑ः । स॒वि॒तुः । द्वौ । उ॒पऽस्था॑ । एका॑ । य॒मस्य॑ । भुव॑ने । वि॒रा॒षाट् । आ॒णिम् । न । रथ्य॑म् । अ॒मृता॑ । अधि॑ । त॒स्थुः॒ । इ॒ह । ब्र॒वी॒तु॒ । यः । ऊ॒म् इति॑ । तत् । चिके॑तत् ॥ ६ ॥ ६ ॥

द्यावःस्वर्गोपलक्षिताःप्रकाशमानालोकास्तिस्रस्त्रिसंख्याकाःसन्ति तत्रद्वौलोकौसवितुःसूर्यस्यउपस्थासमीपस्थानेवर्तेते द्युलोकभूलोकयोःसूर्येणप्रकाशितत्वात् एकामध्यमाभूमिरन्तरिक्षलोकः यमस्यभुवनेपितृपतेर्गृहेविराषाट्विरान्गन्तृन्सहतेयेताःपुरुषाअन्तरिक्षमार्गेणयमलोकंगच्छन्तीत्यर्थः अमृताअमृतानिचंद्रनक्षत्रादीनि ज्योतींषिजलानिवाअधितस्थुः सवितारमधिगम्यस्थिताः तत्रदृष्टान्तः—रथ्यमाणिंन रथादहिरक्षच्छिद्रेप्रक्षिप्तःकीलविशेषआणिरित्युच्यतेरथसम्बन्धिनमाणिमधिगम्ययथारथस्तिष्ठति तद्वत् यस्तुमानवः तत्सवितृरहस्यंचिकेतत्जानीयात् सइहास्मिन्विषयेब्रवीतु केनापिवक्तुमशक्यःसवितुर्महिमेत्यर्थः ॥ तिस्रः तिसृभ्योजसइतिअन्तोदात्तत्वम्। द्वौ संहितायामाकारादेशे लोपःशाकल्यस्येतिवकारलोपः । उपस्था आङ्निविभक्तेरुदात्तत्वम्। ... विराडयाजपारांचोपसंख्यानमितियमम्याआडादेशः आडोनुनासिकश्छन्दसीतिप्रकृतिभावः। विरा-

पाद् वृञ्वरणे घञर्थेकविधानमितिकर्मणिकः बहुलंछन्दसीतिइत्वम् तथासतिवूर्यन्तइतिविरा-इत्युक्तंभवति तान्सहतइतिविराषाट् छन्दसिसहइतिसहेर्ण्विः सहेःसाडःसइतिषत्वम् अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः । रथस्येदंरथ्यं रथाद्यदितियत् यतोनावइत्याद्युदात्तत्वम् अष्टा शेश्छन्दसिबहुलमितिशेर्लोपः । चिकेतत् कितज्ञाने लेटचाडागमः इतश्चलोपइतीकारलोपः जुहोत्यादित्वाच्छ्लुः लघूपधगुणः अनुदात्तेचेत्यभ्यस्तस्याद्युदात्तत्वम् यद्वृत्तयोगादनिघातः॥६॥

इतिप्रथमस्यतृतीयेषष्ठोवर्गः ॥ ६ ॥

सप्तमीमृचमाह—

वि सु॑प॒र्णो अ॒न्तरि॑क्षाण्यख्यद्गभी॒रवे॑पा॒ असु॑रः सुनी॒थः ।
क्वे॒३॑दानीं॒ सूर्यः॒ कश्चि॑केत कत॒मां द्यां र॒श्मिर॑स्या त॑तान ॥ ७ ॥

वि । सु॒ऽप॒र्णः । अ॒न्तरि॑क्षाणि । अ॒ख्य॒त् । ग॒भी॒रऽवे॑पाः । असु॑रः । सु॒ऽनी॒थः । क्व॑ । इ॒दानी॑म् । सूर्यः॑ । कः । चि॒के॒त॒ । क॒त॒माम् । द्याम् । र॒श्मिः । अ॒स्य॒ । आ । त॒ता॒न॒ ॥ ७ ॥

सुपर्णः शोभनपतनः सूर्यस्यरश्मिःसुपर्णइतिपञ्चदशरश्मिनामानीतितन्नामसुपठितत्वात् अन्तरिक्षाणि अन्तरिक्षोपलक्षितानिलोकत्रयस्थानानिव्यख्यत् विशेषेणख्यापितवान्प्रकाशितवान् कीदृशोरश्मिः गभीरवेपाः गम्भीरकम्पनः रश्मेः प्रकंपनंचलनंकेनापिद्रष्टुमशक्यमित्यर्थः असुरः सर्वेषांप्राणदः तथाचान्यत्राम्नायते—सर्वेषांभूतानांप्राणानादायोदेतीति सुनीथः सुनयनः शोभनप्रापणः मार्गप्रकाशनेनाभीष्टदेशंप्रापयतीत्यर्थः तादृशरश्मियुक्तः सूर्यइदानींरात्रौक्कुभवर्तते तदेतद्रहस्यंकश्चिकेत कोजानातिनकोपीत्यर्थः अस्यसूर्यस्यरश्मिः कतमांद्यांआततान कंद्युलोकंरात्रौव्याप्तवानेतदपिकोजानाति ॥ सुपर्णः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । गभीरवेपाः टुवेपृकम्पने असुन् गभीरंवेपोयस्य पूर्वपदप्रकृतिस्वरत्वम् । असुरः असुक्षेपणे अस्यतिशत्रूनित्यसुरः असेरुरन् नित्त्वादाद्युदात्तत्वम् यद्वा असून्प्राणान् रातिददाति असुरः आतोनुपसर्गेकइतिकप्रत्ययः । सुनीथः णीञ्प्रापणे हनिकुषिनीरमिकाशिभ्यःक्थन्इतिक्थन् प्रादिसमासेथाथादिनाउत्तरपदान्तोदात्तत्वम् ।इदानीं इदंशब्दात्सप्तम्यर्थे दानींचेतिदानींप्रत्ययः इदमइशिनीदम् शब्दस्येशादेशः प्रत्ययाद्युदात्तत्वम् । सूर्यः षूप्रेरणे सुवतीति सूर्यः राजसूयसूर्येत्यादिनारुडागमसहितःक्यप्प्रत्ययोनिपातितः प्रत्ययस्यानुदात्तत्वेधातुस्वरे-

णाद्युदात्तत्वम् । चिकेत कितज्ञाने लिट् । कतमां किंजातीयां वाबहूनांजातिपरिप्रश्नेडतमच्इति किम्शब्दाद्डतमच् डित्वाट्टिलोपः चितइत्यन्तोदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

अ॒ष्टौव्य॑ख्यत्क॒कुभः॑पृथि॒व्यास्त्रीधन्व॒योज॑नास॒प्तसिन्धू॑न् ।
हि॒र॒ण्या॒क्षःस॑वि॒तादे॒वआगा॒द्दध॒द्रत्ना॑दा॒शुषे॒वार्या॑णि ॥ ८ ॥

अ॒ष्टौ । वि । अ॒ख्य॒त् । क॒कुभः॑ । पृ॒थि॒व्याः । त्री । धन्व॑ ।
योज॑ना । स॒प्त । सिन्धू॑न् । हि॒र॒ण्य॒ऽअ॒क्षः । स॒वि॒ता । दे॒वः । आ ।
अ॒गा॒त् । दध॑त् । रत्ना॑ । दा॒शुषे॑ । वार्या॑णि ॥ ८ ॥

पृथिव्याःसम्बन्धिनीरष्टौककुभः प्राच्याद्याश्चतस्रोदिशः आग्नेय्याद्याश्चतस्रोविदिशइत्येवमष्टौदिशः व्यख्यत् सवितामकाशितवान् तथायोजनाप्राणिनः स्वस्वभोगेनयोजयितॄन्धन्व अन्तरिक्षोपलक्षितान् त्रीत्रिसंख्याकान्पृथिव्यादिलोकान्सप्तसिन्धून्गङ्गादिनदीः समुद्रान्वा सवितान्यख्यत् हिरण्याक्षः हितरमणीयचक्षुर्युक्तः हिरण्मयाक्षोवासवितादेवआगात्इहागच्छतु किंकुर्वन् दाशुषेहविर्दत्तवतेयजमानायवार्याणिवरणीयानिरत्नानिदधत्प्रयच्छन् ॥ अख्यत् ख्यातेर्लुङि अस्यतिवक्तीत्यादिनाच्लेरङादेशः । त्री शेश्छन्दसिबहुलमितिशेर्लोपः । धन्व रिविरिधिविगत्यर्थाः इदितोनुम्धातोरितिनुम् अस्मात्कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवइतिकनिन् सुपांसुलुगितिविभक्तेर्लुक् नलोपः प्रत्ययस्यनित्त्वादाद्युदात्तत्वम् । योजना योजयन्तिप्राणिनउपभोगेनेतियोजनानि नन्द्यादिलक्षणोल्युः णेरनिटीतिणिलोपः पूर्ववच्छेर्लोपः । हिरण्याक्षः हिरण्मयानिअक्षीणियस्यासौहिरण्याक्षः बहुव्रीहौसक्थ्यक्ष्णोरितिसमासान्तःषच्प्रत्ययः । आगात् एतेर्लुङिइणोगालुङीतिगादेशः गातिस्थेतिसिचोलुक् । दधत् नाभ्यस्ताच्छतुरितिनुमागमप्रतिषेधः श्नाभ्यस्तयोरातइत्याकारलोपः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । दाशुषे दाश्वान्साह्वान्इत्यादिनाक्वसुप्रत्ययान्तोनिपातितः चतुर्थ्येकवचने वसोःसम्प्रसारणमितिसम्प्रसारणंपरपूर्वत्वं शासिवसिघसीनांचेतिषत्वम् । वार्याणि वृङ्संभक्तौ ऋहलोर्ण्यत् ईडवन्देत्यादिनाआद्युदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

हिरण्यपाणिःसविताविचर्षणिरुभेद्यावापृथिवीअन्तरीयते ।
अपामीवांबाधतेवेतिसूर्यमभिकृष्णेनरजसाद्यामृणोति ॥ ९ ॥

हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥ ९ ॥

हिरण्यपाणिः सुवर्णमयहस्तयुक्तः यद्वा यजमानेभ्योदातुं हिरण्यंहस्तेधृतवान् विचर्षणिः विविधदर्शनयुक्तः विचर्षणिः पश्यतीत्यर्थःविचर्षणिः विश्वचर्षणिरितितन्नामसुपाठात् सवितादेवः उभेद्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्येईयतेगच्छति अमीवां रोगादिबाधां अपबाधते सम्यक् निराकरोति तथासूर्यंवेतिगच्छति यद्यपिसवितृसूर्ययोरेकदेवतात्वं तथापिमूर्तिभेदेनगन्तृगन्तव्यभावः कृष्णेनतमसः कर्षकेणनिवर्तकेन रजसातेजसा द्यामाकाशंअभ्यृणोतिसर्वतोव्याप्नोति ॥द्यावापृथिवी दिवसश्चपृथिव्यामितिचशब्दाद्दिव्शब्दस्यद्यावादेशः देवता द्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वं नोत्तरपदेनुदात्तादावितिननिषेधः।अपृथिवीरुद्रपूषमन्थिष्वितिपर्युदस्तत्वात्। ईयते ईङ्गतौ तिङ्ङतिङ इतिनिघातः बाधतेवेतिचेतिसमुच्चयार्थप्रतीतेश्चशब्दस्यामयोगाच्चादिलोपेविभाषेतिनिघातप्रतिषेधः। वेति वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु अदादित्वाच्छपोलुक् तिपःपित्त्वादनुदात्तत्वेधातुस्वरः यद्यप्येषाद्वितीया तथापि तिङःपरत्वान्निघाताभावः। ऋणोति ऋणुगतौ तनादित्वादुः तनादिषुकरोतेरेवगुणोनान्येषामितिआपिशलिमतेनगुणाभावः ॥ ९ ॥

दशमीमृचमाह—

हिरण्यहस्तोअसुरःसुनीथःसुमृळीकःस्ववाँयात्वर्वाङ् ।
अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषंगृणानः ॥ १० ॥

हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ॥ १० ॥

हिरण्यहस्तः असुरः प्राणप्रदाता सुनीथः सुष्ठुनेता प्रशस्यइत्यर्थः सुनीथःपाकइतिप्रशस्यनामसुपाठात् सुमृळीकः सुष्ठुसुखयिता स्ववान्धनवान् अर्वाङ्अभिमुखः कर्मदेशेगच्छतु किञ्च अयंदेवः प्रतिदोषं प्रतिरात्रि गृणानःस्तूयमानः अस्थात् स्थितवान् किंकुर्वन् रक्षसः बाधकत्वेनरक्षणनिमित्तभूतान् रक्षोरक्षितव्यमस्मादितियास्कः । यातुधानानसुरान् अपसेधन् निराकुर्वन् ॥ हिरण्यहस्तादयोगताः । सुमृळीकः सुष्ठुमृळीकंसुखंयस्यासौतथोक्तः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । स्ववान् स्वमस्यास्तीतिस्ववान् मादुपधायाइतिवत्वम् संहितायांनकारस्यदीर्घादटिसमानपादेइतिरुत्वम् आतोऽटिनित्यमितिसानुनासिकआकारः रोर्यत्वम् यलोपश्च । अपसेधन् षिधुगत्यां शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणकृदुत्तरपदप्रकृतिस्वरत्वम् । रक्षसः रक्षपालनेइत्यस्मादपादाने औणादिकःअसिप्रत्ययः यद्वा रक्षन्त्यनेनेतिरक्षोबलं करणेअसुन् तदेषामस्तीतिरक्षस्विनः मत्वर्थप्रत्ययलोपश्छान्दसः प्रत्ययस्वरः । यातुधानान् यतनिकारोपस्कारयोः तस्माण्ण्यन्तादौणादिकोभावेउप्रत्ययः यातवोयातनाएपुधीयन्तइतियातुधानाः अधिकरणे ल्युट् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । अस्थात् गातिस्थेतिसिचोलुक् । प्रतिदोषं दोषांदोषांप्रति वीप्सालक्षणेयथार्थेअव्ययीभावः । गृणानः गॄशब्दे कर्मणिलटःशानच् व्यत्ययेनश्ना प्वादीनांहस्वइतिहस्वत्वं चित्इत्यन्तोदात्तत्वम् ॥ १० ॥

एकादशीमृचमाह—

येतेपन्थाःसवितःपूर्व्यासोरेणवःसुकृताअन्तरिक्षे ।
तेभिर्नोअद्यपथिभिःसुगेभीरक्षाचनोअधिचब्रूहिदेव ॥११॥७॥

ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः ।
अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च ।
नः । अधि । च । ब्रूहि । देव ॥ ११ ॥ ७ ॥

हेसवितःतेतवपन्थामार्गाः पूर्व्यासः पूर्वसिद्धाः अरेणवोधूलिरहिताः अन्तरिक्षेसुकृताः सुष्ठुसम्पादिताः सुगेभिः सुष्ठुगन्तुंशक्यैः तेभिः पथिभिः तैर्मार्गैः आगत्य अद्यास्मिन्दिनेनोस्मान् रक्षच पालनमपिकुरु तथाहेदेव नोस्माननुजातृनधिब्रूहिच देवानामग्रेअधिकत्वेनकथय च ॥ पन्थाः सुपांसुलुगितिजसःसुः पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम् । पूर्व्यासः पूर्वैःकृ-

१ नि० ४. १८. ।

ताः पूर्व्याः पूर्वैःकृतमिनयौचेतियः प्रत्ययस्वरः असुगागमः । अरेणवः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुकृताः कर्मणिक्तः गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम् । सुगेभिः सुष्ठुगच्छन्त्येष्वितिसुगाः सुदुरोरधिकरणेइतिगमेर्डप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्ष द्व्यचोतस्तिङइतिसंहितायांदीर्घः ॥ ११ ॥

॥ इतिप्रथमस्यतृतीयेसप्तमोवर्गः ॥ ७ ॥

॥ इतिप्रथमेमण्डलेसप्तमोनुवाकः ॥ ७ ॥

अष्टमेनुवाकेअष्टौसूक्तानि तत्रप्रवोयह्वमितिविंशत्यृचंप्रथमंसूक्तं घोरपुत्रःकण्वऋषिः अयुजोबृहत्यः तृतीयपादस्यद्वादशाक्षरत्वात् युजःसतोबृहत्यःप्रथमतृतीययोःपादयोर्द्वादशाक्षरत्वात् अग्निर्देवता ऊर्ध्वऊष्वित्यादिकेयूपदेवत्ये तथाचानुक्रान्तम् प्रवोविंशतिःकण्वोघौरआग्नेयंप्रागाथमूर्ध्वऊपुयौप्याविति ननूर्ध्वऊष्वित्यादिकयोरप्यग्निदेवतात्वेनभवितव्यंआग्नेयेकतानयोरनुद्धारात् तथाहिसूत्रेएनावोअग्निंप्रवोयह्वमितिप्रतीकमात्रस्यैवोपादानात् कृत्स्नसूक्तमाग्नेयमितिगम्यते यद्येतेअन्यदेवत्येस्यातां वसिष्ठाहीतिसूक्तयोरुत्तमामुद्धरेदितिवदुद्धारंब्रूयात् न चब्रूते अतःकथंयौप्याविति नैषदोषः यूपाधिष्ठानस्याग्नेःस्तूयमानत्वादनयोरप्यग्निर्देवतेत्याग्नेयेकताद्युद्धारोनकृतः अधिष्ठानप्राधान्यविवक्षयायौप्यावित्येतदपिनविरुध्यते प्रातरनुवाके आग्नेयेक्रतौबार्हतेछन्दसि प्रवोयह्वमितिसूक्तम् अथैतस्याराशेर्विवासकाल्इतिखण्डेसूत्रितम्–एनावोअग्निंप्रवोयह्वमिति ।

तत्रप्रथमामृचमाह–

प्रवो॑य॒ह्वंपु॑रू॒णांवि॒शांदे॑वय॒तीना॑म् ।
अ॒ग्निंसू॒क्तेभि॒र्वचो॑भिरीमहे॒यंसी॒मिद॒न्यई॒ळते॑ ॥१॥

प्र । वः॒ । य॒ह्वम् । पु॒रू॒णाम् । वि॒शाम् । दे॒व॒ऽय॒तीना॑म् । अ॒ग्निम् । सु॒ऽउ॒क्तेभिः॑ । वचः॑ऽभिः । ई॒म॒हे॒ । यम् । सी॒म् । इत् । अ॒न्ये । ई॒ळते॑ ॥ १ ॥

हेऋत्विग्यजमानादेवयतीनां देवान्कामयमानानां पुरूणां बहूनां विशांप्रजारूपाणां वोयुष्माकमनुग्रहायपह्वंमहान्तं यह्वः ववक्षियइतिमहन्नामसुपाठात् अग्निंसूक्तेभिर्वचोभिःसुकरूपैर्वाक्यैःमेमहे प्रकर्षेणयाचामहे ईमहेयामीतियाञ्चाकर्मसुपाठात् अन्यइवअन्ये

प्यूपयः यमग्निंसीं सर्वतः ईळतेस्तुवन्तिवमग्निमितिपूर्वेनान्वयः ॥ पूरूणां नामन्यतरस्यामिति नामउदात्तत्वम् । विशां सावेकाचइतिविभक्तेरुदात्तत्वम । देवयवीनां देवानात्मनइच्छन्त्यो-देवयन्त्यः सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येति ईलस्येवदीर्घस्यापिप्रतिषेधः अश्वाघस्या-दितिपुनरात्वविधानाज्ज्ञापकात् क्यजन्ताल्लटःशतृ कर्तरिशप् शपःपित्वादनुदात्तत्वम् शतुश्च लसार्वधातुकस्वरेणक्यचासहैकादेशउदात्तेनोदात्तइतिशतुरुदात्तत्वम् उगितश्चेतिङीप् अ-नित्यमागमशासनमितिवचनान्नुमभावः एकादेशस्वरस्यपूर्वत्रासिद्धत्वंनेष्यतइतिवचनाच्छा-तुरुदात्तत्वंसिद्धमेवेतिशतुरनुमइतिनद्याउदात्तत्वम् । सूक्तेभिः वचेः किचकौचसंज्ञायामिति कः थाथादिनोत्तरपदान्तोदात्तत्वम् । ईळते ईडस्तुतौ अदादित्वाच्छपोलुक् अनुदात्तेत्वाल्लसा-र्वधातुकानुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः ॥ १ ॥

द्वितीयामृचमाह—

जनासोअग्निंदधिरेसहोवृधंहविष्मन्तोविधेमते ।
सत्वंनोअद्यसुमनाइहाविताभवावाजेषुसन्त्य ॥ २ ॥

जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते । सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ॥ २ ॥

जनासः अनुष्ठातारोजनाः सहोवृधं बलस्यवर्धयितारमग्निंदधिरेधृतवन्तः हविष्मन्तः हविर्यु-क्तावयं हेअग्नेतेत्वांविधेमपरिचरेम विधतिःपरिचरणकर्मा विधेमसपर्यतीतिपरिचरणकर्मसुपठि-तत्वात् वाजेष्वन्नेषुसन्त्यदानशीलहेअग्नेसत्वमद्यास्मिन्दिने इहकर्मणिनोस्मान् प्रतिसुमनाः शो-भनमनस्कः अवितारक्षिताभव॥सहोवृधं वृधुवृद्धौ अस्मादन्तर्भावितण्यर्थात्क्विप्कृदुत्तरपदप्र-कृतिस्वरत्वम् । हविष्मन्तः तसौमत्वर्थेइतिभत्वेनपदत्वाभावाद्रुत्वाद्यभावः । विधेम विधविधाने तुदादित्वाच्छः । सुमनाः शोभनंमनोयस्यासौसुमनाः सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्त-त्वम् । भव पादादित्वान्निङ्ङिङ्ङितिनिघाताभावः द्व्यचोतस्तिङ इतिसंहितायांदीर्घः । सन्त्य प-णुदाने किचि तितुत्रेत्यादिनाइट्प्रतिषेधः नक्तिचिदीर्घश्चेतिअनुनासिकलोपदीर्घयोर्निषेधः स-न्तिर्दाता तत्रभवःसन्त्यः भवेच्छन्दसीतियत् ॥ २ ॥

१ नि० २. १०. ।

तृतीयामृचमाह—

प्रत्वांदूतंवृंणीमहेहोतांरंविश्ववेंदसम् ।
मृहस्तेंसतोविचंरन्त्यर्चयोंदिविस्पृंशन्तिभानवंः ॥ ३ ॥

प्र । त्वा । दूतम् । वृणीमहे । होतांरम् । विश्वऽवेंदसम् । महः । ते । सतः । वि । चरन्ति । अर्चयः । दिवि । स्पृशन्ति । भानवः ॥ ३ ॥

हेअग्ने होतारंहोमनिष्पादकंआह्वातारंवाविश्ववेदसंसर्वज्ञंदूतंदेवानांदूत्येमवृत्तंअग्निर्वैदेवानां दूतआसीदितिश्रुत्यन्तराव् । तादृशंत्वांप्रवृणीमहे प्रकर्षेणवरणंकुर्मः महोमहतःसतोनित्यंवर्त-मानस्यतेतवअर्चयोदीप्तयः विचरन्तिविविधंप्रचरन्ति भानवःत्वदीयारश्मयोदिविद्युलोकेस्पृश-न्ति तत्रत्यान्प्राणिनःप्रकाशयन्तीत्यर्थः ॥ विश्ववेदसं विश्वानिवेत्तीतिविश्ववेदाः असुन् मरुद्वृ-धादित्वात्पूर्वपदान्तोदात्तत्वम् यद्वा वेदइतिधननाम विश्वंवेदोधनंयस्य बहुव्रीहौविश्वंसंज्ञायामि-तिपूर्वपदान्तोदात्तत्वम् । महः महपूजायां क्विप्चेतिक्विप् सावेकाचइतिङसउदात्तत्वम् यद्वा महश-ब्देअच्छन्दलोपश्छान्दसः । सतः अस्तेःशतरिश्नसोरल्लोपइत्यकारलोपः शतुरनुमइतिविभक्ते-रुदात्तत्वम्। दिवि ऊडिदमितिविभक्तेरुदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

देवासंस्त्वावरुंणोमित्रोअर्यमासन्दूतंप्रत्नमिन्धते ।
विश्वंसोअंग्नेजयतित्वयाधनंयस्तेंददाशमर्त्यः ॥ ४ ॥

देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ॥ ४ ॥

हेअग्ने वरुणादयः त्रयोदेवासः देवाःप्रत्नंपुरातनंदूतंत्वात्वांसमिन्धतेसम्यक्दीपयन्ति योम-र्त्योमनुष्योयजमानस्तेतुभ्यंददाशहविर्दत्तवान् सयजमानस्त्वयासहायभूतेनविश्वंसर्वंधनंजयति॥ अर्यमा अर्यान् मिमीतइत्यर्यमा श्वन्नुक्षन्नित्यादिनाकनिन्प्रत्ययान्तोनिपातितः । इन्धते ञिइ-न्धीदीप्तौ अस्माल्लटिझस्यादादेशेश्नमश्नान्नलोपः श्नसोरल्लोपइत्यकारलोपः । ददाश दाशृदाने लिटिणलि ञित्स्वरेणप्रत्ययात्पूर्वस्याकारस्योदात्तत्वम् यद्वृत्तयोगादनिघातः ॥ ४ ॥

पञ्चमीमृचमाह—

मन्द्रोहोतागृहपतिरग्नेदूतोविशामसि ।
त्वेविश्वासंगतानिव्रताध्रुवायानिदेवाअकृण्वत ॥ ५ ८ ॥

मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वे इति ।
विश्वा । समऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ॥ ५ ॥ ८ ॥

हेअग्ने त्वंमन्द्रोहर्षहेतुः होतादेवानामाह्वाता विशांयजमानरूपाणांप्रजानांगृहपतिः गृहस्यपालकोदूतोदेवदूतोसि त्वेत्वयिविश्वानिव्रता सर्वाणिकर्माणिसङ्गतानि व्रतंकर्वरमितिकर्मनामसुव्रतशब्दःपठितः पृथिव्यादयोदेवाः ध्रुवास्थिराणियानिकर्माणिअकृण्वत कृतवन्तः पृथिवीधारयतिपर्जन्योवर्षति सूर्यःप्रकाशयति तान्येतानित्वयिसङ्गतानीतिपूर्वत्रान्वयः ॥ गृहपतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । त्वे सुपांसुलुगितिसप्तम्येकवचनस्यशेआदेशः त्वमावेकवचने इतिमपर्यन्तस्यत्वादेशः शेपेलोपइतिटिलोपपक्षेउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् अन्त्यलोपपक्षेतुएकादेशस्वरेण । सङ्गतानि गमेःकर्मणिनिष्ठायामेकाचइतीट्प्रतिषेधः अनुदात्तोपदेशेत्यादिनाअनुनासिकलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । व्रताध्रुवेत्युभयत्र शेर्लोपः । अकृण्वत कृविहिंसाकरणयोश्च व्यत्ययेनात्मनेपदम् इदित्त्वान्नुम् धिन्विकृण्व्योरचेत्युप्रत्ययः॥५॥

इतिप्रथमस्यतृतीयेष्टमोवर्गः ॥ ८ ॥

षष्ठीमृचमाह—

त्वेइदग्नेसुभगेयविष्ठ्यविश्वमाहूयतेहविः ।
सत्वंनोअद्यसुमनाउतापरंयक्षिदेवान्त्सुवीर्या ॥ ६ ॥

त्वे इति । इत् । अग्ने । सुऽभगे । यविष्ठ्य । विश्वम् । आ ।
हूयते । हविः । सः । त्वम् । नः । अद्य । सुऽमनाः । उत । अपरम् ।
यक्षि । देवान् । सुऽवीर्या ॥ ६ ॥

हेयविष्ठयुवतमाग्ने सुभगेसौभाग्ययुक्तेत्वेइत्त्वय्येवविश्वंसर्वंहविराहूयते सर्वतःप्रक्षिप्यते सत्वंनोस्मान्प्रतिसुमनाःशोभनमनस्कोभूत्वा अद्यास्मिन्दिनेउतअपिच अपरंश्वइत्यादिकमुत्तरं सर्वस्मिन्नपिकालेनेत्यर्थःसुवीर्याशोभनवीर्योपेतान्देवान्यक्षियज ॥ सुभगे शोभनोभ-

गोयस्येतिबहुव्रीहौआद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । यविष्ठ्य युवशब्दादिष्ठन् स्थूलदूरेत्यादिनायणादेःपरस्यलोपः पूर्वस्यचगुणः छान्दसोयकारोपजनः । यक्षि बहुलंछन्दसीतिशपोलुक् । सुवीर्या शोभनंवीर्यंयेषां वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् सुपांसुलुगितिविभक्तेराकारः ॥ ६ ॥

अग्निष्टवे सायंकालीनेउत्तरस्मिन्पटलेतंघेमित्थानमस्विनइत्येषाविनियुक्ता अथोत्तरमितिखण्डेसूत्रितम्—प्रागार्थीपूर्वाह्णिकाण्वीमपराह्णइति ।

तामेतांसप्तमीमृचमाह—

तंघेमित्थानमस्विनउपस्वराजमासते ।
होत्राभिरग्निमनुषःसमिन्धतेतितिर्वांसोअतिस्निधः ॥ ७ ॥

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।
होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः ।
अति । स्निधः ॥ ७ ॥

हेअग्ने नमस्विनःअन्नयुक्तानमस्कारयुक्तावा नमः आयुः सूनृतेतिअन्ननामसुपाठात् नमःशब्दस्यान्नवाचित्वम् तादृशायजमानाः स्वराजंस्वतोदीप्यमानंतंघेम् तमेवपूर्वोक्तंसर्वगुणविशिष्टंत्वां इत्थाअनेनप्रकारेणहविःप्रदानादिरूपेणोपासते मनुषोमनुष्यायजमानाःहोत्राभिःसप्तभिर्वषट्कर्तृभिः सप्तहोत्राःप्राचीर्वषट्कुर्वन्तीतिश्रुत्यन्तरात् । अग्निंत्वांसमिन्धतेसम्यग्दीपयन्ति कीदृशामनुष्याः स्निधः शत्रून् तितिर्वांसः अतिशयेनतरन्तः ॥ नमस्विनः अस्मायामेधेतिमत्वर्थीयोविनिः । स्वराजं स्वभासाराजतेइतिस्वराट् सत्सूद्विषेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । आसते आसउपवेशने अदादित्वाच्छपोलुक् । तितिर्वांसः तॄप्लवनतरणयोः छन्दसिलिडितिवर्तमाने लिट् क्वसुश्चेतिक्वसुः वस्वेकाजाद्घसामितिनियमादिडभावः ऋतइद्धातोरितीत्वम् ऋच्छत्यृतामितिगुणोहलिचेतिदीर्घत्वंचनभवति संज्ञापूर्वकोविधिरनित्यइतितयोरनित्यत्वात् यद्वा तिरतिःप्रकृत्यन्तरंद्रष्टव्यम् । स्निधः स्निधुशोषणे क्विप्चेतिक्विप् ॥ ७ ॥

अष्टमीमृचमाह—

घ्नन्तोवृत्रमतरन्रोदसीअपउरुक्षयायचक्रिरे ।
भुवत्कण्वेवृषाद्युम्न्याहुतःक्रन्ददश्वोगविष्टिषु ॥ ८ ॥

* १ तै० ब्रा० २. ३. १०. ।

घ्नन्तः । वृत्रम् । अतरन् । रोदसी इति । अपः । उरु । क्षयाय ।
चक्रिरे । भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रन्दत् ।
अश्वः । गोऽइष्टिषु ॥ ८ ॥

हेअग्ने घ्नन्तः त्वत्सहायेनइतरेदेवाःप्रहरन्तोवृत्रमतरन्तीर्णवन्तः तदनन्तरंरोदसीद्यावापृथिव्यौअपोन्तरिक्षंचक्षयायप्राणिनांनिवासार्थंउरुविस्तारोयथाभवतितथाचक्रिरे अपूशब्दोन्तरिक्षवाची आपःपृथिवीतितन्नामसुपठितत्वात् भवांस्तु कण्वेकण्वनामकेमहर्षौवृषाकामानांवर्षिता द्युम्नी धनवान् आहुतः सर्वतोहोमयुक्तश्चभुवत्भवतु तत्रदृष्टान्तः—गविष्टिषुगोविषयेच्छायुक्तेषुसंग्रामेषुअश्वःक्रन्दत्शब्दंकुर्वन्यथाभीष्टमापकस्तथेतिशेषः ॥ घ्नन्तः हन्तेःशतरिगमहनेत्यादिनाउपधालोपः होहन्तेर्ञ्णिन्नेष्वितिघत्वम् । अपः ऊडिदमितिशसउदात्तत्वम् । क्षयाय क्षिनिवासगत्योः क्षियन्तिनिवसन्त्यस्मिन्नितिक्षयोनिवासस्थानम् पुंसिसंज्ञायांघःप्रायेणेतिघः क्षयोनिवासेइत्याद्युदात्तत्वम् । भुवत् भवतेर्लेटिअडागमः इतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः अडागमस्यानुदात्तत्वेधातुस्वरः । आहुतः आहूयतइत्याहुतः हुदानादनयोः कर्मणिक्तः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । क्रन्दत् कदिक्रदिक्लदिआह्वाने शतरिनुमभावश्छान्दसः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । गविष्टिषु इषइच्छायाम् एषणमिष्टिः गवामिष्टिर्येषुसंग्रामेषु बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ८॥

प्रवर्ग्येमहावीरेखरेसंसाद्यमानेसंसीदस्वमहाँअसीत्येषा स्पृष्टोदकमितिखण्डेसूत्रितम्—संसीदस्वमहाँअसीतिसंसाद्यमानइति ।

तामेतांसूक्तेनवमीमृचमाह—

संसीदस्वमहाँअसिशोचस्वदेववीतमः ।
विधूममग्नेअरुषंमियेध्यसृजप्रशस्तदर्शतम् ॥ ९ ॥

सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः । वि ।
धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥९॥

हेअग्नेसंसीदस्वबर्हिष्युपविश महानसिगुणाधिकोभवसि देववीतमः अतिशयेनदेवान्कामयमानः शोचस्वदीप्यस्व हेमियेध्य मेधार्हप्रशस्त उत्कृष्टाग्नेअरुषंगमनशीलं दर्शतंदर्शनीयंधूमं

विसृजविशेषेणसम्पादय ॥ सीदस्व षद्लृविशरणगत्यवसादनेषु व्यत्ययेनात्मनेपदम् प्रार्थनायां लोटि शपि पाघ्रेत्यादिनासीदादेशः। महान् संहितायांनकाराकारयोः रुत्वानुनासिकावुक्तौ। शोचस्व शुचदीप्तौ अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः तिङःपरत्वान्निघाताभावः। देववीतमः वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु देवान् वेतिगच्छतीतिदेववीः क्विप्चेतिक्विप् अतिशयेनदेववीः देववीतमः तमपःपित्त्वादनुदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् । अरुषम् अरोषणम् रुषरिषहिंसायां घञर्थेकविधानमितिभावेकप्रत्ययः नास्तिरुषोस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। मियेध्य छन्दसिचेत्यर्हार्थेयप्रत्ययः मकारात्परइयागमश्छान्दसः। सृज सृजविसर्गे तुदादित्वाच्छः विकरणस्वरः पादादित्वादनिघातः। दर्शतं भृमृदृशीत्यादिना दृशेः कर्मण्यतच्प्रत्ययः ॥ ९ ॥

दशमीमृचमाह—

यंत्वादे॒वासो॒मन॑वेद॒धुरि॒हयजि॑ष्ठंहव्यवाहन ।
यंकण्वो॒मेध्या॑तिथिर्धन॒स्पृतं॒यंवृषा॒यमु॑पस्तु॒तः ॥ १० ॥ ९ ॥

यम् । त्वा॒ । दे॒वासः॑ । मन॑वे । द॒धुः । इ॒ह । यजि॑ष्ठम् । ह॒व्य॒ऽवा॒ह॒न । यम् । कण्वः॑ । मेध्य॑ऽअतिथिः । ध॒न॒ऽस्पृत॑म् । यम् । वृषा॑ । यम् । उ॒प॒ऽस्तु॒तः ॥ १० ॥ ९ ॥

हेहव्यवाहनहविषोवाहकाग्ने मनवेमनोरनुग्रहायदेवासः सर्वेदेवाः यजिष्ठंअतिशयेनपूज्यंयष्टृतमंवायंत्वात्वांइहदेवयजनदेशेदधुः धृतवन्तः मेध्यातिथिः मेध्यैरतिथिभिर्युक्तः कण्वः एतन्नामकोमहर्षिः यंत्वांधनस्पृतंधनेनप्रीणयितारंकृत्वादधेइतिशेषः तथावृषेन्द्रोयंत्वांदधेतथा उपस्तुतः अन्योपिस्तोतायजमानोयंत्वांदधेसत्वंसंसीदस्वेतिपूर्वत्रान्वयः ॥ दधुः लिट्युसिकित्त्वे आतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरः। यजिष्ठं यष्टृशब्दात् तुश्छन्दसीत्यगुणवचनादप्यातिशायनिकइष्ठन् तुरिष्ठेमेयःस्वितितृलोपः नित्त्वादाद्युदात्तत्वम्। हव्यवाहन हव्यंवहतीतिहव्यवाहनः हव्येनन्तःपादमितिवहतेर्ण्युट् । मेध्यातिथिः मेध्याअतिथयोयस्येतिबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। धनस्पृतं धनैरस्मान्स्पृणोतिप्रीणयतीतिधनस्पृत् स्पृप्रीतिपलनयोः क्विप्चेतिक्विप् ततस्तुक् कृदुत्तरपदप्रकृतिस्वरत्वम्। उपस्तुतः क्तिच्क्तौचसंज्ञायामितिकर्तरिक्तः थाथादिनाउत्तरपदान्तोदात्तत्वम् ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेनवमोवर्गः ॥ ९ ॥

एकादशीमृचमाह—

यमृग्निंमेध्यातिथिःकण्वईधऋतादधि ।
तस्यप्रेषोंदीदियुस्तमिमाऋचस्तमृग्निंवर्धयामसि ॥ ११ ॥

यम् । अग्निम् । मेध्यंऽअतिथिः । कण्वंः । ईधे । ऋतात् । अधि ।
तस्यं । प्र । इषंः । दीदियुः । तम् । इमाः । ऋचंः । तम् ।
अग्निम् । वर्धयामसि ॥ ११ ॥

मेध्यातिथिः यागयोग्याअतिथयः ऋत्विग्रूपायस्यतादृशः कण्वऋषिः ऋतादधिआदित्यादध्याहृत्ययमग्निमीधेदीप्तवान् तस्याग्नेरिषोगमनस्वभावारश्मयः प्रदीदियुः प्रकर्षेणदीप्यन्ते तथातमग्निमिमाअस्माभिःप्रयुज्यमानाऋचोवर्धयन्तीतिशेषः वयमपितमग्निंवर्धयामसिस्तोत्रैर्वर्धयामः ॥ ईधे ञिइन्धीदीप्तौ इन्धिभवतिभ्यांचेतिलिटःकित्त्वादनिदितामितिनकारलोपः द्विर्भावहलादिशेषयोःकृतयोःसवर्णदीर्घः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः। इषः इषगतौ इष्यन्तिगच्छन्तीतिइषोरश्मयः। दीदियुः दीदेतिश्छान्दसोधातुर्दीप्तिकर्मा लिटचुसि इयङादेशः एरनेकाचइतियणादेशाभावश्छान्दसः । वर्धयामसि इदन्तोमसिरितिमसइकारागमः ॥ ११॥

द्वादशीमृचमाह—

रायस्पूर्धिस्वधावोस्तिहितेग्नेदेवेष्वाप्यम् ।
त्वंवाजस्यश्रुत्यस्यराजसिसनोमृळमहांअसि ॥ १२ ॥

रायः । पूर्धि । स्वधाऽवः ।अस्ति । हि । ते।अग्ने।देवेषु।आप्यम्।त्वम्।
वाजस्य । श्रुत्यस्य । राजसि। सः । नः । मृळ । महान्। असि॥१२॥

हेस्वधावः अन्नवन्नग्ने स्वधाअर्कइतितन्नामसुपाठात् अस्माकंरायोधनानिपूर्धिपूरयदेहि वा पूर्धिपूरयदेहीतिवाइतियास्कः[1] । हेअग्ने तेतवदेवेषुआप्यं प्रापणीयंसख्यमस्तिहिविद्यतेखलु त्वंश्रुत्यस्यश्रवणीयस्यवाजस्यान्नस्यराजसिईश्वरोभवसि सत्वं नोस्मान्मृळसुखय महान्गुणैरधिकोसि ॥ रायः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। पूर्धि पॄपालनपूरणयोः श्रुशृणुपॄकृवृभ्यश्छन्दसिइतिहेर्धिरादेशः बहुलंछन्दसीविशपोलुक् हेरपित्त्वेनङित्त्वाद्गुणाभावे उदोष्ठ्यपूर्वस्य-

[1] नि० ४. ३. ।

त्युत्त्वम् हलिचेतिदीर्घः ।स्वधावः संबुद्धौमतुवसोरितिरुत्वम् । आप्यं अदुपधत्वाभावेपिव्यत्ययेन पोरदुपधादितिकर्मणियत् यतोनावइत्याद्युदात्तत्वम् यद्वा ण्यतिछान्दसमाद्युदात्तत्वम् । श्रुत्यस्य श्रुश्रवणे औणादिकःक्यप् तुगागमः यद्वा श्रुतिशब्दात् भवेछन्दसीतियत् । मृळ मृडसुखने शस्यङित्त्वाल्लघूपधगुणाभावः ॥ १२ ॥

यूपोच्छ्रयणे ऊर्ध्वऊषुणऊतयइतिद्वे पशाविष्टिरितिखण्डेसूत्रितम् ।ऊर्ध्वऊषुणइतिद्वेइति एतेएवाभिष्टवेपिविनियुक्ते अथोत्तरमितिखण्डेसूत्रितम्—सखेसखायमभ्यावृत्स्वोर्ध्वऊषुणऊतयइतिद्वेइति ।

तयोराद्यांसूक्तेत्रयोदशीमृचमाह—

ऊ॒र्ध्वऊ॒षुणं॑ऊ॒तये॒तिष्ठा॑दे॒वोनस॑वि॒ता ।
ऊ॒र्ध्वोवाज॑स्य॒सनि॑ता॒यद॒ञ्जिभि॑र्वा॒घद्भि॑र्वि॒ह्वया॑महे ॥ १३ ॥

ऊ॒र्ध्वः । ऊ॒म् इति॑ । सु । नः॒ । ऊ॒तये॑ । तिष्ठ॑ । दे॒वः । न ।
स॒वि॒ता । ऊ॒र्ध्वः । वाज॑स्य । सनि॑ता । यत् । अ॒ञ्जिऽभिः॑ ।
वा॒घत्ऽभिः॑ । वि॒ऽह्वया॑महे ॥ १३ ॥

हेयूप यद्वा यूपात्मकदारुनिष्ठाग्ने नोस्माकमूतयेरक्षणायंऊर्ध्वंउन्नतस्तिष्ठ तत्रदृष्टान्तः—सविता देवोन यथासूर्योदेवउन्नतस्तिष्ठतितद्वत्ऊर्ध्वंउन्नतःसन्वाजस्यान्नस्यसनितादाताभविष्यसि यद्यस्मात्कारणादञ्जिभिः आज्येनयूपमञ्जद्भिः वाघद्भिर्यज्ञंवहद्भिर्ऋत्विग्भिःसहविह्वयामहे अन्नदानायत्वांविशेषेणाह्वयामः तस्मादन्नस्यदाताभवेतिपूर्वत्रान्वयः॥ऊषुणः इकःसुञीतिसंहितायां दीर्घःसुञइतिषत्वं नश्चधातुस्थोरुषुभ्यइतिणत्वम्।ऊतये अवतेःक्तिनि ज्वरत्वरेत्यादिनाऊठ् ऊतियूतीत्यादिनाक्तिनउदात्तत्वम्। तिष्ठ शपि पाघ्रेत्यादिनातिष्ठादेशःद्व्यचोतस्तिङइतिसंहितायांदीर्घः। वाजस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । सनिता षणुदाने लुटि तासि षट्टादिलक्षणइट् निपोडादेशः टिलोपः उदात्तनिवृत्तिस्वरेणतिवादेशस्योदात्तत्वेप्राप्ते तास्यनुदात्तेदितितस्यानुदात्तत्वम् धातुस्वरः नलुडितिनिघातप्रतिषेधः । अञ्जिभिः अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु खनिकष्यञ्ज्यसीत्यादिनाइप्रत्ययः। विह्वयामहे निसमुपविभ्योह्वइत्यकर्त्रभिप्रायेप्यात्मनेपदम् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः तिङ्चोदात्तवतीतिगतेरनुदात्तत्वम् यद्वृत्तयोगादनिघातः ॥ १३ ॥

चतुर्दशीमृचमाह—

ऊर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणंदह।
कृधीनऊर्ध्वाञ्चरथायजीवसेविदादेवेषुनोदुवः ॥ १४ ॥

ऊर्ध्वः। नः। पाहि। अंहसः। नि। केतुना। विश्वम्। सम्।
अत्रिणम्। दह। कृधि। नः। ऊर्ध्वान्। चरथाय। जीवसे।
विदाः। देवेषु। नः। दुवः ॥ १४ ॥

हेयूप यद्वा तन्निष्ठाग्ने ऊर्ध्वउन्नतःसन् नोस्मान्केतुनाज्ञानेनअंहसःपापान्निपाहिनितरां पालय विश्वमत्रिणंसर्वमत्तारंभक्षकंराक्षसंसन्दहसम्यक्भस्मीकुरु नोस्मानूर्ध्वानुन्नतान्कृधिकुरु किमर्थं चरथायलोकेचरणाय जीवसेजीवनायचनोस्माकंदुवोधनंचहविःस्वरूपंदेवेषुविदाः लंभय ॥ अत्रिणं अद्भक्षणे अदेस्त्रिनिश्चेतिऔणादिकस्त्रिनिप्रत्ययःयद्वा अदतस्त्रायन्तइत्यत्राः आतोनुपसर्गेकइतिकः अतोमत्वर्थीयइनिः कृधि श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक् अन्येषामपिदृश्यतइतिसंहितायांदीर्घः।ऊर्ध्वान् उभयथर्क्ष्वितिविकल्पविधानान्नश्छव्यप्रशानितिनकारस्यरुत्वाभावः।चरथाय चरेरौणादिकोभावेअथप्रत्ययः जीवसे जीवप्राणधारणे तुमर्थेसेसेनित्यसेप्रत्ययः। विदाः विद्लृलाभे अस्मादन्तर्भावितण्यर्थात् लेटिसिपि लेटोडाटावित्याडागमः तुदादित्वाच्छः शेमुचादीनामितिनुमलभति अनित्यमागमशासनमितिवचनेनतस्यानित्यत्वात् इतश्चलोपइतीकारलोपः आगमानुदात्तत्वेविकरणस्वरः ॥१४॥

पञ्चदशीमृचमाह—

पाहिनोअग्नेरक्षसःपाहिधूर्तेरराव्णः।
पाहिरीषतउतवाजिघांसतोबृहद्भानोयविष्ठ्य ॥ १५ ॥

पाहि। नः। अग्ने। रक्षसः। पाहि। धूर्तेः। अराव्णः। पाहि।
रिषतः। उत। वा। जिघांसतः। बृहद्भानो इति बृहत्ऽभानो।
यविष्ठ्य ॥ १५ ॥ १० ॥

हेअग्ने हेबृहद्भानो बृहन्तोभानवोयस्यतादृशहेयविष्ठयुवतमाग्ने नोस्मान्रक्षसः बाधकाद्राक्षसादेः पाहिपालय तथा अराव्णः धनादीनामदातृरूपाद्धूर्तेर्हिंसकात्पाहि तथा रिपतोर्हिंसकाव्याघादेःसकाशात्पाहि उतवाअथवा जिघांसतोहन्तुमिच्छतःशत्रोःसकाशात्पाहि ॥ धूर्तेः धुर्वीहिंसार्थः क्तिच्क्तौचसंज्ञायामितिकर्तरिक्तिच् तितुत्रेत्यादिनाइट्प्रतिषेधः राल्लोपइतिवकारलोपः हलिचेतिदीर्घत्वम्। अराव्णः रादाने आतोमनिन्क्विनित्यादिनावनिप् नञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् पञ्चम्येकवचने अल्लोपोनइत्यनोकारस्यलोपः । रिपतः रिपहिंसायाम् लटःशतृ बहुलंछन्दसीतिशपोलुक् प्रत्ययस्वरेप्राप्तेव्यत्ययेनाद्युदात्तत्वम्। जिघांसतः हन्तेरिच्छार्थेसनि अज्झनगमांसनीतिउपधादीर्घत्वम् अभ्यासाच्चेत्यभ्यासादुत्तरस्यहकारस्यघत्वम् सन्यतइतीत्वम् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेसनोनित्त्वान्नित्स्वरेणपदस्याद्युदात्तत्वम् । बृहद्भानो आमन्त्रितस्यचेतिषाष्ठिकमाद्युदात्तत्वम् पादादित्वादाष्टमिकनिघाताभावः । यविष्ठ्य स्थूलदूरेत्यादिनायणादिपरस्यलोपः पूर्वस्यचगुणः यकारोपजनश्छान्दसः ॥ १५ ॥

इतिप्रथमस्यतृतीयेदशमोवर्गः ॥ १० ॥

षोडशीमृचमाह—

घ॒नेव॒विष्व॒ग्विज॑ह्यरा॑व्ण॒स्तपु॑र्जम्भ॒योअ॒स्म॒ध्रुक् ।
योमर्त्यः॒शिशी॑ते॒अत्य॒क्तुभि॒र्मानः॒सरि॒पुरी॑शत ॥ १६ ॥

घ॒नाऽइ॑व । विष्व॑क् । वि । ज॒हि॒ । अरा॑व्णः । तपुः॑ऽजम्भ । यः ।
अ॒स्म॒ऽध्रुक् । यः । मर्त्यः॑ । शिशी॑ति । अति॑ । अ॒क्तुऽभिः॑ । मा ।
नः॒ । सः । रि॒पुः । ई॒शत॒ ॥ १६ ॥

हेतपुर्जंभ तप्यमानरश्मियुक्ताग्ने अराव्णः अस्मभ्यंदेयस्यधनस्यअदातॄन्वैरिणः विष्वक्सर्वतोविजहिविशेषेणमारय तत्रदृष्टान्तः—घनाइव यथाकठिनेनदण्डपाषाणादिनाभाण्डादिभङ्गं करोतितद्वत् योन्योपिरिपुरस्मध्रुक् अस्मद्विषयद्रोहकारी भर्त्सनादिनाबाधतेयश्चान्योमर्त्यः मनुष्यःशत्रुरक्तुभिरायुधैरतिशिशीतितेतनूकरोति अस्मान्प्रहरतीत्यर्थः सरिपुःभर्त्सनप्रहारकारीद्विविधोपिशत्रुर्नोस्मान् प्रतिमेशत ईश्वरःशक्तोमाभूत् ॥ घनाइव सुपांसुलुगितितृतीयायाडादेशः। जहि हन्तेर्लोटि हौ हन्तेर्जादेशः तस्यासिद्धत्वात् हेर्लुगभावः। तपुर्जंभ तपसंतापे औणादिकःकरणेउसिन्प्रत्ययान्तस्तपुस्शब्दोनित्त्वादाद्युदात्तः जभनाशने जंभयन्तेशत्रवएभिरितिजंभान्यायुधानि करणेघञ् तपूंष्येवजम्भानियस्यासौतपुर्जम्भः आमन्त्रिताद्युदात्तत्वम्। अस्मध्रुक् द्रुहजिघां-

सायां सत्त्वद्विपेत्यादिनाक्विप् वाद्रुहमुहष्णुहष्णिहामितिहकारस्यघत्वम् भष्भावः । शिशीते शीतनूकरणे व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिविकरणस्यश्लुः आदेचइत्यात्त्वम् ततोद्विर्वचने बहुलंछन्दसीत्यभ्यासस्येत्वम् ईहल्यघोरितीत्वम् व्यत्ययेनाद्युदात्तत्वम् यद्वृत्तयोगादनिघातः । ईशत लङि बहुलंछन्दसीतिशपोलुगभावः नमाङ्योगेइत्याडागमाभावः ॥ १६ ॥

सप्तदशीमृचमाह—

अ॒ग्निर्व॑व्ने सु॒वीर्य॑म॒ग्निः कण्वा॑य॒ सौभ॑गम् ।
अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उ॑पस्तु॒तम् ॥ १७ ॥

अ॒ग्निः । व॒व्ने॒ । सु॒ऽवीर्य॑म् । अ॒ग्निः । कण्वा॑य । सौभ॑गम् । अ॒ग्निः । प्र । आ॒व॒त् । मि॒त्रा । उ॒त । मेध्य॑ऽअतिथिम् । अ॒ग्निः । सा॒तौ । उ॒प॒ऽस्तु॒तम् ॥ १७ ॥

अग्निर्देवः सुवीर्यंशोभनवीर्योपेतंधनमुद्दिश्यवव्नेयाचितःसोग्निः कण्वायमहर्षयेसौभगंशोभनधनादिरूपंभाग्यंप्रायच्छदितिशेषः तथा मित्राअस्मन्मित्राणिप्रावत् प्रकर्षेणरक्षितवान् उत अपिच मेध्यातिथिंमेधयोग्यैरतिथिभिरुपेतंकार्षिंमावत् तथाउपस्तुतंअन्यमपिस्तोतारंयजमानंसातौधनादिदाननिमित्तंप्रावदितिशेषः॥ वव्ने वनुयाचने कर्मणिलिट् नशसददवादिगुणानामित्येत्वाभ्यासलोपयोःप्रतिषेधः उपधालोपश्छान्दसः। सौभगं सुभगान्मत्रेइत्युद्गात्रादिपुपाठात्तस्यभावइत्येतस्मिन्नर्थेअञ् ञित्त्वादाद्युदात्तत्वम्। मित्रा शेश्छन्दसिबहुलमितिशेर्लोपः। उपस्तुतम् क्तिचक्तौचसंज्ञायामितिस्तौतेःकर्तरिक्तः थाथादिना उत्तरपदान्तोदात्तत्वम् ॥ १७ ॥

अष्टादशीमृचमाह—

अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे ।
अ॒ग्निर्न॑य॒न्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥ १८ ॥

अ॒ग्निना॑ । तु॒र्वश॑म् । यदु॑म् । प॒रा॒ऽवतः॑ । उ॒ग्रऽदे॑वम् । ह॒वा॒म॒हे॒ । अ॒ग्निः । न॒य॒त् । नव॑ऽवास्त्वम् । बृ॒हत्ऽर॑थम् । तु॒र्वीति॑म् । दस्य॑वे । सहः॑ ॥ १८ ॥

अग्निनासहावस्थितान् तुर्वशनामकंयदुनामकंउग्रदेवनामकंचराजर्षीन् परावतोदूरदेशात् हवामहे आह्वयामः सचाग्निः नववास्त्वनामकंबृहद्रथनामकंतुर्वीतिनामकंचराजर्षीन्नयवइहानयतु कीदृशोग्निः दस्यवेसहः अस्मदुपद्रवहेतोश्चौरस्याभिभविता॥ नयत् णीञ्प्रापणे लेटचडागमः इतश्चलोपइतीकारलोपः । नववास्त्वं नवंवास्तुयस्यासौनववास्तुः वाछन्दसीत्यनुवृत्तेरमिपूर्वत्वाभावेयणादेशः । बृहद्रथं बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १८ ॥

एकोनविंशीमृचमाह—

नित्वामग्नेमनुर्दधेज्योतिर्जनायशश्वते ।
दीदेथकण्वऋतजातउक्षितोयंनमस्यन्तिकृष्टयः ॥ १९ ॥

नि । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते ।
दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति ।
कृष्टयः ॥ १९ ॥

हेअग्नेज्योतिःप्रकाशरूपंत्वांशश्वतेबहुविधायजनायमनुःप्रजापतिर्निदधेदेवयजनदेशेस्थापितवान् हेअग्नेत्वंऋतजातः ऋतेनयज्ञेननिमित्तभूतेनोत्पन्नः उक्षितोहविर्भिस्तर्पितःसन् कण्वेएतन्नामकेमहर्षौदीदेथदीप्तवानसि यमग्निंकृष्टयोमनुष्याः कृष्टयःचर्षणयइतिमनुष्यनामसुपठितत्वात् नमस्यन्तिनमस्कुर्वन्ति सत्वमितिपूर्वत्रान्वयः॥ दीदेथ दीदेतिश्छान्दसोदीप्तिकर्मा थलिद्विर्वचनप्रकरणेछन्दसिवेतिवक्तव्यमितिद्विर्वचनाभावः अनित्यमागमशासनमितिवचनादिडभावः लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् । ऋतजातः ऋतेनजन्यतइतिऋतजातः श्वीदितोनिष्ठायामितीट्प्रतिषेधः जनसनेत्यादिनाआत्वम् तृतीयापूर्वपदप्रकृतिस्वरत्वम् । नमस्यन्ति नमोवरिवइतिपूजार्थेक्यच् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेक्यजन्तधातुस्वरः । कृष्टयः कृषविलेखने क्तिच्क्तौचसंज्ञायामितिक्तिच् ॥ १९ ॥

विंशीमृचमाह—

त्वेषासोअग्नेरमवन्तोअर्चयोभीमासोनप्रतीतये ।
रक्षस्विनःसदमिद्यातुमावतोविश्वंसमत्रिणंदह ॥ २० ॥ ११ ॥

त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न ।
प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् ।
सम् । अत्रिणम् । दह ॥ २० ॥ ११ ॥

अग्नेरर्चयोज्वालाः त्वेषासोदीप्ताः अमवन्तोबलवन्तः भीमासोभयङ्कराः अतः प्रतीतयेअस्माभिःप्रत्येतुंनशक्याइतिशेषः हेअग्ने रक्षस्विनोबलवन्तः यातुमावतः यातुधानानसुरान्सदमिवसर्वदैवसन्दह सम्यक्भस्मीकुरु तथा विश्वंसर्वंअत्रिणंभक्षकंअस्मद्बाधकंशत्रुंसन्दह ॥ त्वेषासः त्विषदीप्तौ पचाद्यच् चितइत्यन्तोदात्तत्वम्।अमवन्तः अमरोगे अमतिशत्रून्रुजतीत्यमोबलं पचाद्यच् वृषादित्वादाद्युदात्तत्वम् तदेषामस्तीत्यमवन्तः । प्रतीतये तादौचनितीतिगतेःप्रकृतिस्वरत्वम्। रक्षस्विनः रक्षन्त्यनेनेतिरक्षोबलं करणेअसुन् अस्मायामेधेतिमत्वर्थीयोविनिः। यातुमावतः यातवोयातनास्तान्मिमतेनिर्मिमतेइतिराक्षसव्यापारायातुमाः आतोनुपसर्गेकइतिकः तदेषामस्तीतिमतुप् मतौबह्वचइतिदीर्घत्वम् संज्ञायामितिवत्वम् मतुपःपित्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम्। अत्रिणं अदेस्त्रिनिश्चेतिकर्तरित्रिनिप्रत्ययः॥ २०॥

॥ इतिप्रथमस्यतृतीयेएकादशोवर्गः ॥ ११ ॥

क्रीळंवइतिद्वितीयंसूक्तंपञ्चदशर्चं अत्रेयमनुक्रमणिका—क्रीळंपञ्चोनामारुतंहिगायत्रंत्विति। ऋषिश्चान्यस्माद्दृषेरवाविशिष्टइतिपरिभाषयाघोरपुत्रःकण्वऋषिः इदमुत्तरंचगायत्रीछन्दस्के इदमादिसूक्तत्रयंमरुद्देवताकं तुहिह्वाइतिपरिभाषितत्वात् व्यूळ्हेद्वितीयेछन्दोमेआग्निमारुतशस्त्रेएतत्सूक्तंनिविद्धानीयं द्वितीयस्याग्निर्वोदेवमितिखण्डेसूत्रितम्—क्रीळंवःशर्धोप्रेघ्ळेत्याग्निमारुतमिति। ब्राह्मणंच—क्रीळंवःशर्धोमारुतमिति । मरुद्भ्यःक्रीळिभ्यःपुरोळाशंसप्तकपालमित्यस्यामिष्टौ क्रीळंवइत्येषाप्रधानस्यानुवाक्या तथातवइतिखण्डेसूत्रितम्—क्रीळंवःशर्धोमारुतमस्यासोनयेमरुतःस्वञ्चइति।

तामेतांसूक्तेप्रथमामृचमाह—

क्री॒ळंवः॒शर्धो॒मारु॑तमन॒र्वाणं॒रथे॒शुभ॑म् । कण्वा॒अ॒भिप्रगा॑यत ॥१॥

क्री॒ळम् । व॒ः । शर्धः॑ । मारु॑तम् । अ॒न॒र्वाण॑म् । र॒थे॒ऽशुभ॑म् ।
कण्वाः॑ । अ॒भि । प्र । गा॒य॒त ॥ १ ॥

हेकण्वाः कण्वगोत्रोत्पन्नामहर्षयः यद्वा मेधाविनऋत्विजः वोयुष्मदर्थंमारुतंमरुत्समूहरूपंशर्धोबलंअभिप्रगायतअभितःप्रकर्षेणस्तुध्वं कीदृशंशर्धः क्रीळं विहरणशीलं अनर्वाणंभ्रातृ-

१ ऐ० ब्रा० ५. १९.।

व्यरहितं अतएवश्रुत्यन्तरेब्राह्मणेनमन्त्रान्तरमेवंव्याख्यातम्–अनर्वाणंमेहीत्याह भ्रातृव्योवाअर्वा भ्रातृव्यापनुत्त्याइति । रथेशुभंस्वकीयरथेवस्थायशोभमानम् ॥ क्रीळं क्रीड़ विहारे पचाद्यच् । शर्धः शृधुमसहने शर्धयत्यनेनशत्रूनितिशर्धोबलं असुन् नित्त्वादाद्युदात्तत्वम् । मारुतं मरुतांसम्बन्धि तस्येदमित्यण् व्यत्ययेनाद्युदात्तत्वम् यद्वा समूहार्थेअनुदात्तादेरञितिअनुदात्तादिलक्षणःअञ्प्रत्ययः । अनर्वाणं व्यत्ययेनपुँल्लिङ्गता नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । रथेशुभम् शुभदीप्तौ रथेशोभतइतिरथेशुप् क्विप्चेतिक्विप् तत्पुरुषेकृतिबहुलमित्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । गायत कैगैशब्दे तिङ्ङतिङइतिनिघातः ॥ १ ॥

द्वितीयामृचमाह–

येपृषतीभिर्ऋष्टिभिःसाकंवाशीभिरञ्जिभिः । अजायन्तस्वभानवः ॥२॥

ये । पृषतीभिः । ऋष्टिऽभिः । साकम् । वाशीभिः । अञ्जिऽभिः । अजायन्त । स्वऽभानवः ॥ २ ॥

येमरुतः पृषत्यादिभिःसाकंस्वभानवः स्वकीयदीप्तियुक्ताःअजायन्तइतिसंपन्नाः पृषत्योबिन्दुयुक्तामृग्योमरुद्वाहनभूताः पृषत्योमरुतामितिनिघण्टावुक्तत्वात् ऋष्टयःआयुधानि वाश्यःशब्दविशेषाः परकीयसेनाभीतिहेतवः वाशीवाणीतिवाङ्नामसुपठितत्वात् अञ्जयोलङ्करणानि तान्स्तुमइतिशेषः॥ अजायन्त जनीप्रादुर्भावे श्यनित्राजनोर्जेतिजादेशः अडागमउदात्तः। स्वभानवः स्वकीयाभानवोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह–

इहेवशृण्वएषांकशाहस्तेषुयद्वदान् । नियामंञ्चित्रमृञ्जते ॥ ३ ॥

इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ॥ ३ ॥

एषांमरुतांहस्तेषुस्थिताः कशाःस्वस्ववाहनताडनहेतवः यद्वदान् यद्वदन्ति यंध्वनिंकुर्वन्ति तंध्वनिंइहेवअत्रैवस्थित्वाशृण्वेशृणोमि सध्वनिविशेषोयामनसंग्रामेचित्रंविविधंशौर्यंन्यृञ्जते ।नितरामलङ्करोति ऋञ्जतिःप्रसाधनकर्मेतियास्कः ॥ शृण्वे श्रुश्रवणे व्यत्ययेनात्मनेपदं श्रुवःशृ-

१ तै० सं. ६.३.८. । २ नि० ६.२१. ।

चेतिश्नुः हुश्नुवोःसार्वधातुकइतियणादेशः। वदान् वदव्यक्तायांवाचि लेट्याडागमः इतश्चेतीकारलोपे संयोगान्तस्यलोपः आगमानुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः। यामन् सुपांसुलुगितिसप्तम्यालुक् नङिसम्बुध्योरितिनलोपप्रतिषेधः। ऋञ्जते ऋजिभृजीभर्जने अत्रप्रसाधनार्थः॥ ३॥

चतुर्थीमृचमाह—

प्रवः॒शर्धा॑य॒घृष्व॑येत्वे॒षद्यु॑म्नाय॒शु॒ष्मिणे॑। दे॒वत्तं॒ब्रह्म॑गायत॥४॥

प्र। वः॒। शर्धा॑य। घृष्व॑ये। त्वे॒षऽद्यु॑म्नाय। शु॒ष्मिणे॑। दे॒वत्त॑म्। ब्रह्म॑। गा॒य॒त॒॥ ४॥

हेऋत्विजः वोयुष्माकंसम्बन्धिनेशर्धायमसहनशीलायघृष्वयेशत्रुघर्षणयुक्तायत्वेषद्युम्नाय दीप्यमानयशसे द्युम्नंद्योततेयंशोवाऽन्नंवेतियास्कः। शुष्मिणेबलवतेशुष्मंशुष्णमितिबलनामसुपाठात् ब्रह्महविर्लक्षणमन्नमुद्दिश्यएवंभूतायमरुद्गणायप्रगायतस्तुध्वम्. कीदृशंब्रह्म देवत्तंदेवैर्दत्तंदेवतानुग्रहाल्लब्धम्॥शर्धाय शृधुप्रसहने शर्धयत्यभिभवतीतिशर्धोबलं पचाद्यच् वृषादित्वादाद्युदात्तत्वम्। घृष्वये घृषसंघर्षे कुविघृष्वीत्यादिनाक्विन्प्रत्ययान्तोनिपातितः। त्वेषद्युम्नाय त्विषदीप्तौ पचाद्यच् त्वेषंदीप्तंद्युम्नंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। देवत्तं देवैर्दत्तं छान्दसोवर्णलोपः उक्तंच द्वौचापरौवर्णविकारनाशाविति तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्॥ ४॥

पञ्चमीमृचमाह—

प्रशं॑सा॒गोष्व॒घ्न्यं॑क्री॒ळंयच्छर्धो॒मारु॑तम्। ज॒म्भेरस॑स्यवावृधे॥५॥१२॥

प्र। शं॒स॒। गोषु॑। अ॒घ्न्य॑म्। क्री॒ळम्। यत्। शर्धः॑। मारु॑तम्। ज॒म्भे। रस॑स्य। व॒वृ॒धे॒॥ ५॥ १२॥

गोषुमरुन्मातृभूतपृश्निप्रभृतिषुधेनुष्ववस्थितं पृश्निर्यैवैपयसोमरुतोजाताइतिश्रुत्यन्तरात्। अघ्न्यंअहन्तव्यंक्रीळंविहारोपेतंमारुतंमरुत्सम्बन्धि शर्धःप्रसहनशीलंतेजोयदस्तितत्प्रशंस हे ऋत्विक्समूह स्तुहि रसस्यगोक्षीररूपस्यसम्बन्धितत्तेजः जम्भेमुखेउदरेवा ववृधेवृद्धमभूत्॥ शंस शंसुस्तुतौ द्व्यचोतस्तिङइतिसंहितायांदीर्घः। गोषु सावेकाचइतिप्राप्तस्य

१ नि० ५. ५.।

विभक्त्युदात्तस्यनगोश्वन्सावर्णेतिनिषेधः । अह्यं ग्रोहननं घञर्थेकविधानमितिकः गमहने-त्यादिनाउपधालोपः होहन्तेरितिघत्वम् तदर्हतीतियं छन्दसिचेतियः नह्यं अह्यं अव्ययपूर्वं पदप्रकृतिस्वरत्वम् । क्रीळादयोगवाः । जम्भे जभिनाशने जंभ्यतेभक्ष्यतेनेनेतिजम्भमास्यं करणेघञ् । ववृधे वृधुवृद्धौ लिट् छान्दसंसंहितायामभ्यासस्यदीर्घत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेद्वादशोवर्गः ॥ १२ ॥

षष्ठीमृचमाह—

कोवोवर्षिष्ठआनरोदिवश्चग्मश्चधूतयः । यत्सीमन्तंनधूनुथ ॥ ६ ॥

कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ॥ ६ ॥

दिवश्चद्युलोकस्यापिग्मश्चभूलोकस्यापि गौःग्मेतिभूनामसुपठितत्वात् धूतयःकम्पनकारिणः हेनरः नेतारोमरुतः वोयुष्माकंमध्येआसमन्ताद्वर्षिष्ठोवृद्धतमःकः यद्यस्मात्कारणात्सींसर्वतः अन्तंन वृक्षाग्रमिव धूनुथ चालयथ तस्मात्कारणात्कम्पयितॄणांयुष्माकंमध्येकःप्रबलइतिप्रश्नः ॥ वर्षिष्ठः वृद्धशब्दादिष्ठनि प्रियस्थिरेत्यादिनावर्षादेशः नित्त्वादाद्युदात्तः । ग्मः ग्माशब्दात्षष्ठ्येकवचनेआतोधातोरित्यत्रआतइतियोगविभागःकर्तव्यइत्युक्तत्वात्आकारलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । धूतयः धूञ्कम्पने क्तिच्क्तौचसंज्ञायामितिक्तिच् तितुत्रेत्यादिनेट्प्रतिषेधः आमन्त्रितस्यचेतिसर्वानुदात्तत्वम् । धूनुथ स्वादिभ्यःश्नुः सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिवचनात्सतिशिष्टोपिविकरणस्वरोलसार्वधातुकस्वरंनबाधते अतस्तिङएवस्वरः यद्वृत्तयोगादनिघातः ॥ ६ ॥

सप्तमीमृचमाह—

निवोयामायमानुषोदध्रउग्रायमन्यवे । जिहीतपर्वतोगिरिः ॥ ७ ॥

नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥ ७ ॥

हेमरुतोवोयुष्माकंयामायगमनार्थंमानुषः गृहस्वामीकश्चिन्मनुजः निदध्रेगृहदार्ढ्यार्थंदृढंस्तंभंनिक्षिप्तवान् भवदीयगमनेनचालितंगृहंपतिष्यतीतिभीत्यातन्निवारणायदृढस्तम्भप्रक्षेपःकी-

दशाय यामायउद्यायतीवाय मन्यवेचात्मनार्थमभिमन्यमानाय युष्मवेहिभवद्भ्मनाङ्कीतिः यतो-भवद्भ्याचालितःपर्वतोबहुविधपर्वयुक्तोगिरिः शिखरी जिहीतगच्छेत्॥ मानुषः मनोर्जाताव-ञ्यतौषुक्चेतिमनुशब्दादपत्यार्थेअञ्पुगागमश्च ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम् । दध्रे धृङ् अवस्थानेइत्यस्यलिटिकित्त्वाद्गुणाभावेसतियणादेशः प्रत्ययस्वरः पादादित्वान्ननिघातः। जिही-त ओहाङ्गतौ लिङि जुहोत्यादित्वाच्छपःश्लुः भृञामिदित्यभ्यासस्येत्त्वम् श्नाभ्यस्तयो-रातइत्याकारलोपेप्राप्तेईहल्यघोरितीत्वम् । पर्ववान्पर्वतः मत्वर्थीयस्तप्प्रत्ययः॥ ७ ॥

अष्टमीमृचमाह—

येषा॒मज्मे॑षुपृथि॒वीजु॑जु॒र्वाँइ॑वविश्प॑तिः । भि॒यायामे॑षु॒रेज॑ते ॥ ८ ॥

येषा॑म् । अज्मे॑षु । पृ॒थि॒वी । जु॒जु॒र्वान्ऽइ॑व । वि॒श्पतिः॑ । भि॒या । यामे॑षु । रेज॑ते ॥ ८ ॥

हेमरुतः येषांयुष्माकं यामेषुगमनेषु अज्मेषुक्षेपकेषुसत्सुपृथिवीभूमिः भियारेजतेकम्प-ते तत्रदृष्टान्तः—जुजुर्वाँइवविश्पतिः यथावयोहानिरोगादिनाजीर्णःप्रजापालकोराजावैरिभ-यात्कम्पतेतद्वद्॥ अज्मेषु अजगतिक्षेपणयोः बहुलग्रहणादौणादिकोमन् अजेर्व्यघञपोरितिवी-भावोनभवति वलादावार्धधातुकेविकल्पयिष्यतइतिवचनात् नित्त्वादाद्युदात्तत्वम् । जुजुर्वान् जॄ-षूवयोहानौ लिटःक्वसुः बहुलंछन्दसीतिउत्वम् अभ्यासहलादिशेषौ वस्वेकाजाद्घसामितिनि-यमादिडागमाभावः ऋच्छत्यॄतामितिगुणोहलिचेतिदीर्घत्वंच संज्ञापूर्वकोविधिरनित्यइतिवच-नान्नभवति । विशांपतिर्विश्पतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुल-मितिउत्तरपदाद्युदात्तत्वम् । भिया सावेकाचइतिविभक्तेरुदात्तत्वम् । यामेषु यमउपरमे भा-वेघञ् कर्षात्वतोघञइत्यन्तोदात्तत्वेप्राप्ते वृषादिषुपाठादाद्युदात्तत्वम् । रेजते रेजृकम्पने अदुपदे-शाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः॥ ८ ॥

नवमीमृचमाह—

स्थि॒रंहिजान॑मेषां॒वयो॑मा॒तुर्निर॑तवे । यत्सी॒मनु॑द्वि॒ताशवः॑ ॥ ९ ॥

स्थि॒रम् । हि । जान॑म् । ए॒षा॒म् । वयः॑ । मा॒तुः । निःऽए॑तवे । यत् । सी॒म् । अनु॑ । द्वि॒ता । शवः॑ ॥ ९ ॥

एषांमरुतांजानंजन्मस्थानमाकाशंस्थिरंहि चलनरहितंखलु मातुर्मरुतांजननीस्थानीयादाकाशाद्वयःपक्षिणोनिरेतवेनिर्गन्तुंसमर्थाभवन्तीतिशेषः तादृशादाकाशाद्भवजन्मेति मरुतांस्तुतिः यद्यस्मात्कारणात् शवःभवदीयंबलंअनुक्रमेणसींसर्वतः द्विताद्वित्वेन द्यावापृथिव्योर्विभज्यवर्तते अतोभवदीयंजानंस्थिरंहीतिपूर्वत्रान्वयः ॥ जानं जन्यतेस्मिन्निति जानमन्तरिक्षं अधिकरणेघञ् । एषां इदमोन्वादेशेशइत्यशादेशोनुदात्तः विभक्तिश्चसुप्त्वादनुदात्ता नचोडिदमित्यादिनाविभक्त्युदात्तत्वम् अन्वोदात्तादिदंशब्दात्तस्यविधानात् । निरेतवे इण्गतौ तुमर्थेसेसेनितितवेन्प्रत्ययः तादौचेतिगतेःप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

उदुत्येसूनवोगिरःकाष्ठाअज्मेष्वत्नत । वाश्राअभिज्ञुयातवे ॥१०॥१३॥

उत् । ऊम् इति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥ १० ॥ १३ ॥

त्ये पूर्वमरुतागिरःसूनवः वाचउत्पादकामरुतः वायवोहिवाल्वोष्ठादिषुसंचरन्तोवाचमुत्पादयन्ति अज्मेषुस्वकीयेषुगमनेषुसत्सुकाष्ठाअपः आपोपिकाष्ठाउच्यन्तेक्रान्त्वास्थिताभवन्तीति यास्कः । उदु उत्कर्षेणैवअत्नतअतनिषतविस्तारितवन्तः उदकंविस्तार्यतत्पानार्थंवाश्राः हंभारवोपेतागाः अभिज्ञुजान्वभिमुखंयथाभवतितथायातवेगन्तुंमेरितवन्तइतिशेषः ॥ सूनवः पूप्रेरणे सुवःकिदितिनुप्रत्ययः कित्त्वाद्गुणाभावः । अत्नत तनुविस्तारे लङिझस्यादादेशो बहुलंछन्दसीतिविकरणस्यलुक् तनिपत्योश्छन्दसीत्युपधालोपः अडागमः । अभिज्ञु अभिगतेजानुनीयस्यतदभिज्ञु प्रसंख्यांजानुनोर्ज्ञुरितिव्यत्ययेनाभिपूर्वस्यापिजानुशब्दस्यज्ञुशब्दादेशःसमासान्तः। यातवे तुमर्थेसेसेनितितवेन्प्रत्ययः निरवादाद्युदात्तत्वम् ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेत्रयोदशोवर्गः ॥ १३ ॥

एकादशीमृचमाह—

त्यंचिद्घादीर्घंपृथुंमिहोनपातममृध्रम् । प्रच्यावयन्तियामभिः ॥ ११ ॥

त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयन्ति । यामऽभिः ॥ ११ ॥

१ नि० २.१५ ।

त्यंचिद्घ प्रसिद्धोयोमेघः तमपिमेघंयामभिः स्वकीयगमनैः प्रच्यावयन्ति मरुतःप्रकर्षेणगमयन्ति कीदृशं दीर्घंआयामोपेतं पृथुंतिर्यग्विस्तृतं मिहोनपातं सेचनीयस्यजलस्यनपातयितारं वृष्टिमकुर्वन्तमित्यर्थः अमृध्रं केनाप्यहिंस्यम् ॥ घ ऋचितुनुघेत्यादिनादीर्घः । मिहः मिहसेचने मेहतिसिञ्चतीतिमिट्वृष्टिः क्विप्चेतिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । नपातं नपातयतीतिनपात् नभ्राण्नपादित्यादिनानञःप्रकृतिभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अमृध्रम् मृधुमृधुउन्दने मर्धति उदकेनोनत्तीतिमृध्रः बहुलवचनादौणादिकोरक्प्रत्ययः नञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् यद्वा संग्रामवाचिनामृधशब्देनहिंसालक्ष्यते मत्वर्थीयोरः पूर्ववत्स्वरसमासौ । च्यावयन्ति च्युङ्गतौ णिचिवृद्ध्यावादेशौ पदकालेह्रस्वश्छान्दसः ॥ ११ ॥

द्वादशीमृचमाह—

मरुतोयद्धवोबलंजनाँअचुच्यवीतन । गिरीँरचुच्यवीतन ॥ १२ ॥

मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ॥ १२ ॥

हेमरुतः यद्धयस्मादेवकारणात् वोयुष्माकंबलमस्ति अस्मादेवकारणाज्जनान् प्राणिनः अचुच्यवीतन स्वस्वव्यापारेपुमेरयत तथा गिरीन् मेघानअचुच्यवीतनमेरयत ॥ मरुतः आमन्त्रिताद्युदात्तत्वम् । अचुच्यवीतन च्यवतेर्लिङिव्यत्ययेनपरस्मैपदम् तप्तनप्तनथनाश्चेतितस्यतनबादेशः बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीतीडागमः गुणावादेशौ तिङ्ङतिङइतिनिघातः । गिरीन् दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् अत्रानुनासिकइतिइकारस्यानुनासिकः ॥ १२ ॥

त्रयोदशीमृचमाह—

यद्धयान्तिमरुतःसंहब्रुवतेध्वन्ना । शृणोतिकश्चिदेषाम् ॥ १३ ॥

यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥ १३ ॥

यद्धयदाखलुमरुतोयान्तिगच्छन्तितदानींअध्वन्नामार्गेसर्वतः संब्रुवतेह सम्भूयध्वनिमवश्यंकुर्वन्ति एषांमरुतांसंबन्धिनंशब्दंकश्चित्पुरुषःकोपिशृणोति ॥ यान्ति याप्रापणे अदादित्वाच्छपोलुक् झोन्तइतिझादेशस्योपदेशिवद्भावादन्तीत्येतदाद्युदात्तं धातुनासहैकादेशेएकादेशस्वरः

यद्वृत्तयोगादनिघातः। ब्रुवते भ्रूञ्व्यक्तायांवाचि झस्यादादेशेकृतेपरत्वात्प्राप्तस्यगुणस्यङिच्चेन बाधितत्वादुवङादेशः। अध्वन् सुपांसुलुगितिसप्तम्यालुक्। शृणोति तिपःपित्त्वानुदात्तत्वेविकरणस्वरः॥ १३॥

चतुर्दशीमृचमाह—

प्रयांतशीभंमाशुभिःसन्तिकण्वेषुवोदुवंः। तत्रोषुमांदयाध्वै॥ १४॥

प्र। यात। शीभंम्। आशुऽभिः। सन्ति। कण्वेषु। वः। दुवंः।
तत्रो इति। सु। मादयाध्वै॥ १४॥

हेमरुतः आशुभिर्वेगवद्भिः स्वकीयैर्वाहनैः शीभंशीघ्रंशीभंत्रप्सुतूयमितिक्षिप्रनामसुपाठात् प्रयातप्रकर्षेणकर्मभूमिंगच्छत कण्वेषुमेधाविष्वनुष्ठातृषुवोयुष्माकंदुवोदुवांसिपरिचरणानिसन्ति तत्रोषुतेष्वेवपरिचारकेषुकण्वेषुमादयाध्वैतृप्ताभवत॥ आशुभिः अशूव्याप्तौ कृवापाजीत्यादिनाउण् प्रत्ययस्वरः। सन्ति श्नसोरल्लोपइत्यकारलोपः। मादयाध्वै मदतृप्तियोगे चुरादिराकुस्मीयआत्मनेपदी लेट्याडागमः टेरेत्वम् वैतोन्यत्रेत्येकारस्यैकारादेशः॥ १४॥

पञ्चदशीमृचमाह—

अस्तिहिष्मामदायवःस्मसिष्मावयमेषाम्।विश्वंचिदायुर्जीवसे॥१५॥१४

अस्ति। हि। स्म। मदाय। वः। स्मसि। स्म। वयम्। एषाम्।
विश्वंम्। चित्। आयुः। जीवसे॥ १५॥ १४॥

हेमरुतः वोयुष्माकंमदायतृप्तयेअस्तिहिष्म अस्माभिःप्रयुज्यमानंहविर्विद्यतेखलु एषांयुष्माकंभृत्यभूतावयंस्मसिष्मविद्यामहेखलु जीवसेजीवितुं विश्वंचिदायुः सर्वमप्यायुः प्रयच्छतेतिशेषः॥ स्म निपातस्यचेतिसंहितायांदीर्घः। स्मसि इदन्तोमसिः। जीवसे तुमर्थेसेसेनित्यसेप्रत्ययः॥ १५॥

॥ इतिप्रथमस्यतृतीयेचतुर्दशोवर्गः॥ १४॥

क्रन्नूनमितिपञ्चदशर्चंतृतीयंसूक्तम् घोरपुत्रःकण्वऋषिःऋषिश्चान्यस्मादितिपरिभाषितत्वात् पूर्वसूक्तेमारुतंहीत्युक्तत्वादिदमपिमरुद्देवताकं गायत्रंत्वित्युक्तत्वाद्गायत्रीछन्दस्कम् क्रद्धेत्यनुक्रमणिका विनियोगोलैङ्गिकः।

तत्रप्रथमामृचमाह—

कद्धनूनंकधप्रियःपितापुत्रंनहस्तयोः । दधिध्वेवृक्तबर्हिषः ॥ १ ॥

कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः ।
दधिध्वे । वृक्तऽबर्हिषः ॥ १ ॥

हेमरुतः कद्धकदाखलुनूनमवश्यंहस्तयोःदधिध्वे यूयमस्मान्हस्तेधारयथ तत्रदृष्टान्तः—पितापुत्रंनहस्तयोः यथालोकेपिताहस्तयोःस्वकीयंपुत्रंधारयतितद्वत् कीदृशामरुतः कधप्रियः स्तुतिप्रीताः वृक्तबर्हिषः वृक्तंछिन्नंबर्हिर्दर्भोयेषांमरुतांयजमानायतेमरुतस्तथाविधाः ॥ कत् कदा द्वौचापरौवर्णविकारनाशावित्युक्तत्वादाकारलोपः । कधप्रियः कथास्तुतिः तयाप्रीणयन्तीति कधप्रियः प्रीञ्प्रीतौ क्विप् पूर्वपदस्यङ्याप्योःसंज्ञाछन्दसोर्बहुलमितिह्रस्वत्वम् थकारश्छान्दसः आमन्त्रितनिघातः। दधिध्वे दधातेः छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् क्रादिनियमादिट् प्रत्ययस्वरः । वृक्तबर्हिषः आमन्त्रितनिघातः ॥ १ ॥

द्वितीयामृचमाह—

क्वनूनंकद्वोअर्थंगन्तादिवोनपृथिव्याः । क्वोगावोनरण्यन्ति ॥ २ ॥

क्व । नूनम् । कत् । वः । अर्थम् । गन्त । दिवः । न । पृथिव्याः ।
क्व । वः । गावः । न । रण्यन्ति ॥ २ ॥

हेमरुतः नूनमिदानींकयूयंकुत्रस्थिताः कत्कदावोयुष्माकं अर्थं अरणंदेवयजनदेशेगमनं विलम्बंमाकुरुतेत्यर्थः दिवोगन्त द्युलोकादागच्छत पृथिव्यानगन्त भूलोकात्सागच्छत वोयुष्मान्क्वरण्यन्तिदेवयजनरूपायाःपृथिव्याअन्यत्रकुत्रशब्दयन्ति यजमानाःस्तुवन्ति तत्रदृष्टान्तः—गावोन यथागावोरणन्तिशब्दयन्तितद्वत् ॥ क्व किंशब्दात्सप्तम्यन्तात् किमोदित्यत्प्रत्ययः क्वातीतिकिमःक्वादेशः तित्स्वरितमितिस्वरितत्वम् । अर्थं ऋगतौ उषिकुषिगार्तिभ्यस्थन्इति भावेथन् नित्त्वादाद्युदात्तत्वम् । गन्त गमेर्लोटि बहुलंछन्दसीतिशपोलुक् थादेशस्यतस्य तप्तनप्तनथनाश्चेतितबादेशः अतएवङित्त्वाभावादनुदात्तोपदेशेत्यादिनाअनुनासिकलोपोनभवति प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् । पृथिव्याः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । रण्यन्ति रणतिःशब्दार्थः व्यत्ययेनश्यन् ॥ २ ॥

तृतीयामृचमाह—

क्वंवःसुम्नानव्यांसिमरुतःक्वंसुविता । क्वोउविश्वानिसौभंगा ॥ ३ ॥

क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता ।
क्वो१इति । विश्वानि । सौभंगा ॥ ३ ॥

हेमरुतोवोयुष्माकंसम्बन्धीनिनव्यांसिनवतराणिसुम्नाप्रजापशुरूपाणिधनानि प्रजावैपशवः सुम्नमितिश्रुत्यन्तरात् । क्वकुत्रवर्तन्ते तथा सुविताशोभनानिप्राप्यानिमणिमुक्तादीनिभवदीयानिक्वकुत्रवर्तन्ते विश्वानिसर्वाणिसौभगा सौभाग्यरूपाणिगजाश्वादीनिक्वोकुत्रवर्तन्ते भवदीयैः सुम्नादिभिःसर्वैःसहागन्तव्यमित्यर्थः ॥ सुम्ना शेश्छन्दसिबहुलमितिशेर्लोपः । नव्यांसि नवशब्दादीयसुनिईकारलोपश्छान्दसः । सुविता सुप्सुइतानिसुवितानितन्वादीनांछन्दसिबहुलमुपसंख्यानमित्युवङादेशः । सौभगा सुभगान्मन्त्रेइतितस्यभावइत्यर्थेअञ् पूर्ववच्छेर्लोपः ॥ ३ ॥

चतुर्थीमृचमाह—

यद्यूयंपृश्निमातरोमर्तासःस्यातंन । स्तोतावोअमृतःस्यात् ॥ ४ ॥

यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातंन । स्तोता । वः ।
अमृतः । स्यात् ॥ ४ ॥

हेपृश्निनामकधेनुपुत्रामरुतोयूयंयद्यपिमर्तासोमनुष्याःस्यातनभवेत तथापिवोयुष्माकं स्तोतायजमानः अमृतःस्यात् देवोभवेत् ॥ पृश्निर्मातायेषांते समासान्तविधेरनित्यत्वात् नद्यृतश्चेतिकबभावः । मर्तासः असिहसीत्यादिनाम्रियतेस्तन्प्रत्ययः आज्जसेरसुक् । स्यातन अस्तेर्लिङि तस्य तप्तनप्तनथनाश्चेतितनादेशः यासुटउदात्तत्वम् । अमृतः नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

मावोमृगोनयवसेजरिताभूदजोष्यः । पथायमस्यगादुप ॥ ५ ॥ १५ ॥

मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा ।
यमस्य । गात् । उप ॥ ५ ॥ १५ ॥

१ तै० सं. ५. ४. ६. ।

हेमरुतोवोयुष्माकंजरितास्तोताअजोष्यः असेव्योमाभूत तत्रदृष्टान्तः—मृगोनयवसे यथातृणेभक्षणीयेमृगःकदाचिदप्यसेव्योनभवति किन्तु सर्वदातृणंभक्षयतितद्वत् किञ्च सःस्तोता यमस्यपथा यमलोकसम्बन्धिमार्गेणमोपगात्मागच्छत्मागच्छतु तस्यमरणंमाभूदित्यर्थः॥जरिता जॄष्वयोहानौ स्तुतिकर्मेतियास्कः। तृचीडागमः चित्वादन्तोदात्तत्वम्। भूत् लुङिगातिस्थेतिसिचोलुक् नमाङ्योगेइत्यडभावः। अजोष्यः जुषीप्रीतिसेवनयोः ऋहलोर्ण्यदितिकर्मणिण्यत् नञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम्। पथा तृतीयैकवचनेभस्यटेर्लोपइतिटिलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। गात् एतेर्लुङिइणोगालुङीतिगादेशः गातिस्थेतिसिचोलुक् पूर्ववदडभावः॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेपञ्चदशोवर्गः ॥ १५ ॥

षष्ठीमृचमाह—

मोषुणःपरांपरानिर्ऋतिर्दुर्हणांवधीत्। पदीष्टतृष्णयासह ॥ ६ ॥

मो इति। सु। नः। पराऽपरा। निःऽऋतिः। दुःऽहना। वधीत्। पदीष्ट। तृष्णया। सह ॥ ६ ॥

हेमरुतः नोस्मान्निर्ऋतिःरक्षोजातिदेवतामोषुवधीत्सर्वथावधंमाकार्षीत् कीदृशी परापरा उत्कृष्टादप्युत्कृष्टाअतिबलेत्यर्थः अतएवदुर्हणा केनापिहन्तुंदुःशक्या सानिर्ऋतिःतृष्णयासहपदीष्टपततु अस्मदीयातृष्णाबाधिकानिर्ऋतिश्चविनश्यत्वित्यर्थः ॥ मोषुणः सुञइतिपत्वं नश्चधातुस्थोरुषुभ्यइतिणत्वम्। दुर्हणा ईषद्दुःसुष्वित्यादिनाहन्तेःकर्मणिखल् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम्। वधीत् लुङि हन्तेर्लुङिचेतिवधादेशः सिचिईडागमः वधादेशस्यादन्तत्वात् एकाचउपदेशेइतीट्प्रतिषेधोनभवति अतोलोपेसति तस्यस्थानिवत्त्वादतोहलादेरितिवृद्ध्यभावः इटईटीतिसिचोलोपः। पदीष्ट पदगतौ आशीर्लिङिछन्दस्युभयथेतिसार्वधातुकत्वात्सलोपः आर्धधातुकत्वात्सुडागमः प्रत्ययस्वरः। तृष्णया ञितृषापिपासायां तृषिशुषिरसिभ्यःकिञ्चेतिनप्रत्ययः नित्त्वादिनुवृत्तेराद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

सत्यंत्वेषाअमवन्तोधन्वंश्चिदारुद्रियासः। मिहंकृण्वन्त्यवाताम् ॥ ७ ॥

१ नि० १. ८.।

स॒त्यम् । । त्वे॒षाः । अम॑ऽवन्तः । धन्व॑न् । चि॒त् । आ ।
रु॒द्रियासः । मिह॑म् । कृ॒ण्व॒न्ति॒ । अ॒वा॒ताम् ॥ ७ ॥

धन्वन् चिद्मरुदेशेपि रुद्रियासः रुद्रेणपालितत्वात्तदीयामरुतः आसर्वतः अवातांवायुरहितांमिहंवृष्टिंकृण्वन्तिकुर्वन्ति तदेतत्सत्यं कीदृशारुद्रियासः त्वेषाःदीप्ताः अमवन्तोबलवन्तः मरुतांरुद्रपालनमाख्यानेपुप्रसिद्धम् ॥ धन्वन् रिविरविधविगत्यर्थाः इदित्वान्नुम् कनिन्युवृषितक्षीत्यादिनाकनिन् नित्वादाद्युदात्तत्वम् सुपांसुलुगितिसप्तम्यालुक् । रुद्रियासः रुद्रस्येमेरुद्रियाः तस्येदमित्यर्थेघः आज्जसेरसुक् । मिहं मिहसेचने क्विप्चेतिक्विप् । कृण्वन्ति कृविहिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्यचअकारादेशः अतोलोपेनलुप्तस्यतस्यस्थानिवद्भावाल्लघूपधगुणाभावः ॥ ७ ॥

कारीर्यांमारुतंसप्तकपालमित्यस्यहविषोवाश्रेवविद्युदित्येषानुवाक्या वर्षकामेष्टिरितिखण्डे सूत्रितम्—वाश्रेवविद्युन्मिमातिपर्वतश्चिन्महिवृद्धोबिभायेति ।

तामेतामष्टमीमृचमाह—

वा॒श्रेव॑वि॒द्युन्मि॑माति॒व॒त्सं॒नमा॒तासि॑षक्ति । यदे॑षांवृ॒ष्टिरस॑र्जि ॥ ८ ॥

वा॒श्राऽइ॑व । वि॒ऽद्युत् । मि॒मा॒ति॒ । व॒त्सम् । न । मा॒ता । सि॒स॒क्ति॒ ।
यत् । ए॒षा॒म् । वृ॒ष्टिः । अस॑र्जि ॥ ८ ॥

वाश्रेव शब्दयुक्ताप्रसूतस्तनवतीधेनुरिव विद्युन्मेघस्थादृश्यमानासती मिमातिशब्दंकरोति विद्युद्वेलायांहिमेघगर्जनंप्रसिद्धं माताधेनुर्वत्सं वत्समिव सिषक्ति इयंविद्युन्मरुतः सेवते सिषक्तिःसेवनार्थः सिषक्तुसचतइतिसेवमानस्येतियास्कोक्तत्वात् । यद्यस्मात्कारणादेषांमरुतांसंबन्धिनीवृष्टिः असर्जिगर्जनसहितेविद्युत्कालेवृष्टाभवति तस्माद्विद्युतोमरुत्सेवनमुपपन्नम् ॥ वाश्राइव वाशृशब्दे स्फायितञ्चीत्यादिनारक् । मिमाति माङ्मानेशब्देच व्यत्ययेनपरस्मैपदम् जुहोत्यादित्वाच्छ्लुः भृञामिदितिअभ्यासस्येत्वम् । सिषक्ति षचसमवाये लटिबहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वम् । असर्जि सृजविसर्गे कर्मणिलुङ् चिण्भावकर्मणोरितिचिण् चिणोलुगितितशब्दस्यलुक् गुणः अडागमउदात्तः यद्वृत्तयोगादनिघातः ॥ ८ ॥

---

१ नि० ३. २१. ।

नवमीमृचमाह—

दिवांचित्तमःकृण्वन्तिपर्जन्येनोदवाहेन । यत्पृथिवींव्युन्दन्ति ॥ ९ ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥ ९ ॥

हेमरुतः उदवाहेनउदकधारिणापर्जन्येनमेघेन सूर्यमाच्छाद्यदिवाचित् अहन्यपि तमः कृण्वन्तिअन्धकारंकुर्वन्ति यद्यदापृथिवींभूमिंव्युन्दन्तिविशेषेणक्लेदयन्ति तदानीमतिवृष्टिकालेतमःकुर्वन्तीतिपूर्वत्रान्वयः ॥ उदवाहेन उदकानिवहतीत्युदवाहः कर्मण्यण् मेघविशेषस्येयं संज्ञा उदकस्योदःसंज्ञायामितिउदकशब्दस्योदभावः कृदुत्तरपदप्रकृतिस्वरत्वम् । व्युन्दन्ति उन्दीक्लेदने रुधादित्वाच्छ्नम् श्नान्नलोपइतिनलोपः यद्वृत्तयोगादनिघातः ॥ ९ ॥

दशमीमृचमाह—

अधस्वनान्मरुतांविश्वमासद्मपार्थिवम् । अरेजन्तप्रमानुषाः॥१०॥१६॥

अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषाः ॥ १० ॥ १६ ॥

मरुतां सम्बन्धिनःस्वनादध ध्वनेर्गर्जनरूपादनन्तरं पार्थिवंपृथिवीसम्बन्धिविश्वंसद्मसर्वंगृहं आसमन्तात् अरेजतेतिशेषः तथा मानुषाः गृहवर्तिनोमनुष्याअपि प्रारेजन्तप्रकर्षेण कम्पितवन्तः ॥ अध छान्दसंधत्वम् । सद्म षद्लृविशरणगत्यवसादनेषु अन्येभ्योपिदृश्यन्तइति मनिन् । पार्थिवं पृथिव्याःसंबन्धि पृथिव्याञाञावितिप्राग्दीव्यतीयःअञ्प्रत्ययः ञित्वादाद्युदात्तत्वम् । अरेजन्त रेजृकम्पने ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेषोडशोवर्गः ॥ १६ ॥

एकादशीमृचमाह—

मरुतोवीळुपाणिभिश्चित्रारोधस्वतीरनु । यातेमखिद्रयामभिः॥ ११ ॥

मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥ ११ ॥

हेमरुतोयूयंवीळुपाणिभिः दृढहस्तैःसहिताःसन्तः रोधस्वतीरनु कूलयुक्तानदीरनुलक्ष्य अखिद्रयामभिः अच्छिन्नगमनैः यातेम् गच्छतैव॥ मरुतः आमन्त्रितायुदात्तत्वम्। वीळुपाणिभिः वीडुइतिबलनाम वीळुच्चौळमितितन्नामसुपाठात् तेनचतद्वान्लक्ष्यते वीळवश्चतेपाणयश्च समासस्येत्यन्तोदात्तत्वम्। रोधस्वतीः रुधिरूआवरणे रुणद्धिस्रोतइतिरोधःकूलम् रोधः कूलंनिरुणद्धिस्रोतइत्युक्तत्वात्। असुनोनित्त्वादाद्युदात्तत्वम् तद्युक्तारोधस्वत्यः मादुपधायाइतिमतुपोवत्वम् उगितश्चेतिङीप् मतुब्ङीपोःपित्त्वादनुदात्तत्वे असुनःस्वरएवशिष्यते। यात यामापणे अदादित्वाच्छपोलुक्। ईम् चादयोनुदात्ताइत्यनुदात्तत्वम् गुणेएकादेशउदात्तेनोदात्तइत्युदात्तत्वम्। अखिद्रयामभिः खिददैन्ये स्फायितञ्चीत्यादिनारक् खिद्रंयान्तीतिखिद्रयामानः नखिद्रयामानः अखिद्रयामानः तैः अव्ययपूर्वपदप्रकृतिस्वरत्वम्॥ ११॥

द्वादशीमृचमाह—

**स्थि॒रा व॑ः सन्तु ने॒मयो॒ रथा॒ अश्वा॑स एषाम्। सुसं॑स्कृता अ॒भीश॑वः॥ १२॥**

स्थि॒राः। वः। स॒न्तु॒। ने॒मयः॑। रथाः॑। अश्वा॑सः। ए॒षा॒म्। सुऽसं॑स्कृताः। अ॒भीश॑वः॥ १२॥

हेमरुतः येषांवोयुष्माकंनेमयोरथचक्रवलयाःस्थिराःसन्तु तथारथाअश्वासः अश्वाश्चस्थिराःसन्तु अभीशवोङ्गुलयः अभीशवः दीधितयइतितन्नामसुपाठात् सुसंस्कृताअश्वबन्धनरज्जुपरिग्रहणे स्वलङ्कृताः सावधानाः सन्तु॥ सुसंस्कृताः सम्पूर्वात्करोतेःकर्मणिक्तः संपर्युपेभ्यइतिसुट् पुनःसुशब्देनप्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अभीशवः अभिपूर्वादश्नोतेः कृवापाजिमीत्यादिनाउण् वर्णव्यत्ययेनआकारस्यइकारः उक्तञ्च—वर्णागमोवर्णविपर्ययश्चेति अभीशवोऽप्यश्नुवतेकर्माणीतिनिरुक्तम्॥ १२॥

त्रयोदशीमृचमाह—

**अच्छा॑ वद॒ तना॑ गि॒रा ज॒रायै॒ ब्रह्म॑ण॒स्पति॑म्। अ॒ग्निं मि॒त्रं न द॑र्श॒तम्॥ १३॥**

अच्छ॑। व॒द॒। तना॑। गि॒रा। ज॒रायै॑। ब्रह्म॑णः। पति॑म्। अ॒ग्निम्। मि॒त्रम्। न। द॒र्श॒तम्॥ १३॥

१ नि० ६. १. २ नि० ३. ९.

हेऋत्विक्समूह तनातनया देवतास्वरूपंप्रकाशयन्त्यागिरावाचा ब्रह्मणस्पतिंमन्त्रस्यहविर्लक्षणस्यान्नस्यवापालकंमरुद्गणं अग्निंदर्शनंदर्शनीयंमित्रंन मित्रमपि जरायै स्तोतुंअच्छ आभिमुख्येनवदब्रूहि ॥ अच्छ निपातस्यचेतिसंहितायांदीर्घत्वम् । वद द्व्यचोतस्तिङइतिसंहितायांदीर्घः । तना तनुविस्तारे तनोतिदेवतामाहात्म्यंविस्तारयतीतितना पचाद्यच् वृषादित्वादाद्युदात्तत्वम् तृतीयायाडादेशः । गिरा सावेकाचइतिविभक्तेरुदात्तत्वम् । ब्रह्मणः षष्ठ्याःपतिपुत्रेतिसंहितायांसत्वम् ॥ १३ ॥

चतुर्दशीमृचमाह–

मिमीहिश्लोकमास्येपर्जन्यइवततनः । गायगायत्रमुक्थ्यम् ॥ १४ ॥

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय ।
गायत्रम् । उक्थ्यम् ॥ १४ ॥

हेऋत्विक्समूह आस्ये स्वकीयमुखे श्लोकंस्तोत्रं मिमीहिनिर्मितंकुरु तंचश्लोकं ततनः विस्तारय तत्रदृष्टान्तः–पर्जन्यइव यथामेघोवृष्टिंविस्तारयति तद्वत् उक्थ्यं शस्त्रयोग्यं गायत्रं गायत्रीछन्दस्कंसूक्तं गाय पठ ॥ मिमीहि माङ्माने जौहोत्यादिकः व्यत्ययेनपरस्मैपदम् भृञामिदित्यभ्यासस्येत्त्वम् । आस्ये असुक्षेपणे अस्यतेक्षिप्यतेस्मिन्नित्यास्यं ऋहलोर्ण्यदितिबहुलमितिअधिकरणेण्यत् तित्स्वरितमितिस्वरितत्वम् । ततनः तनुविस्तारे लेटिसिपि बहुलंछन्दसीतिविकरणस्यश्लुः लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः । गायत्रं गायत्र्याःसम्बन्धि तस्येदमित्यण् यद्वा गायतस्त्रायतइतिगायत्रं आतोनुपसर्गेकः ॥ १४ ॥

पञ्चदशीमृचमाह–

वन्दस्वमारुतंगणंत्वेषंपनस्युमर्किणम् । अस्मेवृद्धाअसन्निह ॥ १५ ॥ १७ ॥

वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् ।
अस्मे इति । वृद्धाः । असन् । इह ॥ १५ ॥ १७ ॥

हेऋत्विक्संघ मारुतं मरुत्संबन्धिनंगणंसमूहंवन्दस्व नमस्कुरु स्तुहिवा कीदृशंगणं त्वेषंदीप्तं पनस्युं स्तुतियोग्यं अर्किणंअर्चनोपेतं अस्मे अस्माकंइहास्मिन्कर्मणिवृद्धाअसन् मरुतः प्रवृद्धाभवन्तु ॥ वन्दस्व वदिअभिवादनस्तुत्योः अनुपदेशाल्लसार्वधातुकानुदात्तत्वेधातु-

स्वरः । पनस्युं पनचेतिस्तुत्यर्थोधातुः असुन् पनःस्तोत्रं आत्मनइच्छतीतिपनस्युः सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः । अर्किणं ऋचस्तुतौ पुंसिसंज्ञायामितिघः अर्कोस्यास्तीतिअर्की अतइनिठनौ असुन् बहुलंछन्दसीतिशपोलुगभावः इतश्चलोपइतीकारलोपः तिङ्ङतिङइतिनिघातः ॥ १५ ॥

॥ इतिप्रथमस्यतृतीयेसप्तदशोवर्गः ॥ १७ ॥

प्रयदित्थेतिदशर्चंचतुर्थंसूक्तम् घोरपुत्रस्यकण्वस्यार्षम् मरुद्देवताकम् अयुजोबृहत्यः युजःसतोबृहत्यः प्रयद्दशप्रागाथंत्वित्यनुक्रमणिका गतोविनियोगः ।

तत्रप्रथमामृचमाह—

प्रयदि॒त्थापरा॒वतः॑शो॒चिर्नमान॒मस्य॑थ ।
कस्य॒क्रत्वा॑मरुतः॒कस्य॒वर्प॑सा॒कंया॑थ॒कंह॑धूतयः ॥ १ ॥

प्र । यत् । इ॒त्था । प॒रा॒ऽवतः॑ । शो॒चिः । न । मान॑म् । अस्य॑थ ।
कस्य॑ । क्रत्वा॑ । म॒रु॒तः॒ । कस्य॑ । वर्प॑सा । कम् । या॒थ॒ । कम् ।
ह॒ । धू॒त॒यः॒ ॥ १ ॥

हेधूतयः स्थावरादीनांकंपनकारिणोमरुतः यद्यदामानंमननीयंयुष्मद्बलंपरावतोदूरात् आरेपरावतइतिदूरनामसुपाठात् इत्थाअस्मादन्तरिक्षात् प्रास्यथभूमौप्रक्षिपथ तत्रदृष्टान्तः—शोचिर्न तेजइव यथासूर्यस्यतेजोन्तरिक्षाद्भूमौप्रक्षिप्यतेतद्वत् तदानींयूयंकस्ययजमानस्यक्रत्वाक्रतुनासहगच्छथेतिशेषः तथाकस्ययजमानस्यवर्पसः स्तोत्रेणसहगच्छथे कंयजमानमुद्दिश्ययाथदेवयजनदेशेगच्छथ कंह कंखलुयजमानमनुगृह्णीथेतिशेषः॥इत्था था हेतौचच्छन्दसीतिइदंशब्दात्मकारवचनेथाल्प्रत्ययः यदितत्रेदंशब्दस्यनानुवृत्तिः तर्हि थमुप्रत्ययान्तादिदंशब्दादुत्तरस्याविभक्तेर्ल्यत्ययेनसुपांसुलुगितिडादेशः प्रथमपक्षेप्रत्ययस्वरः द्वितीयपक्षेतूदात्तनिवृत्तिस्वरः । अस्यथ असुक्षेपणे अदुपदेशाल्लसार्वधातुकानुदात्तत्वेश्यनोनित्त्वादाद्युदात्तत्वम् यद्वृत्तयोगादनिघातः। क्रत्वा जसादिपुछन्दसिवावचनमितिनाभावस्यविकल्पितत्वादभावः । वर्पसा वृङ्संभक्तौ वृङ्शीङ्भ्यांरूपस्वाङ्गयोःपुट्चेत्यसुन् तत्सन्नियोगेनपुडागमश्च नित्त्वादाद्युदात्तत्वम् अत्ररूपाभिधायिनावर्पसशब्देनदेवतास्वरूपप्रकाशकंस्तोत्रंलक्ष्यते ऋतुनासाहचर्यात् ॥ १ ॥

द्वितीयामृचमाह—

स्थि॒रा वः॑ सन्त्वायु॑धा परा॒णुदे॑ वी॒ळू उ॒त प्र॑ति॒ष्कभे॑ ।
यु॒ष्माक॑मस्तु॒ तवि॑षी॒ पनी॑यसी॒ मा मर्त्य॑स्य मा॒यिनः॑ ॥ २ ॥

स्थि॒रा । वः॒ । स॒न्तु॒ । आयु॑धा । प॒रा॒ऽनुदे॑ । वी॒ळु । उ॒त । प्र॒ति॒ऽस्कभे॑ ।
यु॒ष्माक॑म् । अ॒स्तु॒ । तवि॑षी । पनी॑यसी । मा । मर्त्य॑स्य । मा॒यिनः॑ ॥ २ ॥

हेमरुतः वःआयुधा युष्माकमायुधानिपराणुदे शत्रूणामपनोदनायस्थिरासन्तु स्थिराणिभवन्तु उतअपिच प्रतिष्कभेशत्रूणांप्रतिबन्धायवीळुसन्तुदृढानिसन्तु युष्माकंतविषीबलं पनीयसीअतिशयेनस्तोतव्यंभवतु मायिनः अस्मासुछद्मचारिणोमर्त्यस्यमनुष्यस्यशत्रोर्माबलं माभवतु ॥ स्थिराआयुधा उभयत्रशेश्छन्दसिबहुलमितिशेर्लोपः । पराणुदे णुदप्रेरणे संपदादिलक्षणःक्विप् उपसर्गादसमासेपीतिणत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । वीळु सुपांसुलुगितिविभक्तेर्लुक् ईषाभक्षादित्वात्प्रकृतिभावः । प्रतिष्कभे स्कंभुःसौत्रोधातुः संपदादिलक्षणोभावेक्विप् अनिदितामितिनलोपः । पनीयसी पनतिःस्तुत्यर्थः अस्मादौणादिकःकर्मण्यसुन् ततईयसुनि टेरितिटिलोपः उगितश्चेतिङीप् ईयसुनोनित्त्वादाद्युदात्तत्वम् । मायिनः मायाशब्दस्य व्रीह्यादिषुपाठात् व्रीह्यादिभ्यश्चेतिमत्वर्थीयइनिः ॥ २ ॥

तृतीयामृचमाह—

परा॑ ह॒ यत्स्थि॒रं ह॒थ नरो॑ व॒र्तय॑था गु॒रु ।
वि या॑थन व॒निनः॑ पृथि॒व्या व्याशाः॒ पर्व॑तानाम् ॥ ३ ॥

परा॑ । ह॒ । यत् । स्थि॒रम् । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु । वि ।
या॒थ॒न॒ । व॒निनः॑ । पृ॒थि॒व्याः । वि । आशाः॑ । पर्व॑तानाम् ॥ ३ ॥

हेनरोनेतारोमरुतः यद्यदास्थिरंवस्तुपराहथवृक्षादिकंपराहतंभग्नंकुरुथ गुरु पाषाणादिकंगुरुत्वोपेतंवर्तयथप्रेरयथ तदानींपृथिव्याःसंबन्धिनः वनिनोवनवतोवृक्षान् वियाथन वियुज्यमध्येगच्छथ अरण्यगतानांनिबिडानांवृक्षाणांमध्येयस्यकस्यापिवृक्षस्यभग्नत्वादितरवृक्षाणांपरस्परवियोगेनप्रौढोमार्गोभवति तथापर्वतानामाशाः पर्वतपार्श्वेदिशः विया-

थनविपुज्यगच्छथ ॥ हथ हनहिंसागत्योः अनुदात्तोपदेशेत्यादिनानुनासिकलोपः यद्वृत्तयोगा-
दनिघातः । नरः पादादित्वादामन्त्रितनिघाताभावः । वर्तयथ अदुपदेशाल्लसार्वधातुकानुदात्तत्वे
णिच्स्वरएवशिष्यते यच्छब्दानुषंगान्निघाताभावः । याथन तप्तनप्तनथनाश्चेतिथनादेशः ॥ ३॥

चतुर्थीमृचमाह—

नहिवःशत्रुर्विविदेअधिद्यविनभूम्यांरिशादसः ।
युष्माकमस्तुतविषीतनायुजारुद्रासोनूचिदाधृषे ॥ ४ ॥

नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् ।
रिशादसः । युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः ।
नु । चित् । आऽधृषे ॥ ४ ॥

हेरिशादसःशत्रुहिंसकामरुतः अधिद्यविद्युलोकस्योपरिवोयुष्माकंशत्रुर्नहिविविदेनचबभूव तथाभूम्यामपिशत्रुर्नबभूव हेरुद्रासोरुद्रपुत्रामरुतः युष्माकंएकोनपंचाशत्संख्यानांभवतांयुजायोगेनपरस्परैकमत्येनआधृषेवैरिणांसर्वतोधर्षणायतविषीबलंनूचित्क्षिप्रमेवतनास्तु विस्तृताभवतु ॥ विविदे विदसत्तायां लिटिमत्ययस्वरः । द्यवि नहिविविदेभूम्यांचनविविदेइतिचशब्दार्थमतीतेश्चादिलोपेविभाषेतिमथमायास्तिङ्विभक्तेर्निघातमतिषेधः माथम्यंचानुपक्तक्रियापेक्षया । रिशादसः रिशहिंसायां रिशन्ति हिंसन्तीतिरिशाः इगुपधलक्षणःकः तानदन्तीतिरिशादसः असुन् आमन्त्रितनिघातः । युजा युजिर्योगे ऋत्विगित्यादिनाक्विन् सावेकाचइतिविभक्तेरुदात्तत्वम् । रुद्रासः रुद्रशब्देनतत्सम्बन्धिनोमरुतोलक्ष्यन्ते आज्जसेरसुक् । नूचित् ऋचितुनुघेत्यादिनादीर्घः । आधृषे ञिधृषाप्रागल्भ्ये संपदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

प्रवेपयन्तिपर्वतान्विविञ्चन्तिवनस्पतीन् ।
प्रोआरतमरुतोदुर्मदाइवदेवासःसर्वयाविशा ॥ ५ ॥ १८ ॥

प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् । प्रो इति ।
आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥५॥१८॥

पर्वतान्मेरुहिमवदादीन् प्रवेपयन्ति मरुतःप्रकर्षेणकम्पयन्ति वनस्पतीन् वटाश्वत्थादीन्विविञ्चन्तिपरस्परवियुक्तान्कुर्वन्ति हेमरुतोदेवासोदेवाः सर्वयाविशाप्रजयासहितायूयंप्रोआरतमकर्षेणैवसर्वतोगच्छत तत्रदृष्टान्तः—दुर्मदाइव यथामदोन्मत्ताःस्वेच्छयासर्वतःक्रीडन्तितद्वत् ॥ वेपयन्ति टुवेपृकम्पने वेपमानान्प्रयुङ्क्ते हेतुमण्णिच् । विञ्चन्ति विचिर्पृथग्भावे रुधादित्वाच्छ्नम् श्नसोरल्लोपइत्यकारलोपः । वनस्पतीन् वनानांपतयोवनस्पतयः पारस्करादित्वात्सुट् वनपतिशब्दाद्युदात्तौ उभेवनस्पत्यादिषुयुगपदितिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । आरत ऋगतौ लङि मध्यमबहुवचनेबहुलंछन्दसीतिशपोलुगभावः यद्वा लुङ् सर्तिशास्त्यर्तिभ्यश्चेत्यङ् आडजादीनामित्याडागमःआटश्चेतिवृद्धिः । देवासः आमन्त्रिताद्युदात्तत्वम् । सर्वया सर्वस्यसुपीत्याद्युदात्तत्वम् । विशा सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेऽष्टादशोवर्गः ॥ १८ ॥

षष्ठीमृचमाह—

उपो॒रथे॑षु॒पृष॑तीरयुग्ध्वं॒प्रष्टि॑र्वहति॒रोहि॑तः ।
आवो॒यामा॑यपृथि॒वीचि॑दश्रो॒दबी॑भयन्त॒मानु॑षाः ॥ ६ ॥

उपो॒ इति॑ । रथे॑षु । पृष॑तीः । अ॒यु॒ग्ध्व॒म् । प्रष्टिः॑ । व॒ह॒ति॒ । रोहि॑तः ।
आ । वः॒ । यामा॑य । पृ॒थि॒वी । चि॒त् । अ॒श्रो॒त् । अबी॑भयन्त । मानु॑षाः ॥ ६ ॥

हेमरुतः रथेषुभवदीयेषुपृषतीः बिन्दुयुक्ताहरिणीः उपोसामीप्येनैवअयुग्ध्वं योजितवन्तः प्रष्टिः एवंसंज्ञकोवाहनत्रयमध्यवर्तीयुगविशेषः रोहितःमृगावान्तरजातिर्लोहितवर्णः वहति रथंनयति वोयुष्माकंयामायगमनायपृथिवीचित्अन्तरिक्षमपिअश्रोत्आभिमुख्येनाशृणोत् अनुजानातीत्यर्थः पृथिवीत्यन्तरिक्षनाम पृथिवीभूःस्वयंभ्वितितन्नामसुपाठात् मानुषाः भूलोकवर्तिनः पुरुषाअबीभयन्त स्वयंभीताःसन्तोऽन्येषामपिभीतिमुत्पादितवन्तः ॥ उपोइतिनिपातद्वयसमुदायात्मकमन्यन्निपातान्तरम् ओदितिप्रगृह्यत्वम् । अयुग्ध्वम् लुङि झलोझलीतिसकारस्य लोपः चोःकुरितिकुत्वम् । रोहितः रुहेरश्चलोवेतिइतन्प्रत्ययान्तोनित्त्वादाद्युदात्तः । यामाय यमेर्भावेघञ् कर्षात्वतइत्यन्तोदात्तत्वेप्राप्तेवृषादिषुपाठादाद्युदात्तत्वम् । अश्रोत् श्रुश्रवणे बहुलंछन्दसीतिविकरणस्यलुक् । अबीभयन्त ञिभीभये अस्माण्ण्यन्ताल्लुङि भीस्म्योर्हेतुभयइत्या-

-त्मनेपदम्. बिभेतेर्हेतुभये इत्यात्वस्यविकल्पितत्वात् पक्षे भियोहेतुभयेषुगितिषुकूप्राप्नोति तन्न -क्रियते आगमानुशासनस्यानित्यत्वात् णौचङ्युपधाह्रस्वादि ॥ ६ ॥

सप्तमीमृचमाह—

आवोमक्षूतनायकंरुद्राअवोवृणीमहे ।
गन्तानूनंनोवसायथापुरेत्थाकण्वायबिभ्युषे ॥ ७ ॥

आ । वः । मक्षु । तनाय । कम् । रुद्राः । अवः । वृणीमहे । गन्त । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥ ७ ॥

हेरुद्रारुद्रपुत्रामरुतः तनायकंअस्मदीयपुत्रार्थंमक्षुशीघ्रंवोयुष्मदीयमवोरक्षणंआवृणीमहे सर्वतः प्रार्थयामः मक्ष्विति क्षिप्रनाममक्षुइतितन्नामसुपाठात् पुरापूर्वस्मिन्कालेकर्मान्तरेपुनोवसा अस्मदीयरक्षणेननिमित्तेनयूयंयथाप्राप्तवन्तः इत्थाअनेनप्रकारेणबिभ्युषेभीतियुक्तायकण्वायमेधाविने यजमानायतदनुग्रहार्थंनूनंक्षिप्रंगन्तप्राप्नुत ॥ मक्षु ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिदीर्घः। तनाय तनोतीतितनः पचाद्यच् वृषादित्वादाद्युदात्तत्वम् यद्वा तनयशब्देअयूइत्यस्यलोपश्छान्दसः कमित्येतत्पादान्तेप्रयुज्यमानंपादपूरणं शिशिरंजीवनायकमितिवत् उक्तञ्च—अथापिपदपूरणाःकमीमिद्वितीति । रुद्राः रोदयन्तीतिरुद्राः रोदेर्णिलुक्चेतिरक्प्रत्ययः आमन्त्रिताद्युदात्तत्वम् पादादित्वान्निघाताभावः । गन्त लोटि बहुलंछन्दसीतिशपोलुक् तप्तनप्तनथनाश्चेत्यादिनातबादेशः अतः पित्त्वादनुनासिकलोपाभावः । बिभ्युषे बिभेतेर्लिटःक्वसुः वस्वेकाजाद्घसामितिनियमादिड्भावः चतुर्थ्येकवचने वसोःसम्प्रसारणमितिसम्प्रसारणंपरपूर्वत्वम् शासिवसिघसीनांचेतिषत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

युष्मेषितोमरुतोमर्त्येषितआयोनोअभ्वईषते ।
वितंयुयोतशवसाव्योजसावियुष्माकाभिरूतिभिः ॥ ८ ॥

युष्माऽइंषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ ८ ॥

1 नि० २. १०. ।

हेमरुतः योयःकश्चिदभ्वःशत्रुः युष्मेषितःयुष्माभिःप्रेषितः मर्त्येषितःमारकैरन्यैर्वाप्रेषितःसन् नोस्मान्प्रतिआईषते आभिमुख्येनप्राप्नोति तंशत्रुंशवसाअन्नेनवियुयोतविभक्तंकुरुत तथा ओजसाबलेनवियुयोत युष्माकाभिरूतिभिः युष्मत्सम्बन्धिभीरक्षणैश्चवियुयोत॥युष्मेषितः युष्माभिरिषितः सुब्लुकि प्रत्ययलक्षणेन युष्मदस्मदोरनादेशेइत्यात्वम् नचनलुमताङ्गस्येतिप्रतिषेधः इकोचिविभक्ताविदत्यत्राचूग्रहणेनतस्यपाक्षिकत्वोक्तेः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। मर्त्येषितः पूर्ववत्। अभ्वः आभवतीत्यभ्वःशत्रुः पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। ईषते ईषगतिहिंसादर्शनेषु अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः। युयोत युमिश्रणामिश्रणयोः लोण्मध्यमबहुवचनेबहुलंछन्दसीतिशपःश्लुः तप्तनप्तनथनाश्चेतितबादेशः पित्त्वाद्गुणः। युष्माकाभिः युष्मत्सम्बन्धिनीभिः तस्मिन्नणिचयुष्माकास्माकावितियुष्मच्छब्दस्ययुष्माकादेशः ङीपवृद्धीछान्दसत्वान्नक्रियेते। ऊतिभिः अवतेःक्तिन्ज्वरत्वरेत्यादिनाऊठ् ऊतियूतीत्यादिनाक्तिनउदात्तत्वम्॥ ८॥

नवमीमृचमाह—

असा॑मि॒ हि प्र॑यज्यव॒: कण्वं॑ द॒द प्र॑चेतसः ।
अस॑मिभिर्मरुत॒ आ न॑ ऊ॒तिभि॒र्गन्ता॑ वृ॒ष्टिं न वि॒द्युत॑: ॥ ९ ॥

असा॑मि । हि । प्र॒ऽय॒ज्य॒व॒: । कण्व॑म् । द॒द । प्र॒ऽचे॒त॒स॒: ।
अस॑मिऽभिः । म॒रु॒त॒: । आ । न॒: । ऊ॒तिऽभि॑: । गन्त॑ । वृ॒ष्टिम् ।
न । वि॒ऽद्युत॑: ॥ ९ ॥

असामिहि संपूर्णमेवयथाभवतितथा प्रयज्यवः प्रकर्षेणयष्टव्याः प्रचेतसः प्रकृष्टज्ञानयुक्ताः हेमरुतः कण्वं मेधाविनंयजमानं एतन्नामकमृषिंवाददधारयत हियस्माद्यूयंकण्वनामकमृषिंधारितवन्तः तस्मात्कारणात् असामिभिरूतिभिः सम्पूर्णैरक्षणैर्नोस्मान् प्रत्यागन्तआगच्छत तत्रदृष्टान्तः—वृष्टिंनविद्युतः यथाविद्युतोवृष्टिंगच्छन्तितद्वत्॥ असामि सामिप्यर्धे नसामि असामि अव्ययपूर्वपदप्रकृतिस्वरत्वम्। प्रयज्यवः प्रकर्षेणयष्टव्याः यजिमनिशुन्धिदसिजनिभ्योयुरितिकर्मणियुप्रत्ययः आमन्त्रितनिघातः। दद डुदाञ्दाने लोण्मध्यमबहुवचनस्यतिङांतिङोभवन्तीतिलङात्मनेपदप्रथमपुरुषबहुवचनादेशः श्लौद्विर्भावेसति श्नाभ्यस्तयोरातइतिआकारलोपः लोपस्तआत्मनेपदेष्वितितलोपः अतोगुणेइतिपररूपत्वम्

छन्दस्युभयथेत्यार्धधातुकत्वादभ्यस्तानामादिरित्याद्युदात्तत्वंनभवति किन्तु प्रत्ययस्वरएव हिचेतिनिघातप्रतिषेधः । प्रचेतसः प्रकृष्टंचेतोयेषां आमन्त्रितनिघातः । गन्त गमेर्लोण्मध्यमबहुवचनस्यतस्यतबादेशः बहुलंछन्दसीतिशपोलुक् प्रत्ययस्यपित्त्वादनुदात्तत्वे धातुस्वरः पादादित्वात्तनिघाताभावः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । विद्युतः विद्योतते इतिविद्युत् भ्राजभासेत्यादिनाक्विप् ॥ ९ ॥

दशमीमृचमाह—

असा॒म्योजो॑विभृथासुदान॒वोसा॑मिधूत॒यः॒शर्वः॑ ।
ऋ॒षि॒द्विषे॑मरुतःपरिम॒न्यव॒इषुं॒नसृ॑जत॒द्विषं॑म् ॥ १० ॥ १९ ॥

असा॑मि । ओजः॑ । वि॒भृ॒थ॒ । सु॒ऽदा॒न॒वः॒ । असा॑मि । धू॒त॒यः॒ । शर्वः॑ ।
ऋ॒षि॒ऽद्विषे॑ । म॒रु॒तः॒ । प॒रि॒ऽम॒न्यवे॑ । इषु॑म् । न । सृ॒ज॒त॒ ।
द्विष॑म् ॥ १० ॥ १९ ॥

हेसुदानवः शोभनदानोपेतामरुतः असामिसम्पूर्णमोजोबलंविभृथधारयथ हेधूतयः कम्पनकारिणोमरुतः असामिसम्पूर्णंशवोबलंपरिमन्यवे कोपपरिवृताय ऋषिद्विषेऋषीणां द्वेषंकुर्वते शत्रवेतद्विनाशार्थं द्विषंद्वेषकारिणंहन्तारंसृजत तत्रदृष्टान्तः—इषुंन यथा शत्रोरुपरिबाणंमुञ्चन्तितद्वत् अत्रनिरुक्तम्—असामिसामिप्रतिषिद्धंसामिस्यतेःअसाम्योजोविभृथासुदानवः असुसमाप्तंबलंविभृथकल्याणदानाइति[1] ॥ विभृथ डुभृञ्धारणपोषणयोः जुहोत्यादित्वाच्छ्लुः भृञामिदित्यभ्यासस्येत्वम् । ऋषिद्विषे ऋषीन्द्वेष्टीतिऋषिद्विट् सत्सूद्विषेत्यादिना क्विप् । परिमन्यवे मन्युनापरिवृतः परिमन्युः प्रादिसमासे परेरभितोभाविमण्डलमित्युत्तरपदान्तोदात्तत्वम् । इषुं इषगतौ इष्यतिगच्छतीतीषुः इषेःकिच्चेतिउप्रत्ययः धान्येनिदित्यनुवृत्तेर्नित्त्वादाद्युदात्तत्वम् । सृजत सृजविसर्गे विकरणस्यङित्त्वाद्गुणाभावः । द्विषं क्विप्चेतिक्विप् ॥ १० ॥

॥ इतिप्रथमस्यतृतीयएकोनविंशोवर्गः ॥ १९ ॥

उत्तिष्ठेत्यष्टर्चंपञ्चमंसूक्तं कण्वस्यार्षंबार्हतम् युजःसतोबृहत्यः अयुजोबृहत्यः ब्रह्मणस्पतिदेवताकम् अनुक्रम्यतेच—उत्तिष्ठाष्टौब्राह्मणस्पत्यमिति । सूक्तविनियोगोलैङ्गिकः चतुर्वि-

[1] नि० ६. २३.

शेहनिमरुत्वतीयेप्रारुतावब्राह्मणस्पत्याव प्रगाथात्पूर्वंउत्तिष्ठब्रह्मणस्पतइत्ययंप्रगाथः प्ररुत्वतीयइतिखण्डेसूत्रितम्—मैतुब्रह्मणस्पतिरुत्तिष्ठब्रह्मणस्पतइतिब्राह्मणस्पत्यावावपतेपूर्वौनित्यादिति आग्नातुप्रवर्ग्येप्यभिष्टवेविनियुक्ता उत्तिष्ठब्रह्मणस्पतइत्येतामुक्त्वावतिष्ठतइतिसूत्रितत्वात्।

तत्रप्रथमामृचमाह—

उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे।
उपप्रयंन्तुमरुतःसुदानवइन्द्रंप्राशूर्भवासचा॥१॥

उत्। तिष्ठ। ब्रह्मणः। पते। देवऽयन्तः। त्वा। ईमहे। उप। प्र। यन्तु। मरुतः। सुऽदानवः। इन्द्र। प्राशूः। भव। सचा॥१॥

हेब्रह्मणस्पते एतन्नामक देव उत्तिष्ठ अस्मदनुग्रहायत्वदीयनिवासादुत्थानंकुरु देवयन्तोदेवान्कामयमानावयं त्वात्वामीमहे याचामहे सुदानवः शोभनदानयुक्तामरुतः उपप्रयन्तु समीपेप्रकर्षेणगच्छन्तु हेइन्द्र त्वं सचाब्रह्मणस्पतिनासहप्राशूः सोमस्यप्राशकोभव यद्वा वृत्रस्यहिंसकोभव॥ उत्तिष्ठ ऊर्ध्वकर्मत्वादात्मनेपदाभावः। ब्रह्मणस्पते सुबामन्त्रितइति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम्। देवयन्तः देवानात्मनइच्छन्तः सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतीत्वस्येवदीर्घस्यापिनिषेधः अश्वाघस्यादिति पुनरात्वविधानसामर्थ्यात्। ईमहइत्यादयोगताः। प्राशूः शॄहिंसायां प्रकर्षेण आसमन्तात् शृणातिहिनस्तीतिप्राशूः बहुलंछन्दसीत्युत्वम् वोरुपधायादीर्घः कृदुत्तरपदप्रकृतिस्वरत्वम्। भव द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम्॥१॥

द्वितीयामृचमाह—

त्वामिद्धिसंहसस्पुत्रमर्त्यउपब्रूतेधनेंहिते।
सुवीर्यंमरुतआस्वश्व्यंदधीतयोवआचके॥२॥

त्वाम्। इत्। हि। सहसः। पुत्र। मर्त्यः। उपऽब्रूते। धने। हिते। सुऽवीर्यम्। मरुतः। आ। सुऽअश्व्यम्। दधीत। यः। वः। आऽचके॥२॥

हेसहसस्पुत्र बलस्यबहुपालक ब्रह्मणस्पते पुत्रःपुरुत्रायतेनिपरणाद्वेतिनिरुक्तम् । मर्त्योमनुष्यः हितेशत्रुपुरक्षिप्तेधनेनिमित्तभूतेसति त्वामिव त्वामेवोपब्रूतेहि समीपंप्राप्य स्तौतिखलु तद्धनसंपादनायप्रार्थयतइत्यर्थः हेमरुतः योधनार्थीमर्त्यः वोयुष्मान्ब्रह्मणस्पतिसहितान् आचके स्तौति समर्त्यः स्वश्व्यंशोभनाश्वयुक्तं सुवीर्यंशोभनवीर्ययुक्तंचधनंदधीतधारयेत् ॥ सहसस्पुत्र ब्रह्मणस्पते इतिवष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् । उपब्रूते हिचेतिनिघातप्रतिषेधः तिङिचोदात्तवतीतिगतेरनुदात्तत्वम् । हिते निष्ठायां दधातेर्हिरितिहिरादेशः । सुवीर्यं शोभनंवीर्यंयस्येतिबहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । स्वश्व्यं अश्वानां समूहोश्वीयं केशाश्वाभ्यांयञ्छावन्यतरस्यामितिसमूहार्थेछप्रत्ययः छस्य ईयादेशः शोभनमश्वीयंयस्यतत्स्वश्व्यम् ईकारलोपश्छान्दसः परादिश्छन्दसिबहुलमिति उत्तरपदाद्युदात्तत्वम् । दधीत सीयुटःसकारस्यलोपेसतिअभ्यस्तानामादिरित्याद्युदात्तत्वम् पादादित्वान्निघाताभावः । आचके कैगैशब्दे आदेचइत्यात्वम् लिटिद्विर्वचनेअभ्यासस्यह्रस्वचुत्वे आतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः ॥ २ ॥

चतुर्विंशेहनिमरुत्वतीयेउत्तिष्ठब्रह्मणस्पतेइत्यस्माव्प्रगाथात्पूर्वं प्रैतुब्रह्मणस्पतिरित्ययंप्रगाथोविनियुक्तः सूत्रंतूत्तिष्ठब्रह्मणस्पतइत्यत्रैवोदाहृतम् महावीरमादायशालांप्रतिगच्छत्सु प्रैतुब्रह्मणस्पतिरित्येतांपठन्होतानुगच्छेत् सूत्रञ्च प्रैतुब्रह्मणस्पतिरित्यनुव्रजेदिति एषैवाग्नीषोमीयप्रणयनेपिविनियुक्ता सूत्रितंच—प्रैतुब्रह्मणस्पतिर्होतादेवोअमर्त्यइति ।

तामेतांसूक्तेतृतीयामृचमाह—

प्रैतु॒ब्रह्म॑ण॒स्पतिः॒प्रदे॒व्ये॑तु॒सू॒नृता॑ ।
अच्छा॑वी॒रंनर्यं॑प॒ङ्क्तिरा॑धसंदे॒वाय॒ज्ञंन॑यन्तु॒नः ॥ ३ ॥

प्र । ए॒तु॒ । ब्रह्म॑णः । पतिः॑ । प्र । दे॒वी । ए॒तु॒ । सू॒नृता॑ । अच्छ॑ । वी॒रम् । नर्य॑म् । प॒ङ्क्तिऽरा॑धसम् । दे॒वाः । य॒ज्ञम् । न॒य॒न्तु॒ । नः॒ ॥३॥

ब्रह्मणस्पतिर्देवःप्रैतुअस्मान्प्राप्नोतु सूनृतादेवीप्रियसत्यरूपावाग्देवताप्रैतुअस्मान्प्राप्नोतु देवाः ब्रह्मणस्पत्यादयोदेवाःवीरंशत्रूंनिःशेषेणदूरेप्रेरयन्तु तंनर्यंमनुष्येभ्योहितंपङ्क्तिराधसंप्राल-णोक्तहविष्पङ्क्त्यादिभिःसमृद्धंयज्ञंप्रति नोस्मान्अच्छआभिमुख्येननयन्तु ॥ प्रैतु एङिपररू-

१ नि० २. ११. १

पमितिपररूपेप्राप्ते एत्येधत्यूठ्सुइतिवृद्धिः । देव्येत्यित्यत्र उदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येतिस्वरितत्वम् । नर्यं नरेभ्योहितम् प्राक्क्रीतीयउगवादिलक्षणोयत्प्रत्ययोद्रष्टव्यः । पङ्क्तिराधसं पङ्क्तिभीराध्नोतीतिपङ्क्तिराधाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुन्पूर्वपदप्रकृतिस्वरत्वंच । यज्ञं यजयाचेत्यादिनायजतेर्नङ् ॥ ३ ॥

चतुर्थीमृचमाह—

योवाघतेददातिसूनरंवसुसधत्तेअक्षितिश्रवः ।
तस्माइळांसुवीरामायजामहेसुप्रतूर्तिमनेहसम् ॥ ४ ॥

यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति ।
श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे ।
सुऽप्रतूर्तिम् । अनेहसम् ॥ ४ ॥

योयजमानोवाघतेऋत्विजेसूनरंसुष्ठुनेतव्यंवसुधनंददाति सयजमानोब्रह्मणस्पतेःप्रसादादक्षितिक्षयरहितंश्रवोन्नंधत्तेधारयति तस्मैतादृशाययजमानायइळांएतन्नामधेयांमनोःपुत्रीं इडावैमानवीयज्ञानूकाशिन्यासीदितिश्रुत्यन्तरात् । आयजामहे वयमृत्विजःसर्वतोयजामः कीदृशीमिळां सुवीरांशोभनैर्वीरैर्भटैर्युक्तां सुप्रतूर्तिंसुष्ठुप्रकर्षेणहिंसाकारिणीम् अनेहसं केनाप्यहिंस्याम् ॥ ददाति अनुदात्तेचेत्यभ्यस्तस्याद्युदात्तत्वम् यद्वृत्तयोगादनिघातः । सूनरं सुखेननीयतइतिसूनरम् ईषद्दुःसुष्वितिखल् निपातस्यचेत्युपसर्गस्यदीर्घत्वम् । अक्षिति क्षयोनास्त्यस्येत्यक्षिति बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् नञ्सुभ्यामितिवुसर्वेविधयश्छन्दसिविकल्प्यन्तेइतिवचनान्नप्रवर्तते । श्रवः श्रूयतइतिश्रवः श्रुश्रवणे असुनोनित्स्वादाद्युदात्तत्वम् । सुवीराम् शोभनावीरायस्याःसासुवीरा तां वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । सुप्रतूर्तिम् तुर्वीहिंसार्थः प्रपूर्वादस्मात्क्तिन् शोभनाप्रतूर्तिःशत्रूणांहिंसनंयस्याःसा तां परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् ऋत्वादिर्वाद्रष्टव्यः । अनेहसं नहन्यतइत्यनेहाः नञिहनएहचेत्यसुन्प्रत्ययःधातोरेहादेशश्च नलोपोनञइतिनकारस्यलोपः तस्मान्नुडचीतिनुट् ॥ ४ ॥

अग्निष्टोमेमरुत्वतीयशस्रेइन्द्रनिहवप्रगाथानन्तरंप्रनूनमितिप्रगाथः मरुत्वतीयेनेतिखण्डेसूत्रितम्—प्रनूनंब्रह्मणस्पतिरितिब्राह्मणस्पत्यइति ।

१ तै० ब्रा० १. १. २. ।

प्रगाथेप्रथमांसूक्तेपञ्चमीमृचमाह--

प्रनूनंब्रह्मणस्पतिर्मन्त्रंवदत्युक्थ्यम् ।
यस्मिन्निन्द्रोवरुणोमित्रोअर्यमादेवाओकांसिचक्रिरे ॥ ५॥२०॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् । यस्मिन् ।
इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे॥५॥२०

ब्रह्मणस्पतिर्देवः उक्थ्यंशस्त्रयोग्यंमन्त्रंनूनमवश्यंप्रवदति होतृमुखेस्थितःसन्प्रब्रूते यस्मिन्म-न्त्रेइन्द्रादयश्चसर्वेदेवाःओकांसिस्थानानिचक्रिरे तादृशंसर्वदेवप्रतिपादकंमन्त्रमितिपूर्वत्रान्वयः ॥ मन्त्रं मन्त्रिगुप्तभाषणे पचाद्यच् वृषादिषुपाठावआद्युदात्तत्वम् । उक्थ्यं उक्थार्हं छन्दसिचेत्यर्हार्थेयप्रत्ययः यद्वा भवेछन्दसीतियत् सर्वेविधयश्छन्दसिविकल्प्यन्तेइतिवचनाद्यतोनावइत्याद्युदात्तत्वाभावेव्यत्ययेनतित्स्वरितमितिस्वरितत्वम् । ओकांसि उचसमवाये समवयन्त्यत्रेत्यधिकरणेऔणादिकोसुन् बहुलग्रहणात्कुत्वंप्रष्टव्यमितिओकउचःकइत्यत्रवृत्तावित्युक्तम् । चक्रिरे इरेचश्चित्त्वादन्तोदात्तत्वम् यद्वृत्तयोगादनिघातः ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेविंशोवर्गः ॥ २० ॥

षष्ठीमृचमाह—

तमिद्वोचेमाविदथेषुशंभुवंमन्त्रंदेवाअनेहसम् ।
इमांचवाचंप्रतिहर्यथानरोविश्वेद्वामावोअश्नवत् ॥ ६ ॥

तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः ।
अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः ।
विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

हेदेवाब्रह्मणस्पतिप्रभृतयः तमित् तमेवेन्द्रादिसर्वदेवताप्रतिपादकंमन्त्रंविदथेषुयज्ञेषुवोचेमवयमृत्विजोब्रवाम कीदृशं शम्भुवं सुखस्यभावयितारं अनेहसं अहिंसनीयंदोषरहितंहेनरोनेतारोदेवाः इमामस्माभिरुच्यमानांमन्त्ररूपांवाचंप्रतिहर्यथच यूयंकामयध्वेचेत्तर्हिविश्वेत्सर्वापिवामा वननीयावाक्वोयुष्मानश्नवत्व्याप्नुयात् ॥ वोचेम वचपरिभाषणे आशीर्लिङि लिङ्याशिष्यङित्यङ् वचउमित्युमागमः छन्दस्युभयथेतिसार्वधातुकत्वात् लिङःसलोपोनन्त्यस्येतियासुटःसकारस्य

लोपः अतोयेयइतीयादेशःआद्गुणः तिङ्तिङइतिनिघातः। विदथेषु विदथाने विद्यतेफलसाधनत्वे-नज्ञायतेइतिविदथोयज्ञः रुविदिभ्यांकिदित्यथप्रत्ययः। शम्भुवम् भवतेरन्तर्भावितण्यर्थात् क्विप्चेतिक्विप् ओःसुपीतियणादेशस्य नभूसुधियोरितिप्रतिषेधः। मन्त्रादयोगताः। प्रतिहर्यथ हर्य-गतिकान्त्योः शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणाद्युदात्तत्वम् इमांचेत्यत्रचशब्द-श्चेदर्थः। चणितिनिपातान्तरम् नचसमुच्चयार्थश्चकारः तेननिपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणइ-तिनिघातप्रतिषेधः। अश्नवत् अशूव्याप्तौ लेटचडागमः व्यत्ययेनपरस्मैपदं इतश्चलोपइतीकार-लोपः इयङुवङ्भ्यांगुणवृद्धीभवतोविप्रतिषेधेनेतिगुणः ॥ ६ ॥

सप्तमीमृचमाह—

कोदे॒व॒यन्त॑मश्नव॒ज्जनं॒कोवृ॒क्तब॑र्हिषम् ।
प्रप्र॑दा॒श्वान्प॒स्त्या॑भिरस्थितान्त॒र्वाव॒त्क्षयं॑दधे ॥ ७ ॥

कः । दे॒व॒ऽयन्त॑म् । अ॒श्न॒व॒त् । जन॑म् । कः । वृ॒क्तऽब॑र्हिषम् ।
प्रऽप्र॑ । दा॒श्वान् । प॒स्त्या॑भिः । अ॒स्थि॒त॒ । अ॒न्तः॒ऽवाव॑त् ।
क्षय॑म् । द॒धे ॥ ७ ॥

देवयन्तंदेवान्कामयमानंजनंकः अश्नवत् ब्रह्मणस्पतिव्यतिरिक्तःकोनामदेवोव्याप्नुयात् त-थावृक्तबर्हिषं अनुष्ठानायछिन्नबर्हिषंयजमानंकोनामान्योदेवोश्नवत् दाश्वान्हविर्दत्तवान् यजमानः पस्त्याभिःमनुष्यैर्ऋत्विग्भिःसह प्रप्रास्थितदेवयजनदेशंप्रतिप्रस्थितवान् अन्तर्वावत् अन्तःस्थितं बहुधनोपेतं यद्वा अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधगुणोपेतंक्षयंनिवासस्थानं गृहंदधेधृतवान् भवति॥ देवयन्तमित्यादयोगताः। प्रप्र प्रसमुपोदःपादपूरणेइतिप्रशब्दस्यद्विर्भावः अनुदात्तंचेत्याम्रेडितानुदात्तत्वम् । अस्थित ष्ठागतिनिवृत्तौ लुङि समवप्रविभ्यःस्थइत्यात्म-नेपदम् स्थाघ्वोरिच्चेतिधातुसिचोरित्वकित्त्वे ह्रस्वादङ्गादितिसलोपः । अन्तर्वावत् वागतिग-न्धनयोः अन्तर्वान्तिगच्छन्तीतिअन्तर्वाःपुत्रपश्वादयः आतोमनिन्क्विन्पादिनाविच् तदस्या-स्तीतिमतुप् मतुपःपित्त्वादनुदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् यद्वा वावदीनःक्विप् । क्षयं क्षि-यन्तिनिवसन्त्यस्मिन्नितिक्षयः पुंसिसंज्ञायामित्यधिकरणेघः क्षयोनिवासइत्याद्युदात्तत्वम् ॥७॥

अष्टमीमृचमाह—

उप॑क्ष॒त्रंपृ॑ञ्ची॒तह॒न्ति॒राज॑भि॒र्भ॒येचि॑त्सुक्षि॒तिंद॑धे ।
नास्य॑व॒र्तान॑त॒रु॒ता॒म॑हाध॒नेनार्भे॑अस्तिव॒ज्रिणः॑ ॥ ८ ॥ २१ ॥

उप । क्षत्रम् । पृञ्चीत । हन्ति । राजऽभिः । भये । चित् ।
सुऽक्षितिम् । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने ।
न । अर्भे । अस्ति । वज्रिणः ॥ ८ ॥ २१ ॥

ब्रह्मणस्पतिर्देवः क्षत्रंबलंउपपृञ्चीतस्वात्मनिसंपृक्तंकुर्यात् ततोराजभिर्वरुणादिभिःसह हन्ति शत्रून्मारयति भयेचिद्भीतिहेतावपियुद्धेपिसुक्षितिंदधे सुष्ठुनिवासस्थैर्यंधारयतिनतुपलायते वज्रिणोवज्राद्यायुधवतोस्यब्रह्मणस्पतेर्महाधनेप्रभूतधननिमित्तयुद्धेवर्ताप्रवर्तयिताअन्यः कोपिनास्ति स्वयमेवप्रवर्ततइत्यर्थः महाधनइतिसंग्रामनाम महाधनेसमीकेइतितन्नामसुपाठात् तथा तरुता तरणस्योल्लङ्घनस्यकर्ताअन्यःकोपिनास्ति तथैवार्भेस्वल्पेयुद्धेप्यन्यःप्रवर्तयितानास्ति॥पृञ्चीत पृचीसंपर्के लङिरुधादित्वाच्छ्नम् श्नसोरल्लोपइतिअकारलोपः प्रत्ययस्वरः। क्षत्रंपृञ्चीतराजभिर्हन्तिचेतिसमुच्चयलक्षणस्यचार्थस्यदर्शनाच्चादिलोपेविभाषेतिप्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः हन्तीत्येषाद्वितीयापितिङ्ःपरत्वान्ननिहन्यते। सुक्षितिः शोभनाक्षितिः सुक्षितिः मन्क्तिन्नित्यादिनोत्तरपदान्तोदात्तत्वम्। वर्ता वर्ततेर्वृणोतेर्वातृच् छिश्चागमानुशासनस्यानित्यत्वादिड्भावः। तरुता तॄप्लवनतरणयोः ग्रसितस्कभितेत्यादिनातृच्युडागमोनिपातितः चितइत्यन्तोदात्तत्वम्। महाधने महच्चधनंचमहाधनम् आन्महतइत्यात्वम् तेनशब्देनतद्धेतुभूतःसंग्रामोलक्ष्यते। अर्भे ऋगतौ अर्तिगृभ्यांभन्निति भन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ ८ ॥

॥इतिप्रथमस्यतृतीयेएकविंशोवर्गः ॥ २१ ॥

यंरक्षन्तीतिनवर्चंषष्ठंसूक्तम् तत्रानुक्रमणम्—यंरक्षन्तिनववरुणमित्रार्यम्णांमध्येतृचआदित्येभ्योगायत्रंहीति। घोरपुत्रःकण्वऋषिः इदमादीनित्रीणिसूक्तानिगायत्राणि आद्यन्तयोस्तृचयोर्वरुणमित्रार्यमणोदेवताः मध्यतृचस्यसुगःपन्थाइत्यस्यादित्यादेवताः गतोविनियोगः।

तत्रप्रथमामृचमाह—

यंरक्षन्तिप्रचेतसोवरुणोमित्रोअर्यमा। नूचित्सदभ्यतेजनः ॥ १ ॥

यम् । रक्षन्ति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नु ।
चित् । सः । दभ्यते । जनः ॥ १ ॥

प्रचेतसः प्रकृष्टज्ञानयुक्तावरुणादयोदेवायंयजमानंरक्षन्ति सजनोयजमानोनूचिवक्षिप्रमेवदभ्यते दभ्नोति शत्रून्हिनस्ति ॥ प्रचेतसः प्रकृष्टंचेतोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । नूचित् ऋचितुनुघेत्यादिनादीर्घः । दभ्यते दम्भुदम्भे व्यत्ययेनश्यन् आत्मनेपदंच ॥ १ ॥

द्वितीयामृचमाह—

यंबा॒हुते॑व॒पिप्र॑ति॒पान्ति॒मर्त्यं॑रि॒पः । अरि॑ष्ट॒ःसर्व॑एधते ॥ २ ॥

यम् । बा॒हुता॑ऽइव । पिप्र॑ति । पान्ति॑ । मर्त्य॑म् । रि॒पः । अरि॑ष्टः ।
सर्वः॑ । ए॒ध॒ते ॥ २ ॥

यंयजमानं पिप्रतिवरुणादयोदेवाःधनैःपूरयन्ति तत्रदृष्टान्तः—बाहुतेव स्वकीयोबाहुवर्गोपेक्षितंधनमानीययथापूरयति तद्वत् तथायंमर्त्यंमनुष्यं यजमानं रिपोहिंसकात् पान्तिरक्षन्तिससर्वोयजमानः अरिष्टः केनाप्यहिंसितःसन् एधतेवर्धते ॥ बाहुतेव बाहुताबाहुत्वं भाववाचिनानेनशब्देन बाहवस्तदाश्रयालक्ष्यन्ते यद्वा समूहार्थेतल्प्रत्ययोद्रष्टव्यः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । पिप्रति पॄपालनपूरणयोः पृइत्येके जुहोत्यादित्वाच्छ्लुः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अभ्यस्तानामादिरित्याद्युदात्तत्वम्।पान्ति तिङःपरत्वात्पादादित्वाद्वानिघाताभावः।रिपः रिपहिंसायाम् क्विप्चेतिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । अरिष्टः रिषहिंसायाम्.एकाचइतीट्प्रतिषेधः प्रश्चादिनाषत्वम्, नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्.॥ २ ॥

तृतीयामृचमाह—

विदु॒र्गा॑विद्विषः॑पु॒रोघ्नन्ति॒राजा॑नएषाम् । नय॑न्ति॒दु॒रि॒ता॒ति॒रः ॥ ३ ॥

वि । दुः॒ऽगा । वि । द्विषः॑ । पुरः॑ । घ्नन्ति॑ । राजा॑नः । ए॒षा॒म् ।
नय॑न्ति । दुः॒ऽइ॒ता । ति॒रः ॥३॥

राजानोवरुणादयएषां स्वकीययजमानानांपुरः पुरस्ताद्दुर्गागन्तुंदुःशकानि शत्रुनगराणि विघ्नन्तिविशेषेणनाशयन्ति तथा द्विषःशत्रूनपिविघ्नन्ति तथा दुरितायजमानसम्बन्धीनिदुरितानि तिरोनयन्ति विनाशं प्रापयन्ति ॥ दुर्गा दुःखेनगच्छन्त्यत्रेतिदुर्गाणि सुदुरोरधिकरणेड्ढनिगमेडप्रत्ययः शेश्छन्दसिबहुलमितिशेर्लोपः । पुरः कालवाचिनःपूर्वशब्दात्सप्तम्यर्थे पूर्वाधरावराणामिति असिप्रत्ययः तत्सन्नियोगेनपूर्वशब्दस्यपुरादेशश्च प्रत्ययस्वरः । घ्नन्ति हन्तेर्लट् अदादित्वाच्छपोलुक् गमहनेत्यादिनोपधालोपः होहन्तेरितिघत्वम् अन्तादेशस्योपदेशवचनादाद्युदात्तत्वम् पादादित्वादनिघातः ॥ ३ ॥

चतुर्थीमृचमाह—

सुगःपन्थांअनृक्षरआदित्यासऋतंयते । नात्रांवखादोअंस्तिवः ॥४॥

सुऽगः । पन्थाः । अनृक्षरः । आदित्यासः । ऋतम् । यते । न ।
अत्रं । अवऽखादः । अस्ति । वः ॥ ४ ॥

हेआदित्यासोऋतंयते यज्ञंगच्छते भवत्समूहायपन्थामार्गः सुगःसुष्ठुगन्तुंशक्यः अनृक्षरः कण्टकरहितश्च अत्रास्मिन्कर्मणिवोयुष्माकं अवखादः अवमन्तव्यःखादोजुगुप्सितहविर्विशेषोनास्ति तस्मादिहागन्तव्यमित्यर्थः ॥ सुगः सुदुरोरधिकरणेइतिगमेर्डप्रत्ययः । पन्थाः पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम् । अनृक्षरः ऋपीगतौ ऋपन्ति अन्तर्गच्छन्तीत्यृक्षराःकण्टकाः तन्यृपिभ्यांक्सरन्इतिक्सरन्प्रत्ययः किस्वाद्गुणाभावः कत्वपत्वे यास्कस्त्वाह—ऋक्षरःकण्टकऋच्छतेरिति[1] । नविद्यन्तेऋक्षराअस्मिन्नित्यनृक्षरः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। आदित्यासः अदितेः पुत्राआदित्याः दित्यदित्यादित्येत्यादिना ण्यप्रत्ययः आज्जसेरसुक् आमन्त्रिताद्युदात्तत्वम् पादादित्वादाष्टमिकनिघाताभावः।यते इण्गतौ लटःशतृ अदादित्वाच्छपोलुक् इणोयणितियणादेशः शतुरनुमइतिविभक्तेरुदात्तत्वम् । अवखादः खादृभक्षणे भावेघञ् अवमतःखादोवखादः थाथादिना उत्तरपदान्तोदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

यंयुज्ञंनयंथानरआदित्याऋजुनांपथा । प्रवःसधीतयेनशत् ॥५॥२२॥

यम् । यज्ञम् । नयंथ । नरः । आदित्याः । ऋजुना । पथा ।
प्र । वः । सः । धीतयें । नशत् ॥ ५ ॥ २२ ॥

हेनरोनेतारआदित्याः यंयज्ञंऋजुनापथा अविकलेनमार्गेणनयथपारंप्रापयथ सयज्ञः वोधीतयेयुष्मत्पानायउपभोगायप्रणशत् प्राप्नोतु ॥ नयथ अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः यद्वृत्तयोगादनिघातः अन्येषामपिदृश्यतइतिसंहितायांदीर्घत्वम् । पथा तृतीयैकवचने भस्यटेर्लोपइतिटिलोपः अनुदात्तस्यचयत्रोदात्तलोपइतिविभक्तेरुदात्तत्वम् । धीतये धेट्पाने आदेचइत्यात्वम् किचि घुमास्थेतीत्वम् । नशत् नशतिर्गत्यर्थः लेटचडागमः इतश्चलोपइतीकारलोपः ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेद्वाविंशोवर्गः ॥ २२ ॥

[1] नि० ९. ३२ ।

षष्ठीमृचमाह—

सरत्नंमर्त्योवसुविश्वंतोकमुतत्मना । अच्छागच्छत्यस्तृतः ॥ ६ ॥

सः । रत्नम् । मर्त्यः । वसु । विश्वम् । तोकम् । उत । त्मना ।
अच्छ । गच्छति । अस्तृतः ॥ ६ ॥

हेआदित्याः सतादृशोभवद्भिरनुगृहीतोमर्त्योमनुष्योयजमानः अस्तृतः केनाप्यहिंसितःसन् रत्नंरमणीयं विश्वंवसु सर्वधनं अच्छआभिमुख्येनगच्छतिप्राप्नोति उतअपिच त्मनात्मनासदृशंतोकमपत्यंगच्छति ॥ त्मना मन्त्रेष्वाङ्यादेरात्मनइतिआकारलोपः । अच्छ निपातस्यचेतिदीर्घत्वम् । अस्तृतः स्तृञ्हिंसायाम् नस्तृतः अस्तृतः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

कथाराधामसखायःस्तोमंमित्रस्यार्यम्णः । महिप्सरोवरुणस्य ॥ ७॥

कथा । राधाम । सखायः । स्तोमम् । मित्रस्य । अर्यम्णः ।
महि । प्सरः । वरुणस्य ॥ ७ ॥

हेसखायः सखिभूताऋत्विजः मित्रादीनां त्रयाणां महि महत्व प्सरोरूपं अतस्तदनुरूपंस्तोमंस्तोत्रं कथाकेनप्रकारेणराधामसाधयामः ॥ कथा थाहेतौचच्छन्दसीतिकिंशब्दात्प्रकारवचनेथुप्राग्दिशोविभक्तिरितिविभक्तिसंज्ञायां किमःकइतिकादेशः प्रत्ययस्वरः । राधाम राधसाधसंसिद्धौ लेटिबहुलंछन्दसीतिविकरणस्यलुक् तिङ्ङतिङइतिनिघातः । स्तोमं ष्टुञ्स्तुतौ अर्तिस्तुसुहुस्त्रित्यादिनामन् नित्वादाद्युदात्तत्वम् । अर्यम्णः षष्ठ्येकवचने अल्लोपोनइत्यकारलोपेउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । महि महपूजायां औणादिकइन्प्रत्ययः । प्सरः प्साभक्षणे प्सातिभक्षयतीतिप्सरोरूपम् औणादिकोऽरप्रत्ययः ॥ ७ ॥

अष्टमीमृचमाह—

मावोघ्नन्तंमाशपन्तंप्रतिवोचेदेवयन्तम् । सुम्नैरिद्वआविवासे॥८॥

मा । वः । घ्नन्तम् । मा । शपन्तम् । प्रति । वोचे । देवऽयन्तम् ।
सुम्नैः । इत् । वः । आ । विवासे ॥ ८ ॥

हेमित्रादयोदेवाः देवयन्तं देवान्कामयमानंयजमानं यःशत्रुर्हन्ति घ्नन्तंतादृशंशत्रुंवोयुष्मभ्यंमामतिवोचे दुरुक्तकथनभीत्याअहंनकथयामि तथा यजमानंयःशत्रुःशपतितमपिशपन्तं मामतिवोचेभवद्भिरेवविचार्यंशिक्षणीयइत्यर्थः अहंतुसुम्नैरिव धनैरेववोयुष्मानाविवासे सर्वतःपरिचरामि॥ घ्नन्तं हन्तीतिघ्नन् गमहनेत्यादिनाउपधालोपः होहन्तेरितिकुत्वे प्रत्ययस्वरः। शपन्तं शपआक्रोशे अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः। वोचे ब्रूञ्व्यक्तायांवाचि माङि लुङि इटि ब्रुवोवचिरितिवचिः अस्यतिवक्तीत्यादिनाच्लेरङादेशः वचउमित्युमागमः नमाङ्योगे इत्यडभावः। देवयन्तं सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतिईत्वप्रतिषेधः। सुम्नैः म्नाअभ्यासे सुष्ठुम्नायतेअभ्यस्यतइतिसुम्नम् आतश्चोपसर्गेइतिकप्रत्ययः आतोलोपइटिचेत्याकारलोपः। विवासे विवासतिःपरिचरणकर्मा॥ ८॥

नवमीमृचमाह—

चतुरश्चिद्ददमानाद्बिभीयादानिधातोः। नदुरुक्तायस्पृहयेत्॥९॥२३॥

चतुरः। चित्। ददमानात्। बिभीयात्। आ। निऽधातोः।
न। दुःऽउक्ताय। स्पृहयेत्॥ ९॥ २३॥

घ्नन्तंशपन्तंचमामतिवोचइतियदुक्तंतत्रोपपत्तिरुच्यते दुरुक्तायनस्पृहयेत् दुष्टंवाक्यंनकामयेत किन्तु दुरुक्ताद्बिभीयात् तत्रावशिष्टोमन्त्रभागःसर्वोपिदृष्टान्तः—चिदित्युपमार्थेवर्तते अक्षद्यूतंकुर्वतोरुभयोर्मध्येयःपुमान्चतुरः चतुःसंख्याकान्कपर्दकान्ददमानात् ददतोहस्तेधारयतः पुरुषादानिधातोःकपर्दकनिपातपर्यन्तंबिभीयात् अस्यजयोभविष्यतिनभविष्यतीतिअन्योभीतिंमाप्नुयात् अत्रयथाभयं तथादुरुक्ताद्भेतव्यमितिधर्मरहस्यम्। तस्मादहंघ्नन्तंशपन्तं मामतिवोचेइत्यभिप्रायः अत्रनिरुक्तम्—चतुरोक्षान्धारयतइतितद्यथाकितवाद्बिभीयादेवमेवदुरुक्ताद्बिभीयान्नदुरुक्तायस्पृहयेदिति[1]॥ चतुरः चतुरःशसोतिविभक्तेःपूर्वस्योदात्तत्वम्। ददमानात् दददाने अत्रधारणार्थः शपःपित्त्वादनुदात्तत्वम् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेनशानजनुदात्तः धातुस्वरएवशिष्यते। बिभीयात् ञिभीभये लिङि जुहोत्यादित्वात्शपःश्लुः यासुटउदात्तत्वम् पादादित्वान्निघाताभावः। निधातोः निपूर्वाद्दधातेः सितनिगमीत्यादिनाभावेतुन्प्रत्ययः व्यत्ययेनाद्युदात्तत्वम् तादौचेनिगतिस्वरोनभवति अतावितिपर्युदस्तत्वात्। दुरुक्ताय स्पृहेरीप्सितः

१ नि० ११. २३.। २ नि० ३. १६.।

तिसम्प्रदानसंज्ञायांचतुर्थीसम्प्रदानेइतिचतुर्थी । स्पृहयेव् स्पृहईप्सायां चुरादिरदन्तः अतोलोप-स्यस्थानिवद्भावाल्लघूपधगुणाभावः ॥ ९ ॥

॥ इतिप्रथमस्यतृतीयेत्रयोविंशोवर्गः ॥ २३ ॥

संपूषन्नितिदशर्चंसप्तमंसूक्तम् काण्वंगायत्रंपूषदेवताकम् संपूषन्दशपौष्णमित्यनुक्रान्त-म् । स्मार्तेमहान्तमध्वानमेष्यन्निदंसूक्तंजपेव्—संपूषन्नध्वनइतिमहान्तमध्वानमेष्यन्मतिभयंवेति सूत्रितत्वात् । तत्रजपेदित्यनुवर्तते ।

तत्रप्रथमामृचमाह—

संपूषन्नध्वनस्तिरव्यंहोविमुचोनपात् । सक्ष्वादेवप्रणस्पुरः ॥ १ ॥

सम् । पूषन् । अध्वनः । तिर । वि । अंहः । विऽमुचः । नपात् ।
सक्ष्व । देव । प्र । नः । पुरः ॥ १ ॥

हेपूषन्जगत्पोषकपृथिव्यभिमानिदेव अध्वनोमार्गान्संतिरअस्मानभीष्टस्थानंसम्यक्प्रा-पय अंहोविघ्नहेतुंपाप्मानंवितिर विनाशय पूषाविशेष्यते विमुचोनपात् जलविमोचनहेतोर्मेघस्य पुत्र नपादितिपुत्रनाम नपात्प्रजाइतिवन्नामसुपाठात् श्रुत्यन्तरे—अद्भ्यःपृथिवीतिजलाद्भूम्युत्पत्तिः श्रूयते । तथान्यत्राप्युदकसारत्वंपृथिव्याःश्रूयते—यदपांसारआसीत्तत्समहन्यतसापृथिव्य-भवदिति । मेघस्यजलधारित्वादुदकपुत्रएवमेघपुत्रोभवति नचपृथिव्यामेघपुत्रत्वेपूष्णःकिमा-यातमितिवाच्यम् पृथिव्याएवपूषत्वात् तथाश्रुत्यन्तरेकस्यचिन्मन्त्रस्यब्राह्मणमेवमाम्नायते—पूं-पाध्वनःपात्वित्याहेयंवैपूषेति । तन्निर्वचनंचान्यत्रैवमाम्नायते—इयंवैपूषेयंहीदंसर्वंपुष्यतियदिदं-किञ्चेति । हेदेवपूषन् नःपुरःअस्माकंपुरतः प्रसक्ष्वप्रसक्तोभव पुरतोगच्छेत्यर्थः ॥ विमुचो-नपात् उदकंविमुञ्चतीतिविमुङ्मेघः क्किप्चेतिक्किप् नपातयविकुलमितिनपात्पुत्रः नञ्पूर्वा-त्पातयतेःक्किप् नभ्राण्नपादित्यादिनानञःप्रकृतिभावः सुबामन्त्रितइतिपराङ्गवद्भावात् षष्ठ्याम-न्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् । सक्ष्व षचसेवने अनुदात्तेत्त्वादात्मनेपदम् लोटि बहुलं-छन्दसीतिशपोलुक् तास्यनुदात्तेदिदिति सार्वधातुकानुदात्तत्वेधातुस्वरः । प्रणः उपसर्गाद्बहुलमि-तिनसोणत्वम् । पुरः उक्तम् ॥ १ ॥

---

१ तै० आ० अष्टमप्रपाठके. । २ तै० सं. ६. १. ७. ।

द्वितीयामृचमाह—

योनः॑पूषन्न॒घोवृकौ॑दु॒ःशेव॑आ॒दिदे॑शति । अप॑स्म॒तंप॒थोज॑हि ॥ २ ॥

यः । नः॒ । पू॒ष॒न् । अ॒घः । वृकः॑ । दुः॒ऽशेवः॑ । आ॒ऽदिदे॑शति ।
अप॑ । स्म॒ । तम् । प॒थः । ज॒हि॒ ॥ २ ॥

हेपूषन् यःप्रतिपक्षीनोस्मानादिदेशति अनेनमार्गेणनगन्तव्यंइत्येवमाज्ञापयति कीदृशः अघः आहन्ता वृकः अस्मदीयस्यधनस्यादाताअपहर्तेत्यर्थः दुःशेवः सेवितुंदुःशकःदुष्टसुखोवा तंतादृशंप्रतिपक्षिणंपथोमार्गात् अपजहिस्मअवश्यमपाकुरु ॥ वृकः वृकवृकआदाने वर्ततइति वृकः इगुपधलक्षणःकः वृषादित्वादाद्युदात्तत्वम् । दुःशेवः दुष्टंशेवंयस्यासौदुःशेवः परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम् यद्वा दुःखेनसेव्यतइतिदुःशेवः वर्णव्यत्ययेनसकारस्यशकारः ईषद्दुःसुष्वितिखल् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । आदिदेशति दिशअतिसर्जने लेट्यडागमः बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीतिवक्तव्यमितिवचनाभ्यस्तस्याचीतिलघूपधगुणप्रतिषेधाभावः । पथः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

अप॒त्यंप॑रिप॒न्थिनं॑मुषी॒वाणं॑हुर॒श्चितं॑म् । दू॒रमधि॑स्रु॒तेर॑ज ॥ ३ ॥

अप॑ । त्यम् । प॒रि॒ऽप॒न्थिन॑म् । मु॒षी॒वाण॑म् । हु॒रः॒ऽचित॑म् । दू॒रम् ।
अधि॑ । स्रु॒तेः । अ॒ज॒ ॥ ३ ॥

त्यंतादृशंपूर्वोक्तगुणयुक्तंस्रुतेर्मार्गादधिदूरंअत्यन्तदूरदेशंप्रति अपाज अपगमय कीदृशंपरिपन्थिनंमार्गप्रतिबन्धकं मुषीवाणं तस्कररूपम् मुषीवाइतितस्करनाम मुषीवान् वनिम्रुचंइतिवन्नामसुपाठात् हुरश्चितंकौटिल्यानांसञ्चेतारम् ॥परिपन्थिनं छन्दसिपरिपन्थिपरिपरिणौपर्यवस्थातरिइतिशत्रावभिधेयेइनिप्रत्ययान्तोनिपातितः । मुषीवाणं मुषस्तेये मोषणंमुषिः औणादिकोभावेकिप्रत्ययः मुषिंवनति सम्भजतइतिमुषीवा वनषणसंभक्तौ अन्येभ्योपिदृश्यन्तइतिविच्प्रत्ययः सर्वनामस्थानेचासंबुद्धावितिदीर्घः अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् । हुरश्चितं हुर्छाकौटिल्ये सम्पदादिलक्षणोभावेक्विप् राल्लोपइतिछकारलोपः हुरश्चिनोतीतिहुरश्चित् चिनोतेः क्विपि तुगागमः तत्पुरुषेकृतिबहुलमित्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । स्रुतेः स्रुगतौ क्तिच्क्तौचसंज्ञायामितिक्तिच् चितइत्यन्तोदात्तत्वम् । अज अजगतिक्षेपणयोः ॥ ३ ॥

१ मलिम्लुचइतिपाठान्तरम्.

चतुर्थीमृचमाह—

त्वंतस्यंद्वयाविनोघशंसस्यकस्यंचित् । पदाभितिष्ठतपुंषिम् ॥ ४ ॥

त्वम् । तस्यं । द्वयाविनंः । अघऽशंसस्य । कस्यं । चित् ।
पदा । अभि । तिष्ठ । तपुंषिम् ॥ ४ ॥

हेपूषन् त्वं तस्यचौरस्यतपुंषिंपरसन्तापकंदेहंपदाभितिष्ठभवदीयेनपादेनाक्रम्यतिष्ठ कीदृशस्य द्वयाविनः प्रत्यक्षापहारःपरोक्षापहारश्चेतियद्वयंतद्युक्तस्य अघशंसस्यअस्मास्वघमनिष्टंशंसतः अघशंसइतितस्करनाम मलिम्लुचःअघशंसः इतितन्नामसुपाठात् कस्यचित्अनिर्दिष्टविशेषस्यकस्यापि ॥ द्वयाविनः द्वयमस्यास्तीतिद्वयावी बहुलंछन्दसीतिमत्वर्थीयोविनिः अन्येषामपिदृश्यतइतिदीर्घत्वम् । अघशंसस्य अघेपापेशंसोमनस्यभिलाषोयस्यसोयमघशंसः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । तपुंषिं तापयत्यनेनान्यमितितपुषिः औणादिकउपिन्प्रत्ययः बहुलवचनादिकारस्यनेत्संज्ञा नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

आतत्तेंदस्रमन्तुमःपूषन्नवोंवृणीमहे । येनंपितॄनचोंदयः ॥ ५ ॥ २४ ॥

आ । तत् । ते । दस्र । मन्तुऽमः । पूषन् । अवंः । वृणीमहे ।
येनं । पितॄन् । अचोंदयः ॥ ५ ॥ २४ ॥

हेमन्तुमः ज्ञानवन्दस्रदर्शनीय यद्वा वैर्युपक्षयकारिन्पूषन् तेत्वदीयंतदवः तादृशंरक्षणं आवृणीमहे सर्वतःप्रार्थयामहे येनरक्षणेनपितॄनङ्गिरःप्रभृतीन्पितृदेहानचोदयः प्रेरितवानसि तद्रक्षणमितिपूर्वेणान्वयः॥दस्र दसिदंसनदर्शनयोः स्फायितञ्चीत्यादिनारक्प्रत्ययः आगमानुशासनस्यानित्यत्वान्नुमभावः यद्वा दसुउपक्षयेइत्यस्मादन्तर्भावितण्यर्थात्पूर्ववद्रक् । मन्तुमः मनज्ञाने कमिमनिजनीत्यादिनाभावेतुप्रत्ययः मन्तुर्ज्ञानमस्यास्तीतिमन्तुमान् सम्बुद्धौमतुवसोरुरितिरुत्वम् । अचोदयः चुदसञ्चोदने चौरादिकः ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेचतुर्विंशोवर्गः ॥ २४ ॥

षष्ठीमृचमाह—

अधांनोविश्वसौभगहिरंण्यवाशीमत्तम । धनांनिसुषणांकृधि ॥ ६ ॥

अर्ध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम । धनानि ।
सुऽसना । कृधि ॥ ६ ॥

हेविश्वसौभगकृत्स्नधनयुक्त यद्वा कृत्स्नसौभाग्ययुक्तहिरण्यवाशीमत्तमअतिशयेनसुवर्णमयायुधवन्पूषन् अध पूर्वोक्तास्मदीयप्रार्थनानन्तरंनोस्माकंधनानिसुवर्णमणिमुक्तादीनिसुषणा सुष्ठुदानयुक्तानिकृधिकुरु ॥ अध अथशब्दे धत्वंछान्दसं निपातस्य चेतिसंहितायांदीर्घत्वम् । विश्वसौभग सुभगान्मन्त्रेइत्युद्गात्रादिषुपाठात् भावेअञ् हृद्भगसिन्ध्वन्तेपूर्वपदस्य चेतिउत्तरपदवृद्धौमाप्तायांसत्यां सर्वविधीनांछन्दसिविकल्पितत्वात् उत्तरपदवृद्धिर्नभवतीतिवृत्तावुक्तम् विश्वानिसौभगानियस्यासौविश्वसौभगः आमन्त्रितनिघातः । हिरण्यवाशीमत्तम हिरण्यमयीवाशी यदेषामस्तीतिहिरण्यवाशीमन्तः अतिशयेनहिरण्यवाशीमान् हिरण्यवाशीमत्तमः आमन्त्रितनिघातः । सुषणा वनषणसम्भक्तौ सुखेनसम्भज्यन्तइतिसुषणानि ईषद्दुःसुष्वितिखल् शेश्छन्दसीतिशेर्लोपः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । कृधि डुकृञ्करणे श्रुशृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक् ॥ ६ ॥

सप्तमीमृचमाह--

अतिनःसश्चतोनयसुगानःसुपथाकृणु । पूषन्निहक्रतुंविदः ॥ ७ ॥

अति । नः । सश्चतः । नय । सुऽगा । नः । सुऽपथा । कृणु ।
पूषन् । इह । क्रतुम् । विदः ॥ ७ ॥

सश्चतः अस्मद्बाधनायप्राप्नुवतः शत्रून्नोतिअस्मानतिक्रम्यनयअन्यत्रप्रापय नोस्मान् सुगासुष्ठुगन्तुंशक्येनसुपथाशोभनमार्गेणकृणुगन्तॄन्कुरु हेपूषन्निहाध्वनिक्रतुंप्रज्ञानंअस्मद्रक्षणरूपंविदोजानीहि ॥ सश्चतः ष्लुश्चुगत्यौ इत्यत्रसश्चिमप्येकेपठन्तीतिधातुवृत्तावुक्तम् अस्माल्लटःशतृ बहुलंछन्दसीतिशपोलुक्प्रत्ययस्वरेणशतुरुदात्तत्वम् शतुरनुमइति विभक्त्युदात्ताभावश्छान्दसः । सुगा सुष्ठुगच्छन्त्यत्रेतिसुगः सुदुरोरधिकरणेइतिगमेर्डप्रत्ययः सुपांसुलुगितितृतीयायाआकारः । सुपथा शोभनेनपथा नपूजनादितिसमासान्तप्रतिषेधः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् क्त्वादयश्चेत्युत्तरपदाद्युदात्तत्वंनभवतिअबहुव्रीहित्वात् तत्रहि बहुव्रीहावित्यनुवर्तते । कृणु कृविहिंसाकरणयोः धिन्विकृण्व्योरचेत्युप्रत्ययः उतश्चप्रत्ययादितिहेर्लुक् । विदः विदज्ञाने लेट्यडागमः इतश्चलोपइतीकारलोपः ॥ ७ ॥

अष्टमीमृचमाह—

अभिसूयवसंनयनचनवज्वारोअध्वने । पूषन्निहक्रतुंविदः ॥ ८ ॥

अभि । सुऽयवसम् । नय । न । नवऽज्वारः । अध्वने । पूषन् । इह । क्रतुम् । विदः ॥ ८ ॥

हेपूषन् सुयवसंशोभनतृणोपलक्षितसर्वौषधियुक्तंदेशमभिनयअस्मानभितःप्रापय अध्वनेमार्गेच नवज्वारोनूतनःसन्तापोनभवतिविशेषः मार्गेगच्छतामस्माकंइदानींतनःक्लेशःकोपि माभूदित्यर्थः गतार्थमन्यत् ॥ सुयवसं शोभनंयवसंयस्मिन्देशेससुयवसोदेशः निपातस्यचेतिपूर्वपदस्यदीर्घत्वम् परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् क्रत्वादिर्वाद्रष्टव्यः । नवज्वारः ज्वररोगेभावेघञ् नवश्चासौज्वारोनवज्वारः थाथादिनोत्तरपदान्तोदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

शग्धिपूर्धिप्रयंसिचशिशीहिप्रास्युदरम् । पूषन्निहक्रतुंविदः ॥ ९ ॥

शग्धि । पूर्धि । प्र । यंसि । च । शिशीहि । प्रासि । उदरम् । पूषन् । इह । क्रतुम् । विदः ॥ ९ ॥

हेपूषन् शग्धिअस्माननुगृहीतुंशक्तोभव पूर्धिअस्मद्गृहंधनेनपूरय किंच प्रयंसिअन्यदप्यपेक्षितंवस्तुप्रयच्छ शिशीहिअस्मान्सर्वेषुमध्येतीक्ष्णीकुरु तेजस्विनःकुर्वित्यर्थः उदरमस्मदीयंप्रासिमृष्टान्नेनसोमरसेनवापूरय अन्यत्पूर्ववत् ॥ शग्धि शकॢशक्तौ लोटोहिः बहुलंछन्दसीतिविकरणस्यलुक् हुझल्भ्योहेर्धिरितिहेर्धिरादेशः हेरपित्त्वात्प्रत्ययस्वरेणोदात्तत्वम् । पूर्धि पॄपालनपूरणयोः श्रुशृणुपॄकृवृभ्यश्छन्दसीतिहेर्धिरादेशः पूर्ववद्विकरणस्यलुक् उदोष्ठ्यपूर्वस्येत्युत्वम् हलिचेतिदीर्घः तिङःपरत्वान्निघाताभावः । यंसि यमउपरमे लोडर्थेलटिपूर्ववद्विकरणस्यलुक् निघातः । शिशीहि शोतनूकरणे लोटिबहुलंछन्दसीत्यभ्यासस्येत्वम् ईहल्यघोरितीत्वम् प्रत्ययस्वरः । प्रासि प्रापूरणे अदादित्वाच्छपोलुक् सिपःपित्त्वादनुदात्तत्वेधातुस्वरः ॥ ९ ॥

दशमीमृचमाह—

नपूषणंमेथामसिसूक्तैरभिगृणीमसि । वसूनिदस्ममीमहे ॥१०॥२५॥

न । पूषणम् । मेथामसि । सुऽउक्तैः । अभि । गृणीमसि । वसूनि । दस्मम् । ईमहे ॥ १० ॥ २५ ॥

पूषणंदेवंनमेथामसिवयंनतुनिन्दामः किन्तुसूक्तैर्वेदगतैरभिगृणीमसि सर्वत्रस्तुमः दस्मं दर्शनीयंपूषणंप्रतिवसूनिधनानीईमहेयाचामहे॥ मेथामसि मेथृमेधाहिंसनयोः लटि इदन्तोमसि-रितिमसइकारागमः। सूक्तैः सुष्ठुस्तुवतेदेवताःप्रकाशयन्तीतिसूक्तानि किचूक्तौचसंज्ञायामितिक-र्तरिक्तः वचिस्वपीत्यादिनासम्प्रसारणम् थाथादिस्वरः यद्वा कर्मणिनिष्ठा सूच्यमानात्कद्-त्युत्तरपदान्तोदात्तत्वम्। गृणीमसि गृशब्दे प्वादीनांह्रस्वइतिह्रस्वत्वम् इदन्तोमसिः। दस्म इ-षियुधीन्धिदसिश्याधूसूभ्योमगितिमक्प्रत्ययः ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेपञ्चविंशोवर्गः ॥ २५ ॥

कद्रुद्रायेतिनवर्चंअष्टमंसूक्तम् अत्रानुक्रम्यते—कद्रुद्रायनवरौद्रंतृतीयामैत्रावरुणीचान्त्य-स्तृचःसौम्योन्त्यानुष्टुबिति । घोरपुत्रःकण्वऋषिः गायत्रीछन्दःयास्तेप्रजाइत्यन्त्यानुष्टुप् रुद्रो-देवता यथानोमित्रइत्येषामित्रावरुणदेवताकाच अस्मेसोमेत्यादिरन्त्यतृचस्तुसौम्यएव सर्वेपुरु-द्रदेवताकेषुकर्मसुअनेनसूक्तेनदिगुपस्थानंकर्तव्यम् तथाचसूत्रितम्—कद्रुद्रायेमारुद्रायातेपित-रिमारुद्रायस्थिरधन्वनेइतिसर्वरुद्रयज्ञेषुदिशामुपस्थानमिति ।

तत्रप्रथमामृचमाह—

कद्रुद्राय॒प्रचे॑तसे मी॒ळ्हुष्ट॑माय॒तव्य॑से । वो॒चेम॒शंत॑मंहृ॒दे ॥ १ ॥

कत् । रुद्राय॑ । प्रऽचे॑तसे । मी॒ळ्हुःऽत॑माय । तव्य॑से । वो॒चेम॑ । शम्ऽत॑मम् । हृ॒दे ॥ १ ॥

कत्कदारुद्रायएतन्नामकाय देवायशंतमंअतिशयेनसुखकरंस्तोत्रंवोचेमपठेम कीदृशा-यप्रचेतसे प्रकृष्टज्ञानयुक्तायमीळ्हुष्टमायसेक्तृतमायअभीष्टकामवर्षायेत्यर्थः तव्यसेअतिशये-नप्रवृद्धायहृदेअस्मदीयहृन्निष्ठाय॥कत् कदाअन्त्यलोपश्छान्दसः । रुद्राय रोदयतिसर्वमन्तकाले इतिरुद्रः रोदेर्णिलुक्चेतिरक्प्रत्ययः । प्रचेतसे चितीसंज्ञाने प्रकृष्टंचेततीतिप्रचेताः गतिकारक-योरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुनपूर्वपदप्रकृतिस्वरत्वंच । मीळ्हुष्टमाय अतिशयेनमीढ्वान्मीढुष्टमः दाश्वान्साह्वान्मीढ्वांश्चेतिक्वसुप्रत्ययान्तोनिपातितः तमपिअयस्मयादित्वेनभत्वाद्वसोःसम्प्रसा-रणमितिसम्प्रसारणम् शासिवसिघसीनांचेतिषत्वम् । तव्यसे तवतिर्वृद्ध्यर्थःसौत्रोधातुः अ-

विग्रहेनतद्धितार्थापात्, गुण्छन्दसीतिमित्युन्त्यस्यः गुरिटिमयःश्रितिकृत्योः इत्युत्तरकारलोप-श्छान्दसः निरमातागुदात्तत्वम्। वोचेम वचपरिभाषणे लिङ्याशिष्यङ् वचउमित्युमागमः यासु-टः सलोपः सकारउदात्तः। हृदे पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः ऊडिदमित्यादिनाविभक्ते-रुदात्तत्वम्॥ १ ॥

द्वितीयामृचमाह—

यथानोअदितिःकरत्पश्वेनृभ्योयथागवे। यथातोकायरुद्रियम् ॥२॥

यथा। नः। अदितिः। करत्। पश्वे। नृऽभ्यः। यथा। गवे।
यथा। तोकाय। रुद्रियम् ॥ २ ॥

अदितिर्भूमिर्नोऽस्माकं रुद्रियंरुद्रसम्बन्धिभेषजं यथायेनप्रकारेणसिध्यति करत् त-थाकरोतु किञ्च यथायेनप्रकारेणपश्वे अस्मदीयाश्वमहिष्यादिपशवे नृभ्योऽस्मदीयपुरुषे-भ्यः विशेषेणगवेगोजातयेहितं रुद्रियं सिध्यति तथाकरोतु किञ्च तोकायास्मदीयपुत्राय रुद्रियं यथासिध्यति तथाकरोतु भेषजस्यरुद्रसम्बन्धित्वंमन्त्रान्तरेसमाम्नातम्—यातेरुद्र-शिवातनूःशिवाविश्वाहभेषजी। शिवारुद्रस्यभेषजीति[1]। गवादिविषयभेषजंचान्यत्रसमा-म्नातम्—भेषजंगवेऽश्वायपुरुषायभेषजमथोअस्मभ्यंभेषजंसुभेषजमिति[2]॥ करत् डुकृञ्करणे लुङि व्यत्ययेनशप् यद्वा लेट्यडागमः इतश्चलोपइतीकारलोपः यद्वा लुङि कृमृदृरुहिभ्यश्छन्द-सीतिच्लेरङादेशः ऋदृशोऽङिगुणइतिगुणः आद्ययोःपक्षयोः प्रत्ययस्यपित्वादनुदात्तत्वेधातु-स्वरः तृतीयेतुप्रत्ययस्वरेण यद्वृत्तयोगादनिघातः। पश्वे संज्ञापूर्वकस्यविधेरनित्यत्वात् घेर्ङिती-तिगुणाभावः यणादेशः। नृभ्यः नृचान्यतरस्यामितिविभक्त्युदात्तत्वाभावः। गवे सावे-काचइतिप्राप्तस्यविभक्त्युदात्तस्यनगोश्वन्साववर्णेतिप्रतिषेधः। रुद्रियं रुद्रशब्दात्तस्येदमि-त्यर्थेघप्रत्ययः॥ २ ॥

तृतीयामृचमाह—

यथानोमित्रोवरुणोयथारुद्रश्चिकेतति। यथाविश्वेसजोषसः ॥ ३ ॥

यथा। नः। मित्रः। वरुणः। यथा। रुद्रः। चिकेतति। यथा।
विश्वे। सऽजोषसः॥ ३॥

१ तै० सं. ४. ५. १०. १   २ तै० सं. १. ८. ६. १

मित्रोवरुणश्चनोस्मान्यथायेनप्रकारेणचिकेतति अनुग्राह्यत्वेनजानाति रुद्रोपिय-थाचिकेतति सजोषसः समानप्रीतयः विश्वेसर्वेदेवायथाचिकेतन्तितथाभवत्विति शेषः यद्वा यथाशब्दोपेतमध्याहृत्यस्य तथाकद्रावोचेमेतिपूर्वत्रान्वयः ॥ चिकेतति कितज्ञाने लेटय-डागमः नाभ्यस्तस्येतिगुणनिषेधोनभवति बहुलंछन्दसीतिवक्तव्यमितिवचनात् सार्वधातुकत्वाच्चाभ्यस्तानामादिरित्याद्युदात्तत्वम् । सजोषसः जुषीप्रीतिसेवनयोः समानंजुषन्तीतिसजोषसः समानस्यछन्दसीतिसभावः असुनोनित्त्वादुत्तरपदस्याद्युदात्तत्वम् तदेवकृदुत्तरपदप्रकृतिस्वरत्वेनशिष्यते ॥ ३ ॥

चतुर्थीमृचमाह—

गाथपतिंमेधपतिंरुद्रंजलाषभेषजम् । तच्छंयोःसुम्नमीमहे ॥४॥

गाथऽपतिम् । मेधऽपतिम् । रुद्रम् । जलाषऽभेषजम् । तत् । शम्ऽयोः । सुम्नम् । ईमहे ॥ ४ ॥

रुद्रमभिलक्ष्यवयंशंयोः बृहस्पतिपुत्रस्यसम्बन्धितत्प्रसिद्धंसर्वप्रजाभ्योहितंसुम्नंसुखमीमहेयाचामहे कीदृशंरुद्रं गाथपतिंस्तुतिपालकंमेधपतिं यज्ञपालकं जलाषभेषजंसुखरूपौषधोपेतं यद्वा उदकरूपौषधोपेतं उदकंहिरुद्रनामाभिमन्त्रितंसदौषधंभवति ॥ गाथपतिं गाथेतिवाङ्नाम गाथागणइतितन्नामसुपठितत्वात् वाग्रूपायाःस्तुतेःपतिर्गाथपतिः कैगैरैशब्दे आदेचइत्यात्वम् उषिकुषिगार्तिभ्यस्थन्निति थन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ङ्याप्पोःसंज्ञाछन्दसोर्बहुलमितिपूर्वपदस्यह्रस्वत्वम् पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरेप्राप्ते मरुद्वृधादीनांछन्दस्युपसंख्यानमिति पूर्वपदान्तोदात्तत्वम् मेधपतिं पूर्ववत् । जलाषभेषजम् जनीप्रादुर्भावे जायन्तइतिजाः अन्येष्वपिदृश्यतइतिदृशिग्रहणात्केवलादपिडप्रत्ययः । लाषः लषकान्तौ कान्तिरभिलाषः भावेघञ् जानां लाषोयस्मिन्तज्जलाषंसुखं जलाषरूपंभेषजंयस्मिन्रुद्रेसजलाषभेषजः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । शंयोः कंशंभ्यामितिमत्वर्थीयोयुसूप्रत्ययः सितिचेतिपदसंज्ञायांअनुस्वारपरसवर्णौ प्रत्ययस्वरः ॥ ४ ॥

पञ्चमीमृचमाह—

यःशुक्रइवसूर्योहिरण्यमिवरोचते । श्रेष्ठोदेवानांवसुः ॥ ५ ॥ २६ ॥

यः । शुक्रःऽइव । सूर्यः । हिरण्यम्ऽइव । रोचते । श्रेष्ठः । देवानाम् । वसुः ॥ ५ ॥ २६ ॥

योरुद्रः सूर्यइवशुक्रः सूर्यइवदीप्तिमान् हिरण्यमिवरोचते यथासर्वेषांप्राणिनांहिरण्यंप्रीतिकरंभवति तथारुद्रोपि सचदेवानांसर्वेषांमध्येश्रेष्ठः वसुः निवासहेतुश्च ॥ रोचते रुचदीप्ताविभिप्रीत्यांच अनुपदेशात्तसार्वधातुकानुदात्तत्वे धातुस्वरः। श्रेष्ठः प्रशस्यतरः प्रशस्यशब्दादिष्ठनिप्रशस्यस्यश्रइतिश्रादेशः निच्चादाद्युदात्तत्वम्। वसुः वासयतिसर्वमितिवसुः वसनिवासे अन्तर्भावितण्यर्थात् शृस्वृस्निहीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम् ॥ ५ ॥

इतिप्रथमस्यतृतीयेषड्विंशोवर्गः ॥ २६ ॥

आग्निमारुतेशन्नःकरतीतिधाय्या अथयथेवमितिखण्डेसूत्रितम्—वैश्वानरायपृथुपाजसेशन्नःकरत्यर्वतइति ।

तामेतांसूक्तेषष्ठीमृचमाह—

शंनः॑कर॒त्यर्व॑ते सु॒गंमे॒षाय॑मे॒ष्ये॑ । नृभ्यो॒ नारि॑भ्यो॒ गवे॑ ॥ ६॥

शम् । नः॒ । क॒र॒ति॒ । अर्व॑ते । सु॒ऽगम् । मे॒षाय॑ । मे॒ष्ये॑ । नृऽभ्यः॑ । नारि॑ऽभ्यः । गवे॑ ॥ ६ ॥

नोस्माकंसम्बन्धिभ्योवेदादिभ्यः सुगं सुष्ठुगम्यंशंसुखंकरतिदेवःकरोति अर्वतेअश्वाय अर्वन्शब्दोश्वनाम अर्वावाजीतितन्नामसुपाठात् मेषायमेषजातिपुरुषायमेष्येतज्जातीयस्त्रियै नृभ्यः पुरुषेभ्यः नारिभ्यः स्त्रीभ्यःगवेगोजातये ॥ करति डुकृञ्करणे व्यत्ययेनशप् । अर्वते अर्तिगच्छतीत्यर्वा अन्येभ्योपिदृश्यन्तइतिवनिप् चतुर्थ्येकवचनेअर्वणस्त्रसावनञइतिनकारस्यतृआदेशः वनिप्सृपोपित्वादनुदात्तौ धातुस्वरः। मेषाय मिषस्पर्धायां पचाद्यच् देवसेनमेषादयःपचादिषुद्रष्टव्याइतिवचनात्। मेष्ये जातेरस्त्रीविषयादयोपधादितिङीष् प्रत्ययस्वरः चतुर्थ्येकवचनेआगमानुशासनस्यानित्यत्वाद्आडागमाभावः उदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येतिस्वरितत्वम् उदात्तयणोहल्पूर्वादितितुनभवति सर्वेविधयश्छन्दसिविकल्प्यन्तइतिवचनात्। नृभ्यः सावेकाचइतिप्राप्तस्यविभक्त्युदात्तत्वस्यनृचान्यतरस्यामितिप्रतिषेधः। नारिभ्यः नृनरयोर्वृद्धिश्चेतिशार्ङ्गरवादिषुपाठान्ङीन्प्रत्ययः निच्चादाद्युदात्तः। गवे नगोश्वन्सावर्णेतिविभक्त्युदात्तस्यप्रतिषेधः ॥ ६ ॥

सप्तमीमृचमाह—

अ॒स्मे सो॑म॒ श्रिय॒मधि॒ निधे॑हि श॒तस्य॑ नृ॒णाम् । महि॒ श्रव॑स्तुविनृ॒म्णम् ॥७॥

अस्मे इति॑ । सोम॑ । श्रियम् । अधि॑ । नि । धेहि । शतस्य॑ ।
नृणाम् । महि॑ । श्रवः॑ । तुविऽनृम्णम् ॥ ७ ॥

हेसोमदेव नृणांपुरुषाणां शतस्यपर्याप्तांश्रियंअस्मेअस्मासुअधिनिधेहिआधिक्येनस्थापय तथामहिमहत्तुविनृम्णंप्रभूतबलयुक्तंश्रवोन्नंअधिनिधेहि ॥ अस्मे सुपांसुलुगितिसप्तम्याः शेआदेशः । नृणां नृचेतिदीर्घप्रतिषेधः नामन्यतरस्यामितिनामउदात्तत्वम् । महीत्यादयोगताः॥७॥

अष्टमीमृचमाह—

मानः॑सोमपरि॒बाधो॒मारा॑तयोजुहुरन्त । आन॑इन्दो॒वाजे॑भज ॥८॥

मा । नः । सोम॑ऽपरि॒बाधः॑ । मा । अरा॑तयः । जुहु॒रन्त । आ । नः ।
इन्दो॒ इति॑ । वाजे॑ । भज ॥ ८ ॥

सोमपरिबाधः सोमस्यपरितोबाधकाःयागरहितानोस्मान्माजुहुरन्तमाहिंसन्तु तथाअरातयः शत्रवोमाजुहुरन्त हेइन्दोसोम वाजेबलविषयेन्नविषयेवानोस्मानाभजसर्वतःसेवस्व, सोमपरिबाधः सोमंपरिबाधन्तेयेतेतादृशाः क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । अरातयः रादाने क्तिच्क्तौचसंज्ञायामितिक्तिच् वा? — 

नवमीमृचमाह—

याते॑प्रजाअमृत॑स्यपर॑स्मिन्धाम॑न्नृतस्य॑ ।
मू॒र्धानाभा॑सोमवेनआ॒भूष॑न्तीःसोमवेदः ॥ ९ ॥ २७॥

याः । ते॒ । प्रऽजाः । अ॒मृत॑स्य । पर॑स्मिन् । धाम॑न् । ऋ॒तस्य॑ ।
मू॒र्धा । नाभा॑ । सोम । वे॒नः । आ॒ऽभूष॑न्तीः । सोम । वे॒दः ॥ ९ ॥ २७॥

हेसोम देवत्वसंबन्धिन्योयाःप्रजाःसन्तित्वोभूंवाकुर्वन्तिताःप्रजाः मूर्धाशिरःस्थानीयस्त्वं नाभाउन्नहनयुक्तेयज्ञगृहे वेनः कामयस्व कीदृशस्यतेअमृतस्यमरणरहितस्यपरस्मिन्धामन्नृतस्य

उत्तमेस्थानेप्राप्तस्यहेसोमआभूपन्तीः सर्वतस्त्वामलंकुर्वन्तीःप्रजाःवेदः जानीहि॥ धामन् सुपांसुलुगितिसप्तम्यालुक् । नाभा णहवन्धने नहोभश्चेतिकर्मणिइञ्प्रत्ययः ञित्वादाद्युदात्तत्वम् सुपांसुलुगितिसप्तम्याडादेशः । वेनः वेनतिःकान्तिकर्मा लेटिसिप्यडागमः तिङ्ङतिङइतिनिघातः। आभूपन्तीः भूपअलङ्कारे भौवादिकः शपःपित्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणाद्युदात्तत्वम् समासेकृदुत्तरपदप्रकृतिस्वरत्वम्। वेदः विदज्ञाने लेटिसिप्यडागमः॥ ९॥

इतिप्रथमस्यतृतीयेसप्तविंशोवर्गः॥ २७॥

इतिप्रथमेमण्डलेअष्टमोनुवाकः॥ ८॥

नवमेनुवाकेसप्तसूक्तानि तत्राग्नेविवस्वदितिचतुर्दशर्चंप्रथमंसूक्तम् तत्रानुक्रमणिका—अग्नेषळूनामस्कण्वःकाण्वआग्नेयंतुप्रागाथमाद्योद्दचोश्व्युपसांचेति। कण्वपुत्रः प्रस्कण्वऋषिः अत्रद्वितीयाचतुर्थ्याद्यायुजःसतोबृहत्यः प्रथमातृतीयाद्याअयुजोबृहत्यः कृत्स्नंसूक्तमाग्नेयंउत्तरंच आद्येद्वेअश्विदेवताकेउपोदेवताकेच प्रातरनुवाकेआग्नेयेक्रतौवार्हतेछन्दसिआश्विनशस्त्रेचेदंसूक्तम् अथैतस्यारात्रेरितिखण्डेसूत्रितम्—अग्नेविवस्वत्सत्वायस्त्वेति वाजपेयेआग्निमारुतेआद्यःप्रगाथोनुरूपः वाजपेयेनेतिखण्डेसूत्रितम्—चित्रवतीपुचेत्तुवीरन्त्वंनश्चित्रऊत्याग्नेविवस्वदुपसइत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपावितिपर्यायव्युष्णवाश्विनशस्त्रस्यायमेवप्रगाथःस्तोत्रियः यदिपर्यायानभिव्युच्छेदितिखण्डेआश्विनायैकस्तोत्रियोग्नेविवस्वदुपसइतिसूत्रितम्।

तत्रप्रथमामृचमाह—

अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य ।
आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुध॑: ॥ १॥

अग्ने॑ । विव॑स्वत् । उ॒षस॑: । चि॒त्रम् । राध॑: । अ॒म॒र्त्य॒ । आ ।
दा॒शुषे॑ । जा॒त॒ऽवे॒द॒: । व॒ह॒ । त्वम् । अ॒द्य । दे॒वान् । उ॒ष॒:ऽबुध॑: ॥ १॥

हेअग्नेत्वं उषसः उषोदेवतायाःसकाशात् राधोधनंदाशुषेहविर्दत्तवतेयजमानायआवह आनीयमापय सोग्निर्विशेष्यते अमर्त्य मरणरहितजातवेदः जातानांवेदितः तमेतंशब्दंयास्कोव्याचष्टे—जातवेदाःकस्माज्जातानिवेदजातानिवैनंविदुर्जातेजातेविद्यतइतिवाजातवित्तोवाजातधनोजातविद्योवाजातप्रज्ञानोयत्तज्जातःपशूनविन्दतेतितज्जातवेदसोजातवेदस्त्वमितिब्राह्मणंतस्मा-

त्सर्वान्नृतून्पशवोग्निमभिसर्पन्तीतिचेति । कीदृशंराधः विवस्वत् विशिष्टनिवासोपेतं चित्रंनानाविधं किञ्च अद्यास्मिन्दिने उषर्बुधः उषःकाले प्रबुद्धान्देवान् आवह ॥ विवस्वत् विवासनंविवः तद्युक्तम् वसनिवासे विपूर्वादन्तर्भावितण्यर्थात्सम्पदादिलक्षणोभावेक्विप् तदस्यास्तीतिमतुप् मादुपधायाइतिवत्वम् तसौमत्वर्थेइतिभत्वेनपदत्वाभावाज्जत्वाद्यभावः वृषादित्वादाद्युदात्तत्वम् । राधः राधसाधसंसिद्धौ राध्नोत्यनेनेतिराधोधनं करणेअसुन् नित्त्वादाद्युदात्तत्वम् । दाशुषे दाश्रृदाने दाश्वान्साह्वान्मीढ्वानितिक्वसुप्रत्ययान्तोनिपातितः चतुर्थ्येकवचनेवसोःसम्प्रसारणमितिसम्प्रसारणम् शासिवसीतिषत्वम् । जातवेदः जातानिवेत्तीतिजातवेदाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुन् यद्वा वेदइतिधननाम जातंधनंयस्यसतादृशः आमन्त्रितनिघातः । वह द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । देवान् दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतोटिनित्यमित्यनुनासिकआकारः । उषर्बुधः उषसिबुध्यन्तइत्युषर्बुधः बुधअवगमने क्विप्चेति क्विप् रोरुत्वाभावश्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

द्वितीयामृचमाह—

जुष्टो॒हि दू॒तोअसि॑हव्य॒वाह॒नोऽग्ने॑र॒थीर॑ध्व॒राणा॑म् ।
स॒जूर॒श्विभ्या॑मु॒षसा॑सु॒वीर्य॑म॒स्मेधे॑हि॒श्रवो॑बृ॒हत् ॥ २ ॥

जुष्टः॑ । हि । दू॒तः । असि॑ । ह॒व्य॒ऽवाह॑नः । अग्ने॑ । र॒थीः ।
अ॒ध्व॒राणा॑म् । स॒ऽजूः । अ॒श्विऽभ्या॑म् । उ॒षसा॑ । सु॒ऽवीर्य॑म् ।
अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् ॥ २॥

हेअग्ने त्वंजुष्टत्वादिविशेषणगुणयुक्तोसि जुष्टःसेवितःदूतःदेवानांवार्ताहारः हव्यवाहनः हविषोवोढा अध्वराणांक्रतूनांरथीःरथस्थानीयः तथाचमन्त्रान्तरंब्राह्मणेनैवंव्याख्यातम्—रथीरध्वराणामित्याहैषहिदेवरथइति । ब्राह्मणान्तरंच—रथीरध्वराणामित्याह रथीहवाएषभूतोदेवेभ्योहव्यंवहतीति । तादृशस्त्वमश्विभ्यांदेवताभ्यां उषसादेवतयाचसजूः सहितोभूत्वासुवीर्यं शोभनवीर्योपेतं बृहत् प्रभूतं श्रवोन्नं अस्मेधेहिअस्मासुप्रक्षिप ॥ जुष्टः जुषीप्रीतिसेवनयोः नित्यंमन्त्रइत्याद्युदात्तत्वम् । असि सिपि तासस्त्योर्लोपइतिसलोपः हिचेतिनिघातप्रतिषेधः । हव्यवाहनः हव्यंवहतीतिहव्यवाहनः हव्येनन्तःपादमितिञ्युट् योरनादेशः

१ नि० ७. १९. । २ तै० सं २. ५. ९. ।

त्त्वादाद्युदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् । अग्ने पादादित्वादाष्टमिकनिघाताभावः । रथीः रथशब्दात्स्वार्थिकईकारप्रत्ययः । अध्वराणाम् ध्वरोनास्त्येष्विति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुवीर्यं वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । अस्मे सुपांसुलुगिति सप्तम्याःशेआदेशः ॥ २ ॥

तृतीयामृचमाह—

अ॒द्या दू॒तं वृ॑णीमहे॒ वसु॑म॒ग्निं पु॑रुप्रि॒यम् ।
धू॒मके॑तुं॒ भाऋ॑जीकं॒ व्यु॑ष्टिषु य॒ज्ञाना॑मध्वर॒श्रिय॑म् ॥ ३ ॥

अ॒द्य । दू॒तम् । वृ॒णी॒म॒हे॒ । वसु॑म् । अ॒ग्निम् । पु॒रु॒ऽप्रि॒यम् ।
धू॒मऽके॑तुम् । भाःऽऋ॑जीकम् । विऽउ॑ष्टिषु । य॒ज्ञाना॑म् ।
अ॒ध्व॒र॒ऽश्रिय॑म् ॥ ३ ॥

अद्यास्मिन्दिने अग्निंवृणीमहे प्रार्थयामहे कीदृशं दूतं वार्ताहारम् वसुंनिवासहेतुं पुरुप्रियं बहूनांप्रियं धूमकेतुं धूमरूपध्वजयुक्तं भाऋजीकंप्रसिद्धभासालङ्कृतम् भाऋजीकः प्रसिद्धभाइतियास्कवचनम्[१] । व्युष्टिषुउषःकालेषुयज्ञानांयजमानानांअध्वरश्रियंयागसेविनम् ॥ अद्य निपातस्यचेतिदीर्घत्वम् । पुरूणां प्रियःपुरुप्रियः समासस्येत्यन्तोदात्तत्वम् । धूमकेतुम् इषियुधीन्धीत्यादिनाधूमशब्दोमक्प्रत्ययान्तोन्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । भाऋजीकम् ऋजगतिस्थानार्जनोपार्जनेषु ऋजेश्चेतीकन्प्रत्ययः कित्त्वस्यानुवर्तनाद्गुणाभावः भासः प्रकाशस्यऋजीकः प्रार्जयिता आद्युदात्तप्रकरणे दिवोदासादीनांछन्दस्युपसंख्यानमितिपूर्वपदाद्युदात्तत्वम् यद्वा भासोर्जनंयस्मिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । व्युष्टिषु उच्छीविवासे विवासोवर्जनं विशेषेणउच्छयन्त्येतमसावर्ज्यन्तइतिव्युष्टयः उषःकालाः कर्मणिक्तिन् वितृत्रेत्यादिनाइट्प्रतिषेधः प्रश्चादिनाषत्वेष्टुत्वम् तादौचेतिपूर्वपदप्रकृतिस्वरत्वम् यणादेशेउदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । अध्वरश्रियम् अध्वरं श्रयतइतिअध्वरश्रीः क्विप्चेत्यादिनाक्विप्प्रत्ययः वतंनियोगेनसम्प्रसारणाभावः दीर्घश्च द्वितीयैकवचने अचिश्नुधात्वित्यादिनाइयङादेशः ॥ ३ ॥

---

१ नि० ६. ४.।

दाद्युदात्तत्वम् । मियेध्य इयागमश्छान्दसः । यजिष्ठं यष्टृशब्दात् तुश्छन्दसीतिइष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः ॥ ५ ॥

इतिप्रथमस्यतृतीयेष्टाविंशोवर्गः ॥ २८ ॥

षष्ठीमृचमाह—

सुशंसोबोधिगृणतेयविष्ठ्यमधुजिह्वःस्वाहुतः । प्रस्कंण्वस्य प्रतिरन्नायुर्जीवसेंनमस्यादैव्यंजनंम् ॥ ६ ॥

सुऽशंसः । बोधि । गृणते । यविष्ठ्य । । मधुंऽजिह्वः । सुऽआंहुतः । प्रस्कंण्वस्य । प्रऽतिरन् । आयुः । जीवसें । नमस्य । दैव्यम् । जनंम् ॥ ६ ॥

हेयविष्ठयुवतमाग्ने त्वंगृणतेस्तुवतेयजमानार्थंसुशंसःसुष्ठुशंसनीयःमधुजिह्वःमादयितृज्वालः स्वाहुतः सुष्ठुआभिमुख्येनहुतःसन्बोधिअस्मदभिप्रायंबुध्यस्व किंच प्रस्कण्वस्यएतन्नामकस्य कण्वपुत्रस्यमहर्षेः प्रस्कण्वः कण्वस्यपुत्रः कण्वप्रभवइतियास्कवचनात् । तस्यजीवसेजीवनार्थमायुः प्रतिरन्प्रकर्षेणवर्धयन् दैव्यं देवसम्बन्धिनंजनंनमस्यपूजय ॥ सुशंसः शंसुस्तुतौ भावेघञ् शोभनः शंसोयस्यासौसुशंसः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदान्तोदात्तत्वम् । बोधि बुधअवगमने लोटोहिः बहुलंछन्दसीतिविकरणस्यलुक् हुझल्भ्योहेर्धिरितिहेर्धिरादेशः वाछन्दसीत्यपित्वस्यविकल्पितत्वाल्लघूपधगुणः धातोरन्त्यलोपश्छान्दसः । गृणते गॄशब्दे लटःशतृ क्र्यादिभ्यः श्ना श्नाभ्यस्तयोरातइत्याकारलोपः शतुरनुमइतिविभक्तेरुदात्तत्वम् । यविष्ठ्य गतम् । प्रस्कण्वस्य प्रभूतिरुत्पत्तिःकण्वाद्यस्यसप्रस्कण्वः प्रस्कण्वहरिश्चन्द्रावृषीइतिसुडागमोनिपातितः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । प्रतिरन् प्रपूर्वस्तिरतिर्वर्धनार्थः । नमस्य नमोवरिवश्चित्रङःक्यच्इतिपूजार्थेक्यच् प्रत्ययस्वरः अन्येषामपिदृश्यतइतिसंहितायांदीर्घत्वम् । दैव्यं देवाद्यञञाविति तस्येदमित्यर्थेप्राग्दीव्यतीयोयञ्प्रत्ययः ॥ ६ ॥

सप्तमीमृचमाह—

होतांरंविश्ववेदसंसंहित्वाविशइन्धते । सआवंहपुरुहूतंप्रचेंतसोग्नेदेवाँइहद्रवत् ॥ ७ ॥

---

१ नि० ३. १७. ।

होतारम् । विश्वऽवेदसम् । सम् । हि । त्वा । विशः । इन्धते । सः ।
आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ॥७॥

होतारंहोमनिष्पादकंविश्ववेदसंसर्वज्ञंत्वामग्निंविशःप्रजाःसमिन्धतेहिसम्यग्दीपयन्तिखलु हेपुरुहूतबहुभिराहूताग्ने सत्वंप्रचेतसःप्रकृष्टज्ञानयुक्तान्देवानिहकर्मणिद्रवत्क्षिप्रंआवहआभिमुख्येनप्रापय द्रवदितिक्षिप्रनाम द्रवत्ओपमितितन्नामसुपाठात् ॥ विश्ववेदसं विश्वानिवेत्तीतिविश्ववेदाः असुन् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् यद्वा वेदइतिधननाम विश्वानिवेदांसियस्यासौविश्ववेदाः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । इन्धते ञिइन्धीदीप्तौ श्नसोरल्लोपइत्यकारलोपः श्नान्नलोपः प्रत्ययस्वरः हिचेतिनिघातप्रतिषेधः ॥ ७ ॥

अष्टमीमृचमाह—

सवितारमुषसमश्विनाभगमग्निंव्युष्टिषुक्षपः ।
कण्वासस्त्वासुतसोमासइन्धतेहव्यवाहंस्वध्वर ॥ ८ ॥

सवितारम् । उषसम् । अश्विना । भगम् । अग्निम् । विऽउष्टिषु ।
क्षपः । कण्वासः । त्वा । सुतऽसोमासः । इन्धते । हव्यऽवाहम् ।
सुऽअध्वर ॥ ८ ॥

हेस्वध्वरशोभनयागयुक्ताग्ने व्युष्टिषुउषःकालेषुप्रवोत्तमाहुतिरूपमभिलक्ष्यसवित्रादीन्देवानआवहेत्यनुवर्तते स्वध्वरेत्याहवनीयाग्नेःसम्बोधनं अग्निमितिहविषउद्देश्यंदेवतान्तरं उच्यते सुतसोमासः अभिषुतसोमाः कण्वासोमेधाविनः ऋत्विजःहव्यवाहंहविषःप्रापकंआहवनीयंत्वांइन्धतेदीपयन्ति ॥ व्युष्टिषु उच्छीविवासे विवासोवर्जनं व्युच्छ्यतेतमस्तावर्ज्यतइतिव्युष्टिरुषःकालः कर्मणिक्तिन्तादौचनितीतिगतेःप्रकृतिस्वरत्वम् संहितायामुदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । क्षपः क्षपेतिरात्रिनाम ङसिआतोधातोरित्यत्रातइतियोगविभागादाकारलोपः । सुतसोमासः सुतःसोमोयैः निष्ठेतिपूर्वनिपातः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । हव्यवाहं हव्यंवहतीतिहव्यवाट् वहश्चेतिण्विप्रत्ययः ॥ ८ ॥

नवमीमृचमाह—

पतिर्ह्यध्वराणामग्नेदूतोविशामसि ।
उषर्बुधआवहसोमपीतयेदेवाँअद्यस्वर्दृशः ॥ ९ ॥

पतिः । हि । अध्वराणाम् । अग्ने । दूतः । विशाम् । असि ।
उषःऽबुधः । आ । वह । सोमऽपीतये । देवान् । अद्य ।
स्वःऽदृशः ॥ ९ ॥

हेअग्ने विशांप्रजानांसम्बन्धिनोयेअध्वरायागाः तेषांपतिःपालकस्त्वंदूतोसिहि देवानां वार्ताहारोभवसिखलु उषर्बुधः उषःकालेप्रबुद्धान्स्वर्दृशःसूर्यदर्शिनोदेवान्अद्यास्मिन्दिनेसोमपीतयेसोमपानार्थंआवहआभिमुख्येनप्रापय ॥ असि हिचेतिनिघातप्रतिषेधः । सोमपीतये पा-पाने स्थागापापचोभावेइतिभावेक्तिन् घुमास्थेतीत्वम् सोमस्यपीतिः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । स्वर्दृशः सुष्ठुअर्तिंगच्छतीतिस्वरादित्यः अर्तेरन्येभ्योपिदृश्यन्तइतिविच् तं पश्यन्तीतिस्वर्दृशः क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

अग्नेपूर्वाअनूषसोविभावसोदीदेथविश्वदर्शतः ।
असिग्रामेष्वविताप्रोहितोसियज्ञेषुमानुषः ॥ १० ॥ २९ ॥

अग्ने । पूर्वाः । अनु । उषसः । विभावसो इति विभाऽवसो ।
दीदेथ । विश्वऽदर्शतः । असि । ग्रामेषु । अविता । पुरःऽहितः ।
असि । यज्ञेषु । मानुषः ॥ १० ॥ २९ ॥

हेविभावसो विशिष्टप्रकाशनरूपधनवन्नग्ने विश्वदर्शतः सर्वैर्दर्शनीयस्त्वं पूर्वाउषसोनुअतीतानउषःकालान्अनुलक्ष्यदीदेथदीप्तवानसि तादृशस्त्वंग्रामेषुजननिवासस्थानेषुअवितासि रक्षकोभवसि यज्ञेष्वनुष्ठेयकर्मसुपुरोहितःवेदेःपूर्वस्यांदिश्यवस्थितःमानुषोसि ऋत्विग्यजमानानांमनुष्याणांहितोसि ॥ दीदेथ दीदेतिश्छान्दसोदीप्तिकर्मा आगमानुशासनस्यानित्यत्वादिड्भावः द्विर्वचनप्रकरणेछन्दसिवेतिवक्तव्यमितिवचनाद्विर्वचनाभावः । विश्वदर्शतः विश्वैर्दर्शनीयः भृमृदृशीत्यादिनादृशेरतच् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । पुरोहितः पूर्वाधरावराणामसिपुरधवश्चैषामित्यसिप्रत्ययान्तःपुरस्शब्दः तद्धितश्चासर्वविभक्तिरित्यव्ययत्वात् पुरोव्ययमितिगतिसंज्ञायांसत्यां गतिसमासेगतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेएकोनत्रिंशोवर्गः ॥ २९ ॥

एकादशीमृचमाह—

नित्वायज्ञस्यसाधनमग्नेहोतारमृत्विजम् ।
मनुष्वद्देवधीमहिप्रचेतसंजीरंदूतममर्त्यम् ॥ ११ ॥

नि । त्वा । यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् । मनुष्वत् । देव । धीमहि । प्रऽचेतसम् । जीरम् । दूतम् । अमर्त्यम् ॥ ११ ॥

हेअग्नेदेव मनुष्वत्यथामनुर्यागदेशेनिदधातितद्वद्वयंत्वांनिधीमहिअत्रस्थापयामः कीदृशं यज्ञस्यसाधनंयज्ञनिष्पादकं होतारंऋत्विजंऋतौवसन्तादिकेयष्टारं प्रचेतसंप्रकृष्टज्ञानयुक्तं जीरंशत्रूणांवयोहानिकरं दूतं देवानांदूतस्थानीयं अमर्त्यंमरणरहितम् ॥ मनुष्वत् औणादिकउसिप्रत्ययान्तोमनुस्शब्दः तेनतुल्यंक्रियाचेद्वतिरितिवतिप्रत्ययः अयस्मयादित्वेनभत्वाद्रुत्वाद्यभावः । धीमहि डुधाञ्धारणपोषणयोः लिङिअभ्यासलोपश्छान्दसः । जीरं ज्याइतिसौत्रोधातुः जोरीचेतिरक्प्रत्ययः कात्यायनस्त्वाह—रकिज्यःसम्प्रसारणेजीरइति ॥ ११ ॥

द्वादशीमृचमाह—

यद्देवानांमित्रमहःपुरोहितोन्तरोयासिदूत्यम् ।
सिन्धोरिवप्रस्वनितासऊर्मयोग्नेर्भ्राजन्तेअर्चयः ॥ १२ ॥

यत् । देवानाम् । मित्रऽमहः । पुरःऽहितः । अन्तरः । यासि । दूत्यम् । सिन्धोःऽइव । प्रऽस्वनितासः । ऊर्मयः । अग्नेः । भ्राजन्ते । अर्चयः ॥ १२ ॥

हेमित्रमहः मित्राणांपूजकाग्ने यद्यदापुरोहितस्त्वंवेदेःपूर्वस्यांदिशिस्थापितः अन्तरःदेवयजनमध्येवर्तमानःसन् देवानांदूत्यंदूतकर्मयासिप्राप्नोषि तदानींअग्नेस्तवार्चयोदीप्तयः भ्राजन्तेदीप्यन्ते तत्रदृष्टान्तः—सिन्धोरिव यथासमुद्रस्यप्रस्वनितासः प्रकृष्टध्वनियुक्ताऊर्मयस्तरङ्गाः भ्राजन्तेतद्वत् ॥ मित्रमहः महपूजायां मित्रैर्ऋत्विग्भिर्महसवेपूज्यतेइतिमित्रमहाः औणादिकोसुन् । यासि यद्वृत्तयोगादनिघातः । दूत्यं दूतस्यकर्मदूत्यं दूतस्यभागकर्मणीइतियत्प्रत्ययः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिवचनाद्यतोनावइत्याद्युदात्तत्वाभावेतित्स्वरितमितिस्वरितत्वम् ।

प्रस्वनितास्तः स्यमुस्वनध्वनशब्दे भावेनिष्ठा भकृदंस्वनितंयेषांतेप्रस्वनिताः सभस्तुगागमः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। ऊर्मयः अर्तेरूच्चेतिमिप्रत्ययः॥ १२॥

त्रयोदशीमृचमाह—

श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभिः।
आसीदन्तुबर्हिषिमित्रोअर्यमाप्रातर्यावाणोअध्वरम्॥ १३॥

श्रुधि। श्रुत्ऽकर्ण। वह्निऽभिः। देवैः। अग्ने। सयावंऽभिः।
आ। सीदन्तु। बर्हिषि। मित्रः। अर्यमा। प्रातःऽयावानः।
अध्वरम्॥१३॥

हेश्रुत्कर्णश्रवणसमर्थाभ्यांकर्णाभ्यांयुक्ताग्ने श्रुधिअस्मदीयंवचनंशृणु योमित्रोदेवः यश्चार्यमायेचान्येप्रातर्यावाणः प्रातःकालेदेवयजनंगच्छन्तोदेवाः तैःसर्वैःसयावभिः आहवनीयाग्निना त्वयासमानगतिभिःअन्यैर्वह्निभिर्देवैःसह अध्वरंक्रतुमुद्दिश्यबर्हिषिदर्भेआसीदन्तुउपविशन्तु॥ श्रुधि श्रुश्रवणे श्रुशृणिवत्यादिनाहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक्। श्रुत्कर्ण शृणोतीतिश्रुत् क्विपितुगागमः श्रुतौकर्णौयस्यासौश्रुत्कर्णः। वह्निभिः वहप्रापणे वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनित्इतिनिप्रत्ययः नित्त्वादाद्युदात्तत्वम्। सयावभिः समानंयान्तीतिसयावानः याप्रापणे आतोमनिन्क्वनिब्वनिपश्चेतिवनिप् कृदुत्तरपदप्रकृतिस्वरत्वम्। प्रातर्यावाणःपूर्ववत् प्रातिपदिकान्तनुम्विभक्तिषुचेतिणत्वम्॥ १३॥

चतुर्दशीमृचमाह—

शृण्वन्तुस्तोमंमरुतःसुदानवोग्निजिह्वाऋतावृधः।
पिबन्तुसोमंवरुणोधृतव्रतोश्विभ्यामुषसासजूः॥ १४॥ ३०॥

शृण्वन्तु। स्तोमम्। मरुतः। सुऽदानवः। अग्निऽजिह्वाः।
ऋतऽवृधः। पिबन्तु। सोमम्। वरुणः। धृतऽव्रतः। अश्विऽभ्याम्।
उषसा। सऽजूः॥ १४॥ ३०॥

मरुतोदेवाः स्तोमंअस्मदीयंस्तोत्रंशृण्वन्तु कीदृशाः सुदानवः सुष्ठुफलस्यदातारः अग्निजिह्वाः अग्निर्जिह्वास्थानीयोमुख्योयेषुमरुत्सुतादृशाः ऋतावृधः सत्यस्ययज्ञस्यवावर्धकाः त-

थाधृतव्रतः गृहीतकर्मावरुणोदेवःअश्विभ्यांदिवाभ्यांउपसादेवतयासजूः सहसोमंपिबतु ॥ सुदानवः डुदाञ्दाने दाभाभ्यांनुरितिभावेनुप्रत्ययः दानुशब्दआद्युदात्तः शोभनंदानुयेषां आद्युदात्तंद्व्यच्छन्दसीतिउत्तरपदाद्युदात्तत्वम् । अग्निजिह्वाः अग्नेर्जिह्वायामेवस्थिताहविर्भाजइत्यर्थःतात्स्थ्यात्ताच्छब्द्यम् अग्निर्जिह्वास्थानीयोयेषांते छान्दसमन्तोदात्तत्वम् । ऋतावृधः ऋतस्य सत्यस्ययज्ञस्यवावर्धयितारः वृधेरन्तर्भावितण्यर्थात् क्विप्चेतिक्विप् अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् ॥ १४ ॥

इतिप्रथमस्यतृतीयेत्रिंशोवर्गः ॥ ३० ॥

त्वमग्नेवसूनितिद्वितीयंदशर्चंसूक्तम् अत्रानुक्रमणिका—त्वमग्नेदशानुष्टुभमर्धर्चोन्त्योदेवइति । प्रस्कण्वऋषिः आनुष्टुभंछन्दः इदंसूक्तमग्निदेवताकम् पूर्वत्राग्नेयंत्वित्युक्तत्वात् अयंसोमइत्यर्धर्चोदेवदेवत्यः प्रातरनुवाकेआग्नेयेक्रतौआश्विनशस्त्रेचैतत्सूक्तम् अथैतस्यारात्रेरितिखण्डेसूत्रितम्—त्वमग्नेवसूंस्त्वंहिक्षैतवदिति । तथागर्गत्रिरात्रस्यान्त्येहन्येतत्सूक्तंआज्यशस्त्रम् आङ्गिरसं स्वर्गकामइतिखण्डेसूत्रितम्—वारवंतीयमुत्तमेत्वमग्नेवसूँरितिचाज्यमिति ।

तत्रप्रथमामृचमाह—

त्वमग्ने॒ वसूँ॑रि॒ह रु॒द्राँ आ॑दि॒त्याँ उ॒त। यजा॑ स्वध्व॒रं जनं॒ मनु॑जातं घृत॒प्रुष॑म्॥१॥

त्वम् । अ॒ग्ने॒ । वसू॑न् । इ॒ह । रु॒द्रान् । आ॒दि॒त्यान् । उ॒त । यज॑ ।
सु॒ऽअ॒ध्व॒रम् । जन॑म् । मनु॑ऽजातम् । घृ॒त॒ऽप्रुष॑म् ॥ १ ॥

हेअग्नेत्वंइहकर्मणिवस्वादीन्यजउतअपिचजनंअन्यमपिदेवतारूपंप्राणिनंयज कीदृशं स्वध्वरंशोभनयागयुक्तंमनुजातंमनुनाप्रजापतिनाउत्पादितं घृतप्रुषंउदकस्यसेक्तारम् ॥ यज द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । स्वध्वरः शोभनः अध्वरोयस्यासौस्वध्वरः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । मनुजातम् जनेरन्तर्भावितण्यर्थात्कर्मणिक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । घृतप्रुषं प्रुषप्लुषस्नेहनसेचनपूरणेषु घृतेनोदकेनप्रुष्णातिपूरयतीतिघृतप्रुट् क्विप्चेतिक्विप् ॥१॥

द्वितीयामृचमाह—

श्रु॒ष्टी॒वानो॒ हि दा॒शुषे॑ दे॒वा अ॑ग्ने॒ विचे॑तसः ।
तान्रो॑हिदश्व गिर्वण॒स्त्रय॑स्त्रिंशत॒मा व॑ह ॥ २ ॥

श्रु॒ष्टी॒ऽवानः॑ । हि । दा॒शुषे॑ । दे॒वाः । अ॒ग्ने॒ । विऽचे॑तसः । तान् ।
रोहि॑त्ऽअश्व । गि॒र्व॒णः॒ । त्रयः॑ऽत्रिंशतम् । आ । व॒ह॒ ॥ २ ॥

हेअग्नेविचेतसोविशिष्टप्रज्ञानादेवाः दाशुषेहविर्दत्तवतेयजमानायश्रुष्टीवानोहिश्रुष्टिःफल-स्यदानंतद्वाजःखलु हेरोहिदश्वरोहिन्नामकैरश्वैरुपेत गिर्वणःगीर्भिःस्तुतिभिर्वननीयाग्ने गिर्व-णादेवोभवतिगीर्भिरेनंवनयन्तीतियास्कः । त्रयस्त्रिंशतंअनयासंख्ययासंख्यातान्तान्देवानावह इहानय ॥ श्रुष्टीवानः श्रुष्टिःप्रेरणार्थः भावेक्तिन् श्रुष्टिंवनन्तिसंभजन्तइतिश्रुष्टीवानः अन्येभ्यो पिदृश्यन्तइतिविच् छान्दसंदीर्घत्वम् । विचेतसः विशिष्टंचेतोयेषांते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । गिर्वणः गीर्भिर्वननीयोगिर्वणाः वनतेरसुन् पूर्वपदस्यह्रस्वत्वंछान्दसम् । त्रयश्चत्रिंशच्चत्रयस्त्रिं-शत् त्रेस्त्रयइतित्रिशब्दस्यत्रयसआदेशः संख्येतिपूर्वपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह—

प्रियमेधवदत्रिवज्जातवेदोविरूपवत् ।
अङ्गिरस्वन्महिव्रतप्रस्कण्वस्यश्रुधीहवम् ॥ ३ ॥

प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥ ३ ॥

हेमहिव्रतमभूतकर्मन्जातवेदोग्ने प्रस्कण्वस्यकण्वपुत्रस्यमहर्षेर्हवमाह्वानंश्रुधिशृणु तत्रच-त्वारोदृष्टान्ताः—प्रियमेधात्रिविरूपाङ्गिरोनामकाएतेषामाह्वानंयथाशृणोषितद्वत् अत्रनिरुक्तम्— प्रियमेधःप्रियाअस्यमेधायथैतेषामृषीणामेवंप्रस्कण्वस्यशृणुह्वानंप्रस्कण्वःकण्वस्यपुत्रःकण्वप्रभ-वोयथाप्राग्रमिति विरूपोनानारूपोमहिव्रतोमहाव्रतइतिच । प्रियमेधवत्प्रियमेधस्येव तत्रतस्येवे-तिषष्ठ्यर्थेवतिः । एवमत्रिवदित्यादावपि । प्रस्कण्वादयोगताः ॥ ३ ॥

चतुर्थीमृचमाह—

महिकेरवऊतयेप्रियमेधाअहूषत ।
राजन्तमध्वराणामग्निंशुक्रेणशोचिषा ॥ ४ ॥

महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत । राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥ ४ ॥

महिकेरवः प्रौढकर्माणः प्रियमेधाःप्रियेणयज्ञेनोपेताःऋषयः ऊतयेरक्षार्थंअग्निमहूषत-आहूतवन्तः कीदृशं अध्वराणांयज्ञानांमध्येशुक्रेणशोचिषाशुद्धेनप्रकाशेनराजन्तंदीप्यमानम् ॥

१ नि० ६. १४. । १ नि० ३. १७. ।

महिकेरवः महपूजायां औणादिकइनप्रत्ययः डुकृञ्करणे कृवापाजीत्युण् महयोमहान्तः कारवोयेषांतेतथोक्ताः आकारस्यएकारादेशश्छान्दसः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। प्रियमेधाः प्रियोमेधोयेषांते। अहूषत ह्वेञ्स्पर्धायांशब्देच लुङिसिचिबहुलंछन्दसीतिसंप्रसारणपरपूर्वत्वे हलइतिदीर्घत्वम् आदेशप्रत्यययोरितिषत्वम्॥ ४ ॥

पञ्चमीमृचमाह—

घृतांहवनसन्त्येमाउषुश्रुधीगिरः।
याभिःकण्वस्यसूनवोहवन्तेवसेत्वा ॥ ५ ॥ ३१ ॥

घृतऽआहवन । सन्त्य । इमाः । ऊम् इति । सु । श्रुधि । गिरः ।
याभिः । कण्वस्य । सूनवः । हवन्ते । अवसे । त्वा ॥ ५ ॥ ३१ ॥

हेघृताहवनघृतेनहूयमान सन्त्यफलप्रदाग्ने इमाउगिरः अस्माभिःप्रयुज्यमानाअपिस्तोत्ररूपावाचःसुश्रुधिसुष्ठुश्रृणु कण्वस्यमहर्षेःसूनवःपुत्राः याभिर्गीर्भिरवसेस्वरक्षार्थंत्वाहवन्तेत्वामाह्वयन्ति ॥ घृताहवन घृतेनाहूयतेस्मिन्नितिघृताहवनः अधिकरणेल्युट् आमन्त्रिताद्युदात्तत्वम्। श्रुधि श्रुश्रृणुपृकृवृभ्यश्छन्दसिइतिहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक् ॥ ५ ॥

॥इतिप्रथमस्यतृतीयेएकत्रिंशोवर्गः ॥ ३१ ॥

अश्वमेधेपौष्ण्यामिष्टौस्विष्टकृतोनुवाक्यात्वांचित्रश्रवस्तमेत्येषा सर्वान्कामानाप्स्यन्नितिखण्डेसूत्रितम्—त्वांचित्रश्रवस्तमयद्वाहिष्ठंतदग्नयइति।

तामेतांसूक्तेषष्ठीमृचमाह—

त्वांचित्रश्रवस्तमहवन्तेविक्षुजन्तवः।
शोचिष्केशंपुरुप्रियाग्नेहव्यायवोढवे ॥ ६ ॥

त्वाम् । चित्रश्रवःऽतम । हवन्ते । विक्षु । जन्तवः । शोचिःऽकेशम् ।
पुरुऽप्रिय । अग्ने । हव्याय । वोढवे ॥ ६ ॥

हेचित्रश्रवस्तमअतिशयेनविविधहवीरूपान्नयुक्तपुरुप्रियबहूनांयजमानानांप्रीतिकराग्ने त्वांहव्यायवोढवेहविर्वोढुं विक्षुजन्तवः प्रजासूत्पन्नायजमानाहवन्तेआह्वयन्ति कीदृशंशोचि-

प्केशंदीप्तिरूपकेशोपेतम् तथाचवाजसनेयिनआमनन्ति—शोचन्तइवहवैतस्यसमिद्धस्यरश्मयः केशाइति ॥ चित्रश्रवस्तम श्रवइत्यन्ननाम चित्रंश्रवोयस्यासौचित्रश्रवाः अतिशयेनचित्रश्रवाः चित्रश्रवस्तमः आमन्त्रितानुदात्तत्वम् । शोचिष्केशं शुचदीप्तौ अर्चिशुचिहुसृपिछादिछर्दिभ्यइस्सिरितीसिः प्रत्ययस्वरः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । हव्याय हवनक्रियायांप्राप्यत्वात् क्रियाग्रहणंकर्तव्यमितिसंप्रदानत्वाच्चतुर्थी । वोळ्हवे वहप्रापणे तुमर्थेसेसेनितितवेन्प्रत्ययः ढत्वधत्वष्टुत्वढलोपेषुकृतेषु सहिवहोरोदवर्णस्येतिअकारस्यओकारः नित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

निस्त्वाहोतारमृत्विजंदधिरेवसुवित्तमम् ।
श्रुत्कर्णंसप्रथस्तमंविप्राअग्नेदिविष्टिषु ॥ ७ ॥

नि । त्वा । होतारम् । ऋत्विजम् । दधिरे । वसुवित्ऽतमम् ।
श्रुत्ऽकर्णम् । सप्रथःऽतमम् । विप्राः । अग्ने । दिविष्टिषु ॥ ७ ॥

हेअग्नेविप्रामेधाविनोदिविष्टिषुयागेषुत्वांनिदधिरेस्थापितवन्तः कीदृशं होतारंआह्वातारंऋत्विजं ऋतुषुयजनशीलं वसुवित्तमंअतिशयेनधनस्यलंभयितारं श्रुत्कर्णंश्रवणयोग्यकर्णोपेतं सप्रथस्तमं अतिशयेनप्रख्यातम् ॥ दधिरे इरेचश्चित्त्वादन्तोदात्तत्वं पादादित्वान्निघाताभावः । दिविष्टिषु इष्टयएषणानि दिवःस्वर्गस्यएषणानियेषुयागेषुतेदिविष्टयः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिवचनाद्दिवउदित्युत्वंनक्रियते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

आत्वाविप्राअचुच्यवुःसुतसोमाअभिप्रयः ।
बृहद्भाबिभ्रतोहविरग्नेमर्तायदाशुषे ॥ ८ ॥

आ । त्वा । विप्राः । अचुच्यवुः । सुतऽसोमाः । अभि । प्रयः ।
बृहत् । भाः । बिभ्रतः । हविः । अग्ने । मर्ताय । दाशुषे ॥ ८ ॥

हेअग्ने सुतसोमाः अभिषुतसोमयुक्ताः विप्रामेधाविनऋत्विजः प्रयःअभि हविर्लक्षणमन्नमभिलक्ष्यत्वाआचुच्यवुःत्वामागमयन्ति कीदृशंत्वांबृहन्महान्तं भाः भासमानं कीदृशाविप्राः दा-

शुषेमर्ताय हविःप्रदस्ययजमानस्यसम्बन्धिहविर्बिभ्रतोधारयन्तः ॥ अचुच्यवुः च्युङ्गतौ असादन्तर्भावितण्यर्थाल्लङिव्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिशपःश्लुः सिजभ्यस्तविदिभ्यश्चेतिझेर्जुसादेशः जुसिचेतिगुणः । नृहन्द्राः उभयत्रसुपांसुलुगितिविभक्तेर्लुक् । बिभ्रतः डुभृञ्धारणपोषणयोः शतरिनाभ्यस्ताच्छतुरितिनुमागमप्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । मर्ताय दाशुषे उभयत्रषष्ठ्यर्थेचतुर्थीवक्तव्येतिचतुर्थी ॥ ८ ॥

नवमीमृचमाह—

प्रातर्यांव्णःसहस्कृतसोमपेयायसन्त्य ।
इहाद्यदैव्यंजनंबर्हिरासादयावसो ॥ ९ ॥

प्रातः॒ऽयाव्नः । सहः॒ऽकृत । सोम॒ऽपेया॑य । सन्त्य । इ॒ह । अ॒द्य । दैव्य॑म् । जन॑म् । ब॒र्हिः । आ । सा॒द॒य॒ । व॒सो॒ इति॑ ॥ ९ ॥

हेसहस्कृतबलेनमथित सन्त्य फलदातः वसोनिवासहेतुभूताग्ने इहदेवयजनदेशेअद्यास्मिन्दिनेसोमपेयायसोमपानार्थंप्रातर्यांव्णः प्रातरागच्छतोदेवान्दैव्यंजनंअन्यमपिदेवताजनंबर्हिरासादययज्ञंप्रापय ॥ प्रातर्यांव्णः शसिअल्लोपोनइत्यकारलोपः । सहस्कृत सहतेभिभवत्यनेनेतिसहोबलं तेनक्रियतइतिसहस्कृतः ओजःसहोम्भस्तमसस्तृतीयायाइतिअलुगभावश्छान्दसः ॥ ९ ॥

दशमीमृचमाह—

अर्वाञ्चंदैव्यंजनमग्नेयक्ष्वसहूतिभिः ।
अयंसोमःसुदानवस्तंपाततिरोअह्न्यम् ॥ १० ॥ ३२ ॥

अ॒र्वाञ्च॑म् । दैव्य॑म् । जन॑म् । अग्ने॑ । यक्ष्व॑ । सहू॑तिऽभिः । अ॒यम् । सोम॑ः । सु॒ऽदा॒न॒वः॒ । तम् । पा॒त॒ । ति॒रः॒ऽअ॑ह्न्यम् ॥ १० ॥ ३२ ॥

हेअग्ने अर्वाञ्चमभिमुखंदैव्यंजनंदेवतारूपंप्राणिनंसहूतिभिःसमानाह्वानैःदेवान्तरैःसह यक्ष्वयज हेसुदानवः सुष्ठुफलदातारोदेवाः अयंसोमःयुष्मदर्थंसोमःपुरतोवर्ततेतंसोमंपात पिबत कीदृशं तिरोअह्न्यंएतन्नामकंपूर्वस्मिन्नह्निअभिषुतोयःसोमः उत्तरेहनिहूयते तस्यैतन्नामधेयम् ॥ दैव्यम् देवाद्यञञाविति प्राग्दीव्यतीयोयञ् । यक्ष्व लोटिबहुलंछन्दसीतिशपोलुक् प्रत्ययस्वराभावश्छान्दसः अग्नेइत्यस्यपादादौवर्तमानस्यामन्त्रितंपूर्वमविद्यमानवदितिअविद्य-

मानवत्त्वाद् तिङ्ङतिङइतिनिघाताभावः । सहूतिभिः समानाहूतिराह्वानंयेषांतिसहूतयः समान-स्यच्छन्दसीतिसभावः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । पात पापाने बहुलंछन्दसीतिशपोलुक् । तिरोअह्न्यं अह्निभवमह्न्यम् भवेछन्दसीतियत् नस्तद्धितेइतिटिलोपोनभवति अह्नष्टखोरेवेति नियमात् भसंज्ञायामल्लोपोनइत्यकारलोपः येचाभावकर्मणोरितिप्रकृतिभावस्तुसर्वविधीनांछ-न्दसिविकल्पितत्वान्नक्रियते तिरोहितोअह्न्यस्तिरोअह्न्यः प्रकृत्यान्तःपादमितिप्रकृतिभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेद्वात्रिंशोवर्गः ॥ ३२ ॥

एषोउषाइतिपञ्चदशर्चंतृतीयंसूक्तम् प्रस्कण्वस्यार्षं इदमुत्तरंचाश्विनंगायत्रीछन्दस्कम् अत्रानुक्रमणिका—एषोपञ्चोनाश्विनंतुगायत्रमिति ।प्रातरनुवाकेआश्विनेक्रतौगायत्रेछन्दसिआ-श्विनशस्त्रेचेदंसूक्तम् । अथाश्विनएषोउषाइतिसूत्रितम् ।

तत्रप्रथमामृचमाह—

एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः । स्तुषेवामश्विनाबृहत् ॥ १ ॥

एषो इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥ १ ॥

एषो एषैवास्माभिःपरिदृश्यमाना प्रिया सर्वेषांप्रीतिहेतुः अपूर्व्या पूर्वेषुमध्यरात्रादिकाले-ष्वविद्यमानानभवति किन्त्विदानींतनी उषा उषोदेवतादिवोद्युलोकस्यसकाशात्आगत्यव्युच्छ-तितमोवर्जयति हेअश्विनौवांयुवांबृहत्प्रभूतंयथाभवतितथास्तुषे स्तौमि ॥ स्तुषे ष्टुञ्स्तुतौ ति-ङांतिङोभवन्तीत्युत्तमैकवचनस्यमध्यमैकवचनादेशः यद्वा लेटयुत्तमैकवचनेसिब्बहुलंलेटी-तिसिप् ॥ १ ॥

द्वितीयामृचमाह—

यादस्रासिन्धुमातरामनोतरारयीणाम् । धियादेवावसुविदा ॥ २ ॥

या । दस्रा । सिन्धुऽमातरा । मनोतरा । रयीणाम् । धिया । देवा । वसुऽविदा ॥ २ ॥

यादेवा यावुभावश्विनौवक्ष्यमाणगुणयुक्तौतौस्तुपेइतिपूर्वत्रान्वयः कीदृशौ दस्रा दर्शनीयौ सिन्धुमातरा समुद्रमातृकौ यद्यपिसूर्याचन्द्रमसाविवसमुद्रजौ तथाप्यश्विनोःकेषांचिन्मतेतद्रूपत्वात्तथात्वम् रयीणांधनानांमनोतरा मनसातारयितारौधियाकर्मणावसुविदा निवासस्थानस्य लम्भयितारौ ॥मनोतरा मनसातरतइतिमनोतरौ तरतेरन्तर्भावितण्यर्थाद्वऋदोरवित्यप् पूर्वपदान्तस्यसकारस्यरुत्वेसतिछान्दसमुत्वम्।रयीणां नामन्यतरस्यामितिनामउदात्तत्वम्।धिया सावेकाचइतिविभक्तेरुदात्तत्वम्। वसुविदा वसूनिनिवासस्थानानिविन्दतइतिवसुविदौ क्विप्चेतिक्विप्॥ २ ॥

तृतीयामृचमाह—

वृच्यन्तेवांककुहासोजूर्णायामधिविष्टपि । यद्वांरथोविभिष्पतात् ॥ ३॥

वृच्यन्ते । वाम् । ककुहासः । जूर्णायाम् । अधि । विष्टपि । यत् । वाम् । रथः । विऽभिः । पतात् ॥ ३ ॥

हेअश्विनौ वांयुवयोःसम्बन्धीरथः जूर्णायांनानाशास्त्रैःस्तुतायांअधिविष्टपिस्वर्गलोके यद्यदा विभिरश्वैःपतात् पततिगच्छति तदानींवांयुवयोः ककुहासःस्तुतयोवच्यन्ते अस्माभिरुच्यन्ते ॥ वच्यन्ते ब्रवीतेर्यकि ब्रुवोवचिरितिवच्यादेशः वचिस्वपीत्यादिनासम्प्रसारणम् संप्रसारणाच्चेत्यत्रवाछन्दसीत्यनुवृत्तेःपरपूर्वत्वस्यपाक्षिकत्वाद्यणादेशः प्रत्ययस्वरः । ककुहासः ककुभंशृंगेविदुः प्रधानेचेत्यभिधानात्प्राधान्याभिधायिनाककुभशब्देनतत्प्रतिपादिकाःस्तुतयोलक्ष्यन्ते हत्वंछान्दसं आज्जसेरसुगित्यसुक् । जूर्णायाम् जृपूवयोहानौ अत्रस्तुत्यर्थः धातूनामनेकार्थत्वात् निष्ठायां श्र्युकःकितीति इट्प्रतिषेधः बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः रदाभ्यामितिनिष्ठानत्वम् प्रत्ययस्वरः । विभिः वीगत्यादौ वियन्तिगच्छन्तीतिवयोश्वाः औणादिकोडिप्रत्ययः । पतात् पत्लृगतौ लेट्याडागमः इतश्चलोपइतीकारलोपः ॥ ३ ॥

चतुर्थीमृचमाह—

हविषाजारोअपांपिपर्तिपपुरिर्नरा । पिताकुटस्यचर्षणिः ॥ ४ ॥

हविषा । जारः । अपाम् । पिपर्ति । पपुरिः । नरा । पिता । कुटस्य । चर्षणिः ॥ ४ ॥

हेअश्विनौदेवौ अपांजारः स्वकीयतापेनोदकानांजरयितासूर्यः हविषाअस्मद्दत्तेन पिपर्तिदेवान्पूरयति उदितेसूर्येहविःप्रदानात्सूर्यस्यपूरकत्वंद्रष्टव्यम् अतःसूर्योदयकाले युवाभ्यामागन्तव्यमित्यर्थः कीदृशोजारः पपुरिः उक्तक्रमेणपूरणस्वभावः पिता पालकः कुटस्यचर्षणिः कर्मणोद्रष्टा अत्रनिरुक्तम्—हविषापांजरयितापिपर्तिपपुरिरितिपृणातिनिगमौ वाप्रीणातिनिगमौवापिताकृतस्यकर्मणश्चायितादित्यइतिं ॥ जारः जरयतीतिजारआदित्यः दारजारौकर्तरिणिलुक्चेतिघञन्तोनिपातितः कर्षात्वतइत्यन्तोदात्तत्वम् । अपां ऊडिदमितिविभक्तेरुदात्तत्वम् । पिपर्ति पृपालनपूरणयोः तिपि जुहोत्यादित्वाच्छपःश्लुः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अनुदात्तेचेत्यभ्यस्तस्याद्युदात्तत्वम् । पपुरिः आदृगमहनइतिकिन्प्रत्ययः लिङ्वद्भावात्किस्वेसिद्धेपि पुनःकित्करणसामर्थ्याद्दच्छत्पृवामितिगुणाभावः उदोष्ठ्यपूर्वस्येत्युत्वम् नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

आदारोवांमतीनांनासत्यामतवचसा । पातंसोमस्यधृष्णुया ॥ ५॥२३॥

आऽदारः । वाम् । मतीनाम् । नासत्या । मतऽवचसा । पातम् । सोमस्य । धृष्णुऽया ॥ ५ ॥ २३ ॥

हेमतवचसा अभिमतस्तोत्रौ नासत्या अश्विनौ वांयुवयोर्मतीनां बुद्धीनां आदारः प्रेरकोयःसोमोस्ति सोमस्य तंसोमं पातं युवां पिबतं कीदृशंसोमं धृष्णुयाधर्षणशीलंमदकरत्वेनतीव्रमित्यर्थः ॥ आदारः दृङ्आदरे आदरयतीत्यादारः दारजारौ कर्तरिणिलुक्चेतिघञ्प्रत्ययः थाथादिनोत्तरपदान्तोदात्तत्वम् । मतीनां नामन्यतरस्यामितिनामउदात्तत्वम् । मतवचसा मतं अभिमतं स्तोत्ररूपं वचोययोस्तौ सुपांसुलुगितिविभक्तेराकारः । पातं पापाने बहुलंछन्दसीतिशपोलुकिसति पाघ्रेत्यादिनापिबादेशोनभवति । सोमस्य क्रियाग्रहणंकर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । धृष्णुया सुपांसुलुगितिविभक्तेर्याजादेशः ॥ ५ ॥

॥ इतिप्रथमस्यतृतीयेत्रयस्त्रिंशोवर्गः ॥ ३३ ॥

. १ नि० ५, २४.१

षष्ठीमृचमाह—

यानः॑पीपर॑दश्विनाज्योति॑ष्मती॒तम॑स्ति॒रः । ताम॒स्मेरा॑साथा॒मिषम् ॥६॥

या । नः॒ । पीप॑रत् । अ॒श्वि॒ना॒ । ज्योति॑ष्मती । तमः॑ । ति॒रः । ताम् । अ॒स्मे इति॑ । रा॒सा॒था॒म् । इष॑म् ॥६ ॥

हेअश्विना ज्योतिष्मतीरसवीर्यादिरूपज्योतिर्युक्तायाइट्अन्नं नोस्मान् पीपरव् पारयेव् तृप्तिंमापयेव् किंकृत्वा तमोदारिद्र्यरूपं अन्धकारं तिरः अन्तर्हितं विनष्टंकृत्वा तामिषं तादृशमन्नं अस्मे अस्मभ्यं रासाथां युवांदत्तम् ॥ पीपरव पृपालनपूरणयोः ण्यन्ताव् लुङिचङि णिलोपः उपधाह्रस्वत्वद्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः चङ्यन्यतरस्यामिति उपोत्तमस्य धात्वकारस्योदात्तत्वेमाप्ते व्यत्ययेनाभ्यासस्योदात्तत्वम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । अस्मे सुपांसुलुगितिचतुर्थीबहुवचनस्यशेआदेशः । रासाथां रादाने छान्दसे प्रार्थनायांलुङि व्यत्ययेनात्मनेपदं च्लेःसिच् एकाचइतीट्प्रतिषेधः पूर्ववदडभावः तिङ्ङतिङइतिनिघातः ॥ ६ ॥

सप्तमीमृचमाह—

आनो॑ना॒वाम॑ती॒नांया॒तंपा॒राय॒गन्त॑वे । यु॒ञ्जाथा॑मश्विना॒रथ॑म् ॥ ७ ॥

आ । नः॒ । ना॒वा । म॒ती॒नाम् । या॒तम् । पा॒राय॑ । गन्त॑वे । यु॒ञ्जाथा॑म् । अ॒श्वि॒ना॒ । रथ॑म् ॥ ७ ॥

हेअश्विना मतीनांस्तुतीनांपारायगन्तवेपारंगन्तुं नावानौरूपेणगमनसाधनेननोस्मान्प्रतिआयातंसमुद्रमध्यादागच्छतंभूमावागन्तुंरथंभवदीयंयुंजाथांसाश्वंकुरुतम् ॥ नावा सावेकाचइति विभक्तेरुदात्तत्वम् । गन्तवे तुमर्थेसेसेनितितवेन्प्रत्ययःनित्त्वादाद्युदात्तत्वम् । युञ्जाथाम् युजिर्योगे लोट्याथामि रुधादित्वाव्श्नम् श्नसोरल्लोपइत्यकारलोपः प्रत्ययस्वरः ॥ ७ ॥

अष्टमीमृचमाह—

अ॒रित्रं॑वांदि॒वस्पृ॒थुती॒र्थेसिन्धू॑नां॒रथः॑ । धि॒यायु॑युज्र॒इन्द॑वः ॥ ८ ॥

अरित्रम् । वाम् । दिवः । पृथु । तीर्थे । सिन्धूनाम् । रथः ।
धिया । युयुज्रे । इन्दवः ॥ ८ ॥

हेअश्विनौ वांयुवयोः दिवस्पृथु द्युलोकादपिविस्तीर्णंअरित्रंगमनसाधनंनौरूपंसिन्धूनां समुद्राणां तीर्थेअवतरणप्रदेशेविद्यतइतिशेषः रथश्च भूमौगन्तुंविद्यते इन्दवःसोमाः धियाभवद्विषयेणयुयुज्रेयुक्ताबभूवुः॥ अरित्रं ऋगतौ अर्तिलूधूसूखनसहचरइत्रइतिकरणेइत्रप्रत्ययः प्रत्ययस्वरः। दिवःऊडिदमितिविभक्तेरुदात्तत्वम्। तीर्थे तॄप्लवनतरणयोः पातॄतुदिवचिरिचिसिचिभ्यस्थगितिथक् ऋतइद्धातोरितीत्वम् हलिचेतिदीर्घः। युयुज्रे लिटिइरयोरेइतिइरेचोरेआदेशः॥८॥

नवमीमृचमाह—

दिवस्कण्वासइन्दवोवसुसिन्धूनांपदे। स्वंवव्रिंकुहधित्सथः॥ ९॥

दिवः । कण्वासः । इन्दवः । वसु । सिन्धूनाम् । पदे । स्वम् ।
वव्रिम् । कुह । धित्सथः ॥ ९ ॥

हेकण्वासः कण्वपुत्राः यद्वा मेधाविनऋत्विजः अश्विनावित्थंपृच्छतेतिशेषः कथमिति तदुच्यते दिवोद्युलोकसकाशात् इन्दवःसूर्यरश्मयःप्रादुर्भूताःसिन्धूनामपांवृष्टिरूपाणांस्यन्दनस्वभावानां पदेस्थानेअन्तरिक्षेवसुअस्मदादिनिवासहेतुभूतमुषःकालीनंज्योतिःआविर्भूतमितिशेषः अस्मिन्नवसरेयुवांस्वंवव्रिंस्वकीयंरूपंकुहधित्सथः कुत्रस्थापयितुमिच्छथः अत्रागत्यप्रदर्शनीयमितितात्पर्यार्थः ॥ कुह वाहचच्छन्दसीतिकिंशब्दात्सप्तम्यर्थेहप्रत्ययः कुतिहोरितिकिमः कुः। धित्सथः डुधाञ्धारणपोषणयोः सनि सनिमीमाघुरभलभशकपतपदामचइसितिआकारस्यइसादेशः अत्रलोपोभ्यासस्येतिअभ्यासलोपः सःस्यार्धधातुकेइतिसकारस्यतकारः॥९॥

दशमीमृचमाह—

अभूदुभाउअंशवेहिरण्यंप्रतिसूर्यः। व्यख्यज्जिह्वयासितः॥१०॥३४॥

अभूत् । ऊम् इति । भाः । ऊम् इति । अंशवे । हिरण्यम् । प्रति ।
सूर्यः । वि । अख्यत् । जिह्वया । असितः ॥ १० ॥ ३४ ॥

भाउ सूर्यस्यदीप्तिस्तुअंशवेउपःकालीनरश्मिसिद्ध्यर्थंअभूदुमाद्भूतैव सूर्यश्चहिरण्यंप्रति स्वकीयोदयेनहिरण्यसदृशोभूत् अग्निश्च असितः स्वकीयदीप्तेः सूर्यस्यप्रवेशेनस्वयंकृष्णोभूत्वा जिह्वयास्वकीययाज्वालयाव्यख्यत्प्रकाशितवान् तस्मादयमश्विनोर्युवयोरागमनकालइत्यर्थः ॥ अभूत् भूसुवोस्तिङीतिगुणप्रतिषेधः । हिरण्यंप्रति प्रतिःप्रतिनिधिप्रतिदानयोरितिप्रतेः कर्मप्रवचनीयत्वम् कर्मप्रवचनीययुक्तेद्वितीयेतिद्वितीया । अख्यत् चक्षिङ्व्यक्तायांवाचि लुङि चक्षिङःख्याञितिख्याञादेशः ॥ १० ॥

॥ इतिप्रथमस्यतृतीयेचतुर्स्त्रिंशोवर्गः ॥ ३४ ॥

एकादशीमृचमाह–

अभू॑दु॒ पा॒रमेत॑वे॒ पन्था॑ ऋ॒तस्य॑ साधु॒या । अद॑र्शि॒ वि स्रु॒तिर्दि॒वः ॥११॥

अभू॑त् । ऊ॒म् इति॑ । पा॒रम् । एत॑वे । पन्था॑ः । ऋ॒तस्य॑ । सा॒धु॒ऽया । अद॑र्शि । वि । स्रु॒तिः । दि॒वः ॥ ११ ॥

ऋतस्यसूर्यस्यपारमेतवे रात्रेःपारभूतमुदयाद्रिंगन्तुं पन्थामार्गःसाधुयासमीचीनः अभूदुनिष्पन्नएव दिवः द्योतनात्मकस्यसूर्यस्यस्रुतिःप्रसृतादीप्तिर्व्यदर्शिविशेषेणदृष्टा तस्मादश्विनौयुवाभ्यामागन्तव्यम् ॥ एतवे इणूगतौ तुमर्थेसेसेनितितवेन्प्रत्ययः । साधुया सुपांसुलुगितिविभक्तेर्याजादेशः । अदर्शि कर्मणिलुङि चेःश्चिणादेशः चिणोलुगितितशब्दस्यलुक् । स्रुतिः स्रुगतौ क्तिच्क्तौचसंज्ञायामितिक्तिच् ॥ ११ ॥

द्वादशीमृचमाह–

तत्त॒दिद॒श्विनो॒रवो॑ जरि॒ता प्रति॑ भूषति । मदे॒ सोम॑स्य॒ पिप्र॑तोः ॥१२॥

तत्ऽत॑त् । इत् । अ॒श्विनोः॑ । अवः॑ । ज॒रि॒ता । प्रति॑ । भू॒ष॒ति॒ । मदे॑ । सोम॑स्य । पिप्र॑तोः ॥ १२ ॥

जरितास्तोता अश्विनोःसम्बन्धितत्तदित् पुनःपुनःकृतंसर्वमपिअवोस्मद्विषयंरक्षणंप्रतिभूषतिप्रत्येकमलङ्करोति तदातदाप्रशंसतीत्यर्थः कीदृशयोरश्विनोः मदेहर्षेनिमित्तभूतेसतिसोमस्य पिप्रतोः सोमंपूरयतोः ॥ भूषति भूषअलङ्कारे भौवादिकः । पिप्रतोः पृपालनपूरणयोः पृइत्येके अस्माल्लटःशतृ जुहोत्यादित्वाच्छपःश्लुः द्विर्भावोरदत्वहल्यादिशेषाः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् शतुर्ङित्त्वाद्गुणाभावेयणादेशः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

वाव॒साना वि॒वस्व॑ति॒ सोम॑स्य पी॒त्या गि॒रा । म॒नु॒ष्वच्छं॑भू आग॑तम् ॥१३॥

व॒व॒सा॒ना । वि॒वस्व॑ति । सोम॑स्य । पी॒त्या । गि॒रा । म॒नु॒ष्वत् ।

शं॒भू॒ इति॑ शम्ऽभू । आ । ग॒त॒म् ॥ १३ ॥

हेशम्भू सुखस्यभावयितारौअश्विनौ मनुष्वत् मनाविवविवस्वतिपरिचरणवतियजमानेव-वसानानिवासशीलौयुवां सोमस्यपीत्या सोमपाननिमित्तंगिरास्तुतिनिमित्तंचआगतंआगच्छत-म् ॥ ववसाना वसनिवासे ताच्छील्यवयोवचनेतिताच्छीलिकश्चानश् बहुलंछन्दसीतिशपःश्लुः अन्येषामपिदृश्यतइतिसंहितायामभ्यासस्यदीर्घत्वम् सुपांसुलुगितिविभक्तेराकारः चितइत्यन्तो-दात्तत्वम् ।पीत्या पापाने स्थागापापचोभावेइतिभावेक्तिन् घुमास्थेतीत्वम् व्यत्ययेनान्तोदात्तत्व-म् तृतीयैकवचनेयणादेशेउदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् । मनुष्वत् मनज्ञाने मन्य-तेजानातीतिमनुः बहुलवचनादौणादिकउसिप्रत्ययः तत्रतस्येवेतिसप्तम्यर्थेवतिःप्रत्ययस्वरः ।गतं गमेर्लोटि बहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ १३ ॥

चतुर्दशीमृचमाह—

यु॒वोरु॒षा अनु॒ श्रियं॒ परि॑ज्मनोरु॒पाच॑रत् । ऋ॒ता व॑नथो अ॒क्तुभिः॑ ॥१४॥

यु॒वोः । उ॒षाः । अनु॑ । श्रिय॑म् । परि॑ऽज्मनोः । उ॒प॒ऽआच॑रत् ।

ऋ॒ता । व॒न॒थः॒ । अ॒क्तुऽभिः॑ ॥ १४ ॥

हेअश्विनौपरिज्मनोःपरितोगन्त्रोर्युवोः युवयोरुभयोः श्रियमनुआगमनरूपांशोभामनुसृ-त्यउषाउपाचरत् उषःकालदेवताइहागच्छतु युवयोरागतयोःसतोः पश्चादागतेत्यर्थः युवांचअक्तु-भीरात्रिभिः ऋता यज्ञगतानिहवींषिवनथःकामयेथेसम्भजेथे ॥ युवोः युष्मच्छब्दात्षष्ठीद्विवचन-स्यसुपांसुपोभवन्तीतिषष्ठीद्विवचनादेशः अतआदेशविषयत्वाद्योचीतियत्वाभावः शेषेलोपः । प-रिज्मनोः परितःअजतोगच्छतइतिपरिज्मानौ श्वन्नुक्षन्नित्यादिनाअजतेर्मनिन्प्रत्ययान्तोनिपा-तितः । ऋता शेश्छन्दसीतिशेर्लोपः । वनथः वनषणसम्भक्तौ तिङ्ङतिङइतिनिघातः ॥१४ ॥

प्रवर्ग्येपौर्वाह्णिकेघर्मस्यहविषोद्वितीयायाज्याउभापिबतमित्येषा अथोत्तरमितिखण्डेसू-त्रितम्—उभापिबतमश्विनेतिचोभाभ्यामनयानमिति । आश्विनशस्त्रेप्येषाद्वितीयायाज्या सूत्रितं च—प्रवामन्धांसिमद्यान्यस्थुरुभापिबतमश्विनेतियाज्येति ।

तामेतां पञ्चदशीमृचमाह—

उभापिबतमश्विनोभानःशर्मयच्छतम् ।
अविद्रियाभिरूतिभिः ॥ १५ ॥ ३५ ॥ ३ ॥

उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् ।
अविद्रियाभिः । ऊतिऽभिः ॥ १५ ॥ ३५ ॥ ३ ॥

हेअश्विना उभायुवामुभौपिबतंसोमपानं कुरुतम् ततऊर्ध्वमुभायुवामुभौअविद्रियाभिःप्रशस्ताभिरूतिभीरक्षाभिर्नोस्मभ्यंशर्मसुखंयच्छतम् ॥ पिबतम् पापाने लोटिशपि पाघ्रेत्यादिनापिबादेशः अन्नवृत्तेपुनर्वृत्तावविधिर्निष्ठितस्येतिवचनाल्लघूपधगुणाभावः यद्वा आद्युदात्तःअदन्तःपिबादेशः तिङ्ङतिङइतिनिघातः । यच्छतम् दाण्दाने लोटिशपि पाघ्रेत्यादिनायच्छादेशः । अविद्रियाभिः द्राकुत्सायांगतौ विपूर्वादस्माद्भावेऔणादिकःकिः आतोलोपइटिचेत्याकारलोपः विद्रिर्निन्दा तद्विरोधिनी अविद्रिःस्तुतिः तांयान्तीत्यविद्रियाः अन्येभ्योपिदृश्यन्तइतिविच् कृदुत्तरपदप्रकृतिस्वरत्वम् । ऊतिभिः अवतेःक्तिनि ज्वरत्वरेत्यादिनाऊठ् ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यतृतीयेपञ्चत्रिंशोवर्गः ॥ ३५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणामात्येनविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेतृतीयोध्यायःसमाप्तः ॥ ३ ॥

---

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथप्रथमाष्टकेचतुर्थोध्यायआरभ्यते अयंवामितिनवमानुवाकस्यचतुर्थंसूक्तंदशर्चम् अनुक्रान्तम्—अयंदशप्रागाथंत्विति। ऋषिश्चान्यस्मादृषेरितिपरिभाषितत्वात् कण्वपुत्रःप्रस्कण्वऋषिः तथापूर्वत्राश्विनंत्वित्युक्तत्वात् तुह्यादिपरिभाषयाइदमपिसूक्तमश्विदेवताकम् अनयैवपरिभाषयाइदमुत्तरंचप्रागाथम् अतः प्रथमातृतीयाद्याअयुजोबृहत्यः द्वितीयाचतुर्थ्याद्यायुजःसतोबृहत्यः प्रातरनुवाकेआश्विनेक्रतौबार्हतेछन्दसिएवतत्सूक्तम् अथाश्विनइतिखण्डेसूत्रितम्—इमाउवामयंवामिति आश्विनशस्त्रेप्येतत्सूक्तं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात्।

तत्रप्रथमामृचमाह—

ॐम् अयंवांमधुमत्तमःसुतःसोमंऋतावृधा ।
तमश्विनापिबतंतिरोअंह्यंधत्तंरत्नानिदाशुषे ॥ १ ॥

अयम् । वाम् । मधुमत्ऽतमः । सुतः । सोमः । ऋतऽवृधा । तम् ।
अश्विना । पिबतम् । तिरःऽअंह्यम् । धत्तम् । रत्नानि । दाशुषे ॥१॥

हेऋतावृधा ऋतस्यसत्यस्ययज्ञस्यवावर्धयितारौअश्विनाअश्विनौ वांयुवयोः अयंपुरोवर्तीसोमः सुतोऽभिषुतः कीदृशः मधुमत्तमःअतिशयेनमाधुर्यवान् तिरोअंह्यंतिरोभूतेपूर्वस्मिन्दिनेभिषुतंतंसोमंपिबतम् दाशुषेहविर्दत्तवतेयजमानायरत्नानिरमणीयानिधनानिधत्तंप्रयच्छतम् ॥ वां युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयास्थयोर्वांनावावितिषष्ठीद्विवचनस्यवामादेशःसर्वानुदात्तः । मधुमत्तमः मनज्ञाने मन्यतइतिमधु फलिपाटिनमीत्यादिनाउप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वं धकारश्चान्तादेशः अतिशयेनमधुमान् मधुमत्तमः मतुप्तमपोःपित्त्वादनुदात्तत्वेपदस्वरएवशिष्यते। ऋतावृधा वृधेरन्तर्भावितण्यर्थात् क्विप्चेतिक्विप् अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् । तिरोअंह्यं अह्निभवोह्न्यः भवेछन्दसीतियत् अह्नष्टखोरेवेतिनियमान्नस्तद्धितइतिटिलोपाभावः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिवचनाद्येचाभावकर्मणोरितिप्रकृतिभावाभावेअल्लोपोनइत्यका-

रलोपः तिरोहितोअह्न्यस्तिरोअह्न्यः तिरोन्तर्धावितिगतित्वेननिपातत्वादव्ययत्वेप्रादिसमासेअव्ययपूर्वपदप्रकृतिस्वरत्वम्। दाशुषे दाश्वान्साह्वानित्यादिनाक्वसुप्रत्ययान्तोनिपातितः चतुर्थ्येकवचने वसोःसम्प्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् ॥ १ ॥

द्वितीयामृचमाह—

त्रिवन्धुरेणंत्रिवृतांसुपेशंसारथेनायांतमश्विना ।
कण्वांसोवांब्रह्मंकृण्वन्त्यध्वरेतेषांसुशृणुतंहवंम् ॥ २ ॥

त्रिऽवन्धुरेणं । त्रिऽवृतां । सुऽपेशंसा । रथेन । आ । यातम् । अश्विना । कण्वांसः । वाम् । ब्रह्मं । कृण्वन्ति । अध्वरे । तेषांम् । सु । शृणुतम् । हवंम् ॥ २ ॥

हेअश्विनात्रिवन्धुरेणउन्नतानतरूपेणत्रिविधबन्धनकाष्ठयुक्तेनत्रिवृताअप्रतिहतगतितया लोकत्रयेवर्तमानेनसुपेशसाशोभनसुवर्णयुक्तेनरथेनआयातं इहागच्छतम् कण्वासः कण्वपुत्राः मेधाविनऋत्विजोवांयुवयोरध्वरेयागेब्रह्मस्तोत्ररूपंमन्त्रंहविर्लक्षणमन्नंवाकृण्वन्तिकुर्वन्ति तेषांकण्वानांहवमाह्वानंसुशृणुतंसुष्ठुआदरेणशृणुतम् ॥ त्रिवन्धुरेण बध्नन्तीतिवन्धुराःबन्धेरौणादिकउरन्प्रत्ययः त्रयोबन्धुरायस्यासौत्रिवन्धुरः त्रिचक्रादिपुपाठात् त्रिचक्रादीनांछन्दस्युपसंख्यानमितिउत्तरपदान्तोदात्तत्वम्। त्रिवृता त्रिषुलोकेषुवर्ततइतित्रिवृत् क्विप्चेतिक्विप् । सुपेशसा पेशइतिहिरण्यनाम शोभनंपेशोयस्यासौसुपेशाः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। शृणुतम् श्रुश्रवणे श्रुवःशृचेतिश्नुः तत्सन्नियोगेनधातोःशृभावश्च । हवं ह्वयतेर्भावेनुपसर्गस्येत्यप्सम्प्रसारणंच गुणावादेशौ प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरः ॥ २ ॥

तृतीयामृचमाह—

अश्विंनामधुंमत्तमंपातंसोमंमृतावृधा ।
अथाद्यदस्रावसुबिभ्रंतारथेदाश्वांसमुपंगच्छतम् ॥ ३ ॥

अश्विंना । मधुंमत्ऽतम् । पातम् । सोमंम् । ऋतऽवृधा । अर्थ । अद्य । दुस्रा । वसुं । बिभ्रंता । रथें । दाश्वांसंम् । उपं । गच्छतम् ॥३॥

हेऋतावृधा यज्ञस्यवर्धकावश्विनौमधुमत्तमंसोमंपातंपिबतं हेदस्राअश्विनौ सोमपानार्थं अथअस्मदाह्वानानन्तरं अद्यास्मिन्दिनेरथेस्वकीयेवसुबिभ्रताअस्मदुपयुक्तंधनंधारयन्तौदाश्वां-

संहविःप्रदंयजमानंउपगच्छतंसमीपेमागतम् ॥ बिभ्रता डुभृञ्धारणपोषणयोः शतरिजुहोत्यादित्वाच्छपःश्लुः भृञामिदित्यभ्यासस्येत्वम् शतुर्ङित्त्वाद्गुणाभावेयणादेशः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

त्रिपधस्थेबर्हिषिविश्ववेदसामध्वायज्ञंमिमिक्षतम् ।
कण्वासोवांसुतसोमाअभिद्यवोयुवांहवन्तेअश्विना ॥ ४ ॥

त्रिऽसधस्थे । बर्हिषि । विश्वऽवेदसा । मध्वा । यज्ञम् । मिमिक्षतम् । कण्वासः । वाम् । सुतऽसोमाः । अभिऽद्यवः । युवाम् । हवन्ते । अश्विना ॥ ४ ॥

हेविश्ववेदसासर्वज्ञावश्विनौ त्रिषधस्थेकक्षात्रयरूपेणास्तीर्णत्वात्त्रिषुस्थानेष्ववस्थितेबर्हिषिवेदेर्भेस्थित्वामध्वामधुरेणरसेनयज्ञंमिमिक्षतंसेक्तुमिच्छतं हेअश्विना वांयुष्मदर्थंसुतसोमाअभिषुतसोमयुक्ताः अभिद्यवःअभिगतदीप्तयः कण्वासोयुवामुभौहवन्तेआह्वयन्ते ॥ त्रिषधस्थे त्रिषुस्थानेषुसहतिष्ठतीतित्रिषधस्थंबर्हिः सुपिस्थइतिकप्रत्ययः आतोलोपइटिचेत्याकारलोपः सधमादस्थयोश्छन्दसीतिसहशब्दस्यसधादेशः । मध्वा आगमानुशासनस्यानित्यत्वान्नुमभावः जसिचेत्यत्रजसादिषुछन्दसिवावचनमितिवचनान्नाभावाभावश्च । मिमिक्षतं मिहसेचने सनिएकाचइतीट्प्रतिषेधः हलन्ताच्चेतिसनःकित्त्वाल्लघूपधगुणाभावः अभ्यासहलादिशेषौ ढत्वकत्वषत्वानि । सुतसोमाः सुतःसोमोयैः बहुव्रीहिस्वरः । अभिद्यवः द्युरित्यहर्नाम तेनतत्सम्बन्धी प्रकाशोलक्ष्यते अभिगताद्युं अत्यादयःक्रान्ताद्यर्थेद्वितीययेतिसमासः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

याभिःकण्वमभिष्टिभिःप्रावतंयुवमश्विना ।
ताभिःष्व१स्माँअवतंशुभस्पतीपातंसोममृतावृधा ॥ ५ ॥ १ ॥

याभिः । कण्वम् । अभिष्टिऽभिः । प्र । आवतम् । युवम् । अश्विना । ताभिः । सु । अस्मान् । अवतम् । शुभः । पती इति । पातम् । सोमम् । ऋतऽवृधा ॥ ५ ॥ १ ॥

हेअश्विना युवंयुवामुभौयाभिरभिष्टिभिः अपेक्षिताभीरक्षाभिः कण्वंमहर्षिंप्रावतंरक्षितवन्तौ हेशुभस्पतीशोभनस्यकर्मणःपालकौ ताभीरक्षाभिरस्माननुष्ठातॄन्स्ववतंसुष्ठुरक्षतम् सद्मन्यत्॥ अभिष्टिभिः आभिमुख्येनेष्यन्तइत्यभिष्टयःफलानि इषइच्छायां कर्मणिक्तिनि तितुत्रेत्यादिनाइट्प्रतिषेधः एमन्नादिपुछन्दसिपररूपंवक्तव्यमितिपररूपत्वम् तादौचेतिगतेःप्रकृतिस्वरत्वम् उपसर्गाश्चाभिवर्जमित्यभिरन्तोदात्तः । शुभस्पती शुभदीप्तौ क्विप्चेतिक्विप् षष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् सुबामन्त्रितेइतिषष्ठ्यन्तस्यपराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेप्रथमोवर्गः ॥ १ ॥

षष्ठीमृचमाह—

सुदासेदस्रावसुबिभ्रतारथेपृक्षोवहतमश्विना ।
रयिंसमुद्रादुतवादिवस्पर्यस्मेधत्तंपुरुस्पृहम् ॥ ६ ॥

सुऽदासे । दस्रा । वसु । बिभ्रता । रथे । पृक्षः । वहतम् । अश्विना ।
रयिम् । समुद्रात् । उत । वा । दिवः । परि । अस्मे इति । धत्तम् ।
पुरुऽस्पृहम् ॥ ६ ॥

हेदस्रादर्शनीयावश्विनौसुदासेशोभनदानयुक्तायराज्ञेपिजवनपुत्रायरथेवसुबिभ्रतायुवांपृक्षोन्नंवहतंप्रापितवन्तौ समुद्रादन्तरिक्षात् समुद्रमित्यन्तरिक्षनाम समुद्रःअध्वरमित्यन्तरिक्षनामसुपाठात् उतवादिवस्परि अथवास्वर्गात्पर्याहृत्यपुरुस्पृहंबहुभिःस्पृहणीयंरयिंधनंअस्मेधत्तं अस्मासुस्थापयतम्॥ सुष्ठुददातीतिसुदाःअसुनि कृदुत्तरपदप्रकृतिस्वरत्वम् । दिवस्परि पञ्चम्याःपरावध्यर्थेइतिविसर्जनीयस्यसत्वम् । पुरुस्पृहम् स्पृहईप्सायां चुरादिरदन्तः पुरुभिःस्पृह्यतइतिपुरुस्पृहः कर्मणियञ् अतोलोपस्यस्थानिवत्त्वाल्लघूपधगुणाभावः ञित्स्वरेणउत्तरपदस्याद्युदात्तत्वेकृदुत्तरपदप्रकृतिस्वरेणतदेवशिष्यते ॥ ६ ॥

सप्तमीमृचमाह—

यन्नासत्यापरावतियद्वास्थोअधितुर्वशे ।
अतोरथेनसुवृतानआगतंसाकंसूर्यस्यरश्मिभिः ॥ ७ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे ।
अतः । रथेन । सुऽवृता । नः । आ । गतम् । साकम् । सूर्यस्य ।
रश्मिऽभिः ॥ ७ ॥

हेनासत्याअसत्यरहिताविश्विनौ यद्यदियुवांपरावतिदूरदेशेस्थःवर्तेथे यद्वा अथवाअधितुर्वशेअधिकेसमीपेस्थः अतोस्माद्दूरावसमीपाद्वा सूर्यस्यरश्मिभिःसाकं सूर्योदयकालेसुवृताशोभनवर्तनयुक्तेनरथेननोस्मान्प्रतिआगतमागच्छतम् ॥ नासत्या सत्सुभवौसत्यौनसत्यौअसत्यौनअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । स्थः असभुवि श्नसोरल्लोपइत्यकारलोपः यद्वृत्तयोगादनिघातः । गतं गमेर्लोटिबहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ ७ ॥

अष्टमीमृचमाह–

अर्वाञ्चावांसप्तयोध्वरश्रियोवहन्तुसवनेदुप ।
इषंपृञ्चन्तासुकृतेसुदानवआबर्हिःसीदतंनरा ॥ ८ ॥

अर्वाञ्चा । वाम् । सप्तयः । अध्वरऽश्रियः । वहन्तु । सवना । इत् ।
उप । इषम् । पृञ्चन्ता । सुऽकृते । सुऽदानवे । आ । बर्हिः ।
सीदतम् । नरा ॥ ८ ॥

हेअश्विनौअध्वरश्रियोयागसेविनः सप्तयोश्वाः सवनेदुपअस्मदनुष्ठेयानित्रीणिसवनान्येवोपलक्ष्यअर्वाञ्चाअभिमुखावांयुवांवहन्तुप्रापयन्तु हेनराअश्विनौसुकृतेसुष्ठुकर्मकारिणेसुदानवेशोभनदानयुक्तायजमानायेषमन्नंपृञ्चन्तासंयोजयन्तौ युवांबर्हिरासीदतंदर्भमाप्नुतम् ॥ अर्वाञ्चा सुपांसुलुगितिविभक्तेराकारः । अध्वरश्रियम् अध्वरंश्रयन्तीत्यध्वरश्रियः क्विब्वचिप्रच्छीत्यादिनाक्विप्दीर्घश्च । वहन्तु वहप्रापणे शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणाद्युदात्तत्वम् पादादित्वान्निघाताभावः । सवना षुञ्अभिषवे अभिषूयतेसोमएष्विति सवनानि अधिकरणेल्युट् योरनादेशः गुणावादेशौ लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् शेश्छन्दसिबहुलमितिशेर्लोपः । पृञ्चन्ता पृचीसम्पर्के शतरिरुधादित्वात्श्नम् श्नसोरल्लोपइत्यकारलोपः प्रत्ययस्वरः । सुकृते सुकर्मपापेत्यादिनाकरोतेर्भूतकालेक्विप् ह्रस्वस्यपितिकृतितुक् । सुदानवे शोभ-

हेअश्विना युवंयुवामुभौयाभिरभिष्टिभिः अपेक्षिताभीरक्षाभिः कण्वंमहर्षिमावतंरक्षितवन्तौ हेशुभस्पतीशोभनस्यकर्मणःपालकौ ताभीरक्षाभिरस्माननुष्ठातॄनस्ववतंसुष्ठुरक्षतम् स्पष्टमन्यत्॥ अभिष्टिभिः आभिमुख्येनेष्यन्तइत्यभिष्टयःफलानि इषइच्छायां कर्मणिक्तिनि तितुत्रेत्यादिनाइट्प्रतिषेधः एमन्नादिषुछन्दसिपररूपंवक्तव्यमितिपररूपत्वम् तादौचेतिगतेःप्रकृतिस्वरत्वम् उपसर्गाश्चाभिवर्जमित्यभिरन्तोदात्तः । शुभस्पती शुभदीप्तौ क्विप्चेतिक्विप् षष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् सुबामन्त्रितेइतिषष्ठ्यन्तस्यपराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेप्रथमोवर्गः ॥ १ ॥

षष्ठीमृचमाह—

सुदासेदस्रावसुबिभ्रतारथेपृक्षोवहतमश्विना ।
रयिंसमुद्रादुतवादिवस्पर्यस्मेधत्तंपुरुस्पृहम् ॥ ६ ॥

सुऽदासे । दस्रा । वसु । बिभ्रता । रथे । पृक्षः । वहतम् । अश्विना ।
रयिम् । समुद्रात् । उत । वा । दिवः । परि । अस्मे इति । धत्तम् ।
पुरुऽस्पृहम् ॥ ६ ॥

हेदस्रादर्शनीयावश्विनौसुदासेशोभनदानयुक्तायराज्ञेपिजवनपुत्रायरथेवसुबिभ्रतायुवांपृक्षोन्नंवहतंप्रापितवन्तौ समुद्रादन्तरिक्षात् समुद्रमित्यन्तरिक्षनाम समुद्रःअध्वरमित्यन्तरिक्षनामसुपाठात् उतवादिवस्परि अथवास्वर्गात्पर्याहृत्यपुरुस्पृहंबहुभिःस्पृहणीयंरयिंधनंअस्मेधत्तं अस्मासुस्थापयतम्॥ सुष्ठुददातीतिसुदाःअसुनि कृदुत्तरपदप्रकृतिस्वरत्वम् । दिवस्परि पञ्चम्याःपरावध्यर्थेइतिविसर्जनीयस्यसत्वम् । पुरुस्पृहम् स्पृहईप्सायां चुरादिरदन्तः पुरुभिःस्पृह्यतइतिपुरुस्पृहः कर्मणिघञ् अतोलोपस्यस्थानिवत्त्वाल्लघूपधगुणाभावः ञित्स्वरेणउत्तरपदस्याद्युदात्तत्वेकृदुत्तरपदप्रकृतिस्वरेणतदेवशिष्यते ॥ ६ ॥

सप्तमीमृचमाह—

यन्नासत्यापरावतियद्वास्थोअधितुर्वशे ।
अतोरथेनसुवृतानआगतंसाकंसूर्यस्यरश्मिभिः ॥ ७ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे ।
अतः । रथेन । सुऽवृता । नः । आ । गतम् । साकम् । सूर्यस्य ।
रश्मिऽभिः ॥ ७ ॥

हेनासत्याअसत्यरहिताविश्विनौ यद्यदियुवांपरावतिदूरदेशेस्थःवर्तेथे यद्वा अथवाअ-धितुर्वशेअधिकेसमीपेस्थः अतोस्माद्दूरावसमीपाद्वा सूर्यस्यरश्मिभिःसाकं सूर्योदयकालेसुवृता शोभनवर्तनयुक्तेनरथेननोस्मान्प्रतिआगतमागच्छतम् ॥ नासत्या सत्सुभवौसत्यौनसत्यौअस-त्यौनअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । स्थः अस्भुवि श्नसोरल्लोपइत्य-कारलोपः यद्वृत्तयोगादनिघातः । गतं गमेर्लोटिबहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादि-नानुनासिकलोपः ॥ ७ ॥

अष्टमीमृचमाह—

अर्वाञ्चांवांसप्तयोध्वरश्रियोवहन्तुसवनेदुप ।
इषंपृञ्चन्तासुकृतेसुदानवआबर्हिःसीदतंनरा ॥ ८ ॥

अर्वाञ्चा । वाम् । सप्तयः । अध्वरऽश्रियः । वहन्तु । सवना । इत् ।
उप । इषम् । पृञ्चन्ता । सुऽकृते । सुऽदानवे । आ । बर्हिः ।
सीदतम् । नरा ॥ ८ ॥

हेअश्विनौअध्वरश्रियोयागसेविनः सप्तयोश्वाः सवनेदुपअस्मदनुष्ठेयानित्रीणिसवनान्ये-वोपलक्ष्यअर्वाञ्चाअभिमुखावांयुवांवहन्तुप्रापयन्तु हेनराअश्विनौसुकृतेसुष्ठुकर्मकारिणेसुदान-वेशोभनदानयुक्ताययजमानायेषमन्नंपृञ्चन्तासंयोजयन्तौ युवांबर्हिरासीदतंदर्भमासुतम् ॥ अ-र्वाञ्चा सुपांसुलुगितिविभक्तेराकारः । अध्वरश्रियम् अध्वरंश्रयन्तीत्यध्वरश्रियः क्विब-चिप्रच्छीत्यादिनाक्विप्दीर्घश्च । वहन्तु वहप्रापणे शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्व-रेणाद्युदात्तत्वम् पादादित्वान्निघाताभावः । सवना षुञ्अभिषवे अभिषूयतेसोमएष्विति सवना-नि अविकरणेल्युट् योरनादेशः गुणावादेशौ ञितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् शेश्छन्दसिबहुल-मितिशेर्लोपः । पृञ्चन्ता पृचीसम्पर्के श्नवरिरुधादित्वाच्छ्नम् श्नसोरल्लोपइत्यकारलोपः प्रत्य-यस्वरः । सुकृते सुकर्मपापेत्यादिनाकरोतेर्भूतकालेक्विप् ह्रस्वस्यपितीतितुक् । सुदानवे शोभ-

मंदानुदानंयस्यासौसुदानुः दानुशब्दोनुप्रत्ययान्तआद्युदात्तः आद्युदात्तंद्व्यच्छन्दसीतिबहुव्रीहावुत्तरपदाद्युदात्तत्वम् । सीदतं षद्लृविशरणगत्यवसादनेषु ॥ ८ ॥

नवमीमृचमाह—

तेर्ननासत्यागंतंरथेंनसूर्यत्वचा ।
येनशश्वंदूहथुंर्दाशुषेवसुमध्वःसोमस्यपीतयें ॥ ९ ॥

तेर्न । नासत्या । आ । गतम् । रथेन । सूर्यऽत्वचा । येन । शश्वंत् । ऊहथुंः । दाशुषे । वसु । मध्वंः । सोमस्य । पीतयें ॥ ९ ॥

हेनासत्यासूर्यत्वचासूर्यसंवृतेन सूर्यरश्मिसदृशेनवा तेनप्रसिद्धेनरथेनआगतमागच्छतं दाशुषे हविर्दत्तवतेयजमानायवसुधनं शश्वत्सर्वदायेनरथेनऊहथुः प्रापितवन्तौतेनरथेनेतिपूर्वत्रान्वयः किमर्थमागमनमितितदुच्यते मध्वः मधुरस्यसोमस्यपीतयेसोमपानार्थम् ॥ सूर्यत्वचा त्वचसंवरणे त्वचतिसंवृणोतीतित्वग्रश्मिः सूर्यस्यत्वगिवत्वग्यस्य सप्तम्युपमानेत्यादिनाबहुव्रीहिरुत्तरपदलोपश्च सूर्यशब्दःषूप्रेरणेइत्यस्मात्क्यपि राजसूयसूर्येत्यादिनारुडागमसहितोनिपातितः ततःप्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरेणाद्युदात्तः सएवबहुव्रीहौपूर्वपदप्रकृतिस्वरेणशिष्यते । ऊहथुः वहप्रापणे लिटिअसंयोगाल्लिट्किदितिलिटःकित्त्वे वचिस्वपीत्यादिनासंप्रसारणं अभ्यासहलादिशेषौ सवर्णदीर्घः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः ॥ ९ ॥

दशमीमृचमाह—

उक्थेभिरर्वागवसेपुरूवसूअर्कैश्चनिह्वयामहे ।
शश्वत्कण्वानांसदसिप्रियेहिकंसोमंपपथुंरश्विना ॥१०॥ २ ॥

उक्थेभिंः । अर्वाक् । अवसे । पुरुवसू इति पुरुऽवसू । अर्कैः । च । नि । ह्वयामहे । शश्वंत् । कण्वानाम् । सदसि । प्रिये । हि । कम् । सोमम् । पपथुः । अश्विना ॥ १० ॥ २ ॥

पुरुवसू प्रभूतधनावश्विनौअवसेरक्षणार्थउक्थेभिरुक्थैःशस्त्रैः अर्कैश्च अर्चनसाधनैः स्तोत्रैश्चअर्वागस्मदाभिमुख्येननिह्वयामहेनितरामाह्वयामः हेअश्विनाकण्वानांकण्वपुत्राणामे-

धाविनांवामियेसदस्सियज्ञस्थानेशश्वत्सर्वदासोमं पपथुर्हिकंयुवांपीववन्तौखलु ॥ उक्थेभिः बहुलंछन्दसीतिभिसऐसादेशाभावः बहुवचनेझल्येदित्येत्वम् । अर्कैः ऋचस्तुतौ पुंसिसंज्ञायांघःप्रायेणेतिकरणेघः चजोःकुघिण्ण्यतोरितिकुत्वम् । निह्वयामहे निसमुपविभ्योह्वइत्यात्मनेपदम् । सदसि सीदन्त्यस्मिन्निति सदः असुनोनित्त्वादाद्युदात्तत्वम् । पपथुः पापाने लिटिआतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरः हिचेतिनिघातप्रतिषेधः ॥ १० ॥

॥ इतिप्रथमस्यचतुर्थेद्वितीयोवर्गः ॥ २ ॥

सहवामेनेतिषोडशर्चपञ्चमंसूक्तम् प्रस्कण्वऋषिः बार्हतत्वाद्युजोबृहत्यःयुजःसतोबृहत्यः उषादेवता सहषोडशोषस्यंत्वित्यनुक्रमणिका प्रातरनुवाकेउषस्येक्रतौबार्हतेछन्दसीदंसूक्तम् अथोषस्यइतिखण्डेसूत्रितम्—प्रत्युअदर्शिसहवामेनेतिबार्हतमिति । तथाआश्विनशस्त्रेप्येतत्सूक्तं प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् ।

तत्रप्रथमामृचमाह—

स॒हवा॒मेने॑नउषो॒व्यु॑च्छादुहितर्दिवः ।
स॒हद्यु॒म्नेन॑बृह॒ताविभावरिरा॒यादे॑विदा॒स्वती ॥ १ ॥

स॒ह । वा॒मेन॑ । नः॒ । उ॒षः॒ । वि । उ॒च्छ॒ । दु॒हि॒त॒रि॒ । दि॒वः॒ । स॒ह ।
द्यु॒म्नेन॑ । बृ॒ह॒ता । वि॒भा॒ऽव॒रि॒ । रा॒या । दे॒वि॒ । दास्व॑ती ॥ १ ॥

हेदुहितर्दिवोद्युदेवतायाःपुत्रि उषः उषःकालदेवते नोस्मदर्थंवामेनधनेनसहव्युच्छप्रभातं कुरुहेविभावरिउषोदेवतेबृहताप्रभूतेनद्युम्नेनान्नेनसहव्युच्छ हेदेवि त्वंदास्वतीदानयुक्तासतीराया पश्वादिलक्षणेनधनेनसहव्युच्छ ॥ उच्छ उच्छीविवासे । दुहितर्दिवः सुबामन्त्रितेपराङ्गवत्स्वरइत्यत्र परमपिछन्दसीतिवचनादिवइत्यस्यपूर्वाङ्गवद्भावेसतिआमन्त्रितस्यचेतिपदद्वयामन्त्रितसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् । बृहता बृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम् । विभावरि भादीप्तौ आतोमनिन्क्वनिप्वनिपश्चेत्यादिनावनिप् वनोरचेतिङीप् तत्सन्नियोगेननकारस्यरेफादेशः सम्बुद्धौहस्वत्वम् । दास्वती डुदाञ्दाने भावेअसुन्प्रत्ययः तदस्यास्तीतिदास्वती मादुपधायाइतिमतुपोवत्वम् उगितश्चेतिङीप् ॥ १ ॥

द्वितीयामृचमाह—

अश्वा॑वती॒र्गोम॑तीर्विश्वसु॒विदो॒भूरि॑च्यवन्त॒वस्त॑वे ।
उदी॑रय॒प्रति॑मासू॒नृताउष॒श्चोद॒राधो॑म॒घोना॑म् ॥ २ ॥

अश्वऽवतीः । गोऽमतीः । विश्वऽसुविदः । भूरि । च्यवन्त ।
वस्तवे । उत् । ईरय । प्रति । मा । सूनृताः । उषः । चोद ।
राधः । मघोनाम् ॥ २ ॥

अश्वावतीःबह्वश्वोपेताः गोमतीः बहुभिर्गोभिर्युक्ताः विश्वसुविदः कृत्स्नस्यधनस्यसुष्ठुलम्भयित्र्यः उषोदेवताः वस्तवेप्रजानांनिवासायभूरिप्रभूतंयथाभवतितथाच्यवन्तप्राप्ताः हेउषोदेवते मामतिमामुद्दिश्य सूनृताःप्रियहितवाचः उदीरय ब्रूहि मघोनांधनवतांसम्बन्धिराधोधनंचोदअस्मदर्थंप्रेरय ॥ अश्वावतीः मन्त्रेसोमाश्वेन्द्रियविश्वदेव्यस्यमताविितिपूर्वपदस्यदीर्घत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घनिषेधस्यपाक्षिकत्वोक्तेः पूर्वसवर्णदीर्घत्वम् । च्यवन्त च्युङ्गतौ लङि बहुलं छन्दस्यमाङ्योगेपीत्यडभावः । वस्तवे वसनिवासे तुमर्थेसेसेनितितवेन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । ईरय ईरगतौकम्पनेच हेतुमतिणिच् । चोद चुदसञ्चोदने चौरादिकः लोटि छन्दस्युभयथेतिशप् आर्धधातुकत्वात् णेरनिटीतिणिलोपः शपःपित्त्वादनुदात्तत्वेधातुस्वरः पादादित्वान्निघाताभावः । मघोनां षष्ठीबहुवचने श्वयुवमघोनामतद्धितेइतिसम्प्रसारणम् ॥ २ ॥

तृतीयामृचमाह—

उवासोषाउच्छाच्चनुदेवीजीरारथानाम् ।
येअस्याआचरणेषुदध्रिरेसमुद्रेनश्रवस्यवः ॥ ३ ॥

उवास । उषाः । उच्छात् । च । नु । देवी । जीरा । रथानाम् ।
ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ॥ ३ ॥

उषोदेवी उवास पुरानिवासमकरोत् प्रभातंकृतवतीत्यर्थः चनुअद्यापिउच्छात् व्युच्छति प्रभातंकरोति कीदृशीदेवी रथानांजीराप्रेरयित्री उषःकालेहिरथाःप्रेर्यन्ते अस्याउषसः आचरणेषुआगमनेषुयेरथादध्रिरेधृताःसज्जीकृताभवन्ति तेषांरथानामितिपूर्वत्रान्वयः रथप्रेरणेदृष्टान्तः—श्रवस्यवोधनकामाः समुद्रेन यथासमुद्रमध्येनावःसज्जीकृत्यप्रेरयन्तितद्वत् ॥ उवास वसनिवासे णलि लिट्यभ्यासस्योभयेषामितिअभ्यासस्यसम्प्रसारणं लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । उच्छात् लेट्याडागमः इतश्चलोपइतीकारलोपः तुदादित्वात् शप्रत्ययः आगमानुदात्तत्वेप्रत्ययस्वरः । उषाःइत्यस्यवाक्यान्तरगतत्वात्तदपेक्षयाअस्य निघातोनभवति समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइतिवचनात् । जीरा जुः

निगत्यर्थः सौत्रोधातुः जोरीचेतिरिक्प्रत्ययः। अस्याः इदमोन्वादेशेऽशित्यशादेशोनुदात्तः विभक्तिरपिसुप्त्वादनुदात्तेतिसर्वानुदात्तत्वम्। आचरणेषु चरगत्यर्थः ल्युट्चेतिभावेल्युट् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम्। दध्रिरे धृङ्अवस्थाने लिटःकित्त्वाद्गुणाभावेयणादेशः चित्त्वादन्तोदात्तत्वम् यच्छन्दयोगादनिघातः। श्रवस्यवः श्रूयतइति श्रवोधनं असुन् तदात्मनइच्छन्तीतिश्रवस्यवः सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः॥३॥

चतुर्थीमृचमाह—

उपो॒ये ते॒प्रया॒मे॑षु॒युञ्ज॒ते॒मनो॑दा॒नाय॑सू॒रयः॑।
अत्रा॒हतत्कण्व॑एषां॒कण्व॑तमो॒नाम॑गृणाति॒नृणाम्॥ ४॥

उप॑। ये। ते॒। प्र। यामे॑षु। यु॒ञ्जते॑। मनः॑। दा॒नाय॑। सू॒रयः॑।
अत्र॑। अह॑। तत्। कण्वः॑। ए॒षा॒म्। कण्व॑ऽतमः। नाम॑।
गृ॒णा॒ति॒। नृ॒णाम्॥ ४॥

हेउपः तेतवयामेषुगमनेषुसत्सुयेसूरयोविद्वांसोदानाभिज्ञाःदानायधनादिदानार्थंमनः स्वकीयंप्रयुञ्जतेप्रेरयन्ति दानशीलाः उदाराःप्रभवः प्रातःकालेदातुमिच्छन्तीत्यर्थः एषांदातुमिच्छतांनृणांतन्नाम दानविषयेलोकप्रसिद्धंनाम कण्वतमोतिशयेनमेधावीकण्वोमहर्षिरत्राह—अत्रैवोषःकालेगृणात्युच्चारयति योदातुमिच्छतिपश्चनामग्रहणेनदातारंप्रशंसतितावुभावप्युषःकालएवतथाकुरुतइत्युषसःस्तुतिः॥ गृणाति गृशब्दे क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम्। नृणां नामि नृचेतिदीर्घप्रतिषेधः नृचान्यतरस्यामितिविभक्तेरुदात्तत्वम्॥ ४॥

पञ्चमीमृचमाह—

आघा॒योषे॑वसू॒नर्यु॒षायाति॒प्रभु॒ञ्ज॒ती।
ज॒रय॑न्ती॒वृज॑नंप॒द्वदी॑यत॒उत्पा॑तयति॒प॒क्षिणः॑॥ ५॥ ३॥

आ। घ॒। योषा॑ऽइव। सू॒नरी॑। उ॒षाः। या॒ति॒। प्र॒ऽभु॒ञ्ज॒ती।
ज॒रय॑न्ती। वृज॑नम्। प॒त्ऽवत्। ई॒य॒ते॒। उत्। पा॒तय॑ति।
प॒क्षिणः॑॥ ५॥ ३॥

उषादेवी प्रभुञ्जती प्रकर्षेण सर्वं पालयन्ती आयातिव प्रतिदिनमागच्छतिखलु तत्रदृष्टान्तः—सूनरी सुष्ठुगृहकृत्यस्यनेत्री योषेवगृहिणीव कीदृशीउषाः वृजनंगमनशीलंजङ्गमं प्राणिजातं जरयन्ती जरांमापयन्ती असकृदुषस्यावृत्तायांवयोहान्यापाणिनोजीर्णाभवन्ति किञ्च उषःकाले पद्वत् पादयुक्तंप्राणिजातं ईयते निद्रांपरित्यज्यस्वस्वकृत्यार्थंगच्छति किञ्च इयमुषाः पक्षिणउत्पादयति पक्षिणोह्युषःकालेसमुत्थायतत्रतत्रव्रजन्ति ॥ ष ऋचितुनुघेत्यादिनासंहितायांदीर्घः । सुष्ठुनयतीतिसूनरी नृनये अचइरितिइप्रत्ययः गतिसमासेऽङ्ग्रहणेगतिकारकपूर्वस्यापिग्रहणमितिवचनात् कृदिकारादक्तिनइतिङीप् परादिश्छन्दसिबहुलमित्युत्तरपदान्तोदात्तत्वम् निपातस्यचेतिपूर्वपदस्यदीर्घः । प्रभुञ्जती भुजपालनाभ्यवहारयोः लटःशतृ रुधादित्वाच्श्नम् श्नसोरल्लोपइत्यकारलोपः उगितश्चेतिङीप् शतुरनुमइतिनद्याउदात्तत्वम् । वृजनं वृजीवर्जने वर्ज्यतेइतिवृजनंप्राणिजातं कृपृवृजिमन्दिनिधाञ्भ्यःक्युरितिक्युःप्रत्ययः कित्त्वाल्लघूपधगुणाभावः योरनादेशेप्रत्ययस्वरः । पद्वत् पत्पादः तदस्यास्तीतिपद्वत् झयइतिमतुपोवत्वम् व्यत्ययेनमतुपउदात्तत्वम् नचस्वरविधौव्यञ्जनमविद्यमानवदितिव्यंजनस्याविद्यमानवत्त्वेसतिहस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वमितिवाच्यं ह्रस्वादित्येवसिद्धे पुनर्नुड्ग्रहणसामर्थ्यादेषापरिभाषानाश्रीयतेइतिवृत्तावुक्तम् इतरथाहिमरुत्वानित्यत्रापिमतुपउदात्तत्वंस्यात् ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेतृतीयोवर्गः ॥ ३ ॥

षष्ठीमृचमाह—

वियासृजतिसमनंव्यर्थिनःपदंनवेत्योदती ।
वयोनकिष्टेपप्तिवांसआसतेव्युष्टौवाजिनीवति ॥ ६ ॥

वि । या । सृजति । समनम् । वि । अर्थिनः । पदम् । न । वेति । ओदती । वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥ ६ ॥

यादेवतासमनंसमीचीनचेष्टावन्तंपुरुषंविसृजतिप्रेरयति गृहारामादिचेष्टाकुशलान्पुरुषानुषःकालेः शयनादुत्थाप्यस्वस्वव्यापारेप्रेरयतीतिप्रसिद्धं किञ्च उषाः अर्थिनोयाचकान्विसृजति तेपित्युषःकालेसमुत्थायस्वकीयदातृगृहेगच्छन्ति ओदतीउषोदेवतापदंस्थानंनवेतिनकामयते उषःकालःक्षीप्रंगच्छतीत्यर्थः हेवाजिनीवतिउषोदेवते तेव्युष्टौत्वदीयप्रभातकालेपप्तिवांसः

पतनयुक्तावयःपक्षिणः नकिरासतेनतिष्ठन्ति किन्तु स्वस्वनीडाद्विनिर्गत्यगच्छन्तीत्यर्थः ॥ सृजति सृजविसर्गे तुदादित्वाच्छः तस्यङित्त्वाल्लघूपधगुणाभावः प्रत्ययस्यापित्त्वादनुदात्तत्वेविकरणस्वरः यद्वृत्तयोगादनिघातः। ओदृती उन्दीक्लेदने उनत्तिसर्वंनीहारेणेत्योदतीउषाः शतरिव्यत्ययेनशप् व्यत्ययेनानुनासिकलोपेलघूपधगुणः उगितश्चेतिङीप् आगमानुशासनस्यानित्यत्वात् नुमभावः शपःपित्त्वादनुदात्तत्वम् शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरेणाद्युदात्तत्वम् नचशतुरनुमइतिनद्याउदात्तत्वम् अन्तोदात्ताच्छतुःपरस्यास्तद्विधानात् । नकिष्टे युष्मत्तत्तक्षुष्वन्तःपादमितिषत्वम् । पप्तिवांसः पत्लृगतौ लिटःक्वसुः क्रादिनियमात्प्राप्तइट् वस्वेकाजाद्घसामितिनियमान्नप्राप्नोतितत्क्रियते सर्वविधीनांछन्दसिविकल्पितत्वात् तनिपत्योश्छन्दसीत्युपधालोपः द्विर्वचनेचीतिस्थानिवद्भावाद्द्विर्भावः प्रत्ययस्वरः । वाजिनीवति वाजोन्नं अस्यास्तीतिवाजिनीक्रियाप्रत्यर्थीयइनिः ऋन्नेभ्यइतिङीप् तादृशी क्रियायस्याःसा तदस्यास्तीतिमतुप् संज्ञायांइतिमतुपोवत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

एषायुक्तपरावतःसूर्यस्योदयनादधि ।
शतंरथेभिःसुभगोषाइयंवियात्यभिमानुषान् ॥ ७ ॥

एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्ऽअयनात् । अधि ।
शतम् । रथेभिः । सुऽभगा । उषाः । इयम् । वि । याति ।
अभि । मानुषान् ॥ ७ ॥

एषाउषोदेवीशतंअयुक्त स्वकीयानांरथानांशतंयोजितवती सुभगासौभाग्ययुक्ताइयमुषाः परावतोदूरस्थात्सूर्यस्योदयनादधि सूर्योदयस्थानादधिकाद्युलोकात् मानुषानभि मनुष्यानुद्दिश्य रथेभिःशतसंख्याकैर्युक्तैरथैर्वियाति विशेषेणगच्छति ॥ अयुक्त लुङि झलोझलीतिसिचोलोपः । उदयनात् उदेत्यत्रेत्युदयनं इण्गतौ अधिकरणेल्युट् कृदुत्तरपदप्रकृतिस्वरत्वम्। सुभगा शोभनोभगोयस्याःसा आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। मानुषान् मनोःपुत्रामानुषाः मनोर्जातावञ्यतौषुक्चेत्यञ् षुगागमश्च नित्त्वादाद्युदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

विश्वमस्यानानामचक्षसेजगज्ज्योतिष्कृणोतिसूनरी ।
अपद्वेषोमघोनीदुहितादिवउषाउच्छदपस्रिधः ॥ ८ ॥

विश्वम् । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी । अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ॥ ८ ॥

विश्वंसर्वंजगज्जङ्गमंप्राणिजातंअस्याउषसश्चक्षसेप्रकाशायननामप्रह्वीभवति रात्रौतमसि निमग्नाःसर्वेजनाः तन्निवारयित्रीमुषसमुपलभ्यनमस्कुर्वन्तीत्यर्थः कुतः यस्मादेषासूनरीसुष्ठु नेत्री अभिमतफलस्यप्रापयित्रीउषाःज्योतिष्कृणोतिसर्वंप्रकाशयति किञ्च मघोनीमघवतीधनवतीदिवोदुहिताद्युलोकसकाशादुत्पन्नाउषाः द्वेषः द्वेष्टॄन् अपोच्छत्अपवर्जयति तथा स्रिधः शोषयितॄनपोच्छत् अपवर्जयति तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतांउषोदेवतांविश्वंजगन्नमस्करोतीत्यर्थः॥अस्याः इदमोन्वादेशेशइत्यशादेशोनुदात्तः विभक्तिश्चसुस्वादनुदात्तेतिसर्वानुदात्तत्वम् । ननाम संहितायामन्येषामपिदृश्यतेइत्यभ्यासस्यदीर्घत्वम् तुजादित्वेहितूतुजानइत्यादाविवपदकालेपिदीर्घःश्रूयते । ज्योतिः इणःषइत्यनुवृत्तौ इसुसोःसामर्थ्येइतिविसर्जनीयस्यषत्वम् । द्वेषः द्विषअप्रीतौ अन्येभ्योपिदृश्यन्तइतिविच् लघूपधगुणः । मघोनी मघंवनतिसंभजतइतिमघोनी श्वन्नुक्षन्नित्यादिनामघवन्शब्दःकनिन्प्रत्ययान्तोनिपातितः स्त्रियामृन्नेभ्योङीबितिङीप् भसंज्ञायां श्वयुवमघोनामतद्धितेइतिसम्प्रसारणम् । उच्छत् उच्छीविवासे विवासोवर्जनं छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् बहुलंछन्दस्यमाङ्योगेपीत्यडागमाभावः । स्रिधः स्रिधुशोषणे क्विप्चेति क्विप्॥८॥

नवमीमृचमाह—

उपआभाहिभानुनाचन्द्रेणदुहितर्दिवः ।
आवहन्तीभूर्यस्मभ्यंसौभगंव्युच्छन्तीदिविष्टिषु ॥ ९ ॥

उषः । आ । भाहि । भानुना । चन्द्रेण । दुहितः । दिवः । आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउच्छन्ती । दिविष्टिषु ॥ ९ ॥

हेदिवोदुहितः द्युलोकस्यपुत्रिउषःउषोदेवते चन्द्रेणसर्वेषामाह्लादकेनभानुनाप्रकाशकेनआसमन्तात्भाहिप्रकाशस्व किंकुर्वती दिविष्टिषुदिवसेषुभूरिप्रभूतंसौभगंअस्मभ्यमावहन्तीसंपादयन्ती तथा व्युच्छन्ती तमांसिवर्जयन्ती ॥ उषःपाष्ठिकमामन्त्रिताद्युदात्तत्वम् । दुहितर्दिवः परमपिच्छन्दसीतिदिवइत्यस्यपरस्यषष्ठ्यन्तस्यपूर्वामन्त्रिताङ्गवद्भावेसतिषष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानु-

दात्तत्वम् । आवहन्ती ङीप्शपौपित्वादनुदात्तौ शतुश्चाडुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वम् अतोधातुस्वरःशिष्यते समासेकृदुत्तरपदप्रकृतिस्वरत्वम् । भूरिभवतिनविनश्यतीतिभूरि अदिशदिभूशुभिभ्यःक्रिन्नितिक्रिन् नित्त्वादाद्युदात्तत्वम् । सुभगस्यभावःसौभगं सुभगान्मन्त्रेइत्युद्गात्रादिपुपाठाद् अञ्प्रत्ययः हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेत्युभयपदवृद्धौप्राप्तायां सर्वेविधयश्छन्दसिविकल्प्यन्तइतिवचनादत्रोत्तरपदवृद्धिर्नभवतीतिवृत्तावुक्तम् । व्युच्छन्ती उच्छीविवासे विवासोवर्जनं तौदादिकः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरः । दिविष्टिपु दिव्शब्देनदिविष्ठआदित्योलक्ष्यते तस्यइष्टयएषणानिगमनानियेपुदिवसेषुतेदिविष्टयः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

विश्व॑स्य॒ हि प्राण॑नं॒ जीव॑नं॒ त्वे वि यदु॒च्छसि॑ सूनरि ।
सा नो॒ रथे॑न बृह॒ता वि॑भावरि श्रु॒धि चि॑त्रामघे॒ हव॑म् ॥ १० ॥ ४ ॥

विश्व॑स्य । हि । प्राण॑नम् । जीव॑नम् । त्वे इति॑ । वि । यत् । उ॒च्छसि॑ । सू॒न॒रि॒ । सा । नः॒ । रथे॑न । बृ॒ह॒ता । वि॒भा॒ऽव॒रि॒ । श्रु॒धि । चि॒त्र॒ऽम॒घे॒ । हव॑म् ॥ १० ॥ ४ ॥

हेसूनरीउषोदेवि विश्वस्यसर्वस्यप्राणिजातस्य प्राणनंचेष्टनं जीवनंप्राणधारणंचत्वेहि त्वय्येववर्तते यद्यस्मात्त्वंव्युच्छसितमोवर्जयसि हेविभावरिविशिष्टप्रकाशयुक्ते सातादृशीत्वंनोस्मान्प्रतिबृहताप्रौढेनरथेनआयाहीतिशेषः तथाहेचित्रामघेविचित्रधनयुक्ते उषोदेवते अस्मदीयंहवमाह्वानंश्रुधिशृणु ॥ प्राणनं अनचेष्टायां ल्युट्चेतिभावेल्युट् योरनादेशः समासेअनितेरित्युपसर्गस्थान्निमित्तादुत्तरस्यनकारस्यणत्वम् नन्वनितेरितिइटानिर्देशात्कथमनचेष्टायामित्यस्यणत्वम् यर्हिजीवनस्यपृथगुपादानात् तेनैवधातुनाचेष्टालक्ष्यते समासेकृदुत्तरपदप्रकृतिस्वरत्वम् संहितायामेकादेशस्वरेणैकादेशस्योदात्तत्वम् । त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः । उच्छसि उच्छीविवासे तौदादिकः सिपःपित्वादनुदात्तत्वेविकरणस्वरः निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः । सूनरि सुष्ठुनयतीतिसूनरी नृनयेइत्यस्मादृदोरित्यौणादिकऋप्रत्ययः गतिसमासेकृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणादृदिकारादक्तिनइतिङीप् निपातस्यचेतिपूर्वपदस्यदीर्घत्वम् परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वेप्राप्ते आमन्त्रितस्यचेत्याष्टमिकोनिघातः । विभावरि विशिष्टाभायस्याः

विश्वम् । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति ।
सूनरी । अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् ।
अप । स्रिधः ॥ ८ ॥

विश्वंसर्वंजगज्जङ्गमंप्राणिजातंअस्याउषसश्चक्षसेप्रकाशायननामप्रह्वीभवति रात्रौतमसि निमग्नाःसर्वेजनाः तन्निवारयित्रीमुषसमुपलभ्यनमस्कुर्वन्तीत्यर्थः कुतः यस्मादेषासूनरीसुष्ठु नेत्री अभिमतफलस्यप्रापयित्रीउषाःज्योतिष्कृणोतिसर्वंप्रकाशयति किञ्च मघोनीमघवतीधनवतीदिवोदुहिताद्युलोकसकाशादुत्पन्नाउषाः द्वेषः द्वेष्टॄन् अपोच्छत् अपवर्जयति तथा स्रिधः शोषयितॄनपोच्छत् अपवर्जयति तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतांउषोदेवतांविश्वंजगन्नमस्करोतीत्यर्थः॥ अस्याः इदमोन्वादेशेशनुदात्तस्तृतीयादावित्यशादेशोनुदात्तः विभक्तिश्चसुप्त्वादनुदात्तेतिसर्वानुदात्तत्वम् । ननाम संहितायामन्येषामपिदृश्यतइत्यभ्यासस्यदीर्घत्वम् तुजादित्वेहितूतुजानइत्यादाविवपदकालेपिदीर्घःश्रूयते । ज्योतिः कृणःपइत्यनुवृत्तौ इसुसोःसामर्थ्येइतिविसर्जनीयस्यषत्वम् । द्वेषः द्विषअप्रीतौ अन्येभ्योपिदृश्यन्तइतिविच् लघूपधगुणः । मघोनी मघंधनतिसंभजतइतिमघोनी श्वन्नुक्षन्नित्यादिनामघवन्शब्दःकनिन्प्रत्ययान्तोनिपातितः स्त्रियामृन्नेभ्योङीबितिङीप् भसंज्ञायां श्वयुवमघोनामतद्धितेइतिसम्प्रसारणम् । उच्छत् उच्छीविवासे विवासोवर्जनं छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् बहुलंछन्दस्यमाङ्योगेपीत्यडागमाभावः । स्रिधः स्रिधुशोषणे क्विप्चेति क्विप्॥८॥

नवमीमृचमाह—

उष॒आभा॑हिभा॒नुना॑च॒न्द्रेण॑दुहितर्दिवः ।
आ॒वह॑न्ती॒भूर्य॒स्मभ्यं॒सौभ॑गंव्यु॒च्छन्ती॒दिवि॑ष्टिषु ॥ ९ ॥

उषः । आ । भाहि । भानुना । चन्द्रेण । दुहितः । दिवः ।
आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउच्छन्ती ।
दिविष्टिषु ॥ ९ ॥

हेदिवोदुहितः द्युलोकस्यपुत्रिउषःउषोदेवते चन्द्रेणसर्वेषामाह्लादकेनभानुनाप्रकाशकेनआसमन्तात्भाहिप्रकाशस्व किंकुर्वती दिविष्टिषुदिवसेषुभूरिप्रभूतंसौभगंअस्मभ्यमावहन्तीसंपादयन्ती तथा व्युच्छन्ती तमांसिवर्जयन्ती ॥ उषः पादिकमाम्रेडितवाद्युदात्तत्वम् । दुहितर्दिवः परमपिच्छन्दसीतिदिवइत्यस्यपरस्यषष्ठ्यन्तस्यपूर्वामन्त्रितांगवद्भावेसतिषष्ठ्यामन्त्रितसमुदायस्याष्टमिकंसर्वानु-

दात्तत्वम् । आवहन्ती ङीपृशपौपित्त्वादनुदात्तौ शतुश्चाद्दुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वम् अतोधातुस्वरःशिष्यते समासेकृदुत्तरपदप्रकृतिस्वरत्वम् । भूरिभवतिनविनश्यतीतिभूरिअदिश-दिभूर्शुभिभ्यःक्मिनितिक्मिन् नित्त्वादाद्युदात्तत्वम् । सुभगस्यभावःसौभगं सुभगान्मन्त्रेइत्युद्गात्रा-दिषुपाठात् अञ्प्रत्ययः हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेत्युभयपदवृद्धौप्राप्तायां सर्वेविधयश्छन्दसिवि-कल्प्यन्तइतिवचनादत्तोत्तरपदवृद्धिर्नभवतीतिवृत्तावुक्तम् । व्युच्छन्ती उच्छीविवासे विवासोवर्ज-नं तौदादिकः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरः । दिविष्टिषु दिवृशब्देनदिविष्ठ-आदित्योलक्ष्यते तस्यइष्टयएषणानिगमनानियेषुदिवसेषुतेदिविष्टयः बहुव्रीहौपूर्वपदप्रकृति-स्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

विश्वस्यहिप्राणनंजीवनंत्वेवियदुच्छसिसूनरि ।
सानोरथेनबृहताविभावरिश्रुधिचित्रामघेहवम् ॥१०॥४॥

विश्वस्य । हि । प्राणनम् । जीवनम् । त्वे इति । वि । यत् । उच्छसि । सूनरि । सा । नः । रथेन । बृहता । विभाऽवरि । श्रुधि । चित्रऽमघे । हवम् ॥ १० ॥ ४ ॥

हेसूनरीउषोदेवि विश्वस्यसर्वस्यप्राणिजातस्य प्राणनंचेष्टनं जीवनंप्राणधारणंचत्वेहि त्वय्येववर्तते यद्यस्मात्त्वंव्युच्छसितमोवर्जयसि हेविभावरिविशिष्टप्रकाशयुक्ते सातादृशीत्वंनोस्मा-न्प्रतिबृहताप्रौढेनरथेनआयाहीतिशेषः तथाहेचित्रामघेविचित्रधनयुक्ते उषोदेवते अस्मदीयंहव-माह्वानंश्रुधिशृणु ॥ प्राणनं अनचेष्टायां ल्युट्चेविभावेल्युट् योरनादेशः समासेअनितेरित्युपसर्ग-स्थान्निमित्तादुत्तरस्यनकारस्यणत्वम् नन्वनितेरितिइष्टानिर्देशात्कथमनचेष्टायामित्यस्यणत्वम् तर्हिजीवनस्यपृथगुपादानात् तेनैवधातुनाचेष्टालक्ष्यते समासेकृदुत्तरपदप्रकृतिस्वरत्वम् संहिता-यामेकादेशस्वरेणैकादेशस्योदात्तत्वम् । त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः । उच्छसि उच्छीवि-वासे तौदादिकः सिपःपित्त्वादनुदात्तत्वेविकरणस्वरः निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः । सून-रि सुष्ठुनयतीतिसूनरी नृनयेइत्यस्माद्ऋदोरित्यौणादिकऋप्रत्ययः गतिसमासेऋद्ग्रहणेगतिकारक-पूर्वस्यापिग्रहणादृकारादक्तिनइतिङीप् निपातस्यचेतिपूर्वपदस्यदीर्घत्वम् परादिश्छन्दसिब-हुलमित्युत्तरपदाद्युदात्तत्वेप्राप्ते आमन्त्रितस्यचेत्याष्टमिकोनिघातः । विभावरि विशिष्टाभायस्याः

सा छन्दसीवनिपावितिमत्वर्थीयोवनिप् वनोरचेतिङीप् तत्सन्नियोगेननकारस्यरेफादेशश्च। श्रुधि श्रुश्रृणुपृकृवृभ्यश्छन्दसीतिहेर्धिरादेशः बहुलंछन्दसीतिविकरणस्यलुक् हेरपित्त्वेनप्रत्ययस्वरेणान्तोदात्तत्वेपादादित्वान्निघाताभावः। मघमितिधननाम चित्रंमघंयस्याःसाचित्रामघा अन्येषामपिदृश्यतइतिसंहितायांपूर्वपदस्यदीर्घत्वम्। हवं ह्वेञ्स्पर्धायांशब्देच भावेनुपसर्गस्येत्यप्प्रत्ययः तत्सन्नियोगेनसम्प्रसारणंच ॥ १० ॥

॥ इतिप्रथमस्यचतुर्थेचतुर्थोवर्गः ॥ ४ ॥

एकादशीमृचमाह—

उपो॒वाजं॒हिवंस्व॒यश्चि॒त्रोमानु॑षे॒जने॑ ।
तेना॒वह॑सु॒कृतो॑अ॒ध्व॒राँउप॒येत्वा॒गृ॒णन्ति॒वह्न॑यः ॥११॥

उप॑ । वाज॑म् । हि । वंस्व॑ । यः । चि॒त्रः । मानु॑षे । जने॑ । तेन॑ । आ । व॒ह॒ । सु॒ऽकृत॑ः । अ॒ध्व॒रान् । उप॑ । ये । त्वा॒ । गृ॒णन्ति॑ । वह्न॑यः ॥ ११ ॥

हेउषः वाजंहविर्लक्षणमन्नं हि श्रुतिप्रसिद्धं वंस्वयाचस्वस्वीकुर्वित्यर्थः योवाजश्चित्रभायनीयः मानुषेमनुष्येजनेजातेयजमानेवर्ततेतंवाजमितिपूर्वत्रान्वयः तेनकारणेनसुकृतःसुष्ठुकृतवतोयजमानान्अध्वरान्हिंसारहितान्यागानुपावहप्रापय येयजमानावह्नयोयज्ञनिर्वाहकाः त्वांगृणन्तिस्तुवन्तितान्सुकृतइतिपूर्वेणसम्बन्धः एतदुक्तंभवति यजमानैःप्रत्तंहविःस्वीकृत्यपुनरपितेषांयज्ञंसम्पादयन्ति ॥ वाजं वजव्रजगतौ कर्मणिघञ् अजिव्रज्योश्चेत्यत्रचशब्दस्यानुक्तसमुच्चयार्थत्वाद्वाजोवाज्यमित्यत्रापिकुत्वाभावइतिवृत्तावुक्तत्वात् कुत्वाभावः कर्षात्वतइत्यन्तोदात्तत्वेप्राप्तेवृषादित्वादाद्युदात्तत्वम्। वंस्व वनुयाचने अत्रयाचनवाचिनाधातुनातदुत्तरभावीस्वीकारोलक्ष्यते बहुलंछन्दसीतिविकरणस्यलुक् अनुदात्तत्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः हिचेतिनिघातप्रतिषेधः। सुकृतः सुकर्मपापेत्यादिनाकरोतेर्भूतार्थेक्विप्तुगागमः कृदुत्तरपदप्रकृतिस्वरत्वम्। अध्वरान् ध्वरोहिंसानास्त्यस्मिन्नितिबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अध्वरानित्यत्रईप्सिततमत्वात् कर्तुरीप्सिततममितिकर्मसंज्ञा। सुकृतइत्यस्यतु अकथितंचेति नीवह्योर्हरतेश्चेतिद्विकर्मकेषुवहतेःपरिगणितत्वात्। अध्वरानित्यत्रनकारस्यसंहितायांदीर्घादटीतिरुत्वम् आतोटिनित्यमितिपूर्वपदस्याकारस्यसानुनासिकता। गृणन्ति गृशब्दे क्र्यादिभ्यःश्ना प्वादीनांह्रस्वइतिह्रस्वत्वम् श्नाभ्यस्तयोरातइत्याकारलोपः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः ॥ ११ ॥

द्वादशीमृचमाह—

विश्वान्देवाँआवहसोमपीतयेन्तरिक्षादुषस्त्वम् ।
सास्मासुधागोमदश्वावदुक्थ्यं१मुषोवाजंसुवीर्यम् ॥१२॥

विश्वान् । देवान् । आ । वह । सोमऽपीतये । अन्तरिक्षात् ।
उषः । त्वम् । सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् । उक्थ्यम् ।
उषः । वाजम् । सुऽवीर्यम् ॥ १२ ॥

हेउषः त्वंसोमपीतयेसोमपानायअन्तरिक्षादन्तरिक्षलोकाद्विश्वान् सर्वान्आवहअस्मदीयंदेवयजनदेशंप्रापय हेउषः सातादृशीत्वंगोमत् गोमन्तंबहुभिर्गोभिर्युक्तं अश्वावत्अश्वैरुपेतंउक्थ्यंप्रशस्यंसुवीर्यंशोभनवीर्योपेतंवाजमन्नं अस्मासु धाः निधेहिस्थापयेत्यर्थः ॥ धाः दधातेश्छन्दसिलुङ्लङ्लिटइतिप्रार्थनायांलुङ् गातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । गोमत् अश्वावत् मन्त्रेसोमाश्वेन्द्रियेतिमतुपिदीर्घत्वम् उभयत्रसुपांसुलुगितिविभक्तेर्लुक् । उक्थ्यं उक्थंस्तोत्रंतत्रभवमुक्थ्यं भवेछन्दसीतियत् सर्वेविधयश्छन्दसिविकल्प्यन्तइतियतोनावइत्याद्युदात्तत्वाभावे तित्स्वरितमितिस्वरितत्वम् । उषः आमन्त्रिताद्युदात्तत्वम् पादादित्वान्निघाताभावः । सुवीर्यं शोभनंवीर्यंयस्य वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

यस्यारुशन्तोअर्चयःप्रतिभद्राअदृक्षत ।
सानोरयिंविश्ववारंसुपेशसमुषाददातुसुग्म्यम् ॥१३॥

यस्याः । रुशन्तः । अर्चयः । प्रति । भद्राः । अदृक्षत । सा ।
नः । रयिम् । विश्वऽवारम् । सुऽपेशसम् । उषाः । ददातु ।
सुग्म्यम् ॥ १३ ॥

यस्याः उषसःअर्चयःप्रकाशाः रुशन्तः शत्रून्हिंसन्तःभद्राः कल्याणाः प्रत्यदृक्षतप्रतिदृश्यन्तेसातथाभूताउषाः नोस्मभ्यंरयिंददातु कीदृशंरयिंविश्ववारंविश्ववारकम् यद्वा विश्वैर्वरणीयंसुपेशसं पेशइतिरूपनाम शोभनरूपोपेतंसुग्म्यंसुष्ठुगन्तव्यम् यद्वा सुग्म्यमितिसुखनाम तद्धेतुत्वात्तच्छब्दम् ॥ रुशन्तः रुशरिशहिंसायां शतरितुदादित्वाच्छः अदुपदेशाल्लसार्वधातुकानुदात्ते सतिशिष्टत्वाद्विकरणस्वरेप्राप्तेप्रत्ययेनाद्युदात्तत्वम् । अदृक्षत दृशेःकर्मणिलुङिझस्यादादे-

शः चेुःसिच् नद्दशइतिक्सप्रतिषेधः एकाचइतीट्प्रतिषेधः लिङ्सिचावात्मनेपदेष्विति सिचः किच्वाल्लघूपधगुणाभावः सृजिदृशोर्झल्यमकितीत्यमागमाभावश्चकित्वादेव षत्वकत्वषत्वानि अडागमउदात्तः यद्वृत्तयोगान्निघातः। विश्ववारं विश्वंवृणोतीतिविश्ववारः वृञ्वरणे कर्मण्यण् यद्वा विश्वैर्व्रियतइतिविश्ववारः कर्मणिघञ् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्। सुगम्यं सुष्ठुगन्तव्यःसुगमः गमेर्वञर्थेकविधानमितिकप्रत्ययः गमहनेत्यादिनोपधालोपः तत्रभवंसुगम्यं भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम्॥ १३ ॥

चतुर्दशीमृचमाह—

योचिद्धित्वामृषयःपूर्वेऊतयेजुहूरेवसेमहि ।
सानःस्तोमाँअभिगृणीहिराधसोषःशुक्रेणशोचिषा ॥१४॥

ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि । सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥ १४ ॥

हेमहिमहितेपूजनीयेवाउषोदेवते त्वांयेचिद्धियेखलुप्रसिद्धाः पूर्वेचिरन्तनाऋषयोमन्त्रद्रष्टारः ऊतयेरक्षणाय अवइत्यन्ननाम अवसेअन्नायचजुहूरेजुह्विरेआहूतवन्तः सुकरूपैर्मन्त्रैःस्तुतवन्तइत्यर्थः हेउषः सातादृशीत्वंराधसाअस्माभिर्दत्तेनहविर्लक्षणेनधनेनशुक्रेणशोचिषादीप्तेनतमोनिवारयितुंसमर्थेनतेजसाचोपलक्षितासतीतेषामृषीणामिवनोस्माकंस्तोमानभि स्तुतीरभिलक्ष्यगृणीहिसम्यक्स्तुतमितिशब्दय अस्मदीयाभिःस्तुतिभिःसन्तुष्टाभवेत्यर्थः ॥ ऊतये अवतेःक्तिनि ज्वरत्वरेत्यादिनावकारस्योपधायाश्चोठ् ऊतियूतीत्यादिनाक्तिन्नुदात्तोनिपातितः। जुहूरे ह्वेञ्स्पर्धायांशब्देच लिटिअभ्यस्तस्यचेतिद्विर्वचनात्पूर्वमेवअभ्यस्तकारणभूतस्यह्वयतेः सम्प्रसारणम् अभ्यस्तस्ययोह्वयतिःकथाम्यस्तस्यह्वयतिःयस्तस्यकारणमितिव्याख्यातत्वात् परपूर्वत्वेहलइतिदीर्घत्वम् द्विर्वचनादीनि इरयोरेइतिइरेचोरेआदेशः चितइत्यन्तोदात्तत्वम् यद्वृत्तयोगादनिघातः तत्रहिपञ्चमीनिर्देशेपि व्यवहितेपिकार्यंभवतीत्युक्तम्। महि महपूजायाम् औणादिकइप्रत्ययः कृदिकारादक्तिनइतिङीप् संबुद्धावंबार्थनद्योर्ह्रस्वइतिह्रस्वत्वम्। स्तोमान् संहितायांनकारस्यरुत्वाद्युक्तम्। गृणीहि गृशब्दे क्र्यादिकःशिति प्वादीनांह्रस्वइतिह्रस्वत्वम्। राधसा राध्नोत्यनेनेतिराधः असुनोनित्त्वादाद्युदात्तत्वम्। उषः पादादित्वादाष्टमिकनिघाताभावे षाष्ठिकमामन्त्रितायुदात्तत्वम्॥ १४ ॥

पञ्चदशीमृचमाह—

उपोयदद्यभानुनाविद्वारांवृणवोदिवः ।
प्रनोयच्छतादवृकंपृथुच्छर्दिःप्रदेविगोमतीरिषः ॥१५॥

उपः । यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः । प्र । नः । यच्छतात् । अवृकम् । पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ॥ १५ ॥

हेउषः त्वंअद्यास्मिन्प्रभातसमयेयद्यस्मात्भानुनाप्रकाशेनदिवोन्तरिक्षस्यद्वारौद्वारभूतौ पूर्वापरदिगन्तौअन्धकारेणाच्छादितौव्यृणवःविश्लिष्यप्रापोपि तस्मात्त्वंनोस्मभ्यंछर्दिस्तेजस्विगृहंप्रयच्छतावदेहि कीदृशंछर्दिः अवृकंहिंसकरहितं पृथुविस्तीर्णं अपिच हेदेविदेवनशीले गोमतीः बहुभिर्गोभिर्युक्ताइषोन्नानिप्रेत्युपसर्गस्यावृत्तेः यच्छतादित्यनुषज्यते प्रयच्छतावद्देहि त्वदागमनस्यास्मद्रक्षणार्थत्वादस्मदभीष्टंगृहादिकंप्रयच्छेत्यर्थः छर्दिरितिगृहनाम छर्दिःछदिरिति तन्नामसुपाठात्॥ ऋणवः ऋणुस्तुतौ छान्दसेलङिसिपि तनादित्वादुप्रत्ययः ततोव्यत्ययेनशपिगुणावादेशौ शपःपित्त्वादनुदात्तत्वेउप्रत्ययस्वरःशिष्यते यद्वृत्तयोगादनिघातः।दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । प्रनः उपसर्गाद्बहुलमितिबहुलवचनान्नसोणत्वाभावः । यच्छतात् दाण्दाने शपिपाघ्रेत्यादिनायच्छादेशः। अवृकं नास्तिवृकोस्मिन्निति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । पृथु प्रथप्रख्याने प्रथिम्रदिभ्रस्जांसम्प्रसारणंसलोपश्चेतिकुप्रत्ययःसम्प्रसारणंच । छर्दिरितिगृहनाम उछृदिर्दीप्तिदेवनयोःअर्चिशुचिहुसृपिछादिछर्दिभ्यइसिरितीसिप्रत्ययः लघूपधगुणः प्रत्ययस्वरः ॥ १५॥

षोडशीमृचमाह—

संनोरायाबृहताविश्वपेशसामिमिक्ष्वासमिळाभिरा ।
संद्युम्नेनविश्वतुरोषोमहिसंवाजैर्वाजिनीवति ॥१६॥५॥

सम् । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सम् । इळाभिः । आ । सम् । द्युम्नेन । विश्वऽतुरा । उषः । महि । सम् । वाजैः । वाजिनीऽवति ॥ १६ ॥ ५ ॥

हेउपः नोस्मान्रायाधनेनसंमिमिक्ष्वसंसिञ्चसंयोजयेत्यर्थः कीदृशेनधनेन बृहता प्रभूतेन विश्वपेशसा पेशइतिरूपनाम बहुविधरूपयुक्तेन तथा इळाभिःआ गोभिश्चास्मान्संमिमिक्ष्व इळेतिगोनाम इळाजगतीतितन्नामसुपाठात् आकारःसमुच्चये पादान्ते वर्तमानत्वात् उक्तञ्च—एतस्मिन्नेवार्थेदेवेभ्यश्चपितृभ्यआइत्याकारइति। किञ्च हेमहि महनीये उपोदेवते द्युम्नेनयशसा संमिमिक्ष्व द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः। कीदृशेनद्युम्नेन विश्वतुरा सर्वेषांशत्रूणांहिंसकेन तथाहेवाजिनीवति अन्नसाधनभूतक्रियायुक्ते वाजैरन्नैरस्मान् संमिमिक्ष्व अन्नंवैवाजइतिश्रुत्यन्तरात् ॥ राया ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम्। बृहता बृहन्महतोरुपसंख्यानमितिविभक्तिरुदात्ता। विश्वपेशसा विश्वानिपेशांसियस्यासौविश्वपेशाः बहुव्रीहौविश्वंसंज्ञायामितिव्यत्ययेनासंज्ञायामपिपूर्वपदान्तोदात्तत्वम् यद्वा मरुद्वृधादिर्द्रष्टव्यः। मिमिक्ष्व मिहसेचने व्यत्ययेनात्मनेपदम् लोटि बहुलंछन्दसीतिशपःश्लुः द्विर्भावहलादिशेषौ ढत्वकत्वषत्वानि प्रत्ययस्वरस्यसतिशिष्टत्वात्सएवशिष्यते पादादित्वादनिघातः पूर्वपदस्यासमानवाक्यस्थत्वात् तिङ्ङतिङइतिनिघातोनभवति समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइतिवचनात्। विश्वतुरा तूर्वतीतितूः तुर्वीहिंसार्थः क्विप्चेतिक्विप् राल्लोपइतिवलोपः विश्वेषांतूर्विश्वतूः समासस्येत्यन्तोदात्तत्वम्। वाजिनीवति वाजोन्नमस्याअस्तीतिवाजिनीक्रिया तादृशीक्रियायस्याःसातथोक्ता ॥ १६ ॥

॥ इतिप्रथमस्यचतुर्थेपञ्चमोवर्गः ॥ ५ ॥

उपोभद्रेभिरितिचतुर्ऋचंपष्ठंसूक्तम् अत्रानुक्रम्यते उपश्चतुष्कमानुष्टुभंत्विति। कण्वपुत्रः प्रस्कण्वऋषिः तुह्यादिपरिभाषयाइदमुत्तरंचानुष्टुभं पूर्वत्रउपस्यंत्वित्युक्तत्वात् इदमपिसूक्तमुषस्यम् प्रातरनुवाकस्योषस्येक्रतौआनुष्टुभेछन्दस्येतत्सूक्तम् सूत्र्यतेहि—उपोभद्रेभिरित्यानुष्टुभमिति। आश्विनशस्त्रेप्येतत्सूक्तम् प्रातरनुवाकन्यायेनेत्यतिदेशात्।

तत्रप्रथमामृचमाह—

उपो॑भ॒द्रेभि॒राग॑हि॒दि॒वश्चि॑द्रोच॒नाद॑धि॑।
वह॑न्त्वरु॒णप्स॑व॒उप॑त्वासो॒मिनो॑गृ॒हम् ॥१॥
उप॑ः। भ॒द्रेभि॑ः। आ। ग॒हि॒। दि॒वः। चि॒त्। रो॒च॒नात्। अधि॑।
वह॑न्तु। अ॒रु॒णऽप्स॑वः। उप॑। त्वा॒। सो॒मिन॑ः। गृ॒हम् ॥ १ ॥

१ नि० ५.५। २ तै० सं० ५.४.७।

हेउषः उषोदेवते भद्रेभिः भन्दनीयैः शोभनैर्मार्गैः दिवोन्तरिक्षलोकात् रोचनाद्रोचमानाद्दीप्यमानात् अधिरुपर्यर्थः उपरिवर्तमानात् चिदितिपूजितार्थः पूजितादेवंविधात् अन्तरिक्षलोकात् आगह्यागच्छ हेउषः अरुणप्सवः अरुणवर्णागावः सोमिनःसोमयुक्तस्ययजमानस्यगृहंदेवयजनरूपंयज्ञगृहंत्वात्वामुपवहन्तुप्रापयन्तु ॥ गहि गमेर्लोटि बहुलंछन्दसीतिशपोलुक् हेरपित्त्वेनङित्त्वे अनुदात्तोपदेशेत्यादिनानुनासिकलोपः अतोहेरितिलुक्नभवति असिद्धवदत्राभादित्यनुनासिकलोपस्यासिद्धत्वात्। रोचनात् रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् योरनादेशे चितइत्यन्तोदात्तत्वम्। अरुणप्सवः प्साभक्षणे प्सान्तिभक्षयन्तिस्तनंपिबन्तीतिप्सवोवत्साः औणादिकःकुप्रत्ययः आतोलोपइटिचेत्याकारलोपः अरुणाःप्सवोयासांतास्तथोक्ताः अत्रवत्सानामारुण्यप्रतिपादनात् मातृणामपितथात्वंगम्यते पैठकमश्वाअनुहरन्तेमातृकंगावोनुहरन्तीतिगोनर्दीयः[1] तासांचोषोवाहनत्वंनिघण्टावुक्तम्—अरुण्योगावउषसामिति[2]। अरुणशब्दःअर्तेश्चेति उनन्प्रत्ययान्तः तृणाख्यायांचिदित्यतश्चिदित्यनुवृत्तेरन्तोदात्तः सएवबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनशिष्यते ॥ १ ॥

द्वितीयामृचमाह—

सुपेशसंसुखंरथंयमध्यस्थाउषस्त्वम्।
तेनासुश्रवसंजनंप्रावाद्यदुहितर्दिवः ॥२॥

सुऽपेशसम्। सुऽखम्। रथम्। यम्। अधिऽअस्थाः। उषः।
त्वम्। तेन। सुऽश्रवसम्। जनम्। प्र। अव। अद्य। दुहितः।
दिवः ॥ २ ॥

हेउषः त्वंयंरथमध्यस्थाअधितिष्ठसि कीदृशंरथंसुपेशसंशोभनावयवं शोभनरूपयुक्तंवा पेशइतिरूपनामेतियास्कः। यद्वा शोभनहिरण्ययुक्तम् पेशःकृशानमितितन्नामसुपाठात् सुखंशोभनेनखेनाकाशेनयुक्तंविस्तृतमित्यर्थः यद्वा सुखहेतुभूतं अथवासुखमितिक्रियाविशेषणं सुखंयथाभवतितथेत्यर्थः हेदिवोदुहितः द्युलोकसकाशादुत्पन्ने उषोदेवते तेनरथेनअद्यास्मिन्कालेसुश्रवसंशोभनहविर्युक्तंजनंयजमानंप्राव प्रकर्षेणगच्छ॥सुपेशसं पिशअवयवे अस्मादसुन्प्रत्ययः नित्त्वादाद्युदात्तःपेशस्शब्दः शोभनंपेशोयस्यासौसुपेशाः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। अध्यस्थाः तिष्ठतेःछन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङि गातिस्थेतिसिचोलुक् अडागमउदात्तः यद्वृत्तयोगादनिघातः तिङिचोदात्तवतीतिगतेरनुदात्तत्वम् तेनअन्येषामपिदृश्यतइतिसंहितायांदी-

1 गोनर्दीयः पतञ्जलिः। 2 नि० ८. ११।

र्थः। सुश्रवसं श्रवइत्यन्ननाम श्रूयतइतिसतइतियोस्कः। सुपेशसइति उत्तरपदाद्युदात्तत्वम्। अव अवरक्षणगतिमीतिवृमीत्युक्तत्वादत्रावतिर्गत्यर्थः। दुहितर्दिवः परमपिछन्दसीतिपष्ठयन्तस्य पूर्वामन्त्रिताङ्गवद्भावेसति पदद्वयसमुदायस्याष्टमिकंसर्वानुदात्तत्वम्॥ २॥

तृतीयामृचमाह—

वय॑श्चित्ते॑पत॒त्रिणो॑द्वि॒पच्चतु॑ष्पदर्जुनि।
उष॒ःप्रार॑न्नृ॒तूँरनु॑दि॒वोअन्ते॑भ्य॒स्परि॑॥३॥

वयः॑। चि॒त्। ते॒। प॒त॒त्रिणः॑। द्वि॒ऽपत्। चतुः॑ऽपत्। अ॒र्जु॒नि॒।
उषः॑। प्र। आ॒र॒न्। ऋ॒तून्। अनु॑। दि॒वः। अन्ते॑भ्यः। परि॑॥ ३॥

हेअर्जुनिशुभ्रवर्णे उषः उषोदेवते तेतवऋतूँरनुगमनान्यनुलक्ष्य द्विपद्द्विपान्मनुष्यादिकं चतुष्पदश्वादिकं तथापतत्रिणःपतत्रवन्तःपक्षोपेतावयश्चित्पक्षिणश्चदिवोअन्तेभ्यःआकाशप्रान्तेभ्यःपरिउपरिप्रारन्प्रकर्षेणगच्छन्ति रात्रावन्धकारेणाभिभूताःसर्वेप्राणिनस्त्वदागमनानन्तरंचेष्टावन्तोभवन्तीत्यर्थः॥ पतत्रिणः पतॢगतौ पतन्त्यनेनेतिपतत्रं अमिनक्षीत्यादिनाअत्रन्प्रत्ययः ततोमत्वर्थीयइनिः। द्विपत् द्वौपादावस्येतिसंख्यासुपूर्वस्येतिपादशब्दस्यान्त्यलोपःसमासान्तः अयस्मयादित्वेनभत्वात्पादःपदितिपद्भावः द्वित्रिभ्यांपाद्दन्मूर्धसुबहुव्रीहाविति उत्तरपदान्तोदात्तत्वम्। चतुष्पात् चत्वारःपादाअस्य स्वरव्यतिरिक्तंपूर्ववत् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् इणःषइत्यनुवृत्तौइदुदुपधस्यचाप्रत्ययस्येतिविसर्जनीयस्यषत्वं नचपरत्वेनास्यासिद्धत्वात् कुप्वोः≍क≍पौचेति उपध्मानीयादेशःशङ्कनीयः येननाप्राप्तिन्यायेनतस्यापवादत्वात् अपवादस्तुपरमपिपूर्वंबाधतएवेतिवृत्तावुक्तम्। आरन् ऋगतौ छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङि सर्तिशास्त्यर्तिभ्यश्चेतिच्लेरङादेशः ऋदृशोऽङिगुणइतिगुणःआडागमः। ऋतून् ऋगतौ अस्मादौणादिकोभावेकुप्रत्ययः लक्षणेअनोःकर्मप्रवचनीयत्वम् कर्मप्रवचनीययुक्तेइतिद्वितीया संहितायांदीर्घादटिसमानपादेइतिनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिरोःपूर्वस्यवर्णस्यसानुनासिकत्वम्। दिवः ऊडिदम्इतिविभक्तिरुदात्ता। अन्तेभ्यः पञ्चम्याःपरावध्यर्थेइतिविसर्जनीयस्यसत्वम्॥ ३॥

चतुर्थीमृचमाह—

व्यु॒च्छन्ती॒हि॑र॒श्मिभि॒र्विश्व॑मा॒भासि॑रोच॒नम्।
तांत्वामु॑षर्वसू॒यवो॑गी॒र्भिः॑कण्वा॑अहूषत॥४॥ ६॥

नि० १०. ३.।

विऽउच्छन्ती । हि । रश्मिऽभिः । विश्वम् । आऽभासि । रोचनम् ।
ताम् । त्वाम् । उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥ ४ ॥ ६ ॥

हेउषः व्युच्छन्तीतमोवर्जयन्तीत्वंरश्मिभिः स्वकीयैस्तेजोभिर्विश्वंसर्वंभूतजातंरोचनंरोचमानंप्रकाशयुक्तंयथाभवतितथाआभासिआसमन्तात्प्रकाशसे हियस्मादेवंतस्मात्तांतादृशींत्वां वसूयवःवसुकामाः कण्वामेधाविनऋत्विजः कण्वगोत्रोत्पन्नावामहर्षयःगीर्भिःस्तुतिलक्षणैर्वचोभिःअहूषत स्तुतवन्तइत्यर्थः कण्वइतिमेधाविनाम कण्वःऋभुरितितत्रामपुपाठात् ॥ आभासि भादीप्तौ अदादित्वाच्छपोलुक् सिपःपित्त्वादनुदात्तत्वेधातुस्वरः हिचेतिनिघातप्रतिषेधः तिङि चोदात्तवतीतिगतेरनुदात्तत्वम् । रोचनं रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् चितइत्यन्तोदात्तत्वम् । वसूयवः वसुधनमात्मनइच्छन्तः सुपआत्मनःक्यच् अकृत्सार्वधातुकयोर्दीर्घः क्याच्छन्दसीत्युप्रत्ययः । गीर्भिः सावेकाचइतिविभक्तेरुदात्तत्वम् । कण्वाः कणशब्दार्थः अशूप्रुषिलटिकणीत्यादिनाक्वन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । अहूषत ह्वेञोलुङि ह्वःसम्प्रसारणमित्यनुवृत्तौबहुलंछन्दसीतिसम्प्रसारणं परपूर्वत्वे हल्इतिदीर्घत्वम् च्लेःसिच् एकाचइतीट्प्रतिषेधः संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः ॥ ४ ॥

॥ इतिप्रथमस्यचतुर्थेषष्ठोवर्गः ॥ ६ ॥

उदुत्यमितित्रयोदशर्चंसप्तमंसूक्तं प्रस्कण्वस्यार्षंसूर्यदेवत्यम् आदौनवगायत्र्यः शिष्टाश्चतस्रोनुष्टुभइत्युक्तम् तथाचानुक्रान्तम्—उदुत्यंसप्तोनासौर्यंनवाद्यागायत्र्यइति आश्विनशस्त्रेसौर्ये क्रतौउदुत्यमित्याद्योनवर्चःशंसनीयाः संस्थितेष्वाश्विनायेतिखण्डेसूत्रितम्—सूर्योनोदिवःउदुत्यंजातवेदसमितिनवेति ।

तत्रप्रथमामृचमाह—

उदुत्यंजातवेदसंदेवंवहन्तिकेतवः । दृशेविश्वायसूर्यम् ॥ १ ॥

उत् । ऊम् इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः ।
दृशे । विश्वाय । सूर्यम् ॥ १ ॥

केतवः प्रज्ञापकाः रश्मयःअश्वाः यद्वा सूर्यरश्मयःसूर्यंसर्वस्यप्रेरकमादित्यंउदुवहन्ति ऊर्ध्वंवहन्ति उइतिपदपूरणःउकथ्य—मिताक्षरेष्वनर्थकाःकमीमिद्विवीति किमर्थंविश्वायविश्वस्मैभुवना-

यद्दशेद्रष्टुं यथासर्वेजनाः सूर्यंपश्यन्तिवथोर्ध्वंवहन्तीत्यर्थः कीदृशंसूर्यं त्यंप्रसिद्धंजातवेदसंजाता-नांप्राणिनांवेदितारंजातप्रज्ञंजातधनंवादेवंद्योतमानम् अत्रनिरुक्तम्—उद्वहन्तितंजातवेदसंदेवमश्वाः केतवोरश्मयोवासर्वेषांभूतानांसंदर्शनायसूर्यमितिं ॥ जातवेदसं जातानिवेत्तीतिजातवेदाः गति-कारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुन् पूर्वपदप्रकृतिस्वरत्वंच । दृशे दृशेविख्येचेतितुमर्थे निपातितः । सूर्यं राजसूयसूर्येत्यादिना षूप्रेरणेइत्यस्मात्क्यप्रुडागमसहितोनिपातितः अतःप्र-त्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरेणाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

अप॒ त्ये ता॒यवो॑ यथा॒ नक्ष॑त्रा यन्त्य॒क्तुभिः॑। सूरा॑य वि॒श्वच॑क्षसे ॥२॥

अप॑ । त्ये । ता॒यवः॑ । य॒था । नक्ष॑त्रा । य॒न्ति॒ । अ॒क्तुऽभिः॑ ।
सूरा॑य । वि॒श्वऽच॑क्षसे ॥ २ ॥

त्येतायवोयथाप्रसिद्धास्तस्कराइवनक्षत्रानक्षत्राणिदेवगृहरूपाणि देवगृहावैनक्षत्राणीति श्रुत्यन्तरात् । यद्वा इहलोकेकर्मानुष्ठानाययेस्वर्गंप्राप्नुवन्तितेनक्षत्ररूपेणदृश्यन्ते तथाचश्रूयते—योवाइहयजते अमुंलोकंनक्षते तन्नक्षत्राणांनक्षत्रत्वमितिं । यद्वा तेषांसुकृतीनांज्योतींषिनक्षत्राण्यु-च्यन्ते सुकृतांवाएतानिज्योतींषियन्नक्षत्राणीत्याम्नानात् । यास्कस्त्वाह—नक्षत्राणिनक्षतेर्ग-तिकर्मणोनेमानिक्षत्राणीतिचब्राह्मणमितिं । तथाविधानिनक्षत्राणिअक्तुभिःरात्रिभिःसहअपय-न्तिअपगच्छन्ति विश्वचक्षसेविश्वस्यसर्वस्यप्रकाशकस्यसूरायसूर्यस्य आगमनंदृष्ट्वेतिशेषः तस्क-रानक्षत्राणिचरात्रिभिःसहसूर्यआगमिष्यतीतिभीत्यापलायन्तइत्यर्थः तायुरितिस्तेननाम वायु-स्तस्करइतितन्नामसुपाठात् अक्तुरितिरात्रिनाम शर्वरीअक्तुरितितत्रपाठात् ॥ यथा यथेतिपादा-न्तेइतिसर्वानुदात्तत्वम् ।नक्षत्रा नक्षगतौ अमिनक्षियजिवन्धिपतिभ्योत्रन्नित्यत्रन्प्रत्ययः नित्त्वा-दाद्युदात्तत्वम् नभ्राण्नपादित्यत्रवृत्तौत्वेवमुक्तम् नक्षरतिनक्षीयतइतिवानक्षत्रम् क्षीयतेःक्षरतेर्वा नक्षत्रमितिनिपात्यतइति शेश्छन्दसिबहुलमितिशेर्लोपः । यन्ति इण्गतौ इणोयणितियणादेशः। सूराय विश्वचक्षसे विश्वंचष्टेप्रकाशयतीतिविश्वचक्षाः चक्षेर्बहुलंशिच्चेत्यसुन्प्रत्ययः शित्त्वेनसार्व-धातुकत्वात् ख्याञादेशाभावः उभत्रषष्ठ्यर्थेचतुर्थीवक्तव्येतिचतुर्थी ॥ २ ॥

---

१ नि० १२. १५. । २ तै० ब्रा० १. ५. २. । ३ तै० ब्रा० १. ५. २. । ४ तै० सं. ५. ४. १. । ५ नि० ३. २०. ।

तृतीयामृचमाह—

अदृश्रमस्यकेतवोविरश्मयोजनाँअनु । भ्राजन्तोअग्नयोयथा ॥३॥

अदृश्रम् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु ।
भ्राजन्तः । अग्नयः । यथा ॥ ३ ॥

अस्यसूर्यस्यकेतवःप्रज्ञापकाः रश्मयोदीप्तयः जनाँअनुव्यदृश्रंजातान्सर्वान्अनुक्रमेणप्रेक्षन्ते सर्वंजगत्प्रकाशयन्तीत्यर्थः तत्रदृष्टान्तः—भ्राजन्तोदीप्यमानाः अग्नयोयथा अग्नयइव॥अदृश्रं दृशिर्प्रेक्षणे वर्तमानेलुङि इरितोवेतिच्लेरङादेशः ऋदृशोऽङिगुणइतिगुणाभावइत्युक्तं बहुलंछन्दसीतिरुडागमःअतएवबहुलवचनात् ऋदृशोऽङिगुणइतिगुणाभावइत्युक्तं तिङांतिङोभवन्तीतिप्रथमपुरुषबहुवचनस्य उत्तमपुरुषैकवचनादेशः प्रथमपुरुषएवशाखान्तरेश्रूयते—अदृश्रन्नस्यकेतवइति । जनानित्यस्यनकारस्यसंहितायांरुत्वयत्वादिपूर्ववत् । भ्राजन्तः शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते ॥ ३ ॥

चातुर्मास्येषुशुनासीर्यपर्वणिअस्तिसौर्यएककपालः तस्यतरणिरित्येषानुवाक्या तथाचसूत्रितम्—तरणिर्विश्वदर्शतश्चित्रंदेवानामुदगादनीकमितियाज्यानुवाक्याइति तथा अतिमूर्तिनाम्न्येकाहेकृष्णपक्षेसौरीष्टिःकर्तव्या तस्यामप्येषानुवाक्या अतिमूर्तिनेतिखण्डेसूत्रितम्—नवोनवोभवतिजायमानस्तरणिर्विश्वदर्शतइति ।

तामेतांसूक्तेचतुर्थीमृचमाह—

तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य । विश्वमाभासिरोचनम् ॥४॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् ।
आ । भासि । रोचनम् ॥ ४ ॥

हेसूर्य त्वंतरणिःतरिताअन्येनगन्तुमशक्यस्यमहतोऽध्वनोगन्तासि तथाचस्मर्यते—योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने । एकेननिमिषार्धेनक्रममाणनमोऽस्तुतइति । यद्वा उपासकानांरोगात्तारयितासि आरोग्यंभास्करादिच्छेदितिस्मरणात् । तथाविश्वदर्शतः विश्वैःसर्वैःप्राणिभिर्दर्शनीयः आदित्यदर्शनस्यचाण्डालादिदर्शनजनितपापनिर्हरणहेतुत्वात् तथाचापस्तम्बः—दर्शने ज्योतिषांदर्शनमिति । यद्वा विश्वंसकलंभूतजातंदर्शयंद्रष्टव्यंप्रकाश्यंयेनसतथोक्तः तथाज्यो-

तिष्कृत् ज्योतिषः प्रकाशस्य कर्तासर्वस्य वस्तुनः प्रकाशयितेत्यर्थः यद्वा चन्द्रादीनां रात्रौ प्रकाशयिता रात्रौहि अम्मयेषु चन्द्रादिबिंबेषु सूर्यकिरणाः प्रतिफलिताः सन्तोन्धकारं निवारयन्ति यथा द्वारस्थदर्पणोपरिनिपातिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः यस्मादेवं तस्मात् विश्वंव्याप्तं रोचनंरोचमानमन्तरिक्षं आसमन्ताद्भासि प्रकाशयसि यद्वा हेसूर्य अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् तरणिः संसाराब्धेस्तारकोसि यस्मात्त्वं विश्वदर्शतः विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः अधिष्ठानसाक्षात्कारेह्यारोपितं निवर्तते ॥ ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता तथाचाम्नायते—चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायतेति[1] । ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं रोचमानं दीप्यमानं यथा भवति तथा आभासि प्रकाशयसि चैतन्यस्फुरणे हि सर्वं जगद्भास्यते तथाचाम्नायते—तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति । तरणिः तॄप्लवनतरणयोः अस्मादन्तर्भावितण्यर्थात् अर्तिसृधृधम्यश्यवितॄभ्योनिरित्यनिप्रत्ययः प्रत्ययाद्युदात्तत्वम् । ज्योतिः करोतीति ज्योतिष्कृत् क्विप्चेतिक्विप् नित्यंसमासेनुत्तरपदस्थस्येति विसर्जनीयस्य षत्वम् । भासि भादीप्तौ अन्तर्भावितण्यर्थाल्लटि अदादित्वाच्छपोलुक् ॥ ४ ॥

पञ्चमीमृचमाह—

प्र॒त्यङ्दे॒वानां॒विशः॑प्र॒त्यङ्ङुदे॑षि॒मानु॑षान् । प्र॒त्यङ्विश्वं॒स्व॑र्दृ॒शे ॥५॥७॥

प्र॒त्यङ् । दे॒वाना॑म् । विशः॑ । प्र॒त्यङ् । उत् । ए॒षि॒ । मानु॑षान् । प्र॒त्यङ् । विश्व॑म् । स्वः॑ । दृ॒शे ॥ ५ ॥ ७ ॥

हेसूर्य त्वं देवानां विशः मरुन्नामकान् देवान् मरुतोवैदेवानां विश इतिश्रुत्यन्तरात् । तान्मरुत्संज्ञकान्देवान् प्रत्यङ्ङुदेषि प्रतिगच्छन्नुदयं प्राप्नोषि तेषामभिमुखं यथाभवति तथेत्यर्थः तथा मानुषान् मनुष्यान् प्रत्यङ्ङुदेषि तेपि यथा अस्मदभिमुख एवसूर्य उदेतीति मन्यन्ते तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः एवमुक्तं भवति—लोकत्रयवर्तिनो जनाः सर्वेपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति तथाचाम्नायते—तस्मात्सर्व एवमन्यते मां प्रत्युदगादिति[2] ॥ प्रत्यङ् प्रत्यञ्चतीति प्रत्यङ् अञ्चुगतिपूजनयोः ऋत्विगित्यादिना क्विन् अनिदितामितिनलोपः उगिदचामितिनुम् हल्ङ्याब्भ्यो दिसंयोगान्तलोपौ संयोगान्तलोपस्यासिद्धत्वात् उपधादीर्घनलोपयोरभावः क्विन्प्रत्ययस्यकुरितिकुत्वं अनिगन्तोञ्चतावितिअनिगन्ताति

---

१ ऋ० सं० ८. ४. १९. । २ तै० सं० २. २. ५. । ३ तै० सं. ६. ५. ४. ।

पर्युदासात्पूर्वपदप्रकृतिस्वराभावेकृदुत्तरपदप्रकृतिस्वरत्वम्। एषि इण्गतौ सिपि अदादित्वाच्छ-पोलुक् आदेशप्रत्यययोरितिषत्वम्। स्वः सुपूर्वादर्तेर्विच् गुणेयणादेशः न्यक्स्वरौस्वरितौचेतिस्व-रितत्वम्। दृशे दृशिर्प्रेक्षणेइत्यस्मादृशेविख्येचेतितुमर्थेनिपातितः ॥ ५॥

॥ इतिप्रथमस्यचतुर्थेसप्तमोवर्गः ॥ ७ ॥

षष्ठीमृचमाह—

येनापावकचक्षसाभुरण्यन्तंजनाँअनु। त्वंवरुणपश्यसि॥६॥

येन। पावक। चक्षसा। भुरण्यन्तम्। जनान्। अनु। त्वम्। वरुण। पश्यसि ॥ ६ ॥

हेपावक सर्वस्यशोधकवरुणअनिष्टनिवारकसूर्य त्वंजनान्जातान्प्राणिनः भुरण्यन्तंधार-यन्तंपोषयन्तंवाइमंलोकंयेनचक्षसाप्रकाशेनानुपश्यसि अनुक्रमेणप्रकाशयसि तंप्रकाशंस्तुमइति-शेषः यद्वा उत्तरस्यामृचिसम्बन्धः तेनचक्षसाव्येषीति तथाचयास्केनोक्तं—तत्तेवयंस्तुमइति-वाक्यशेषोपिवोत्तरस्यामन्वयस्तेनव्येषीति ॥ भुरण्यन्तं भुरणधारणपोषणयोः कण्ड्वादित्वा-द्यक् ततःशतरिकर्तरिशप् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयकएवस्वरःशिष्यते। वरुण वृ-ञ्वरणे अस्मादन्तर्भावितण्यर्थात्कृवृदारिभ्यउनन्वितिउनन्प्रत्ययः अत्रवरुणशब्देनआदित्य-एवोच्यते तथाचान्यत्राम्नातम्—तस्यैवमित्रश्चवरुणश्चाजायेतामिति। मित्रश्चवरुणश्चधाता-चार्यमाचेति ॥ ६ ॥

सप्तमीमृचमाह—

वियामेषिरजस्पृथ्वहामिमानोअक्तुभिः। पश्यञ्जन्मानिसूर्य॥७॥

वि। याम्। एषि। रजः। पृथु। अहा। मिमानः। अक्तुऽभिः। पश्यन्। जन्मानि। सूर्य ॥ ७ ॥

हेसूर्य त्वंपृथुविस्तीर्णंरजोलोकं लोकारजांस्युच्यन्तइतियास्कः। कंलोकंद्यामन्तरिक्ष-लोकंव्येषिविशेषेणगच्छसि किंकुर्वन्अहाअहानिअक्तुभीरात्रिभिःसहमिमानः उत्पादयन् आ-दित्यगत्यधीनत्वादहोरात्रविभागस्य तथाजन्मानिजननवन्तिभूतजातानिपश्यन्प्रकाशयन् ॥

१ नि० १२. २२। २ तै० ब्रा० १. १. ९।

रजस्पृथिव्यत्र छन्दसिवाम्रेडितयोरितिविसर्जनीयस्यसत्वम्। अहा शेश्छन्दसिबहुलमितिशेर्लोपः। मिमानः माङ्माने जौहोत्यादिकः शानचिश्लौद्विर्भावेभृञामिदित्यभ्यासस्येत्वम् श्नाभ्यस्तयोरातइत्याकारलोपः अभ्यस्तानामादिरित्यभ्यस्तस्याद्युदात्तत्वम्। जन्मानि जनीप्रादुर्भावे अन्येभ्योपिदृश्यन्तइतिमनिन् नित्वादाद्युदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

सप्तत्वांहरितोरथेवहन्तिदेवसूर्य । शोचिष्केशंविचक्षण ॥८॥

सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिःऽकेशम् । विऽचक्षण ॥ ८ ॥

हेसूर्यसर्वस्यद्योतमानविचक्षणसर्वस्यप्रकाशयितः सप्त सप्तसंख्याकाः हरितोश्वाः रसहरणशीलारश्मयोवात्वात्वांवहन्तिप्रापयन्ति कीदृशं रथेअवस्थितमितिशेषः तथाशोचिष्केशंशोचींषितेजांस्येवयस्मिन् केशाइवदृश्यन्तेसतथोक्तः तम्। हरितइत्यादित्याश्वानांसंज्ञा हरितआदित्यस्येतिनिघण्टावुक्तत्वात्॥ शोचिष्केशं शुचदीप्तौ अर्चिशुचिहुसृपीत्यादिनाइसिप्रत्ययान्तोन्तोदात्तः सएवबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनशिष्यते नित्यंसमासेनुत्तरपदस्थस्येतिविसर्जनीयस्यषत्वम् ॥ ८ ॥

नवमीमृचमाह—

अयुक्तसप्तशुन्ध्युवःसूरोरथस्यनप्त्यः । ताभिर्यातिस्वयुक्तिभिः ॥९॥

अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः । ताभिः । याति । स्वयुक्तिऽभिः ॥ ९ ॥

सूरः सर्वस्यप्रेरकःसूर्यः शुन्ध्युवः शोधिकाः अश्वस्त्रियः तादृशीःसप्तसप्तसंख्याकाः अयुक्तरथेयोजितवान् कीदृशः रथस्यनप्त्यःनपातयित्र्यः याभिर्युक्ताभिःरथोयाविनपन्तितादृशीरित्यर्थः एवंभूताभिस्ताभिरश्वस्त्रीभिःस्वयुक्तिभिः स्वकीययोजनेनरथेसम्बद्धाभिर्याति यत्तगृहंयत्यागच्छति अतस्तस्मैहविर्दातव्यमितिवाक्यशेषः॥ अयुक्त युजिर्योगे स्वरितत्वात्कर्त्रभिप्रायेआत्मनेपदम् लुङिच्लेःसिच् एकाचइतीट्प्रतिषेधः लिङ्सिचावात्मनेपदेष्वितिसिचः किच्चाल्लघूपधगुणाभावः झलोझलीतिसिचःसकारलोपः चोःकुरितिकुत्वम्। शुन्ध्युवः शुन्धविशुद्धौ यजिमनिशुन्धिदसिजनिभ्योयुरितियुप्रत्ययः शसि तन्वादीनांछन्दसिबहुलमुपसंख्या-

नमितिउवङादेशः। सूरः पूप्रेरणे सुसूधागृधिभ्यःक्रन्निति क्रन्प्रत्ययः नित्वादाद्युदात्तत्वम्। नप्त्यः नपातयतीत्यर्थेनभ्रूनेष्टृइत्यादिनाउणादिषुनप्तृशब्दस्तृजन्तोनिपातितः ऋन्नेभ्योङीबिति ङीप् यणादेशेउदात्तयणोहल्पूर्वादितिङीपउदात्तत्वम् सुपांसुलुगिभवन्तीतिशसोजसादेशः ततोयणादेशेउदात्तस्वरितयोर्यणइतिस्वरितत्वम् रेफलोपश्छान्दसः उक्तंच द्वौचापरौवर्णविकारनाशाविति। शाखान्तरेतुनक्षत्रइत्येवपठ्यते। स्वयुक्तिभिः स्वकीयाःसूर्यसम्बन्धिन्यःयुक्तयोयोजनानियास्तां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥ ९॥

अवभृथेष्टौहोमकालाञ्जिक्रम्यउद्वयंतमसस्परीतिमन्त्रंब्रूयुः तथाचपत्नीसंयाजैश्चरित्वेतिखण्डेसूत्रितम्—उद्वयंतमसस्परीत्युदेत्येति।

तामेतांसूक्तेदशमीमृचमाह—

**उद्वयंतमसस्परिज्योतिष्पश्यन्तउत्तरम्।**
**देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमम्॥ १०॥**

उत्। वयम्। तमसः। परि। ज्योतिः। पश्यन्तः। उत्ऽतरम्।
देवम्। देवऽत्रा। सूर्यम्। अगन्म। ज्योतिः। उत्ऽतमम्॥ १०॥

वयमनुष्ठातारःतमसस्परितमसउपरिरात्रेरूर्ध्ववर्तमानंतमसःपापात्परिउपरिवर्तमानंवापापरहितमित्यर्थः तथाचाम्नायते—उद्वयंतमसस्परीत्याह पाप्मावैतमःपाप्मानमेवास्मादपहन्तीति[1]। ज्योतिस्तेजस्विनंउत्तरंउद्गततरंउत्कृष्टतरंवादेवत्रादेवेषुमध्येदेवंदानादिगुणयुक्तंसूर्यंपश्यन्तः स्तुतिभिर्हविर्भिश्चउपासीनाःसन्तःउत्तमंउत्कृष्टतमंज्योतिः सूर्यरूपंअगन्मप्राप्नुवाम तथाचश्रूयते—अगन्मज्योतिरुत्तममित्याह असौवाआदित्योज्योतिरुत्तममादित्यस्यैवसायुज्यंगच्छतीति[2]। युक्तंचैतदयंयथायथोपासतेतदेवभवन्तीतिश्रुत्यन्तरात्॥ तमसस्परि पञ्चम्याःपरावध्यर्थइतिविसर्जनीयस्य सत्वं। ज्योतिष्पश्यन्तः इसुसोःसामर्थ्येइतिविसर्जनीयस्यषत्वं व्यपेक्षालक्षणंसामर्थ्यंतत्राङ्गीक्रियते। देवत्रा देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलमितिसप्तम्यर्थेत्राप्रत्ययः प्रत्ययस्वरः॥ अगन्म छन्दसिलुङ्लङ्लिटइतिप्रार्थनायांलङ्बहुलंछन्दसीतिशपोलुक् म्वोश्चेतिधातोर्मकारस्यनकारः अडागमउदात्तः पादादित्वान्निघाताभावः। उत्तमं तमपःपित्वानुदात्तत्वेप्राप्तेउत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिषुपाठादन्तोदात्तत्वम्॥१०॥

---

1 तै० ब्रा० २. ४. ५। 2 तै० सं० ५. १. ८। 3 तै० सं. ५. १. ८।

उद्यन्नित्ययंतृचोरोगशान्त्यर्थः तथाचानुक्रमण्यामुक्तम्—अन्त्यस्तृचोरोगघ्नउपनिषदिति युक्तंचैतत् यस्मादनेनतृचेनत्वग्दोषशान्तयेप्रस्कण्वःसूर्यमस्तौत् तेनतृचेनस्तुतःसूर्यःतत्त्वग्रोगान्निरगमयत् तस्मादिदानीमपिरोगशान्तयेअनेनतृचेनसूर्यउपासनीयः तदुक्तंशौनकेन—उद्यन्नद्येतिमन्त्रोयंसौरःपापप्रणाशनः । रोगघ्नश्चविषघ्नश्चभुक्तिमुक्तिफलप्रदइति ।

तृचस्याद्यांसूक्तेएकादशीमृचमाह—

उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवम् ।
हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ ११ ॥

उत्ऽयन् । अद्य । मित्रऽमहः । आऽरोहन् । उत्ऽतराम् । दिवम् ।
हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥ ११ ॥

हेसूर्यसर्वस्यप्रेरकमित्रमहः सर्वेषामनुकूलदीप्तियुक्त अद्यास्मिन्कालेउद्यन् उदयंगच्छन्उत्तरां उद्गततरांदिवमन्तरिक्षंआरोहन्आभिमुख्येनप्राप्नुवन् यद्वा दिवमन्तरिक्षंउत्तरामारोहन्उत्कर्षेणप्राप्नुवन् एवंविधस्त्वंममहृद्रोगंहृदयगतंअन्तरंरोगंहरिमाणंशरीरगतकान्तिहरणशीलं बाह्यंरोगं यद्वा शरीरगतंहरिद्वर्णरोगमात्रंवैवर्ण्यमित्यर्थः तदुभयमपिनाशय मांस्तोतारंउभयविधाद्रोगान्मोचयेत्यर्थः॥ मित्रमहःमित्रमनुकूलंमहस्तेजोयस्यासौ आमन्त्रितनिघातः। उत्तरां उदित्यनेनोपसर्गेणस्वर्गसृष्टधात्वर्थोलक्ष्यते तस्मादातिशायनिकस्तरप् प्रथमपक्षे अन्तरिक्षविशेषणत्वेनद्रव्यप्रकर्षप्रवीतेराम् नभवति द्वितीयेत्वारोहणक्रियायाःप्रकर्षोगम्यतइतिकिमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षेइत्याम् प्रथमपक्षेतरप्पोःपित्वादनुदात्तत्वेउपसर्गस्वरएवशिष्यते द्वितीयेतुआम्प्रत्ययस्यसतिशिष्टत्वात्तस्यैवस्वरेप्राप्ते व्यत्ययेनाद्युदात्तत्वम् वृषादिर्वाद्रष्टव्यः सह्याकृतिगणः। हृद्रोगम् वाशोकष्यञ्रोगेष्वितिहृदयशब्दस्यहृदादेशः । मम युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम्। हरिमाणं हृञ्हरणे जनिहृभ्यामिमनिन्नित्यौणादिकइमनिन्प्रत्ययः व्यत्ययेनान्तोदात्तत्वं यद्वा हरिच्छब्दस्यवर्णवाचित्वात् वर्णदृढादिभ्यःष्यञ्चेतिचकारादिमनिन्प्रत्ययः इष्ठेमेयःस्वित्यनुवृत्तौटेरितिटिलोपः ॥ ११ ॥

द्वादशीमृचमाह—

शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ।
अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ १२ ॥

शुकेषु । मे । हरिमाणम् । रोपणाकासु । दध्मसि । अथो इति ।
हारिद्रवेषु । मे । हरिमाणम् । नि । दध्मसि ॥ १२ ॥

मेमदीयंहरिमाणं शरीरगतंहरिद्वर्णत्वभावं शुकेषुताद्दशंवर्णंकामयमानेषुपक्षिषु तथारोपणाकासुशारिकासुपक्षिविशेषेषुदध्मसिस्थापयामः अथोअपिचहारिद्रवेषुहरितालद्रुमेषुताद्दग्वर्णवत्सु मेमदीयंहरिमाणंनिदध्मसिनिदधीमहि सचहरिमातत्रैवसुखेनास्तांअस्मान्माबाधिष्टेत्यर्थः ॥ दध्मसि इदन्तोमसिरितिमसइकारागमः ॥ १२ ॥

त्रयोदशीमृचमाह–

उद॑गाद॒यमा॑दि॒त्यो विश्वे॑न॒ सह॑सा स॒ह ।
द्वि॒षन्तं॒ मह्यं॑ र॒न्धय॒न्मो अ॒हं द्वि॑ष॒ते र॑धम् ॥ १३ ॥ ८॥

उत् । अ॒गा॒त् । अ॒यम् । आ॒दि॒त्यः । विश्वे॑न । सह॑सा । स॒ह ।
द्वि॒षन्त॑म् । मह्य॑म् । र॒न्धय॑न् । मो इति॑ । अ॒हम् । द्वि॒ष॒ते । र॒ध॒म् ॥ १३ ॥ ८ ॥

अयंपुरोवर्तीआदित्यःअदितेःपुत्रःसूर्यःविश्वेनसहसासर्वेणबलेनसहउदगात्उदयंप्राप्तवान् किंकुर्वन् मह्यंद्विषन्तंरन्धयन्ममोपद्रवकारिणंरोगंहिंसन् अपिचअहंद्विषतेअनिष्टकारिणेरोगायमोरधंमैवहिंसांकरोमि सूर्यएवअस्मदनिष्टकारिणंरोगंविनाशयत्वित्यर्थः॥अगात् एतेर्लुङि इणोगालुङीतिगादेशःगातिस्थेतिसिचोलुक्। आदित्यः दित्यदित्यादित्येत्यपत्यार्थेप्राग्दीव्यतीयोण्यप्रत्ययः। रन्धयन्रधहिंसासंराध्योः ण्यन्तात्लटःशतृ रधिजभोरचीतिणौधातोर्नुमागमः। मो मा उ निपातद्वयसमुदायोमैवेत्यस्यार्थे ओदितिप्रगृह्यत्वेप्लुतप्रगृह्याअचीतिप्रकृतिभावः। द्विषते शतुरनुमइति विभक्तेरुदात्तत्वम्। रधम् रधेर्लुङिपुषादित्वाच्चेरङादेशःरधिजभोरचीतिधातोर्नुम् अनिदितामित्यनुपङ्गलोपः नमाङ्योगेइत्यडभावः ॥१३॥

॥ इतिप्रथमस्यचतुर्थेष्टमोवर्गः ॥ ८ ॥

॥ इतिप्रथमेमण्डलेनवमोनुवाकः ॥ ९ ॥

दशमेनुवाकेसप्तसूक्तानि तत्राभित्यमितिपञ्चदशर्चंप्रथमंसूक्तम् अत्रेतिहासमाचक्षते–अङ्गिराइन्द्रसदृशंपुत्रंआत्मनःकामयमानोदेवताउपासांचक्रे तस्यसव्याख्येनपुत्ररूपेणइन्द्रएवस्वयंजज्ञे जगतिमनुष्यःकश्चिन्माभूदिति ससव्यआङ्गिरसोस्यसूक्तस्यऋषिः चतुर्दशीपञ्चदश्यौत्रिष्टुभौ त्रिष्टुबन्तत्वस्यसूक्तस्यशिष्टाजगत्यइतिपरिभाषयाअवशिष्टास्त्रयोदशर्चोजगत्यः इन्द्रोदेवता तदेतत्सर्वमनुक्रमण्यामुक्तम्–अभित्यंपञ्चोनासव्योङ्गिरसिन्द्रतुल्यंपुत्रमिच्छन्नाप्याप-

वसव्यइतीन्द्रएवास्यपुत्रोजायतेति । अतिरात्रेप्रथमेपर्यायेहोतुःशस्त्रेइदंसूक्तंशंसनीयं अतिरात्रेपर्यायाणामितिखण्डेसूत्रितम्—अभित्यंमेषमध्वर्यवोभरतेन्द्रायसोममितियाज्येति गवामयनस्य मध्यभूतेविषुवत्संज्ञकेहन्यपिनिष्केवल्येइदंसूक्तम् तथाचसूत्रितम्—यस्तिग्मशृङ्गोभित्यंमेषमिन्द्रस्यनुवीर्याणीत्येतस्मिन्नैन्द्रीनिविदंशस्त्वेति ।

तत्रप्रथमामृचमाह—

अ॒भि त्यं मे॒षं पु॑रुहू॒तमृ॒ग्मिय॒मिन्द्रं॑ गी॒र्भिर्म॑दता॒ वस्वो॑ अर्ण॒वम् ।
यस्य॒ द्यावो॒ न वि॒चर॑न्ति॒ मानु॑षा भु॒जे मंहि॑ष्ठम॒भि विप्र॑मर्चत ॥ १ ॥

अ॒भि । त्यम् । मे॒षम् । पु॒रु॒ऽहू॒तम् । ऋ॒ग्मिय॑म् । इन्द्र॑म् । गीः॒ऽभिः ।
म॒द॒त॒ । वस्वः॑ । अ॒र्ण॒वम् । यस्य॑ । द्याव॑ः । न । वि॒ऽचर॑न्ति । मानु॑षा ।
भु॒जे । मंहि॑ष्ठम् । अ॒भि । विप्र॑म् । अ॒र्च॒त॒ ॥ १॥

त्यंप्रसिद्धंमेषंशत्रुभिःस्पर्धमानं यद्वा कण्वपुत्रंमेधातिथिंयजमानमिन्द्रोमेषरूपेणागत्यतदीयंसोमंपपौ सऋषिस्तंमेषइत्यवोचत् अतइदानीमपिमेषइतीन्द्रोभिधीयते मेधातिथेर्मेषेतिसुब्रह्मण्यामन्त्रैकदेशस्यव्याख्यानरूपंब्राह्मणमेवमाम्नायते—मेधातिथिंहिकाण्वायनिंमेषोभूत्वाजहारेति आगत्यसोमंअपहृतवानित्यर्थः । पुरुहूतम् पुरुभिर्यजमानैराहूतम् ऋग्मियंऋग्भिर्विक्रियमाणंस्तूयमानमित्यर्थः स्तुत्याहिदेवताविक्रियते यद्वा ऋग्भिर्मीयतेशब्द्यतेइतिऋग्मीः तं वस्वोअर्णवंधनानामावासभूमिं एवंगुणविशिष्टमिन्द्रंहेस्तोतारोगीर्भिःस्तुतिभिरभिमदतआभिमुख्येनहर्षमापयत यस्येन्द्रस्यकर्मणिमानुषामनुष्याणांहितानिविचरन्तिविशेषेणवर्तन्ते तत्रदृष्टान्तः—द्यावोन यथासूर्यरश्मयः सर्वेषांहितकराः भुजे भोगायमंहिष्ठंअतिशयेनप्रवृद्धंविप्रंमेधाविनं तथाविधमिन्द्रमभ्यर्चत अभिपूजयत ॥ मेषं मिषस्पर्धायां इगुपधलक्षणेकप्राप्तेदेवसेनमेषादयःपचादिषुद्रष्टव्याइतिवचनादच्प्रत्ययः।ऋग्मियं तस्यविकारइत्यर्थेएकाचोनित्यंमयटमिच्छन्तीतिमयट्प्रत्ययःअकारस्येकारश्छान्दसः प्रत्ययस्वरः यद्वा माङ्मानेशब्देच ऋग्भिर्मीयतेइतिऋग्मीः क्विपिवलिलोपात्पूर्वमेवपरत्वाद्घुमास्थेतीत्वम् अचिश्नुधात्वित्यादिनेयङादेशः कृदुत्तरपदप्रकृतिस्वरत्वम्।मदत मदीहर्षे हेतुमतिणिच् मदीहर्षग्लेपनयोरितिघटादिषुपाठात् हर्षार्थेवर्तमानस्य घटादयोमितइतिमित्त्वेसतिमितांह्रस्वइतिह्रस्वत्वम् लोण्मध्यमपुरुषबहुवचनेशपिछन्दस्युभयथेत्यार्धधातुकत्वात् णेरनिटीतिणिलोपः तशब्दस्यसार्वधातुकमपिदितिङित्त्वेऋचितुनुघमक्षुतङ्कु-

ज्योरुण्यायामितिदीर्घः। वस्वः ङसि आगमानुशासनस्यानित्यत्वान्नुमभावः जसादिषुछन्दसिवा-वचनमितिवचनात् घेर्ङितीतिगुणाभावेयणादेशः। अर्णवं अर्णउदकमस्मिन्नस्तीत्यर्णवःसमुद्रः अर्णसोलोपश्चेतिमत्वर्थीयोवप्रत्ययःसलोपश्च तेनशब्देनजलाश्रयवाचिनाआश्रयमात्रंलक्ष्यते प्रत्ययस्वरः। विचरन्ति चरगत्यर्थःअदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः तिङ्ङ्चोदात्तवतीतिगतिरनुदात्ता यद्वृत्तयोगादनिघातः। भानुना शेश्छन्दसिबहुलमितिशेर्लोपः। भुजे भुजपालनाभ्यवहारयोः संपदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्। मंहिष्ठं मंहिवृद्धौ अतिशयेनमंहितोमंहिष्ठः तुश्छन्दसीतिइष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः नित्त्वादाद्युदात्तत्वम्। अर्चत अर्चपूजायां भौवादिकः॥ १ ॥

द्वितीयामृचमाह—

अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरिक्षप्रांतविषीभिरावृतम्।
इन्द्रंदक्षासऋभवोमदच्युतंशतक्रतुंजवनीसूनृतारुहत्॥ २॥

अभि। ईम्। अवन्वन्। सुऽअभिष्टिम्। ऊतयः। अन्तरिक्षऽप्राम्। तविषीभिः। आऽवृतम्। इन्द्रम्। दक्षासः। ऋभवः। मदऽच्युतम्। शतऽक्रतुम्। जवनी। सूनृता। आ। अरुहत्॥ २॥

ऊतयः अवितारोरक्षितारोदक्षासोदक्षयितारः प्रवर्धयितारः ऋभवः उरुभान्तीतिनैरुक्तपुत्रस्याऋभवोनमरुतउच्यन्ते एवंभूतामरुतः इन्द्रमभीमवन्वन्आभिमुख्येनखल्वभजन्त वृत्रेणसहयुध्यमानमिन्द्रंसर्वेदेवाःपर्यत्यजन् मरुतस्तुतथानपर्यत्याक्षुः तथाचाम्नायते—विश्वेदेवाअजहुर्येसखायः मरुद्भिरिन्द्रसख्यंतेअस्त्विति[1]। ब्राह्मणेप्याम्नातम्—मरुतोहैनंनाजहुरिति[2]। कीदृशमिन्द्रंस्वभिष्टिं शोभनाभ्येषणवन्तंशोभनाभिगमनमित्यर्थः। अन्तरिक्षप्रां अन्तरिक्षंद्युलोकं स्वतेजसाप्राःतिपूरयतीत्यन्तरिक्षप्राः द्वादशस्वादित्येष्विन्द्रस्यविद्यमानत्वात् शाखान्तरेपिश्रूयते—तस्मादिन्द्रश्चविवस्वांश्चाजायेतामिति[3]। इन्द्रश्चविवस्वांश्चेत्येतइतिच[4]। तविषीभिरावृतम् तविषीतिबलनाम तविषीशुष्ममितितन्नामसुपाठात् बलैरावृतंअविच्छिन्नमित्यर्थः अतएवमदच्युतम् शत्रूणांमदस्यगर्वस्यच्यावयितारं किञ्चशतक्रतुंशतसंख्याकानांक्रतूनामाहर्तारं बहुविधकर्माणंवापूर्वोक्तमिन्द्रंजवनीवृत्रवधंप्रतिप्रेरयित्रीसूनृतातैर्मरुद्भिःप्रयुक्ता प्रहरभगवोजहिवीरयस्वेति

---

१ ऋ०८.६.३३.। २ ऐ०ब्रा०३.२०। ३ तै०ब्रा०१.१.९.। ४ ऐ०ब्रा०६.२०।

ब्राह्मणोक्तरूपाप्रियसत्यात्मिकावागपिआरुहव् आरूढवती वृत्रवधंप्रतिसापिवाक् इन्द्रस्योत्साहकारिण्यभूदित्यर्थः॥अवन्वन् वनषणसंभक्तौ लङिशपिप्राप्तेव्यत्ययेनउप्रत्ययः।स्वभिष्टिं इषगतौ भावेक्तिन्प्रत्ययः तितुत्रेत्यादिनेट्प्रतिषेधः एमन्नादित्वात्पररूपत्वम् शोभनाअभिष्टयोयस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्।ऊतयः अवतेःकृत्यल्युटोबहुलमितिकर्तरिक्तिन्प्रत्ययः यद्वा क्तिच्क्तौचेतिक्तिच् ज्वरत्वरेत्यादिनाऊठ् चितइत्यन्तोदात्तत्वम्। अन्तरिक्षप्राः प्राप्रूरणेअन्तरिक्षंप्रातिपूरयतीत्यन्तरिक्षप्राः आतोमनिन्नित्यत्रचशब्दाद्विच् । आवृतम् वृञ्वरणेआवियतइत्यावृतः कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। दक्षासः दक्षवृद्धौ दक्षन्तएभिरितिदक्षाः करणेघञ् ञित्त्वादाद्युदात्तत्वम् आज्जसेरसुक्।मदच्युतं च्युङ्गतौअन्तर्भावितण्यर्थाद्विक्‌प्चेतिक्विप् ह्रस्वस्यपितिकृतीतितुक्। शतक्रतुं शतंक्रतवोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। जवनी जुइतिसौत्रोधातुः करणेल्युट् टिड्ढाणञित्यादिनाङीप् लित्स्वरेणजकारात्परस्योदात्तत्वम्। अरुहव् रुहेर्लुङिकृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः ॥ २ ॥

तृतीयामृचमाह—

त्वंगोत्रमङ्गिरोभ्योऽवृणोरपोतात्रयेशतदुरेषुगातुवित्।
ससेनंचिद्विमदायावहोवस्वाजावद्रिंवावसानस्यनर्तयन् ॥३॥

त्वम्। गोत्रम्। अङ्गिरःऽभ्यः। अवृणोः। अप। उत।
अत्रये। शतऽदुरेषु। गातुऽवित्। ससेन। चित्। विऽमदाय।
अवहः। वसु। आजौ। अद्रिम्। ववसानस्य। नर्तयन् ॥३॥

हेइन्द्र त्वंगोत्रंअव्यक्तशब्दवन्तंवृष्ट्युदकस्यावरकंमेघंअङ्गिरोभ्यः अङ्गिरसामृषीणामर्थायअपावृणोःअपावरणंकृतवानसि वृष्टेरावरकंमेघंवज्रेणोद्घाट्यवर्षणंकृतवानित्यर्थः यद्वा गोत्रंगोसमूहंपणिभिरपहृतंगुहासुनिहितंअङ्गिरोभ्यऋषिभ्योपावृणोः गुहाद्वारोद्घाटनेनप्रकाशय उतअपिच अत्रयेमहर्षयेकीदृशायशतदुरेषुशतद्वारेषुयन्त्रेषुअसुरैःपीडार्थंप्रक्षिप्ताय गातुवित्मार्गस्यलम्भयिताभूः तथाविमदायचित् विमदनाम्नेमहर्षयेपिससेनअन्नेनयुक्तंवसुधनंअवहःप्रापितवान् तथा आजौसंग्रामेजयार्थंववसानस्यनिवसतोवर्तमानस्यान्यस्यापिस्तोतुःअद्रिंवज्रंनर्तयन्रक्षणंकृतवानसीतिशेषः अतस्तवमहिमाकेनवर्णयितुंशक्यतइतिभावः ॥ गोत्रं गुङ्अव्यक्तेशब्दे औणादिकःत्रप्रत्ययः यद्वा गोरथादित्यनुवृत्तौ इनित्रकट्यचश्चेतिसमूहार्थेत्रप्रत्ययः।यत-

दुरेषु शतंदुराःद्वाराणिएषां द्वइत्येके दुर्यन्तेसंवियन्त्वइतिदुराः यत्रार्थेकविधानमितिकप्रत्ययः छान्दसंसम्प्रसारणंपरपूर्वत्वम् तच्च योःउभयोःस्थानेभवविसलभतेअन्यतरेणापिव्यपदेशामित्युरण्रपरइतिरपरत्वंभवति यद्वा द्वारशब्दस्येवछान्दसंसम्प्रसारणंद्रष्टव्यम्। गातुविद् गाङ्गतौ अस्मात्कमिमनिजनिभागापायाहिभ्यश्चेतितुप्रत्ययः तंवेदयतिलंभयतीतिगातुवित् विद्लाभे अन्तर्भावितण्यर्थोवक्किप् कृदुत्तरपदप्रकृतिस्वरत्वम्।ससेन ससमित्यन्ननाम ससंनमःआयुरितितन्नामसु पाठात् आजिरितिसंग्रामनाम आहवेआजाविनितत्पाठात्। आद्रिं अत्तिभक्षयतिवैरिणमित्यद्रिर्वज्रः अदिशदिभूशुभिभ्यःक्रिन्नितिक्रिन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् यास्कस्त्वेवंअद्रिशब्दंव्याचख्यौ—अद्रिरादृणात्यनेनापिवात्तेःस्यादिति[1] ॥ववसानस्य वसनिवासे कर्तरिताच्छील्लिकश्चानश् बहुलंछन्दसीतिशपःश्लुः द्विर्भावहलादिशेषौ चित्त्वादन्तोदात्तत्वम् ॥ ३॥

चतुर्थीमृचमाह—

त्वम॒पाम॑पि॒धाना॑वृणो॒रपाधा॑रयः॒ पर्व॑ते॒ दानु॑म॒द्वसु॑ ।
वृ॒त्रं यदि॑न्द्र॒ शव॒साव॑धी॒रहि॒मादित्सूर्यं॑ दि॒व्यारो॑हयो दृ॒शे ॥४॥

त्वम् । अ॒पाम् । अ॒पि॒ऽधाना॑ । अ॒वृ॒णोः । अप॑ । अधा॑रयः ।
पर्व॑ते । दानु॑ऽमत् । वसु॑ । वृ॒त्रम् । यत् । इ॒न्द्र॒ । शव॑सा । अव॑धीः ।
अहि॑म् । आत् । इत् । सूर्य॑म् । दि॒वि । आ । अ॒रो॒ह॒यः॒ । दृ॒शे ॥४॥

हेइन्द्र त्वमपामुदकानांअपिधानाअपिधानानिआच्छादकान्मेघान्अपावृणोः अपावरीतवान् तथापर्वतेपर्ववतिपूरयितव्यप्रदेशयुक्तेस्वकीयनिवासस्थानेदानुमत् दानुमतोहिंसायुक्तस्य यद्वा दनुरसुरमाता सैवदानुःतद्वतः तादृशस्यवृत्रादेर्वसुधनंअधारयः शत्रून्जित्वातदीयंधनमपहृत्यस्वगृहेन्यक्षिपइत्यर्थः यद्वा दानुमदितिवसुविशेषणं शोभनदानयुक्तमित्यर्थः हेइन्द्र त्वंयत्यदाशवसाबलेनवृत्रंत्रयाणांलोकानामावरीतारं तथाचशाखान्तरेसमाम्नातम्—यदिमाँल्लोकानवृणोत्तद्वृत्रस्यवृत्रत्वमिति[2] ।अहिमासमन्ताद्धन्तारं तथाचवाजसनेयिनःसमामनन्ति—सोग्नीषोमावभिसंबभूव सर्वांविद्यांसर्वंयशःसर्वमन्नाद्यंसर्वांश्रियंसयत्सर्वमेतत्समभवत्तस्मादहिरिति ।एवंभूतमसुरंअवधीर्वधंप्रापितः आदित्अनन्तरमेवदिविद्युलोकेदृशेद्रष्टुंसूर्यमारोहयः वृत्रेणावृतंसूर्यंतस्मादावृत्तादमूमुचइत्यर्थः ॥ अपां ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । अपिधाना अपिधीयन्ते

१ नि० ४.४. । २ तै० सं० २.४.१२.

आच्छाद्यन्तेएभिरित्यपिधानानि करणेल्युट् लितीतिप्रत्ययात्पूर्वस्यधात्वाकारस्योदात्तत्वम् ततएकादेशस्वरः कृदुत्तरपदप्रकृतिस्वरत्वम् सुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घत्वम् । अधारयः पादादित्वान्निघाताभावः । पर्वते पर्ववान्पर्वतः पर्वपुनःपृणातेःप्रीणातेर्वेतियास्कः । दानुमद् दो अवखण्डनेइत्यस्माद्वा दाण्दानेइत्यस्माद्वा दाभाभ्यांनुरित्यौणादिकोनुप्रत्ययः असुरविशेषणत्वे सुपांसुलुगितिषष्ठ्यालुक् ॥ ४ ॥

पञ्चमीमृचमाह–

त्वंमा॒याभि॒रप॑मा॒यिनो॑धमः॒स्वधाभि॒र्ये॑अधि॒शुप्ता॒वजु॑ह्वत ।
त्वंपिप्रो॒र्नृ॑मणः॒प्रारु॑जः॒पुरः॒प्रऋ॒जिश्वा॑नंदस्युहत्ये॑ष्वाविथ॥५॥१॥

त्वम् । मा॒याभिः॑ । अप॑ । मा॒यिनः॑ । अ॒ध॒मः॒ । स्व॒धाभिः॑ । ये ।
अधि॑ । शुप्तौ॑ । अजु॑ह्वत । त्वम् । पिप्रोः॑ । नृ॒ऽम॒नः॒ । प्र ।
अ॒रु॒जः॒ । पुरः॑ । प्र । ऋ॒जिश्वा॑नम् । द॒स्यु॒ऽहत्ये॑षु । आ॒वि॒थ॒ ॥ ५॥१॥

हेइन्द्र त्वंमायाभिः जयोपायज्ञानैः मायेतिज्ञाननाम शचीमायेतितन्नामसुपाठात् यद्वा मायाभिः लोकप्रसिद्धैःकपटैः मायिनः उक्तलक्षणमायोपेतान्वृत्रादीनसुरान्अपाधमः अपाजीगमः धमतिर्गतिकर्मेतियास्कः । येअसुराःस्वधाभिर्हविर्लक्षणैरन्नैः शुप्तावधि शोभमानेस्वकीये मुखेएवअजुह्वत अहोषुः नाग्नौ तानसुरानितिपूर्वेणसम्बन्धः तथाचकौषीतकिभिराम्नायते–असुरावाआत्मन्नजुहवुरुद्वातेग्नौतेपराभवन्निति ।वाजसनेयिभिरप्याम्नातम्–देवाश्चहवाअसुराश्चास्पर्धंततोहासुराअभिमानेनकस्मैचनजुहुमइतिस्वेष्वेवास्येषुजुह्वतश्चेरुस्तेपराबभूवुरिति । तथा हेनृमणः नृषुयजमानेषुरक्षितव्येषुअनुग्रहबुद्धियुक्तस्त्वंपिप्रोः पूरयितुःएतन्नाम्नोसुरस्यपुरःपुराणि निवासस्थानानिप्रारुजः प्राभांक्षीः एवंकृत्वातेनासुरेणोपद्रुतं ऋजिश्वानंऋजुगमनंएतत्संज्ञकंस्तोतारंदस्युहत्येषुदस्यूनामुपक्षपयितॄणांहननेनयुक्तेषुसंग्रामेषु यद्वा दस्यूनांहननेनिमित्तभूतेषुप्राविथप्रकर्षेणररक्षिथ॥मायिनः मायाशब्दस्यव्रीह्यादिषुपाठात् व्रीह्यादिभ्यश्चेतिमत्वर्थीयइनिः।शुप्तौ शुभदीप्तौ कर्मणिक्तिन् तितुत्रेत्यादिनेट्प्रतिषेधः झषस्तथोर्धोधइतिधत्वाभावश्छान्दसः खरिचेतिचर्त्वम्।अजुह्वत जुहोतेर्लङिव्यत्ययेनात्मनेपदम् अदभ्यस्तादितिझस्यादादेशः हुश्नुवोःसार्वधातुकइतियणादेशः । पिप्रोः पृपालनपूरणयोः पृभिदिव्यधीत्यादिनाकुप्रत्ययः उदोष्ठ्यपूर्वस्येत्युत्व

१ नि० १. २०. । २ नि० ६. २. ।

बहुलंछन्दसीत्युकत्वावउत्वाभावः छान्दसंद्विर्वचनम् अभ्यासस्योरदत्वहलादिशेषाः आर्तिपिप- र्त्योश्च बहुलंछन्दसीत्यभ्यासस्येत्वम् यणादेशः। नृमणः नृषुमनोयस्य छन्दस्यृदवग्रहादितिणत्वम्। अरुजः रुजोभङ्गे शस्यङित्त्वाद्गुणाभावः । ऋजिश्वानम् ऋजुअश्नुतेर्मामोतीत्यृजिश्वा पृषोदरा- दिः। दस्युहत्येषु हनहिंसागत्योः हनस्तचेतिभावेक्यप्प्रत्ययः तकारश्चान्तादेशः दस्यूनांहत्या येषुसंग्रामेषु परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् तत्पुरुषपक्षेतु कृदुत्तरपदप्रकृतिस्वरत्व- म् । आविथ अवरक्षणे ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेनवमोवर्गः ॥ ९ ॥

षष्ठीमृचमाह—

त्वंकुत्संशुष्णहत्येष्वाविथारन्धयोतिथिग्वायशंबरम् ।
महान्तंचिदर्बुदंनिक्रमीःपदासनादेवदस्युहत्यायजज्ञिषे ॥६॥

त्वम् । कुत्सम् । शुष्णऽहत्येषु । आविथ । अरन्धयः ।
अतिथिऽग्वाय । शम्बरम् । महान्तम् । चित् । अर्बुदम् । नि ।
क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ॥ ६ ॥

हेइन्द्र त्वंकुत्संकुत्ससंज्ञकमृषिंशुष्णहत्येषु शुष्णःशोषयिताएतन्नामोसुरस्यहननयुक्तेषुसं- ग्रामेषुआविथअरक्षिथ तथा अतिथिग्वायअतिथिभिर्गन्तव्यायदैवोदासायशंबरंएतन्नामानमसु- रं अरन्धयः हिंसामापितः तथा महान्तंचिदअतिप्रवृद्धमपिअर्बुदंएतत्संज्ञकमसुरंपदापादेननिक्र- मीःनितरामाक्रमिताभूः यस्मादेवंतस्मात्सनादेवचिरकालादेवारभ्यदस्युहत्यायउपक्षपयितॄणांह- ननायजज्ञिषे सर्वदात्वंदस्युहननशीलोभवसीत्यर्थः ॥ अरन्धयः रधहिंसासंराध्योः रधिजभोर- चीतिधातोर्नुम् । अतिथिग्वाय गमेरौणादिकोड्वप्रत्ययः। क्रमीः क्रमुपादविक्षेपे ल्यन्तक्षणेतिवृ- द्धिप्रतिषेधः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । पदा सावेकाचइतिवा ऊडिदंपदादीतिवाविभ- क्तेरुदात्तत्वम्। जज्ञिषे जनीप्रादुर्भावे लिटिगमहनेत्यादिनोपधालोपः ॥६॥

सप्तमीमृचमाह—

त्वेविश्वातविषीसध्र्यग्घितातवराधःसोमपीथायहर्षते ।
तववज्रश्चिकितेबाह्वोर्हितोवृश्चाशत्रोरववि‍श्वानिवृष्ण्या ॥७॥

त्वे इति॑ । विश्वा॑ । त॒वि॒षी । स॒ध्र्य॑क् । हि॒ता । तव॑ । राध॑ः ।
सो॒म॒ऽपी॒थाय॑ । ह॒र्ष॒ते । तव॑ । वज्र॑ः । चि॒कि॒ते । बा॒ह्वोः ।
हि॒तः । वृ॒श्च । शत्रो॑ः । अव॑ । विश्वा॑नि । वृष्ण्या॑ ॥ ७॥

हेइन्द्र त्वेत्वयिविश्वातविषीसर्वंबलंसध्र्यक्सध्रीचीनंअपराङ्मुखंयथाभवतितथाहिता निहितं तथा तवराधोमनःसोमपीथायसोमपानायहर्षतेहृष्यति किञ्च तवबाह्वोर्हस्तयोर्हितोवस्थितोवज्रश्चिकितेअस्माभिर्ज्ञायते अतःशत्रोःशातयितुर्वैरिणः विश्वानिसर्वाणिवृष्ण्यावृष्ण्यानिवीर्याणिअववृश्च छेदनंकुरु॥ सहअञ्चतीतिसध्र्यक् अञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः समासेसहस्यसध्रिरितिसहशब्दस्यसध्र्यादेशः चोःकुरितिकुत्वम् कृदुत्तरपदप्रकृतिस्वरेप्राप्ते अद्रिसध्र्योरन्तोदात्तत्वनिपातनंकृत्स्वरनिवृत्त्यर्थमितिवचनात्सध्र्यादेशोन्तोदात्तः तस्ययणादेशे उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । राधः राध्नोति सम्यग्वृद्धोभवत्यनेन राधोमनउच्यते असुनोनित्त्वादाद्युदात्तत्वम् । सोमपीथाय पापाने पातृतुदिवचीत्यादिनाथक्प्रत्ययः घुमास्थेतीत्वम् । हर्षते हृषतुष्टौ श्यनिप्राप्तेव्यत्ययेनशप् आत्मनेपदंच । चिकिते कितज्ञाने छन्दसिलुङ्लङ्लिटइतिवर्तमानेकर्मणिलिट् । बाह्वोः उदात्तयणइतिविभक्तेरुदात्तत्वम् । वृश्च ओव्रश्चूछेदने तौदादिकः ग्रहिज्यादिनासम्प्रसारणं विकरणस्वरः संहितायां घ्रचोतस्तिङइतिदीर्घत्वम् । वृष्ण्या वृषसेचने उणादिकोनक्प्रत्ययः तत्रभवानिवृष्ण्यानि भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् शेश्छन्दसीतिशेर्लोपः ॥ ७ ॥

अष्टमीमृचमाह—

वि जा॑नी॒ह्यार्या॒न्ये च॒ दस्य॑वो ब॒र्हिष्म॑ते रन्धया॒ शास॑दव्र॒तान् ।
शाकी॑ भव॒ यज॑मानस्य चोदि॒ता विश्वेत्ता ते॑ सध॒मादे॑षु चाकन ॥८॥

वि । जा॒नी॒हि॒ । आर्या॑न् । ये । च॒ । दस्य॑वः । ब॒र्हिष्म॑ते ।
र॒न्ध॒य॒ । शास॑त् । अ॒व्र॒तान् । शाकी॑ । भ॒व॒ । यज॑मानस्य ।
चो॒दि॒ता । विश्वा॑ । इत् । ता । ते॒ । स॒ध॒ऽमादे॑षु । चा॒क॒न॒ ॥ ८ ॥

हेइन्द्र त्वंआर्यान्विदुषोनुष्ठातॄन्विजानीहिविशेषेणबुध्यस्व येचदस्यवः तेषामनुष्ठातॄणामुपक्षपयितारः शत्रवः तानपिविजानीहीतिशेषः ज्ञात्वाचबर्हिष्मतेबर्हिषायज्ञेनयुक्ताययजमानायाव्रतान् व्रतमितिकर्मनाम कर्मविरोधिनस्तान्दस्यून्रन्धयहिंसांप्रापय यद्वा यजमानस्यवशं

गमय रध्यतिर्वशगमनेइतियास्कः। किंकुर्वन् शासत् दुष्टानामनुशासनंनिग्रहंकुर्वन् अतःशाकी शक्तियुक्तस्त्वंयजमानस्यचोदिताप्रेरकोभव यज्ञविघातकानसुरान्तिरस्कृत्ययज्ञान्यजमानैः सम्यगनुष्ठापयेतिभावः अहमपिस्तोता तेतव तानिपूर्वोक्तानिकर्माणिविश्वेव सर्वाण्येवसधमादेषुसहमादनयुक्तेषुयज्ञेषुस्तोतुंचाकनकामये॥ जानीहि ज्ञाअवबोधने क्र्यादिकः ज्ञाजनोर्जेतिजादेशः अत्रष्टीगतौवृदितिवृत्करणंल्वादिपरिसमाप्त्यर्थमेवनप्वादिपरिसमाप्त्यर्थमितियेषांदर्शनं तेषांप्वादीनांह्रस्वइतिह्रस्वेनभवितव्यं मैवं ज्ञाजनोर्जेतिदीर्घोच्चारणसामर्थ्यात् जनीमाद्रुर्भाविद्रत्यस्यतुदीर्घोच्चारणमन्तरेणाप्यतोदीर्घोयञीत्यनेनैवदीर्घःसिध्यति तस्माद्दीर्घोच्चारणवैयर्थ्यप्रसंगात् अत्रह्रस्वोनभवतीतिसिद्धम्। वर्हिष्मते वसौमत्वर्थेइतिमत्वात्तत्वजश्त्वयोरभावः। रन्धय रधहिंसासंराध्योः। शासत् शासुअनुशिष्टौ शवरिभद्रादित्वाच्छपोलुक् जक्षित्यादयःषडित्यभ्यस्तसंज्ञायाम् नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। शाकी शकृशक्तौ भावेघञ् ततोमत्वर्थीयइनिः व्यत्ययेनाद्युदात्तत्वम् यद्वावृषादिर्द्रष्टव्यः। विश्वा ता उभयत्रशेश्छन्दसीतिशेर्लोपः। सधमादेषु सहमाद्यन्त्येष्वितिसधमादायज्ञाः अधिकरणेघञ्प्रत्ययः ननु मदोनुपसर्गेइत्यप्प्रत्ययेनभवितव्यम् मैवं व्यधजपोरनुपसर्गेइत्यत्रैवमदइतिवक्तव्येपन्मदोनुपसर्गेइतिपृथगुपादानं तदप्यत्रापिपक्षेयथास्यादितिन्यासकारेणमत्पपादीत्यस्माभिर्धातुवृत्तावुक्तम् सधमादस्थयोश्छन्दसीतिसहशब्दस्यसधादेशः। चाकन कनीदीप्तिकान्तिगतिषु अत्रकान्त्यर्थः छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् णलुत्तमोवेतिणित्त्वस्यविकल्पनाद्वृद्ध्यभावः तुजादित्वादभ्यासस्यदीर्घत्वम्॥ ८॥

नवमीमृचमाह—

अनु॑व्रताय र॒न्धय॒न्नप॑व्रताना॒भूभि॒रिन्द्रः॑ श्न॒थय॒न्ननाभुवः। वृ॒द्धस्य॑ चि॒द्वर्ध॑तो॒ द्यामि॒नक्ष॑त॒ः स्तवा॑नो व॒म्रो वि ज॑घान सं॒दिहः॑॥ ९॥

अनु॑ऽव्रताय। र॒न्धय॑न्। अप॑ऽव्रतान्। आ॒ऽभूभिः॑। इन्द्रः॑। श्न॒थय॑न्। अना॑भुवः। वृ॒द्धस्य॑। चि॒त्। वर्ध॑तः। द्याम्। इ॒नक्ष॑तः। स्तवा॑नः। व॒म्रः। वि। ज॒घा॒न॒। स॒म्ऽदिहः॑॥ ९॥

यइन्द्रःअनुव्रतायअनुकूलकर्मणेयजमानायअपव्रतान् अपगतकर्मणःयजमानान्रन्धयन् हिंसयन्वशीकुर्वन्वा तथाआभूभिः आभिमुख्येनभवन्तीत्याभुवःस्तोतारः तैः अनाभुवःतद्वि-

1 नि० ६. ३२।

रीतान्श्रथयन्हिंसयन्वर्तते वृद्धस्यचिद्वर्धतःपूर्वंवृद्धस्यापिपुनर्वर्धमानस्यद्यामिनक्षतः स्वर्गमामुवतः तस्येन्द्रस्यस्तवानः स्तुतिंकुर्वाणोवम्रःस्तुत्युद्गिरणशीलः एतत्संज्ञकऋषिःसन्दिहः सम्यगुपचितावल्मीकवपाःजघान इन्द्रेणपरिहृतान्तरायःसन् पृथिव्याःसारभूतंवल्मीकवपालक्षणंयज्ञसम्भारंआहार्षीदित्यर्थः तथाचशाखान्तरेसमाम्नातम्—यद्वल्मीकवपासम्भारोभवति ऊर्जमेवरसंपृथिव्याअवरुन्धइति॥ अनुव्रताय अनुकूलंव्रतंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। श्रथयन् श्रथहिंसायां णिचिघटादित्वान्मित्त्वे मितांह्रस्वइतिह्रस्वत्वम्। वर्धतः व्यत्ययेनपरस्मैपदम्। इनक्षतः नक्षगतौ इकारोपजनश्छान्दसः यद्वा इनक्षतिर्गत्यर्थःप्रकृत्यन्तरमन्वेष्टव्यम्। स्तवानः सम्यानच्स्तुवइतिस्तौतेर्बहुलवचनान्निरुपपदादृथानच्प्रत्ययः व्यत्ययेनाद्युदात्तत्वम्। जघान अभ्यासाच्चेत्यभ्यासादुत्तरस्यहन्तेर्हकारस्यकुत्वम्। सन्दिहः दिहउपचये कृत्यल्युटोबहुलमितिबहुलवचनात्कर्मणिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ९॥

दशमीमृचमाह—

तक्ष॒द्यत्त॑उ॒शना॒सह॑सा॒सहो॒विरोद॑सीम॒ज्मना॑बाधते॒शवः॑।
आत्वा॒वात॑स्यनृमणोमनो॒युज॒आपूर्य॑माणमवहन्न॒भिश्रवः॑॥१०॥११

तक्ष॑त्। यत्। ते॒। उ॒शना॑। सह॑सा। सहः॑। वि। रोद॑सी॒ इति॑। म॒ज्मना॑। बा॒ध॒ते॒। शवः॑। आ। त्वा॒। वात॑स्य। नृ॒ऽम॒नः॒। म॒नः॒ऽयुजः॑। आ। पूर्य॑माणम्। अ॒व॒ह॒न्। अ॒भि। श्रवः॑॥१०॥१०॥

हे इन्द्र यद्यदाउशनाकाव्यः सहसाआत्मीयेनबलेन तेसहः त्वदीयंबलं तक्षत् तनूकृतवान् सम्यक्तीक्ष्णमकार्षीदित्यर्थः तदाशवःत्वदीयंबलं मज्मनासर्वस्यशोधकेनस्वतैक्ष्ण्येनरोदसी द्यावापृथिव्यौविबाधते तेविभीतइत्यर्थः तथाचान्यत्राम्नातम्—यस्यशुष्माद्रोदसीअभ्यसेतामिति। यद्वा रोदसीयस्मादृत्राद्विभीतस्तंबाधतइत्यर्थः हेनृमणः नृपुरक्षितव्येषु यजमानेषु अनुग्रहबुद्धियुक्तेन्द्र आपूर्यमाणं पूर्वोक्तेनबलेनासमन्तात्पूर्यमाणंत्वात्वां मनोयुजःमनोव्यापारमात्रेणयुक्ताः वातस्यवायोःसम्बन्धिनः तद्वद्वेगेनगच्छन्तइत्यर्थः एवंभूताअश्वाःश्रवोभि हविर्लक्षणमन्नं अभिलक्ष्यआवहन्आभिमुख्येन मापयन्तु॥ तक्षत् तक्षूत्वक्षूतनूकरणे लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते। उशना वशकान्तौ वशेःकनसिरिति कनस् महिन्नेत्यादिनासम्प्रसारणं ऋदुशनस्पुरुदंसोनेहसांचेत्यनङादेशः सर्वनामस्थानेचेत्युप-

१ तै० ब्रा० १. १. ३.। २ तै० सं० १. ७. १३.।

धादीर्घत्वम् हलूङ्यादिनलोपौ। मज्मना टुमस्जोशुद्धौ औणादिकोमनिप्रत्ययः। नृमणः छन्द-स्यृदवग्रहादितिणत्वम्। अवहन् छन्दसिलुङ्लङ्लिटइतिविधार्थनायांलङ् ॥ १० ॥

॥ इतिप्रथमस्यचतुर्थेदशमोवर्गः ॥ १० ॥

एकादशीमृचमाह—

मन्दिष्टयदुशनेकाव्येसचाँइन्द्रोवङ्कूवङ्कुतराधितिष्ठति।
उग्रोययिंनिरपःस्रोतसासृजद्विशुष्णस्यदृंहिताऐरयत्पुरः ॥११॥

मन्दिष्ट। यत्। उशने। काव्ये। सचा। इन्द्रः। वङ्कू इति।
वङ्कुऽतरा। अधि। तिष्ठति। उग्रः। ययिम्। निः। अपः।
स्रोतसा। असृजत्। वि। शुष्णस्य। दृंहिता। ऐरयत्। पुरः ॥११॥

यदायदाइन्द्रःउशनेकामयमानेकाव्ये सचासहमन्दिष्टस्तुतोभूत् तदानीं वंकूवंकुतराअतिशयेनकुटिलंगच्छन्तावश्वौअधितिष्ठति रथेसंयोज्यतमारोहयतीत्यर्थः यद्वा वंकुतरा अतिशयेनवक्रंगच्छतिरथे वंकूवक्रगमनशीलावश्वौसंयोज्येतियोजनीयम् उग्रउदूर्णस्तादृशइन्द्रः ययिंगमनयुक्तान्मेघात् स्रोतसाप्रवाहरूपेणअपोनिरसृजत् जलानिनिरगमयत् तथा शुष्णस्यसर्वस्य शोषयितुरसुरस्यदृंहिताःप्रवृद्धाःपुरःनगराणिनिवासस्थानानिव्यैरयत्विविधंप्रेरितवान्॥ मन्दिष्ट मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु लुङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। उशने वशेरौणादिकःक्युप्रत्ययः ग्रहिज्यादिनासम्प्रसारणम् योरनादेशः। सचा षचसमवाये संपदादिलक्षणोभावेक्विप् आङ्याजयारांचोपसंख्यानमितिविभक्तेराङादेशः संहितायां आङोनुनासिकश्छन्दसीति तस्यसानुनासिकत्वम्। वंकू वंकुगतौ औणादिकउप्रत्ययःबहुलवचनात्कुत्वम्। वंकुतरा अतिशयेनवंकूवंकुतरा सुपांसुलुगितिविभक्तेराकारः अत्रगतिसामान्यवाचिनागतिविशेषोलक्ष्यते। ययिं याप्रापणेआदृगमहनइतिकिप्रत्ययः लिड्वद्भावाद्द्विर्वचनहस्वत्वे आतोलोपइटिचेत्याकारलोपः प्रत्ययस्वरः सुपांसुपोभवन्तीतिपञ्चम्याअमादेशः। दृंहिता दृहिवृद्धौ इदित्त्वान्नुम्। ऐरयत् ईर प्रेरणे चौरादिकःलङ्याडागमः आटश्चेतिवृद्धिः ॥ ११ ॥

द्वादशीमृचमाह—

आस्मारथंवृषपाणेषुतिष्ठसिशार्यातस्यप्रभृतायेषुमन्दसे।
इन्द्रयथासुतसोमेषुचाकनोनर्वाणंश्लोकमारोहसेदिवि ॥१२॥

आ । स्म । रथम् । वृषऽपानेषु । तिष्ठसि । शार्यातस्य ।
प्रऽभृताः । येषु । मन्दसे । इन्द्र । यथा । सुतऽसोमेषु । चाकनः ।
अनर्वाणम् । श्लोकम् । आ । रोहसे । दिवि ॥१२॥

अत्रकौषीतकिनइतिहासमाचक्षते शर्यातनाम्नोराजर्षेःयज्ञेभृगुगोत्रोत्पन्नश्च्यवनोमहर्षिः आश्विनंग्रहमगृह्णात इन्द्रस्तंदृष्ट्वाक्रुद्धोभूत् तमिन्द्रमनुनीयपुनःसोमंतस्मैप्रादादिति अयमर्थोऽस्यांप्रतिपाद्यते हेइन्द्र त्वं वृषपाणेषु वृष्णःसेचनसमर्थस्यसोमस्यपानानिवृषपाणानि तेषुनिमित्तभूतेषुरथमातिष्ठसिस्म स्वयमेवरथमारुह्यगच्छसि नत्वन्यःकश्चित्प्रवर्तयितेतिभावः एवं चसति येषुसोमेषुत्वंमन्दसेहर्षंप्राप्नोषि तादृशाःसोमाः शार्यातस्यएतन्नाम्नोराजर्षेःसम्बन्धिनः प्रभृताःप्रकर्षेणसंपादिताः अभिषवादिसंस्कारैःसंस्कृताइत्यर्थः अतःसुतसोमेषुअभिषुतसोमयुक्तेष्वस्मदीयेषुयज्ञेषुयथाचाकनः यथाकामयसे एवमस्यापिशार्यातस्यसोमान्कामयस्व तथासतिदिविद्युलोके अनर्वाणं गमनरहितंस्थिरंश्लोकंस्तोत्रलक्षणंवचोयशोवा आरोहसे प्राप्नोषि यद्वा इमंयजमानंदिविद्युलोके उक्तलक्षणंयशः प्रापयसि॥ स्म निपातस्यचेतिदीर्घत्वम्। वृषपाणेषु पापाने भावेल्युट् वाभावकरणयोरितिपूर्वपदस्थान्निमित्तादुत्तरस्यपानशब्दस्य नकारस्यणत्वम् । प्रभृताः भृञ्भरणे कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । मन्दसे मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । चाकनः कनीदीप्तिकान्तिगतिषु अत्रकान्त्यर्थः कान्तिश्चाभिलाषः लेटिसिप्यडागमः बहुलंछन्दसीति शपःश्लुः तुजादित्वादभ्यासस्यदीर्घत्वम् सर्वेविधयश्छन्दसिविकल्प्यन्तइत्यभ्यस्तस्याद्युदात्तत्वाभावे धातोरितिधात्वन्तस्योदात्तत्वम् । अनर्वाणं अर्तेरन्येभ्योपिदृश्यन्तइतिदृशिग्रहणाद्धावेवनिप् नञ्बहुव्रीहौ अपि अर्वणस्त्रसावनञइतिपर्युदासात् आदेशाभावेसर्वनामस्थानेचेत्युपधादीर्घत्वम् नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । श्लोकं श्लोकृसंघाते श्लोक्यतइति श्लोकः कर्मणिघञ् ञित्वादाद्युदात्तत्वम्। रोहसे रुहेर्व्यत्ययेनात्मनेपदम्॥ १२ ॥

त्रयोदशीमृचमाह—

अददाअर्भांमहतेवचस्यवेकक्षीवतेवृचयामिन्द्रसुन्वते ।
मेनाभवोवृषणश्वस्यसुक्रतोविश्वेत्तातेसवनेषुप्रवाच्या ॥१३॥

अददाः । अर्भाम् । महते । वचस्यवे । कक्षीवते । वृचयाम् ।
इन्द्र । सुन्वते । मेना । अभवः । वृषणश्वस्य । सुक्रतो इति सुऽक्रतो । विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या ॥ १३ ॥

अत्रेयमाख्यायिका—अङ्गराजःकस्मिंश्चिद्दिवसेस्वकीयाभिःयोषिद्भिःसहगङ्गायांजलक्रीडांचक्रे तस्मिन्समयेदीर्घतमानामऋषिः स्वभार्ययापुत्रभृत्यादिभिश्चदुर्बलत्वात् किमपिकुर्वन्न शक्नोतीतिद्वेषेणगङ्गामध्येप्रचिक्षिपे सचऋषिः केनचित्प्लवेनअङ्गराजस्यक्रीडादेशंप्रतिसमाजगाम सचराजासर्वज्ञंतमृषिमवगत्यप्लवादवतार्यैवमवोचत् हेभगवन् ममपुत्रोनास्ति एषामहिषी अस्यां कंचित्पुत्रमुत्पादयेति सचतथेत्यब्रवीत् सामहिषीतुराजानंप्रतितथेत्युक्त्वा अयंवृद्धतरोजुगुप्सितोममयोग्योनभवतीतिबुध्वास्वकीयामुशिक्संज्ञांदासींमाहीषीत् तेनचसर्वज्ञेनऋषिणामन्त्रपूतेनवारिणाभ्युक्षितासतीसैवऋषिपत्नीबभूव तस्यामुत्पन्नःकक्षीवान्नामऋषिः सएव राज्ञः पुत्रोभूत् सचबहुविधेनराजसूयादिनाइजेतस्मैराज्ञेवत्कृतैर्यज्ञैःपरितुष्टइन्द्रोवृचयाख्यां तरुणांयोषितंप्रादात् अयमर्थःपूर्वार्धेप्रतिपाद्यते । हेइन्द्रत्वंमहतेप्रवृद्धायवचस्यवे त्वदीयस्तोत्रलक्षणं वचआत्मनःइच्छतेसुन्वतेत्वद्देवताकेषुयज्ञेषुसोमाभिषवंकुर्वते कक्षीवते एतन्नाम्नेराज्ञेवृचयांवृचयाख्यामर्भांअल्पांयुवतिमित्यर्थः एवंभूतांस्त्रियमददाः तथा सुक्रतोशोभनकर्मन् शोभनप्रज्ञ वाहेइन्द्र त्वंवृषणश्वस्यएतदाख्यस्यराज्ञः मेनाभवोमेनानामकन्यकाभूः तथाचशाट्यायनिभिः सुब्रह्मण्यामन्त्रैकदेशव्याख्यानरूपंब्राह्मणमेवमाम्नायते—वृषणश्वस्यमेनइति वृषणश्वस्यमेनाभूत्वामघवाकुलउवासेति तांचमासयौवनांस्वयमेवेन्द्रश्चकमे । तथाचताण्डिभिराम्नातम्—वृषणश्वस्यमेनानामदुहितास तामिन्द्रश्चकमइति । अतउक्तरूपाणियानिकर्माणि त्वयाकृतानि ते ता त्वदीयानितानि विश्वेत् सर्वाण्येव सवनेषुयज्ञेषुप्रवाच्या प्रकर्षेणवक्तव्यानि स्तुतिभिःस्तोतव्यानीत्यर्थः ॥ महते वृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम् । वचस्यवे सुपआत्मनः क्यच् क्याच्छन्दसीत्युप्रत्ययः । कक्षीवते अश्वबन्धनहेतवोरज्जवःकक्ष्याः कक्षीवान्कक्ष्यावानितियास्कः । आसंदीवदष्ठीवच्चक्रीवत्कक्षीवदितिसम्प्रसारणं मतुपोवत्वंसंज्ञायांनिपात्यते । मेनेतिस्त्रीनाम मेनाग्नाइतिपाठात् मनज्ञाने मन्यतेगृहकृत्यंजानातीतिमेना पचाद्यच् नशिमन्योरलिट्येत्वंवक्तव्यमित्येत्वं वृषादित्वादाद्युदात्तत्वं मेनामानयन्त्येनाइतियास्कः । सवनेषु सवनमितियज्ञनाम सूयतेअभिषूयतइस्मिन्निति अधिकरणेल्युट् । प्रवाच्या वचपरिभाषणे ण्यति यजयाचरुचप्रवचर्चश्चेतिकुत्वाभावः तित्स्वरितेप्राप्तेव्यत्ययेनाद्युदात्तत्वम् यद्वा वाचयतेरचोयदितियत् यतोनावइत्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १३ ॥

१ नि० ६. १०. । २ नि ३. २१. ।

चतुर्दशीमृचमाह—

इन्द्रोअश्रायिसुध्योनिरेकेपज्रेषुस्तोमोदुर्योनयूपः ।
अश्वयुर्गव्यूरथयुर्वसूयुरिन्द्रइद्रायःक्षयतिप्रयन्ता ॥१४॥

इन्द्रः । अश्रायि । सुऽध्यः । निरेके । पज्रेषु । स्तोमः । दुर्यः ।
न । यूपः । अश्वऽयुः । गव्युः । रथऽयुः । वसुऽयुः । इन्द्रः ।
इत् । रायः । क्षयति । प्रऽयन्ता ॥१४॥

इन्द्रोदेवःसुध्यःशोभनकर्मणोयजमानान्शोभनमज्ञान्वा निरेकेनैर्धन्येनिमित्तभूतेसतिता-न्रक्षितुंअश्रायिअसेविष्ट पज्रेषुपज्राइत्यङ्गिरसामाख्या तथाचशाट्यानिभिराम्नातम्—पज्रावा-अङ्गिरसःपशुकामास्तपोतप्यन्तेति । येषुयजमानेष्वङ्गिरःसु स्वोमस्तोत्रंनिश्चलंतिष्ठति दुर्योनयू-पः द्वारिनिखातास्थूणेव तान् सुध्यइतिपूर्वेणान्वयः तस्मादिदानीमपिरायःप्रयन्ताधनस्यप्रदाताप्र-न्द्रइव इन्द्रएवयजमानानांदातुंअश्वयुःअश्वानिच्छन् तथागव्युःगाइच्छन् रथयुरथानिच्छन् व-सूयुः एवमन्यदपियद्धनमस्तितदपीच्छन्क्षयतिवर्तते ॥ अश्रायि श्रिञ्सेवायाम् कर्तरिलुङि व्य-त्ययेनच्लेश्चिणादेशः। सुध्यः धीरितिकर्मनाम शोभनाधीर्येषां नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् शसि छन्दस्युभयथेतियणादेशःउदात्तस्वरितयोर्यणइतिस्वरितत्वम् । निरेके नितरांरेचनंनिरे-कः रिचिर्विरेचने भावेघञ् थाथादिनोत्तरपदान्तोदात्तत्वम्। दुर्यः दुरेभवोदुर्यः भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम् । यूपः युमिश्रणे यूयतेयुज्यतेस्मिन्नितियूपः कुयुभ्यांचेतिपप्रत्ययः दीर्घइत्यनुवृत्तेर्दीर्घत्वम् सुशृभ्यांनिच्चेत्यनुवृत्तावाद्युदात्तत्वम्। अश्वयुः यजमानेभ्योश्वानिच्छन् छन्दसिपरेच्छायामितिक्यच् नछन्दस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः अश्वाघस्यादित्यात्वंतु छान्द-सत्वान्नभवति क्याच्छन्दसीत्युप्रत्ययः एवमुत्तरत्रापि एतावांस्तुविशेषः गव्युरित्यत्र वान्तोयिप्र-त्ययेइत्यवादेशः । यास्कस्त्वेवंव्याचष्ट—इदंयुरिदंकामयमानोथापितद्वदर्थेभाष्यते वसूयुरिन्द्रो-वसुमानित्यर्थः अश्वयुर्गव्यूरथयुर्वसूयुरित्यपिनिगमोभवतीति । क्षिक्षये भौवादिकः। प्रयन्ता यमउपरमे तृचि एकाचइतीट्प्रतिषेधः चितइत्यन्तोदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥१४॥

पञ्चदशीमृचमाह—

इदंनमोवृषभायस्वराजेसत्यशुष्मायतवसेवाचि ।
अस्मिन्निन्द्रवृजनेसर्ववीरास्मत्सूरिभिस्तवशर्मन्स्याम॥१५॥१२

१ नि० ६. ३१.

इदम् । नमः । वृषभाय । स्वऽराजे । सत्यऽशुष्माय । तवसे ।
अवाचि । अस्मिन् । इन्द्र । वृजने । सर्वऽवीराः । स्मत् । सूरिऽभिः ।
तव । शर्मन् । स्याम ॥ १५ ॥ ११ ॥

इदंपुरोवर्तिनमः स्तुतिलक्षणंवचः हेइन्द्र तुभ्यमवाचि अस्माभिःप्रायोजि कीदृशाय वृषभायव-र्षणशीलाय स्वराजे स्वकीयेनतेजसाराजमानाय सत्यशुष्माय शुष्ममितिबलनाम शत्रूणांशोषक-त्वात्अवितथबलयुक्ताय तवसेअत्यन्तंप्रवृद्धाय यस्मादेवंतस्मात्अस्मिन्वृजनेवर्जनवतिसंग्रामेस-र्ववीराः विशेषेणईरयन्त्यमित्रानितिवीराभटाः तादृशैःसर्वैर्भटैरुपेतावयं स्मदितिनिपातःसुशब्दा-र्थः तवसम्बद्शर्मन्त्वयादत्तेशोभनेगृहे सूरिभिःविद्वद्भिःपुत्रादिभिःसहस्यामभवेमनिवसेमेत्यर्थः यद्वा त्वत्सम्बन्धिनिशोभनेयज्ञगृहेसूरिभिःविद्वद्भिःऋत्विग्भिःसहस्याम शर्मेतिगृहनाम शर्मवर्मे-तिपठितत्वात् ॥ स्वराजे राजृदीप्तौ सत्सूद्विषेतिक्विप् । सत्यशुष्माय सत्यंशुष्मंबलंयस्य बहुव्रीहौपू-र्वपदप्रकृतिस्वरत्वम् । तवसे तवतिःसौत्रोधातुः अस्मादौणादिकोसिप्रत्ययःवृजने वृजीवर्जने कृ-पृवृजिमन्दिनिधाञ्भ्यःक्युरितिक्युःप्रत्ययः । शर्मन् सुपांसुलुगितिसप्तम्यालुक् नङिसंबुध्यो-रितिनलोपप्रतिषेधः । स्याम नश्चेतिसंहितायांसकारस्यधुडागमः खरिचेतिचर्त्वं चयोद्वितीयाःश-रिपौष्करसादेरितितकारस्यथकारः ॥ १५ ॥

॥ इतिप्रथमस्यचतुर्थेएकादशोवर्गः ॥ ११ ॥

त्वंसुमेषमितिपञ्चदशर्चंद्वितीयंसूक्तंसव्यस्यार्षमैन्द्रं त्रयोदशीपञ्चदशीचत्रिष्टुभौ शिष्टाजगत्यः तथाचानुक्रान्तम्—त्वंसुत्रयोदश्यन्त्येत्रिष्टुभाविति गवामयनस्यमध्यमेहनि विषुवत्संज्ञकेमरुत्वती-यशस्त्रइदंसूक्तम् विषुवान्दिवाकीर्त्यइतिखण्डेसूत्रितम्—त्वंसुमेषंकयाशुभेतिचमरुत्वतीयमिति.।

तत्रप्रथमामृचमाह—

त्यंसुमेषंमहयास्वर्विदंशतंयस्यसुभ्वःसाकमीरते ।
अत्यंनवाजंहवनस्यदंरथमेन्द्रंववृत्यामवसेसुवृक्तिभिः ॥१॥

त्यम् । सु । मेषम् । महय । स्वःऽविदम् । शतम् । यस्य । सुऽभ्वः ।
साकम् । ईरते । अत्यम् । न । वाजम् । हवनऽस्यदम् । रथम् ।
आ । इन्द्रम् । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

त्यंतंप्रसिद्धंमेषंशत्रुभिः सहस्पर्धमानंस्वर्विदंस्वरादित्योद्योर्वातस्यवेदितारंलब्धारंवा यद्वा स्वः सुष्ठुअरणीयंधनंतस्यलम्भयितारं एवंगुणविशिष्टमिन्द्रंहेअध्वर्योसुमहयसम्यक्पूजय यस्येन्द्रस्यशतंशतसंख्याकाः सुम्वः स्तोतारः साकंसहैवयुगपदेवईरतेस्तुतौप्रवर्तन्ते यद्वा यस्येन्द्रस्य रथंशतंसुम्वः शतसंख्याकाअश्वाः साकंसहईरतेगमयन्ति तमिन्द्रंअवसेस्मद्रक्षणायसुवृक्तिभिः सुष्ठुआवर्जकैःस्तोत्रैः रथमाववृत्यां रथंप्रतिआवर्तयामि कीदृशंरथं हवनस्यदंहवनमाह्वानंयागं प्रतिवेगेनगच्छन्तं वेगगमनेदृष्टान्तः—अत्यंनवाजं गमनसाधनंअश्वमिव॥ महय महपूजायां चुरादिरदन्तः संहितायांमन्येषामपिदृश्यतइतिदीर्घत्वम् ।सुम्वः सुष्ठुभवन्तीतिसुम्वःस्तोतारः क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् जसि ओःसुपीतियणादेशस्य नभूसुधियोरितिप्रतिषेधेप्राप्ते छन्दस्युभयथेत्युभयथाभावाद्यणादेशः उदात्तस्वरितयोर्यणइतिपरस्यजसोनुदात्तस्यस्वरितत्वम्। ईरते ईरगतौकम्पनेच अदादित्वाच्छपोलुक्झस्यादादेशः टेरेत्वं अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरःशिष्यते यद्वृत्तयोगादनिघातः तत्रहिपञ्चमीनिर्देशेपिव्यवहितेपिकार्यमिष्यतइत्युक्तम्। अत्यं अत्यइत्यश्वनाम अत्यः हयइतिपाठात् ।वाजं वाज्यतेगम्यतेनेनेतिवाजः वजव्रजगतौ करणेघञ् अजिव्रज्योश्चेत्यत्रचशब्दस्यानुक्तसमुच्चयार्थत्वात् वाजोवाज्यमित्यत्रापिकुत्वाभावइत्युक्तम्। हवनस्यदं स्यन्दूप्रस्रवणे स्यदोजवेइतिवेगेगम्यमानेघञन्तोनिपातितः अतएवनलोपोवृद्ध्यभावश्च नच नधातुलोपआर्धधातुकेइतिवृद्धेःप्रतिषेधः इग्लक्षणाहिवृद्धिरत्रप्रतिषिध्यते नचेयमिग्लक्षणा घञोञित्त्वादुत्तरपदस्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेनतदेवशिष्यते। ववृत्यां वृतुवर्तने लिङिव्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिशपःश्लुः द्विर्वचनादि यासुटोङित्त्वाल्लघूपधगुणाभावःतिङ्ङतिङइतिनिघातः ॥ १ ॥

द्वितीयामृचमाह—

सपर्वतोनधरुणेष्वच्युतःसहस्रंमूतिस्तविंषीषुवावृधे ।
इन्द्रोयद्वृत्रमवधीन्नदीवृतंमुब्जन्नर्णांसिजर्हृषाणोअन्धसा॥२॥

सः । पर्वतः । न । धरुणेषु । अच्युतः । सहस्रम्ऽऊतिः । तविषीषु ।
ववृधे । इन्द्रः । यत् । वृत्रम् । अवधीत् । नदीऽवृतम् । उब्जन् ।
अर्णांसि । जर्हृषाणः । अन्धसा ॥ २ ॥

अन्धसासोमलक्षणेनान्नेनजर्हृषाणः अत्यर्थंहृष्यन्निन्द्रःयद्यदावृत्रं त्रयाणां लोकानामावरीतारमसुरंअवधीत् हतवान् कीदृशंवृत्रं नदीवृतंनदनान्नद्यआपस्तासामावरीतारं किंकुर्वन्नि-

न्द्रः अर्णांसि जलानि उब्जन् अधःपातयन् तदानींसइन्द्रः पर्वतोन पर्ववानशिलोच्चयइव ध-रुणेषु सर्वस्यधारकेषूदकेषुमध्ये अच्युतः चलनराहित्येनस्थितः सहस्रमूतिः बहुविधरक्षणवा-न् तविषीषुबलेषु ववृधेप्रवृद्धोबभूव ॥ धरुणेषु धारयतेर्णिलुकूचेत्युनःप्रत्ययः प्रत्ययस्वरः। सहस्रमूतिः सहस्रमूतयोयस्यासौ लुगभावश्छान्दसः। ववृधे संहितायामभ्यासस्यान्येषामपि-दृश्यतइतिदीर्घत्वम्। नदीवृतं नदींवृणोतीतिनदीवृत् क्विप् तुगागमः। उब्जन् उब्जआर्जवे वि-करणस्वरः।अर्णांसि उदकेनुट्चेत्यर्तेरसुन्प्रत्ययः तत्सन्नियोगेननुडागमश्च नित्त्वादाद्युदात्तत्वम्। जर्हृषाणः हृषतुष्टौ यङ्लुगन्ताद्व्यत्ययेनशानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम् यद्वा यङन्ता-देवशानचिबहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिशानचआर्धधातुकत्वादतोलोपयलोपौ सा-र्वधातुकत्वाच्च अभ्यस्तस्याद्युदात्तत्वम्। अन्धसा अद्यतइत्यन्धः अदेर्नुम्धश्चेत्यसुन् धातोर्नु-मागमोधकारान्तादेशश्च नित्त्वादाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

सहिद्वरोद्वरिषुवव्रऊधनिचन्द्रबुध्नोमदवृद्धोमनीषिभिः।
इन्द्रंतमह्वेस्वपस्ययाधियामंहिष्ठरातिंसहिपप्रिरन्धसः ॥३॥

सः। हि। द्वरः। द्वरिषु। वव्रः। ऊधनि। चन्द्रऽबुध्नः। मदऽवृद्धः।
मनीषिऽभिः। इन्द्रम्। तम्। अह्वे। सुऽअपस्यया। धिया।
मंहिष्ठऽरातिम्। सः। हि। पप्रिः। अन्धसः ॥ ३ ॥

सपूर्वोक्तगुणविशिष्टइन्द्रः द्वरिषुआवरीतृषुशत्रुषुद्वरोहि अतिशयेनावरीताखलु शत्रुजयशील-इत्यर्थः यस्मात् ऊधनिउद्धृतजलवत्यन्तरिक्षेववः सम्भक्तःव्याप्यवर्तते अतएवचन्द्रबुध्नःसर्वासां प्रजानामाह्लादकमूलः अन्तरिक्षस्यसर्वाह्लादकत्वात् मदवृद्धः माद्यन्त्येभिरितिमदाःसोमास्तैर्वर्धितः एवंभूतोयइन्द्रोमंहिष्ठरातिंप्रवृद्धधनंप्रवृद्धदानंवातमिन्द्रंमनीषिभिः मनसईषितृभिःप्राज्ञैर्ऋत्विग्भिः सह स्वपस्ययाधिया शोभनकर्मयोग्ययाबुद्ध्या अह्वेआह्वयामि हियस्मात् सइन्द्रःअन्धसोन्नस्या-स्मदपेक्षितस्यपप्रिःपूरयिता ॥ द्वरः द्वइत्येके द्वरत्यावृणोतीतिद्वरः पचाद्यच् चित्स्वरेणान्तोदा-त्तत्वम् द्वरिषु अचइरितिकर्तरीइप्रत्ययः।वव्रः वृङ्सम्भक्तौ व्रियतेसंभज्यतइतिवव्रः घञर्थेकवि-धानंस्थास्नापाव्यधिहनियुद्ध्यर्थमितिपरिगणनस्योपलक्षणार्थत्वात्कर्मणिकप्रत्ययः द्विर्भाव-श्छान्दसः। ऊधनि उत्ऊर्ध्वंध्रियतेस्मिन्जलमित्यूधः सप्तम्येकवचने अस्थिदधिसक्थ्यक्ष्णाम-नङुदात्तः छन्दस्यपिदृश्यतइतिदृशिग्रहणादूधसःशब्दस्याप्यनङादेशः यद्वा ऊधसोनङितिसमा-

सेविधीयमानोनङ्गादेशश्छान्दसत्वात् केवलादपिभवति । चन्द्रबुध्नः चदिआह्लादनेदीप्तौच इदित्वान्नुम् स्फायितञ्चीत्यादिनारक् प्रत्ययस्वरेणान्तोदात्तत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनतदेव शिष्यते। मदवृद्धः मदीहर्षे मदोनुपसर्गेइतिकरणेअप् तस्यपित्त्वादनुदात्तत्वेधातुस्वरः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। अह्वे ह्वेञ्स्पर्धायांशब्देच छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङिआत्मनेपदेष्वन्यतरस्यामितिच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः गुणः । स्वपस्यया अपइतिकर्मनाम शोभनमपःस्वपः तदहंवीतिस्वपस्यः छन्दसिचेतियप्रत्ययः मंहिष्ठरातिं महिवृद्धौ अतिशयेनमंहित्रीमंहिष्ठा तुश्छन्दसीतीष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः नित्त्वादाद्युदात्तत्वम् मंहिष्ठारातिर्यस्य स्त्रियाःपुंवदितिपुंवद्भावाद्ध्रस्वत्वम् बहुव्रीहौप्रकृत्येतिपूर्वपदप्रकृतिस्वरत्वम् । पप्रिः पृपालनपूरणयोः आदृगमहनजनइतिकिन्प्रत्ययः उदोष्ठ्यपूर्वस्येत्युत्वस्यबहुलंछन्दसीति वचनादभावेयणादेशः लिड्वद्भावाद्द्विर्वचनेचीतिस्थानिवद्भावेसतिद्विर्भावोरदत्वहलादिशेषाः नित्त्वादाद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

आयंपृ॒णन्ति॒दि॒वि॒सद्म॑बर्हिषः समु॒द्रंनसु॒भ्व१॒ःस्वाअ॒भिष्ट॑यः ।
तंवृ॑त्र॒हत्ये॒अनु॑तस्थुरू॒तय॒ःशुष्मा॒इन्द्र॑मवा॒ताअह्रु॑तप्सवः ॥४॥

आ । यम् । पृ॒णन्ति॑ । दि॒वि । सद्म॑ऽबर्हिषः । स॒मु॒द्रम् । न । सु॒ऽभ्वः॑ । स्वाः । अ॒भिष्ट॑यः । तम् । वृ॒त्र॒ऽहत्ये॑ । अनु॑ । त॒स्थुः॒ । ऊ॒तयः॑ । शुष्माः॑ । इन्द्र॑म् । अ॒वा॒ताः । अह्रु॑तऽप्सवः ॥ ४ ॥

सद्मसदनंस्थानं बर्हिःशब्दोपलक्षितोयज्ञोयेषांसोमानांतेसोमाः दिविस्वर्गलोकेअवस्थितं यमिन्द्रंआपृणन्ति आसमन्तात्पूरयन्ति तत्रदृष्टान्तः—सुष्ठुभवन्तीतिसुभ्वोनद्यः समुद्रंन यथा नद्यःसमुद्रंपूरयन्तितद्वदित्यर्थः कीदृश्योनद्यः स्वाः समुद्रस्यस्वभूताः तथाचाम्नायते—समुद्रायवयुनायसिन्धूनांपतयेनमइति । अभिष्टयः आभिमुख्येनगमनवत्यः ऊतयः अवितारोमरुतः वृत्रहत्येवृत्रहननेनिमित्तभूतेसति तमिन्द्रमनुतस्थुःअनुलक्ष्यस्थितावभूवुः कीदृशामरुतः शुष्माः शत्रूणांशोषयितारः अवाताः वान्तिप्रातिकूल्येनगच्छन्तीतिवाताःशत्रवः तद्रहिताः अह्रुतप्सवः अकुटिलरूपाःशोभनावयवाइत्यर्थः ॥ पृणन्ति पृपालनपूरणयोः क्रैयादिकः प्वादीनांह्रस्वइति ह्रस्वत्वम् श्नाभ्यस्तयोरातइत्याकारलोपः प्रत्ययस्वरः यद्वृत्तयोगादनिघातः । सद्मबर्हिषः षद्लृविशरणगत्यवसादनेषु सीदन्त्यस्मिन्निति सद्म औणादिकोधिकरणेमनिन्प्रत्ययः नित्त्वादाद्यु-

दात्तत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनवदेवशिष्यते । सुम्वः भवतेः क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् जसि ओःसुपीतियणादेशस्य नभूसुधियोरितिप्रतिषेधेप्राप्ते छन्दस्युभयथेतियणादेशः उदात्तस्वरितयोर्यणइत्यनुदात्तस्यजसःस्वरितत्वम् । अभिष्टयः इष्टयएषणानि उपसर्गाश्चाभिवर्जमितिवचनादभिरन्तोदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनसएवशिष्यते एमन्नादित्वात्पररूपत्वम् । वृत्रहत्ये हनस्तचेतिहन्तेर्भावेक्यप् तकारान्तादेशश्च प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । अह्रुतप्सवः ह्वृकौटिल्ये अस्मान्निष्ठायां ह्रुह्वरेश्छन्दसीतिह्रुआदेशः प्सा भक्षणेइत्यस्मादौणादिकोडुःप्रत्ययः नह्रुतप्सवः अह्रुतप्सवः अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥४॥

पञ्चमीमृचमाह—

अ॒भि स्व॒वृ॑ष्टिं॒ मदे॑ अस्य॒ युध्य॑तो र॒घ्वीरि॑व प्रव॒णे स॑स्रुरू॒तयः॑ ।
इन्द्रो॒ यद्व॒ज्री धृ॒षमा॑णो॒ अन्ध॑सा भि॒नद्व॒लस्य॑ परि॒धीँरि॑व त्रि॒तः ॥५॥१२॥

अ॒भि । स्व॒ऽवृ॑ष्टिम् । मदे॑ । अ॒स्य॒ । युध्य॑तः । र॒घ्वीःऽइ॑व । प्र॒व॒णे ।
स॒स्रुः । ऊ॒तयः॑ । इन्द्रः॑ । यत् । व॒ज्री । धृ॒षमा॑णः । अन्ध॑सा ।
भि॒नत् । व॒लस्य॑ । प॒रि॒धीन्ऽइ॑व । त्रि॒तः ॥ ५ ॥ १२ ॥

ऊतयोमरुतः मदेसोमपानेनहर्षेसतिअस्येन्द्रस्ययुध्यतोवृत्रेणसहयुध्यमानस्यपुरतःस्ववृष्टिंस्वभूतवृष्टिमन्तंवृत्रंअभि आभिमुख्येनसस्रुःजग्मुःरघ्वीरिवप्रवणे यथागमनस्वभावाआपःनिम्नदेशेगच्छन्ति यद्यदाअन्धसासोमलक्षणेनान्नेनपीतेनधृषमाणः प्रगल्भःसन्वज्रीवज्रवानिन्द्रः वलस्यसंवृण्वतः एतत्संज्ञमसुरंभिनत्व्यदारयत्अवधीदित्यर्थः तत्रदृष्टान्तः—त्रितःपरिधीनिव देवानांहविर्लेपनिघर्षणाय अग्नेःसकाशात्अप्सु एकतोद्वितस्त्रितइतित्रयःपुरुषाजज्ञिरे तथाचतैत्तिरीयैःसमाम्नातम्—सोङ्गारेणापः अभ्यपातयत् ततएकतोजायत सद्वितीयमभ्यपातयत् ततोद्वितोजायत सतृतीयमभ्यपातयत् ततस्त्रितोजायतेति । तत्रउदकपानार्थमवृत्तस्यकूपेपतितस्यप्रतिरोधायअसुरैःपरिधयः परिधायकाःकूपस्याच्छादकाःस्थापिताः तान्यथासोभिनत्तद्वत्॥ स्ववृष्टिं बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । युध्यतःयुधसंप्रहारे दैवादिकः व्यत्ययेनशतृअदुपदेशाल्लसार्वधातुकानुदात्तत्वेश्यनोनित्त्वादाद्युदात्तत्वम् । रघ्वीः रघिर्गत्यर्थः रंघिवंहोर्नलोपश्चेतिउप्रत्ययः वोतोगुणवचनादितिङीप् जसि वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् ङीप्स्वरःशिष्यते । धृषमाणः ञिधृषाप्रागल्भ्ये श्नुप्रत्ययेप्राप्तेव्यत्ययेनशःआत्मनेपदंच अदुपदेशाल्लसार्वधातुकानुदात्तत्वे

१ तै० ब्रा० ३. २. ८. ।

विकरणस्वरःशिष्यते । भिनत् लङिबहुलंछन्दस्यमाङ्योगेपीत्यडभावः विकरणस्वरः यद्वृत्तयोगादनिघातः । वलस्य वलसंवरणे वलतिसंवृणोतिसर्वमितिवलः पचाद्यच् क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । परिधीन् परिधीयन्तइतिपरिधयः उपसर्गेघोःकिरितिदधातेःकर्मणिकिप्रत्ययः आतोलोपइटिचेत्याकारलोपः कृदुत्तरपदप्रकृतिस्वरत्वम् ॥५॥

॥ इतिप्रथमस्यचतुर्थेद्वादशोवर्गः ॥ १२ ॥

षष्ठीमृचमाह—

परींघृणाचरतितित्विषेशवोपोवृत्वीरजसोबुध्नमाशयत् ।
वृत्रस्ययत्प्रवणेदुर्गृभिश्वनोनिजघन्थहन्वोरिन्द्रतन्यतुम् ॥६॥

परि । ईम् । घृणा । चरति । तित्विषे । शवः । अपः ।
वृत्वी । रजसः । बुध्नम् । आ । अशयत् । वृत्रस्य । यत् । प्रवणे ।
दुःऽगृभिश्वनः । निऽजघन्थ । हन्वोः । इन्द्र । तन्यतुम् ॥ ६ ॥

योवृत्रः अपोवृत्वीउदकान्यावृत्यरजसोबुध्नंअन्तरिक्षस्योपरिप्रदेशंआशयत् आश्रित्याशेत तस्यवृत्रस्यप्रवणेप्रकर्षेणवननीयेन्तरिक्षेवर्तमानस्यदुर्गृभिश्वनः दुर्ग्रहव्यापनस्यतस्यहिव्यापनंनकेनापिग्रहीतुंशक्यते सइमाँल्लोकानवृणोदितिश्रुतेः[1] । एवंभूतस्यवृत्रस्यहन्वोः मुखपार्श्वयोः हेइन्द्र यद्यदातन्यतुंप्रहारंविस्तारयन्तं यद्वा शब्दकारिणंवज्रं तृतीयार्थेद्वितीया तन्यतुनावज्रेणनिजघन्थनितरांप्रजहर्थ तदानीं ईमेनंत्वांइन्द्रं घृणा शत्रुजयलक्षणादीप्तिः परिचरतिपरितोव्याप्नोति त्वदीयंशवोबलंचतित्विषे प्रदिदीपे ॥ तित्विषे त्विषदीप्तौ लिटिप्रत्ययस्वरः तिङ्परत्वान्निघाताभावः । वृत्वी वृञ्वरणे स्नात्व्यादयश्चेत्यादिग्रहणात्क्त्वाप्रत्ययस्यईकारः । रजसः रञ्जरागे रज्यन्त्यस्मिन्गन्धर्वादयइतिरजोन्तरिक्षम् असुनि रजकरजनरजःसूपसंख्यानमितिनलोपः नित्त्वादाद्युदात्तत्वम् । अशयत् शीङोव्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिशपोलुगभावः । दुर्गृभिश्वनः ग्रहउपादाने अशूव्याप्तावित्यनयोर्दुःशब्देउपपदेपृषोदरादित्वादभिमतरूपस्वरसिद्धिः । निजघन्थ हनहिंसागत्योः लिटियलिकादिनियमात्प्राप्तस्येटः उपदेशेत्वतइतिनिषेधः अभ्यासाच्चेतिनिअभ्यासादुत्तरस्यहकारस्यघत्वम् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् तिङिचोदात्तवतीतिगतेर्निघातः यद्वृत्तयोगान्निघाताभावः । तन्यतुं तनुविस्तारे अस्मात् ऋतन्यञ्जीत्यादिनायतुच् यद्वा स्तनशब्देइत्यस्माद्बहुलवचनाद्यतुच्प्रत्ययेसकारलोपः ॥ ६ ॥

[1] तै० सं० २. ४. १२.।

सप्तमीमृचमाह—

ह्रदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।
त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ॥७॥

ह्रदम् । न । हि । त्वा । निऽऋषन्ति । ऊर्मयः । ब्रह्माणि । इन्द्र । तव । यानि । वर्धना । त्वष्टा । चित् । ते । युज्यम् । वदृधे । शवः । ततक्ष । वज्रम् । अभिभूतिऽओजसम् ॥ ७ ॥

हेइन्द्र यानिब्रह्माणिस्तोत्रशस्त्ररूपाणिमन्त्रजातानितववर्धनावर्धयितॄणि तानित्वात्वांन्यृषन्तिहि नितरांप्राप्नुवन्त्येव तत्रदृष्टान्तः-ऊर्मयोजलप्रवाहाह्रदंन यथाजलाशयंप्राप्नुवन्तितद्वत् त्वष्टा चित्त्वष्टादेवएव तेतवयुज्यंयोग्यंशवोबलंववृधेप्रावर्धयत् अपिच अभिभूत्योजसं शत्रूणामभिभवितृणांओजसाबलेनयुक्तंवज्रंततक्षतीक्ष्णीचकार॥ न्यृषन्ति ऋषीगतौ तौदादिकः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरः हिचेतिनिघातप्रतिषेधः। ऊर्मयः ऋगतौ ऋच्छन्तिगच्छन्तीत्यूर्मयः अर्तेरूच्चेतिमिप्रत्ययः गुणेसत्यकारस्यऊकारादेशश्च प्रत्ययस्वरः। वर्धना वृधुवृद्धौ वर्धतेएभिरितिवर्धना करणेल्युट् शेश्छन्दसीतिशेर्लोपः। ततक्ष तक्षूत्वक्षूतनूकरणे लिटिणलिलित्स्वरेणप्रत्ययात्पूर्वपदस्योदात्तत्वम् पादादित्वान्निघाताभावः। अभिभूत्योजसं अभिभूयतेनेनेत्यभिभूति करणेक्तिन् तादौचनितीतिगतेःप्रकृतिस्वरत्वम् अभिभूत्योजोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥ ७ ॥

अष्टमीमृचमाह—

जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः ।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥८॥

जघन्वान् । ऊम् इति । हरिऽभिः । संभृतक्रतो इति संभृतऽक्रतो । इन्द्र । वृत्रम् । मनुषे । गातुऽयन् । अपः । अयच्छथाः । बाह्वोः । वज्रम् । आयसम् । अधारयः । दिवि । आ । सूर्यम् । दृशे ॥ ८ ॥

हेसंभृतक्रतो सम्पादितकर्मन् संपादितप्रज्ञवाइन्द्र मनुषेजनायगातुयन् गातुंमार्गमिच्छन् वृत्रंलोकानामावरकमसुरं हरिभिरश्वैर्युक्तस्त्वंजघन्वानउ हतवानखलु तदनन्तरंअपोवृष्ट्युदका-

निमावर्तयइत्यध्याहारः बाह्वोस्त्वदीययोर्हस्तयोरायसमयोमयंवज्रमयच्छथाः अग्रहीः आकारः समुच्चयार्थः सूर्यंचदिविद्युलोकेदृशेदृष्टुंसर्वेषामस्माकंदर्शनायअधारयः स्थापयांचकृषे ॥ जघन्वान् हन्तेर्लिटःक्वसुः विभाषागमहनविदविशामितीडागमस्यविकल्पोकेरभावः । गातुयन् गातुमिच्छसि छन्दसिपरेच्छायामपीतिक्यच् नच्छन्दस्यपुत्रस्येतिदीर्घप्रतिषेधःक्यजन्ताच्छतरिअदुपदेशाल्लसार्वधातुकानुदात्तत्वेक्यचएवस्वरःशिष्यते । बाह्वोः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

बृहत्स्वश्चन्द्रममवद्यदुक्थ्य१मकृण्वतभियसारोहणंदिवः ।
यन्मानुषप्रधनाइन्द्रमूतयःस्वर्नृषाचोमरुतोमदन्ननु ॥९॥

बृहत् । स्वःऽचन्द्रम् । अमऽवत् । यत् । उक्थ्यम् । अकृण्वत । भियसा । रोहणम् । दिवः । यत् । मानुषऽप्रधनाः । इन्द्रम् । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् । अनु ॥ ९ ॥

बृहद्बृहत्सामस्तोतारोयजमानाः भियसावृत्रभयेनयद्यदोक्थ्यमुक्थार्हस्तोत्रयोग्यमकृण्वताकुर्वन् कीदृशंबृहत्साम स्वश्चन्द्रं स्वकीयेनचन्द्रेणाह्लादकेनतेजसायुक्तम् अमवद् अमतिशत्रून्रुजत्यनेनेत्यमोबलंतद्युक्तम् दिवःस्वर्गस्यरोहणं आरोहणहेतुभूतं एवंविधेनस्तोत्रेणद्याम्नीताइन्द्रमस्तोपतेत्यर्थः यद्यदामानुषप्रधनाः प्रकीर्णान्यस्मिन्धनानिभवन्तीतिनिरुक्त्युक्तत्वात्प्रधनमितिसङ्ग्रामनाम मनुष्यहितसंग्रामाः ऊतयःस्वः द्युलोकस्यरक्षितारोमरुतःनृषाचः प्राणरूपेणनृन्सेवमानाभूत्वा इन्द्रमपितेनैवरूपेणान्वमदन् आनुपूर्व्येणहर्षमापयन् तदानीं सइन्द्रः वृत्रवधंप्रतिउद्युक्तोभूवेतिशेषः ॥ स्वश्चन्द्रं स्वकीयंचन्द्रंयस्य ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रइति सुट्श्चुत्वेनशकारः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । भियसा भीशब्दस्यतृतीयैकवचनेछान्दसोसुगागमः तस्योदात्तत्वंच । नृषाचः षचसमवाये अयंसेवनार्थइतियास्कः । षहश्चेत्यत्रचशब्दस्यानुक्तसमुच्चयार्थत्वात्अस्मादपिण्विप्रत्ययः । अमदन् मदीहर्षे णिचि मदीहर्षग्लेपनयोरितिघटादिषुपाठात्मित्त्वेसति मितांह्रस्वइतिह्रस्वत्वम् टङि छन्दस्युभयथेतिशपआर्धधातुकत्वादनेरनिटीतिणिलोपः ॥ ९ ॥

---

१ नि० ९. ३३. । २ नि० २. २१. ।

दशमीमृचमाह—

द्यौश्चिद॒स्याम॑वाँ॒अहेः॑स्व॒नादयो॑यवीद्भि॒यसा॒वज्र॑इन्द्रते ।
वृ॒त्रस्य॒यद्ब॑द्बधा॒नस्य॑रोदसी॒मदे॑सु॒तस्य॒शव॑सा॒भि॑न॒च्छिर॑ः ॥१०॥१३॥

द्यौः । चि॒त् । अ॒स्य॒ । अम॑ऽवान् । अहेः॑ । स्व॒नात् । अयो॑यवीत् ।
भि॒यसा॑ । वज्रः॑ । इ॒न्द्र॒ । ते॒ । वृ॒त्रस्य॑ । यत् । ब॒द्ब॒धा॒नस्य॑ ।
रोद॑सी॒ इति॑ । मदे॑ । सु॒तस्य॑ । शव॑सा । अभि॑नत् । शिरः॑ ॥१०॥ १३॥

अमवान्बलवान्द्यौश्चिद्द्युलोकोपिअस्याहेर्वृत्रस्यस्वनाच्छब्दाद्भियसाभयेनअयोयवीद् अत्यर्थंपृथग्भूतआसीद्अकंपतेत्यर्थः हेइन्द्र तेतवसुतस्याभिषवादिभिःसंस्कृतस्यसोमस्यपाने-नमदेहर्षेजातेसतित्वदीयोवज्रःरोदसीद्यावापृथिव्यौबद्बधानस्यबाधनशीलस्यवृत्रस्यशिरःयद्यदा शवसाबलेनाभिनद् अच्छिनद् तदानींद्युलोकोभयराहित्येननिश्चलोऽभूदितिशेषः ॥ अयोयवीद् युमिश्रणामिश्रणयोरित्यस्माद्यङ्लुगन्ताल्लङि यङोवेत्यपृक्तप्रत्ययस्येडागमः अडागमउदात्तः । बद्बधानस्य बाधृविलोडने ताच्छील्यिकेचानशि बहुलंछन्दसीतिशपःश्लुः हलादिशेषाभा-वोधातोर्ह्रस्वत्वंचछान्दसत्वाद् चिदइत्यन्तोदात्तत्वम् ॥ १० ॥

॥ इतिप्रथमस्यचतुर्थेत्रयोदशोवर्गः ॥ १३ ॥

एकादशीमृचमाह—

यदिन्न्विन्द्रपृथि॒वीदश॑भुजि॒रहा॑नि॒विश्वा॑त॒तन॑न्तकृ॒ष्टयः॑ ।
अत्राह॑तेमघव॒न्विश्रु॑तं॒सहो॒द्यामनु॒शव॑सा॒ब॒र्हणा॑भुवत् ॥११॥

यत् । इ॒त् । नु । इ॒न्द्र॒ । पृ॒थि॒वी । दश॑ऽभुजिः । अहा॑नि । विश्वा॑ । त॒तन॑न्त ।
कृ॒ष्टयः॑ । अत्र॑ । अह॑ । ते॒ । म॒घ॒ऽव॒न् । विऽश्रु॑तम् । सहः॑ । द्याम् ।
अनु॑ । शव॑सा । ब॒र्हणा॑ । भु॒व॒त् ॥ ११ ॥

यदिन्नु यदाखलु पृथिवीदशभुजिःदशगुणिताभवेद् यद्विवाकृष्टयःसर्वेमनुष्याः विश्वा सर्वाण्यहानिततनन्तविस्तारयेयुः हेमघवन्धनवन्इन्द्र अत्राहअत्रैवपूर्वोक्तेष्वेषुदेशकालकर्तृकेषु तेत्वदीयंसहोवृत्रवधादिकारणंबलंविश्रुतंविख्यातंप्रसिद्धं शवसात्वदीयेनबलेनकृत्वाबर्हणावृत्रादे-

र्षधरूपाक्रियायामनुभुवत् अनुभवति यथाद्यौर्मंहतीतथात्वत्कृतंवृत्रादेर्हिंसनमपिमहदितिभावः॥ ततनन्त तनुविस्तारे स्वरितेत्त्वादात्मनेपदम् लिङर्थेलङिउमत्ययेमाम्रेव्यत्ययेनशप् छान्दसोद्विर्भावः यद्वा बहुलंछन्दसीत्युमत्ययस्यश्लौसतिपुनरपिव्यत्ययेनशप् शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणधातुस्वरःशिष्यते बहुलंछन्दस्यमाङ्योगेपीत्यडभावः यद्वृत्तयोगादनिघातः। विश्रुतं श्रुश्रवणे कर्मणि निष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। बर्हणा वर्हवल्हपरिभाषणार्हिंसादानेषु अस्मादौणादिकःक्युप्रत्ययः बवयोरभेदइतिवकारस्यबत्वम् प्रत्ययस्वरः निवर्हयतीतिवधकर्मसुपठितंच। भुवत् भूसत्तायां लेटचडागमः इतश्चलोपइतीकारलोपःबहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधेउवङादेशः॥ ११॥

द्वादशीमृचमाह–

त्वम॒स्य पा॒रे रज॑सो॒ व्यो॑मनः॒ स्वभू॑त्योजा॒ अव॑से धृषन्मनः।
च॒कृ॒षे भूमिं॑ प्रति॒मान॒मोज॑सो॒ऽपः स्वः॑ परि॒भूरे॒ष्या दिव॑म् ॥१२॥

त्वम्। अ॒स्य। पा॒रे। रज॑सः। वि॒ऽओ॑मनः। स्वभू॑तिऽओजाः। अव॑से। धृ॒ष॒त्ऽम॒नः। च॒कृ॒षे। भूमि॑म्। प्र॒ति॒ऽमान॑म्। ओज॑सः। अ॒पः। स्व॑१रिति॒ स्वः॑। प॒रि॒ऽभूः। ए॒षि॒। आ। दिव॑म्॥१२॥

हेधृषन्मनःशत्रूणांधर्षकमनोयुक्तेन्द्र अस्यअस्माभिःपरिदृश्यमानस्यव्योमनः व्याप्तस्यान्तरिक्षस्यरजसोलोकस्यपारेउपरिप्रदेशेवर्तमानः स्वभूत्योजाःस्वभूतबलस्त्वंअवसेअस्मद्रक्षणार्थंभूमिंभूलोकंचकृषेकृतवानसि किञ्च ओजसोबलवतांबलस्यप्रतिमानंप्रतिनिधिरभूः तथा स्वः सुष्ठुअरणीयंगन्तव्यं आपइत्यन्तरिक्षनाम अपोन्तरिक्षलोकंआदिवंद्युलोकंचपरिभूःपरिग्रहीता परिपूर्वोभवतिःपरिग्रहणार्थः एषिप्राप्नोषि॥ अस्य ऊडिदमितिविभक्तेरुदात्तत्वम्।व्योमनः अवतिर्गत्यर्थः अवरक्षणगतिकान्तीत्यभिधानात् विशेषेणगच्छतिव्याप्नोतीतिव्योम यद्वा वृष्टिप्रदानेनविशेषेणप्राणिनोवतिरक्षतीतिव्योम अन्येभ्योपिदृश्यन्तइतिमनिन् ज्वरत्वरेत्यादिनोपधावकारस्यचऊठ् गुणः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् यद्वा भावेमनिन् विविधमोमरक्षणंयस्मिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् यणादेशेउदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम्। स्वः सुपूर्वादर्तेरन्येभ्योपिदृश्यन्तइतिविच् अव्ययादाप्सुपइतिसुपोलुक् न्यक्स्वरौस्वरिताविति स्वरितत्वम्॥ १२॥

भूतान्येकाहे मरुत्वतीयशस्त्रे निविद्धानीयावसूक्तात्पुरा त्वं भुवः प्रतिमानमित्येषा शंसनीया तथैवा सूत्रयत्—शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्या इति ।

तामेतां सूक्तेत्रयोदशीमृचमाह—

त्वं भु॒वः प्र॑ति॒मानं॑ पृथि॒व्या ऋ॒ष्ववी॑रस्य बृह॒तः पति॑र्भूः ।
विश्व॒मा प्रा॑ अ॒न्तरि॑क्षं महि॒त्वा स॒त्यम॒द्धा नकि॑र॒न्यस्त्वावा॑न् ॥१३॥

त्वम् । भु॒वः । प्र॒ति॒ऽमान॑म् । पृ॒थि॒व्याः । ऋ॒ष्वऽवी॑रस्य । बृ॒ह॒तः । पति॑ः । भूः॒ । विश्व॑म् । आ । अ॒प्राः॒ । अ॒न्तरि॑क्षम् । म॒हि॒ऽत्वा । स॒त्यम् । अ॒द्धा । नकि॑ः । अ॒न्यः । त्वाऽवा॑न् ॥ १३ ॥

हे इन्द्र त्वं पृथिव्याः प्रथितायाः विस्तीर्णायाः भूमेः प्रतिमानं भुवः प्रतिनिधिर्भवसि यथा भूर्लोको महानचिन्त्यशक्तिः एवं त्वमपीत्यर्थः तथा ऋष्ववीरस्य वीरयन्ति विक्रान्ता भवन्तीति वीरा देवाः ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः तस्य बृहतो बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य पतिर्भूः पालयितासि तथा अन्तरिक्षं अन्तराक्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशं विश्वं सर्वमपि महित्वा महित्वेन सत्यमाप्राः निश्चयेन आ समन्तादपूरयः अतस्त्वावान् त्वत्सदृशोऽन्यः कश्चिन्नकिरस्ति नास्तीति यदेतत् तदद्धा सत्यमेव ॥ भुवः भवतेर्लोटि सिप्यडागमः उवङादेशः । पृथिव्याः उदात्तयणो हल्पूर्वादिति विभक्तिरुदात्ता । बृहतः बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वम् । भूः छान्दसे वर्तमाने लुङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः । अप्राः प्रा पूरणे आदादिकः लङ्यडागमः । महित्वा सुपां सुलुगिति तृतीयाया डादेशः त्वावान् वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानमिति सादृश्यार्थे वतुप् प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशः आ सर्वनाम्न इत्यात्वम् प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ॥ १३ ॥

चतुर्दशीमृचमाह—

न यस्य॒ द्यावा॑पृथि॒वी अनु॒ व्यचो॒ न सिन्ध॑वो॒ रज॑सो॒ अन्त॑मान॒शुः ।
नोत स्ववृ॑ष्टिं॒ मदे॑ अस्य॒ युध्य॑त॒ एको॑ अ॒न्यच्च॑कृ॒षे विश्व॑मानु॒षक् ॥ १४ ॥

न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । अनु॑ । व्यचः॑ । न । सिन्ध॑वः । रज॑सः । अन्त॑म् । आ॒न॒शुः॒ । न । उ॒त । स्वऽवृ॑ष्टिम् । मदे॑ । अ॒स्य॒ । युध्य॑तः । एकः॑ । अ॒न्यत् । च॒कृ॒षे । विश्व॑म् । आ॒नु॒षक् ॥ १४ ॥

यस्येन्द्रस्यव्यचोव्यापनंद्यावापृथिवीद्यावापृथिव्यौनान्वानशातेप्राप्नुमसमर्थेनभूवतुः तथा रजसोन्तरिक्षलोकस्यउपरिसिन्धवःस्यन्दनशीलाआपः यस्येन्द्रस्यतेजसोन्तमवसानंनानशुःनप्रा-पुःउतअपिच सोमपानेनमदेहर्षेसतिस्त्ववृष्टिंस्वीकृतवृष्टिंवृत्रादियुध्यतःयुद्धयमानस्यास्येन्द्रस्यव-लस्यान्तंवृत्रादयोनमापुःअतः हेइन्द्र एकस्त्वंअन्यत्स्वव्यतिरिक्तंविश्वंसर्वंभूतजातंआनुषक्अ-नुषक्तंचक्रुषे सकलमपिभूतजातंत्वदधीनमभूदितिभावः ॥ द्यावापृथिवीद्यौश्चपृथिवीच दिवो-द्यावेतिद्यावादेशआद्युदात्तोनिपातितः पृथिवीशब्दः पिद्गौरादिभ्यश्चेतिङीषन्तोन्तोदात्तः देवताद्व-न्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् अपृथिवीरुद्रपूपमन्थिष्वितिपर्युदासान्नोत्तरपदेनुदात्तादाविति निषे-धाभावः। व्यचः व्यचेःकुटादित्वमनसीतिवचनान्ङित्वाभावेसम्प्रसारणाभावः। आनशुः अ-श्नोतेर्व्यत्ययेन परस्मैपदम् अतआदेरित्यभ्यासस्यात्वम् अश्नोतेश्चेतिनुडागमः। आनुषक् अ-नुपूर्वात् षञ्जसंगेइत्यस्माद्क्विप्यनिदितामितिनलोपः अनोरकारस्यदीर्घश्छान्दसः॥ १४॥

पञ्चदशीमृचमाह—

आर्चन्नत्रमरुतःसस्मिन्नाजौविश्वेदेवासोअमदन्ननुत्वा।
वृत्रस्ययद्भृष्टिमतावधेननित्वमिन्द्रप्रत्यानंजघन्थ ॥१५॥१४॥

आर्चन्। अत्र। मरुतः। सस्मिन्। आजौ। विश्वे। देवासः।
अमदन्। अनु। त्वा। वृत्रस्य। यत्। भृष्टिऽमता। वधेन। नि।
त्वम्। इन्द्र। प्रति। आनम्। जघन्थ॥ १५॥ १४॥

हेइन्द्र त्वांमरुतःअत्रास्मिन्संग्रामेआर्चन् प्रहरभगवोजहिवीरयस्वेत्यनेनवचनेनापूजयन् स-स्मिन्तस्मिन् यद्वा सर्वस्मिन्नाजौसङ्ग्रामेविश्वेदेवासः तेसर्वेदानादिगुणयुक्तामरुतस्त्वात्वामन्वमद-न्अनुक्रमेणहर्षमापयन् यद्वा त्वदीयमदानन्तरंतेपिमदंमाप्ताः हेइन्द्र त्वंयद्यदाभृष्टिमता भ्रंशयति शत्रूनितिभृष्टिरश्रिः तद्वतावधेनहननसाधनेनवज्रेण अश्रिमत्त्वंचवज्रस्यब्राह्मणेसमाम्नातम्—व-ज्रोवाएषयद्यूपःसोष्टाश्रिःकर्तव्योष्टाश्रिर्वैवज्रइति। तेनवज्रेणवृत्रस्यानंप्रति आननंमुखंप्रति यद्वा श्वासहेतुमाणंप्रति निजघन्थनितरांप्राहार्षीः॥ आर्चन् अर्चपूजायांभौवादिकः आडागमउदात्तः। सस्मिन् तदोःसःसाविति विधीयमानंसत्वंव्यत्ययेनसप्तम्यामपिद्रष्टव्यम् यद्वा सर्वस्मिन्नित्यत्रवर्ण-लोपोद्रष्टव्यः। देवासः आज्जसेरसुगित्यसुक्। आनं आननं वर्णलोपश्छान्दसः यद्वा अनप्राणने अ-

१ ऐ० ब्रा० २. १.।

न्यतेनेनेत्यानंप्राणं करणेघञ् कर्षात्वतइत्यन्तोदात्तत्वम् । जघन्थ हनहिंसागत्योः थलि उपदेशेत्वतइतीट्प्रतिषेधः अभ्यासाच्चेत्यभ्यासादुत्तरस्यहकारस्यघत्वम् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यचतुर्थेचतुर्दशोवर्गः ॥ १४ ॥

न्यूष्वित्येकादशर्चंतृतीयंसूक्तं दशम्येकादश्यौत्रिष्टुभौ शिष्टानवजगत्यः सव्यऋषिः इन्द्रोदेवता तथाचानुक्रान्तम्—न्यूष्वेकादशान्त्येत्रिष्टुभाविति । अतिरात्रेप्रथमेपर्यायेब्राह्मणाच्छंसिनःशस्त्रेएतत्सूक्तम् तथाचसूत्र्यतेचार्यः—न्यूषुवाचमप्सुधूतस्यहरिवःपिबेहेतियाज्येति ।

तत्रप्रथमामृचमाह—

न्यू३षुवाचंप्रमहेभरामहेगिरइन्द्रायसदनेविवस्वतः ।
नूचिद्धिरत्नंससतामिवाविदन्नदुष्टुतिर्द्रविणोदेषुशस्यते ॥१॥

नि । ऊम् इति । सु । वाचम् । प्र । महे । भरामहे । गिरः ।
इन्द्राय । सदने । विवस्वतः । नु । चित् । हि । रत्नम् । ससताम्ऽइव ।
अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥ १ ॥

महेमहतेइन्द्रायसुवाचं शोभनांस्तुतिंनिप्रभरामहे नितरांप्रयुंज्महे उइतिपदपूरणः यतः विवस्वतः परिचरतोयजमानस्यसदनेयज्ञगृहेइन्द्रायगिरः स्तुतयःक्रियन्ते हियस्मात् सइन्द्रः नूचित्क्षिप्रमेवरत्नंरमणीयमसुराणांधनंअविदत् विन्दति तत्रदृष्टान्तः-ससतामिव यथास्वपतांपुरुषाणांधनंचोरःक्षिप्रंलभतेतद्वत् अतोस्मभ्यंधनंदातुंशक्तइतिभावः द्रविणोदेषुधनस्यदातृषुपुरुषेषु दुष्टुतिरसमीचीनास्तुतिर्नशस्यते नाभिधीयते अतःसुवाचंप्रभरामहइतिपूर्वेणसम्बन्धः ॥ न्यूषुइत्यस्यउदात्तस्वरितयोर्यणइतिस्वरितत्वम् अत्रउदात्तपरत्वात्संहितायांकम्प्यते इकःसुञीति दीर्घत्वम् सुञइतिषत्वम् ॥ महे महपूजायामित्यस्मात्क्विप्चेतिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् यद्वा महच्छब्दस्याच्छब्दलोपश्छान्दसः ।नूचित् ऋचितुनुघेत्यादिनादीर्घः । ससतामिव षस स्वप्ने अस्माच्छत्रन्तादभ्यस्तानामादिरित्यायुदात्तत्वम् नाभ्यस्ताच्छतुरितिनुमभावः इवेनविभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वंचेतिसमासः । अविदत् विदॢलाभे छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङि पुषादिद्युताद्यॢदितःपरस्मैपदेष्वितिच्लेरङादेशः अडागमउदात्तः हिचेतिनिघातप्रतिषेधः । द्रविणोदेषु द्रविणानिधनानिददातीतिद्रविणोदाः द्रुगतावित्यस्मात् द्रुदक्षिभ्यामिनन्नितीनन्प्रत्ययान्तोद्रविणशब्दः तस्मिन्कर्मण्युप-

पदेआतोनुपसर्गेकइतिकः पूर्वपदस्यसुगागमश्छान्दसः कदुत्तरपदप्रकृतिस्वरत्वम्। शस्यते शंसुस्तुतौ यकि अनिदितामितिनलोपः ॥ १ ॥

द्वितीयामृचमाह—

दुरोअश्वस्यदुरइन्द्रगोरसिदुरोयवस्यवसुनइनस्पतिः ।
शिक्षानरःप्रदिवोअकामकर्शनःसखासखिभ्यस्तमिदंगृणीमसि॥ २ ।

दुरः । अश्वस्य । दुरः । इन्द्र । गोः । असि । दुरः । यवस्य ।
वसुनः । इनः । पतिः । शिक्षाऽनरः । प्रऽदिवः । अकामऽकर्शनः ।
सखा । सखिऽभ्यः । तम् । इदम् । गृणीमसि ॥ २ ॥

हेइन्द्र त्वंअश्वस्यदुरोदातासि तथागोःपश्वादेर्दुरोदातासि तथायवस्ययवादेर्धान्यजातस्य दुरोदातासि वसुनःनिवासहेतोर्धनस्येनःस्वामीपतिःसर्वेषांपालयिता शिक्षानरःशिक्षतिर्दानकर्मा शिक्षायादानस्यनेतासि प्रदिवःपुराणः प्रगतादिवोदिवसायस्मिन्सतथोक्तःअकामकर्शनः कामान् कर्शयतिनाशयतीतिकामकर्शनःनकामकर्शनः अकामकर्शनःअव्ययपूर्वपदप्रकृतिस्वरत्वम्हविर्दत्तवतांयजमानानांकामानभिमतफलप्रदानेनपूरयतीत्यर्थः सखिभ्यःसमानख्यानेभ्यऋत्विग्भ्यः सखासखिवद्त्यन्तंप्रियः एवंभूतोयइन्द्रस्तंप्रतिइदंस्तोत्रलक्षणंवचः गृणीमसिब्रूमहे ॥ दुरः दुदाञ्दाने मन्दिवाशिमथिचतिचक्यंकिभ्यउरजितिविधीयमानउरच्प्रत्ययोबहुलवचनादस्मादपिभवति अतएवाकारलोपः।शिक्षानरः शिक्षविद्योपादाने गुरोश्चहलइत्यकारप्रत्ययः ततष्टाप् षष्ठीसमासः समासस्येत्यन्तोदात्तत्वम् । गृणीमसि गृशब्दे क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् इदन्तोमसिरितिमसेरिकारः॥ २ ॥

तृतीयामृचमाह—

शचीवइन्द्रपुरुकृद्द्युमत्तमतवेदिदमभितश्चेकितेवसु ।
अतःसंगृभ्याभिभूतआभरमात्वायतोजरितुःकाममूनयीः ॥३॥

शचीऽवः । इन्द्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदम् ।
अभितः । चेकिते । वसु । अतः । सम्ऽगृभ्य । अभिऽभूते । आ ।
भर । मा । त्वाऽयतः । जरितुः । कामम् । ऊनयीः ॥ ३ ॥

शचीवः शचीतिप्रज्ञानाम हेइन्द्र शचीवः प्रज्ञावन् पुरुकृत्प्रभूतस्यवृत्रवधादेःकर्तः द्युमत्तमअतिशयेनदीप्तिमन् अभितःसर्वत्रवर्तमानंवसुधनंयद्दस्ति तदिदंतवैवतवैवस्वभूतमितिचेकिते भृशमस्माभिर्ज्ञायते अतःकारणात्धनंसंगृभ्यसम्यक्गृहीत्वाअभिभूतेशत्रूणामभिभवितः आभरअस्मभ्यमाहरदेहीत्यर्थः त्वायतःत्वामात्मनइच्छतोजरितुःस्तोतुःकाममभिलाषंमाऊनयीः परिहीनंमाकार्षीःपूरयेत्यर्थः॥ शचीवः मतुवसोरुरितिरुत्वम् पाष्ठिकमामन्त्रितायुदात्तत्वम् इतरेष्वाष्टमिकंसर्वानुदात्तत्वम् नचामन्त्रितंपूर्वमविद्यमानवदितिअविद्यमानवत्त्वम् नामन्त्रितेसमानाधिकरणेइतिनिषेधात्। चेकिते कितज्ञाने अस्माद्यङन्ताद्वर्तमानेलिटिअमन्त्रेइतिनिषेधात् आम्प्रत्ययाभावेसतिलिटआर्धधातुकत्वादतोलोपयलोपौ। संगृभ्य आभरेत्युभयत्र हृग्रहोर्भश्छन्दसीतिभत्वम्। त्वायतः त्वामात्मनइच्छति सुपआत्मनः क्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः छान्दसमात्वं क्यजन्ताल्लटःशतृ तस्यअदुपदेशाल्लसार्वधातुकस्वरेणानुदात्तस्यएकादेशस्वरेणोदात्तत्वम् एकादेशस्वरोन्तरङ्गःसिद्धोभवतीतिवक्तव्यमितिवचनात् तस्यसिद्धत्वेसति शतुरनुमइत्यजादिविभक्तेरुदात्तत्वम्। कामं कमुकान्तौ इत्यस्माद्भावेघञ् कर्षात्वतइत्यन्तोदात्तत्वेप्राप्तेवृषादिपुपाठादाद्युदात्तत्वम्। ऊनयीः ऊनपरिहाणे चुरादिःलुङि णिश्रिद्रुस्रुभ्यइतिचङ्श्च्लेरादेशस्य नोनयतिध्वनयतीत्यादिना प्रतिषेधः ह्म्यन्तक्षणेतिसिचिवृद्धिप्रतिषेधः॥ ३॥

चतुर्थीमृचमाह—

एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि॥४॥

एभिः। द्युऽभिः। सुऽमनाः। एभिः। इन्दुऽभिः। निःऽरुन्धानः।
अमतिम्। गोभिः। अश्विना। इन्द्रेण। दस्युम्। दरयन्तः।
इन्दुऽभिः। युतऽद्वेषसः। सम्। इषा। रभेमहि॥ ४॥

हेइन्द्र एभिरस्माभिर्दत्तैर्द्युभिर्दीप्तैश्चरुपुरोडाशादिभिःएभिरिन्दुभिः पुरोवर्तिभिस्तुभ्यंदत्तैःसोमैश्चप्रीतस्त्वंअस्माकंअमतिंदारिद्र्यंगोभिस्त्वयादत्तैःपशुभिरश्विनाश्वयुक्तेनधनेनचनिरुन्धानोनिवर्तयन् सुमनाःशोभनमनाभव वयमिन्दुभिरस्माभिर्दत्तैःसोमैःप्रीतेनेन्द्रेणदस्युंउपक्षपयितारंशत्रुंदरयन्तोहिंसन्तःअतएवयुतद्वेषसः पृथग्भूतशत्रुकाभूत्वाइषाइन्द्रदत्तेनान्नेनसंरभेमहिसंरब्धाभवे-

मसङ्गच्छेमहीत्यर्थः ॥ सुमनाः शोभनंमनोयस्य सोर्मनसीअलोमोपसीइत्युत्तरपदाद्युदात्तत्वम् । निरुन्धानः रुधिरूआवरणे स्वरितेत्त्वादात्मनेपदं श्नसोरल्लोपइत्यकारलोपः चितइत्यन्तोदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । अमतिं मन्तव्यामतिःऐश्वर्यं न मतिःअमतिः अव्ययपूर्वपदप्रकृतिस्वरत्वम् नलोकाव्ययेतिषष्ठीप्रतिषेधः । अश्विना अश्वोस्यास्तीत्यश्विधनम् मत्वर्थीयइनिः ॥४॥

पञ्चमीमृचमाह—

समि॑न्द्र रा॒या समि॒षा र॑भेमहि॒ सं वाजे॑भिः पुरु॒श्च॒न्द्रैर॒भिद्यु॑भिः ।
सं दे॒व्या प्रम॑त्या वी॒रशु॑ष्मया॒ गोअ॑ग्रया॒श्वा॑वत्या रभेमहि ॥५॥१५॥

सम् । इ॒न्द्र॒ । रा॒या । सम् । इ॒षा । र॒भे॒म॒हि॒ । सम् । वाजे॑भिः ।
पु॒रु॒ऽच॒न्द्रैः । अ॒भिद्यु॑ऽभिः । सम् । दे॒व्या । प्रऽम॑त्या । वी॒रऽशु॑ष्मया ।
गोऽअ॑ग्रया । अश्व॑ऽवत्या । र॒भे॒म॒हि॒ ॥ ५ ॥ १५ ॥

हेइन्द्र रायाधनेनवयंसंरभेमहिसंगच्छेमहि तथाइषाअन्नेनसंरभेमहि तथावाजेभिर्बलैःसंरभेमहि कीदृशैर्वाजैःपुरुश्चन्द्रैःपुरूणांबहूनामाह्लादकैः अभिद्युभिःअभितोदीप्यमानैःकिञ्च देव्या द्योतमानयाप्रमत्यात्वदीययाप्रकृष्टबुद्ध्यासंरभेमहि कीदृश्यावीरशुष्मया वीरंविशेषेणशत्रूणांक्षेपणसमर्थंशुष्मंबलंयस्याःसातथोक्ता गोअग्रयास्तोतृभ्योदानार्थमग्रे प्रमुखतएवगावोयस्याःसातथोक्ता अश्वावत्या अश्वैरुपेतया ॥ राया ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । पुरुश्चन्द्रैः ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रेइतिसुट् श्रुत्वेनशकारः समासस्वरः । अभिद्युभिः अभिगताद्यौर्दीप्तिर्येषां अत्रदिवुशब्दोदीप्तिंलक्षयतिअव्ययपूर्वपदप्रकृतिस्वरत्वम् । देव्या उदात्तयणइतिविभक्तेरुदात्तत्वम् । प्रमत्या तादौचनितीतिगतेःप्रकृतिस्वरत्वम् उत्तरयोःबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सर्वत्रविभाषागोरितिगोअग्रयेत्यत्रप्रकृतिभावः । अश्वावत्या मन्त्रेसोमाश्वेन्द्रियेतिमतुपिदीर्घत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेपञ्चदशोवर्गः ॥ १५ ॥

षष्ठीमृचमाह—

ते त्वा॒ मदा॑ अमद॒न्तानि॒ वृष्ण्या॒ ते सोमा॑सो वृत्र॒हत्ये॑षु सत्पते ।
यत्का॒रवे॒ दश॑ वृ॒त्राण्य॑प्र॒ति ब॒र्हिष्म॑ते॒ नि स॒हस्रा॑णि ब॒र्हयः॑ ॥६॥

ते । त्वा । मदाः । अमदन् । तानि । वृष्ण्या । ते । सोमासः ।
वृत्रऽहत्येषु । सत्ऽपते । यत् । कारवे । दश । वृत्राणि । अप्रति ।
बर्हिष्मते । नि । सहस्राणि । बर्हयः ॥ ६ ॥

हेसत्पतेसतांपालयितरिन्द्र वृत्रहत्येषुवृत्रहननेषुनिमित्तभूतेषुसत्सुतेपूर्वोक्तामदाः मादकामरुतःत्वात्वाममदन्अमदयन् हर्षमापयन् तानिपूर्वोक्तानिवृष्ण्यावृष्णःसेचनसमर्थस्यतवसम्बन्धीनिचरुपुरोडाशादीनिहवींषित्वाममदन् तेसोमासः प्रसिद्धाः सोमाश्चत्वाममदन् यद्यदा कारवेस्तुतिकर्त्रेबर्हिष्मतेयज्ञवतेयजमानाय दशसहस्राणिअपरिमितानिवृत्राण्यावरकाणिउपद्रवजातानिअप्रति शत्रुभिरप्रतिगतस्त्वंनिबर्हयः न्यवधीःतदानीमितिपूर्वेणसम्बन्धः ॥ वृष्ण्या शेश्छन्दसिबहुलमितिशेर्लोपः । बर्हयः बर्हयतिर्हिंसाकर्मा लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः शपःपित्त्वादनुदात्तत्वे णिचएवस्वरःशिष्यते यद्वृत्तयोगादनिघातः ॥ ६ ॥

सप्तमीमृचमाह–

युधायुधमुपघेदेषिधृष्णुयापुरापुरंसमिदंहंस्योजसा ।
नम्यायदिन्द्रसख्यापरावतिनिबर्हयोनमुचिंनाममायिनम् ॥७॥

युधा । युधम् । उप । घ । इत् । एषि । धृष्णुऽया । पुरा । पुरम् ।
सम् । इदम् । हंसि । ओजसा । नम्या । यत् । इन्द्र । सख्या ।
पराऽवति । निऽबर्हयः । नमुचिम् । नाम । मायिनम् ॥ ७ ॥

हेइन्द्र धृष्णुयाशत्रूणांधर्षकस्त्वं युधायुद्धेनसम्बद्धंयुधंयुद्धंउपघेदेषिउपैवगच्छसि सर्वदायुद्धशीलोभवसीत्यर्थः घेतिपदपूरणः शत्रूणामसुराणांपुरापुरेणनगरेणसहइदंपुरोवर्तिपुरंशत्रुनगरंओजसाबलेनसंहंसिसम्यक्विनाशयसि शत्रूणांपुराण्यभैत्सीरित्यर्थः हेइन्द्र त्वंनम्याशत्रुणांनमनशीलेनसख्यासहायभूतेनवज्रेणपरावतिदूरदेशेनमुचिंनाम अनयासंज्ञयाप्रसिद्धंमायिनंमायाविनमसुरंयद्यस्मान्निबर्हयः नितरामहिंसीः अतस्त्वमेवंस्तूयसइत्यर्थः ॥ युधा युधसम्प्रहारे संपदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । एषि इण्गतौ अदादित्वाच्छपोलुक् । धृष्णुया ञिधृषाप्रागल्भ्ये त्रसिगृधिधृषिक्षिपेःक्नुरितिक्नुप्रत्ययः कित्त्वाद्गुणाभावः सुपांसुलुगितिसोयाजादेशः चितइत्यन्तोदात्तत्वम् । पुरा पॄपालनपूरणयोः पूरयतिराज्ञामभिमतानीति क्विप्चेतिक्विप्

उदोष्ठ्यपूर्वस्येत्युत्वम् सावेकाचइतिविभक्तिरुदात्ता । हंसि हन्तेर्लटिसिपिअदादित्वाच्छपोलुकिनश्चापदान्तस्यझलीत्यनुस्वारः । नम्या णमप्रह्वत्वे औणादिकइन्प्रत्ययः सुपांसुलुगितितृतीयायाडयादेशः टिलोपः । सख्या शेषोघ्यसखीतिघिसंज्ञाप्रतिषेधान्नाभावाभावेयणादेशः । नमुचिं इन्द्रेणसहयुद्धंनमुञ्चतीतिनमुचिः औणादिकःकिःप्रत्ययः नभ्राण्नपादित्यादिनानञःप्रकृतिभावः नञ्सूनगतिर्नचकारकमितिकृदुत्तरपदप्रकृतिस्वरत्वाभावेव्ययपूर्वपदप्रकृतिस्वरत्वम् । मायिनं मायाशब्दस्यव्रीह्यादिपुपाठात् मत्वर्थीयइनिः ॥ ७ ॥

अष्टमीमृचमाह—

त्वंकरंजमुतपर्णयंवधीस्तेजिष्ठयातिथिग्वस्यंवर्तनी ।
त्वंशतावंगृदस्याभिनत्पुरोनानुदःपरिपूताऋजिश्वना ॥८॥

त्वम् । करंजम् । उत । पर्णयम् । वधीः । तेजिष्ठया । अतिथिऽग्वस्य ।
वर्तनी । त्वम् । शता । वंगृदस्य । अभिनत् । पुरः । अननुऽदः ।
परिऽसूताः । ऋजिश्वना ॥ ८ ॥

हेइन्द्र त्वंकरंजमेतत्संज्ञकमसुरं उतअपिचपर्णयंएतन्नामानमसुरंच अतिथिग्वस्यएतत्संज्ञस्यराज्ञःप्रयोजनाय तेजिष्ठया अतिशयेनतेजस्विन्यावर्तनीवर्तन्याशत्रुप्रेरणकुशलयाशक्त्या वधीः हतवानसि तथाअननुदः अनुपश्चात् द्यतिखण्डयतीत्यनुदोनुचरः तादृशानुचररहितः एकएवत्वं ऋजिश्वना एतत्संज्ञेन राज्ञापरिभूताःपरितोवष्टब्धाः शताशतानिशतसंख्याकाः वङ्गृदस्यएतत्संज्ञस्यासुरस्यपुरः पुराणि नगराणि अभिनत् बिभिदिषे ॥ वधीः हन्तेर्लुङि सिपि लुङिचेतिवधादेशः तस्यादन्तत्वाद्वृद्ध्यभावः अतएवानेकाच्त्वादिट्प्रतिषेधाभावः इटईटीतिसिचोलोपः । तेजिष्ठया तेजस्शब्दादस्मायामेधेतिमत्वर्थीयोविनिः तस्मादातिशायनिकेइष्ठनिविन्मतोर्लुगितिविनोलुक् टेरितिटिलोपः नित्वादाद्युदात्तत्वम । वर्तनी वृत्यन्तेप्रेर्यन्तेऽनयेतिवर्तनी करणेल्युट् टित्वान्ङीप् सुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घत्वम् व्यत्ययेनान्तोदात्तत्वम् । अभिनत् भिदिर्विदारणे लङिसिपिरुधादित्वात्श्नम इतश्चेतीकारलोपः हल्ङ्याब्भ्यइतिसकारलोपः । अननुदः दोअवखण्डने आदेचइत्यात्वम् आतश्चोपसर्गेइतिकप्रत्ययः नास्त्यनुदोस्येतिबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् संहितायांदीर्घश्छान्दसः । परिपूताः पूप्रेरणे कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥

त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा ।
उपऽजग्मुषः । षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि ।
चक्रेण । रथ्या । दुःऽपदा । अवृणक् ॥ ९ ॥

हेइन्द्र श्रुतोविश्रुतःप्रख्यातस्त्वं द्विर्दश विंशतिसंख्याकानअबन्धुना बन्धुरहितेनसहायरहितेन सुश्रवसाएतत्संज्ञकेनराज्ञायुद्धार्थमुपजग्मुषः उपगतवतः एतानेवंविधान्जनराज्ञोजनपदानामधिपतीन् षष्टिमित्यादिनातेषांराज्ञामनुचरसंख्योच्यते षष्टिंसहस्रा सहस्राणांषष्टिं नवतिंनव नवसंख्योत्तरांनवतिं तान्राज्ञइदृक्संख्याकान् अनुचरांश्चरथ्यारथसम्बन्धिनादुष्पदादुष्पपद्नेनशत्रुभिः प्राप्तुमशक्येनेत्यर्थः ईदृशेनचक्रेणन्यवृणक्न्यवर्जयः त्वांस्तुतवतःसुश्रवसोजयार्थं त्वमागत्यतदीयान्शत्रूनजैषीरित्यर्थः ॥ जनराज्ञः समासान्तविधेरनित्यत्वाट्टच्प्रत्ययाभावः राजन्शब्दोराजृदीप्तावित्यस्मात्कनिन्प्रत्ययान्तआद्युदात्तः कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते । अबन्धुना नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुश्रवसा शोभनंश्रवोन्नंयस्य आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । उपजग्मुषः गमेर्लिटःक्वसुः शसिभसंज्ञायांवसोःसम्प्रसारणमितिसम्प्रसारणम् परपूर्वत्वम् गमहनेत्यादिनोपधालोपःशासिवसिघसीनांचेतिषत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेनक्वसोरेवस्वरःशिष्यते । रथ्या रथस्येदंरथ्यं रथाद्यदितियत् यतोनावइत्याद्युदात्तत्वम् सुपांसुलुगितिविभक्तेराकारः । दुष्पदा पदगतौ ईषद्दुःसुष्विति खल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् पूर्ववद्विभक्तेराकारः । अवृणक् वृजीवर्जने रौधादिकः लङ्मध्यमैकवचनेहल्ङ्याब्भ्यइतिसिचोलोपः चोःकुरितिकुत्वम् ॥ ९ ॥

दशमीमृचमाह—

त्वमाविथ सुश्रवसं तवोतिभिस्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनायः ॥१०॥

त्वम् । आविथ । सुऽश्रवसम् । तव । ऊतिऽभिः । तव । त्रामऽभिः ।
इन्द्र । तूर्वयाणम् । त्वम् । अस्मै । कुत्सम् । अतिथिऽग्वम् । आयुम् ।
महे । राज्ञे । यूने । अरन्धनायः ॥१०॥

हेइन्द्र त्वंतवोतिभिः त्वदीयैःपालनैः सुश्रवसंपूर्वोक्तंराजानमाविथररक्षिथ तथातूर्वयाणमेतन्नामानंराजानं तवत्रामभिस्त्वदीयैस्त्रायकैःपालकैर्बलैराविथेतिशेषः किञ्च त्वंमहेमहतेयूने तरुणायास्मैसुश्रवसेराज्ञेकुत्सादींस्त्रीन्राज्ञःअरन्धनायःवशमनयः रध्यतिर्वशगमनइतियास्कः॥ त्रामभिः त्रैङ्पालने आदेचइत्यात्वम् आतोमनिन्क्वनिब्वनिपश्चेति मनिन् नित्त्वादाद्युदात्तत्वम् ।अरन्धनायः रन्धनंवशीकरणंकरोति रन्धनयति तत्करोतीतिणिच् इष्ठवण्णौप्रातिपदिकस्येतीष्ठवद्भावाट्टिलोपः लङिसिपिदीर्घश्छान्दसः॥१०॥

एकादशीमृचमाह—

यउद्दचीन्द्रदेवगोपाःसखायस्तेशिवतमाअसाम।
त्वांस्तोषामत्वयासुवीराद्राघीयआयुःप्रतरंदधानाः॥११॥१६॥

ये। उत्ऽऋचि। इन्द्र। देवऽगोपाः। सखायः। ते। शिवऽतमाः। असाम। त्वाम्। स्तोषाम। त्वया। सुऽवीराः। द्राघीयः। आयुः। प्रऽतरम्। दधानाः॥ ११॥ १६॥

हेइन्द्र येवयं उदृचिउदर्केयज्ञसमाप्तौवर्तमानाःदेवगोपाःदेवैःपालिताःतेतवसखायःसखिवत्प्रियाः अतएवशिवतमाअसाम अतिशयेनकल्याणाअभूम तेवयंयज्ञसमाप्त्युत्तरकालमपित्वां स्तोषामस्तवाम अस्माभिःस्तुतेनत्वयासुवीराः शोभनपुत्रवन्तःसन्तःद्राघीयोतिशयेनदीर्घमायुर्जीवनंप्रकर्षंप्रकृष्टतरंयथाभवतितथादधानाःधारयन्तोभूयास्म॥ देवगोपाः देवागोपायेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। असाम असभुवि लुङर्थेलोटिआडुत्तमस्यपिच्चेतिपिद्वद्भावात्तिचङित्त्वेतिङित्त्वाभावे श्नसोरल्लोपइत्यकारलोपाभावः पित्त्वादेवतिङोनुदात्तत्वम् धातुस्वरःशिष्यते। स्तोषाम स्तौतेर्लेटि सिब्बहुलंलेटीतिबहुलग्रहणाल्लोट्यपिसिप् तस्यपित्त्वाद्गुणः। सुवीराः वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्। द्राघीयः दीर्घशब्दादीयसुनिप्रियस्थिरेत्यादिनाद्राघादेशः नित्त्वादाद्युदात्तत्वम्। प्रतरम् प्रशब्दात्तरपि अमुचच्छन्दसीत्यद्रव्यप्रकर्षेअमुप्रत्ययः प्रत्ययस्वरेणान्तोदात्तत्वम्। दधानाः दधातेः शानचि अभ्यस्तानामादिरित्याद्युदात्तत्वम्॥ ११॥

॥ इतिप्रथमस्यचतुर्थेषोडशोवर्गः॥ १६॥

नि० ६. ३२.१

मानइत्येकादशर्चंचतुर्थसूक्तम् पञ्चषष्टमीनवम्येकादश्यस्त्रिष्टुभः शिष्टाःसप्तजगत्यःसव्यऋषिःइन्द्रोदेवता तथाचानुक्रान्तम्–मानोन्त्यास्त्रिष्टुप्पञ्चषष्टमीनवमीचेति अतिरात्रेप्रथमपर्याये-च्छावाकशस्त्रेइदंसूक्तं तथाचसूत्रितम्–मानोअस्मिन्मघवन्निन्द्रपिबतुभ्यंसुतोमदायेतियाज्येति।

तत्रप्रथमामृचमाह–

मानो॑अ॒स्मिन्म॑घवन्पृ॒त्स्वंह॑सि॒न॒हिते॒अन्तः॒शव॑सः॒परी॒णशे॑। अक्र॑न्दयोन॒द्यो॒३॑रोरु॑वद्व॒नां॒क॒थान॒क्षो॒णीर्भि॒यसा॒सम॑ारत ॥१॥

मा। नः॒। अ॒स्मिन्। म॒घ॒ऽव॒न्। पृ॒त्ऽसु। अंह॑सि। न॒हि। ते॒। अन्तः॑। शव॑सः। प॒रि॒ऽन॒शे॑। अक्र॑न्दयः। न॒द्यः॑। रोरु॑वत्। वना॑। क॒था। न। क्षो॒णीः। भि॒यसा॑। सम्। आ॒र॒त॒ ॥ १ ॥

हेमघवन् धनवन्निन्द्र अस्मिन्परिदृश्यमानेअंहसिपापेपृत्सुपृतनासुपापफलभूतेषुसङ्ग्रामेषु नोस्मान्मामक्षेप्सीरितिशेषः यस्मात्तेतवशवसोबलस्यान्तोवसानं परीणशेपरितोव्याप्तुंनहिशक्यतेसर्वोपिजनस्त्वदीयंबलंअतिक्रमितुंनशक्तोवीत्यर्थः तस्मात्त्वंअन्तरिक्षेवर्तमानोरोरुवदत्यर्थशब्दंकुर्वन्नद्योनदीः वना तत्सम्बन्धीन्युदकानिचाक्रन्दयः शब्दयसि क्षोणीः क्षोण्यः क्षोणीतिपृथिवीनाम तदुपलक्षितालयोलोकाःभियसात्वद्भयेनकथाकथंनसमारतसङ्गच्छन्ते त्वदीयंबलमवलोक्यत्रयोपिलोकाबिभ्यतीतिभावः॥ पृत्सु पद्दन्नित्यादिषुपांसुपृतनाश्रुपसंख्यानमितिपृतनाशब्दस्यपृदभावः। परीणशे नशतिर्व्याप्तिकर्मा कृत्यार्थेतवैकेनितिकेन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् निपातस्यचेतिपूर्वपदस्यदीर्घत्वम्। नद्यः द्वितीयार्थेप्रथमा। रोरुवत् रुशब्दे यङ्लुगन्ताल्लटःशतृ अदादिवच्चेतिवचनाच्छपोलुक् शतुर्ङित्त्वाद्गुणाभावेउवङादेशः नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। कथा थाहेतौचच्छन्दसीतिकिम्शब्दात्प्रकारवचनेथाप्रत्ययः तस्यविभक्तिसंज्ञायां किमःकइतिकादेशः। आरत ऋगतौ समोगम्यृच्छीत्यात्मनेपदं छान्दसेवर्तमानेलङ्अदादित्वाच्छपोलुक् अरत्यादादेशः अडागमोवृद्धिश्च॥ १॥

द्वितीयामृचमाह–

अर्चा॑श॒क्राय॑शा॒किने॒शची॑वते॒शृ॒ण्वन्त॒मिन्द्रं॑म॒हय॑न्न॒भिष्टु॑हि। योधृ॒ष्णुना॒शव॑सा॒रोद॑सीउ॒भेवृषा॑वृष॒त्वावृ॑ष॒भोन्यृ॒ञ्जते॑ ॥ २ ॥

अर्च । शक्राय॑ । शाकिने॑ । शची॑ऽवते । शृण्वन्त॑म् । इन्द्र॑म् । महय॑न् । अभि । स्तुहि । यः । धृष्णुना॑ । शव॑सा । रोद॑सी इति॑ । उभे इति॑ । वृषा॑ । वृषऽत्वा । वृषभः । निऽऋञ्जते ॥ २ ॥

हे अध्वर्यो शाकिने शक्तियुक्ताय शचीवते मज्ञावते शक्रायेन्द्रायार्च एवंविधमिन्द्रं पूजय किंच स्तुतीः शृण्वन्तं समीचीनेयं स्तुतिरिति जानन्तं तमिन्द्रं महयन् पूजयन् अभिष्टुहि आभिमुख्येन तस्य स्तोत्रं कुरु यइन्द्रः धृष्णुना शत्रूणां धर्षकेण शवसा बलेन उभे रोदसी द्यावापृथिव्यौ न्यृञ्जते नितरां प्रसाधयति ऋञ्जतिः प्रसाधनकर्मेति यास्कः । सइन्द्रः वृषा सेचनसमर्थः वृषत्वा वृषत्वेन अनेनैव सेचनसामर्थ्येन वृषभो वर्षिता कामानां यद्वा वृष्ट्युदकानाम् ॥ अर्च शपः पित्त्वादनुदात्तत्वे धातुस्वरः द्व्यचोतस्तिङ इति दीर्घत्वम् । शाकिने शक्तिः शाकः शकॢ शक्तौ भावे घञ् मत्वर्थीय इनिः क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थी । अभिष्टुहि स्तौतेरदादित्वाच्छपो लुक् उपसर्गात्सुनोती-तिषत्वम् ष्टुनाष्टुरिति ष्टुत्वम् । वृषत्वा सुपां सुलुगिति विभक्तेराकारः । न्यृञ्जते ऋजिभृजीभर्जने इ-दित्त्वान्नुम् शपि प्राप्ते व्यत्ययेन शः ॥ २ ॥

तृतीयामृचमाह—

अर्चा॑ दि॒वे बृ॑ह॒ते शू॒ष्यं१॒॑ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑ ।
बृ॒हच्छ्र॑वा॒ असु॑रो ब॒र्हणा॑ कृ॒तः पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः ॥ ३ ॥

अर्च । दि॒वे । बृ॒ह॒ते । शू॒ष्य॑म् । वचः॑ । स्वऽक्ष॑त्रम् । यस्य॑ । धृ॒ष॒तः । धृ॒षत् । मनः॑ । बृ॒हत्ऽश्र॑वाः । असु॑रः । ब॒र्हणा॑ । कृ॒तः । पु॒रः । हरि॑ऽभ्याम् । । वृ॒ष॒भः । रथः॑ । हि । सः ॥ ३ ॥

हे स्तोतः दिवे दीप्ताय बृहते महते इन्द्राय शूष्यं शूषमिति सुखनाम तत्र साधु शूष्यं तादृशं स्तुतिलक्षणं वचः अर्च उच्चारय यस्येन्द्रस्य धृषतः शत्रून् धर्षयतः स्वक्षत्रं स्वभूतबलवत् मनो धृषत् धर्षं भवति हि षः सहि सखल्विन्द्रः बृहच्छ्रवाः प्रभूतयशाः असुरः शत्रूणां निरसिता यद्वा असुः प्राणो बलं वान्द्वान् रोमत्वर्थीयः अथवा असवः प्राणाः तेनचापोलक्ष्यन्ते प्राणा वा आप इति श्रुतेः । तान् राति ददातीत्यसुरः बर्हणा शत्रूणां निबर्हयिता हरिभ्यामश्वाभ्यां पुरस्कृतः पूजितः वृषभः कामानां वर्षिता रथो रंहणशीलः ॥ शूष्यं तत्र साधुरिति यत् सर्वे विधयश्छन्दसि विकल्प्यन्त इति यतो नावइत्याद्युदा-

१ नि० ६. २१. । २ तै० ब्रा० ३. २. ५. ।

सत्वाभावेतित्स्वरितइतिस्वरितत्वम्।धृषतः निधृषाप्रागल्भ्ये व्यत्ययेनशः शतुरनुमइतिविभक्तेरुदात्तत्वम्। बृहच्छ्रवाः बृहच्छ्रवोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। असुरः असुक्षेपणे असेरुरन्नित्युरन्प्रत्ययः नित्त्वादाद्युदात्तत्वम्। वर्हणा सुपांसुलुगितिविभक्तेराकारः। पुरः पूर्वाधरेत्यादिनाअसिप्रत्ययान्तोन्त्योदात्तः॥३॥

चतुर्थीमृचमाह—

त्वंदि॒वोबृ॑ह॒तःसानु॑कोपयो॒वत्मना॑धृष॒ताशंब॑रंभिनत्।
यन्मा॒यिनो॑व्र॒न्दिनो॑म॒न्दिना॑धृ॒षच्छि॒तांगभ॑स्तिम॒शनिं॑पृत॒न्यसि॑॥४॥

त्वम्। दि॒वः। बृ॒ह॒तः। सानु॑। को॒पयः॑। अव॑। त्मना॑। धृ॒ष॒ता। शम्ब॑रम्। भि॒नत्। यत्। मा॒यिनः॑। व्र॒न्दिनः॑। म॒न्दिना॑। धृ॒षत्। शि॒ताम्। गभ॑स्तिम्। अ॒शनि॑म्। पृ॒त॒न्यसि॑॥ ४॥

हेइन्द्र त्वंबृहतोमहतोदिवोद्युलोकस्यसानुसमुच्छ्रितंउपरिप्रदेशंकोपयः अकम्पयः धृषताशत्रूणांधर्षयित्रा त्मनाआत्मनास्वयमेवशंबरंएतत्संज्ञमसुरंअवाभिनत् अवधीः यद्यदान्दिनः शत्रूञ्जेतुंदृढभावंप्राप्तान् यद्वा वृन्दंसमूहः असुरसमूहवतोमायिनोमायाविनोसुरान्मन्दिनाहृष्टेन धृषत् धृषताप्रागल्भ्यंप्राप्नुवतामनसायुक्तस्त्वंशितांतीक्ष्णीकृतांगभस्तिंहस्तेनगृहीतां यद्वा गभस्तिरितिरश्मिनाम तद्वतींअशनिंवज्रंपृतन्यसितानसुरान्जेतुंपृतनारूपेणेच्छसितान्प्रतिप्रेरयसीत्यर्थः तदानींबृहतोदिवः सानुकोपयइतिपूर्वेणान्वयः॥ कोपयः कुपकोपे ण्यन्ताल्लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। त्मना मन्त्रेष्वाङ्यादेरात्मनइत्याकारलोपः। धृषत् सुपांसुलुगितितृतीयायालुक्। शितां शोतनूकरणे निष्ठायां शाच्छोरन्यतरस्यामितीकारादेशः। पृतन्यसि पृतनाशब्दात्सुपआत्मनःक्यच् कव्यध्वरपृतनस्येत्यन्त्यलोपः प्रत्ययस्वरः॥४॥

पञ्चमीमृचमाह—

निय॒द्वृ॒णक्षि॑श्वस॒नस्य॑मू॒र्धनि॒शुष्ण॑स्यचिद्व्र॒न्दिनो॒रोरु॑व॒द्वना॑।
प्रा॒चीने॑नम॒न॑साब॒र्हणा॑वता॒यद॒द्याचि॑त्कृ॒णवः॒कस्त्वा॒परि॑॥५॥१७॥

नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् ।
व्रन्दिनः । रोरुवत् । वना । प्राचीनेन । मनसा । वर्हणाऽवता ।
यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥ ५ ॥ १७॥

हेइन्द्र त्वंरोरुवत्वमेघैरत्यर्थंशब्दयन् श्वसनस्य अन्तरिक्षेश्वसितीतिश्वसनोवायुः तस्यव्रन्दिनःस्वकिरणैराम्रफलादीन्मृदूभावंमापयतः शुष्णस्यचिवरसानांशोषयितुरादित्यस्यापिमूर्धन्युपरिमदेशेवनावनान्युदकानियद्यस्मान्निवृणक्षिआवर्जयसिमापयसीत्यर्थः वायुनासूर्यकिरणैश्चवृष्ट्याआपःसूर्यस्योपरिपुनरवस्थाप्यन्ते तदेवावस्थापनमिन्द्रःकरोतीत्युपचर्यते प्राचीनेनमकर्षेण गन्त्राअपराङ्मुखेनेत्यर्थः वर्हणावता निवर्हयतीतिवधकर्मसुपाठाव वर्हणाशत्रूणांहिंसा तद्वता एवंभूतेनमनसायुक्तस्त्वंयद्यस्मात्अद्याचित्अद्यापिकृणवःघर्मकालेसूर्यस्योपरिभौमात्रसानवस्थापयसि वर्षासुचवर्षयसि यस्मादेतत्कुरुषेतस्मात्कारणात्त्वात्वांपर्युपरिकोवर्ततेतेनकोपीत्यर्थः अतस्त्वमेवसर्वाधिकइतिभावः ॥ वृणक्षि वृजीवर्जने रौधादिकः शपःपित्त्वादनुदात्तत्वेविकरणस्वरः यद्वृत्तयोगादनिघातः । प्राचीनेन मपूर्वादञ्चतेःऋत्विगित्यादिनाक्विनि अनिदितामितिनलोपः विभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखः खस्येनादेशः अचइत्यकारलोपेचावितिदीर्घत्वम् खप्रत्ययस्य सतिशिष्टत्वात्तदादेशस्योपदेशिवद्भावेनेकारउदात्तः। अद्याचित निपातस्यचेतिदीर्घत्वम् । कृणवः कृविहिंसाकरणयोश्च इदित्त्वान्नुम् लेटिसिप्यडागमः धिन्विकृण्व्योरचेत्युप्रत्ययः वकारस्याकारादेशश्च तस्यातोलोपेसतिस्थानिवद्भावाल्लघूपधगुणाभावः गुणावादेशौ आगमानुदात्तत्वेविकरणस्वरः । व्रन्दिनः अत्रनिरुक्तम्—व्रन्दीव्रन्दतेर्मृदूभावकर्मणोनिवृणक्षियच्छ्वसनस्यमूर्धनिशब्दकारिणःशुष्णस्यादित्यस्यशोषयितूरोरूयमाणोवनानीतिवाधनानीतिवेति[1] । धनानीतिपक्षे मेघस्यधनानीतिव्याख्येयम् ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेसप्तदशोवर्गः ॥ १७ ॥

षष्ठीमृचमाह—

त्वमाविथनर्यंतुर्वशंयदुंत्वंतुर्वीतिंवय्यंशतक्रतो ।
त्वंरथमेतशंकृत्व्येधनेत्वंपुरोनवतिंदम्भयोनव ॥ ६ ॥

१ नि० ५ १५ ।

त्वम् । आ॒वि॒थ॒ । नर्य॑म् । तु॒र्वश॑म् । यदु॑म् । त्वम् । तु॒र्वीति॑म् ।
व॒य्य॑म् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । त्वम् । रथ॑म् । एत॑शम् ।
कृत्व्ये॑ । धने॑ । त्वम् । पुरः॑ । न॒व॒तिम् । द॒म्भ॒यः॒ । नव॑ ॥ ६ ॥

हेइन्द्र त्वंनर्यंनरेभ्योहितं तुर्वशं तुर्वशनामानं यदुं एतन्नामानंच राजानं आविथ ररक्षिथ तथाहेशतक्रतो बहुविधकर्मन्बहुविधप्रज्ञवा त्वं वय्यंवय्यकुलजंतुर्वीतितुर्वीतिनामानंराजानंआविथेत्येव अपिच त्वंरथंरंहणस्वभावमेतत्संज्ञमश्वं एतशंएतत्संज्ञकंधनेधननिमित्तेसङ्ग्रामेकृत्व्येकर्तव्येसतिआविथेतिशेषः यद्वा पूर्वोक्तानांराज्ञांरथं एतशइत्यश्वनाम एतशमश्वंचररक्षिथेतियोज्यम् तथा त्वंशम्बरस्यनवतिंनव नवोत्तरनवतिसंख्याकाः पुरः पुराणिदम्भयः व्यनीनशः ॥ एतशं एतिगच्छतीत्येतशः इण्गतौ इणस्तशन्तशसुनाविति तशन्प्रत्ययः गुणः । कृत्व्ये कर्तव्येइत्यस्यशब्दस्यवर्णविकारःपृषोदरादित्वात् ॥ ६ ॥

सप्तमीमृचमाह—

सघाराजासत्प॑तिःशूशुव॒ज्जनो॑रा॒तह॑व्यः॒प्रति॒यःशास॒मिन्व॑ति ।
उ॒क्था॒वा॒योअ॑भि॒गृ॒णाति॒राध॑सा॒दानु॑र॒स्मा॒उप॑रापिन्वते॒दि॒वः ॥ ७ ॥

सः । घ॒ । राजा॑ । सत्ऽप॑तिः । शू॒शु॒व॒त् । जनः॑ । रा॒तऽह॑व्यः ।
प्रति॑ । यः । शास॑म् । इ॒न्वति॑ । उ॒क्था । वा॒ । यः । अ॒भि॒ऽगृ॒णाति॑ ।
राध॑सा । दानुः॑ । अ॒स्मै॒ । उप॑रा । पि॒न्व॒ते॒ । दि॒वः ॥ ७ ॥

सघसखलुजनोजातोराजाराजमानः सत्पतिः सतांपालयितायजमानः शूशुवत् आत्मानंवर्धयति यइन्द्रंप्रतिरातहव्योदत्तहविष्कःसन् शासंइन्द्रकर्तृकमनुशासनं यद्वा तस्यस्तुतिंइन्वतिव्याप्नोति उक्थावा उक्थानिशस्त्राणिवा यःस्तोताराधसाहविर्लक्षणेनान्नेनसहाभिगृणाति तस्याभिमुखीकरणायशंसतिअस्मैस्तोत्रेदानुरभिमतफलप्रदातेन्द्र उपरा उपरान्मेघान् उपरइति मेघनाम सचयास्केनैवंनिरुक्तः—उपरउपलोमेघोभवतिउपरमन्तेस्मिन्नभ्राण्युपरताआपइतिवेति[1]। तान्मेघान् दिवःसकाशात्पिन्वते सेचयति दोग्धीतियावत् ॥ घ ऋचितुनुघेत्यादिनादीर्घः । सत्पतिः सतांपतिःसत्पतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । शूशुवत् टुओश्विगतिवृद्ध्योः ण्यन्ताद्वर्तमानेलुङिच्लेरङादेशो संप्रसारणंसम्प्रसारणाश्रयंचबलीयइत्यन्तरङ्गमपिवृद्ध्यादिकंबाधि-

---

१ नि० २. २१ ।

त्वा णौचसंश्वङोरितिसम्प्रसारणं संज्ञापूर्वकस्यविधेरनित्यत्वादृवृद्ध्यभावे द्विर्वचनादि उवङादेशः। रातहव्यः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। शासं शासुअनुशिष्टावित्यस्माद्भावेघञि कर्षात्वतइत्यन्तोदात्तत्वेप्राप्ते व्यत्ययेनाद्युदात्तत्वम् वृषादिर्वाद्रष्टव्यः सह्याकृतिगणइत्युक्तम् यद्वा शंसुस्तुतावित्यस्माद्घञिव्यत्ययेननलोपः। इन्वति इविव्याप्तौ शपःपित्त्वादनुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः। अभिगृणाति गृशब्दे क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् तिपःपित्त्वादनुदात्तत्वेविकरणस्वरः पूर्ववन्निघाताभावः। उपरा सुपांसुलुगितिशसःपूर्वसवर्णदीर्घत्वम्। पिन्वते पिविमिविणिविसेचने व्यत्ययेनात्मनेपदम्॥ ७॥

अष्टमीमृचमाह—

अस॑मं क्ष॒त्रमस॑मा मनी॒षा प्र सो॑म॒पा अप॑सा सन्तु॒ नेमे॑।
ये त॑ इन्द्र द॒दुषो॑ व॒र्धय॑न्ति॒ महि॑ क्ष॒त्रं स्थवि॑रं॒ वृष्ण्यं॑ च॥ ८॥

अस॑मम्। क्ष॒त्रम्। अस॑मा। म॒नी॒षा। प्र। सो॒म॒ऽपाः। अप॑सा।
स॒न्तु॒। नेमे॑। ये। ते॒। इ॒न्द्र॒। द॒दुषः॑। व॒र्धय॑न्ति। महि॑। क्ष॒त्रम्।
स्थवि॑रम्। वृष्ण्य॑म्। च॒॥ ८॥

इन्द्रस्यक्षत्रंबलमसमं नकेनचित्समं सर्वाधिकमित्यर्थः तथा मनीषाबुद्धिश्चअसमा नकस्यापिबुद्ध्यासमाना सर्ववस्तुविषयीकरोतीत्यर्थः नेमइति सर्वनामशब्दएतच्छब्दसमानार्थः नेमेएतेसोमपाः सोमस्यपातारोयजमानाःअपसाकर्मणाप्रसन्तुप्रवृद्धाभवन्तु हेइन्द्र तेतवददुषोहविर्दत्तवन्तोयेत्वदीयंमहिमहत् क्षत्रंबलंस्थविरंस्थूलं प्रवृद्धंवृष्ण्यंवृषत्वं पुंस्त्वंचवर्धयन्ति प्रवृद्धंकुर्वन्ति यद्वा ददुषः यजमानेभ्योयागफलंदत्तवतस्तवेतियोजनीयम्। नेमे सर्वनामत्वाज्जसःशीभावे गुणः त्वसमसिमनेमेत्यनुच्चानीतिसर्वानुदात्तत्वेप्राप्ते व्यत्ययेनाद्युदात्तत्वम्। ददुषः ददातेर्लिटः क्वसुः जसोव्यत्ययेनशसादेशः सम्प्रसारणंसम्प्रसारणाश्रयंचबलीयइति इडागमात्पूर्वमेवसम्प्रसारणं शासिवसिघसीनांचेतिषत्वम प्रत्ययस्वरः। महि महेरौणादिकइन्प्रत्ययः। स्थविरं अजिरशिशिरेत्यादिनानिष्ठतेःकिरच्प्रत्ययान्तोनिपातितः॥ ८॥

नवमीमृचमाह—

तुभ्येदे॒ते ब॑हु॒ला अद्रि॑दुग्धाश्चमू॒षद॑श्चम॒सा इ॑न्द्र॒पानाः॑।
व्य॑श्नुहि त॒र्पया॒ काम॑मेषा॒मथा॒ मनो॑ वसु॒देया॑य कृष्व॥ ९॥

तुभ्यं । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इन्द्रऽपानाः । वि । अश्नुहि । तर्पय । कामम् । एषाम् । अथ । मनः । वसुऽदेयाय । कृष्व ॥ ९ ॥

हेइन्द्र तुभ्येतुभ्यमेवचमसाः चम्यन्तेभक्ष्यन्तइतिचमसाःसोमाः एतेसोमास्त्वदर्थंसम्पादिताः कीदृशाइत्याह बहुलाः प्रभूताः अद्रिदुग्धाः अद्रिभिर्ग्रावभिरभिषुताः चमूषदः चमूषुचमसेषुअवस्थिताः इन्द्रपानाः इन्द्रस्यपानेनसुखकराः अतस्त्वंतान्व्यश्नुहिव्यामुहि व्याप्यचएषांत्वदीयानामिन्द्रियाणांकाममभिलाषंतैस्तर्पयपूरयेतियावत् अथानन्तरंवसुदेयायअस्मभ्यमभिमतधनप्रदानायत्वदीयंमनःकृष्वकुरुष्व ॥ तुभ्य छान्दसोमलोपः । अद्रिदुग्धाः दुहेःकर्मणिनिष्ठा तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । चमूषदः चमुअदने चमन्त्यनेनेतिचमूः कृषिचमितनीत्यादिनाउणादिकऊप्रत्ययः चमूषुसीदन्तीतिचमूषदः सत्सूद्विषेत्यादिनाक्विप् पूर्वपदादितिषत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्रपानाः कर्मणिचयेनसंस्पर्शादितिपिबतेःकर्मणिल्युट् । अश्नुहि व्यत्ययेनपरस्मैपदम् । वसुदेयाय डुदाञ्दाने अस्माद्चोयदितिभावेयत् ईद्यतीतीकारादेशः गुणः यतोनावइत्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । कृष्व डुकृञ्करणे बहुलंछन्दसीतिविकरणस्यलुक् ॥ ९ ॥

दशमीमृचमाह—

अपामतिष्ठद्धरुणह्वरंतमोन्तर्वृत्रस्यजठरेषुपर्वतः ।
अभीमिन्द्रोनद्योवव्रिणाहिताविश्वाअनुष्ठाःप्रवणेषुजिघ्नते ॥ १० ॥

अपाम् । अतिष्ठत् । धरुणऽह्वरम् । तमः । अन्तः । वृत्रस्य । जठरेषु । पर्वतः । अभि । ईम् । इन्द्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥ १० ॥

अपांवृष्ट्युदकानांधरुणह्वरंधरुणशब्दोधारावचनःधारानिरोधकंतमोन्धकारमतिष्ठत् अयमेवार्थःस्पष्टीक्रियते—वृत्रस्यलोकत्रयावरितुरसुरस्यजठरेषूदरप्रदेशेषुअन्तर्मध्येपर्वतःपर्ववान्मेघोभूत् अतस्तमोरूपेणवृत्रेणमेघस्यावृतत्वाद्वृष्ट्युदकमप्यावृतमित्युच्यते ईं इमाःपूर्वोक्तानद्योनदीः अपः नदनान्नद्यइतिव्युत्पत्त्यानदीशब्देनापउच्यन्ते वव्रिणाआवरकेणवृत्रेणहिताःपिहिताः

विश्वाःव्यापिनीः अनुष्ठाःअनुक्रमेणतिष्ठन्तीःएवंविधाअपःइन्द्रःप्रवणेपुनिम्नेषुभूप्रदेशेषुअभिजिघ्नतेअभिगमयति ॥ववि्रणा वृञ्वरणे इत्यस्मावआदृगमहनजनइतिकिमत्ययःलिङ्गद्वावाद्विर्भावादि यणादेशः प्रत्ययस्वरः। अनुष्ठाः आतश्चोपसर्गेइतितिष्ठतेःकःप्रत्ययः उपसर्गान्सुनोतीतिषत्वम्। जिघ्नते हन्तेर्गत्यर्थाद्व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिशपःश्लुः अर्तिपिपर्त्योश्च बहुलंछन्दसीत्यभ्यासस्येत्वम् ॥ १० ॥

एकादशीमृचमाह—

सशेवृधमधिधाद्युम्नमस्मेमहिक्षत्रंजनाषाळिन्द्रतव्यम्।
रक्षाचनोमघोनःपाहिसूरीन्रायेचनःस्वपत्याइषेधाः ॥ ११॥१८॥

सः। शेऽवृधम्। अधि। धाः। द्युम्नम्। अस्मे इति। महि। क्षत्रम्। जनाषाट्। इन्द्र। तव्यम्। रक्ष। च। नः। मघोनः। पाहि। सूरीन्। राये। च। नः। सुऽअपत्यै। इषे। धाः ॥११॥१८॥

हेइन्द्र सत्वंअस्मेअस्मासुद्युम्नंयशः अधिधाः अधिनिधेहि कीदृशमित्याह शेवृधंशंशमनं रोगाणांशमनेसतियद्वर्धतेतादृशं तथा महिमहत् जनाषाट्शत्रुजनानामभिभवितृतव्यं प्रवृद्धंक्षत्रंबलंचअधिधाइतिशेषः किञ्च हेइन्द्र नोस्मान् मघोनोधनवतःकृत्वा रक्षपालय सूरीन्विदुषोऽस्मान्पिपाहिपालय तथा रायेधनायचस्वपत्यैशोभनपुत्रयुक्तायइषेऽन्नायचनोस्मान्धाःधेहिस्थापय ॥ धाः छन्दसिलुङ्लङ्लिटइतिप्रार्थनायांलुङि गातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। अस्मे सुपांसुलुगितिअस्मच्छब्दात्सप्तम्याःशेआदेशः।जनाषाट् जनान्सहतइतिजनाषाट् छन्दसिसहइतिण्विः अतउपधायाइतिवृद्धिः सहेःसाडःसइतिषत्वम् अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः। तव्यं तवतिर्वृद्ध्यर्थःसौत्रोधातुः अचोयदितियत् गुणे धातोस्तन्निमित्तस्यैवेत्यवादेशः यतोनावइत्याद्युदात्तत्वम्।रक्ष रक्षपालने शपःपित्त्वादनुदात्तत्वेधातुस्वरः द्व्यचोतस्तिङइतिदीर्घत्वम्। मघोनः श्वयुवमघोनामतद्धितेइतिशसिसम्प्रसारणम्।पाहि अदादित्वाच्छपोलुक् हेरपित्त्वात् तस्यैवस्वरःशिष्यते मघोनइत्यस्यवाक्यान्तरगतत्वान्निघाताभावः। स्वपत्यै शोभनान्यपत्यानियस्याःसातथोक्ता नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् जसादिषुछन्दसिवावचनमितियाडापइतियाडागमाभावे वृद्धिरेचीतिवृद्धिः ॥ ११ ॥

॥ इतिप्रथमस्यचतुर्थेष्टादशोवर्गः ॥ १८ ॥

दिवश्चिदस्येत्यष्टर्चं पञ्चमं सूक्तं सव्यस्यार्षमैन्द्रं जागतम् तथाचानुक्रान्तम् दिवश्चिदष्टौजागतं-हीति हीत्यभिधानात् तुह्यादिपरिभाषया उत्तरेद्वे चसूक्ते जागते अतिरात्रेप्रथमेपर्यायेमैत्रावरुणश-स्त्रेइदंसूक्तम् सूत्रितश्च—दिवश्चिदस्येतिपर्यासः सनोनव्येभिरिरितिचेति विषुवतिनिष्केवल्येप्ये-तत्सूक्तंसूत्रितश्च—शंस्येदेवोत्तराणिषट्दिवश्चिदस्येति समूढस्यदशरात्रस्यद्वितीयेछन्दोमेपि निष्केवल्येएतत्सूत्रितम्—त्वंमहाँइन्द्रयोहदिवश्चिदस्यत्वंमहाँइन्द्रतुभ्यमितिनिष्केवल्यमिति ।

प्रथमामृचमाह—

दि॒वश्चि॑दस्य वरि॒मा वि प॑प्रथ॒ इन्द्रं॒ न म॒ह्ना पृ॑थि॒वी च॒न प्रति॑ ।
भी॒मस्तुवि॑ष्माञ्चर्ष॒णिभ्य॑ आत॒पः शिशी॑ते॒ वज्रं॒ तेज॑से॒ न वंस॑गः ॥१॥

दि॒वः । चि॒त् । अ॒स्य॒ । व॒रि॒मा । वि । प॒प्र॒थे॒ । इन्द्र॑म् । न ।
म॒ह्ना । पृ॒थि॒वी । च॒न । प्रति॑ । भी॒मः । तुवि॑ष्मान् । च॒र्ष॒णिऽभ्यः॑ ।
आ॒ऽत॒पः । शिशी॑ते । वज्र॑म् । तेज॑से । न । वंस॑गः ॥१॥

अस्येन्द्रस्य वरिमा उरुत्वं प्रभावं दिवश्चिद्द्युलोकादपि विपप्रथे विस्तीर्णं बभूव पृथिवी चन पृ-थिव्यपि च मह्ना महिम्ना महत्त्वेन इन्द्रं न प्रतिभवति भूमिरपीन्द्रस्य प्रतिनिधिर्न भवति ततोपि स गरीया-नित्यर्थः भीमः शत्रूणां भयंकरः तुविष्मान्महावान्बलवान्वा चर्षणिभ्यो मनुष्येभ्यः स्तोतृभ्यः ते-षामर्थाय शत्रूणामातपः आसमन्तात्तापकारी एवंविधः स इन्द्रः वज्रं वर्जनशीलमायुधं तेजसे तैक्ष्ण्या-य शिशीते तनूकरोति तीक्ष्णीकरोतीति तत्र दृष्टान्तः—वंसगो न वननीयगतिमान्वृषभो यथा स्वशृङ्गे युद्धार्थं तीक्ष्णीकरोति तद्वत् ॥ दिवः ऊडिदमिति विभक्तेरुदात्तत्वम् । वरिमा उरुशब्दात्पृथ्वादिल-क्षण इमनिच् प्रियस्थिरेत्यादिना उरुशब्दस्य वरादेशः । पप्रथे प्रथ प्रख्याने । मह्ना महिम्ना वर्णलो-पश्छान्दसः यद्वा महेरौणादिकः कनिप्रत्ययः प्रत्ययस्वरेणान्तोदात्तः तृतीयैकवचने अल्लोपोनइ-त्यकारलोपः उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । प्रति प्रतिः प्रतिनिधिप्रतिदानयोरिति प्रति-निधौ कर्मप्रवचनीयत्वम् कर्मप्रवचनीययुक्ते इतीन्द्रशब्दाद्द्वितीया प्रतिनिधिप्रतिदाने च यस्मा-दिति पञ्चमी तु छान्दसत्वान्न भवति । भीमः ञिभी भये इत्यस्माद्भियः षुग्वेति मक्प्रत्ययः भीमोवि-भ्यत्यस्मादिति यास्कः[1] । आतपः तपतीति तपः पचाद्यच् थाथादिनोत्तरपदान्तोदात्तत्वम् । शि-

1 नि० १. २०. १

शीति शोतनूकरणे व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिविकरणस्यश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वम् ईहल्यघोरितीत्वम् अनजादावपित्सार्वधातुकेव्यत्ययेनाभ्यस्ताद्युदात्तत्वम् । वंसगः वनपणसंभक्तौ इत्यस्मात्कर्मण्यौणादिकःसप्रत्ययः वंसंवननीयंगच्छतीतिवंसगः डोन्यत्रापिदृश्यतइतिगमेर्डप्रत्ययः दिवोदासादित्वात्पूर्वपदाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

सोअर्णवोननद्यःसमुद्रियःप्रतिगृभ्णातिविश्रितावरीमभिः ।
इन्द्रःसोमस्यपीतयेवृषायतेसनात्सयुध्मओजसापनस्यते ॥२॥

सः । अर्णवः । न । नद्यः । समुद्रियः । प्रति । गृभ्णाति ।
विऽश्रिताः । वरीमऽभिः । इन्द्रः । सोमस्य । पीतये । वृषऽयते ।
सनात् । सः । युध्मः । ओजसा । पनस्यते ॥२॥

सइन्द्रःसमुद्रियःसमुद्रवन्त्यस्मादापइतिसमुद्रमन्तरिक्षं तत्रभवःसमुद्रियएवंभूतःसन् वरीमभिःस्वकीयैःसंवरणैः यद्वा उरुत्वैर्विश्रिताव्याप्तानद्योनदीः शब्दकारिणीर्वृत्रेणावृताअपःअर्णवोन समुद्रइव प्रतिगृभ्णातिस्वीकृत्यववर्षेतिभावः सचेन्द्रःसोमस्यपीतयेपानायवृषायतेवृषइवाचरतिहर्षयुक्तोवर्ततइत्यर्थः तथासइन्द्रोयुध्मोयोद्धासनात् चिरादेव यद्वा सनातनःओजसाबलकृतेनवृत्रवधादिरूपेणकर्मणापनस्यते पनःस्तोत्रमिच्छति ॥ अर्णवः अर्णसोलोपश्चेतिमत्वर्थीयोवप्रत्ययःसलोपश्च प्रत्ययस्वरः । नद्यः नदअव्यक्तेशब्दे इत्यस्मात्कर्तरिपचाद्यच् चितइत्यन्तोदात्तत्वम् नदडिति टित्त्वेनपाठात् टिड्ढाणञितिङीप् यस्येतिलोपेउदात्तनिवृत्तिस्वरेणतस्योदात्तत्वं जसियणादेशे उदात्तस्वरितयोर्यणइतिस्वरितत्वम् द्वितीयार्थेप्रथमा अनयाव्युत्पत्त्यानद्यइत्यापउच्यन्ते तथाचश्रूयते—अहावनदताहतेतस्मादानद्योनामस्थतावोनामानिसिन्धवइति[1] ॥ समुद्रियः समुद्राभ्राद्घइतिभवार्थेघप्रत्ययः घस्येयादेशेतस्योपदेशिवद्वचनादाद्युदात्तत्वम् । गृभ्णाति हृग्रहोर्भइतिभत्वम् । विश्रिताः श्रिञ्सेवायां कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । वरीमभिः वृञ्वरणेइत्यस्मादौणादिकईमनिन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् यद्वा उरुशब्दादिमनिचिदीर्घः आद्युदात्तत्वंचछान्दसत्वात् । वृषायते कर्तुःक्यङ्सलोपश्चेत्याचारेर्थेक्यङ् ङित्त्वादात्मनेपदम् अकृत्सार्वधातुकयोरितिदीर्घः । युध्मः युधसम्प्रहारेइत्यस्मादिषियुधीन्धिदसिश्याधूसूभ्योमगितिमक् । पनस्यते पनस्तुतौ पननंपनः तदिच्छतिपनस्यति व्यत्ययेनात्मनेपदम् ॥२॥

१ तै० सं० ५. ६. १. ।

तृतीयामृचमाह–

त्वंतमिन्द्रपर्वतंनभोजसेमहोनृम्णस्यधर्मणामिरज्यसि ।
प्रवीर्येणदेवतातिचेकितेविश्वस्माउग्रःकर्मणेपुरोहितः ॥३॥

त्वम् । तम् । इन्द्र । पर्वतम् । न । भोजसे । महः । नृम्णस्य ।
धर्मणाम् । इरज्यसि । प्र । वीर्येण । देवता । अति । चेकिते ।
विश्वस्मै । उग्रः । कर्मणे । पुरःऽहितः ॥ ३ ॥

हेइन्द्र त्वंभोजसेभोजनायपर्वतंपर्वयन्तंमेघंनाकार्षीः नहिहतोभुङ्क्ते इन्द्रोहिवर्षणार्थंमेघंवज्रेणहन्ति तथामहःमहतःनृम्णस्यधनस्यधर्मणांधारयितृणांकुबेरादीनां इरज्यसिईशिषे इरज्यतिरैश्वर्यकर्मा सइन्द्रोदेवतावीर्येणअतिअतिशयितःप्रचेकिते प्रकर्षेणास्माभिर्ज्ञातोबभूव सचोग्रउद्गूर्णइन्द्रः विश्वस्मैसर्वस्मैवृत्रवधादिरूपायकर्मणेदेवैःपुरोहितःपुरस्तादवस्थापितः ॥ धर्मणां धृञ् धारणे अन्येभ्योपिदृश्यन्तइतिकर्तरिमनिन् नित्वादाद्युदात्तत्वम् । इरज्यसि इरजईर्ष्यायां ऐश्वर्ये इत्येके कण्ड्वादित्वाद्यक् । वीर्येण शूरवीरविक्रान्तौ चुरादिः अचोयदितियत् णिलोपः बहुव्रीहौ वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् विधानसामर्थ्याद्यतोनावइत्याद्युदात्तत्वाभावेतित्स्वरितमितिस्वरितत्वम् तस्मिन्हिसति आद्युदात्तंद्व्यच्छन्दसीत्यनेनैवसिद्धत्वात्पुनर्वीर्यग्रहणमनर्थकंस्यादित्युक्तम् । देवता देवएवदेवता देवात्तलितिस्वार्थेतल्प्रत्ययः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । चेकिते कितज्ञाने अस्माद्यङन्ताच्चेकित्यतेःकर्मणिलिटि अतोलोपयलोपौ । पुरोहितः पुरस्शब्दस्यासिप्रत्ययान्तस्य तद्धितश्चासर्वविभक्तिरित्यव्ययत्वेनपुरोव्ययमितिगतिसंज्ञायां गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

चतुर्थीमृचमाह–

सइद्वनेनमस्युभिर्वचस्यतेचारुजनेषुप्रब्रुवाणइन्द्रियम् ।
वृषाछन्दुर्भवतिहर्यतोवृषाक्षेमेणधेनांमघवायदिन्वति ॥४॥

सः । इत् । वने । नमस्युऽभिः । वचस्यते । चारु । जनेषु ।
प्रऽब्रुवाणः । इन्द्रियम् । वृषा । छन्दुः । भवति । हर्यतः । वृषा ।
क्षेमेण । धेनाम् । मघऽवा । यत् । इन्वति ॥ ४ ॥

सइवसएवेन्द्रः वनेअरण्येनमस्युभिः नमसास्तोत्रेणपूजयितृभिः ऋषिभिर्वचस्य तेवचइच्छन् क्रियतेस्तूयतइत्यर्थः यद्वा वचःस्तोत्रमात्मनइच्छति सचेन्द्रः आत्मीयेषुजनेषुइन्द्रियंस्ववीर्यंप्रब्रुवाणः प्रकटयन्चारुवर्तते किञ्च सवृषाकामानांवर्षकःहर्यतःप्रेप्सावतोयियक्षतः छन्दुःउपच्छन्दयिता भवति यियक्षतांपुरुषाणांयागेरुचिमुत्पादयतीतिभावः वृषा हविषांवर्षयिताहविःप्रदातेत्यर्थः मघवाधनवानेवंभूतोयजमानः क्षेमेणइन्द्रकृतेनरक्षणेनयुक्तःसन् यद्यदा धेनांस्तुतिलक्षणांवाचंइन्वतिप्रेरयति तदानींछन्दुर्भवतीतिपूर्वेणान्वयः यद्वा मघवान्वृषेन्द्रः क्षेमेणक्षेमकरेणमनसाधेनांयजमानैःकृतांस्तुतिं यद्यस्मादिन्वतिव्याप्नोतितस्मादितियोज्यम् ॥ नमस्युभिः नमोवरिवइतिपूजार्थे क्यच् क्याच्छन्दसीत्युप्रत्ययः । वचस्यते वचइच्छतिवचस्यतितंवचस्यन्तंकुर्वन्तिमुनयः वचस्यन्ति वचस्यतेःकर्मणियकिअतोलोपयलोपौ यद्वा वचस्यतेर्व्यत्ययेनात्मनेपदम् । प्रब्रुवाणः ब्रूञ् व्यक्तायांवाचि लटःशानच् अदादित्वाच्छपोलुक् शानचोङित्त्वाद्गुणाभावेउवङ् चित्स्वरेणान्तोदात्तः । इन्द्रियं इन्द्रस्यलिङ्गमिन्द्रियम् इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमितिवेतिलिङ्गादिष्वर्थेषुइन्द्रशब्दाद्घच्प्रत्ययोनिपात्यते अतोन्तोदात्तत्वम् । इन्वति इविव्याप्तौ शपःपित्त्वादनुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः ॥ ४ ॥

पञ्चमीमृचमाह—

सइन्म॒हानि॒ समि॒थानि॑म॒ज्मना॑कृ॒णोति॑यु॒ध्मओज॑सा॒जने॑भ्यः ।
अधा॑च॒नश्रद्द॑धति॒त्विषी॑मत॒इन्द्रा॑य॒वज्रं॑नि॒घनि॑घ्नतेव॒धम् ॥५॥१९॥

सः । इत् । म॒हानि॑ । स॒म्ऽइ॒थानि॑ । म॒ज्मना॑ । कृ॒णोति॑ । यु॒ध्मः ।
ओज॑सा । जने॑भ्यः । अध॑ । च॒न । श्रत् । द॒ध॒ति॒ । त्विषि॑ऽमते ।
इन्द्रा॑य । वज्र॑म् । नि॒ऽघनि॑घ्नते । व॒धम् ॥ ५ ॥१९॥

सइत् सएवेन्द्रोयुध्मोयोद्धामहानिसमिथानिमहतःसङ्ग्रामान्मज्मनासर्वस्यशोधकेनओजसाबलेनकृणोतिकरोति किमर्थम् जनेभ्यःस्तोतृजनार्थं यदेन्द्रोवधंहननसाधनंवज्रमायुधंमेघेषुनिघनिघ्नतेनिहन्ति अधाचन अनन्तरमेवत्विषीमतेदीप्तिमतेइन्द्रायसर्वेजनाःश्रद्दधति श्रदितिसत्यनाम इन्द्रोबलवानितियदुच्यतेतत्सत्यमेवेतिसर्वेप्रतिपद्यन्ते ॥ महानि महान्तीत्यस्यतकारलोपश्छान्दसः यद्वा महन्तेपूज्यन्तइतिमहानिप्रवृद्धानि घञर्थेकविधानमितिकः । प्रत्ययस्वरः समिथानि इण्गतौ संयन्तिसङ्गच्छन्तेस्मिन्वीराइतिसमिथानिसङ्ग्रामाः समीणइतिथक्प्रत्ययः कित्त्वाद्गुणाभावः

थाथादिनोत्तरपदान्तोदात्तत्वम्।मज्मना टुमस्जोशुद्धौ मनिन्प्रत्ययः झलांजसूझशीतिसकारस्य जश्त्वं दकारः ततश्चुत्वं जकारः प्रत्ययस्वरः। अथ छान्दसंधत्वम् निपातस्यचेतिसांहितिकोदीर्घः।त्विषीमते त्विषदीप्तौ इन्सर्वधातुभ्यइतीन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् मतुपःपित्त्वादनुदात्तत्वे तदेवशिष्यते अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः। निघ्नन्निघ्नते हन्तेर्व्यत्ययेनात्मनेपदम् बहुवचनंच बहुलंछन्दसीतिशपःश्लुः गमहनेत्यादिनोपधालोपः अभ्यासस्यघत्वंनिगागमश्च आगनीगन्तीतिचेतिचशब्दःप्रकारार्थइत्युक्तत्वादाद्यर्थादावेवतद्द्रष्टव्यम्॥ ५॥

॥ इतिप्रथमस्यचतुर्थेएकोनविंशोवर्गः॥ १९॥

षष्ठीमृचमाह—

सहि॒श्र॑व॒स्युः सद॑नानि कृ॒त्रिमा॑ क्ष्म॒या वृ॑धा॒न ओज॑सा विना॒शय॑न्।
ज्योतीं॑षि कृ॒ण्वन्न॑वृ॒काणि॒ यज्य॒वेऽव॑ सु॒क्रतु॒ः सर्त॒वा अ॒पः सृ॑जत्॥ ६॥

सः। हि। श्र॒व॒स्युः। सद॑नानि। कृ॒त्रिमा॑। क्ष्म॒या। वृ॒धा॒नः। ओज॑सा। वि॒ऽना॒शय॑न्। ज्योतीं॑षि। कृ॒ण्वन्। अ॒वृ॒काणि॑। यज्य॑वे। अव॑। सु॒ऽक्रतु॑ः। सर्त॑वे। अ॒पः। सृ॒जत्॥ ६॥

श्रवस्युरन्नंयशोवाआत्मनइच्छन् कृत्रिमा कृत्रिमाणिक्रियानिर्वृत्तानिसदनानिअसुरपुराणि ओजसाबलेनविनाशयन् क्ष्मयाभूम्यासमानंवृधानोवर्धनशीलः यद्वा क्ष्मयेत्योजोविशेषणं शत्रूणामभिभवित्राबलेनेत्यर्थः ज्योतींषिसूर्यादीनिवृत्रेणावृतानिअवृकाणिवृकेणावरकेणतेनरहितानिकृण्वन्कुर्वन् सुक्रतुःशोभनकर्मासहिवएवंविधःसखल्विन्द्रोयज्यवेयष्ट्रेयजमानायतदर्थंसर्तवेसरणायअपःवृष्टिलक्षणान्युदकानिअवासृजत् वृष्टिंकृतवानित्यर्थः॥कृत्रिमा डुकृञ्करणे ड्वितःक्त्रिरितिभावेक्त्रिप्रत्ययः क्त्रेर्मम्नित्यमितिनिर्वृत्तार्थेमप् तस्यपित्त्वादनुदात्तत्वेक्त्रिप्रत्ययस्वरएवशिष्यते शेश्छन्दसिबहुलमितिशेर्लोपः। क्ष्मया क्षमूषसहने क्षमतेप्राणिजातरुतमुपद्रवमितिक्ष्मा षिद्भिदादिभ्योङ्इत्यङ् ततष्टाप् व्यत्ययेनधातोरुपधालोपः छान्दसंविभक्त्युदात्तत्वम् यद्वा अयंधातुरभिभवार्थः षहअभिभवेइतिसहनस्याभिभवार्थत्वात् अस्मादौणादिकोमनिन् व्यत्ययेनस्त्रीलिङ्गता मन्इतिडीपोनिषेधे डाबुभाभ्यामन्यतरस्यामितिडाप् टिलोपः।वृधानः ताच्छील्यवयोवचनशक्तिषुचानश् बहुलंछन्दसीतिशपोलुक् चितइत्यन्तोदात्तत्वम्। अवृकाणि वृञ्वरणे सृवृभूशुषिमुषिभ्यःकक्इतिकक्प्रत्ययः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्।यज्यवे यजिमनिशुन्धिदसिजनिभ्योयुरिति

युप्रत्ययः वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । सुक्रतुः बहुव्रीहौक्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम्। सर्तवै सृगतौ कृत्यार्थेतवैकेनितिभावेतवैप्रत्ययः गुणः अन्तश्चतवैयुगपदितिआद्यन्तयोर्युगपदुदात्तत्वम् । अपः ऊडिदमितिशसउदात्तत्वम् । सृजत् लङिबहुलंछन्दस्यमाङ्योगेपीत्यडभावः॥६॥

सप्तमीमृचमाह—

दानायमनःसोमपावन्नस्तुतेर्वाञ्चाहरीवन्दनश्रुदाकृधि।
यमिष्ठासःसारथयोयइन्द्रतेनत्वाकेताआदभ्रुवन्तिभूर्णयः ॥७॥

दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वाञ्चा । हरी इति ।
वन्दनऽश्रुत् । आ । कृधि । यमिष्ठासः । सारथयः । ये । इन्द्र ।
ते । न । त्वा । केताः । आ । दभ्नुवन्ति । भूर्णयः ॥७॥

हेसोमपावन् सोमस्यपातरिन्द्र तेत्वदीयंमनः दानायअस्मदभिमतफलप्रदानायास्तुभवतु हेवन्दनश्रुत् वन्दनानांस्तुतीनांश्रोतः हरीत्वदीयावश्वावर्वाञ्चाअस्मदभिमुखौआकृधि आभिमुख्येनकुरु हेइन्द्र तेतवस्वभूतायेसारथयःसन्ति ते यमिष्ठासः अतिशयेनयन्तारः अश्वनियमनकुशलाइत्यर्थः यस्मादेवंतस्मात्केताः प्रातिकूल्यज्ञातारः भूर्णयः स्वकीयायुधादीनांभर्तारः यद्वा भीताः तीक्ष्णाःशत्रवः त्वात्वांनादभ्नुवन्ति नहिंसन्ति ॥ सोमपावन् आतोमनिन्क्विनिबनिप् असंबुद्धाविति पर्युदासादीर्घाभावः । अर्वाञ्चा सुपांसुलुगिति विभक्तेराकारः । वन्दनश्रुत् वदिअभिवादनस्तुत्योः इदित्वान्नुम् भावेल्युट् तेषांश्रोता श्रुश्रवणे क्विपितुगागमः । यमिष्ठासः यन्तृःशब्दात्तुश्छन्दसीतीष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः नित्त्वादाद्युदात्तत्वम् आज्जसेरसुगित्यसुक् । सारथयः सर्तेर्णिच्चेतिघथिन्प्रत्ययोणित्वश्च नित्त्वादाद्युदात्तः । केताः कितज्ञाने चिकेततिप्रतिकूलंजानन्तीतिकेताः पचाद्यच् वृषादेराकृतिगणत्वादाद्युदात्तत्वम् यद्वा प्रतिकूलतयाज्ञायन्तइतिकेताः कर्मणिघञ् ञित्त्वादाद्युदात्तत्वम् । दभ्नुवन्ति दंभुदंभे स्वादित्वाद्श्नुः तस्यङित्त्वादनिदितामितिनलोपः संयोगपूर्वत्वेनहुश्नुवोरितियणादेशाभावे अचिश्नुधात्वित्यादिनोवङादेशः । भूर्णयः भृञ्भरणे घृणिपृश्निरित्यादौ अस्मान्निप्रत्ययान्तोनिपात्यते ऋतउत्वंदीर्घश्च यद्वा भृभये इत्यस्मात् कृत्यल्युटोबहुलमितिकर्तरिक्निनि उदोष्ठ्यपूर्वस्येत्युत्वम् हलिचेतिदीर्घः ऋकारल्वादिभ्यःक्तिन्निष्ठावद्भवतीतिनिष्ठावद्भावात्नत्वम् नित्त्वादाद्युदात्तत्वम् । ७ ॥

अष्टमीमृचमाह—

अप्रक्षितंवसुबिभर्षिहस्तयोरषाळ्हंसहस्तन्विश्रुतोदधे।
आवृतासोवतासोनकर्तृभिस्तनूषुतेक्रतवइन्द्रभूरयः॥ ८ ॥२०॥

अप्रऽक्षितम्। वसु। बिभर्षि। हस्तयोः। अषाळ्हम्। सहः। तन्वि। श्रुतः। दधे। आऽवृतासः। अवतासः। न। कर्तृऽभिः। तनूषु। ते। क्रतवः। इन्द्र। भूरयः॥ ८ ॥ २० ॥

हेइन्द्र त्वंअप्रक्षितंप्रक्षयरहितं वसुधनं हस्तयोर्बिभर्षि स्तोतृभ्योदातुंधारयसि तथा श्रुतः प्रख्यातोभवान् तन्विआत्मीयेशरीरेअषाळ्हंशत्रुभिरनभिभूतंसहोबलंदधेधारयति त्वदीयास्तनवः कर्तृभिः वृत्रादेरसुरस्यवधंकुर्वद्भिः बलकृतैःकर्मभिरावृतासःआवृताःबलकृतानिसर्वाणिकर्माण्येतस्यशरीरमावृत्यावतिष्ठन्ते तत्रदृष्टान्तः—अवतासोन अवतइतिकूपनाम यथाकूपाः जलोद्धरणायप्रवृत्तैःप्राणिभिराव्रियन्तेतद्वत् यस्मादेवंतस्मात् हेइन्द्र तेतवशरीरेषु क्रतवः कर्माणिभूरयोबहूनिविद्यन्ते॥ अप्रक्षितं क्षिक्षयेइत्यस्माद्भावे निष्ठायामण्यदर्थेइतिपर्युदासाद्दीर्घाभावः अतएवक्षियोदीर्घादितिनिष्ठानत्वाभावः प्रकृष्टंक्षितंयस्यतत्प्रक्षितं नप्रक्षितमप्रक्षितम् अव्ययपूर्वपदप्रकृतिस्वरत्वम्। बिभर्षि डुभृञ्धारणपोषणयोः लिटिसिपिशपःश्लुः भृञामिदित्यभ्यासस्येत्वम्।अषाळ्हं षहअभिभवेइत्यस्मान्निष्ठायांतकारादौप्रत्यये तीषसहेतीटोविकल्पितत्वात् यस्यविभाषेतीट्प्रतिषेधः ढत्वधत्वष्टुत्वढलोपेषु सहिवहोरोदवर्णस्येत्योत्वे प्राप्ते साढ्यैसाढ्वासाढेतिनिगमे इतिनिपातनादात्वम्. यदुक्तंसाढेतितृजन्तमेतदितितदुपलक्षणार्थं द्रष्टव्यम्।तन्वि जसादिषुछन्दसिवावचनमिति अच्चघेरित्यत्वौत्वयोरभावेयणादेशः उदात्तस्वरितयोर्यणइतिविभक्तेःस्वरितत्वम् उदात्तयणोहल्पूर्वादित्युदात्तत्वंतुछान्दसत्वान्नप्रवर्तते॥ ८॥

॥ इतिप्रथमस्यचतुर्थेविंशोवर्गः ॥ २० ॥

---

१ हेइन्द्रप्राणादित्यरूपपरमेश्वर अप्रक्षितंअनुपहिंसितंप्रपहीणंवावसुःकर्मफलाख्यंधनं हस्तयोः अधिदेवंहस्तसदृशयोर्दक्षिणोत्तरायणयोर्बिभर्षिधारयसिअध्यात्मंचजीवनादिलक्षणं कर्मफलंहस्तसदृशयोःप्राणापानयोर्धारयसि किञ्च सहोबलंत्वदीयमषाळ्हंअन्यैरतिरस्कार्यंअतःकर्मफलंधारयितुंसमर्थोसि किञ्च तन्वितनोःस्वात्मनःशरीरेश्रुतःश्रवणादिज्ञानानिदधेधारयसि अतोनुष्ठानप्रयासंज्ञात्वातदनुरूपफलंददासीत्यर्थः किञ्च कर्तृभिर्भूपैर्हिरण्यनिधिप्रक्षेपकारिभिःअवतासोन निधिस्थापनार्थंखाताअवटागर्ताइवआवृतासःदिशःसर्वाअपित्वदीयप्रकाशे-

एषमपूर्वीरितिपळ्वंचपथंसूक्तम् सव्यस्यार्षमैन्द्रंजागतमित्युक्तम् अनुक्रान्तश्च—एषमषडिति। विषुवतिनिष्केवल्येएतत्सूक्तंशंसनीयं विषुवान्दिवाकीर्त्यइतिखण्डेसूत्रितम्—एषमपूर्वीर्वृषामदः प्रमंहिष्ठायेति ।

तत्रमथमामृचमाह—

एषप्रपूर्वीरवतस्यंचम्रिषोत्योनयोषामुदंयंस्तभुर्वणिः ।
दक्षंमहेपाययतेहिरण्ययंरथमावृत्याहरियोगमृभ्वंसम् ॥१॥

एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषाम् ।
उत् । अयंस्त । भुर्वणिः । दक्षम् । महे । पाययते । हिरण्ययम् ।
रथम् । आऽवृत्य । हरिऽयोगम् । ऋभ्वसम् ॥ १ ॥

भुर्वणिरत्ताएषइन्द्रः तस्ययजमानस्यपूर्वीः प्रभूताश्चम्रिषः चमूषुचमसेषुअवस्थिताः सोमलक्षणाइषः प्रावोदयंस्तमकर्षेणपानार्थमुद्धरति तत्रदृष्टान्तः—अत्योनयोषां यथाश्वोवडवांक्रीडार्थमुद्गच्छति सचेन्द्रःहिरण्ययंसुवर्णमयंहरियोगंहरिभ्यांयुक्तंऋभ्वसंउरुभासमानंरथमावृत्यावस्थाप्य महेमहतेवृत्रवधादिरूपायकर्मणेदक्षंमवृद्धमात्मानंसोमंपाययतेपानंकारयति॥ पूर्वीः पृपालनपूरणयोः पृभिदिव्यधीत्यादिनाकुप्रत्ययः उदोष्ठ्यपूर्वस्येत्युत्वम् पुरुशब्दाद्वोतोगुणवचनादितिङीष् यणादेशः हलिचेतिदीर्घत्वं प्रत्ययस्वरः । चम्रिषः चमुअदनेइत्यस्मात्क्विपिचमितनिधनीत्यादिनाऊप्रत्ययान्तश्चमूशब्दः तस्यांवर्तमानाइषश्चम्रिषः वकारस्यरेफश्छान्दसः कृदुत्तरपदप्रकृतिस्वरत्वम्। अयंस्त छान्दसेवर्तमानेलुङि व्यत्ययेनात्मनेपदम् एकाचइतीट्प्रतिषेधः। भुर्वणिः भर्वतिरत्तिकर्मेतियास्कः। धातुपाठेतुभर्वहिंसायामितिपठ्यते अस्मादौणादिकोऽनिप्रत्ययः अकारस्यउकारश्छान्दसः। पाययते पापाने शाच्छासाह्वाव्यावेपांयुक् इतिहेतुमतिणिचियुगागमः णिचश्चेत्यात्मनेपदम्। हिरण्ययम् ऋत्व्यवास्त्वेत्यादिनाहिरण्यशब्दादुत्तरस्यमयटोमशब्दलोपोनिपात्यते । हरियोगम् हर्योर्योगोयोजनंयस्मिन् हरिशब्दइन्प्रत्ययान्तआद्युदात्तः सएवबहुव्रीहिस्वरेणशिष्यते। ऋभ्वसं उरुभासमित्यस्यपृषोदरादित्वाद्भ्वसादेशः ॥ १ ॥

---

नाच्छादिना:निचिह्स्थापकाहिनिधिगर्तेनिक्षिप्यतंगर्तमृत्तिकादिभिःआच्छादयन्ति एवंत्वमपि त्वदीयरश्मिभिःमर्वमाच्छादयसि तादशस्यतेनवतनुपुत्रारोरपुत्रकत्वः संकल्पविशेषाःफलप्रदाः भूयोबहवोविद्यन्तेयोयत्फलमिच्छतितस्यतत्फलमस्त्वित्येवंसंकल्पमात्रेणत्वददासीत्यर्थः । इत्युपनिषद्भाष्ये ॥ १ नि०९. २३. ।

द्वितीयामृचमाह—

तंगूर्तयोनेमन्निषःपरीणसःसमुद्रंनसंचरणेसनिष्यवः ।
पतिंदक्षस्यविदथस्यनूसहोगिरिंनवेनाअधिरोहतेजसा ॥२॥

तम् । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रम् । न । सम्ऽचरणे ।
सनिष्यवः । पतिम् । दक्षस्य । विदथस्य । नु । सहः । गिरिम् ।
न । वेनाः । अधि । रोह । तेजसा ॥ २ ॥

गूर्तयःस्तोतारः नेमन्निषःनमस्कारपूर्वंगच्छन्तः यद्वा नीतहविष्काःपरीणसःपरितोव्याप्नुवन्तः एवंगुणविशिष्टायजमानाः तमिन्द्रंस्तुतिभिरधिरोहन्ति स्तुवन्तइत्यर्थः तत्रदृष्टान्तः—सनिष्यवः सनिंधनमात्मनइच्छन्तोवणिजः धनार्थंसंचरणेसञ्चारेनिमित्तभूतेसतिसमुद्रंन यथानावा समुद्रमधिरोहन्ति एवंस्तोतारोपिस्वाभिमतधनलाभायइन्द्रंस्तुवन्तीतिभावः हेस्तोतः त्वंच दक्षस्य प्रवृद्धस्यविदथस्ययज्ञस्यपतिंपालयितारं सहःसहस्वं तंबलवन्तमिन्द्रंतेजसादेवतामकाशकेनस्तोत्रेणनुक्षिप्रंअधिरोहस्तुहीतियावत् तत्रदृष्टान्तः—वेनाःकान्ताःस्त्रियःगिरिंन यथापर्वतंस्वाभिमतपुष्पोपचयार्थमधिरोहन्ति ॥ गूर्तयः गृशब्दे गृणन्तिस्तुवन्तीतिगूर्तयः क्तिच्क्तौचेतिकर्तरिक्तिच् बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः चितइत्यन्तोदात्तत्वम् । नेमन्निषः णमप्रह्वत्वेइत्यस्माच्छत्रिव्यत्ययेनैत्वं तकारस्यनकारादेशश्च नमन्तइष्यन्तीन्द्रंप्राप्नुवन्तीतिनेमन्निषः इषगतावित्यस्मात् क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् यद्वा णीञ्प्रापणेइत्यस्मादर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्निति मन्प्रत्ययः बहुलवचनात् नकारस्येत्संज्ञाभावः नीताःप्रचाःइषोयेषां परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् । परीणसः णसकौटिल्येइत्ययंधातुर्गत्यर्थः धातूनामनेकार्थत्वात् परितोनसन्तिगच्छन्तीतिपरीणसः क्विप्चेतिक्विप् निपातस्यचेतिपूर्वपदस्यदीर्घत्वम् उपसर्गादसमासेपीतिणत्वम् व्यत्ययेनाद्युदात्तत्वम् यद्वा नशतिर्गतिकर्मा अस्मात्पूर्ववत्क्विपिशकारस्यसकारः । सनिष्यवः षणुदानेइत्यस्मादिन्सर्वधातुभ्यइतिकर्मणिइन्प्रत्ययः सनिमात्मनइच्छन्तीतिक्यचि सर्वप्रातिपदिकेभ्योलालसायामसुग्वक्तव्यःसुगागमोपिवक्तव्यइतिसुक् क्याच्छन्दसीत्युप्रत्ययः । नु ऋचितुनुघेतिसांहितिकोदीर्घः । सहः अस्मादुत्तरस्यमतुपश्छान्दसोलुक् ॥ २ ॥

तृतीयामृचमाह—

सतुर्वणिर्महाँअरेणुपौंस्येगिरेर्भृष्टिर्नभ्राजतेतुजाशवः ।
येनशुष्णंमायिनमायसोमदेदुध्रआभूषुरामयन्निदामनि ॥३॥

सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः । येन । शुष्णम् । मायिनम् । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ॥ ३ ॥

सइन्द्रःतुर्वणिः शत्रूणांहिंसिताक्षिप्रकारीवा तुर्वणिस्तूर्णवनिरितियास्कः । तूर्णसम्भजते-इतितस्यार्थः महान्प्रवृद्धश्चभवति तस्येन्द्रस्यशवोबलं पौंस्ये वीरैःपुरुषैःकर्तव्येसङ्ग्रामेअरेणु अनवद्यं तुजाशत्रूणांहिंसकंसत्भ्राजतेदीप्यते तत्रदृष्टान्तः—गिरेःपर्वतस्यभृष्टिर्न शृङ्गमिव तद्यथा उन्नतंसत्दीप्यते तद्वत् आयसः अयोमयकवचयुक्तदेहः दुध्रः दुष्टानांशत्रूणांधर्ताअवस्थापयिता एवंभूतइन्द्रः मदेसोमपानेनहर्षेसतियेनबलेनशुष्णंसर्वस्यशोषकमसुरंमायिनंमायाविनंआभुषु कारागृहेपुदामनिबन्धकेनिगडेनिरमयत् व्यवासयत् तद्बलमितिपूर्वेणान्वयः ॥ सतुर्वणिः तुर्वी हिंसार्थः अस्मादौणादिकोनिप्रत्ययः ।अरेणु रेणुवदाच्छादकत्वाद्रेणुशब्देनावद्यमुच्यते बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ।तुजा तुजहिंसायाम् इगुपधलक्षणःकः सुपांसुलुगितिविभक्तेराकारः। दुध्रः दुष्टान्ध्रियतेवस्थापयतीतिदुध्रः धृङ्अवस्थानेइत्यस्मादन्तर्भावितण्यर्थान्मूलविभुजादित्वात्कःप्रत्ययः यणादेशः रेफलोपश्छान्दसः ।रमयत् अमन्तत्वान्मित्त्वे मितांह्रस्वइतिह्रस्वत्वम् छान्दसःसंहितायांदीर्घः ॥ ३ ॥

चतुर्थीमृचमाह—

देवीयदितविषीत्वावृधोतयइन्द्रंसिषक्त्युषसंनसूर्यः ।
योधृष्णुनाशवसाबाधतेतमइयर्तिरेणुंबृहदर्हरिष्वणिः ॥४॥

देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इन्द्रम् । सिसक्ति । उषसम् । न । सूर्यः । यः । धृष्णुना । शवसा । बाधते । तमः । इयर्ति । रेणुम् । बृहत् । अर्हरिऽस्वनिः ॥ ४ ॥

---

१ नि० ६. १४. ।

यइन्द्रः धृष्णुनाधर्षकेणशवसाबलेनतमस्तमोरूपंवृत्रादिमसुरंबाधतेहिनस्ति ऊतयेरक्षणायत्वावृधात्वयास्तोत्रःवर्धितंतमिन्द्रंदेवीतविषी द्योतमानंबलंयदियदासिषक्तिसमवैतिसेवतइतियास्कः । सूर्यःउषसंन यथाउषोदेवतांसेवतेनित्यंतत्संबद्धोभवतीत्यर्थः तदानींअर्हरिष्वणिःगच्छन्तोहरन्तीत्यर्हरयःशत्रवः तेषांव्यथोत्पादनेनस्वनयिता शब्दयिताइन्द्रःरेणुंरेषणंहिंसनंवृहत्मभूतंइयर्तिशत्रून्गमयति॥ त्वावृधा त्वयावर्धतइतित्वावृत् क्विप्चेतिक्विप् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः छान्दसंदकारस्यात्वम् सुपांसुलुगितिद्वितीयायाआकारः । सिषक्ति षचसमवाये बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वम्। इयर्ति ऋसृगतौ जौहोत्यादिकः अस्मादन्तर्भावितण्यर्थाल्लट् शपःश्लुः द्विर्भावोरदत्वहलादिशेषाः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अभ्यासस्यासवर्णेइतीयङादेशः अनुदात्तेचेतिअभ्यासस्याद्युदात्तत्वम् पूर्वपदस्यवाक्यान्तरगतत्वेनपदादपरत्वान्निघाताभावः । रेणुं रीगतिरेषणयोः अस्मादौणादिकोनुप्रत्ययः । अर्हरिष्वणिः अर्तेरन्येभ्योपिदृश्यन्तइतिविच् अरोगच्छन्तश्चेमेहरयश्चेत्यर्हरयः तेषांस्वनयिता स्वमुस्वनध्वनशब्दे अस्माण्ण्यन्तादौणादिकइन्प्रत्ययः णेरनिटीतिणिलोपः घटादित्वान्मित्त्वे मितांह्रस्वइतिह्रस्वत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

वियत्तिरोधरुणमच्युतंरजोतिष्ठिपोदिवआतासुबर्हणा ।
स्वर्मीळ्हेयन्मदइन्द्रहर्ष्याहन्वृत्रंनिरपामौब्जोअर्णवम् ॥५॥

वि । यत् । तिरः । धरुणम् । अच्युतम् । रजः । अतिस्थिपः ।
दिवः । आतासु । बर्हणा । स्वःऽमीळ्हे । यत् । मदे । इन्द्र । हर्ष्या ।
अहन् । वृत्रम् । निः । अपाम् । औब्जः । अर्णवम् ॥ ५ ॥

यद्यदातिरः वृत्रेणतिरोहितं धरुणं सर्वस्यप्राणिजातस्यधारकं अच्युतंविनाशरहितं रजः उदकंदिवोद्युलोकात् आतासु आताइतिदिङ्नाम आतासुविस्तृतासुदिक्षु हेइन्द्र बर्हणाहन्तात्वं व्यतिष्ठिपः विविधंस्थापयाञ्चकर्थ तथा यद्यदास्वर्मीळ्हेमीळ्हइतिधननाम स्वःसुष्ठुगन्तव्यंमीळ्हंधनंयस्मिन्तस्मिन्सङ्ग्रामे मदे तवसोमपानेनहर्षेसति हर्ष्याहर्ष्ययाशक्त्या वृत्रमावरकमसुरमहन् त्वमवधीः तदानीं अपांपूर्णमर्णवंमेघंनिरौब्जः वर्षणाभिमुखंअधोमुखमकार्षीः वृष्टेरावरकंवृ-

त्वंहत्वावृष्टिजलेनभूमिंन्यसेक्षीरितितात्पर्यार्थः॥ अतिष्ठिपः तिष्ठतेर्ण्यन्ताल्लुङि चेरङ्गादेशः णिलो- पः तिष्ठतेरिदित्युपधायाइत्वम् चङीतिद्विर्वचने शर्पूर्वाःखयइतिथकारःशिष्यते चर्त्वेनतकारः अडागमउदात्तः यद्वृत्तयोगादनिघातः। बर्हणा सुपांसुलुगितिसोराकारः। स्वर्मीह्ळे मिहसेचने निष्ठा होढइतिढत्वम् झषस्तथोर्धोधइतितकारस्यधत्वम् तस्यष्टुत्वेढोढेलोपइतिढलोपः ढ्रलोपेपूर्व- स्येतिदीर्घत्वम् स्वरित्येतत् न्यङ्स्वरौस्वरिताविविस्वर्यते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेन वदेव शिष्यते। अहन् हन्तेर्लङिमध्यमैकवचने हल्ङ्याब्भ्यइतिसिर्लोपः यद्वृत्तयोगादनिघातः। औजः उब्जआर्जवे लङ्याडागमोवृद्धिश्च॥ ५॥

षष्ठीमृचमाह—

त्वंदि॒वोध॒रुणं॑धिष॒ओज॑सापृथि॒व्याइ॑न्द्र॒सद॑नेषु॒माहि॑नः।
त्वंसु॒तस्य॒मदे॑अरि॒णाअ॒पोवि॑वृ॒त्रस्य॑स॒मया॑पा॒ष्या॑रुजः॥६॥२१॥

त्वम्। दि॒वः। ध॒रुण॑म्। धि॒षे॒। ओज॑सा। पृ॒थि॒व्याः। इ॒न्द्र॒। सद॑नेषु। माहि॑नः। त्वम्। सु॒तस्य॑। मदे॑। अ॒रि॒णाः॒। अ॒पः। वि। वृ॒त्रस्य॑। स॒मया॑। पा॒ष्या॑। अ॒रु॒जः॒॥ ६॥ २१॥

हेइन्द्र माहिनः प्रवृद्धस्त्वं दिवोद्युलोकात् पृथिव्याःसदनेषुप्रदेशेषु ओजसाबलेनधरुणं सर्वस्यजगतोधारकंवृष्टिजलंधिषे दधिषे स्थापयसि यस्मात्त्वंसुतस्यसोमस्यपानेनमदे हर्षेसति अपोजलानि अरिणाःमेघान्निरगमयः वृत्रस्य आवरकंवृत्रंचसमयाधृष्टया पाष्याशिलया महा शक्त्या व्यरुजः विशेषेणाभांक्षीः॥ धिषे दधातेश्छान्दसोवर्तमानेलिट् द्विर्वचनप्रकरणे छन्दसिवे- तिवक्तव्यमितिवचनात् द्विर्वचनाभावः क्रादिनियमादिडागमे आतोलोपइटिचेत्याकारलोपः। माहिनः महेरिनण्चेतिमहपूजायामित्यस्मादौणादिकइनण्प्रत्ययः अतउपधायाइतिवृद्धिः। अरिणाः रीगतिरेषणयोः क्रैयादिकः लङिसिपि प्वादीनांह्रस्वइतिह्रस्वत्वम्। समया षमष्टम- वैक्लव्ये समतीतिसमा पचाद्यच् चितइत्यन्तोदात्तत्वम्। पाष्या पिषृसंचूर्णनेइत्यस्मादौणादिकइञ् प्रत्ययः बहुलवचनाद्उपधायाआकारः कृदिकारादक्तिनइतिङीप् प्रत्ययस्वरेणान्तोदात्तः तृतीयैकवचनेयणादेशेसति उदात्तस्वरितयोर्यणइतिस्वरितत्वम्। अरुजः रुजोभङ्गे तौदादिकः शस्यङित्वाद्गुणाभावः॥ ६॥

॥ इतिप्रथमस्यचतुर्थेएकविंशोवर्गः॥ २१॥

प्रमंहिष्ठायेतिषळृचंसप्तमंसूक्तंसव्यस्यार्षमैन्द्रंजागतं तथाचानुक्रान्तम्--प्रमंहिष्ठायेति वि- षुवतिनिष्केवल्येइदंसूक्तंशंसनीयं प्रमंहिष्ठायत्यमूष्वितीहतार्क्ष्यमन्ततइति उक्थसंस्थेक्रतौ तृतीयसवनेब्राह्मणाच्छंसिशस्त्रेप्येतत्सूक्तम् सूत्रितश्च--सर्वोःककुभःप्रमंहिष्ठायेदमुतइति ।

तत्रप्रथमामृचमाह--

प्रमंहि॑ष्ठाय॒बृह॒तेबृ॒हद्र॑येस॒त्यशु॑ष्माय॒तव॑सेम॒तिंभ॑रे।
अ॒पामि॑वप्र॒व॒णेयस्य॑दु॒र्धर॒॑राधो॑वि॒श्वायु॒शव॑से॒अपा॑वृतम् ॥१॥

प्र । मंहि॑ष्ठाय । बृ॒ह॒ते । बृ॒हत्ऽर॑ये । स॒त्यऽशु॑ष्माय । त॒वसे॑ । म॒तिम् । भ॒रे । अ॒पाम्ऽइ॑व । प्र॒व॒णे । यस्य॑ । दुः॒ऽधर॑म् । राधः॑ । वि॒श्वऽआ॑यु । शव॑से । अप॑ऽवृतम् ॥ १ ॥

मंहिष्ठाय मंहतिर्दानकर्मेतियास्कः । दातृतमाय बृहतेगुणैर्महतेबृहद्रयेमहाधनायसत्यशु- ष्मायअवितथबलायतवसेआकारतःप्रवृद्धाय एवंगुणविशिष्टायेन्द्रायमतिंमननीयांस्तुतिंभरे प्रकर्षेणसम्पादयामि यस्येन्द्रस्यबलंदुर्धरंअन्यैर्धर्तुमशक्यं तत्रदृष्टान्तः--प्रवणेनिम्नप्रदेशेअपामि- व यथाजलानांवेगःकेनाप्यवस्थापयितुंनशक्यतेतद्वत् तथा राधोधनंविश्वायुसर्वेपुव्याप्तं शवसे स्तोतॄणांबलाययेनेन्द्रेणापावृतंअपगतावरणंक्रियते तस्येन्द्रस्येतिपूर्वेणसम्बन्धः ॥ मंहिष्ठाय अ- तिशयेन मंहितामंहिष्ठः तुश्छन्दसीतीष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः बृहते बृहन्महतोरुपसं- ख्यानमितिविभक्तेरुदात्तत्वम् उत्तरयोश्चबहुव्रीहिस्वरः मतिं मन्त्रेवृषेत्यादिनाक्तिनउदात्तत्वम् अ- नुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः । दुर्धरम् धृञ्धारणे ईषद्दुःसुष्वितिकर्मणिखल् । विश्वायु विश्वस्मिन्सर्वस्मिनआयुगमनंयस्यतद्विश्वायुएवेश्छन्दसीणइत्युणप्रत्ययः बहुव्रीहौविश्वंसंज्ञा- यामितिपूर्वपदान्तोदात्तत्वम् । अपावृतम् कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १ ॥

द्वितीयामृचमाह--

अध॑ते॒विश्व॒मनु॑हासदि॒ष्टय॒आपो॑नि॒म्नेव॒सव॑नाह॒विष्म॑तः ।
यत्पर्व॑ते॒नस॒मशी॑तहर्य॒तइन्द्र॑स्य॒वज्रः॒श्नथि॑ताहि॒रण्ययः॑ ॥२॥

१ नि० १.७.।

अध॑ । ते॒ । विश्व॑म् । अनु॑ । ह॒ । अ॒स॒त् । इ॒ष्टये॑ । आप॑ः ।
नि॒म्नाऽइ॑व । सव॑ना । ह॒विष्म॑तः । यत् । पर्व॑ते । न । स॒म्ऽअशी॑त ।
ह॒र्य॒तः । इन्द्र॑स्य । वज्र॑ः । श्नथि॑ता । हि॒र॒ण्ययः॑ ॥ २॥

अधह अनन्तरमेव हेइन्द्र विश्वंसर्वमिदंजगत् तेतवसम्बन्धिनेइष्टयेयागायअन्वसत् अन्वभव॒त् यद्वा इष्टयेहविरादिभिस्तवप्राप्तयेइतियोज्यम्. हविष्मतोयजमानस्यसवनासवनानियज्ञजातानिनिम्नेव निम्नानिभूस्थलान्यापइवत्वांसम्भजन्तइतिशेषः हर्यतः शत्रुवधंप्रेप्सतइन्द्रस्य हर्यतिःप्रेप्साकर्मेतियास्कः[1]। यद्वा हर्यतः शोभनःहिरण्ययोहिरण्मयःश्नथिताशत्रूणांहिंसनशीलःवज्रःपर्वतेपर्ववतिशिलोच्चयेवृत्रेवायथदानसमशीतसंसुप्तोनाभवत् किन्तुजागरितःसन् अवधीदित्यर्थः यदाइन्द्रेणप्रेरितोवज्रः अप्रतिहतःसन्वृत्रमवधीत् तदाप्रभृत्येवतंयष्टुंसर्वेयजमानाःप्रावर्तिषतेतिभावः ॥ अध छान्दसंधत्वम् । असत् अस्तेर्लङि बहुलंछन्दसीतिशपोलुगभावः । इष्टये यजतेर्भावेक्तिनि वचिस्वपीत्यादिनासम्प्रसारणं व्रश्चादिनाषत्वम् व्यत्ययेनान्तोदात्तत्वम् यद्वा इषगतावित्यस्माद्भावेक्तिनि मन्त्रेवृषेतितस्योदात्तत्वम । निम्नेव सवना शेश्छन्दसिबहुलमितिशेर्लोपः।समशीत शीङ्स्वप्ने लङिसंज्ञापूर्वकस्यविधेरनित्यत्वात् शीङःसार्वधातुकइतिगुणाभावः । हर्यतः हर्यगतिकान्त्योः भृमृदृशीत्यादिनाअतच्प्रत्ययः । श्नथिता श्नथक्नथक्रथहिंसार्थाः ताच्छीलिकस्तृन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

अ॒स्मै भी॒माय॒ नम॑सा॒ सम॑ध्व॒र उषो॒ न शु॑भ्र॒ आ भ॑रा॒ पनी॑यसे ।
यस्य॒ धाम॒ श्रव॑से॒ नामे॑न्द्रि॒यं ज्योति॒रका॑रि ह॒रितो॒ नाय॑से ॥३॥

अ॒स्मै । भी॒माय॑ । नम॑सा । सम् । अ॒ध्व॒रे । उष॑ः । न । शु॒भ्रे॒ । आ ।
भ॒र॒ । पनी॑यसे । यस्य॑ । धाम॑ । श्रव॑से । नाम॑ । इ॒न्द्रि॒यम् । ज्योति॑ः ।
अका॑रि । ह॒रित॑ः । न । अय॑से ॥ ३ ॥

हेउषः उषोदेवते शुभ्रेशोभने त्वंभीमायशत्रूणांभयंकराय पनीयसेअतिशयेनस्तोतव्याय अस्माइन्द्रायअध्वरेहिंसारहितेऽस्मिन्यागेनेनिसंप्रत्यर्थे तथाचयास्कः—अस्त्युपमार्थस्यसम्प्र-

1 नि० ७. १७.।

त्यर्थेप्रयोगइहेवनिधेहीति । संप्रतिइदानींनमसा नमोहविर्लक्षणमन्नंसमाभरसम्यक्सम्पादय धामसर्वस्यधारकंनामस्तोत्रपु नमनशीलंप्रसिद्धंवाइन्द्रियंइन्द्रत्वस्यपरमैश्वर्यस्यलिङ्गंयस्येन्द्रस्य एवंविधंज्योतिः अयसेत्वायहविर्लक्षणान्नस्याभार्थंअयसेइतस्ततोगमनायअकारिक्रियते हरि-तौन यथाअश्वान्सादिनःस्वाभिलषितदेशंगमयन्तितद्वदिन्द्रोपिस्वाभिमतहविर्लाभायस्वकी-यंतेजोगमयतीतिभावः ॥ उपः पादादित्वान्निघाताभावः । शुभ्रे शुभदीप्तौ स्फायित-श्चीत्यादिनारक्प्रत्ययः । भर हृग्रहोर्भइतिभत्वम् द्व्यचोतस्तिङइतिदीर्घः । पनीयसे पनतेःस्तु-त्यर्थाद्बहुलवचनात्कर्मण्यसुन् तस्मादातिशायनिकेईयसुनि टेरितिटिलोपः । अकारि छन्दसि-लुङ्लङ्लिटइतिवर्तमानेकर्मणिलुङ् यद्वृत्तयोगान्निघातः अडागमउदात्तः । अयसे अयगता-वित्यस्माद्भावेअसुन् ॥ ३ ॥

चतुर्थीमृचमाह–

इमेतइन्द्रतेवयंपुरुष्टुतयेत्वारभ्यचरामसिप्रभूवसो ।
नहित्वदन्योगिर्वणोगिरःसघत्क्षोणीरिवप्रतिनोहर्यतद्वचः ॥४॥

इमे । ते । इन्द्र । ते । वयम् । पुरुऽस्तुत । ये । त्वा । आऽरभ्य ।
चरामसि । प्रभुवसो इति प्रभुऽवसो । नहि । त्वत् । अन्यः । गिर्वणः ।
गिरः । सघत् । क्षोणीःऽइव । प्रति । नः । हर्य । तत् । वचः ॥ ४ ॥

हेइन्द्र प्रभूवसोप्रभूतधन अतएवपुरुष्टुतपुरुभिर्बहुभिर्यजमानैःस्तुत येवयंत्वात्वामारभ्या-श्रयतयावलम्ब्य चरामसिचरामोयागेवर्तामहे तइमेवयं तेतवस्वभूताहेगिर्वणः गीर्भिर्वननीये-न्द्र त्वदन्यस्त्वत्तोन्यःकश्चिदपिगिरःस्तुतीःनहिसघत्नहिप्राप्नोति अतस्त्वंनोस्माकंतत्स्तु-तिलक्षणंवचःप्रतिहर्यकामयस्व क्षोणीरिव यथाक्षोणीपृथिवीस्वकीयानिभूतजातानिकामयते ॥ चरामसि इदन्तोमसिः शपःपित्त्वादनुदात्तत्वेधातुस्वरः यद्वृत्तयोगान्निघातः । सघत् षघहिं-सायां अत्रप्राप्त्यर्थः धातूनामनेकार्थत्वात् लेटयडागमः बहुलंछन्दसीतिविकरणस्यलुक् पादा-दित्वान्निघाताभावः । क्षोणीरिव हल्ङ्याब्भ्यइतिसुलोपाभावश्छान्दसः ॥ ४ ॥

---

१ नि॰ ७. ३१.।

पञ्चमीमृचमाह—

भूरिंतइन्द्रवीर्यं१ंतवंस्मस्यस्यस्तोतुर्मंघवन्काममापृंण।
अनुंतेद्यौर्बृंहतीवीर्यंममइयंचंतेपृथिवीनेंमओजंसे॥५॥

भूरि । ते । इन्द्र । वीर्यंम् । तवं । स्मसि । अस्य । स्तोतुः । मघऽवन् । कामंम् । आ । पृण । अनुं । ते । द्यौः । बृहती । वीर्यंम् । ममे । इयम् । च । ते । पृथिवी । नेमे । ओजंसे ॥ ५ ॥

हेइन्द्र तेतववीर्यंसामर्थ्यं भूरिबहु नकेनापिअवच्छेत्तुंशक्यते तादृशस्यतव वयंस्मसिस्वभूताभवामः हेमघवन् अस्यस्तोतुः त्वांस्तुवतोयजमानस्य काममभिलाषं आपृणआपूरय बृहती द्यौर्महान्द्युलोकोपि तेतववीर्यंअनुममेअन्वमंस्त इन्द्रेणसहावस्थानात् इयंचइयमपिपृथिवीते तवओजसेबलायनेमे मह्वीबभूव त्वद्बलान्नीतासती अधएववर्ततइतिभावः ॥ स्मसि अस्भुवि लटि श्नसोरल्लोपइत्यकारलोपः इदन्तोमसिः । पृण पृणप्रीणने अत्रप्रीतिहेतुतयापूरणंलक्ष्यते तुदादित्वाच्छप्रत्ययः तस्यङित्त्वाद्गुणाभावः । ममे माङ्मानेशब्देच ङित्त्वादात्मनेपदम् लिटि आतोलोपइटिचेत्याकारलोपः । नेमे णममह्वत्वे लिटि अतएकहल्मध्येइत्येत्वाभ्यासलोपौ तिङ्तिङइतिनिघातः ॥ ५ ॥

षष्ठीमृचमाह—

त्वंतमिन्द्रपर्वतंमहामुरुंवज्रेणवज्रिन्पर्वशश्चंकर्तिथ।
अवांसृजोनिवृंताःसर्तवाअपःसत्राविश्वंदधिषेकेवलंसहः॥६॥२२

त्वम् । तम् । इन्द्र । पर्वतम् । महाम् । उरुम् । वज्रेण । वज्रिन् । पर्वऽशः । चकर्तिथ । अवं । असृजः । निऽवृंताः । सर्तवे । अपः । सत्रा । विश्वंम् । दधिषे । केवंलम् । सहंः ॥ ६ ॥ २२ ॥

हेवज्रिन् वज्रवन्निन्द्र त्वंतंप्रसिद्धम् महां आयामतोमहान्तं उरुंविस्तीर्णंपर्वतंपर्ववन्तं मेघं वृत्रासुरंवा वज्रेणायुधेनपर्वशःपर्वणिपर्वणिचकर्तिथशकलीचकर्थ तेनमेघेननिवृताआवृताअपःसर्तवेसरणायगमनायअवासृजःअवाङ्मुखमसाक्षीः अतस्त्वमेवकेवलंविश्वंव्याप्तंसहोबलंदधिषे धारयसि नान्यःकश्चिदिनिपदेतत् तत्सत्रासत्यमेव सत्रेतिसत्यनाम सत्रा इत्येतिवना-

महुपाठाव॥ महांमहान्तं नकारवकारयोर्लोपश्छान्दसः। चर्कतिथ कृतीछेदने लिटि थलि अ-भ्यासस्योरदत्वहलादिशेषचुलानि। सर्तवै कृत्यार्थेतवैकेनितितवैप्रत्ययः कृन्मेजन्तइत्य-व्ययत्वे अव्ययादाप्सुपइतिसुपोलुक् अन्तश्चतवैयुगपदित्याद्यन्तयोर्युगपदुदात्तत्वम्। दधिषे लिटिक्रादिनियमादिट्॥ ६॥

॥ इतिप्रथमस्यचतुर्थेद्वाविंशोवर्गः॥ २२॥

॥ इतिप्रथमेमण्डलेदशमोनुवाकः॥ १०॥

एकादशानुवाकेसप्तसूक्तानि तत्रनूचिदितिनवर्चंप्रथमंसूक्तम् गोतमस्यनोधसआर्षं आ-ग्नेयं आद्याःपञ्चजगत्यः शिष्टाश्चतस्रस्त्रिष्टुभः तथाचानुक्रान्तम्—नूचिन्नवनोधागोतमआग्नेयंहि-चतुस्त्रिष्टुबन्तमिति हीतिवचनादुत्तरेचद्वेसूक्तेअग्निदेवताके अभिप्लवषडहस्यपञ्चमेहन्याग्नि-मारुते इदंजातवेदस्यंनिविद्धानम् तृतीयस्येतिखण्डेसूत्रितम्—पृक्षस्यवृष्णोवृष्णेशर्धायनूचि-त्सहोजाइत्याग्निमारुतमिति। प्रातरनुवाकस्याग्नेयेक्रतौआश्विनशस्त्रेचजागतेछन्दसि आदितः पञ्चर्चः सूत्रितंच—त्वमग्नेप्रथमोअङ्गिरानूचित्सहोजाअमृतोनितुन्दतइतिपञ्चेति।

तत्रप्रथमामृचमाह—

नूचित्सहोजाअमृतोनितुन्दतेहोतायद्दूतोअभवद्विवस्वतः।
विसाधिष्ठेभिःपथिभीरजोममआदेवतातेहविषाविवासति॥१॥

नु। चित्। सहःऽजाः। अमृतः। नि। तुन्दते। होता। यत्। दूतः। अभवत्। विवस्वतः। वि। साधिष्ठेभिः। पथिऽभिः। रजः। ममे। आ। देवऽताता। हविषा। विवासति॥ १॥

सहोजाःसहसाबलेनजातः अग्निर्हिबलेनमथ्यमानोरण्योःसकाशाज्जायते अमृतोमरणरहि-तः एवंभूतोग्निःनूचित्क्षिप्रमेवनितुन्दतेनितरांव्यथयति उत्पन्नमात्रस्याग्नेःस्प्रष्टुमशक्यत्वात् यद्वा निर्गच्छति तुन्दतिर्गत्यर्थःसौत्रोधातुः यद्यदाहोतादेवानामाह्वाताहोमनिष्पादकोवाअयमग्निःविव-स्वतःपरिचरतोयजमानस्यदेवान्प्रतिहविर्वहनायदूतोभवत्हविर्वहनेनियुक्तोभवति तदानींसाधि-ष्ठेभिःसमीचीनैःपथिभिः मार्गैःगच्छन्रजोन्तरिक्षंलोकंविममेनिर्ममे पूर्वविद्यमानमप्यन्तरिक्षंअग्-

त्कल्पमभूत् इदानींतस्यतेजसाप्रकाशमानंसवउत्पन्नमिवदृश्यते किञ्च देवताता देवतातेतियज्ञनाम देवताता देवतातौ यज्ञे हविषाचरुपुरोडाशादिलक्षणेनदेवानाविवासतिपरिचरति॥ अमृतः मृतंमरणमस्यनास्तीतिबहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम्।तुन्दते तुदव्यथने स्वरितेत्त्वादात्मनेपदम् नकारोपजनश्छान्दसः। साधिष्ठेभिः बाढशब्दादातिशायनिकेइष्ठनिअन्तिकबाढयोर्नेदसाधाविति साधादेशः बहुलंछन्दसीतिभिसऐसभावः नित्वादाद्युदात्तत्वम्। देवताता सर्वदेवात्तातिलिति स्वार्थिकस्तातिल्प्रत्ययः तेनचतत्सम्बन्धीयज्ञोलक्ष्यते यद्वा देवान्हविषाआविवासतीतियोज्यम् सुपांसुलुगितिविभक्तेर्डादेशः लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम्॥ १॥

द्वितीयामृचमाह—

आ स्वम॑द्म॑ यु॒वमा॑नो अ॒जर॑स्तृ॒ष्व॑वि॒ष्यन्न॑त॒सेषु॑ तिष्ठति।
अत्यो॒ न पृ॒ष्ठं प्रु॑षि॒तस्य॑ रोचते दि॒वो न सानु॑ स्त॒नय॑न्नचिक्रदत्॥२॥

आ। स्वम्। अद्म॑। यु॒वमा॑नः। अ॒जरः॑। तृ॒षु। अ॒वि॒ष्यन्। अ॒त॒सेषु॑। ति॒ष्ठ॒ति॒। अत्यः॑। न। पृ॒ष्ठम्। प्रु॒षि॒तस्य॑। रो॒च॒ते॒। दि॒वः। न। सानु॑। स्त॒नय॑न्। अ॒चि॒क्र॒द॒त्॥ २॥

अजरोजरारहितोयमग्निः स्वंस्वकीयंअद्मअदनीयंतृणगुल्मादिकंयुवमानः स्वकीयज्वालयासंमिश्रयन् तदनन्तरंचाविष्यन्भक्षयंश्च अविष्यन्नित्येतदत्तिकर्मसुपठितम् एवंभूतोग्निस्तृषुक्षिप्रमेवअतसेषुप्रभूतेषुकाष्ठेषुआतिष्ठति आरोहति अत्रातसशब्दःकाष्ठवाची अंतसंनशुष्कमितिदर्शनात् प्रुषितस्यदग्धुमितस्ततःप्रवृत्तस्याग्नेःपृष्ठमुपर्यवस्थितज्वालाजालंअत्योनरोचते यथा सन्ततगमनशीलोत्योश्वइतस्ततोगच्छन्शोभते एवमग्नेर्ज्वालापिसर्वतोगच्छन्तीशोभतइत्यर्थः तदानींदिवोद्युलोकस्यसम्बन्धिसानुसमुच्छ्रितमभ्रंस्तनयन्न शब्दयन्निव अचिक्रदत् गम्भीरशब्दमात्मानमचीकरत्॥युवमानः युमिश्रणे व्यत्ययेनात्मनेपदम् शपिप्राप्तेव्यत्ययेनशः तस्यबहुलंछन्दसीतिलुगभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरएवशिष्यते। अजरः बहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम्। अचिक्रदत् कदिक्रदिक्लदिआह्वानेरोदनेच अस्माण्ण्यन्तात्चङि चङि आगमानुशासनस्यानित्यत्वान्नुमभावः द्विर्भावहलादिशेषसन्वद्भावेत्वानि॥२॥

१ ऋ० सं० १. ६. २३. १.

तृतीयामृचमाह—

क्राणारुद्रेभिर्वसुभिःपुरोहितोहोतानिषत्तोरयिषाळमर्त्यः।
रथोनविक्ष्वृंजसानआयुषुव्यानुषग्वार्यादेवऋण्वति ॥३॥

क्राणा। रुद्रेभिः। वसुऽभिः। पुरःऽहितः। होता। निऽसत्तः।
रयिषाट्। अमर्त्यः। रथः। न। विक्षु। ऋञ्जसानः। आयुषु।
वि। आनुषक्। वार्या। देवः। ऋण्वति ॥ ३ ॥

क्राणाहविर्वहनंकुर्वाणः रुद्रेभीरुद्रैः वसुभिश्चपुरोहितःपुरस्कृतोहोतादेवानामाह्वातानिषत्तः हविःस्वीकरणायदेवयजनेनिषण्णःरयिषाट् रयीणांशत्रुधनानांअभिभविता अमर्त्योमरणरहितः एवंभूतोदेवःद्योतमानोग्निः विक्षुप्रजासुलौकिकजनेषु रथोन रथइवआयुषुयजमानलक्षणेषु मनुष्येषुऋञ्जसानः स्तूयमानः वार्या वार्याणिसम्भजनीयानिधनानिआनुषक्आनुपक्र्यंयथाभवति तथाव्यृण्वतिविशेषेणप्रापयति यद्वा वार्याणिवरणीयानिहवींपिस्वयंप्राप्नोति॥ क्राणा करोतेः शानच्बहुलंछन्दसीतिविकरणस्यलुक् शानचोङित्त्वाद्गुणाभावेयणादेशः चितइत्यन्तोदात्तत्वम् सुपांसुलुगितिसोःपूर्वसवर्णदीर्घत्वम् । निषत्तः षद्लृविशरणगत्यवसादनेषु अस्मात्कर्मणिनिष्ठा नसत्तनिषत्तेत्यादिनानिष्ठानत्वाभावोनिपातितः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । रयिषाट् षह अभिभवे छन्दसिसहइतिण्विः सहेःसाडःसइतिषत्वम् । ऋञ्जसानः ऋञ्जतिःस्तुतिकर्मा ऋञ्जसानजित्यनुवृत्तौऋञ्जिवृधिमन्दिसहिभ्यःकिदितिकर्मण्यसानच्प्रत्ययः चितइत्यन्तोदात्तत्वम्। आयुषु आयवइतिमनुष्यनाम इण्गतावित्यस्माच्छन्दसीणइत्युण्प्रत्ययः वृद्ध्यायादेशौ । वार्या वृङ् संभक्तौ ऋहलोर्ण्यत् तित्स्वरितेप्राप्ते ईडवन्दवृशंसदुहांण्यतइत्याद्युदात्तत्वम् शेश्छन्दसीतिशेर्लोपः । ऋण्वति रिविगतौ व्यत्ययेनसम्प्रसारणम् इदित्त्वान्नुम् कर्तरिशप् ॥ ३ ॥

चतुर्थीमृचमाह—

विवातजूतोअतसेषुतिष्ठतेवृथाजुहूभिःसृण्यातुविष्वणिः।
तृषुयदग्नेवनिनोवृषायसेकृष्णंतएमरुशदूर्मेअजर ॥ ४ ॥

वि । वातऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः । तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ॥ ४ ॥

वातजूतोवायुनाप्रेरितःतुविष्वणिःमहास्वनः एवंभूतोग्निः जुहूभिःस्वकीयाभिर्जिह्वाभिःसृण्यासरणशीलेनतेजःसमूहेनचयुक्तःसन् वृथ्येत्यनायासवचनःवृथाअनायासेनैवअतसेषुअन्ते-षुवृक्षेषुवितिष्ठतेविशेषेणतिष्ठति हेअग्ने यद्यदावनिनोवनसम्बन्धान्वृक्षान्दग्धुंवृषायसेवृषवदाचरसिदहसीत्यर्थः हेरुशदूर्मेदीप्तज्वाल अजरजरारहिताग्ने तेतवए मगमनमार्गःकृष्णंकृष्णवर्णोभवति ॥ वातजूतः जूइतिसौत्रोधातुः वातेनजूतोवातजूतः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । वितिष्ठते समवप्रविभ्यइत्यात्मनेपदम् । जुहूभिः हुदानादनयोः हूयतेआस्विति जुह्वःस्रुचःश्लुवच्चेतिक्विप् चकाराद्दीर्घःश्लुवद्भावाद्द्विर्भावादि धातोरित्यन्तोदात्तत्वम् । सृण्या सृगतौ सरतीतिसृणिःसृवृषिभ्यांकिदितिनिप्रत्ययः । एम एत्यनेनेत्येम मार्गः इण्गतावित्यस्मात्करणेऔणादिकोमनिन् नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

तपुर्जंभोवनआवातचोदितोयूथेनसाह्वाँअववातिवंसगः।
अभिव्रजन्नक्षितंपाजसारजःस्थातुश्चरथंभयतेपतत्रिणः॥५॥२३

तपुःऽजम्भः । वने । आ । वातऽचोदितः । यूथे । न । साह्वान् । अव । वाति । वंसगः । अभिऽव्रजन् । अक्षितम् । पाजसा । रजः । स्थातुः । चरथम् । भयते । पतत्रिणः ॥ ५ ॥ २३ ॥

तपुर्जम्भःतपूंषिज्वालाएवजम्भाआयुधानिमुखानिवायस्यसतथोक्तः वातचोदितःवायुनाप्रेरितः एवंभूतोग्निर्यूथेज्वालासमूहेसति अक्षितमक्षीणंरजःआर्द्रवृक्षान्तर्गतमुदकं पाजसातेजोबलेनअभिव्रजन्आभिमुख्येनगच्छन्वनेअरण्येसाह्वान्सर्वमभिभवन् आ आभिमुख्येनअववातिव्याप्नोति तत्रदृष्टान्तः-वंसगोन यथावननीयगतिर्वृषःगोयूथेसर्वमभिभवन्वर्ततेतद्वत् यस्मादेवंतस्मात्पतत्रिणःपतनवतोग्नेःसकाशात्स्थातुः स्थावरं चरथंचरज्जंगमंच भयतेबिभेति ॥ साह्वान् दाश्वान्साह्वानितिक्वसुप्रत्ययान्तोनिपातितः दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतो-

टिनित्यमितिसानुनासिकआकारः एत्वलोपौ ह्रस्वश्छान्दसः । स्थातुः कमिगमिजनीत्यादिनाविहितःतुप्रत्ययोबहुलवचनात्तिष्ठतेरपिभवति यद्वा स्थातुरनन्तरंचरथंभयते प्रथमंस्थातुःस्थावरंबिभेतिपश्चाच्चरथमित्यर्थः । चरथं चरगत्यर्थः अस्मादौणादिकोथप्रत्ययः । भयते ञिभीभये व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिश्लोरभावः गुणावादेशौ ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेत्रयोविंशोवर्गः ॥ २३ ॥

षष्ठीमृचमाह—

द॒धुष्ट्वा॒भृग॑वो॒मानु॑षे॒ष्वारयिं॒नचारुं॑सु॒हवं॒जने॑भ्यः ।
होता॑रमग्ने॒अति॑थिं॒वरे॑ण्यंमि॒त्रंनशेवं॑दि॒व्याय॒जन्म॑ने ॥ ६ ॥

द॒धुः । त्वा॒ । भृग॑वः । मानु॑षेषु । आ । र॒यिम् । न । चारु॑म् ।
सु॒ऽहव॑म् । जने॑भ्यः । होता॑रम् । अ॒ग्ने॒ । अति॑थिम् । वरे॑ण्यम् ।
मि॒त्रम् । न । शेव॑म् । दि॒व्याय॑ । जन्म॑ने ॥ ६ ॥

हेअग्ने त्वात्वांमानुषेषुमनुष्येषुमध्ये भृगवः एतत्संज्ञामहर्षयः दिव्यायजन्मनेदेवत्वप्राप्तये चारुंरयिंन शोभनंधनमिवआदधुः आधानसंभारेषुमन्त्रैःस्थापनेनसमस्कुर्वन् कीदृशंत्वां जनेभ्यः सुहवंयजमानार्थंआह्वातुंसुशकं होतारंदेवानामाह्वातारंअतिथिंअतिथिवत्पूज्यं यद्वा देवयजनदेशेषुसततंगन्तारंवरेण्यंवरणीयं मित्रंनशेवं यथासखासुखकरोभवतितद्वत्सुखकरमित्यर्थः ॥ दधुः लिट्युसिआतोलोपइटिचेत्याकारलोपः युष्मत्तत्ततक्षुष्वन्तःपादमितिविसर्जनीयस्यषत्वम् । सुहवं ह्वयतेरीषद्दुःसुष्विितिखल् बहुलंछन्दसीतिसंप्रसारणम् परपूर्वत्वं गुणावादेशौ लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् कदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

होता॑रंस॒प्तजु॒ह्वो॒३॒॑यजि॑ष्ठं॒यंवा॒घतो॑वृ॒णते॑अध्व॒रेषु॑ ।
अ॒ग्निंविश्वे॑षामर॒तिंवसू॑नांसप॒र्यामि॒प्रय॑सा॒यामि॒रत्न॑म् ॥७॥

होता॑रम् । स॒प्त । जु॒ह्वः॑ । यजि॑ष्ठम् । यम् । वा॒घतः॑ । वृ॒णते॑ ।
अ॒ध्व॒रेषु॑ । अ॒ग्निम् । विश्वे॑षाम् । अ॒र॒तिम् । वसू॑नाम् । स॒प॒र्यामि॑ ।
प्रय॑सा । यामि॑ । रत्न॑म् ॥ ७ ॥

सप्त सप्तसंख्याकाः जुह्वः होतारः वाघतः ऋत्विजःअध्वरेषुयागेषु यजिष्ठंयष्टृतमंहोतारंदेवानामाह्वातारं यमग्निंवृणतेसम्भजन्ते विश्वेषांसर्वेषांवसूनांअरतिंप्रापयितारंतमग्निंमयसाहविर्लक्षणेनान्नेनसपर्यामिपरिचरामि रत्नंरमणीयंकर्मफलंच यामि याचामि॥वृणते वृङ्संभक्तौ क्र्यादिकःप्रत्ययस्वरः। अरतिं ऋगतिप्रापणयोः अस्मादौणादिकोवहिवस्यर्तिभ्यश्चिदित्यतिप्रत्ययः चित्त्वादन्तोदात्तत्वम्। सपर्यामि सपर्यतिःपरिचरणकर्मा सपरपूजायामितिधातुःकण्ड्वादिःअतो यकएवस्वरःशिष्यते पादादित्वान्निघाताभावः। यामि याचामीत्यस्यवर्णलोपश्छान्दसः॥७॥

अष्टमीमृचमाह—

अच्छिद्रासूनोसहसोनोअद्यस्तोतृभ्योमित्रमहःशर्मयच्छ।
अग्नेगृणन्तमंहसउरुष्योर्जोनपात्पूर्भिरायसीभिः॥८॥

अच्छिद्रा। सूनो इति। सहसः। नः। अद्य। स्तोतृऽभ्यः।
मित्रऽमहः। शर्म। यच्छ॥ अग्ने। गृणन्तम्। अंहसः। उरुष्य।
ऊर्जः। नपात्। पूःऽभिः। आयसीभिः॥ ८॥

हेसहसःसूनो बलस्यपुत्रबलेनहिमथ्यमानोग्निर्जायते मित्रमहः अनुकूलदीप्तिमन्नग्ने नोस्मभ्यं स्तोतृभ्यः अद्यास्मिन्कर्मणिअच्छिद्राअच्छेद्यानिशर्मशर्माणिसुखानियच्छदेहि किञ्च हेऊर्जोनपात् अन्नस्यपुत्र भुक्तेनान्नेनजठराग्नेःप्रवर्धनादग्नेरन्नपुत्रत्वं एवंविधाग्ने गृणन्तंत्वांस्तुवन्तंआयसीभिःव्याप्तैः यद्वा अयोवद्दृढतरैः पूर्भिःपालनैःअंहसःपापात्उरुष्यरक्ष उरुष्यतीरक्षाकर्मेतियास्कः[1]॥ अच्छिद्रा शेश्छन्दसीतिशेर्लोपः। सूनोसहसः परमपिच्छन्दसीतिपरस्यषष्ठ्यन्तस्यपूर्वामन्त्रिताङ्गवद्भावेसतिपदद्वयस्याष्टमिकंसर्वानुदात्तत्वम्। शर्म सुपांसुलुगितिविभक्तेर्लुक्। ऊर्जोनपात् नपातयतीतिनपात् नभ्राण्नपादितिनञःप्रकृतिभावः सुबामन्त्रितेइतिषष्ठ्यन्तस्यपराङ्गवद्भावेसतिपादादित्वादाष्टमिकनिघाताभावेपाष्ठिकमामन्त्रिताद्युदात्तत्वम्। पूर्भिः पॄपालनपूरणयोरित्यस्मात्सम्पदादिलक्षणोभावेक्विप् उत्वदीर्घौ सावेकाचइतिविभक्तेरुदात्तत्वम्॥८॥

नवमीमृचमाह—

भवावरूथंगृणतेविभावोभवामघवन्मघवद्भ्यःशर्म।
उरुष्याग्नेअंहसोगृणन्तंप्रातर्मक्षूधियावसुर्जगम्यात्॥९॥२४॥

1 नि० ५. २३.।

भवं । वरूथम् । गृणते । विभाऽवः । भवं । मघऽवन् । मघवंतऽभ्यः ।
शर्म । उरुष्य । अग्ने । अंहसः । गृणन्तम् । प्रातः । मक्षु ।
धियाऽवसुः । जगम्यात् ॥ ९ ॥ २४ ॥

हेविभावः विशिष्टप्रकाश अग्ने गृणतेत्वांस्तुवते यजमानाय वरूथमितिगृहनाम वरूथंअनिष्टनिवारकंगृहंभव हेमघवन् धनवन्नग्ने मघवद्भ्योहविर्लक्षणधनयुक्तेभ्योयजमानेभ्यः शर्मसुखंयथाभवति तथाभव हेअग्ने गृणन्तंस्तुवन्तंअंहसःपापकारिणः शत्रोरुरुष्यरक्ष ॥ धियावसुः कर्मणाबुद्ध्यावावासधनोग्निः प्रातरिदानीमिवपरेद्युरपिमक्षुशीघ्रंजगम्यात् आगच्छतु ॥ वरूथम् वृञ्वरणे जॄवृञ्भ्यामूथनित्यूथन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । गृणतेशतुरनुमइतिविभक्तेरुदात्तत्वम् । विभावः विशिष्टाभाःविभाः आतोमनिन्निति विच् तदस्यास्तीतिमतुप् मादुपधाया इतिमतुपोवत्वम् मतुवसोरुरितिनकारस्यरुत्वम् । मघवद्भ्यः मघवाबहुलमितिमघवनशब्दस्य तृआदेशः सघनानुबन्धकृतमनेकाल्त्वमितिवचनात् अलोन्त्यस्येत्यन्त्यस्यभवति । मक्षु ऋचितुनुघमक्षुइतिदीर्घः । धियावसुः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् पूर्वपदस्यसावेकाचइतिविभक्तेरुदात्ता लुगभावश्छान्दसः । जगम्यात् गम्लृसृपृगतौ लिङिबहुलंछन्दसीतिशपःश्लुः ॥ ९ ॥

॥ इतिप्रथमस्यचतुर्थेचतुर्विंशोवर्गः ॥ २४ ॥

वयाइदित्यष्टर्चंद्वितीयंसूक्तम् नोधसआर्षंत्रैष्टुभं वैश्वानरगुणकोग्निर्देवता तथाचानुक्रान्तम्—वयाइत्यष्टौवैश्वानरीयमिति सूक्तविनियोगोलिङ्गादवगन्तव्यः ।

तत्रप्रथमामृचमाह—

वयाइदंग्नेअग्नयंस्तेअन्येत्वेविश्वेंअमृतामादयन्ते ।
वैश्वानरनाभिरसिक्षितीनांस्थूणेवजनाँउपमिद्ययन्थ ॥ १ ॥

वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे ।
अमृताः । मादयन्ते । वैश्वानर । नाभिः । असि । क्षितीनाम् ।
स्थूणाऽइव । जनान् । उपऽमित् । ययन्थ ॥ १ ॥

वयाः शाखावेतेर्वातायनाभवन्तीतियास्कः । हेअग्ने येन्येअग्नयःसन्तितेसर्वेपितेतववयाइव शाखाएव तवस्वत्तोन्येनसन्तीतिभावः किञ्च त्वेत्वयिसतिविश्वेसर्वेअमृताअमरणधर्माणोदेवा-

नि० १. ४. ।

मादयन्तेहृष्यन्ति नहित्वद्व्यतिरेकेणतेजोविर्तुशक्यते हेवैश्वानरविश्वेषांनराणांजाठररूपेणसम्बन्धिन्नग्ने क्षितीनांमनुष्याणांनाभिःसन्नद्धासि अवस्थापकोभवसि अतस्त्वंउपमिदुपस्थापयितासन् यद्वा उपमिदित्येतद्दृष्टान्तविशेषणम् जनान्ययन्थअधारयः तत्रदृष्टान्तः—उपमिदुपनिखातास्थूणेव वंशधारणार्थंनिखातस्तम्भोयथागृहोपरिस्थवंशंधारयतितद्वत् ॥ वैश्वानर विश्वेचेमेनराःविश्वानराः नरेसंज्ञायामितिपूर्वपदस्यदीर्घः तत्सम्बन्धीवैश्वानरः तस्येदमित्यण् । नाभिः नहोभश्चेति इञ्प्रत्ययोभकारश्चान्तादेशः ञित्वादाद्युदात्तत्वम् । असि तासस्त्योर्लोपइतिसलोपः। क्षितीनां क्षिनिवासगत्योः अस्मात् क्तिच्क्तौचसंज्ञायामितिक्तिच् अन्तोदात्तात् क्षितिशब्दादुत्तरस्यनामोनामन्यतरस्यामित्युदात्तत्वम् । उपमित् डुमिञ्प्रक्षेपणे अस्मादुपपूर्वात् बहुलवचनात्कर्मणिक्विप् तुगागमः । ययंथ यमउपरमे लिटिथलिक्रादिनियमादिट्प्राप्तेउपदेशेत्वतइतिप्रतिषेधः ॥ १ ॥

विषुवत्संज्ञेहन्याग्निमारुतेमूर्धादिवोनाभिरग्निःपृथिव्याइतिवैकल्पिकोनुरूपस्तृचः विषुवान्दिवाकीर्त्यइतिखण्डेसूत्रितम्—मूर्धानंदिवोअरतिंपृथिव्यामूर्धादिवोनाभिरग्निःपृथिव्याइतितिस्रइति।

तत्रप्रथमांसूक्तेद्वितीयामृचमाह—

मूर्धादिवोनाभिरग्निःपृथिव्याअथाभवदरतीरोदस्योः ।
तंत्वादेवासोजनयन्तदेवंवैश्वानरज्योतिरिदार्याय ॥ २ ॥

मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् ।
अरतिः । रोदस्योः । तम् । त्वा । देवासः । अजनयन्त । देवम् ।
वैश्वानर । ज्योतिः । इत् । आर्याय ॥ २ ॥

अयमग्निः दिवोद्युलोकस्यमूर्धाशिरोवत्प्रधानभूतोभवति पृथिव्याभूमेश्चनाभिःसन्नाहकःरक्षकइत्यर्थः अथानन्तरं रोदस्योःद्यावापृथिव्योः अयंअरतिः अधिपतिरभवत् हेवैश्वानर तंतादृशंदेवंदानादिगुणयुक्तंत्वात्वांदेवासःसर्वेदेवाः आर्यायविदुषेमनवेयजमानायवा ज्योतिरित्ज्योतीरूपमेवअजनयन्तउदपादयन् ॥ मूर्तंमस्मिन्धीयतइतिमूर्धा श्वन्नुक्षन्नित्यादौनिपातनाद्रूपसिद्धिः । पृथिव्याः पृथिवीशब्दः षिद्गौरादिभ्यश्चेतिङीष्प्रत्ययान्तोन्तोदात्तः । अजनयन्त जनीजृष्क्नसुरञ्जोमन्ताश्चेतिमित्त्वान्मितांह्रस्वइतिह्रस्वत्वम् ॥ २ ॥

तृतीयामृचमाह—

आसूर्ये॑नर॒श्मयो॑ध्रु॒वासो॑वैश्वान॒रेद॑धिरे॒ग्नावसू॑नि ।
यापर्व॑ते॒ष्वोष॑धीष्व॒प्सु॒यामानु॑षे॒ष्वसि॒तस्य॒राजा॑ ॥ ३ ॥

आ । सूर्ये॑ । न । र॒श्मयः॑ । ध्रु॒वासः॑ । वै॒श्वा॒न॒रे । द॒धि॒रे । अ॒ग्ना । वसू॑नि । या । पर्व॑तेषु । ओष॑धीषु । अ॒प्ऽसु । या । मानु॑षेषु । असि॑ । तस्य॑ । राजा॑ ॥ ३ ॥

अग्नावैश्वानरेग्नौवसूनिधनान्यादधिरेआहिताग्निस्थापितानिबभूवुः तत्रदृष्टान्तः—ध्रुवासो-निश्चलारश्मयःकिरणाःसूर्येन यथासूर्येआधीयन्तेतद्वत् अतस्त्वंपर्वतादिषुयानिधनानिविद्यन्ते तस्यधनजातस्यराजासिअधिपतिर्भवसि॥ अग्ना सुपांसुलुगितिविभक्तेर्डादेशः । या शेश्छन्दसि-बहुलमितिशेर्लोपः।ओषधीषु उषदाहे ओषःपाकःभावेघञ् ञित्वादाद्युदात्तत्वम् ओषआसुधीय-तेइत्योषधयः कर्मण्यधिकरणेचेतिकिप्रत्ययः दासीभारादिषुपठितत्वात् पूर्वपदप्रकृतिस्वरत्वम्। सप्तमीबहुवचनेओषधेश्चविभक्तावप्रथमायामितिदीर्घः।अप्सुऊडिदमितिविभक्तेरुदात्तत्वम्॥३॥

चतुर्थीमृचमाह—

बृ॒ह॒तीइ॑वसू॒नवे॒रोद॑सी॒गिरो॒होता॑मनु॒ष्यो॒३॒॑नद॒क्षः ।
स्व॑र्वते॒स॒त्यशु॑ष्मायपू॒र्वीर्वै॑श्वा॒न॒राय॒नृत॑माययह्वीः ॥ ४ ॥

बृ॒ह॒तीइ॒वेति॑ बृ॒ह॒तीऽइ॑व । सू॒नवे॑ । रोद॑सी॒ इति॑ । गिरः॑ । होता॑ । म॒नु॒ष्यः॑ । न । दक्षः॑ । स्वः॑ऽवते । स॒त्यऽशु॑ष्माय । पू॒र्वीः । वै॒श्वा॒न॒राय॑ । नृऽत॑माय । य॒ह्वीः ॥ ४ ॥

रोदसीद्यावापृथिव्यौसूनवेस्वपुत्रायवैश्वानराय बृहतीइव प्रभूतेइवाभूतां वैश्वानरस्यद्या-वापृथिव्योःपुत्रत्वंमन्त्रान्तरेस्पष्टमवगम्यते—उभापितरामहयन्नजायताग्निर्द्यावापृथिवीभूरिरेतसे-ति । महतोवैश्वानरस्यावस्थानायद्यावापृथिव्यौविस्तृतेजातेइत्यर्थः किञ्चायंहोतादक्षःसमर्थः पूर्वीर्बहुविधाःयह्वीर्महतीर्गिरःस्तुतीर्वैश्वानरायाग्नयेमायुङ्क्तेतिशेषः कीदृशायस्वर्वतेशोभनगमनयु-

1 ऋ० सं० २.८.२१.।

कायसत्यशुष्मायावितथबलाय नृतमायातिशयेनसर्वेषांनेत्रे तत्रदृष्टान्तः—मनुष्योन यथामनुष्यो-लौकिकोवन्दीदातारंमभुम् बहुविधयास्तुत्यास्तौति तद्वत् ॥ मनुष्यः मनोर्जातावञ्यतोषुक्चेतिजा-तौगम्यमानायांमनुशब्दाद्यञ्पुगागमश्च तित्स्वरितमितिस्वरितत्वम् यतोनावइत्याद्युदात्तत्वं-भवति तत्रहि द्व्यजित्यनुवर्तते । स्ववंते सुपूर्वाद्दर्तेर्भावेक्विप् ततोमतुप् मादुपधायाइतिवत्वम् ॥४॥

पञ्चमीमृचमाह—

दिवश्चित्तेबृहतोजातवेदोवैश्वानरप्ररिरिचेमहित्वम् ।
राजाकृष्टीनामसिमानुषीणांयुधादेवेभ्योवरिवश्चकर्थ ॥५॥

दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे ।
महिऽत्वम् । राजा । कृष्टीनाम् । असि । मानुषीणाम् । युधा ।
देवेभ्यः । वरिवः । चकर्थ ॥ ५ ॥

हेजातवेदः जातानांवेदितः वैश्वानराग्ने तेतवमहित्वंमाहात्म्यंबृहतोमहतः दिवश्चिद्द्युलो-कादपिप्ररिरिचेप्रववृधे किञ्च त्वंमानुषीणांमनोर्जातानांकृष्टीनांप्रजानांराजासिअधिपतिर्भवसि तथावरिवःअसुरैरपहृतंधनंयुधायुद्धेनदेवेभ्यश्चकर्थदेवाधीनमकार्षीः ॥ वैश्वानर पादादित्वादा-ष्टमिकनिघाताभावः । रिरिचे रिचिर्विरेचने अत्रोपसर्गवशात्तद्विपरीतेआधिक्येवर्तते । कृष्टीनां नामन्यतरस्यामितिनामउदात्तत्वम् । मानुषीणां मनुषशब्दोमनोर्जातावित्यञ्प्रत्ययान्तः आद्युदा-त्तः ङीपिमात्तवदपवादतयाशार्ङ्गरवाद्यञइतिङीन् नित्त्वादाद्युदात्तत्वम् ङ्याश्छन्दसिबहुलमितिब-हुलवचनान्नामउदात्तस्याभावः । युधा युधसम्प्रहारेइत्यस्मात्संपदादिलक्षणोभावेक्विप् वरिवः-तिधननाम नब्विषयस्येत्याद्युदात्तत्वम् ॥ ५ ॥

षष्ठीमृचमाह—

प्रनूमहित्वंवृषभस्यवोचंयंपूरवोवृत्रहणंसचन्ते ।
वैश्वानरोदस्युमग्निर्जघन्वाँअधूनोत्काष्ठाअवशंबरंभेत् ॥ ६ ॥

प्र । नु । महिऽत्वम् । वृषभस्य । वोचम् । यम् । पूरवः ।
वृत्रऽहनम् । सचन्ते । वैश्वानरः । दस्युम् । अग्निः । जघन्वान् ।
अधूनोत् । काष्ठाः । अव । शम्बरम् । भेत् ॥ ६ ॥

अत्रवैश्वानरशब्देनमध्यमस्थानस्थोवैद्युतोग्निरभिधीयते पूरवइतिमनुष्यनाम पूरवोमनुष्याःवृत्रहणंआवरकस्यमेघस्यहन्तारं यंवैश्वानरंसचन्तेवर्षार्थिनःसेवन्ते तस्यवृषभस्यअपांवर्षितुर्वैश्वानरस्यमहित्वंमाहात्म्यंनुक्षिप्रंप्रवोचंप्रब्रवीमि किंतदित्यतआह अयंवैश्वानरोग्निर्दस्युंरसानांकर्मणांवोपक्षयितारं राक्षसादिकंजघन्वान् हतवान्तथाकाष्ठाअपोवृष्ट्युदकानिअधूनोत् अधोमुखान्यपातयत् शम्बरंतन्निरोधकारिणंमेघंअवभेत् अवाभिनत्॥ वोचं छन्दसिलुङ्लङ्लिटइति वर्तमानेलुङि अस्यतिवक्तीत्यादिनाच्लेरङादेशः वचउमित्युमागमः गुणः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। जघन्वान् हन्तेर्लिटःक्वसुः अभ्यासाच्चेत्यभ्यासादुत्तरस्यहकारस्यघत्वम् विभाषागमहनेतिविकल्पनादिडभावः। भेत् भिदिर्विदारणे लङिबहुलंछन्दसीतिविकरणस्यलुक् हल्ङ्याब्भ्यइतितकारस्यलोपः पूर्ववदडभावः। अत्रनिरुक्तम्—प्रब्रवीमितन्महित्वंमाहाभाग्यंवृषभस्यवर्षितुरपांयंपूरवःपूरयितव्यामनुष्यावृत्रहणंमेघहनंसचन्तेसेवन्तेवर्षकामादस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसाउपदासयतिकर्माणितमग्निर्वैश्वानरोघ्नन्नवाधूनोदपःकाष्ठाअभिनच्छम्बरंमेघमिति। अत्रेदंचिन्तनीयं कोसौवैश्वानरइति तत्रकेचिदाहुः मध्यमस्थानस्थोवायुरिन्द्रोवावैश्वानरः तस्यहिवर्षकर्मणासंस्तवउपपद्यतेनत्वग्नेः पृथिवीस्थानत्वादिति। अन्येत्वेवंमन्यन्ते द्युस्थानःसूर्योवैश्वानरइति युक्तिंचाहुः—प्रातःसवनादीनित्रीणिसवनानिलोकत्रयात्मकानि तत्रतृतीयसवनंप्राप्तोयजमानःस्वर्गंप्राप्तइतिपृथिव्याःप्रच्युतोभवेत् तत्प्रच्युतिपरिहारायाग्निमारुतेन्तिमेशस्त्रे होतास्वर्गाद्भूमिंप्रत्यवरोहति कथमितितदुच्यते—इयरशस्त्रवत्स्तोत्रियतृचेनप्रारंभमुक्त्वाद्युस्थानसम्बन्धिनावैश्वानरीयेणसूक्तेनशस्त्रंप्रारभते ततोमध्यमस्थानसम्बन्धिनंरुद्रंमरुतश्चप्रतिपाद्यदेवत्यसूक्तपाठेनावरोहति तत्रपृथिवीस्थानमग्निंयद्यत्रवैश्वानरःसूर्योनस्यात् तदानीमवरोहोनोपपद्यते तदेतन्मतद्वयमप्यनुपपन्नम् अयमेवाग्निर्वैश्वानरः कुतःवैश्वानरशब्दनिर्वचनानुरोधात्. विश्वेषां नराणांलोकान्तरंप्रतिनेतृतयासम्बन्धीवैश्वानरः तथाचाम्नातम्—वैश्वानरःपुत्रःपित्रेलोककृज्जातवेदोवहेमंसुकृतांयत्रलोकाइति। यद्वा विश्वेसर्वेनराएनमग्निंयज्ञादौप्रणयन्तीतितत्सम्बन्धाद्वैश्वानरः यद्वा सर्वान्प्राणिनःप्रतिकृतोगच्छतइतिवैश्वानरोमध्यमोत्तमौ। ऋगतावित्यस्मात्पचाद्यच् लुगभावश्छान्दसः ताभ्यामुत्पन्नत्वादयमग्निर्वैश्वानरः वैद्युतोग्निर्हिमध्यमसकाशाज्जायतेअशनिपतनानन्तरंअयमेवपार्थिवोग्निःसम्पद्यते आदित्यसकाशादपिघर्मकालेसूर्यकान्तादिमणिषुअग्नेरुत्पत्तिःप्रसिद्धा तस्मान्नामनिर्वचनानुरोधेनअयमेवाग्निर्वैश्वानरइत्येतदुपपन्नम्। अस्यापि

१ नि० ७. २३.। २ तै० ब्रा० १. २. १.।

वर्षकर्मणास्तुतिःसम्भवतिअग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मरणात्प्रत्यवरोहोपिनकर्तव्यः । तृतीयसवनस्यभाक्स्वर्गत्वात् एतत्सर्वंयास्केनवैश्वानरःकस्मादित्यादिनाबहुधाप्रपञ्चितम् अत्रयदनुक्तंतत्सर्वंतत्रैवानुसन्धेयम् ॥ ६ ॥

सप्तमीमृचमाह—

वै॒श्वा॒न॒रो म॑हि॒म्ना वि॒श्वकृ॑ष्टिर्भ॒रद्वा॑जेषु यज॒तो वि॒भावा॑ ।
शा॒त॒व॒ने॒ये श॒तिनी॑भिर॒ग्निः पु॑रुणी॒थे ज॑रते सू॒नृता॑वान् ॥७॥२५॥

वै॒श्वा॒न॒रः । म॒हि॒म्ना । वि॒श्वऽकृ॑ष्टिः । भ॒रत्ऽवा॑जेषु । य॒ज॒तः ।
वि॒भाऽवा॑ । शा॒त॒ऽव॒ने॒ये । श॒तिनी॑भिः । अ॒ग्निः । पु॒रु॒ऽनी॒थे ।
ज॒र॒ते॒ । सू॒नृता॑ऽवान् ॥ ७ ॥ २५ ॥

वैश्वानरोग्निर्महिम्नामहत्त्वेनविश्वकृष्टिः कृष्टिरितिमनुष्यनाम विश्वेसर्वेमनुष्याःयस्यस्वभूताःसतथोक्तःभरद्वाजेषुपुष्टिकरहविर्लक्षणान्नवत्सुयागेषु यद्वा एतत्संज्ञेष्वृषिषुयजतोयष्टव्यःविभावाविशेषेणप्रकाशयिता सूनृतावान् सूनृताप्रियासत्यावाक्तद्युक्तः एवंभूतोग्निःशातवनेयेशतसंख्याकान्क्रतून्वनतिसम्भजतइतिशतवनिः तस्यपुत्रःशातवनेयःतस्मिन् पुरुणीथेबहूनांनेतरिएतत्संज्ञकेराजनिच शतिनीभिर्बहुभिःस्तुतिभिःजरतेस्तूयते॥ भरद्वाजेषु भरन्तिपोषयन्तिभोक्तॄनितिभरन्तःवाजाअन्नानियेषांतेभरद्वाजाः तेषु बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेप्राप्तेमरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्। यजतः भृमृदृशियजिपर्विपच्यमितमिनमिहर्यंभ्योतजितियजतेरतच्प्रत्ययः। विभावाभादीप्तौ आतोमनिन्क्वनिब्वनिप् तस्यपित्वादनुदात्तत्वेधातुस्वरःशिष्यते । शातवनेये इन्सर्वधातुभ्यइतीन्प्रत्ययः शतवनिशब्दात् इतश्चानिञइतिढक् कितइत्यन्तोदात्तत्वम् । शतिनीभिः शतशब्दान्मत्वर्थीयइनिः ऋन्नेभ्यइतिङीप्। पुरुणीथे पूर्वपदात्संज्ञायामगइतिणत्वम् । जरते व्यत्ययेनकर्मणिकर्तृप्रत्ययः॥७॥

॥इतिप्रथमस्यचतुर्थेपञ्चविंशोवर्गः॥ २५ ॥

वह्निमितिपञ्चर्चंतृतीयंसूक्तम् नोधसआर्षंत्रैष्टुभमाग्नेयम्—अनुक्रान्तंच—वह्निंपञ्चेति। प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसीदंसूक्तमाश्विनेशस्त्रेच तथाचसूत्रितम्-वह्निंयशसमुन्दप्निन्धनितित्रीणीति ।

1 नि० ७. २१ ।

तत्रप्रथमामृचमाह—

वह्निंयशसंविदथस्यकेतुंसुप्राव्यंदूतंसद्योअर्थम् ।
द्विजन्मानंरयिमिवप्रशस्तंरातिंभरद्भृगवेमातरिश्वा ॥१॥

वह्निम् । यशसम् । विदथस्य । केतुम् । सुप्रऽअव्यम् । दूतम् ।
सद्यःऽअर्थम् । द्विऽजन्मानम् । रयिम्ऽइव । प्रऽशस्तम् । रातिम् ।
भरत् । भृगवे । मातरिश्वा ॥ १ ॥

वह्निंहविषांवोढारंयशसंयशस्विनंविदथस्यकेतुंयज्ञस्यप्रकाशयितारं सुप्राव्यंसुष्ठुप्रकर्षेणरक्षितारंदूतंदेवैर्हविर्वहनलक्षणेदूत्येनियुक्तम् सद्योअर्थं यदाहवींषिजुह्वति सद्यस्तदानीमेवहविर्भिःसहदेवान्गन्तारं यद्वा सद्योअर्थंअरणं गमनंयस्यतं द्विजन्मानं द्वयोर्द्यावापृथिव्योररण्योर्वाजायमानं रयिमिवधनमिवप्रशस्तंप्रख्यातं एवंभूतमग्निं मातरिश्वावायुः भृगवेएतत्संज्ञकाय महर्षये रातिंभरत्मित्रमहरत्अकरोदित्यर्थः रातिंनासम्भाष्येत्यत्ररातिर्मित्रमितिकपर्दिनोक्तं रातिः पुत्रइत्येके एतदर्थप्रतिपादकंमन्त्रान्तरञ्चभवति—रातिंभृगूणामुशिजंकविक्रतुमिति[1] ॥ वह्निं वहिश्रियुश्रुग्लाहात्वरिभ्योनिदितिवहतेर्निप्रत्ययः निद्वद्भावादाद्युदात्तत्वम् । यशसं यशस्शब्दादुत्तरस्यविनोलुक् व्यत्ययेनान्तोदात्तत्वम् यद्वा अर्शआदित्वादच् स्वरःपूर्ववत् । सुप्राव्यं सुष्ठुप्रकर्षेण अवतिरक्षतीतिसुप्रावीः उपसर्गद्वयोपसृष्टादवतेः अवितृस्तृतन्त्रिभ्यईरितीकारप्रत्ययः वाछन्दसीति अमिपूर्वइत्यस्यविकल्पेसतियणादेशः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् । सद्योअर्थम् उषिकुषिगार्तिभ्यस्थन्निति अर्तेः कर्तरिथन्प्रत्ययः सद्यएवार्थोगन्तासद्योअर्थः अव्ययपूर्वपदप्रकृतिस्वरत्वम् यदितु अव्ययेनञ्कुनिपातानामितिवक्तव्यमित्यव्ययग्रहणेनान्तित्यंगृह्येत तर्हिबहुव्रीहिस्वरोभविष्यति । मातरिश्वा सर्वनिर्माणहेतुत्वात् मातान्तरिक्षम् श्वसितिरत्रगतिकर्मा मातरिअन्तरिक्षेश्वसितिगच्छतीतिमातरिश्वा श्वन्नुक्षन्नित्यादौनिपातनाद्रूपसिद्धिः यद्वा मातर्यन्तरिक्षे शुआशु असतिगच्छतीतिमातरिश्वा असगतिदीप्त्यादानेष्वित्यस्मादौणादिकोड्वन्प्रत्ययः एतच्चयास्केनोक्तम्—मातर्यन्तरिक्षेश्वसितिमातर्याश्वनितीतिवेति[3] ॥ १ ॥

द्वितीयामृचमाह—

अस्यशासुरुभयासःसचन्तेहविष्मन्तउशिजोयेचमर्ताः[2] ।
दिवश्चित्पूर्वोन्यसादिहोतापृच्छ्योविश्पतिर्विक्षुवेधाः ॥२॥

१ तै० सं० ५.६.१.। २ ऋ० सं० २.८.१७.। ३ नि० ७.२६.।

अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः । उशिजः ।
ये । च । मर्ताः । दिवः । चित् । पूर्वः । नि । असादि । होता ।
आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥ २ ॥

शासुः शासितुरस्याग्नेः उभयासः उभयेपिदेवाः मनुष्याश्च यद्वा स्तुतिभिः स्तोतारो-यज्ञैर्यजमानाश्च इममग्निंशासितारं सचन्तेसेवन्ते देवाःउशिजःकामयमानाः देवाहविष्मन्तः हविषायुक्ताः येचमर्ताः मरणधर्माणोयजमानाः यद्वा उशिजइतिमेधाविनाम उशिजोमेधाविनः स्तोतारः हविष्मन्तोहविर्युक्ताः यजमानाः किञ्चायंहोताहोमनिष्पादकोग्निः दिव-श्चिद्आदित्यादपिपूर्वः उपःसुवर्तमानोभूत्वाअग्निहोत्रहोमार्थंविक्षुयजमानेषुन्यसादिअध्वर्यु णाअग्न्यायतनेन्यधायिस्थाप्यते कीदृशोहोता आपृच्छ्यःआप्रष्टव्यःपूज्यइत्यर्थः विश्पतिः विशांप्रजानांपालयिता वेधाः विधाताअभिमतफलस्यकर्ता ॥ शासुः शासुअनुशिष्टौ तृन्तृचौ शंसिक्षदादिभ्यःसंज्ञायांचानिटाविति तृन्इडागमाभावश्च षष्ठ्येकवचनेतकारलोपश्छा-न्दसः नित्त्वादाद्युदात्तत्वम् । उशिजः वशःकिदितिवष्टेरिजिप्रत्ययः ग्रहिज्यादिनासम्प्रसारणम् । मर्ता घृङ्प्राणत्यागे असिहसिमृगृण्वामीत्यादिनातन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । आ-पृच्छ्यः प्रच्छज्ञीप्सायाम् आङ्पूर्वादस्माच्छन्दसिनिष्टक्र्येत्यादौक्यप्प्रत्ययोनिपातितः ग्रहि-ज्यादिनासम्प्रसारणम् क्यपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । विश्पतिः पत्यावैश्वर्येइतिपू-र्वपदप्रकृतिस्वरत्वेप्राप्ते परादिश्छन्दसिबहुलमित्युत्तरपदान्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

तंनव्यसीहृदआजायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजोवृजनेमानुषासःप्रयस्वन्तआयवोजीजनन्त ॥३॥

तम् । नव्यसी । हृदः । आ । जायमानम् । अस्मत् । सुऽकीर्तिः ।
मधुऽजिह्वम् । अश्याः । यम् । ऋत्विजः । वृजने । मानुषासः ।
प्रयस्वन्तः । आयवः । जीजनन्त ॥ ३ ॥

नव्यसी नवतरासुकीर्तिः सुष्टुकीर्तयित्रीअस्मद् अस्माकंस्तुतिः हृदः हृद्यवस्थितात् प्रा-णाद् जायमानमुत्पद्यमानं अग्निर्हिवायोरुत्पद्यतेवायुश्चप्राणएवयःप्राणःसवायुरित्याम्नानात् ।

---

१ नि० १. २०. ।

मधुजिह्वंमादयितृज्वालं एवंभूतंतमग्निमायवः आभिमुख्येनव्यामोतु वृजनेसङ्ग्रामेप्राप्तेसतिआ-यवोमनुष्याः यमग्निंजीजनन्तयज्ञार्थमुपपादयन् कीदृशाः मनुष्याः ऋत्विजः ऋतौकालेयष्टारः मानुषासः मनोःपुत्राः प्रयस्वन्तः हविर्लक्षणान्नोपेताः ॥ नव्यसी नवीयसीत्यत्रईकारलोपश्छा-न्दसः । हृदः अत्रहृदयशब्देनतत्स्थःप्राणोलक्ष्यते पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः । जायमानं जनीप्रादुर्भावे श्यनिज्ञाजनोर्जेतिजादेशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेश्यनोनि-त्स्वादाद्युदात्तत्वम् अस्मद् सुपांसुलुगितिविभक्तेर्लुक् । अश्याः अशूव्याप्तौ लिङिबहुलंछन्दसीति विकरणस्यलुक् व्यत्ययेनपरस्मैपदमध्यमौ । जीजनन्त जनीप्रादुर्भावे ण्यन्ताल्लुङिच्लेश्चङादेशः द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेचङएवस्वरेप्राप्ते व्यत्य-येनाभ्यस्ताद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

उशिक्पावकोवसुर्मानुषेषुवरेण्योहोताधायिविक्षु ।
दमूनागृहपतिर्दमआँअग्निर्भुवद्रयिपतीरयीणाम् ॥४॥

उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता । अधायि ।
विक्षु । दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् । रयिऽपतिः ।
रयीणाम् ॥ ४ ॥

उशिक् कामयमानः पावकः शोधकः वसुर्निवासयितावरेण्योवरणशीलएवंभूतोहोताग्निः विक्षुयत्नगृहप्रविष्टेषुमानुषेषुयजमानेषुअधायिस्थाप्यते सचाग्निर्दमूनाः रक्षसांदमनकरेणमनसा युक्तोगृहपतिर्गृहाणांपालयिताचसन् दमेयज्ञगृहेरयिपतिः धनाधिपतिः आभुवत्आसमन्ताद्भव-ति नकेवलमेकस्यपरयेः अपितुसर्वेषामित्याह रयीणामिति यद्वा रयीणांमध्येउत्कृष्टंयद्धनंतस्य पतिरित्यर्थः ॥ अधायि छन्दसिलुङ्लङ्लिटइतिवर्तमानेकर्मणिलुङिच्लेश्चिणादेशेआतोयुक्चि-ण्कृतोरितियुगागमः।दमयतिराक्षसादिकमितिदमूनाः दमउपशमे दमेरूनसिरितिऔणादिकऊ-नसिप्रत्ययः यास्कस्त्वाह—दमूनादममनावादानमनावादान्तमनावाअपिवादमइतिगृहनामतन्म-नाःस्यादिति[1] । दमआँअग्निः आङोनुनासिकश्छन्दसीतिआकारस्यसानुनासिकत्वम् प्रकृ-तिभावश्च । भुवत् लेटचडागमः इतश्चलोपइतीकारलोपः । रयिपतिः परादिश्छन्दसिबहुल-मित्युत्तरपदाद्युदात्तत्वम् । रयीणां नामन्यतरस्यामितिनामउदात्तत्वम् ॥ ४ ॥

---

१ नि० ४. ४.

पञ्चमीमृचमाह—

**तंत्वावयंपतिमग्नेरयीणांप्रशंसामोमतिभिर्गोतमासः ।**
**आशुंनवाजंभरंमर्जयन्तःप्रातर्मक्षूधियावसुर्जगम्यात् ॥५॥२६॥**

तम् । त्वा । वयम् । पतिम् । अग्ने । रयीणाम् । प्र । शंसामः । मतिऽभिः । गोतमासः । आशुम् । न । वाजम्ऽभरम् । मर्जयन्तः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ५ ॥ २६ ॥

गोतमासोगोतमगोत्रोत्पन्नावयं नोधसः स्तोतुरेकत्वेप्यात्मनिपूजार्थंबहुवचनम् हेअग्ने रयीणांधनानांपतिंरक्षितारं तादृशंत्वात्वांमतिभिर्मननीयैःस्तोत्रैः प्रशंसामः प्रकर्षेणस्तुमः किंकुर्वन्तः वाजंभरम् वाजस्यहविर्लक्षणान्नस्यभर्तारंत्वांमर्जयन्तोमार्जयन्तः तत्रदृष्टान्तः—आशुंन अश्वमिव यथाअश्वमारोहन्तःपुरुषाः तस्यवहनप्रदेशंहस्तैर्निमृजन्ति तद्वद्वयमप्यग्नेर्हविर्वहनप्रदेशंनिमृजन्तइत्यर्थः तथाचाग्निसंमार्जनप्रकरणे वाजसनेयिभिराम्नातम्—अथमध्येतूष्णीमेव निःसंमार्ष्टि यथामुक्त्वामेहिवहेतिप्रजेदेवमेतदग्निंयुक्त्वोपक्षिपतिप्रेहिदेवेभ्योहव्यंवहेति। धियावसुः कर्मणाबुध्यावाप्राप्तधनःसोऽग्निःप्रातः श्वोभूतस्याह्नःप्रातःकालेमक्षुशीघ्रंजगम्यात् आगच्छतु ॥ मतिभिः मनज्ञानेइत्यस्मात्कर्मणिक्तिन् मन्त्रेवृषेषेत्यादिनातस्योदात्तत्वम्। वाजंभरं अग्नेरेषावैदिकीसंज्ञा संज्ञायांभृतृवृजीतिवाजशब्देकर्मण्युपपदेखच्प्रत्ययः अरुर्द्विषदजन्तस्यमुमितिमुमागमः चितइत्यन्तोदात्तत्वम् । मर्जयन्तः संज्ञापूर्वकस्यविधेरनित्यत्वात् मृजेर्वृद्धिरितिवृद्ध्यभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचएवस्वरःशिष्यते । जगम्यात् लिङि बहुलंछन्दसीतिशपःश्लुः ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेषड्विंशोवर्गः ॥ २६ ॥

अस्माइदुप्रतवसइतिषोडशर्चंचतुर्थंसूक्तंनोधसआर्षमैन्द्रंत्रैष्टुभं अनुक्रान्तंच—अस्माइदुषोडशेति। अस्यसूक्तस्यनोधाद्दृष्टत्वमेतद्ब्राह्मणेसमाम्नायते—अस्माइदुप्रतवसेतुरायेतिनोधाएतदेवमावः सवनईति । षळहस्तोत्रियावापवत्सुचतुर्विंशमहाव्रतादिष्वहस्सुमाध्यंदिनेसवनेब्राह्मणाच्छंसिप्रशंसेब्रह्मणातेब्रह्मपुजेत्यस्याआरम्भणीयायाऊर्ध्वंमहीनसूक्तसंज्ञमेतच्छंसनीयम् तथाचसूत्रितम्—

१ यज्ञवहेतिपाठः । २ ऐ० ब्रा० ६. १८. ।

अस्माइदुप्रतवसेशासद्वह्निरितीतरावहीनसूक्तेइति । ब्राह्मणंचभवति—वएतेप्रातःसवनेपळहस्तो-त्रिपान्शस्त्वामाध्यंदिनेहीनसूक्तानिशंसन्तीति[1] ।

तत्रप्रथमामृचमाह—

अस्माइदुप्रतवसेतुरायप्रयोनहर्मिस्तोमंमाहिनाय ।
ऋचीषमायाध्रिगवओहमिन्द्रायब्रह्माणिराततमा ॥१॥

अस्मै । इत् । ऊम् इति । प्र । तवसे । तुराय । प्रयः । न । हर्मि ।
स्तोमम् । माहिनाय । ऋचीषमाय । अध्रिऽगवे । ओहम् ।
इन्द्राय । ब्रह्माणि । रातऽतमा ॥ १ ॥

इदुइतिनिपातद्वयंपदपूरणे अथापिपदपूरणाःकमीमिद्विति[2]तियास्कः । यद्वा अवधारणार्थम् तवसेप्रवृद्धायतुरायत्वरमाणाय यद्वा तुर्वित्रिशत्रूणांहिंसित्रेमाहिनायगुणैर्महतेऋचीषमाय ऋचासमाय यादृशीस्तुतिःक्रियतेतत्समायेत्यर्थः अध्रिगवे अधृतगमनायाप्रतिहतगमनायेत्यर्थः तथाचयास्कः—अधृतगमनकर्मवनिन्द्रोप्यध्रिगुरुच्यतइति[3] । एवं भूतायास्माइन्द्रायस्तोमंस्तोत्रंप्रहर्मिप्रहरामिकरोमीत्यर्थः तत्रदृष्टान्तः—प्रयोन प्रयइत्यन्ननाम यथाबुभुक्षितायपुरुषायकश्चिदन्नंप्रहरति कीदृशंस्तोमंओहंवहनीयंप्रापणीयंवाअत्यन्तोत्कृष्टमित्यर्थः नकेवलंस्तोमं किंतर्हिब्रह्माणिहविर्लक्षणान्यन्नानि कीदृशानि राततमा पूर्वैर्यजमानैरतिशयेनदत्तानि इन्द्रस्तुत्याहविषाचपरिचरेमेतिभावः॥तुराय तुरत्वरणे इगुपधलक्षणःकः यद्वा तुर्वीहिंसार्थःतुर्वतीतितुरः पचाद्यच्छान्दसोवल्लोपः।हर्मि हञ्हरणे बहुलंछन्दसीतिशपोलुक्।माहिनाय महपूजायामित्यस्मान्महेरिनण्चेतीनण्प्रत्ययः उपधावृद्धिश्च । ऋचीषमाय ऋचीषमऋचासमइतियास्कः ।तृतीयातत्कृतेतिसमासः तृतीयापूर्वपदप्रकृतिस्वरत्वम् पृषोदरादित्वादीकारोपजनः सुषामादित्वात्षत्वम् केचिदाहुः ऋचस्तुतावित्यस्माद्इगुपधात्किदितिइप्रत्ययः कृदिकारादक्तिनइतिङीष् ऋचीस्तुतिः तयासमःपूर्ववत्षत्वम् अस्मिन्पक्षे तृतीयापूर्वपदप्रकृतिस्वरत्वेसतिङीषउदात्तत्वेनभवितव्यम् तथाचनदृश्यते तस्मात्स्वरश्चिन्तनीयः यद्वा दिवोदासादिर्द्रष्टव्यः । अध्रिगवे अधृतोन्येनानिवारितोगौर्गमनंयस्यसतथोक्तः गोस्त्रियोरुपसर्जनस्येतिह्रस्वत्वम् पृषोदरादित्वादधृतशब्दस्याध्रिभा-

1 ऐ० ब्रा० ६. १८. । 2 नि० ५. ११. । 3 नि० ६. २३. ।

वः । ओहम् वहतेःकर्मणिघञिछान्दसंसम्प्रसारणम् यद्वा तुहिर्दुहिर्उहिर्अर्दनेइत्यस्मादोहतेः पूर्ववद्घञ् । राततमा रादानेइत्यस्मान्निष्ठान्तादातिशायनिकस्तमप् शेश्छन्दसीतिशेर्लोपः ॥ १ ॥

द्वितीयामृचमाह—

अस्माइदुप्रयंइवप्रयंसिभराम्याङ्गूषंबाधेसुवृक्ति ।
इन्द्रायहृदामनसामनीषाप्रत्नायपत्येधियोमर्जयन्त ॥२॥

अस्मै । इत् । ऊम् इति । प्रयःऽइव । प्र । यंसि । भरामि ।
आङ्गूषम् । बाधे । सुऽवृक्ति । इन्द्राय । हृदा । मनसा । मनीषा ।
प्रत्नाय । पत्ये । धियः । मर्जयन्त ॥ २ ॥

अस्माइदुअस्माएवेन्द्राय प्रयइत्यन्ननाम प्रयइवअन्नमिवप्रयंसिप्रयच्छामि तदेवस्पष्टीक्रियते बाधेशत्रूणांबाधनायसमर्थंसुवृक्तिंसुष्ठुआवर्जकंआङ्गूषंस्तोत्ररूपमाघोषंभरामिसंपादयामि अन्येपिस्तोतारःप्रत्नायपुराणायपत्येस्वामिनेइन्द्रायहृदाहृदयेनमनसातदन्तर्वर्तिनान्तःकरणेनमनीषामनीषयातज्जन्येनज्ञानेनचधियःस्तुतीःकर्माणिवामर्जयन्त मार्जयन्तिसंस्कुर्वन्ति ॥ प्रयंसि यमउपरमेइत्यस्मात् लटिपुरुषव्यत्ययः बहुलंछन्दसीतिशपोलुक् । आङ्गूषंआङ्गूषस्तोमआघोषइति यास्कः । आङ्पूर्वाद्घुषेर्घञिपृषोदरादित्वाद्घोइत्यस्यगूआदेशः आङोङकारस्यलोपाभावश्च थाथादिनोत्तरपदान्तोदात्तत्वम् । बाधे बाधृविलोडनेइत्यस्मात्कृत्यार्थेतवैकेनितिभावेकेन्प्रत्ययः एजन्तत्वादव्ययत्वेनसुपोलुक् । मनीषा सुपांसुलुगितितृतीयायाडादेशः । पत्ये पतिःसमासएवेति घिसंज्ञायाःसमासविषयत्वात् घेर्ङितीतिगुणाभावेयणादेशः ॥ २ ॥

तृतीयामृचमाह—

अस्माइदुत्यमुपमंस्वर्षांभराम्याङ्गूषमास्येन ।
मंहिष्ठमच्छोक्तिभिर्मतीनांसुवृक्तिभिःसूरिंवावृधध्यै ॥३॥

अस्मै । इत् । ऊम् इति । त्यम् । उपऽमम् । स्वःऽसाम् । भरामि ।
आङ्गूषम् । आस्येन । मंहिष्ठम् । अच्छोक्तिऽभिः । मतीनाम् ।
सुवृक्तिऽभिः सूरिम् । वावृधध्यै ॥ ३ ॥

१ नि० ५. ११.।

अस्माइदु अस्माएवेन्द्रायत्यंतमसिद्धम् उपमम् उपमानहेतुभूतम् स्वर्षांसुष्टुअरणीयस्य धनस्यदातारं सूरिंविपश्चितमिन्द्रंववृधध्यैवर्धयितुंसुवृक्तिभिःसुष्टुआवर्जकैःसमर्थैरित्यर्थः मतीनांस्तुतीनांसम्बन्धिभिः अच्छोक्तिभिः स्वच्छैर्वचोभिः मंहिष्ठमतिशयेनप्रवृद्धं एवंलक्षणमांगूषं आघोषंआस्येनमुखेनभरामिकरोमीत्यर्थः ॥ उपमं उपमीयतेनेनेत्युपमः घञर्थेकविधानमिति करणेकप्रत्ययः आतोलोपइटिचेत्याकारलोपः । स्वर्षां सुपूर्वाद्दतेर्विजन्तःस्वर्शब्दः षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् सनोतेरनइतिषत्वम् । भरामि पादादित्वान्निघाताभावः । अच्छोक्तिभिः अच्छाउक्तयोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । मतीनां नामन्यतरस्यामितिनामउदात्तत्वम् । ववृधध्यै वृधुवृद्धावित्यस्मादन्तर्भावितण्यर्थात् तुमर्थेसेसेनितिकध्यैप्रत्ययः कित्त्वाद्गुणाभावः द्विर्भावश्छान्दसः यद्वा यङ्लुगन्तादस्मिन्प्रत्ययेआगमानुशासनस्यानित्यत्वाद्रीगाद्यभावः अन्येषामपिदृश्यतइतिसांहितिकंअभ्यासस्यदीर्घत्वम् प्रत्ययाद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

अ॒स्मा इदु॒ स्तोमं॒ सं हि॑नोमि॒ रथं॒ न तष्टे॑व॒ तत्सि॑नाय ।
गिर॑श्च॒ गिर्वा॑हसे सुवृ॒क्तीन्द्रा॑य विश्वमि॒न्वं मेधि॑राय ॥४॥

अ॒स्मै । इत् । ऊं॒ इति॑ । स्तोम॑म् । सम् । हि॒नो॒मि॒ । रथ॑म् । न । तष्टा॑ऽइव । तत्ऽसि॑नाय । गिरः॑ । च॒ । गिर्वा॑हसे । सु॒ऽवृ॒क्ति । इन्द्रा॑य । वि॒श्व॒म्ऽइ॒न्वम् । मेधि॑राय ॥ ४ ॥

अस्माएवेन्द्रायस्तोमंशस्त्ररूपंस्तोत्रंसंहिनोमिप्रेरयामि तत्रदृष्टान्तः—तत्सिनाय सिनमित्यन्ननाम सिनमन्नंभवतिसिनातिभूतानीतियास्कः । तेनरथेन सिनमन्नंयस्यसतथोक्तःतस्मैरथस्वामिनेतष्टेवतष्टातक्षकोरथनिर्मातारथंन यथारथंप्रेरयतितद्वत् इवेत्येतत्पदपूरणम् तथागिर्वाहसे गीर्भिःस्तुतिभिरुह्यमानायेन्द्राय गिरश्चशस्त्रसम्बन्धिनीःकेवलाऋचश्चसुवृक्तिशोभनमावर्जनंयथाभवति तथाप्रेरयामि तथामेधिरायमेधाविनेइन्द्रायविश्वमिन्वंविश्वंव्यापकंविश्वैर्व्याप्तं सर्वोत्कृष्टंहविश्चसंहिनोमीत्यनुषङ्गः ॥ हिनोमि हिगतौवृद्धौच स्वादित्वाच्छ्नुः । तष्टेव तक्षूत्वक्षूतनूकरणे ताच्छीलिकस्तृन् ऊदित्त्वात्पक्षेइडभावः स्कोःसंयोगाद्योरन्तेचेतिककारलोपः नित्त्वादाद्युदात्तत्वम् । तत्सिनाय सिनशब्दः षिञ्बन्धनेइत्यस्मात् इणूषिञ्दीङ्प्यविभ्योनगितिनक्प्र-

१ नि० ५. ५ ।

त्ययान्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । गिर्वाहसे. वहिहाधाञ्भ्यश्छन्दसीतिवहतेःकेवला-द्विहितोसुन्प्रत्ययोगतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्कारकपूर्वस्यापिभवति पूर्वपद-प्रकृतिस्वरत्वंच णिदित्यनुवृत्तेरुपधावृद्धिः हलिचेतिदीर्घाभावश्छान्दसः। विश्वमिन्वं इविव्याप्तौ विश्वमिन्वतिव्याप्नोतीतिविश्वमिन्वम् पचाद्यच् लुगभावश्छान्दसः यद्वा खल्प्रत्ययोबहुल-वचनादस्मादपिधातोर्द्रष्टव्यः । मेधिराय मेधाअस्यास्तीतिमेधिरः मेधारथाभ्यामिरन्निरचौ वक्तव्यावितिमत्वर्थीयइरन् नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समंजे ।
वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ॥५॥२७॥

अस्मै । इत् । ऊम् इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् ।
जुह्वा । सम् । अञ्जे । वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् ।
गूर्तऽश्रवसम् । दर्माणम् ॥ ५ ॥ २७ ॥

अस्माएवेन्द्रायअर्कं स्तुतिरूपंमन्त्रंश्रवस्या श्रवस्ययाअन्नेच्छयाअन्नलाभायेत्यर्थः जुह्वा आह्वानसाधनेनवागिन्द्रियेणसमञ्जेसमक्तंकरोमि एकीकरोमीत्यर्थः तत्रदृष्टान्तः—सप्तिमिव य-थान्नलाभायगन्तुकामःपुमान् अश्वंरथेनैकीकरोतितद्वत् एकीकृत्यचवीरं शत्रुक्षेपणकुशलं दा-नौकसंदानानामेकनिलयं गूर्तश्रवसंप्रशस्यान्नं पुरांअसुरपुराणांदर्माणंविदारयितारं एवंगुणवि-शिष्टमिन्द्रंवन्दध्यैवन्दितुंस्तोतुंप्रवृत्तोस्मीतिशेषः॥ सप्तिमिव षपसमवाये समवैतिरथेनैकीभवतीति सप्तिरश्वः वसस्तिचितिविधीयमानस्तिप्प्रत्ययोबहुलवचनादस्मादपिधातोर्भवति प्रत्ययस्य पित्त्वादनुदात्तत्वेधातुस्वरः इवेनसमासउक्तः । श्रवस्या श्रवस्शब्दात्सुपआत्मनःक्यच् क्य-जन्ताद्धातोर्भावेअप्रत्ययादित्यकारप्रत्ययः ततष्टाप् सुपांसुलुगितितृतीयायाडादेशः उदात्तनिवृ-त्तिस्वरेणतस्योदात्तत्वम् ।अर्कम् ऋचस्तुतौ ऋच्यतेस्तूयतेनेनेत्यर्कोमन्त्रः पुंसिसंज्ञायांघःप्रायेणे-तिकरणेघप्रत्ययः चजोःकुघिण्ण्यतोरितिकुत्वम् लघूपधगुणःप्रत्ययस्वरः। जुह्वा ह्वयतेश्छन्दसीति कृतसम्प्रसारणस्यह्वेञोहुवःश्लुवच्चेतिक्विप् धातोर्दीर्घश्च धातुस्वरेणान्तोदात्तत्वम् तृतीयैकवचने उदात्तस्वरितयोर्यणइतिस्वरितत्वम् उदात्तयणोहल्पूर्वादित्यस्यविभक्त्युदात्तत्वस्य नोङ्धात्वो-रितिप्रतिषेधः।अञ्जे अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु व्यत्ययेनात्मनेपदम्।वन्दध्यै वदिअभिवा-दनस्तुत्योः तुमर्थेसेसेनितिकध्यैप्रत्ययः।गूर्तश्रवसम् गृशब्दे निष्ठायांश्र्युकःकितीतीट्प्रतिषेधः न

हुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः नसत्तनिपत्तेत्यादौनिपातनान्निष्ठानत्वाभावः गूर्तश्रवोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ दर्माणम् दृविदारणे अन्येभ्योपिदृश्यन्तइतिमनिन् नेड्वशिकृती-तीट्प्रतिषेधः व्यत्ययेनप्रत्ययाद्युदात्तत्वम् यद्वा औणादिकोमनिप्रत्ययोद्रष्टव्यः ॥ ५ ॥

॥ इतिप्रथमस्यचतुर्थेसप्तविंशोवर्गः ॥ २७॥

षष्ठीमृचमाह—

अ॒स्मा इदु॒ त्वष्टा॑ तक्ष॒द्वज्रं॒ स्वप॑स्तमं स्व॒र्यं१॒॑ रणा॑य ।
वृ॒त्रस्य॑ चिद्वि॒दद्येन॒ मर्म॑ तु॒जन्नीशा॑नस्तुज॒ता कि॑ये॒धाः ॥६॥

अ॒स्मै । इत् । ऊ॒म् इति॑ । त्वष्टा॑ । त॒क्ष॒त् । वज्र॑म् । स्वप॑ःऽतमम् ।
स्व॒र्य॑म् । रणा॑य । वृ॒त्रस्य॑ । चि॒त् । वि॒दत् । येन॑ । मर्म॑ ।
तु॒जन् । ईशा॑नः । तु॒ज॒ता । कि॒ये॒धाः ॥ ६ ॥

त्वष्टाविश्वकर्मा अस्माइदुअस्माएवेन्द्राय वज्रंवर्जकमायुधं रणाययुद्धार्थंतक्षत् तीक्ष्णमकरोत् कीदृशंवज्रं स्वपस्तमंअतिशयेनशोभनकर्माणंस्वर्यंसुष्ठुशत्रुप्रेर्यं यद्वा स्तुत्यं तुजन्शत्रून्हिंसन्ईशानःऐश्वर्यवान्कियेधाः बलवान् एवंगुणविशिष्टइन्द्रः वृत्रस्यचित्आवरकस्यअसुरस्यमर्ममर्मस्थानंतुजताहिंसतायेनवज्रेणविदत्प्राहार्षीदित्यर्थः ॥ स्वपस्तमं शोभनंअपःकर्मयस्यासौ अतिशयेनस्वपाः स्वपस्तमः तमपःपित्त्वादनुदात्तत्वम् सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वम् । स्वर्यं स्वर्यंतक्षेत्यत्रोक्तम् । विदत् विद्लृलाभे लृदित्त्वाच्च्लेरङादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः यद्वृत्तयोगादनिघातः । तुजन् तुजहिंसायाम् शपिप्राप्तेव्यत्ययेनशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरः । ईशानः ईशऐश्वर्ये शानचिअदादित्वाच्छपोलुक् अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । तुजता शतुरनुमइतिविभक्तेरुदात्तत्वम् । कियेधाः अत्रनिरुक्तम्—कियेधाःकियद्धाइतिवाक्रममाणधाइतिवेति । अस्यायमभिप्रायः—कियत्किंपरिमाणमित्यस्यबलस्यतादृशंबलंदधातिधारयतीतिकियद्धाः यःकोप्यस्यबलस्यइयत्तांनजानातीत्यर्थः। यद्वा क्रममाणमाक्रममाणंपरेषांबलंधारयतिनिवारयतीतिक्रममाणधाः । उभयत्रापिपृषोदरादित्वात्पूर्वपदस्य कियेभावः दधातेर्विच् ॥ ६ ॥

१ ऋ० सं० १. २. ३६.। २ नि ६. २०.।

सप्तमीमृचमाह—

अस्येदुमातुःसवनेषुसद्योमहःपितुंपपिवाञ्चार्वन्ना । मुषायद्विष्णुःपचतंसहीयान्विध्यद्वराहंतिरोअद्रिमस्ता ॥७॥

अस्य । इत् । ऊम् इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना । मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ॥ ७॥

इदुइत्येतन्निपातद्वयंपदपूरणम् यद्वा अवधारणार्थम् मातुःवृष्टिद्वारेणसकलस्यजगतोनिर्मातुःमहोमहतोस्ययज्ञस्यसवनेषुअवयवभूतेषुप्रातःसवनादिषुत्रिषुसवनेषु पितुंसोमलक्षणमन्नंसद्यःपपिवान् यदाप्रभौहूयतेतदानीमेवपानंकृतवानित्यर्थः तथाचार्वन्नाचारूणिशोभनानिधानाकरम्भादिहविर्लक्षणान्यन्नानिभक्षितवानितिशेषः किञ्च विष्णुःसर्वस्यजगतोव्यापकःपचतंपरिपक्वमसुराणांधनंयदस्तितन्मुषायदपहरन् सहीयानतिशयेनशत्रूणामभिभविता अद्रिमस्ता अद्रेर्वज्रस्यक्षेपकःएवंभूतइन्द्रः तिरःसतइतिप्राप्तस्येतियास्कः[1] । तिरःप्राप्तःसन्वराहंमेघंविध्यत् अताडयत् यद्वा विष्णुःसुत्यदिवसात्मकोयज्ञः यज्ञोदेवेभ्योनिलायतविष्णूरूपंकृत्वेत्याम्नानात्[2] । सविष्णुःपचतंपरिपक्वमसुरधनंयत्तन्मुषायत् अचूचुरत् तदनन्तरंदीक्षोपसदात्मनांदुर्गरूपाणांसप्तानामह्नांपरस्तादासीत् अद्रिमस्तासहीयानिन्द्रः दुर्गाण्यतीत्यतिरःप्राप्तःसन्वराहंउत्कृष्टदिवसरूपंतंयज्ञंविध्यत् तथातैत्तिरीयकम्—वराहोयंवाममोषःसप्तानांगिरीणांपरस्ताद्वित्तंवेद्यमसुराणांबिभर्तीतितदर्भपिञ्जूलमुद्वृत्यसप्तगिरीनभित्त्वातमहन्नितिच[3] ॥ महःमहतःअच्छन्दसोलोपश्छान्दसः यद्वा महइत्येतत्पितुविशेषणं महःप्रशस्तंपितुमित्यर्थः । पपिवान् पिबतेर्लिटःक्वसुः वस्वेकाजाद्घसामितीडागमः आतोलोपइटिचेत्याकारलोपःप्रत्ययस्वरः । चारु सुपांसुलुगितिविभक्तेर्लुक् । मुषायत् मुषस्तेये घञर्थेकविधानमितिभावेकप्रत्ययः मुषमात्मनइच्छतिमुषआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घयोःप्रतिषेधेव्यत्ययेनदीर्घः अस्मात्क्यजन्ताल्लटःशतृ आगमानुशासनस्यानित्यत्वान्नुमभावः द्वितीयपक्षेतुक्यजन्ताल्लङ्बहुलंछन्दस्यमाङ्योगेपीत्यडभावः अत्रलेयेच्छयाऽनद्यतनप्राविनीक्रियालक्ष्यते । पचतं भृमृदृशीत्यादिनापचतेरतच्प्रत्ययः चित्त्वादन्तोदात्तत्वम् । विध्यत् व्यधताडने लङि दिवादित्वाच्छ्यन् तस्य ङित्त्वाद्ग्रहिज्यादिनासम्प्रसारणम् श्यनोनित्त्वादाद्युदात्तत्वम् पादादित्वान्निघाताभावः । वराहं वरमुदकमाहारोयस्य यद्वा वरमाहरतीतिवराहारःसन्पृषोदरा-

---

1 नि० ३. २०. । 2 तै० सं० ६. २. ४. । 3 तै० ६. २. ४. ।

दित्वाद्वराहइत्युच्यते । अत्रनिरुक्तम्—वराहोमेघोभवतिवराहारोवरमाहारमाहार्षीरितिचब्राह्मणमिति । यज्ञपक्षेतु वरंचतदहोवराहः राजाहःसखिभ्यइतिसमासन्तष्टच्प्रत्ययः चित्त्वादन्तोदात्तत्वम् । अस्ता असुक्षेपणेइत्यस्मात्साधुकारिणितृन् इडभावश्छान्दसः नलोकाव्ययेतिषष्ठीप्रतिषेधः ॥ ७ ॥

अष्टमीमृचमाह—

अ॒स्मा इदु॒ ग्नाश्चि॑द्दे॒वप॑त्नी॒रिन्द्रा॑या॒र्कम॑हि॒हत्य॑ ऊवुः ।
परि॒ द्यावा॑पृथि॒वी ज॑भ्र उ॒र्वी नास्य॒ ते म॑हि॒मानं॒ परि॑ ष्टः ॥ ८ ॥

अ॒स्मै । इत् । ऊ॒म् इति॑ । ग्नाः । चि॒त् । दे॒वऽप॑त्नीः । इन्द्रा॑य ।
अ॒र्कम् । अ॒हि॒ऽहत्ये॑ । ऊ॒वु॒रित्यू॑वुः । परि॑ । द्यावा॑पृथि॒वी इति॑ । ज॒भ्रे ।
उ॒र्वी इति॑ । न । अ॒स्य॒ । ते इति॑ । म॒हि॒मान॑म् । परि॑ । स्त॒ इति॑ स्तः ॥ ८ ॥

अस्माएवेन्द्रायअहिहत्येअहेर्वृत्रस्यहननेनिमित्तभूतेसति ग्नाश्चिद्गमनस्वभावाअपिस्थिताः देवपत्नीः देवानांपालयित्र्योगायत्र्याद्यादेवताअर्कमर्चनसाधनंस्तोत्रंऊवुः समतन्वत चक्रुरित्यर्थः सचेन्द्रंउर्वीविस्तृतेद्यावापृथिवी द्यावापृथिव्यौपरिजभ्रेस्वतेजसापरिजहार अतिचक्रामेत्यर्थः ॥ ऊवुः वेञ्तन्तुसन्ताने लिटि वेञोवयिः लिटःकित्त्वाद्यजादित्वेनसम्प्रसारणे क्रियमाणे यकारस्यलिटिवयोयइतिप्रतिषेधात् वकारस्यसम्प्रसारणं परपूर्वत्वं द्विर्वचनादि वश्चास्यान्यतरस्यांकितीतियकारस्यवकारादेशः । जभ्रे हृञ्हरणे लिटि ञित्त्वात्कर्त्रभिप्रायेआत्मनेपदम् हृग्रहोर्भइतिभत्वम् । उर्वी उरुशब्दाद्वोतोगुणवचनादितिङीष् वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् ॥ ८ ॥

नवमीमृचमाह—

अ॒स्येदे॒व प्र रि॑रिचे महि॒त्वं दि॒वस्पृ॑थि॒व्याः पर्य॒न्तरि॑क्षात् ।
स्व॒राळिन्द्रो॒ दम॒ आ वि॒श्वगू॑र्तः स्व॒रिरम॑त्रो ववक्षे॒ रणा॑य ॥ ९ ॥

---

१ नि०५ ३.।

अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वम् । दिवः । पृथिव्याः ।
परि । अन्तरिक्षात् । स्वऽराट् । इन्द्रः । दमे । आ । विश्वऽगूर्तः ।
सुऽअरिः अमत्रः । ववक्षे । रणाय ॥ ९ ॥

अस्येदेव इदितिपदपूरणः अस्यैवेन्द्रस्यमहित्वम् माहात्म्यं प्ररिरिचेअतिरिच्यतेअधिकंभवतीत्यर्थः अत्रोपसर्गोधात्वर्थस्यनिवृत्तिमाचष्टे यथाप्रस्मरणं प्रस्थानमिति कुतःसकाशात् प्ररिरिचे इत्यतआह दिवोद्युलोकात् पृथिव्याः भूलोकात् अन्तरिक्षात् द्यावापृथिव्योर्मध्ये वर्तमानात् अन्तरिक्षलोकाच्चपरिउपर्यर्थः त्रीनल्लोकानतीत्यउपरिप्ररिरिचइत्यर्थः दमेदमयितव्येविषये स्वराट् स्वेनैवतेजसाराजमानः विश्वगूर्तः विश्वस्मिनसर्वस्मिन् कार्येउद्गूर्णःसमर्थः यद्वा विश्वंसर्वमायुधं गूर्तंउद्यतंयस्यसतथोक्तः स्वरिःशोभनशत्रुकः शोभनेशत्रौहन्तव्येसतिहन्तावीर्यवत्तमइति गम्यते यथा अंकवारिंदिव्यंशासमिन्द्रमिति। अकुत्सितारिमितिहितस्यार्थः अमत्रः युद्धादिषुगमनकुशलः मात्रयाइयत्तयारहितोवा अमत्रोमात्रोमहान्भवत्यभ्यमितोवेतियास्कः। एवंभूतइन्द्रोरणाय रणं युद्धंआववक्षे आवहतिमेघान् प्रापयति मेघैःपरस्परयुद्धंकारयित्वावृष्टिंचकारेतिभावः यद्वा युद्धायस्वकीयान्भटान्गमयति॥ अस्य ऊडिदमितिविभक्तेरुदात्तत्वम् । रिरिचे रिचिर्विरेचनेछन्दसिलुङ्लङ्लिटइतिवर्तमाने कर्मणिलिट् । पृथिव्याः उदात्तयणइतिविभक्तेरुदात्तत्वम्। स्वराट् राजृदीप्तावित्यस्मात् सत्सूद्विषेतिक्विप् व्रश्चादिनाषत्वेजश्त्वम्। दमे दमउपशमे इत्यस्मात्कर्मणिघञि नोदात्तोपदेशस्यमान्तस्यानाचमेरितिवृद्धिप्रतिषेधः घञोञित्त्वादाद्युदात्तत्वम्। विश्वगूर्तः गृनिगरणे अस्मान्निष्ठायां श्र्युकःकितीतीट्प्रतिषेधः बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः यद्वा गूरीउद्यमेअस्मात् निष्ठा नसत्तनिषत्तेत्यादौनिपातनान्निष्ठानत्वाभावः तत्पुरुषपक्षेप्रवृद्धादित्वात्पूर्वपदान्तोदात्तत्वम बहुव्रीहिपक्षेतु बहुव्रीहौविश्वंसंज्ञायामिति असंज्ञायामपिपूर्वपदान्तोदात्तत्वम्। अमत्रः अमगत्यादिषु अमिनक्षियजिवन्धीत्यादिनाउणादिकोत्रन्प्रत्ययः नित्त्वादाद्युदात्तत्वम्। ववक्षे वहेर्लेटि सिब्बहुलंलेटीतिसिप् बहुलंछन्दसीतिशपःश्लुःद्वत्वकत्वषत्वानि लोपस्तआत्मनेपदेष्वितितलोपः। रणाय क्रियाग्रहणंकर्तव्यमिति कर्मणःसम्प्रदानत्वाच्चतुर्थी यद्वा गत्यर्थकर्मणीतिचतुर्थी ॥ ९ ॥

---

१ ऋ० सं० २.३.११.। २ नि० ६.२३.।

दशमीमृचमाह—

अस्येदेवशर्वसाशुपन्तंविर्वृश्चद्वज्रेणवृत्रमिन्द्रः।
गानव्राणाअवनीरमुञ्चदभिश्रवोदावनेसचेताः॥१०॥२८॥

अस्य। इत्। एव। शर्वसा। शुपन्तम्। वि। वृश्चत्। वज्रेण। वृत्रम्। इन्द्रः। गाः। न। व्राणाः। अवनीः। अमुञ्चत्। अभि। श्रवः। दावने। सऽचेताः॥ १०॥ २८॥

अस्यैवेन्द्रस्यशवसाबलेनशुपन्तंशुष्यन्तंवृत्रंइन्द्रोवज्रेणविवृश्चत्व्यवच्छिनत् तथा गाःन चौरैरपहृतागावइव व्राणाःवृत्रेणावृताः अवनीःरक्षणहेतुभूताःअपःअमुञ्चत्अवर्षीत् तथा दावने हविर्दात्रेयजमानायसचेताः तेनयजमानेनसमानचित्तःसन् श्रवःकर्मफलभूतमन्नंअभिआभिमुख्येनददातीतिशेषः॥ शुपन्तं शुषशोषणे श्यनिप्राप्तेव्यत्ययेनशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरएवशिष्यते। व्राणाः वृञ्वरणे कर्मणिलटःशानचि बहुलंछन्दसीतिषकोलुक् शानचोङित्त्वाद्गुणाभावेयणादेशः। अवनीः अवतेः करणे अर्तिस्तुसुहुसृधृक्षीत्यादिनाअनिप्रत्ययः प्रत्ययाद्युदात्तत्वम्। दावने आतोमनिन्क्वनिब्वनिपश्चेतिवनिप् चतुर्थ्येकवचनेअल्लोपाभावश्छान्दसः॥१०॥

॥इतिप्रथमस्यचतुर्थेष्टाविंशोवर्गः॥ २८॥

एकादशीमृचमाह—

अस्येदुत्वेपसारन्तसिन्धवःपरियद्वज्रेणसीमयच्छत्।
ईशानकृद्दाशुषेदशस्यंतुर्वीतयेगाधंतुर्वणिःकः॥११॥

अस्य। इत्। ऊम् इति। त्वेपसा। रन्त। सिन्धवः। परि। यत्। वज्रेण। सीम्। अयच्छत्। ईशानऽकृत्। दाशुषे। दशस्यन्। तुर्वीतये॥ गाधम्। तुर्वणिः। करिति कः॥ ११॥

अस्यैवेन्द्रस्यत्वेपसादीप्तेनबलेनसिन्धवःसमुद्राः यद्वा गङ्गाद्याःसमनद्यः रन्त स्वेस्वेस्थानेरमन्ते यद्यस्मादयमिन्द्रोवज्रेणसीमेनान्सिन्धून्वज्रेणपर्ययच्छत् परितोनियमितवान् अपिच ईशानकृत् घृनादिशानुवचेनआत्मानंऐश्वर्यवन्तंकुर्वन्निन्द्रोदाशुषेहविर्दत्तवतेयजमानाय फलंदशस्यन्प्रयच्छन् तुर्वणिस्तूर्णसम्भजनः तुर्वणिस्तूर्णवनिरितियास्कः[1]। यद्वा तुर्वितांशत्रूणां

1 नि० ६. १४.।

हिंसिता एवंभूतइन्द्रः तुर्वीतयेएतत्संज्ञायउदकेनिमग्नायऋषयेगाधमवस्थानयोग्यंविष्यन्दे-
शंकः अकार्षीत्॥ रन्त रमुक्रीडायां छान्दसेलुङ्बहुवचने बहुलंछन्दसीतिशपोलुक् धातोरन्त्यलो-
पश्छान्दसः। अयच्छत् यमउपरमे इषुगमियमांछइतिछत्वम्। कः करोतेर्लुङि मन्त्रेघसहरणशे-
त्यादिनाच्लेर्लुक् गुणः हल्ङ्याब्भ्यइत्यादिनातलोपः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥ ११ ॥

द्वादशीमृचमाह—

अस्माइदुप्रभंरातूतुंजानोवृत्रायवज्रमीशांनःकियेधाः।
गोर्नपर्वविरंदातिरश्चेष्यन्नर्णांस्यपांचरध्यै ॥१२॥

अस्मै। इत्। ऊम् इति। प्र। भर। तूतुंजानः। वृत्राय। वज्रम्।
ईशांनः। कियेधाः। गोः। न। पर्व। वि। रद। तिरश्चा।
इष्यंन्। अर्णांसि। अपाम्। चरध्यै ॥ १२ ॥

तूतुजानइतिक्षिप्रनाम तूतुजानस्त्वरमाणः यद्वा शत्रून्हिंसन्ईशानःईश्वरःसर्वेषांकियेधाः
कियतःअनवधृतपरिमाणस्यबलस्यधाता यद्वा क्रममाणंशत्रुबलंदधात्यवस्थापयतीतिकियेधाः
हेइन्द्र एवंभूतस्त्वंअस्मैवृत्रायवज्रंप्रभर इमंवृत्रंवज्रेणप्रहरेत्यर्थः प्रहृत्यच अर्णांसिवृष्टिजलानिइष्य-
न्तस्माद्वृत्राद्गमयंस्त्वंअपांचरध्यै तासामपांचरणायभूप्रदेशंप्रतिगमनायतस्यवृत्रस्यैवपर्वाणि
पर्वपर्वाणिअवयवसन्धीन्तिरश्चा तिर्यगवस्थितेनवज्रेणविरदविलिख छिन्धीत्यर्थः तत्रदृष्टान्तः
गोर्न यथामांसस्यविकर्तारोलौकिकाःपुरुषाःपशोरवयवानितस्ततोविभजन्तिवद्वत्। अत्रनिरु-
क्तम्—अस्मैप्रहरतूर्णंत्वरमाणोवृत्रायवज्रमीशानःकियेधाःकियद्धाइतिवाक्रममाणधाइतिवागो-
रिवपर्वाणिविरदमेघस्येष्यन्नर्णांस्यपांचरणायेति॥ भर ह्रग्रहोर्भइतिभत्वम् द्व्यचोतस्तिङइतिसं-
हितिकोदीर्घः। तूतुजानः तुजहिंसायां कानचितुजादीनांदीर्घोभ्यासस्येत्यभ्यासस्यदीर्घत्वम् छ-
न्दस्युभयथेतिकानचःसार्वधातुकत्वेसति अभ्यस्तानामादिरित्याद्युदात्तत्वम्। कियेधाः तुन्नांकि-
येधाइत्यत्रोक्तम्। रद रदविलेखने निङ्ङिङइतिनिघातः। तिरश्चा तिरोञ्चतीतितिर्यङ् ऋत्विगि-
त्यादिनाक्विन् अनिदितामितिनलोपः तृतीयैकवचनेभसंज्ञायामचइत्यकारलोपः श्रुत्वेनतकारस्य
शकारः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। इष्यन् इषगतावित्यस्मादन्तर्भावितण्यर्थाच्छ-
तरि दिवादिभ्यःश्यन् तस्यनित्त्वादाद्युदात्तत्वम्। चरध्यै तुमर्थेसेसेनितिचरतेरध्यैप्रत्ययः॥१२॥

---

१ नि० ६. २०. । २ ऋ० सं० १. ४. २८. ।

त्रयोदशीमृचमाह—

अस्येदुप्रब्रूहिपूर्व्याणितुरस्यकर्माणिनव्यंउक्थैः।
युधेयदिष्णानआयुधान्यृघायमाणोनिरिणातिशत्रून् ॥१३॥

अस्य। इत्। ऊम् इति। प्र। ब्रूहि। पूर्व्याणि। तुरस्य। कर्माणि। नव्यः। उक्थैः। युधे। यत्। इष्णानः। आयुधानि। ऋघायमाणः। निऽरिणाति। शत्रून्॥ १३॥

उक्थैःशस्त्रैर्नव्यःस्तुत्योयइन्द्रः अस्येदुअस्यैवतुरस्ययुद्धार्थंत्वरमाणस्येन्द्रस्यपूर्व्याणि पुराणानिकर्माणिएतत्कृतानिबलकर्माणि हेस्तोतः प्रब्रूहिप्रशंस यद्यदायुधेयोधनायआयुधानिवज्रादीनिइष्णानः आभीक्ष्ण्येनप्रेरयन्शत्रून्ऋघायमाणोहिंसन्भवइन्द्रोनिरिणातिअभिमुखंगच्छति तदानींप्रब्रूहीतिपूर्वेणसम्बन्धः पूर्व्यमितिपुराणनाम पूर्व्यमह्नायेतिपुराणनामसुपाठात्॥ तुरस्य तुरत्वरणे इगुपधलक्षणःकः। नव्यः णुस्तुतौ अचोयदितियत् गुणः धातोस्तन्निमित्तस्यैवेत्यवादेशः। इष्णानः इषआभीक्ष्ण्ये क्रैयादिकः व्यत्ययेनात्मनेपदम् शानच्श्नित्त्वादन्तोदात्तत्वम्। ऋघायमाणः नहित्वारोदसीउभेऋघायमाणमित्यत्रव्युत्पादितम्। निरिणाति रीगतिरेषणयोः क्र्यादिभ्यःश्ना प्वादीनांह्रस्वइतिह्रस्वत्वम् तिपःपित्त्वादनुदात्तत्वेविकरणस्वरःशिष्यते तिङ्चोदात्तवतीतिगतेर्निघातः यद्वृत्तयोगान्निङ्‌तिङ्इतिनिघाताभावः॥ १३॥

चतुर्दशीमृचमाह—

अस्येदुभियागिरयश्चदृह्ळाद्यावाचभूमाजनुषस्तुजेते।
उपोवेनस्यजोगुवानओणिंसद्योभुवद्वीर्यायनोधाः ॥१४॥

अस्य। इत्। ऊम् इति। भिया। गिरयः। च। दृह्ळाः। द्यावा। च। भूम। जनुषः। तुजेते इति। उपो इति। वेनस्य। जोगुवानः। ओणिम्। सद्यः। भुवत्। वीर्याय। नोधाः॥ १४॥

---

१ ऋ० सं० १.१-२०.।

अस्यैवेन्द्रस्यभियापक्षच्छेदभयेनगिरयःपर्वताअपिदृह्राःनिश्चलाःस्वस्वदेशेवतिष्ठन्ते जनुषः प्रादुर्भूतादस्मादेवेन्द्राद्बभीत्याद्यावाभूमाचद्यावापृथिव्यावपितुजेते तुजिर्हिंसार्थोप्यत्रकम्पनेद्रष्टव्यः कंपेतेइत्यर्थः किञ्च वेनस्यकान्तस्यास्यओर्णिंदुःखस्यापनायकंरक्षणंउपोजोगुवानः अनेकैःसूक्तैःपुनःपुनरुपशब्दयन्उपश्लोकयन्नित्यर्थः एवंभूतोनोधाऋषिः सद्यस्तदानीमेववीर्यायभुवद्वीर्यवानभवत् ॥ द्यावाचभूमा द्यावाभूमेत्यनयोर्मध्येचशब्दस्यपाठश्छान्दसः दिवोद्यावेतिदिवुशब्दस्यद्यावादेशः सुपांसुलुगितिविभक्तेर्डादेशः छान्दसमत्वंपदकारैःकृतम् देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् पदद्वयप्रसिद्धिरपिसाम्प्रदायिकी । जनुषः जनीप्रादुर्भावे जनेरुसिरित्यौणादिकउसिप्रत्ययः । जोगुवानः गुङ्अव्यक्तेशब्दे अस्माद्यङ्लुगन्ताद्व्यत्ययेनशानच् बहुलंछन्दसीतिवचनाच्छपोलुक् उवङादेशः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। ओर्णि ओणृअपनयने अस्मादौणादिकइप्रत्ययः । भुवत् भवतेर्लेटचडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः । नोधाः नोधाऋषिर्भवतिनवनंदधातीतियास्कः । तस्माद्धात्रोऽसुन् नवशब्दस्यनोभावश्च ॥ १४ ॥

पञ्चदशीमृचमाह—

**अ॒स्मा इदु॒ त्यदनु॑ दाय्येषा॒मेको॒ यद्व॒व्ने भूरे॒रीशा॑नः ।**
**प्रैत॑शं॒ सूर्ये॑ पस्पृधा॒नं सौव॑श्व्ये॒ सुष्वि॑माव॒दिन्द्रः॑ ॥१५॥**

**अ॒स्मै । इत् । ऊं॒ इति॑ । त्यत् । अनु॑ । दा॒यि॒ । ए॒षा॒म् । एकः॑ ।**
**यत् । व॒व्ने । भूरेः॑ । ईशा॑नः । प्र । एत॑शम् । सूर्ये॑ । प॒स्पृ॒धा॒नम् ।**
**सौव॑श्व्ये । सुस्वि॑म् । आ॒व॒त् । इन्द्रः॑ ॥ १५ ॥**

एकःएकएवशत्रून्जेतुंसमर्थःभूरेर्बहुविधस्यधनस्यईशानःस्वामीयद्वस्तोत्रंवव्नेयमाचेरपांस्तोतॄणांसम्बन्धि यद्वा विभक्तिव्यत्ययःएतैःत्यत्तत्प्रसिद्धंस्तोत्रमस्माइन्द्रायअनुदायिअकारीत्यर्थः। उत्तरार्धस्यइयमाख्यायिका—स्वश्वोनामकश्चिद्राजासचपुत्रकामःसूर्यमुपासाञ्चक्रे तस्यचसूर्यएवपुत्रोबभूव तेनसहएतशनाम्नोमहर्षेःयुद्धंजातमितितदेतदिहोच्यते—अयमिन्द्रःसौवश्व्येस्वश्वपुत्रेसूर्येपस्पृधानं स्पर्धमानंसुष्विं सोमानामभिषोतारंएतशंएतत्संज्ञमृषिमावदपारक्षत्॥ दायि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । वव्ने वनुयाचने लिटिव्यत्ययेनोपधालोपः । पस्पृधानं सर्वंसर्वं

१ नि० ४. १६ ।

अस्माल्लिटःकानच् द्विर्वचने शर्पूर्वाःखयइतियकारःशिष्यते वालकारस्यलोपोरेफस्यसम्प्रसारणंचपृषोदरादित्वात् चित्त्वादन्तोदात्तत्वम्।सौवश्व्ये स्वश्वइतिजनपदशब्दःक्षत्रियेसंज्ञात्वेनवर्तते वानामधेयस्यवृद्धसंज्ञायां वृद्धेत्कोसलाजादाञ्ञ्यङितिअपत्यार्थेञ्यङ्प्रत्ययः नय्वाभ्यांपदान्ताभ्यामितिवृद्धिप्रतिषेधः ऐजागमश्च ञित्त्वादाद्युदात्तत्वम्। सुप्विं पुत्रुअभिपवे उत्सर्गश्छन्दसीति अस्मात्किन्प्रत्ययः लिड्वद्भावाद्द्विर्भावः यणादेशः उवङादेशाभावश्छान्दसः ॥ १५ ॥

षोडशीमृचमाह—

एवातेहारियोजनासुवृक्तीन्द्रब्रह्माणिगोतमासोअक्रन्।
ऐषुविश्वपेशसंधियंधाःप्रातर्मक्षूधियावसुर्जगम्यात् ॥१६॥२९॥

एव। ते। हारिऽयोजन। सुऽवृक्ति। इन्द्र। ब्रह्माणि। गोतमासः।
अक्रन्। आ। एषु। विश्वऽपेशसम्। धियम्। धाः। प्रातः।
मक्षु। धियाऽवसुः। जगम्यात् ॥ १६ ॥ २९ ॥

हयोरश्वयोर्योजनंयस्मिन्नर्थेसतथोक्तस्तस्यस्वामित्वेनसम्बन्धीहारियोजनः हेहारियोजनेन्द्र गोतमासोगोतमगोत्रोत्पन्नाऋषयः सुवृक्तिसुष्टुआवर्जकानिअभिमुखीकरणकुशलानिब्रह्माणिस्तुतिरूपाणिमन्त्रजातानितेतवैवाक्रन्अकृषत एषुस्तोतृषुविश्वपेशसंबहुविधरूपयुक्तंधियंधाः धियालभ्यत्वाद्धीर्धनमुच्यते यद्वा धीशब्दःकर्मवचनः पश्वादिबहुविधरूपंधनमग्निष्टोमादिकंबहुविधरूपंकर्मवाआधाः धेहिस्थापय प्रातः इदानीमिवपरेद्युरपिप्रातःकालेधियावसुः बुद्ध्याकर्मणावाप्राप्तधनइन्द्रः मक्षुशीघ्रंजगम्यात् अस्मद्रक्षणार्थमागच्छतु ॥ एव निपातस्यचेति संहितायांदीर्घः। सुवृक्ति सुपांसुलुगितिशसोलुक्। अक्रन् करोतेर्लुङि मन्त्रेघसह्वरेत्यादिनाच्लेर्लुक् अन्तादेशः तस्यङित्त्वाद्गुणाभावेयणादेशःइवश्रेवीकारलोपेसंयोगान्तलोपेचअडागमः।धाः छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङि गातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः॥१६॥

॥ इतिप्रथमस्यचतुर्थेएकोनत्रिंशोवर्गः ॥ २९ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेचतुर्थोध्यायःसमाप्तः ॥ ४ ॥

---

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

अथपञ्चमाध्यायआरभ्यते प्रथमेमण्डलेएकादशानुवाकेचत्वारिसूक्तानिगतानि प्रमन्महइत्येतत्त्रयोदशर्चंपञ्चमंसूक्तं तत्रानुक्रम्यते—प्रसप्तोनेति।अनिरुक्तासंख्याविंशतिरित्युक्तत्वात् सप्तोनेत्युक्तेत्रयोदशेत्युक्तंभवति ऋषिश्चान्यस्मादितिपरिभाषयानोधाऋषिः अनादेशपरिभाषया त्रिष्टुप्छन्दः इन्द्रोदेवता गतःसामान्यविनियोगः विशेषविनियोगस्तुलिङ्गादवगन्तव्यः ।

तत्रप्रथमामृचमाह—

ॐम् प्रमन्महेशवसानायशूषमांगूषंगिर्वणसेअङ्गिरस्वत् ।
सुवृक्तिभिःस्तुवतऋग्मियायार्चामार्कंनरेविश्रुताय ॥१॥

प्र । मन्महे । शवसानाय । शूषम् । आंगूषम् । गिर्वणसे ।
अङ्गिरस्वत् । सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम ।
अर्कम् । नरे । विऽश्रुताय ॥ १ ॥

शवसानाय शवइतिबलनाम तदिवाचरते यथाबलं शत्रून्हन्तितथाशत्रूणांहन्तेत्यर्थः गिर्वणसे गीर्भिःस्तुतिलक्षणैर्वचोभिःसम्भजनीयाय गिर्वणादेवोभवतिगीर्भिरेनंवनयन्तीतियास्कः। एवम्भूतायेन्द्राय शूषमितिसुखनाम शूषंसुखहेतुभूतम् आङ्गूषस्तोमआघोषइतियास्कः। आङ्गूषंस्तोत्रंअङ्गिरस्वत् अङ्गिरसइवप्रमन्महे वयंस्तोतारःप्रकर्षेणावगच्छामः अवगत्यचसुवृक्तिभिः सुष्ठुआवर्जकैः स्तुत्याभिमुखीकरणसमर्थैःस्तोत्रैःस्तुवतेस्तोत्रंकुर्वते ऋषये यइन्द्रः ऋग्मियः अर्चनीयोभवति यद्वा कर्मणिकर्तृप्रत्ययः ऋषिणास्तूयमानायेत्यर्थः नरेसर्वेषांनेत्रे यद्वा नरे यजमानेविश्रुतायषष्ट्यर्थसप्तमी यद्वा नरे यजमानेविश्रुताययष्टव्यतयाविशेषेणप्रख्यातायएवम्भूतायतस्मैअर्कमर्चनरूपंस्तोत्रं अर्कोमन्त्रोभवतियदनेनार्चन्तीतियास्कः। अर्चाम पूजयामउच्चारयामेत्यर्थः ॥मन्महे मनुअवबोधने तनादित्वादुप्रत्ययः लोपश्चास्यान्यतरस्यांम्वोरितिमकारादौप्रत्ययेउकारलोपः शवसानाय शवइत्याचार-

१ नि० ६.१४.। २ नि० ५.११.। ३ नि० ५.४.।

रतिशवस्यते अस्माद्लटःशानच् बहुलंछन्दसीतिशपोलुक् शानचश्छन्दस्युभयथेतिआर्धधातुकत्वात् अतोलोपयलोपौ चितइत्यन्तोदात्तत्वं ननु क्यङोङित्त्वात्तस्यनुदात्तेदितिशानचोनुदात्तेनभवितव्यं एवंतर्हितात्च्छीलिकश्चानश् तस्यसार्वधातुकत्वेपिलसार्वधातुकत्वाभावात् चित्स्वरएवशिष्यते। आङ्गूषं आङ्पूर्वाद्घुषेः पचाद्यचिघोङ्इत्यस्यगूआदेशः पृषोदरादित्वादाङोङकारस्येत्संज्ञाभावश्छान्दसः चित्स्वरेणोत्तरपदस्यान्तोदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् घञिवाथाथादिनोत्तरपदान्तोदात्तत्वम्। गिर्वणसे गृशब्दे सम्पदादिलक्षणोभावेक्विप् ऋतइद्धातोरितीत्वम् गीर्भिर्वन्यते सम्भज्यतेइतिगिर्वणाः औणादिकःकर्मण्यसुन् संज्ञापूर्वकस्यविधेरनित्यत्वात् हलिचेतिदीर्घाभावः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्पूर्वपदप्रकृतिस्वरत्वम्। अङ्गिरस्वत् तेनतुल्यमितिवतिः नभोंगिरोमनुषांवत्युपसंख्यानमितिभसंज्ञायांरुत्वाद्यभावः प्रत्ययस्वरः। सुवृक्तिभिः वृजीवर्जने भावेक्तिन् तितुत्रेतीट्प्रतिषेधः शोभनमावर्जनंयेषां नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ननु क्तिन्नन्तस्योत्तरपदस्याद्युदात्तत्वादाद्युदात्तंद्व्यच्छन्दसीतिवचनादुत्तरपदाद्युदात्तत्वंप्राप्नोति एवंतर्हितत्पुरुषोस्तु शोभनमावर्जितोभवत्येभिरितिसुवृक्तयःस्तोत्राणि करणेक्तिन् तादौचनितीतिगतेःप्रकृतिस्वरत्वे प्राप्ते मन्क्तिन्नित्यादिनाकारकादुत्तरस्यक्तिनोविहितमुत्तरपदान्तोदात्तत्वंअकारकादपिव्यत्ययेन भवति। स्तुवते शतुरनुमइतिविभक्तेरुदात्तत्वम्। ऋग्मियाय एकाचोनित्यंमयटमिच्छन्तीतिऋक्शब्दाद्विकारार्थेमयट् स्वादिष्वसर्वनामस्थानेइतिपदसंज्ञायांकुत्वजश्त्वे व्यत्ययेनेत्वम् यद्वा ऋचस्तुताविसस्मात्भावेमक् बहुलवचनात्कुत्वंजश्त्वंच। ऋग्मियाय ऋग्मंस्तुतिमर्हतीतिऋग्मियः अर्हार्थेघच् चितइत्यन्तोदात्तत्वम्। अर्चाम अर्चपूजायांभौवादिकः शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणधातुस्वरःशिष्यते। अर्कं अर्च्यतेनेनेत्यर्कःपुंसिसंज्ञायांघःप्रायेणेतिघःप्रत्ययः चजोःकुघिण्ण्यतोरितिकुत्वम्। नरे नृशब्दाच्चतुर्थ्येकवचनेगुणश्छान्दसः। विश्रुताय श्रुश्रवणे कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्॥ १ ॥

द्वितीयामृचमाह—

प्रवोमहेमहिनमोभरध्वमांगूष्यंशवसानायसाम।
येनानःपूर्वेपितरःपदज्ञाअर्चन्तोअङ्गिरसोगाअविन्दन् ॥२॥

प्र। वः। महे। महि। नमः। भरध्वम्। आङ्गूष्यम्। शवसानाय। साम। येन। नः। पूर्वे। पितरः। पदऽज्ञाः। अर्चन्तः। अङ्गिरसः। गाः। अविन्दन्॥ २॥

हेऋत्विजोवोयूयं महेमहते शवसानायबलमिवाचरते अतिबलायेत्यर्थः उत्तरवाक्येप-च्छन्दश्रुतेस्तच्छन्दाध्याहारः एवम्भूताय तस्माइन्द्रायमहिमहत्प्रौढंनमःस्तोत्रंप्रभरध्वं प्रकर्षेणसंपादयत किंतत्स्तोत्रमित्याह आंगूष्यंसाम आघोषयोग्यंरथन्तरादिसाम तन्निष्पाद्यतामित्यर्थः अभित्वाशूरेत्यादिष्वृक्षुयद्गानं तस्यसामेत्याख्या तथाचोक्तं—गीतिषुसामाख्येति[1]। येनेन्द्रेणनोस्माकंपितरः पितृविशेषाः पूर्वेपूर्वपुरुषाः अङ्गिरसः पणिनाम्नासुरेणापहृतानांगवांपदज्ञाः मार्गज्ञाःसन्तः अतएवार्चन्तस्तंपूजयन्तोगाअविन्दन् अलभन्त॥ वः प्रथमार्थेद्वितीया। पदज्ञाः पदानिजानन्तीति आतोनुपसर्गेकइतिकः आतोलोपइटिचेत्याकारलोपः । अविन्दन् विद्लृलाभे शेमुचादीनामितिनुमागमः॥ २ ॥

तृतीयामृचमाह—

इन्द्र॑स्याङ्गि॑रसां चे॒ष्टौ वि॒दत्स॒रमा॒ तन॑याय धा॒सिम् ।
बृह॒स्पति॑र्भि॒नदद्रिं॑ वि॒दद्गाः समु॒स्रिया॑भिर्वावशन्त॒ नरः॑ ॥३॥

इन्द्र॑स्य । अङ्गि॑रसाम् । च॒ । इ॒ष्टौ । वि॒दत् । स॒रमा॑ । तन॑याय । धा॒सिम् । बृ॒ह॒स्पतिः॑ । भि॒नत् । अद्रि॑म् । वि॒दत् । गाः । सम् । उ॒स्रिया॑भिः । वा॒व॒श॒न्त॒ । नरः॑ ॥ ३ ॥

अत्रेदमाख्यानम्—सरमानामदेवशुनीपणिभिर्गोष्वपहृतासुतद्गवेषणायवांसरमांइन्द्रःप्राहैषीत् यथालोकेव्याधोवनान्तर्गतमृगान्वेषणायश्वानंविसृजतितद्वत् सासरमैवमवोचत् हेइन्द्र अस्मदीयामशिशवेतद्गोसबन्धिक्षीराद्यन्नंयदिप्रयच्छसितर्हिगमिष्यामीति सतथेत्यब्रवीत् तथाचशाट्यायनकम्—अन्नादिनीतेसरमेप्रजांकरोमियानोगाअन्वविन्दइति। ततोगत्वागवांस्थानमज्ञासीत् ज्ञात्वाचास्मैन्यवेदयत् तथानिवेदितासुगोषुतमसुरंहत्वाताःगाःसइन्द्रोलभतेति। अयमर्थोस्यांप्रतिपाद्यते इन्द्रस्याङ्गिरसामृषीणांचइष्टौप्रेषणेसतिसरमादेवशुनीतनयायस्वपुत्रायधासिमन्नंविदत् अविन्दत् धासिरित्यन्ननाम धासिःइरेतितन्नामसुपाठात् तयागोषुनिवेदितासुबृहस्पतिः बृहतांदेवानामधिपतिरिन्द्रः अद्रिंअत्तारमसुरं भिनदवधीत् तेनापहृताःगाःविददलभत ततोनरोनेतारोदेवाःउस्रियाभिःगोभिःसह उस्रियेतिगोनाम संवावशन्तभृशंहर्षशब्दमकुर्वन् यद्वा गोभिःसार्धंनभूताभिःतदीयंक्षीरादिकमकामयन्तसमगच्छन्तेत्यर्थः॥ इष्टौ इषगतावित्यस्मात्भावेक्तिनि दर्षेवृषेतिक्तिनउदात्तत्वम्। विदत् विद्लृलाभे लुङ्लिदित्वादङ् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः

१ ऋ० सं० ५. ३. २१ । २ जैमि० अ० २. ५ ।

अङ्गएवस्वरःशिष्यते पादादित्वान्निघाताभावः।सरमा सरमासरणादिविंयास्कः। सर्तेरौणादिकोऽमप्रत्ययः। धासिं धेट्पाने धीयतेपीयतेइतिधासिः औणादिकःसिप्रत्ययः यद्वा दधातेःपोषणार्थाद् सिप्रत्ययः। बृहस्पतिः तद्बृहतोःकरपत्योश्चोरदेवतयोःसुट्तलोपश्चेतिसुडागमःतलोपश्च बृहच्छब्दोन्तोदात्तः तस्यकेचिदाद्युदात्तत्वंवर्णयन्तीत्युक्तम् पतिशब्दोडतिप्रत्ययान्तआद्युदात्तः अतउभेवनस्पत्यादिषुइतिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्। उस्रियाभिः निवसत्यस्यांक्षीरादिकमितिउस्रागौः वसनिवासेइत्यस्मात् स्फायितंचीत्यादिनाअधिकरणेरक् वचिस्वपीत्यादिना सम्प्रसारणम् उस्राशब्दात्स्वार्थेपृषोदरादित्वेनघप्रत्ययइतिनिघण्टुभाष्यम् घस्येयादेशः प्रत्ययस्वरः। घावधान्त वाश्रृशब्दे अस्माद्घञन्ताल्लङ्ङिझस्यान्तादेशेसति तस्य छन्दस्युभयथेतिआर्धधातुकत्वात् अतोलोपयलोपौ व्यत्ययेनधातोर्ह्रस्वत्वम् यद्वा वशकान्तावित्यस्माद्यङि नवशइतिसम्प्रसारणेप्रतिषिद्धेपूर्ववत्प्रक्रिया ॥ ३ ॥

चतुर्थीमृचमाह—

स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः ।
सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः ॥४॥

सः । सुऽस्तुभा । सः । स्तुभा । सप्त । विप्रैः । स्वरेण । अद्रिम् । स्वर्यः । नवऽग्वैः । सरण्युऽभिः । फलिऽगम् । इन्द्र । शक्र । वलम् । रवेण । दरयः । दशऽग्वैः ॥ ४ ॥

अङ्गिरसोद्विविधाः सत्रयागमनुतिष्ठन्तोयेनवभिर्मासैःसमाप्यगतास्तेनवग्वाः नवग्वानवनीतगतयइतियास्कोऽभ्याचख्यौ। येतुदशभिर्मासैःसमाप्यजग्मुस्तेदशग्वाः तादृशैरुभयविधैर्विप्रैर्मेधाविभिः सरण्युभिः सरणंशोभनांगतिमिच्छद्भिः सप्त सप्तसंख्याकैः सप्तस्वन्मेधातिथिप्रभृतयोङ्गिरसोदृश्यन्ते एवंभूतैरङ्गिरोभिः सुष्टुभा शोभनस्तोभयुक्तेनस्वरेणउदात्तादिश्रव्यस्वरोपेतेन यद्वा मन्द्रमध्यमादिस्वरेणस्तुभास्तोत्रेणस्वर्यः सुष्ठुप्राप्यः यद्वा शब्दनीयःस्तुत्यइत्यर्थः हेशक्र शक्तिमन्निन्द्र एवम्भूतःसत्वं अद्रिंआदरणीयंवज्रेणछेत्तव्यमित्यर्थः फलिगं प्रतिफलंप्रतिबिंबंतदस्मिन्नस्तीतिफलिस्वच्छमुदकं तद्गच्छत्याधारत्वेनेतिफलिगः यद्वा व्रीह्यादिफलंतदस्मिन्सतिभवतीतिफलिवृष्टिजलं तद्गच्छतीतिफलिगः एवम्भूतंवलंमेघंरवेणआत्मीयेनशब्देनदरयःअभायथः

निघ० ११.२४.। २ निघ० ११.१९.।

त्वदीयशब्दश्रवणमात्रेणमेघोबिभेतीत्यर्थः यद्वा अद्रिः पर्वतःअद्यतेस्मिन्पटलादिकमितिअद्रिः फलिगोमेघः फलिगः उपलइतितन्नामसुपाठात् वलोसुरः देवांश्चैवलेगाःपर्यपर्यन्नित्यादावसुरे प्रयुक्तत्वात् एतेत्रयोपित्वदीयशब्दश्रवणमात्रेणअबिभयुरित्यर्थः ॥ सइत्येकःपादपूरणः । सुष्टुभा स्तोभतिःस्तुतिकर्मा संपदादिलक्षणोभावेक्विप् शोभनःस्तुप् स्तोभोयस्य नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् उपसर्गात्सुनोतीतिषत्वम् । स्तुभा करणभूतस्यापिस्तोत्रस्यस्वव्यापारेकर्तृत्वात् स्तोभतिस्तौतीति क्विप्चेतिकर्तरिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । सप्त सुपांसुलुगितिभिसोलुक् । स्वर्यः स्वृशब्दोपतापयोः ऋहलोर्ण्यदितिण्यत् वृद्ध्यभावश्छान्दसः तित्स्वरितमितिस्वरितत्वम् नवग्वैः नवशब्दउपपदेगमेर्भावेक्विपि गमःक्वावितिअनुनासिकलोपे ऊङ्चगमादीनामितिवक्तव्यमितिऊकारान्तादेशः नवभिर्गूर्गमनंयेषांतेनवग्वाः अकारोपजनश्छान्दसः यद्वा गमेर्भावे ड्वप्रत्ययः पूर्ववद्बहुव्रीहिः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सरण्युभिः सरणमालनइच्छन्तःसरण्यवः क्यचि अन्त्यलोपश्छान्दसः क्याच्छन्दसीत्युः । फलिगं फल्युदकंगच्छतीतिफलिगःडोन्यत्रापिदृश्यतइतिगमेर्डः । वलं वृणोतीतिवलः पचाद्यच् कपिलकादित्वाल्लत्वम् । दरयः दृविदारणे वृद्धौकृतायां दृभयेइतिघटादिपुपाठान्मित्वे मितांह्रस्वइतिह्रस्वत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

गृणानोअङ्गिरोभिर्दस्मविवरुषसासूर्येणगोभिरन्धः ।
विभूम्याअप्रथयइन्द्रसानुदिवोरजउपरमस्तभायः ॥५॥१॥

गृणानः अङ्गिरःऽभिः । दस्म । वि । वः । उषसा । सूर्येण । गोभिः । अन्धः । वि । भूम्याः । अप्रथयः । इन्द्र । सानु । दिवः । रजः । उपरम् । अस्तभायः ॥ ५ ॥ १ ॥

हेदस्मदर्शनीयशत्रूणामुपक्षपितर्वेन्द्र त्वंअङ्गिरोभिर्ऋषिभिर्गृणानःस्तूयमानःसन् उषसासूर्येणसहगोभिःकिरणैःअन्धः अन्धकारंविवः व्यवृणोः व्यनाशयइत्यर्थः तथाहेइन्द्र त्वंभूम्याःपृथिव्याः सानुसमुच्छ्रितप्रदेशंव्यप्रथयः विशेषेणविस्तीर्णमकरोः विषमामिमांसमीकृतवानित्यर्थः तथा दिवोन्तरिक्षस्य रजः रजसोलोकस्यउपरं उपमूलप्रदेशंअस्तभायःअस्तभाः यथान्तरिक्षलोकस्यमूलंदृढंभवतितथाकार्षीरित्यर्थः ॥ गृणानः कर्मणिलटःशानचियक्भावेन्यत्पदेन

१ ऐ० ब्रा० ६. २४ ।

श्वा प्वादीनांह्रस्वइतिह्रस्वत्वम् चित्स्वरेणान्तोदात्तत्वम्। दस्म दसुउपक्षये इषियुधीन्धिदसीत्यादिनामक्। वः वृञ्वरणे लुङिसिपि मन्त्रेवसेत्यादिनाच्लेर्लुक् गुणेहल्ङ्याब्भ्यइतिसलोपः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। अन्वः तमोप्यन्धउच्यतेनास्मिन्ध्यानंभवतीतियास्कः। रजः लोकारजांस्युच्यन्तइत्युक्तत्वात् रजःशब्दोलोकवचनः सुपांसुलुगितिषष्ठ्यालुक्। अस्तभायः स्तङिस्तंभुस्तुंभ्वित्यादिनाश्नाप्रत्ययः छन्दसिशायजपीतिअहावपिव्यत्ययेनश्नाप्रत्ययस्यशायजादेशः अनिदितामितिनलोपः अडागमः॥ ५॥

॥ इतिप्रथमस्यपञ्चमेप्रथमोवर्गः॥ १ ॥

प्रवर्ग्येअभिष्टवे तदुप्रयक्षतममित्येषा अथोत्तरमित्यत्रसूत्रितम्—तदुप्रयक्षतममस्यकर्मात्मन्वन्नभोदुह्रतेघृतंपयइति।

तामेतांसूक्तेषष्ठीमृचमाह—

**तदु॒प्रय॑क्षतममस्य॒कर्म॑द॒स्मस्य॒चारु॑तमम॒स्ति॒दंसः॑।**
**उ॒प॒ह्व॒रेयदु॒प॑रा॒अपि॑न्व॒न्मध्व॑र्णसो॒न॒द्य॑1॒श्चत॑स्रः॥६॥**

**तत्। ऊ॒म् इति॑। प्रय॑क्षऽतमम्। अ॒स्य॒। कर्म॑। द॒स्मस्य॑। चारु॑ऽतमम्। अ॒स्ति॒। दंसः॑। उ॒प॒ऽह्व॒रे। यत्। उप॑राः। अपि॑न्वत्। मधु॑ऽअर्णसः। न॒द्यः॑। चत॑स्रः॥ ६ ॥**

दस्मस्य दर्शनीयस्यास्येन्द्रस्यतदुतदेवकर्मप्रयक्षतमंअतिशयेनपूज्यं दंसइतिकर्मनाम दंसस्तदेवकर्मचारुतममतिशयेनशोभनंअस्ति किंतदित्यतआह अयमिन्द्रःउपह्वरे उपह्वर्तव्येगन्तव्ये पृथिव्याःसम्बन्धिनिसमीपदेशेउपराःउप्ताःस्थापिताः मध्वर्णसःमधुरोदकाः चतस्रोनद्यःप्रधानभूताः गङ्गादिनदीः अपिन्वत् असिञ्चत्इतियदेतत्कर्मतदन्येनकर्तुमशक्यत्वात्पूज्यमित्यर्थः॥प्रयक्षतमं यक्षपूजायाम् यक्ष्यतइतियक्षः अतिशयेनयक्षोयक्षतमः पुनःप्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। दंसः दसिदंसनदर्शनयोः चुरादिरात्मनेपदी दंस्यतेकर्तव्यतयादृश्यतइतिदंसःकर्म औणादिकःकर्मण्यसुन्। उपह्वरे ह्वृकौटिल्ये कौटिल्यलक्षणगतिवाचिनात्रगतिमात्रंलक्ष्यते उपह्वरन्तिगच्छन्त्यस्मिन्नत्रइतिउपह्वरोभूप्रदेशः पुंसिसंज्ञायांघःप्रायेणेत्यधिकरणेघप्रत्ययः गुणः कृ-

1 नि० ५. १।

दुत्तरपदप्रकृतिस्वरत्वम् । अपिन्वत् पिवि सेचने भौवादिकः । चतस्रः शस् त्रिचतुरोःस्त्रियांतिसृचतसृइतिचतुर्शब्दस्यचतस्रादेशः आद्युदात्तोनिपातितः पूर्वसवर्णदीर्घेप्राप्तेअचिरऋतइतिरेफादेशः चतुर्शब्दस्याद्युदात्तत्वात् स्थानिवद्भावेनचतस्रादेशस्याद्युदात्तत्वेसिद्धेपिपुनराद्युदात्तनिपातनसामर्थ्याद्यणादेशस्यवापूर्वविधौस्थानिवद्भावाच्चतुरःशसीत्यन्तोदात्तत्वस्याभावः नच नपदान्तेतिस्थानिवद्भावप्रतिषेधः स्वरदीर्घयलोपेषुलोपाजादेशएवनस्थानिवत् अन्यत्रतुस्थानिवदेवेतिनियमात् ॥ ६ ॥

सप्तमीमृचमाह—

द्विताविवव्रेसनजासनीळेअयास्यःस्तवमानेभिरर्कैः ।
भगोनमेनेपरमेव्योमन्नधारयद्रोदसीसुदंसाः ॥७॥

द्विता । वि । वव्रे । सनऽजा । सनीळे इति सऽनीळे । अयास्यः । स्तवमानेभिः । अर्कैः । भगः । न । मेने इति । परमे । विऽओमन् । अधारयत् । रोदसी इति । सुऽदंसाः ॥ ७ ॥

अयास्यः यासःप्रयत्नः तत्साध्योयास्यः नयास्यःअयास्यःपुष्कलैःप्रयत्नैः साधयितुमशक्यइत्यर्थः कथंसाध्यतइत्यतआह—स्तवमानेभिः स्तोत्रंकुर्वद्भिः पुरुषैःअर्कैः स्तुतिरूपैर्मंत्रैः स्तूयमानःसन्निन्द्रः सुसाध्योभवति यद्वा अयास्यः पञ्चवृत्तिर्मुख्यःप्राणः सहिआस्यान्मुखादयतेगच्छतिनिष्क्रामतितदुपासकोप्यङ्गिराः उपचारादयास्यउच्यते तथाच छन्दोगैराम्नातम्—तँहायास्यउद्गीथमुपासांचक्रे एतमुएवायास्यंमन्यन्तेआस्याद्यदयतेतेनेति । अथवा अयमास्येमुखेवर्ततइत्ययास्यः तथाचवाजसनेयकम्—तेहोचुःक्वनुसोभूद्योनइत्थमसक्तेत्ययमास्यान्तरितीतिपूर्ववदुपासकोप्ययास्यः तेनऋषिणा स्तवमानेभिः गुणिनिष्ठगुणाभिधानलक्षणांस्तुतिंकुर्वद्भिरर्कैर्मंत्रैःकरणभूतैःस्तूयमानःसन् सनजा सनेतिनिपातोनित्यार्थः नित्यजातेसर्वदाविद्यमानस्वभावइत्यर्थः प्रथमभावविकारवाचिनाजनिनाद्वितीयोभावविकारःसत्तालक्ष्यते यथाऔत्पत्तिकस्तुशब्दस्यार्थेनसम्बन्धइति[1] । औत्पत्तिकमितिनित्यंब्रूमइतिहितद्भाष्यं सनीळे समानंनीडं ओकोनिवासस्थानंययोस्तेसंश्लिष्टेइत्यर्थः एवंविधेद्यावापृथिव्यौद्विताद्विधाविवव्रेविवृतेअकरोत् भेदेनास्थापयदित्यर्थःमेनेमननीयेपरमेउत्कृष्टे व्योमनविविधलक्षणेनभसिवर्तमानोभगोनसूर्यइव सुदंसाः शोभनकर्मेन्द्रः रोदसीद्यावापृथिव्यावधारयदपोषयत् यद्वा मेनेतिस्त्रीनाम यथाचया-

1 जैमि० अ० १. सू० ५.

स्कः—मेनाग्नाइतिस्त्रीणांमेनामानयन्त्येनाइति[1]। स्त्रीरूपमापन्नेरोदसीइन्द्रः अपुषदित्यर्थः॥ द्विता द्विधेत्यस्यधकारस्यतकारश्छान्दसः। सनजा जनीप्रादुर्भावे अस्माद्भावे अन्येष्वपिदृश्यतइतिदृशिग्रहणस्यसर्वोपाधिव्यभिचारार्थत्वात्केवलादपिजनेर्डप्रत्ययः सनानित्यंजोजननंययोस्ते सनजे पूर्वपदस्यह्रस्वश्छान्दसः एवमादित्वादन्तोदात्तत्वम् तदेवबहुव्रीहिस्वरेणशिष्यते सुपांसुलुगितिविभक्तेराकारः। अयास्यः यसुप्रयत्ने यासःप्रयत्नः तत्रभवोयास्यः भवेछन्दसीतियत् नयास्यः अयास्यः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् श्रुत्युक्तनिर्वचनेतुपृषोदरादित्वादभिमतरूपस्वरसिद्धिः। मेने सप्तम्येकवचनस्यसुपांसुलुगितिशेआदेशः शेइतिप्रगृह्यत्वम् यद्वा मन्यतइतिमेना पचाद्यच् नशिमन्योरलिट्येत्वंवक्तव्यमित्येत्वम् ततष्टाप् द्विवचने ईदूदेद्द्विवचनंप्रगृह्यमितिप्रगृह्यत्वम्। सुदंसाः दंसइतिकर्मवाचीअसुन्प्रत्ययान्तआद्युदात्तः बहुव्रीहौआद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥७॥

अष्टमीमृचमाह—

स॒नाद्दिवं॒ परि॒ भूमा॒ विरू॑पे पुन॒र्भुवा॑ युव॒ती स्वेभि॒रेवैः॑ ।
कृ॒ष्णेभि॑र॒क्तोषा रुश॑द्भि॒र्वपु॑र्भि॒रा च॑रतो अ॒न्यान्या॑ ॥८॥

स॒नात् । दिव॑म् । परि॑ । भूम॑ । विरू॑पे॒ इति॒ वि॒ऽरू॑पे । पुनः॒ऽभुवा॑ । यु॒व॒ती इति॑ । स्वेभिः॑ । एवैः॑ । कृ॒ष्णेभिः॑ । अ॒क्ता । उ॒षाः । रुश॑त्ऽभिः । वपुः॑ऽभिः । आ । च॒र॒तः॒ । अ॒न्याऽअ॑न्या ॥ ८ ॥

विरूपेशुक्लकृष्णतयाविषमरूपेपुनर्भुवा पुनःपुनःप्रतिदिवसंजायमानेयुवतीतरुण्यौरात्र्युषसोःसर्वदैकरूप्यात् एवम्भूतेरात्र्युषसौदिवंद्युलोकंभूमाभूमिंचसनाच्चिरकालादारभ्यस्वेभिरेवैः स्वकीयैर्गमनैःपरिचरतः पर्यावर्तेते अयमेवार्थःस्पष्टीक्रियते—अक्ताराात्रिःकृष्णेभिरन्धकाररूपैर्वर्णैरुपलक्षिताउषाश्चरुशद्भिर्दीप्यमानैर्वपुर्भिःस्वशरीरभूतैस्तेजोभिरुपलक्षिताअन्यान्यापरस्परव्यतिहारेणआचरतः आवर्तेते हेइन्द्र एतत्सर्वंतवैवकार्यंते त्वदधीनत्वात्सर्वासांदेवतानामित्यर्थः॥ भूम सुपांसुलुगितिद्वितीयायाडादेशः छान्दसोह्रस्वः। एवैः इण्गतौ इण्शीङ्भ्यांवन्नितिभावेवन्प्रत्ययः नित्त्वादाद्युदात्तत्वम्। अक्ता नक्तेतिरात्रिनाम नलोपश्छान्दसः। वपुर्भिः अर्तिपृवपीत्या-

1 नि० ३.२१.१

दिनाउस् नित्त्वादाद्युदात्तः । अन्यान्या कर्मव्यतिहारेसर्वमाम्रोद्वेभवतइतिवक्तव्यम् समासवद्‌बहुलमितिद्विर्भावे तस्यपरमाम्रेडितमित्याम्रेडितसंज्ञायामनुदात्तंचेत्याम्रेडितस्यानुदात्तत्वम् ॥८॥

नवमीमृचमाह—

सनेमिसख्यंस्वपस्यमानःसूनुर्दाधारशवसासुदंसाः ।
आमासुचिद्दधिषेपक्वमन्तःपयःकृष्णासुरुशद्रोहिणीषु ॥९॥

सनेमि । सख्यम् । सुऽअपस्यमानः । सूनुः । दाधार । शवसा । सुऽदंसाः । आमासु । चित् । दधिषे । पक्वम् । अन्तरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ॥ ९ ॥

स्वपस्यमानः स्वपःशोभनंकर्मतदिवाचरन्शवसाशवसोबलस्यसूनुःपुत्रःअतिबलवानित्यर्थः सुदंसाः शोभनयागादिकर्मयुक्तःएवम्भूतइन्द्रः सख्यंयजमानानांसखित्वंसनेमिपुराणंदाधारधारयतिपोषयतीत्यर्थः सनेमीतिपुराणनाम मवयाः सनेमीतिपाठात् किञ्च आमासुचित् आर्द्रास्वपरिपक्कासुगोषुचअन्तर्मध्येपक्कंपरिपक्कंपयोदधिषेधारयसि तथाकृष्णासुकृष्णवर्णासुरोहिणीषुलोहितवर्णासुचगोषुतद्विपरीतंरुशद्दीप्यमानंश्वेतवर्णपयोदधिषे ॥ सख्यं सख्युर्भावःसख्यं सख्युर्यइतियः प्रत्ययस्वरः।दाधार धृञ्धारणे तुजादित्वादभ्यासस्यदीर्घत्वम् । पक्कं पचोवइतिनिष्ठातकारस्यवत्वम् । रोहिणीषु रुहबीजजन्मनिप्रादुर्भावेच रुहेश्चलोवेतीतन्प्रत्ययान्तोरोहितशब्दआद्युदात्तोवर्णवाची वर्णादनुदात्तात्तोपधात्तोनइतिङीप् तत्सन्नियोगेनतकारस्यनकारादेशश्च ङीपःपित्त्वादनुदात्तत्वेप्रातिपदिकस्वरएवशिष्यते ॥ ९ ॥

दशमीमृचमाह—

सनात्सनीळाअवनीरवाताव्रतारक्षन्तेअमृताःसहोभिः ।
पुरुसहस्राजनयोनपत्नीर्दुवस्यन्तिस्वसारोअह्रयाणम् ॥ १० ॥ २ ॥

सनात् । सऽनीळाः । अवनीः । अवाताः । व्रता । रक्षन्ते । अमृताः । सहःऽभिः । पुरु । सहस्रा । जनयः । न । पत्नीः । दुवस्यन्ति । स्वसारः । अह्रयाणम् ॥ १० ॥ २ ॥

सनाच्चिरकालादारभ्य सनीळाः समाननिवासस्थानाः अवाताःवातगमनंतद्रहिताः एकपाण्यवस्थानात् अवनयइत्यङ्गुलिनाम एवम्भूताः अवनीरङ्गुलयः पुरुपुरूणिबहूनिसहस्राअसंख्यातानिव्रतावतानिइन्द्रसम्बन्धीनिकर्माणि अमृताःपुनःपुनःकरणेपिआलस्यरहिताःसत्यःसहोभिरात्मीयैर्बलैरक्षन्तेपालयन्ति अपिच स्वसारःस्वयमेवसरन्त्योङ्गुलयः पत्नीःपालयित्र्यः अह्रयाणंलज्जारहितमगलभमित्यर्थः यद्वा अह्रीतयानंप्रशस्तगमनमिन्द्रं जनयोन जनयइतिदेवानांपत्न्य उच्यन्ते देवानांवैपत्नीर्जनयइतिश्रुतेः। ताइवदुवस्यन्तिपरिचरन्तिअञ्जलिबन्धनेनेन्द्रंप्रीणयन्तीत्यर्थः ॥ अवनीः अवनयोङ्गुलयोभवन्त्यवन्तिकर्माणीतियास्कः। सुपांसुलुगितिजसःपूर्वसवर्णदीर्घत्वम्।अवाताः वागतिगन्धनयोः असिहसीत्यादिनाभावेतन्प्रत्ययः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्।व्रता शेश्छन्दसिबहुलमितिशेर्लोपः। दुवस्यन्ति दुवस्यतिः परिचरणकर्मा कण्ड्वादिः अतोयकएवस्वरःशिष्यते पादादित्वान्निघाताभावः। अह्रयाणं ह्रीलज्जायाम् बहुलं छन्दसीतिश्लोरभावः व्यत्ययेनशानच् मुगभावश्छान्दसः नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् यद्वा बहुलंछन्दसीतिशपोलुकि छन्दस्युभयथेतिशानचआर्धधातुकत्वेनङित्त्वाभावेगुणायादेशौ पूर्ववत्समासस्वरौ। यास्कस्त्वेवंव्याख्यत्—अह्रयाणोह्रीतयानइति ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेद्वितीयोवर्गः ॥ २॥

एकादशीमृचमाह—

सनायुवोनमसानव्योअर्कैर्वसूयवोमतयोदस्मदद्रुः।
पतिंनपत्नीरुशतीरुशन्तंस्पृशन्तित्वाशवसावन्मनीषाः ॥११॥

सनाऽयुवः। नमसा। नव्यः। अर्कैः। वसुऽयवः। मतयः। दस्म। दद्रुः। पतिम्। न। पत्नीः। उशतीः। उशन्तम्। स्पृशन्ति। त्वा। शवसाऽवन्। मनीषाः ॥ ११ ॥

हेदस्मदर्शनीयेन्द्र अर्कैःशस्त्ररूपैर्मन्त्रैर्नमसानमस्कारेणयस्त्वंनव्यः स्तुत्योभवसि सनायुवःसनातनंअग्निहोत्रादिनित्यंकर्मआत्मनइच्छन्तः वसूयवोवसुधनमात्मनइच्छन्तोधनकामावामतयोमेधाविनस्त्वांदद्रुःबहुनामयासेनजग्मुः हेशवसावन्बलवन्निन्द्र तैःप्रयुक्तामनीषास्तुतयः त्वात्वांस्पृशन्तिप्राप्नुवन्ति तत्रदृष्टान्तः—उशतीःउशत्यःकामयमानाः पत्नीःपत्न्यःउशन्तं

१ नि० ३.९.। २ नि० ५.१५.।

कामयमानंपतिंन यथापतिंसम्भजन्ते तद्वत् ॥ सनायुवः सनेत्येतदव्ययंनित्यत्वमाचष्टे वेतर शद्वान्लक्ष्यते सनासनातनंकर्मआत्मनइच्छन्तीतिसनायुवः क्याच्छन्दसीत्युप्रत्ययःजसिवर्णव्य-त्ययेनोत्वम् । मतयः मनज्ञाने मन्यन्तइतिमतयःस्तोतारः क्तिच्क्तौचसंज्ञायामितिक्तिच् नक्तिचिदीर्घश्चेतिनिषेधेमाप्तेबाहुलकात् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः चित्त्वादन्तोदात्त-त्वम् । दद्रुः द्राकुत्सायांगतौ लिट्चुसि आतोलोपइटिचेत्याकारलोपः । उशतीः वशकान्तौ लटः शतृ अदादित्वाच्छपोलुक् शतुर्ङित्त्वात् ग्रहिज्यादिनासम्प्रसारणम् उगितश्चेतिङीप् शतुरनु-मइतिनद्याउदात्तत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घः । शवसावन् मतुपिआकारोपजनश्छान्दसः यद्वा मत्वर्थीयआवनिप् ॥ ११ ॥

द्वादशीमृचमाह—

सनादेवतवरायोगभस्तौनक्षीयन्तेनोपदस्यन्तिदस्म ।
द्युमाँअसिक्रतुमाँइन्द्रधीरःशिक्षाशचीवस्तवनःशचीभिः ॥१२॥

सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयन्ते । न । उप ।
दस्यन्ति । दस्म । द्युऽमान् । असि । क्रतुऽमान् । इन्द्र । धीरः ।
शिक्ष । शचीऽवः । तव । नः । शचीभिः ॥ १२ ॥

हेदस्मदर्शनीयेन्द्र गभस्तिरितिबाहुनाम तवगभस्तौहस्तेसनादेवचिरकालादारभ्यरियरा-निरायोधनानिनक्षीयन्तेनविनश्यन्तिनोपदस्यन्तिच स्तोतृभ्योदत्तेपित्वद्धस्तगतंधनमुपक्षयंनमा-मोत्यपितुवर्धते हेइन्द्र धीरोबुद्धिमान्धृष्टोवात्वंद्युमान्दीप्तिमानसि तथाक्रतुमानलोकरक्षण-हेतुभूतकर्मयुक्तोसि हेशचीवः कर्मवन्निन्द्र तवशचीभिःत्वदीयैःकर्मभिर्नोस्मभ्यं धनंशिक्षदेहि शिक्षतिर्दानकर्मा ॥ क्षीयन्ते क्षीञ्हिंसायां क्र्यादिः अस्मात्कर्मकर्तरिकर्मवद्भावाधगात्मनेपदेबल-रणंस्त्वाश्रयमपियथास्यादितिकर्तृवद्भावादचःकर्तृयकीत्याद्युदात्तत्वम् चादिलोपेविभाषेतिनिघा-तप्रतिषेधः । शचीवः शचीअस्यास्तीतिशचीवान् छन्दसीरइतिमतुपोवत्वम् सम्बुद्धौमतुवसोरु-रितिनकारस्यरुत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

सनायतेगोतमइन्द्रनव्यमतक्षद्ब्रह्महरियोजनाय ।
सुनीथायनःशवसाननोधाःप्रातर्मक्षूधियावसुर्जगम्यात् ॥१३॥१॥

सनाऽयते । गोतमः । इन्द्र । नव्यम् । अतक्षत् । ब्रह्म ।
हरिऽयोजनाय । सुऽनीथाय । नः । शवसान । नोधाः । प्रातः ।
मक्षु । धियाऽवसुः । जगम्यात् ॥ १३ ॥ ३ ॥

सइन्द्रः सनायतेनित्यइवाचरतिसर्वेषामाद्योभवति हेशवसानबलवन्निन्द्र हरियोजनायह-रीअश्वौरथेयोजयतीतिहरियोजनः सुनीथायसुष्टुनेत्रेएवम्भूतायतस्मैतुभ्यंगोतमः गोतमस्यऋ-षेःपुत्रोनोधाऋषिःनव्यंनूतनंब्रह्मएतत्सूक्तरूपंस्तोत्रंनोस्मदर्थमतक्षत्अकरोत् अतोस्माभिरनेन स्तोत्रेणस्तुतःसन् धियाबुद्ध्याकर्मणावाप्राप्तवसुःइन्द्रःप्रातःकालेमक्षुशीघ्रंजगम्यादागच्छतु ॥ सनायते सनेतिनिपातोनित्यशब्दसमानार्थः तस्मादाचारार्थेक्यङ्प्रत्ययः । सुनीथाय णी-ञ्प्रापणेइत्यस्मादौणादिकःथक्प्रत्ययः थाथादिस्वरः ॥ १३ ॥

॥ इतिप्रथमस्यपञ्चमेतृतीयोवर्गः ॥ ३ ॥

त्वंमहानितिनवर्चंषष्ठंसूक्तंनोधसआर्षंत्रैष्टुभमैन्द्रं अनुक्रम्यतेच—त्वंनवेति । समूढ्हेदशरात्रे द्वितीयेछन्दोमेमरुत्वतीयेशस्त्रेएतत्सूक्तम् विश्वजितोग्निंनरइतिखण्डेसूत्रितम्—तांसुतेकीर्तिंत्वं-महाँइन्द्रयोहेति ॥

तत्रप्रथमामृचमाह—

त्वंमहाँइन्द्रयोहशुष्मैर्द्यावाजज्ञानःपृथिवीअमेधाः ।
यद्धतेविश्वागिरयश्चिदभ्वाभियादृळ्हासःकिरणानैजन् ॥१॥

त्वम् । महान् । इन्द्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः । पृथिवी इति । अमे । धाः । यत् । ह । ते । विश्वा । गिरयः । चित् । अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ॥ १ ॥

हेइन्द्र त्वंमहान्गुणैःसर्वाधिकोभवसि योह यःखलुत्वंअमेअसुरकृतेभयेसतिजज्ञानस्तदानी-मेवप्रादुर्भवःसन् शुष्मैःशत्रूणांशोषकैःआत्मीयैर्बलैर्द्यावापृथिवीद्यावापृथिव्यौधाः अधारयःप्राद-शाद्भयादमूमुचइत्यर्थः किञ्च यद्धतेयस्यखलुतवसम्बन्धिन्याभियाभीत्याविश्वाविश्वानिव्याप्तानि मानिभूतजातानिगिरयश्चियेचगिरिशेचयाः अभ्वा महत्नामैतत्अन्यान्यपिमहान्तियानिसन्तिते

पिसर्वेदह्लासःदृढाअपिऐजन्अकंपिपत तत्रदृष्टान्तः—किरणान् यथासूर्यरश्मयःइतस्ततोनप्रकि-म्पन्ते तद्वत् ॥ जज्ञानः जनीप्रादुर्भावे लिटःकानच् गमहनेत्यादिनोपधालोपः स्थानिवद्भावाद्द्विर्भा-वादि चितइत्यन्तोदात्तत्वम् ॥ द्यावापृथिवीइत्यस्यसमस्तपदस्यमध्येजज्ञानइत्यस्यपाठश्छान्दसः एव सुपांसुलुगितिषष्ठ्यालुक् । अभ्वा आसमन्ताद्भवन्तिसद्भावंप्राप्नुवन्तीत्यभ्वामहान्तः आङ्-पूर्वाद्भवतेरौणादिकोड्वन्प्रत्ययः उपसर्गस्यह्रस्वत्वंच यद्वा नञ्पूर्वाद्भवतेःप्राप्त्यर्थान्नञिभुवोडि-दितिक्वन्प्रत्ययः महान्तोहिप्राप्तुंनशक्यन्ते शेश्छन्दसिबहुलमितिशेर्लोपः । किरणाःकीर्यन्तेवि-क्षिप्यन्तेइतिकिरणाः कृविक्षेपे कॄपॄवृजिमन्दिनिधाञ्भ्यःक्युरितिक्युप्रत्ययः योरनादेशेप्रत्यया-द्युदात्तः ऋतइद्धातोरितीत्वम् । ऐजन् एजृकम्पने लङ्याडागमःसचोदात्तः वृद्धिश्च ॥ १॥

द्वितीयामृचमाह—

आयद्धरीइन्द्रविव्रतावेरातेवज्रंजरिताबाह्वोर्धात् ।
येनाविहर्यतक्रतोअमित्रान्पुरइष्णासिपुरुहूतपूर्वीः ॥२॥

आ । यत् । हरी इति । इन्द्र । विऽव्रता । वेः । आ । ते । वज्रम् ।
जरिता । बाह्वोः । धात् । येन । अविहर्यतक्रतो इत्यविहर्यतऽक्रतो ।
अमित्रान् । पुरः । इष्णासि । पुरुऽहूत । पूर्वीः ॥ २ ॥

हेइन्द्र त्वंयदायदाविव्रताविविधकर्माणौहरीत्वदीयावश्वौआवेःरथेआगमयसिरथेयोजयसी-त्यर्थः तदानींतेतवबाह्वोर्हस्तयोर्जरितास्तोतावज्रमाधात्स्तोत्रेणस्थापयतिस्तोत्रात्स्तुतेभयवत्सन्-रेणवज्रंत्वद्धस्तेदृश्यतइत्यर्थः हेअविहर्यतक्रतोप्रेप्सितकर्मन्निन्द्र अमित्रान्शत्रून्येनवज्रेणइष्णा-सिअभिगच्छसि हेपुरुहूत पुरुभिर्बहुभिर्यजमानैराहूतस्त्वंपूर्वीर्बह्वीःपुरःअसुरपुराणिभेत्तुमभिग-च्छसीत्यर्थः ॥ विव्रता व्रतमितिकर्मनाम विविधंव्रतंकर्मययोस्तौ सुपांसुलुगितिपूर्वसवर्णदीर्घत्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । वेः वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु अन्तर्भावितण्यर्थात् छान्दसेलङि सिपि अदादित्वाच्छपोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । धात् दधातेश्छा-न्दसेलुङिगातिस्थेतिसिचोलुक् पूर्ववदडभावः । अविहर्यतक्रतो हर्यतिःप्रेप्साकर्मेतियास्कः । हर्यगतिकान्त्योः कान्तिरभिलाषः विहर्यतोनभिलषितः अविहर्यतोभिलषितइत्यर्थः तादृशः क्रतुःकर्मयस्यसतथोक्तः । अमित्रान् नसन्तिमित्राण्येषुइतिबहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तर-

१ नि० ७. १७. ।

पदाद्युदात्तत्वम् । इष्णासि इषआभीक्ष्ण्ये अत्रगत्यर्थः क्र्यादिभ्यःश्ना सिपःपित्वादनुदात्तत्वे तस्यैवस्वरःशिष्यते यद्वृत्तयोगादनिघातः ॥२॥

तृतीयामृचमाह—

त्वंसत्यइन्द्रधृष्णुरेतान्त्वमृभुक्षानर्यस्त्वंषाट् ।
त्वंशुष्णंवृजनेपृक्षआणौयूनेकुत्सायद्युमतेसचाहन् ॥३॥

त्वम् । सत्यः । इन्द्र । धृष्णुः । एतान् । त्वम् । ऋभुक्षाः । नर्यः ।
त्वम् । षाट् । त्वम् । शुष्णम् । वृजने । पृक्षे । आणौ । यूने ।
कुत्साय । द्युऽमते । सचा । अहन् ॥ ३ ॥

हेइन्द्र त्वंसत्यःसत्सुभवः सर्वोत्कृष्टइत्यर्थः एतान्शत्रूनभिगतःसन् धृष्णुः तेषांधर्षयिता तिरस्कर्ता किञ्च त्वमृभुक्षाः ऋभूणामधिपतिः तेपुरुवनिवासोवा यद्वा महन्नामैतत् महान्भवृक्षोऽसि नर्योनृभ्योहितः तथा त्वं षाट् शत्रूणामभिभविताहन्तेत्यर्थः किञ्च वृजनइत्यादीनित्रीणिसङ्ग्रामनामानि अत्रपूर्वेविशेषणे वृजनेवर्जनयुक्ते सङ्ग्रामेहिवीराःपुरुषावर्ज्यन्तेहिंस्यन्ते पृक्षेसंपर्चनीयेवीर्यैर्योद्धुंप्राप्तव्ये एवंविधेआणौसङ्ग्रामेद्युमतेदीप्तिमतेयूनेतरुणायकुत्साय सचासंसहायोभूत्वाशुष्णंशोषयितारमेतत्संज्ञमसुरंअहनअवधीः ॥ ऋभुक्षाः ऋभुरितिमेधाविनाम उरुविस्तीर्णं भाति यद्वा ऋतेनयज्ञेनभातिभवतीतिवाऋभुः उरुशब्देऋतशब्देवोपपदेभातेर्भवतेर्वामृगय्वादयश्चेतिकुप्रत्ययः पूर्वपदस्यऋभावश्चनिपात्यते क्षयतिरैश्वर्यकर्मा तेषामीष्टइत्यृभुक्षाः यद्वा क्षिनिवासगत्योःतेषु निवसतीतिपतेरथइतिविधीयमानइनिप्रत्ययोबहुलवचनादस्मादपिभवति टिलोपश्च सौ पथिमथ्यृभुक्षामादित्यात्वं प्रत्ययस्वरः। षाट् सहअभिभवे छन्दसिसहइतिकेवलादपिण्विः षत्वंछान्दसम् । द्युमते द्यौःदीप्तिरस्मिन्नस्तीतिद्युमान् स्वादिष्वसर्वनामस्थानेइतिपदसंज्ञायां दिवउदित्युत्वं ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम्॥३॥

चतुर्थीमृचमाह—

त्वंहत्यदिन्द्रचोदीःसखावृत्रंयद्वज्रिन्वृषकर्मन्नुभ्नाः ।
यद्धशूरवृषमणःपराचैर्विदस्यूँर्योनावकृतोवृथाषाट् ॥४॥

त्वम् । ह । त्यत् । इन्द्र । चोदीः । सखा । वृत्रम् । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः । यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ । अकृतः । वृथाषाट् ॥ ४ ॥

हेइन्द्र त्वंह त्वंखलुसखाकुत्सस्यसहायःसन् त्यत्तत्प्रसिद्धंधनंजयलक्षणंयशोवाचोदीः प्रेरितवान्अकार्षीरित्यर्थः हेवृषकर्मन्वृष्ट्युदकसेचनरूपकर्मोपेत वज्रिन्वज्रवन्निन्द्र वृत्रंसर्वस्यधनस्यावरीतारंकुत्सस्यशत्रुंयद्यदाउभ्नाः अतुभ्नाः अहिंसीः अपिच हेशूरशत्रूणामीरक वृषमणःकामाभिवर्षकमनस्केन्द्र वृथाषाट्अनायासेनशत्रूणामभिभवितात्वं यद्वयदात्वद्ध्योनौवैरिभिर्मिश्रणीयेसंग्रामेदस्यून् कुत्सस्योपक्षपयितॄन्अन्याञ्छत्रून्पराचैः परागमनैः व्यकृतःपराङ्मुखाययाभवन्तितथाव्यच्छिनः तदानीं कुत्सःसर्वयशः प्राप्नोदित्यर्थः॥चोदीः चुदप्रेरणे लुङि नेटीतिसिचिवृद्धिप्रतिषेधः। उभ्नाः णभतुभहिंसायाम् क्रैयादिकःलङिसिपि तलोपश्छान्दसः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः पराचैरित्येतदव्ययं नीचैरुच्चैरितिवदितिभट्टभास्करमिश्रः। पराचैःपराञ्चैरितिनिरुक्तम्[1]। दस्यून्दीर्घादटिसमानपादेइतिनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिउकारस्यसानुनासिकता।अकृतः कृतीछेदने लङिसिपितुदादित्वाच्छप्रत्ययः आगमानुशासनस्यानित्यत्वाच्छेमुचादीनामितिनुमागमस्याभावः शस्यङित्त्वाद्गुणाभावः॥४॥

पञ्चमीमृचमाह—

त्वंह॒त्यदि॑न्द्रारि॑षण्यन्दृ॒ळ्हस्य॑चि॒न्मर्ता॑ना॒मजु॑ष्टौ।
व्यं१॒स्मदाका॒ष्ठाअर्व॑तेवर्घ॒नेव॑वज्रिञ्छ्नथिह्य॒मित्रा॑न् ॥५॥४॥

त्वम् । ह । त्यत् । इन्द्र । अरिषण्यन् । दृळ्हस्य । चित् । मर्तानाम् । अजुष्टौ । वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव । वज्रिन् । श्नथिहि । अमित्रान् ॥ ५ ॥ ४ ॥

हेइन्द्र त्वंसन्त्यत्तस्यदृळ्हस्यचिद्दृढस्यकस्यचिदपिअरिषण्यन्रेषणमनिच्छन् एवंस्वभावोऽसि देवतात्वेनानुगृहीतत्वात् तथापिमर्तानांस्तोतॄणामस्माकंशत्रुभिरजुष्टावप्रीतौसत्यांअस्मदर्थे अस्मदीयाश्वायगन्तुं काष्ठादिशःआसमन्ताद्विवःविवृताःकुरु यथासर्वासुदिक्षुअस्मदीयाअश्वाः

---

[1] नि० ११.२५.।

प्रतिरोधमन्तरेणगच्छन्तितथाकुर्वित्यर्थः किञ्च तत्रत्यानमित्रान् हेवज्रिन्वज्रवन्निन्द्र घनेवघनेन कठिनेनपर्वतेनेववज्रेणश्नथिहिश्नथयजहीत्यर्थः यद्वा मर्तानांमनुष्याणांमध्येयस्मिन्कस्मिंश्चि-त्ववामीवौसत्यांतस्यशत्रोर्दृढस्यापि अरिषण्यन् रेषणंहिंसनमनिच्छन्वर्तसेयस्मिंस्तुकुत्सादौमो-तिरस्तितस्यशत्रुवधंचकृषे अवस्तवप्रियाणामस्माकमर्वतइत्यादिपूर्ववत् ॥ त्यत् सुपांसुलुगितिष-ष्ठ्यालुक् । अरिषण्यन् रिष्टशब्दात्क्यचिदुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यतीतिरिषण्भावोनिपा-त्यते नञ्समासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् ।अस्मत् पूर्ववत्षष्ठ्यालुक् । अर्वते अर्वणस्त्रसावन-ञइतिनकारस्यतकारादेशः वनिप्सुपौपित्त्वादनुदात्तौ परिशेषात् धातुस्वरएवशिष्यते । घनेव मू-र्तौघनइतिकाठिन्येगम्यमानेहन्तेरप्प्रत्ययान्तोनिपात्यते ।श्नथिहि श्नथहिंसार्थः ण्यन्ताल्लोटिबहु-लंछन्दसीतिशपोलुक् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेचतुर्थोवर्गः ॥ ४ ॥

षष्ठीमृचमाह—

त्वांहत्यदिन्द्रार्णसातौस्वर्मीळ्हेनरआजाहवन्ते ।
तवस्वधावइयमासमर्यऊतिर्वाजेष्वतसाय्याभूत् ॥६॥

त्वाम् । ह । त्यत् । इन्द्र । अर्णऽसातौ । स्वःऽमीळ्हे । नरः । आजा । हवन्ते । तव । स्वधाऽवः । इयम् । आ । सऽमर्ये । ऊतिः । वाजेषु । अतसाय्या । भूत् ॥ ६ ॥

हेइन्द्र अर्णसातौअर्णानांगन्तॄणांयुद्धेमत्तानांपुरुषाणांसातिर्लाभोयस्मिन्स्वर्मीळ्हेमीळ्हमिति धननाम सुष्ठुअरणीयंधनंयस्मिन्एवम्भूतेआजाआजौसङ्ग्रामे त्यत्वंमसिद्धंत्वामेवनरोयोद्धुकामाः पुरुषाः सहायार्थहवन्तेआह्वयन्ति यद्वा अर्णसउदकस्यसातिर्लाभोयस्मिन्वृत्रादियुद्धेतस्मिन्नित्य-र्थः वृष्टिनिरोधकेनवृत्रेणसहवर्षणार्थतवयद्युद्धंतत्रस्तोतारस्त्वांमोत्साहयन्तीतिभावः यस्मादेवं त-स्मात् हेस्वधावः हेअन्नवन्बलवन्वाइन्द्र समर्येसङ्ग्रामेतवसम्बन्धिनीइयमूतिःत्वदीयमिदंरक्षणंआ-अस्मदाभिमुख्येनभूत्भवतुवाजेषुसङ्ग्रामेषुयैषाकृतिः अतसाय्या योद्धृभिःमाप्तव्याभवति ॥ त्यत्-सुपांसुलुगितिद्वितीयायालुक् ।अर्णसातौऋगतौ बहुलवचनादौणादिकोनमत्ययः षणुदानेइत्यस्मा-द्भावेक्तिनिजनसनखनामित्यनुनासिकस्यात्वम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् यद्वा उदकेनुट्-चेत्यर्तेरसुन्मत्ययोनुडागमश्च पीवोपवसनादीनांछन्दसिलोपोवक्तव्यइतिसलोपः नित्त्वादाद्युदात्तत्व-

म् पूर्ववद्बहुव्रीहिस्वरः । स्वर्मीळ्हे स्वर्शब्दोन्यङ्स्वरौस्वरितावितिस्वरितः बहुव्रीहिस्वरेणच एवशिष्यते । आजा सुपांसुलुगितिसप्तम्याडादेशः । स्ववावः मतुवसोरुरितिमतुपोरुत्वम् । अवता-म्या अतसातत्यगमने औणादिकःसाप्यप्रत्ययः तस्याडागमश्च आगमानुदात्तत्वेप्रत्ययाद्युदा-त्तत्वम् । भूव् छन्दसिलुङ्लङ्लिटइतिप्रार्थनायांलुङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥६॥

सप्तमीमृचमाह—

त्वंह॒त्यदि॑न्द्रस॒प्तयु॒ध्य॒न्पुरो॑वज्रि॒न्पुरु॒कुत्सा॑यदर्दः ।
ब॒र्हिर्नयत्सु॒दासे॒वृथा॒वर्गं॒होरा॑ज॒न्वरि॑वः पू॒र॒वे॑कः ॥७॥

त्वम् । ह॒ । त्यत् । इ॒न्द्र॒ । स॒प्त । यु॒ध्य॑न् । पुरः॑ । व॒ज्रि॒न् ।
पु॒रु॒ऽकुत्सा॑य । दर्द॒रिति॑ दर्दः॑ । ब॒र्हिः । न । यत् । सु॒ऽदासे॑ । वृथा॑ ।
वर्क् । अं॒होः । रा॒ज॒न् । वरि॑वः । पू॒र॒वे॑ । क॒रिति॑ कः ॥ ७ ॥

हेवज्रिन्वज्रवन्निन्द्र पुरुकुत्सायएतत्संज्ञायऋषयेयुध्यन्तदीयशत्रुभिःसहयुद्धंकुर्वाणस्त्व-मेव त्यवताःसप्तपुरःतदीयानिसप्तसंख्यानिनगराणिदर्दःव्यदारयः अभैत्सीरित्यर्थः अपिच सुदा-सेएतत्संज्ञायराज्ञेअंहोःएतत्संज्ञस्यासुरस्यसम्बन्धियद्धनमस्तितद्वृथाअनायासेनबर्हिर्नं बर्हिरि-ववर्क् अवृणक्अच्छिनइत्यर्थः तदनन्तरंपूरवे त्वांहविषापूरयतेतस्मैसुदासेहेराजन्स्वामिन्निन्द्र वरिवोधनं कःअकार्षीः ॥ त्यत् सुपांसुलुगितिविभक्तेर्लुक् । दर्दः दृविदारणे अस्माद्यङ्लुगन्ताल्ल-ङिसुपिअदादिवच्चेतिवचनाच्छपोलुक् बाहुलकाद्दृलादिशेषाभावः हल्ङ्याब्भ्यइतिसिलोपः ब-हुलंछन्दस्यमाङ्योगेपीत्यडभावः । सुदासे शोभनंददातीतिसुदाः असुन् सुदाःकल्याणदानइतिया-स्कः । वर्क् वृजीवर्जने लङिसिपिबहुलंछन्दसीतिविकरणस्यलुक् लघूपधगुणेपूर्ववत्सलोपः अडभा-वश्च चोःकुरितिकुत्वम् । कः डुकृञ्करणे लुङिसिपिमन्त्रेघसेतिच्लेर्लुक् पूर्ववत्सलोपाडभावौ ॥७॥

अष्टमीमृचमाह—

त्वंत्यांनंइन्द्रदेवचि॒त्रामिष॒मापो॒नपी॑पयः॒परि॑ज्मन् ।
यया॑शूर॒प्रत्य॒स्मभ्यं॒यंसि॒त्मन॒मूर्जं॒नवि॒श्वध॒क्षर॑ध्यै ॥८॥

१ नि० ६. २२.

त्वम् । त्याम् । नः । इन्द्र । देव । चित्राम् । इषम् । आपः । न । पीपयः । परिऽज्मन् । यया । शूर । प्रति । अस्मभ्यम् । यंसि । त्मनम् । ऊर्जम् । न । विश्वध । क्षरध्यै ॥ ८ ॥

हेदेवद्योतमानेन्द्र त्वंनोस्माकंचित्रांचायनीयांत्यांतामिषमन्नंपरिज्मन्परितोव्याप्तायांभूमौ पीपयः प्रवर्धयः यथासर्वाभूमिः अन्नेनपरिपूर्णाभवतितथाकुर्वित्यर्थः तत्रदृष्टान्तः—आपोन यथाआपोवृष्ट्युदकानिभूम्यांवर्षणेनप्रवर्धयसितद्वत् यद्वा भूमौवर्तमानानस्मान्यथाअपः प्रापयसितद्वत् चित्रामिषमपिपाययेतिभावः हेशूरेन्द्र ययाइषात्मनमात्मानंजीवंअस्मभ्यंप्रतियंसिप्रयच्छसि तत्रदृष्टान्तः—विश्वध विश्वतः सर्वतः क्षरध्यैक्षरितुंऊर्जंन उदकमिव यथास्मभ्यंबहुलमुदकंप्रयच्छसितद्वत्प्राणधारणरूपंजीवनमपिप्रयच्छसीतिभावः॥ आपः शसिप्राप्तेव्यत्ययेनजस् अप्तृन्नित्यादिनादीर्घः।पीपयः स्फायीओप्यायीवृद्धौ ण्यन्ताच्छान्दसेलुङि प्यायःपीतिव्यत्ययेन पीभावः णिश्रिद्रुस्रुभ्यइतिच्लेश्चङादेशः णिलोपादीनि यद्वा पीङ्पानेइत्यस्मात् लुङिचङिपूर्ववत् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । परिज्मन् ज्मतिर्गतिकर्मा अजगतिक्षेपणयोः आभ्यांपरिपूर्वाभ्यां श्वन्नुक्षन्नित्यादौकनिन्प्रत्ययान्तोनिपातितः सुपांसुलुगितिसप्तम्यालुक् । यंसि यमउपरमेबहुलंछन्दसीतिशपोलुक् । त्मनं आङोन्यत्रापिछन्दसिदृश्यतइत्यात्मनआकारलोपः संज्ञापूर्वकस्यविधेरनित्यत्वादुपधादीर्घाभावः । विश्वध विश्वशब्दात् तसिलःसकारलोपोधत्वंच पृषोदरादित्वात् । क्षरध्यै क्षरसञ्चलने तुमर्थेसेसेनित्यध्यैन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

अकारितइन्द्रगोतमेभिर्ब्रह्माण्योक्तानमसाहरिभ्याम् ।
सुपेशसंवाजमाभरानःप्रातर्मक्षूधियावसुर्जगम्यात् ॥ ९॥५॥

अकारि । ते । इन्द्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा । हरिऽभ्याम् । सुऽपेशसम् । वाजम् । आ । भर । नः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ९ ॥ ५ ॥

हेइन्द्र तेतवगोतमेभिर्गोत्रतैर्मेरेतत्संज्ञकैर्ऋषिभिःअकारिस्तोत्रंकृतमित्यर्थः एतदेवस्पष्टीकरोति ब्रह्माणिमन्त्रजातानिनमसाहविर्लक्षणेनान्नेनसहहरिभ्यामश्वाभ्यांयुक्तायतुभ्यंओक्ताआभिमु-

स्त्येनोक्तानि यद्वा मर्यादायामाकारः यथाशास्त्रंप्रयुक्तानि सत्वंसुपेशसं पेशइतिरूपनाम बहुविधरूपयुक्तंवाजमन्नंनोस्मभ्यमाभरआहरदेहीतियावत् धियाबुद्ध्याकर्मणावाप्रातधनइन्द्रः प्रातःकालेअस्मद्रक्षणार्थंजगम्यात्आगच्छतु ॥ ओका शेश्छन्दसिबहुलमितिशेर्लोपः। सुपेशसं पिशअवयवे असुन् बहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। भर हृग्रहोर्भइतिभत्वम् द्व्यचोतस्तिङइतिसंहितायांदीर्घः ॥ ९ ॥

॥ इतिप्रथमस्यपञ्चमेपञ्चमोवर्गः ॥ ५ ॥

वृष्णेशर्धायेतिपञ्चदशर्चंसप्तमंसूक्तं नोधसआर्षं मारुतं अन्त्यात्रिष्टुप् शिष्टाश्चतुर्दशजगत्यः तथाचानुक्रान्तम्—वृष्णेपञ्चोनामारुतंत्रिष्टुबन्तमिति। चातुर्विंशिकेहन्याग्निमारुतेइदंमारुतनिविद्धानीयंसूत्रितम्—पृक्षस्यवृष्णोवृष्णेशर्धाययज्ञेनवर्धतेत्याग्निमारुतमिति। आभिप्लविकेपञ्चमेहन्यप्येतदाग्निमारुतेमारुतंनिविद्धानीयं सूत्रितंच—पृक्षस्यवृष्णोवृष्णेशर्धायनूचित्सहोजाइत्याग्निमारुतमिति।

तत्रप्रथमामृचमाह—

वृष्णे॒शर्धा॑यसु॒मखा॑यवे॒धसे॒नोधः॑सुवृ॒क्तिंप्रभ॑रामरु॒द्भ्यः॑।
अ॒पोनधीरो॒मन॑सासु॒हस्त्यो॒गिरः॒सम॑ञ्जेवि॒दथे॑ष्वा॒भुवः॑॥१॥

वृष्णे॑। शर्धा॑य। सु॒ऽमखा॑य। वे॒धसे॑। नोधः॑। सु॒ऽवृ॒क्तिम्। प्र। भ॒र। म॒रुत्ऽभ्यः॑। अ॒पः। न। धीरः॑। मन॑सा। सु॒ऽहस्त्यः॑। गिरः॑। सम्। अ॒ञ्जे। वि॒दथे॑षु। आ॒ऽभुवः॑॥ १ ॥

अत्रपूर्वार्धेनस्तुतौनोधाःप्रेर्यते हेनोधः वृष्णेकामानांवर्षित्रेसुमखायशोभनयज्ञायवेधसेवृष्पर्फलादीनांकर्त्रे वायोःसन्निहितपुष्पाणिफलानिचोत्पद्यन्ते एवंविधायमरुद्भ्यः विभक्तिव्यत्ययः मरुतांमितरावणांशर्धायसमूहायसुवृक्तिं सुष्ठुआवर्जकं सुष्ठुप्रवृत्तंवास्तोत्रं प्रभरप्रेरयस्तुहीतियावत् स्तुतिमेरितोनोधाआह धीरोधीमान् सुहस्त्यः शोभनांगुलियुक्तः कृताञ्जलिरित्यर्थः एवंभूतोहं मनसागिरःस्तुतिलक्षणावाचः समञ्जेसम्यग्व्यक्ताःकरोमि यागिरोविदथेषुयज्ञेषु आभुवःआद्भवनदाप्यं यथाशास्त्रं प्रयुक्ताभवन्तीत्याभुवः देवताभिमुखीकरणायसमर्थाः यद्वायोग्याःस्तोत्रैः नःप्रेरंकरदृशं स्तोमीतिभावः तत्रदृष्टान्तः—आपोन यथापर्जन्योयुगपद्बहुप्रदेशेपुवहुशोजलानिवर्षति

तद्वत् ॥ वृष्णो वृषसेचने कनिन्युवृषितक्षीत्यादिना कनिन्प्रत्ययः किच्चाद्गुणाभावो नित्त्वादाद्युदात्तत्वम् चतुर्थ्येकवचने अल्लोपोन इत्यकारलोपः । शर्धाय शृधुप्रसहने शर्ध्यंते प्रसह्यते नेनेन पर्वतादिकमिति शर्धो मरुत्संघः करणे घञ् ञित्वादाद्युदात्तत्वम् । सुमखाय शोभनो मखो यस्य नञ्सुभ्यामिति प्राप्ते व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । नोधः पादादित्वात्पाष्ठिकमामन्त्रितायुदात्तत्वम् । सुहस्त्यः हस्ते भवो हस्त्यः भवेछन्दसीति यत् यतोनाव इत्याद्युदात्तत्वम् । ततः सुशब्देन बहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह–

तेजज्ञिरेदिवऋष्वासउक्षणोरुद्रस्यमर्याअसुराअरेपसः ।
पावकासःशुचयःसूर्याइवसत्वानोनद्रप्सिनोघोरवर्पसः ॥२॥

ते । जज्ञिरे । दिवः । ऋष्वासः । उक्षणः । रुद्रस्य । मर्याः । असुराः ।
अरेपसः । पावकासः । शुचयः । सूर्याःऽइव । सत्वानः । न ।
द्रप्सिनः । घोरऽवर्पसः ॥ २ ॥

ते मरुतो दिवोन्तरिक्षाज्जज्ञिरे प्रादुर्बभूवुः कीदृशाः ऋष्वासः दर्शनीयाः उक्षणः सेक्तारो युवान इत्यर्थः रुद्रस्य मर्याः मर्यशब्दो मनुष्यवाची इह मरुतां मर्त्यत्वासंभवात्पुत्रा इत्यस्मिन्नर्थे पर्यवस्यति मरुतां रुद्रपुत्रत्वं च मन्त्रान्तरे स्पष्टम्–आ ते पितर्मरुतां सुम्नमेतुइति[1] । असुराः शत्रूणां निरसितारः अरेपसः रेप इति पापनाम पापरहिताः पावकासः सर्वेषां शोधकाः सूर्या इव शुचयो दीप्ताः सत्वानो न यथा परमेश्वरस्य भूतगणाः अतिशयेन बद्धपराक्रमाः तत्सदृशा इत्यर्थः सत्वान इति भूतगणा उच्यन्ते–अथो ये अस्य सत्वान इत्यादौ[2] तथादर्शनात् । द्रप्सिनः वृष्ट्युदकबिन्दुभिर्युक्ताः मरुतः सृष्टिं नयन्तीति श्रुतेः[*] । घोरवर्पसः वर्प इति रूपनाम घोररूपाः यथा भूतगणा भयंकररूपाः शत्रूणां भयंकररूपा इत्यर्थः यद्वा सत्वानो न घोरवर्पसः यथा भूतगणा भयंकररूपाः तद्वदेते पीत्यर्थः ॥ ऋष्वासः ऋषी गतौ गत्यर्थो बुद्ध्यर्थ इति अत्र ज्ञानार्थः सर्वनिघृष्वेत्यादौ वप्रत्ययान्तो निपातितः आज्जसेरसुक् । उक्षणः वापूर्वस्य निगम इत्युपधादीर्घाभावः । अरेपसः बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सत्वानः षद्लृविशरणगत्यवसादनेषु षेडरसयोस्तुट् चेति निर्दिश्यमानः

---

१ ऋ० सं० २.७.१६.१ २ तै० सं० ४.५.१.१ ३ तै० सं० २.४.१.०.

* मरुतः सृष्टिं नयन्तीति निरुक्तम् नि०७.२४.।

क्वनिप्प्रत्ययोबहुलवचनात्केवलादपिभवति प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । घोरवर्पसः हन्तेरच्घुरचेतिहन्तेर्घुरादेशः अच् वृङ्धातोर्वृङ्शीङ्भ्यामित्यसुन् पुडागमः बहुव्रीहिस्वरः ॥ २ ॥

तृतीयामृचमाह—

युवा॑नोरु॒द्राअ॒जरा॑अभो॒ग्घनो॑ववक्षुरध्रि॑गावः॒पर्व॑ताइव ।
दृ॒ळ्हाचि॒द्विश्वा॒भुव॑नानि॒पार्थि॑वा॒प्रच्या॑वयन्ति॒दिव्या॑नि॒म॒ज्मना॑॥३॥

युवा॑नः । रु॒द्राः । अ॒जराः॑ । अ॒भो॒क्ऽहनः॑ । व॒व॒क्षुः । अध्रि॑ऽगावः ।
पर्व॑ताःऽइव । दृ॒ळ्हा । चि॒त् । विश्वा॑ । भुव॑नानि । पार्थि॑वा । प्र ।
च्य॒व॒य॒न्ति॒ । दि॒व्यानि॑ । म॒ज्मना॑ ॥ ३ ॥

युवानस्तरुणाःरुद्राः रुद्रपुत्राः अजराः जरारहिताः अभोग्घनः येदेवान् हविर्भिर्नभोजयन्तितेषांहन्तारः अध्रिगावः अधृतगमनाः परैरनिवारितगतयः पर्वताइवदृढाङ्गाः एवम्भूतामरुतः ववक्षुः स्तोतृणामभिमतंप्रापयितुमिच्छन्ति अपिच विश्वासर्वाणिभुवनानिसद्भावंप्राप्तानिपार्थिवापृथिव्यांभवानिदिव्यानिदिविभवानिचवस्तूनिदृह्ळाचित् दृढान्यपिमज्मनेतिबलनाम मज्मनाशोधकेनबलेनप्रच्यावयन्तिप्रचालयन्ति ॥ अभोग्घनः भोजयन्तीतिभोजःनभोजःअभोजःतेषां हन्तारः बहुलंछन्दसीतिहन्तेःक्विप् झयोहोन्यतरस्यामितिहकारस्यघत्वम् इन्हन्पूषार्यम्णांशाविति नियमाद्दीर्घाभावः । ववक्षुः वहप्रापणेअस्मादिच्छासनिएकाचइतीट्प्रतिषेधः द्विर्भावः ढत्वकत्वषत्वानि सन्यतइतीत्वाभावश्छान्दसः लिट्युसिअमन्त्रेइतिनिषेधादाम्प्रत्ययाभावेअतोलोपइत्यकारलोपः प्रत्ययस्वरः पादादित्वान्निघाताभावः ॥ ३ ॥

चतुर्थीमृचमाह—

चि॒त्रैर॒ञ्जिभि॒र्वपु॑षे॒व्य॑ञ्जते॒वक्षः॑सुरु॒क्माँअधि॑येतिरेशु॒भे ।
अंसे॑ष्वेषां॒निमि॑मृक्षुरृ॒ष्टयः॑सा॒कंज॑ज्ञिरेस्व॒धया॑दि॒वोनरः॑ ॥४॥

चि॒त्रैः । अ॒ञ्जिऽभिः॑ । वपु॑षे । वि । अ॒ञ्ज॒ते॒ । वक्षः॑ऽसु । रु॒क्मान् ।
अधि॑ । ये॒ति॒रे॒ । शु॒भे । अंसे॑षु । ए॒षा॒म् । नि । मि॒मृ॒क्षुः॒ । ऋ॒ष्टयः॑ ।
सा॒कम् । ज॒ज्ञि॒रे॒ । स्व॒धया॑ । दि॒वः । नरः॑ ॥ ४ ॥

वपुरितिरूपनाम वपुषेरूपायशोभार्थंमरुतः चित्रैर्नानाविधैः अञ्जिभीरूपाभिव्यञ्जनसमर्थैराभरणैःस्वशरीराणिव्यञ्जतेव्यक्तंकुर्वन्तिअलङ्कुर्वन्तीत्यर्थः वक्षःसु भुजान्तरेषुरुक्मान्रोचमानान्हारान् अधियेतिरेउपरिचक्रिरे किमर्थंशुभेशोभार्थम् अपिच येषांमरुतामंसेषुऋष्टयःआयुधानिनिमिमृक्षुः निमृष्टाः स्थिताःबभूवुः तैरायुधैःसहितानरोनेतारोमरुतः दिवोन्तरिक्षात्स्वधया स्वकीयेनबलेनसाकंसहजज्ञिरेप्रादुर्बभूवुः॥ येतिरे यतीप्रयत्ने लिटिअतएकहल्मध्यइत्येत्वाभ्यासलोपौ। शुभे शुभदीप्तौ सम्पदादिलक्षणोभावेक्विप् सावेकाचइतिचतुर्थ्योउदात्तत्वम्। मिमृक्षुः मृजूशुद्धौ सनि ऊदित्त्वादिडभावः हलन्ताच्चेतिसनःकित्त्वाद्गुणाभावः द्विर्वचनादि सन्यतइतीत्वम् लिट्युसि अतोलोपइत्याकारलोपः।जज्ञिरे जनीप्रादुर्भावे लिटिगमहनेत्यादिनोपधालोपः॥४॥

पञ्चमीमृचमाह—

ई॒शा॒न॒कृतो॒धुन॑यो रि॒शाद॑सो॒वाता॑न्वि॒द्युत॒स्तवि॑षीभिरक्रत।
दु॒हन्त्यूध॑र्दि॒व्यानि॒धूत॑यो॒भूमिं॑पिन्वन्ति॒पय॑सा॒परि॑ज्रयः ॥५॥६॥

ई॒शा॒न॒ऽकृत॑ः। धुन॑यः। रि॒शाद॑सः। वाता॑न्। वि॒ऽद्युत॑ः। तवि॑षीभिः। अ॒क्र॒त॒। दु॒ह॒न्ति॒। ऊध॑ः। दि॒व्यानि॑। धूत॑यः। भूमि॑म्। पि॒न्व॒न्ति॒। पय॑सा। परि॑ऽज्रयः॥ ५॥ ६॥

ईशानकृतःस्तोतारमीशानंधनाधिपतिंकुर्वाणाः धुनयःमेघादीनांकम्पयितारःरिशादसः रिशानांहिंसकानामत्तारः यद्वा रिशतांहिंसतांअसितारोनिरसितारः एवम्भूतामरुतः तविषीभिरात्मीयैर्बलैर्वातान् पुरोवातादीन्विद्युतः विद्योतमानास्तडितश्चाक्रतकुर्वन्ति कृत्वाचपरिज्रयः परितोगन्तारोधूतयःकम्पयितारोमरुतोदिव्यानिदिविभवानि ऊधः ऊधःस्थानीयान्यभ्राणिदुहन्ति रिक्तीकुर्वन्ति जलरहितानिकुर्वन्तीत्यर्थः तदनन्तरंभूमिंपयसामेघान्निर्गतेनोदकेनजलेनपिन्वन्ति सिञ्चन्ति॥ रिशादसः रिशहिंसायाम् इगुपधलक्षणःकः रिशन्तिहिंसन्तीतिरिशाःशत्रवः तानदन्तीतिरिशादसः असुन् नित्त्वादाद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् यद्वा रिशच्छन्दावशत्रन्तादसुक्षेपणेइत्यस्मात्क्विप् व्यत्ययेनपूर्वपदस्योपधादीर्घः अन्तोदात्तत्वंच। अक्रत करोतेश्छान्दसोवर्तमानेलुङ् मन्त्रेघसेतिच्लेर्लुक्। ऊधः सुपांसुलुगितिविभक्तेर्लुक्॥ ५॥

॥ इतिप्रथमस्यपञ्चमेषष्ठोवर्गः॥६॥

मरुत्वतीयशस्त्रेपिन्वन्त्यपइत्येपाधाय्या सूत्रितंच—अग्निर्नेतात्वंसोमक्रतुभिःपिन्वन्त्यपइतिधाय्याइति ।

वामेतांसूक्तेपष्ठीमृचमाह—

पिन्वन्त्यपोमरुतःसुदानवःपयोघृतवद्विदथेष्वाभुवः ।
अत्यंनमिहेविनयन्तिवाजिनमुत्सँदुहन्तिस्तनयन्तमक्षितम् ॥ ६॥

पिन्वन्ति । अपः । मरुतः । सुऽदानवः । पयः । घृतऽवत् । विदथेषु ।
आऽभुवः । अत्यम् । न । मिहे । वि । नयन्ति । वाजिनम् ।
उत्सम् । दुहन्ति । स्तनयन्तम् । अक्षितम् ॥ ६ ॥

सुदानवः शोभनदानामरुतः पयःक्षीरवत् सारवतीरपःपिन्वन्तिसिञ्चन्ति आभुवः आभुवन्तीत्याभुवःऋत्विजः तेविदथेषुयज्ञेषुघृतवद्यथाघृतंसिञ्चन्तिएवंमरुतोपिवृष्टिंकुर्वन्तीति भावःतत्रहेतुमाह—अत्यंन यथाअश्वंसादिनोविनयन्ति युद्धार्थंशिक्षन्ति एवंमरुतोवाजिनंवेगवन्तंमेघंमिहेवर्षणायविनयन्तिस्वाधीनंकुर्वन्तीतिभावः विनीयचस्तनयन्तंगर्जन्तंअक्षितंअक्षीणंउत्संउत्सवन्त्यस्मादापइतिउत्सोमेघः तंदुहन्तिरिक्तीकुर्वन्ति ॥ सुदानवः नुमत्ययान्तोदानुशब्दआद्युदात्तः बहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । मिहे मिहसेचने सम्पदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । स्तनयन्तम् स्तनयशब्दश्चुरादिरदन्तः अतोलोपस्यस्थानिवद्भावाद्वृद्ध्याद्यभावः ॥ ६ ॥

सप्तमीमृचमाह—

महिषासोमायिनश्चित्रभानवोगिरयोनस्वतवसोरघुष्यदः ।
मृगाइवहस्तिनःखादथावनायदारुणीषुतविषीरयुग्ध्वम् ॥७॥

महिषासः । मायिनः । चित्रऽभानवः । गिरयः । न । स्वऽतवसः ।
रघुऽस्यदः । मृगाःऽइव । हस्तिनः । खादथ । वना । यत् ।
आरुणीषु । तविषीः । अयुग्ध्वम् ॥ ७ ॥

महिषइतिमहन्नाम महिषासोमहान्तः मायेतिज्ञाननाम मायिनःप्राज्ञाःचित्रभानवःशोभनदीप्तयःगिरयोनस्वतवसःपर्वताइवस्वकीयेनबलेनयुक्ताःरघुष्यदः शीघ्रगमनाः हेमरुतःएवम्भूतगुणविशिष्टायूयं हस्तिनोहस्तवन्तोमृगाइवगजाइव वनावनानिवृक्षजातानिखादथभक्षयथ प्रभंक्थेतियावत् यद्यस्मात्आरुणीषुअरुणवर्णासुवडवासुतविषीर्बलान्ययुग्ध्वंसंयोजितवन्तः तस्माद्बलवतामिववाहनस्यापिप्रबलत्वात्तत्संयुक्ताभवन्तः सर्वंभजन्तीत्यर्थः ॥ रघुष्यदः स्यन्दूप्रस्रवणे रघुशीघ्रंस्यन्दन्तेगच्छन्तीतिरघुष्यदः क्विप्चेतिक्विप् अनिदितामितिनलोपः वाप्रमूललघ्वलमितिलत्वविकल्पः कृदुत्तरपदप्रकृतिस्वरत्वम् । खादथ खादृभक्षणे । अयुग्ध्वं युजिर्योगे लुङि च्लेःसिच् एकाचइतीट्प्रतिषेधः धिचेतिसकारलोपः चोःकुरितिकुत्वम् अडागमउदात्तः यद्वृत्तयोगादनिघातः ॥ ७ ॥

अष्टमीमृचमाह—

सिंहाइवनानदतिप्रचेतसःपिशाइवसुपिशोविश्ववेदसः ।
क्षपोजिन्वन्तःपृषतीभिर्ऋष्टिभिःसमित्सबाधःशवसाहिमन्यवः॥८

सिंहाःऽइव । नानदति । प्रऽचेतसः । पिशाःऽइव । सुऽपिशः । विश्वऽवेदसः । क्षपः । जिन्वन्तः । पृषतीभिः । ऋष्टिऽभिः । सम् । इत् । सऽबाधः । शवसा । अहिऽमन्यवः ॥ ८ ॥

प्रचेतसःप्रकृष्टज्ञानामरुतः सिंहाइवनानदतिभृशंशब्दंकुर्वन्ति यथासिंहाः गिरिगह्वरेषुगंभीरशब्दंकुर्वन्ति एवंमरुत्स्वप्यागतेषुगम्भीरःशब्दउत्पद्यतइतिभावः तथासुपिशःशोभनावयवाःशोभनालङ्कारावा तत्रदृष्टान्तः—पिशाइव पेशइतिरूपनाम यथारुरवःस्वशरीरगतैःश्वेतबिन्दुभिःअलंकृतास्तद्वद् विश्ववेदसः सर्वज्ञाःक्षपःशत्रूणांक्षपयितारः जिन्वन्तः स्तोतॄन्प्रीणयन्तःशवसाबलेनअहिमन्यवः आहननशीलमन्युयुक्ताःयद्विषयःकोपोजायतेतस्यहननेसमर्थाइत्यर्थः यद्वा मननंज्ञानं मन्युः अहीनज्ञानाः उत्कृष्टबुद्धयइत्यर्थः एवम्भूतामरुतः पृषतीभिः पृषत्यइतिमरुतांवाहनस्याख्या पृषत्यःश्वेतबिन्दुङ्किताः मृग्यइत्यैतिहासिकाः । नानावर्णामेघमालाइतिनैरुक्ताः।ताभिःऋष्टिभिरायुधैश्चसहिताःसन्तःसबाधःशत्रुभिर्बाधितान्यजमानान्समित्समानमेवयुगपदेवरक्षितुमागच्छन्तीतिशेषः॥नानदति णदअव्यक्तेशब्दे असमाद्यङ्लुगन्ताल्लट् । पिशाइव पिशअवयवे इगुपधलक्षणःकः। सुपिशः सुपूर्वात्पिशअवयवेइत्यस्मात् क्विप्चेतिक्विप्। पृषतीभिः पृषुसेचने वर्तमानेपृषद्बृहन्महज्जगच्छतृवच्चेतिशतृवद्भावात्उगितश्चेतिङीप् अतएवशतुरनुमइतिनद्याउदात्तत्वेप्राप्ते बृहन्महतोरुपसंख्यानमितिनियमात्तस्याभावः ॥ ८ ॥

नवमीमृचमाह—

रोदसीआवदतागणश्रियोनृषाचःशूराःशवसाहिमन्यवः ।
आवन्धुरेष्वमतिर्नदर्शताविद्युन्नतस्थौमरुतोरथेषुवः ॥९॥

रोदसी इति । आ । वदत । गणऽश्रियः । नृऽसाचः । शूराः । शवसा । अहिऽमन्यवः । आ । वन्धुरेषु । अमतिः । न । दर्शता । विऽद्युत् । न । तस्थौ । मरुतः । रथेषु । वः ॥ ९ ॥

हेगणश्रियः गणशःश्रयमाणाः सप्तगणरूपेणावस्थिताः नृषाचः नॄन्यजमानान् हविःस्वीकरणायसेवमानाः शूराः शौर्योपेताः एवम्भूताः हेमरुतः शवसाबलेनअहिमन्यवः आहननस्वभावकोपयुक्ताःसन्तः रोदसीद्यावापृथिव्यौ आवदत आसमन्ताच्छब्दयत युष्मदागमनेसतिभवदीयशब्देनद्यावापृथिव्यौपूर्णेकुरुतेतिभावः किञ्च हेमरुतः वोयुष्माकंतेजः वन्धुरेषुयन्धककाष्ठनिर्मितंसारथेःस्थानंवन्धुरमित्युच्यते तद्युक्तेषुरथेष्वातस्थौआतिष्ठतिअवस्थितंसवसर्वैर्दृश्यते तत्रदृष्टान्तद्वयमुच्यते—अमतिर्न अमतिरितिरूपनाम यथानिर्मलंरूपंसर्वैर्दृश्यते दर्शताविद्युन्यथावादर्शनीयाविद्युत्मेघस्थासर्वैर्दृश्यतेएवंरथेवस्थितानांयुष्माकंज्योतिरपिसर्वैर्दृश्यतइत्यर्थः॥ वदत ऋचितुनुघेत्यादिनादीर्घः। नृषाचः पादादित्वादामन्त्रिताद्युदात्तत्वम् ।अमतिः अमगत्यादिषु अमेरतिरित्यौणादिकोतिप्रत्ययः प्रत्ययाद्युदात्तत्वम् । दर्शता भृमृदृशीत्यादिनाअतच्प्रत्ययः चित्त्वादन्तोदात्तत्वम् ॥ ९ ॥

दशमीमृचमाह—

विश्ववेदसोरयिभिःसमोकसःसम्मिश्लासस्तविषीभिर्विरप्शिनः ।
अस्तारइषुंदधिरेगभस्त्योरनन्तशुष्माद्वृषखादयोनरः ॥१०॥७॥

विश्वऽवेदसः । रयिऽभिः । समऽओकसः । सम्ऽमिश्लासः । तविषीभिः । विऽरप्शिनः । अस्तारः । इषुम् । दधिरे । गभस्त्योः । अनन्तऽशुष्माः । वृषऽखादयः । नरः ॥ १० ॥ ७ ॥

विश्ववेदसः सर्वज्ञाः रयिभिर्धनैःसमोकसः समाननिवासाःसमवेतावाधनाधिपतयइत्यर्थः तविषीभिः बलैः संमिश्लासः संमिश्राः संयुक्ताइत्यर्थः विरप्शिनः महन्नामैतत् महान्तः अस्तारः शत्रूणांनिरसितारः अनन्तशुष्माः अनवच्छिन्नबलाः वृषखादयः वृषाइन्द्रः खादिरायुधस्थानीयोयेषांतेतथोक्ताः यद्वा वृषासोमःखादिःखाद्यःपेयोयेषांतेनरोनेतारः एवम्भूताः मरुतः गभस्तिरितिबाहुनाम गभस्त्योःबाह्वोःइषुंदधिरे शत्रूणांनिरसनायधनुर्बाणादिकंआयुधंधारयन्ति ॥ समोकसः उचसमवाये असुनिबहुलवचनात्कुत्वमितिओकउचःकइत्यत्रोक्तम् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । संमिश्लासः कपिलकादित्वाल्लत्वम् । विरप्शिनः रपलपव्यक्तायां वाचि विपूर्वादस्मात् बहुलवचनात्शक्प्रत्ययः विविधंशब्दंरपन्तीतिविरप्शाःस्तोतारः तेएषांसन्तीतिविरप्शिनःयद्वा विविधंरपणंविरप्शं तदेषामस्तीति मरुतोहिविविधंशब्दंकुर्वतेइति प्रत्ययस्वरः । अस्तारः ताच्छीलिकस्तृन् इडभावश्छान्दसः नित्वादाद्युदात्तत्वम् । अनन्तशुष्माः नास्त्यन्तोस्येत्यनन्तः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अनन्तंशुष्मोबलंयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । वृषखादयः खादभक्षणे उणादिकइन्प्रत्ययः वृषन्शब्दः कनिन्प्रत्ययान्तआद्युदात्तः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेसप्तमोवर्गः ॥ ७ ॥

एकादशीमृचमाह–

हि॒र॒ण्यये॑भिः प॒विभिः॑ पयो॒वृध॒ उज्जि॑घ्नन्त आप॒थ्यो॒३॒॑ न पर्व॑तान् ।
म॒खा अ॒यासः॑ स्व॒सृतो॑ ध्रुव॒च्युतो॑ दुध्र॒कृतो॑ म॒रुतो॒ भ्राज॑दृष्टयः ॥ ११ ॥

हि॒र॒ण्यये॑भिः । प॒वि॒ऽभिः॑ । प॒यः॒ऽवृधः॑ । उत् । जि॒घ्न॒न्ते॒ । आ॒ऽप॒थ्यः॑ । न । पर्व॑तान् । म॒खाः । अ॒यासः॑ । स्व॒ऽसृतः॑ । ध्रु॒व॒ऽच्युतः॑ । दु॒ध्र॒ऽकृतः॑ । म॒रुतः॑ । भ्राज॑त्ऽऋष्टयः ॥ ११ ॥

मरुतःहिरण्ययेभिःसुवर्णमयैः यद्वा हितरमणीयैः पविभिःरथानांचक्रैःपर्वतान्मेघान् यद्वा शिलोच्चयान्उज्जिघ्नन्तेऊर्ध्वंगमयन्तिस्थानाद्व्यावयन्तीत्यर्थः तत्रदृष्टान्तः–पथ्योन यथा पथिगच्छन्रथःमार्गेःआस्थितंतृणवृक्षादिकंचूर्णीकृत्योर्ध्वंनयतिगमयति यद्वा यथासंयुक्तागजाः मार्गस्थितंवृक्षादिकंभग्नंकुर्वन्ति कीदृशामरुतःपयोवृधःपयसोवृष्ट्युदकस्यवर्धयितारः यद्वा पृश्नेः

पयसावर्धमानाः पृश्निर्यैवैपयसोमरुतोजाताइतिहिश्रूयते। मखाः मखइतियज्ञनाम तद्वन्तः अयासः देवयजनदेशंप्रतिगन्तारः स्वसृतः शत्रून्प्रतिस्वयमेवसरन्तोगच्छन्तः ध्रुवच्युतः ध्रुवाणांनिश्चलानांपर्वतादीनामपिच्यावयितारः दुध्रकृतः दुध्रंदुष्टानांधारयितारंआत्मानंकुर्वाणाः यद्वा दुर्धरमन्यैर्धर्तुमशक्यंआत्मानंकुर्वाणाः भ्राजदृष्टयः दीप्यमानायुधाः॥ उज्जिघ्नन्ते हन्तेर्व्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वम् गमहनेत्यादिनोपधालोपः होहन्तेरितिकुत्वम् व्यत्ययेनान्तादेशः। पथ्यः पथिभवः भवेछन्दसीतियत् नस्तद्धितेइतिटिलोपः व्यत्ययेनस्वरितत्वम् यद्वा छन्दसीवनिपावितिमत्वर्थीयईकारः उदात्तस्वरितयोर्यणइतिविभक्तेःस्वरितत्वम्। अयासः अयपयगतौ अयन्तइत्ययाः पचाद्यच् आज्जसेरसुक्। दुध्रकृतः अत्रदुःशब्देनदुष्टाःलक्ष्यन्ते धृञ्धारणे दुष्टान्धारयतीतिदुध्रः मूलविभुजादित्वात्कप्रत्ययः यद्वा ईषद्दुःसुष्विति दुःशब्देउपपदेकर्मणिखल् गुणाभावश्छान्दसः तंकुर्वन्तीतिदुध्रकृतः करोतेः क्विप्चेतिक्विप् रेफलोपश्छान्दसः॥ ११॥

द्वादशीमृचमाह—

घृषुंपावकंवनिनंविचर्षणिंरुद्रस्यसूनुंहवसागृणीमसि।
रजस्तुरंतवसंमारुतंगणमृजीषिणंवृषणंसश्चतश्रिये॥ १२॥

घृषुम्। पावकम्। वनिनम्। विऽचर्षणिम्। रुद्रस्य। सूनुम्। हवसा। गृणीमसि। रजःऽतुरम्। तवसम्। मारुतम्। गणम्। ऋजीषिणम्। वृषणम्। सश्चत। श्रिये॥ १२॥

घृषुंशत्रूणांबलस्यघर्षकंविनाशयितारंपावकंसर्वेषांशोधकं वनिनं वनमित्युदकनाम उदकवन्तंवृष्टिमदित्यर्थः विचर्षणिंविशेषेणसर्वस्यद्रष्टारं रुद्रस्यमहादेवस्यसूनुंपुत्रभूतंएवंविधंमरुतांसमूहंहवसाआह्वानसाधनेनस्तोत्रेणगृणीमसिशब्दयामःस्तुमइत्यर्थः हेऋत्विग्यजमानाः यूयमपिश्रियेऐश्वर्यायधनार्थंमारुतंगणंमरुतांसंघंसश्चतप्राप्नुत कीदृशंरजस्तुरंपार्थिवस्यपांसोःत्वरयितारंप्रेरकमित्यर्थः तवसं प्रवृद्धंऋजीषिणंतृतीयसवनेहिमरुतःस्तूयंते तत्रचऋजीषमभिषुण्वन्तीति ऋजीषसम्बन्धःश्रुतः[1] अतस्तद्वन्तंवृषणंकामानांवर्षितारम्॥ हवसा ह्वेञोसिप्रत्ययेबहुलंछन्दसीतिसम्प्रसारणम्। गृणीमसि गृशब्दे इदन्तोमसिः प्वादीनांह्रस्वइतिह्रस्वत्वम्। रजस्तुरं रजांसितु-

1 तै० सं० २. २. ११.।

तोर्तीतिरजस्तूः तुरत्वरणे क्विप्चेतिक्विप्। वृषणं वायपूर्वस्यनिगमेइतिदीर्घाभावः। सश्चत ग्लुञ्चुप-स्जगतावित्यत्रसश्चिमप्येकेइतिधातुवृत्तावुक्तम् गतिकर्मसुचसश्चतीतिपठितम्। श्रिये सावेकाचः इतिविभक्तेरुदात्तत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

प्रनूसमर्तः शवसाजनाँअतितस्थौवऊतीमरुतोयमावत।
अर्वद्भिर्वाजंभरतेधनानृभिरापृच्छ्यंक्रतुमाक्षेतिपुष्यति ॥१३॥

प्र। नु। सः। मर्तः। शवसा। जनान्। अति। तस्थौ। वः। ऊती। मरुतः। यम्। आवत। अर्वत्ऽभिः। वाजम्। भरते। धना। नृऽभिः। आऽपृच्छ्यम्। क्रतुम्। आ। क्षेति। पुष्यति॥१३॥

समर्तःमनुष्यः शवसाबलेनजनान् जातानन्यान् पुरुषानतिअतीत्यनुक्षिप्रंतस्थौप्रति-ष्ठितोभवति हेमरुतोवोयुष्माकंऊतीऊत्यारक्षणेनयंपुरुषंआवतअरक्षतअपिचसपुरुषः अर्वद्भिरश्वैः साधनभूतैर्वाजमन्नंनृभिःस्वकीयैर्मनुष्यैः धनाधनानिचभरतेसम्पादयति तथाआपृच्छ्यं आमष्टव्यंशोभनंक्रतुंअग्निष्टोमादिकर्मआक्षेतिआमोति पुष्यतिप्रजापशुभिःपुष्टोभवतिच ॥ ऊती तृतीयायाःपूर्वसवर्णदीर्घत्वम्। नृभिः नृचान्यतरस्यामितिविभक्त्युदात्तत्वप्रतिषेधः। आपृच्छ्यं छन्दसिनिष्टर्क्येत्यादौआङ्पूर्वात्पृच्छतेःक्यप्प्रत्ययान्तोनिपात्यते ग्रहिज्यादिनास-म्प्रसारणम् प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते कृदुत्तरपदप्रकृतिस्वरत्वम्। क्षेति क्षिनिवासगत्योः बहुलंछन्दसीतिविकरणस्यलुक्। पुष्यति पुषपुष्टौ दिवादित्वाच्छ्यन् नित्वादा-द्युदात्तत्वम् तिङःपरत्वान्निघाताभावः ॥ १३ ॥

चतुर्दशीमृचमाह—

चर्कृत्यंमरुतःपृत्सुदुष्टरंद्युमन्तंशुष्मंमघवत्सुधत्तन।
धनस्पृतमुक्थ्यंविश्वचर्षणिंतोकंपुष्येमतनयंशतंहिमाः ॥१४॥

चर्कृत्यम्। मरुतः। पृत्ऽसु। दुस्तरम्। द्युऽमन्तम्। शुष्मम्। मघवत्ऽसु। धत्तन। धनऽस्पृतम्। उक्थ्यम्। विश्वऽचर्षणिम्। तोकम्। पुष्येम। तनयम्। शतम्। हिमाः ॥ १४ ॥

हेमरुतः मघवत्सुहविर्लक्षणधनयुक्तेषुयजमानेषुपुत्रंधत्तनस्थापयतदत्तेतियावत् कीदृशंपु-त्रं चर्कृत्यंकार्येषुपुनःपुनःपुरस्कर्तव्यं सर्वकर्मकुशलमित्यर्थः पृत्सुसङ्ग्रामेषुदुष्टरंदुःखेनतरित-व्यंअजेयमित्यर्थः द्युमन्तंदीप्तिमन्तंशुष्मंशत्रूणांशोषकं बलवन्तंधनस्पृतं धनानां स्पष्टारंधनैः प्रीतंवाउक्थ्यं उक्थं स्तोत्रंतदर्हंप्रशस्यमित्यर्थः विश्वचर्षणिंविशेषेणद्रष्टारंसर्वज्ञंएवंविधंतोकंपु-त्रंतनयंपौत्रंचशतंहिमाः हेमंतर्तूपलक्षितान्शतसंवत्सरान्जीवन्तःसन्तः पुष्येमपोषयेम अत्रहिम-शब्देनतद्युक्ताहेमन्तर्तवोभिधीयन्ते तथाचब्राह्मणमेवमाम्नायते—शतंहिमाइत्याह शतंत्वाहेमन्ता-निंधिषीयेतिवावैतदाहेति[1] ॥ चर्कृत्यम् प्रकृतिग्रहणेयङ्लुगन्तस्यापिग्रहणमितिन्यायेनकरोतेर्य-ङ्लुगन्तात् विभाषाकृवृषोरितिक्यप् तुगागमः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते। पृत्सु पद्दन्नित्यादिनापृतनाशब्दस्यपृदादेशः । दुष्टरं तॄप्लवनतरणयोः ईषद्दुःसुष्वि-तिखल् सुषामादेराकृतिगणत्वात्षत्वम् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम्। धत्तन तप्तनप्तनथना-श्चेतितस्यतनादेशः । हिमाः हन्तेर्हिंचेतिमक्प्रत्ययः अर्शआद्यच् वृषादित्वादाद्युदात्तत्वम्॥१४॥

ऐकादशिनस्यमारुतस्यपशोर्वपायागस्यनूष्ठिरमित्येषायाज्या सूत्रितंच—शुचीवोहव्यामरुतःशुचीनांनूष्ठिरंमरुतोवीरवन्तमिति ।

तामेतांसूक्तेपञ्चदशीमृचमाह—

नूष्ठिरंमरुतोवीरवन्तमृतीषाहंरयिमस्मासुधत्त ।
सहस्रिणंशतिनंशूशुवांसंप्रातर्मक्षूधियावसुर्जगम्यात् ॥ १५ ॥ ८ ॥

नु । स्थिरम् । मरुतः । वीरऽवन्तम् । ऋतिऽसहम् । रयिम् । अस्मासु । धत्त । सहस्रिणम् । शतिनम् । शूशुऽवांसम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १५ ॥ ८ ॥

हेमरुतः स्थिरंस्थास्नुंवीरवन्तंवीरैःपुत्रैर्वर्धितं यद्वा वीर्योपेतंऋतीषाहंगन्तॄणांशत्रूणामभि-भवितारं एवंविधंरयिंपुत्रलक्षणंधनंअस्मासुधत्तस्थापयत सहस्रिणंशतिनंएतत्संख्याकधनवन्तं अतएवशूशुवांसंप्रवृद्धंअपिचास्माकं रक्षणायधियाबुद्ध्याकर्मणावाप्राप्तधनोमरुद्गणःप्रातःकाले जगम्यात्आगच्छतु ॥ नूष्ठिरं ऋचितुनुघेत्यादिनादीर्घः पूर्वपदादितिषत्वम् । ऋतीषाहं ऋगतौ

1 तै० १.५.८.।

कर्तरिक्विप् षहअभिभवे छन्दसिसहइतिण्विप्रत्ययः अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् सुषामादित्वात्षत्वम् । शूशुवांसं टुओश्विगतिवृद्ध्योः लिटःक्वसुः विभाषाश्वेरितिसम्प्रसारणम् द्विर्वचने तुजादित्वादभ्यासस्यदीर्घत्वम् वस्वेकाजाद्धसामितिनियमादिडभावः प्रत्ययस्वरः॥१५॥

॥ इतिप्रथमस्यपञ्चमेष्टमोवर्गः ॥ ८ ॥

॥ इतिप्रथमेमण्डलेएकादशोनुवाकः ११ ॥

द्वादशेनुवाकेनवसूक्तानि तत्रपश्वेत्यादीनि षट्सूक्तानिद्विपदानि तेष्वध्ययनसमयेद्वेद्वेऋचौ चतुःपदामेकैकामृचंकृत्वासमाम्नायते अयुक्संख्यासुतुयान्यातिरिच्यतेसातथैवाम्नायते प्रायेणाथोपिद्वयोर्द्विपदयोरेकएव प्रयोगेतुताःपृथक्शंसनीयाः सूच्यतेहि पश्वानतायुमितिद्विपदमिति। तत्रपश्वेतिदशर्चंप्रथमंसूक्तम् अत्रानुक्रम्यते—पश्वादशपराशरःशाक्त्योद्वैपदंतद्धिति । शक्तिपुत्रः पराशरऋषिः तत्पुत्रत्वंचस्मर्यते वसिष्ठस्यसुतःशक्तिःशक्तेःपुत्रःपराशरइति । द्विपदाविराट्छन्दः विंशतिकाद्विपदाविराजइतिहितल्लक्षणम् अग्निर्देवता परमाग्नेयमैन्द्रादितिपरिभाषितम् पश्वानतायुमित्यारभ्य इत्याहीत्यतःप्राक्यत्सूक्तजातंतत्सर्वमाग्नेयमितितस्यार्थः द्वैपदंतद्धित्युक्तत्वादिदमादीनिषट्सूक्तानितुह्यादिपरिभाषयाद्विपदानि दशमेहनिवैश्वदेवशस्त्रेवैश्वदेवसूक्तात्पूर्वं एतद्वैपदंसूक्तंशंसनीयं सूत्रमुदाहृतम् ।

तत्रप्रथमामृचमाह—

पश्वानतायुंगुहाचतन्तंनमोयुजानंनमोवहन्तम् । ( १ )
सजोषाधीराःपदैरनुग्मन्नुपत्वासीदन्विश्वेयजत्राः ( २ ) ॥ १ ॥

पश्वा । न । तायुम् । गुहा । चतन्तम् । नमः । युजानम् । नमः । वहन्तम् । (१)सऽजोषाः । धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे । यजत्राः ( २ ) ॥ १ ॥

धीराः मेधाविनोदेवाः सजोषाःसमानप्रीतयःसन्तः हेअग्ने त्वांपदैर्मार्गैःपादकृतैर्लाञ्छनैः अनुग्मन्अन्वगमन् कीदृशंपश्वाअपहृतेनपशुनासहवर्तमानंवायुंन तायुरितिस्तेननाम यथास्तेनःपरकीयंपश्वादिधनमपहृत्यदुष्प्रवेशेगिरिगह्वरेवर्ततेतद्वत् गुहाचतन्तंअपांगुहायांगच्छन्तंव-

र्तमानं चततिर्गतिकर्मा । तथाचतैत्तिरीये:अग्नेरप्सुप्रवेशःसमाम्नायते—सनिलायत सोपःप्राविशदिति।यद्वा अश्वत्थगुहायांगच्छन्तंवर्तमानं श्रूयतेच—अग्निर्देवेभ्योनिलायत।अश्वोरूपंकृत्वा सोश्वत्थेसंवत्सरमतिष्ठदिति । तथानमोयुजानंहविर्लक्षणमन्नमात्मनासंयुजानंनमोवहन्तंदेवेभ्यःप्रत्तंहविर्वहन्तंयजत्राःयजनीयाः विश्वेसर्वेदेवाः हेअग्ने त्वात्वांउपसीदन्समीपंप्राप्नुवन्नदृद्दशुरित्यर्थः ॥ पश्वा तृतीयैकवचनस्यजसादिपुछन्दसिवावचनमितिनाभावाभावः उदात्तयणइतिविभक्तेरुदात्तत्वम् । गुहा भिदादिपुपाठादङ्प्रत्ययान्तः वृषादिपुपाठादाद्युदात्तत्वम् सुपांसुलुगितिसप्तम्यालुक् । युजानं शानचि बहुलंछन्दसीतिविकरणस्यलुक् । सजोषाः जुषीप्रीतिसेवनयोः समानंजुषन्तइतिसजोषसः समानस्यच्छन्दसीतिसभावः कृदुत्तरपदप्रकृतिस्वरत्वम् सुपांसुलुगितिजसःसुः । ग्मन् गमेर्लुङि मन्त्रेघसेतिच्लेर्लुक् गमहनेत्यादिनोपधालोपः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । यजत्राः अमिनक्षीत्यादिनात्रन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

ऋतस्य॑ दे॒वा अनु॑ व्र॒ता गु॒र्भुव॒त्परि॑ष्टि॒र्द्यौर्न भूम॑ ।( ३ )
वर्ध॑न्ती॒माप॑: प॒न्वा सुशि॑श्वि॒मृ॒तस्य॒ योना॒ गर्भे॒ सुजा॑तम् (४)॥२॥

ऋ॒तस्य॑ । दे॒वाः । अनु॑ । व्र॒ता । गुः॒ । भुव॑त् । परि॑ष्टिः । द्यौः । न । भूम॑ । (३) वर्ध॑न्ति । ई॒म् । आप॑: । प॒न्वा । सु॒ऽशि॑श्विम् । ऋ॒तस्य॑ । योना॑ । गर्भे॑ । सु॒ऽजा॑तम् ( ४ ) ॥ २ ॥

उक्तएवार्थःस्पष्टीक्रियते देवाःऋतस्यगतस्यपलायितस्याग्नेः व्रतावतानिकर्माणिगमनावस्थानशयनादिरूपाणिअनुगुः अन्वेष्टुमगमन् तदनन्तरंपरिष्टिःपरितःसर्वतोन्वेषणंभुवद्भवत् भूमभूमिरपिअग्नेरन्वेष्टृभिर्देवैर्द्यौर्न स्वर्गइवाभूत् इन्द्रादयःसर्वेदेवाः अग्नेर्गवेषणायभूलोकंप्राप्ताइत्यर्थः आपःअब्देवताः ईं एनंउदकेमविष्टमग्निंवर्धन्तिप्रवर्धयन्ति यथादेवानपश्यन्तितथाऽरक्षन्नित्यर्थः कीदृशं पन्वास्तोत्रेणसुशिश्विंसुष्ठुप्रवर्धितंऋतस्ययोना योनिरित्युदकनाम ऋतस्य यज्ञस्यान्नस्यवाकारणभूते जले गर्भेगर्भस्थानेमध्येसुजातंसुष्ठुप्रादुर्भूतं एवमप्सुवर्तमानंअग्निं देवेभ्यःमत्स्यःप्रावोचत् तदनन्तरंदेवास्तमज्ञासिषुरितिभावः तथाचतैत्तिरीयकम्—सनिलायत

१ नि० ३. २०. । २ तै० सं. २. २. ६. । ३ तै० ब्रा० १. १. ३. ।

सोपःप्राविशत्तंदेवाःप्रैषमैच्छन्तंमत्स्यःप्राब्रवीदिति॥ वता शेश्छन्दसिबहुलमितिशेर्लोपः । गुः इण्गतौ इणोगालुङीतिगादेशः गातिस्थेतिसिचोलुक् आतइतिझेर्जुस्उस्यपदान्तादितिपररूपत्वम्। पररिष्टिः इषइच्छायाम् क्तिनि तितुत्रेतीट्प्रतिषेधः शकन्ध्वादित्वात्पररूपत्वम् तादौचनिती-तिगतेःप्रकृतिस्वरत्वम् । भूम सुपांसुलुगितिसोर्डादेशः ह्रस्वश्छान्दसः । वर्धन्ति छन्द-स्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः शपःपित्त्वादनुदात्तत्वम् तिङश्चलसार्व-धातुकस्वरेणधातुस्वरःशिष्यते । पन्वा पनस्तुतौ औणादिकोभावेउप्रत्ययः। सुशिश्वि टुओ-श्विगतिवृद्ध्योः आदगमहनजनइत्यत्रउत्सर्गश्छन्दसीतिवचनात्किप्रत्ययः वचिस्वपीत्या-दिनासम्प्रसारणम् लिड्वद्भावाद्द्विर्भावेबहुलंछन्दसीत्युकारस्येत्वम् छान्दसोयणादेशः सुःपूजाया-मितिसोःकर्मप्रवचनीयत्वम् स्वतीपूजायामितिप्रादिसमासःअव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह—

पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शम्भु । (५)
अत्यो नाज्मन्त्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते (६) ॥ ३॥

पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शम्ऽभु । (५) अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिन्धुः । न । क्षोदः । कः । ईम् । वराते (६) ॥ ३ ॥

रण्वारमणीयासर्वेषांहृद्या पुष्टिर्न अभिमवफलानामभिवृद्धिरिव अग्निःसर्वेषांरमणीयः ऐहिकामुष्मिकसकलव्यवहारस्याग्न्यधीनत्वात् यद्वा पुष्टिरिवरण्वागन्तव्यः शब्दनीयः स्तुत्योवा यथापुष्टिःप्राप्यतेतद्वदग्निर्यज्ञेहविर्भिःप्राप्यतइतिभावः पृथ्वीविस्तीर्णाक्षितिर्न भूमिरिव अग्निरपिविस्तीर्णःसर्वंपुभूतेपुजाठररूपेणावस्थानात् गिरिर्न पर्वतइव भुज्मसर्वेषांभोजयिता यथागिरौविद्यमानंफलमूलादिकमाहृत्यसर्वेभुञ्जतेतद्वदग्नावपिपचन्तःसर्वेभुञ्जते यद्वा अग्नावाहुतिंहुत्वायजमानाःस्वर्गफलंभुञ्जते अथवागिरिर्यथादुर्भिक्षेसर्वान्प्राणिनोभुनक्ति स्वकीयमूलफलादिदानेनपालयतितद्वदयमपिपापादनुद्गातृन्प्रमुञ्चति तथाचाम्नायते—अग्निर्मातस्मादेनसःप्रमुञ्चत्विति[1] । शम्भु सुखकरंक्षोदोन उदकमिव यथोदकंसुखंकरोतितद्वदग्निःसर्वेषांसुखकारीत्यर्थः अज्मन् सङ्ग्रामनामैतत् अज्मनिसङ्ग्रामेअत्योन सन्ततगमनशीलोजात्यश्वइवसर्गप्रतक्तः सर्गेणविसर्जनेनप्र-

१ तै० सं० २.२.६.। २ तै० सं० १.८.५.।

गमितः यथासादिनाप्रेरितोजात्यश्वोहन्तव्यसमीपमाशुगच्छति तद्वदग्निरपिस्तोतृभिःप्रेषितःसन्शत्रून्हन्तुंशीघ्रंगच्छतीतिभावः अपिच सिन्धुर्नक्षोदः स्यन्दनशीलमुदकमिव अयमपिशीघ्रगामी यथानिम्नप्रदेशाभिमुखोजलप्रवाहोदुर्निवारःतद्वद्गन्धव्याभिमुखोग्निरपीत्यर्थः अतः यस्मादेवंतस्माद् ईं एनमग्निंकोवरातेकोवारयेत कोपिवारयितुंनशक्नोतीत्यर्थः ॥ रण्वा रवितेत्यर्थः रण्यतेमाप्यतेइतिरण्वः कृत्यल्युटोबहुलमितिबहुलवचनात्कर्मणिपचाद्यच् । भुज्म भुजपालनाभ्यवहारयोः इषियुधीन्धीतिविधीयमानोमक्बहुलवचनादस्मादपिभवति सुपांसुलुगितिसोर्लुक् । अज्मन् अजगतिक्षेपणयोः मनिनि वलादावार्धधातुकेविकल्पइष्यतइतिवचनाद्वीभावाभावः सुपांसुलुगितिसप्तम्यालुक् । सर्गप्रतक्तः सृजविसर्गेइत्यस्माद्घञन्तःसर्गशब्दआद्युदात्तः तञ्चुगतौअस्मादन्तर्भावितण्यर्थाद्वनिष्ठायां यस्यविभाषेतीट्प्रतिषेधः अनिदितामितिनलोपः, सर्गेणप्रतक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । वराते वृञ्वरणेअन्तर्भावितण्यर्थाद् लेटि लेटोडाटावित्याडागमः व्यत्ययेनशप् वैतोन्यत्रेत्यैत्वस्यविकल्पितत्वादभावः ॥

चतुर्थीमृचमाह—

जामिःसिन्धूनांभ्रातेवस्वस्रामिभ्यान्नराजावनान्यत्ति ।( ७ )
यद्वातजूतोवनाव्यस्थादग्निर्हदातिरोमापृथिव्याः ( ८ ) ॥ ४॥

जामिः ।सिन्धूनाम् । भ्राताऽइव । स्वस्राम् । इभ्यान् । न । राजा । वनानि । अत्ति । ( ७ ) यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ( ८ ) ॥ ४ ॥

सिन्धूनां स्यन्दनशीलानामपांअयमग्निः जामिःबन्धुः तासामुत्पादकत्वात् तथाचाम्नातम्—अग्नेरापइति[*] । यद्वा देवेभ्यःपलायितोप्सुवर्तमानःसन् तासामपां बन्धुर्बभूवेत्यर्थः तत्रनिदर्शनम्—स्वसांस्वसृणांभ्रातेव यथाभ्राताअतिशयेनहितकरोभवत् तद्वत्तादृशोग्निः वनानिमहान्त्यरण्यानिअत्तिभक्षयतिदहतीत्यर्थः तत्रनिदर्शनम्—राजाइभ्यान्न भियंयन्तीतिनैरुक्तव्युत्पत्त्याइभ्याःशत्रवः तान्यथासमूलंहिनस्तितद्वत् यद्वा इभ्याःधनिनः तान्यथाधनमपहरन्राजाहिनस्ति तद्वदित्यर्थः अपिच यद्यदावातजूतो वातेनप्रेरितःसन्वनावनान्यरण्यानिव्यस्थाद् उक्रमकारेणविविधमातिष्ठतिदग्धुंप्रवर्तते तदानींअग्निर्हअग्निरेवपृथिव्याभूमेःसम्बधीनिरोमाओषधिरूपाणिरो-

[*] तै०आरण्यके अष्टमाध्याये ।

माणिदातिछिनत्ति भूम्यांओषधिवनस्पतिजातंयदस्तितत्सर्वंदहतीतिभावः॥स्वसां आमोनुडभा-वश्छान्दसः। अस्थात् लुङि गातिस्थेतिसिचोलुक्। दाति दापलवने अदादित्वाच्छपोलुक्॥४॥

पञ्चमीमृचमाह—

श्वसित्यप्सुहंसोनसीदन्क्रत्वाचेतिंष्ठोविशामुंषर्भुत्। (९)
सोमोनवेधाऋतप्रंजातःपशुर्नशिश्वांविभुर्दूरेभाः (१०)॥५॥९॥

श्वसिति। अप्ऽसु। हंसः। न। सीदन्। क्रत्वा। चेतिष्ठः। विशाम्। उषःऽभुत्। (९) सोमः। न। वेधाः। ऋतऽप्रंजातः। पशुः। न। शिश्वा। विऽभुः। दूरेऽभाः (१०)॥ ५॥ ९॥

अयमग्निर्देवेभ्यःपलायितःसन्अप्सूदकेषुश्वसितिप्राणिति निगूढोवर्ततेइत्यर्थः तत्रदृष्टा-न्तः—हंसोनसीदन् उदकमध्येउपविशन्हंसइव कीदृशोग्निः क्रत्वाक्रतुनाज्ञानहेतुनाआत्मीयेन प्रकाशेनविशांप्रजानांचेतिष्ठः अतिशयेनचेतयिताज्ञापयिता रात्रौहिसर्वेजनाः अन्धकारावृतं सर्वंअग्नेःप्रकाशाज्जानन्ति उषर्भुत् उषसिउषःकालेअग्निहोत्रादौप्रबुद्धः सोमोनवेधाः सोमइववि-धातास्रष्टा सोमोयथासकलमोषधिरूपंभोग्यजातंसृजति सोमोवाओषधीनांराजेतिश्रुतेः। तथासकलंभोक्तृजातंसृजति अग्नेरेवभोक्तृरूपेणावस्थानात् तथाचतैत्तिरीयकम्—अग्निरन्नादोन्न-पतिरिति। वाजसनेयकेपिभोक्तृभोग्ययोरग्नीषोमात्मकत्वमाम्नातम्—एतावद्वाइदमन्नंचैवान्नाद-श्चसोमएवान्नमग्निरन्नादइति। ऋतप्रजातः ऋतमित्युदकनाम ऋतादुदकात्प्रादुर्भूतः पशुर्नशिश्वा उदकमध्येवर्तमानोग्निःशयानःपशुरिव तनूकृतः सङ्कुचितगात्रोभूत् ततःप्रादुर्भूतःसन् विभुःप्रभू-तःसम्पन्नः यद्वा शिश्वाशिशुनागर्भस्थेनवत्सेनसहितागौरिव विभुः प्रभूतावयवोजातइत्यर्थः दूरे-भाःदूरेविप्रकृष्टदेशेपिभाःप्रकाशोयस्यसतथोक्तः एवंभूतोग्निरप्सुश्वसितीतिपूर्वेणसम्बन्धः।श्व-सिति श्वसप्राणने अदादित्वाच्छपोलुक् रुधादिभ्यःसार्वधातुकइतीडागमः तिपःपित्त्वादनुदात्त-त्वेधातुस्वरःशिष्यते। क्रत्वा जसादिषुछन्दसिवावचनमितिनाभावाभावः।उषसिबुध्यतइतिउ-षर्भुत् बुधअवगमने क्विप्चेतिक्विप् एकाचोबशइतिभषूभावः अहरादीनांपत्यादिषूपसंख्यानमि-तिसकारस्यरेफादेशः। शिश्वा शोतनूकरणे आदेचइत्यात्वम् शःकित्सन्वच्चेतिउप्रत्ययः सन्व-द्भावाद्विर्भावेत्वे अतएवनित्त्वादाद्युदात्तत्वम् किद्वद्भावादातोलोपइटिचेत्याकारलोपः प्रथमप-

१ तै० ब्रा० ३.९.१९.। २ शतपथब्राह्मणे. ।

क्षे सुपांसुलुगितिसोराकारः द्वितीयेतुपूर्ववन्नाभावाभावः । दूरेभाः तत्पुरुषेकृतिबहुलमितिबहुव्रीहावपिबहुलवचनादलुक् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेनवमोवर्गः ॥ ९ ॥

रयिरितिदशर्चंसूक्तंद्वैपदम् अध्ययनतःपञ्चर्चं द्वितीयंसूक्तंपराशरस्यार्षम् आग्नेयं अनुक्रान्तंच—रयिरिति । विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

रयिर्नचित्रासूरोनसन्दृगायुर्नप्राणोनित्योनसूनुः । ( १ ) .
तक्वानभूर्णिर्वनासिषक्तिपयोनधेनुःशुचिर्विभावा ( २ )॥१॥

रयिः । न । चित्रा । सूरः । न । सम्ऽदृक् । आयुः । न । प्राणः ।
नित्यः । न । सूनुः । ( १ ) तक्वा । न । भूर्णिः । वना । सिसक्ति ।
पयः । न । धेनुः । शुचिः । विभाऽवा ( २ ) ॥ १ ॥

अयमग्निः रयिर्धनमिवचित्राचायनीयःविचित्ररूपोवा सूरोन सूर्यइव सन्दृक्सन्द्रष्टासर्वेषांवस्तूनांदर्शयिताआयुर्नप्राणः आयुःमुखेसञ्चरन्प्राणःप्रश्वसन्वायुरिवप्रियतमःयद्वा यथाप्राणवायुःआयुर्जीवनमवस्थापयति तथाचाम्नायते—यावद्ध्यस्मिञ्छरीरेप्राणोवसतितावदायुरिति । एवमग्निरपिजाठररूपेणायुषोवस्थापयिता नित्योनसूनुः नित्योध्रुवःपुत्रइवप्रियकारी यथा औरसःपुत्रः पितुर्हितमेवाचरतितद्वदयमपिहितस्यस्वर्गस्यप्रापयिता तथाचाम्नायते—पुत्रःपित्रेलोकक्रुज्जातवेदइति[२]।तक्वान गतिमानश्वइव भूर्णिःभर्ता यथाश्वउपर्यारूढंपुरुषंबिभर्तिधारयतितद्वत् वनावनान्यरण्यानिसिषक्तिदग्धुंसमवैति सेवतेवा ॥ चित्रा सुपांसुलुगितिसोःपूर्वसवर्णदीर्घत्वम् । नित्यः नेर्ध्रुवइत्यप्रत्ययस्यपित्त्वादनुदात्तत्वेउपसर्गस्वरएवशिष्यते । तक्वा तकहसने गतिकर्मसुपठितत्वात् अत्रगत्यर्थः तकतिगच्छतीतितक्वा अन्येभ्योपिदृश्यन्तइतिवनिप् । भूर्णिः घृणिपृश्नीत्यादौभरतेर्निप्रत्ययान्तोनिपातितः ॥१॥

२ तै० ब्रा० १.२.१.।

द्वितीयामृचमाह—

दाधारक्षेममोकोनरण्वोयवोनपक्वोजेताजनानाम् । ( ३ )
ऋषिर्नस्तुभ्वाविक्षुप्रशस्तोवाजीनप्रीतोवयोदधाति ( ४ ) ॥ २॥

दाधार । क्षेमम् । ओकः । न । रण्वः । यवः । न । पक्वः । जेता ।
जनानाम् । ( ३ ) ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी ।
न । प्रीतः । वयः । दधाति ( ४ ) ॥ २ ॥

अयमग्निःक्षेमंलब्धस्यधनस्यरक्षणंदाधारधारयति स्तोतृभ्योदत्तस्यधनस्यरक्षणंकर्तुंशक्नोतीतिभावः ओकोन निवासस्थानंगृहमिव रण्वोरमणीयः यद्वा गन्तव्यःगृहवत्सर्वैःप्राप्यतइत्यर्थः यवोन यवइवपक्वः यथापक्वोयवःउपभोगयोग्योभवति तद्वदग्निरपिपाकादिकार्यहेतुतयाउपभोग्यइत्यर्थःजनानांजेताशत्रुजनानांमध्येभिभविता ऋषिर्न मन्त्रद्रष्टाऋषिरिव स्तुभ्वादेवानांस्तोता विक्षुयजमानलक्षणेषुमनुष्येषुप्रशस्तः प्रख्यातःवाजीन अश्वइवप्रीतोहर्षयुक्तः यथाश्वोहर्षयुक्तोयुद्धाभिमुखंगच्छतितद्वदयमपिदेवानांहविर्वहनेहर्षयुक्तोभवतीत्यर्थः एवंभूतोग्निःवयोन्नंदधातिदधातुअस्मभ्यंददात्वित्यर्थः वयइत्यन्ननाम वयःक्षत्रेतितन्नामसुपाठात् ॥ दाधार तुजादीनामित्यभ्यासस्यदीर्घत्वम् । क्षेमं क्षियतिनिवसत्यनेनेतिक्षेमः अर्तिस्तुसुस्वित्यादिनामन् नित्त्वादाद्युदात्तत्वम् । रण्वः रविरिविधविगत्यर्थाः अस्मात्कर्मणिक्वप्रत्ययः इदित्वान्नुम् । जेता तृन्नन्तआद्युदात्तः । जनानां यतश्चनिर्धारणमितिनिर्धारणेषष्ठी नेयंकर्मणिषष्ठीतिनलोकाव्ययनिष्ठेति षष्ठीप्रतिषेधोनभवति । स्तुभ्वा स्तोभतिःस्तुतिकर्मा अन्येभ्योपिदृश्यन्तइतिक्वनिप् ॥२॥

तृतीयामृचमाह—

दुरोकशोचिःक्रतुर्ननित्योजायेवयोनावरंविश्वस्मै । ( ५ )
चित्रोयदभ्राट्श्वेतोनविक्षुरथोनरुक्मीत्वेषःसमत्सु ( ६ ) ॥३॥

दुरोकऽशोचिः । क्रतुः । न । नित्यः । जायाऽइव । योनौ । अरम् ।
विश्वस्मै । ( ५ ) चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः ।
न । रुक्मी । त्वेषः । समत्ऽसु ( ६ ) ॥ ३ ॥

दुरोकशोचिः दुष्प्रापतेजाः क्रतुर्ननित्यःक्रतुःकर्मणांकर्तासइवध्रुवः यथासकर्मसुध्रुवोऽप्रमत्तःसन्जागर्ति तद्वदयमप्यग्निः कर्मसुरक्षसांदहनेध्रुवोजागर्तीत्यर्थः योनाैगृहेवर्तमानाजायेव योषिदिव अग्निहोत्रादिगृहेवर्तमानोवह्निर्विश्वस्मैसर्वस्मै यष्टृजनायअरंअलंभूषणंभवति यथा जाययागृहमलङ्कृतंभवतितद्वदग्निनायज्ञगृहमप्यलंकृतंसदृश्यतइत्यर्थः चित्रश्चायनीयः विचित्रदीप्तिर्वा यद्यदाअयमग्निरभ्राट् भ्राजते तदानींश्वेतोनशुभ्रवर्णआदित्यइवभवति रात्रौहि अहनिसूर्यइवअग्निःप्रकाशकोभवति विक्षुप्रजासुरथोन रथइवरुक्मीसुवर्णवद्रोचमानदीप्तियुक्तः समत्सुसंग्रामेषुत्वेषोदीप्तःएवंभूतोयदभ्राडितिपूर्वेणान्वयः ॥ दुरोकशोचिः उचसमवाये ईषद्दुःसुष्वितिकृच्छ्रार्थेखल् बहुलवचनात्कुत्वम् लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् दुरोकंशोचिस्तेजोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अरं वालमूलेत्यादिनालकारस्यरेफादेशः । अभ्राट् भ्राजृदीप्तौ लङिव्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिशपोलुक् व्रश्चादिषत्वेजश्त्वम् अडागमउदात्तः यद्वृत्तयोगादनिघातः । समत्सु समानंमाद्यन्त्येष्विवितिसमदःसंग्रामाः औणादिकोधिकरणेक्विप् समानस्यच्छन्दसीतिसभावः यद्वा सम्यगत्तिभक्षयतिवीरानितिसमत् सम्पूर्वादत्तेः क्विप्चेतिक्विप् ॥ ३ ॥

चतुर्थीमृचमाह—

सेनेवसृष्टामंदधात्यस्तुर्नदिद्युत्त्वेषप्रतीका । ( ७ )
यमोहंजातोयमोजनित्वंजारःकनीनांपतिर्जनीनाम् ( ८ ) ॥ ४॥

सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका । ( ७ ) यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ( ८ ) ॥ ४ ॥

सृष्टाप्रेरितासेनेवस्वामिनासहवर्तमानाभटसंहतिरिव अयमग्निः अमंशत्रूणांभयंदधाति विदधातिकरोतीत्यर्थः यद्वा सृष्टासेनेव अमंबलंदधातिसायथाबलवतीतद्वदग्निरपिबलवानित्यर्थः निदर्शनान्तरमुच्यते—दिद्युदितिवज्रनामतेनचात्रेषुर्लक्ष्यते त्वेषप्रतीकादीप्तमुखाअस्तुर्नदिद्युत्क्षेप्तुः सम्बन्धिनीषुरिव सायथाभीषयतेतद्वदग्निरपिराक्षसादीन्भीषयतइत्यर्थः अत्रनिरुक्तम्—सेनेवसृष्टाभयंवाबलंवादधात्यस्तुरिवदिद्युत्त्वेषप्रतीकेत्यादि[1] । यच्छतिददातिस्तोतृभ्यःकामानितिय-

[1] नि० १०. २१ । 

मोग्निरुच्यते यद्वा इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् अस्मिन्नर्थेयास्केनमन्त्रब्राह्मणेदर्शिते—यमोह्जातइन्द्रेणसहसङ्गवः यमाविहेहमातरेत्यपिनिगमोभवतीति[1] । योजातउत्पन्नः भूतसंघः यच्चजनित्वम् जनयितव्यम् उत्पत्स्यमानंभूतजातंतदुभयमपि यमोहअग्निरेवसर्वेषांभावानांआहुतिद्वाराअग्न्यधीनत्वात् कनीनांकन्यकानांजारोजरयिता यतोविवाहसमयेअग्नौलाजादिद्रव्यहोमेसतितासांकन्यात्वंनिवर्तते अतोजरयितेत्युच्यते तथाजनीनांजायानांकृतविवाहानांपतिर्भर्ता तथाचाख्यायते—अनुपजातपुरुषसम्भोगेच्छावस्थांस्त्रियंसोमोलेभे सच सोमईषदुपजातभोगेच्छांतांविश्वावसवेगन्धर्वायमादात् सचगन्धर्वोविवाहसमयेअग्नयेमददौ अग्निश्चमनुजायभर्त्रेधनपुत्रैःसहितामिमांमायच्छदिति । इममर्थंकाचिदृक्स्पष्टंब्रूते—सोमोददद्गन्धर्वायगंधर्वोददग्नये । रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमामिति[2] ।यास्कस्त्वाह—तृतीयोअग्निष्टेपतिरित्यपिनिगमोभवतीति[3] । यद्वा जनीनांपालयिता यतोयमनुष्ठितैर्यागैःफलंप्रयच्छति ॥ सेनेव इनेनसहवर्ततइतिसेना वोपसर्जनस्येतिसभावः बहुव्रीहिस्वरः । जनित्वम् जनीप्रादुर्भावे कृत्यार्थेतवैकेनितिकर्मणि त्वन्प्रत्ययः इडागमः नित्त्वादाद्युदात्तत्वम् ।जारः जारयतीतिजारः दारजारौकर्तरिणिलुक्चेतिनिपात्यते । कनीनां कन्याशब्दात्षष्ठ्येकवचनेबहुलंछन्दसीतिबहुलग्रहणात्संप्रसारणम् परपूर्वत्वम् । जनीनाम् जन्यन्तेआस्वितिजनयःस्त्रियः इन्सर्वधातुभ्यइतिइन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

तंवंश्<u>च</u>राथां<u>व</u>यंवं<u>स</u>त्यास्तं<u>न</u>गावो<u>न</u>क्षंन्तइ<u>द्ध</u>म् ।( ९ )
सिन्धुर्नक्षोदः<u>प्र</u>नीचीरैनो<u>न्न</u>वंन्त<u>गा</u>वः<u>स्वं१</u>र्दृशींके (१०)॥५॥

तम् । <u>वः</u> । <u>च</u>राथा । <u>व</u>यम् । <u>व</u>सत्या । अस्तम् । न । गावंः । नक्षंन्ते । <u>इ</u>द्धम् । ( ९ ) सिन्धुः । न । क्षोदंः । प्र । नीचीः । ऐनो<u>त्</u> । नवंन्त । गावंः । स्वंः । दृशीकें (१०) ॥ ५ ॥

वइतिव्यत्ययेनबहुवचनम् हेअग्ने तंत्वांचराथा चरतीतिचरथःपशुः तत्प्रभवैःहृदयादिभिः साध्याआहुतिरपिचरथेत्युच्यते उपचारात्कार्येकारणशब्दः चराथा चरथयापशुप्रभवहृदयादिसाधनयाआहुत्यावसत्यावसतिनिवसतीतिवस्त्यावरोव्रीह्यादिर्वसतिः पूर्ववत्तत्साध्याहुतिर्लक्ष्यते

१ नि० १०.२१ ।    २ ऋ० सं० ८.३.२८ ।    ३ नि० १०.२१ ।

वसत्यापुरोडाशाद्याहुत्याचवयंइद्धंमदीप्तमग्निंनक्षन्तेव्याप्नुयामः पुरुषव्यत्ययः तत्रदृष्टान्तः—अ-स्तंनगावः अस्तमितिगृहनाम यथागावोगृहंप्राप्नुवन्तितद्वत् अत्रयास्कः—तंवश्चराथाचरन्त्यापश्वाहुत्यावसत्याचनिवसन्त्यौपधाहुत्यास्तंयथागावआप्नुवन्तितथाप्नुयामेति । अयमग्निःसिन्धुर्नं-क्षोदः स्यन्दनशीलमुदकमिव नीचीर्निवरांअश्नतीःइतस्ततोनितरामुद्गच्छन्तीः ज्वालाःऐनोत्प्रेरय-ति यथाजलप्रवाहः निम्नदेशेशीघ्रंगच्छति तद्वदग्नेर्ज्वालादग्धव्यंप्रतिगच्छन्तीतिभावः स्वर्नभसि वर्तमानेदृशीकेदर्शनीयेतस्मिन्नग्नौ गावोगमनस्वभावारश्मयः नवन्तसंगच्छन्ते नवतिर्गतिकर्मा॥ चराथा चरेरौणादिकोथक्प्रत्ययः दीर्घश्छान्दसः सुपांसुलुगितिविभक्तेराकारः । वसत्या वहि-वस्यर्तिभ्यश्चिदितिअतिप्रत्ययः उदात्तयणइतिविभक्तेरुदात्तत्वम् । अस्तं अस्यतेस्मिन्सर्वमि-त्यस्तंगृहं असिहसीत्यादिनातन् तितुत्रेतीट्प्रतिषेधः नित्त्वादाद्युदात्तत्वम् । नक्षते नक्षतिर्व्याप्ति-कर्मा नक्षगतौ व्यत्ययेनात्मनेपदम् चादिलोपेविभाषेतिनिघाताभावः । नीचीः निपूर्वादञ्चतेश्चोप-संख्यानमितिङीप् अचइत्यकारलोपः चावितिदीर्घत्वम् न्यधीचेतिगतेःप्रकृतिस्वरत्वम् । ऐनो-त् इण्गतौ अन्तर्भावितण्यर्थाच्छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ्व्यत्ययेनश्नुः आडागमोवृ-द्धिश्च । दृशीके दृशिर्प्रेक्षणे अनिदृशिभ्यांचेतिकीकन्प्रत्ययः नित्त्वादाद्युदात्तत्वम्॥ ५ ॥

॥इतिप्रथमस्यपञ्चमेदशमोवर्गः ॥ १० ॥

वनेष्वितिद्विपदंदशर्चं अध्ययनतःपंचर्चं तृतीयंसूक्तंपराशरस्यार्षआग्नेयं वनेष्वित्यनुक्रा-न्तम्विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

वनेषुजा॒युर्मर्ते॑षुमि॒त्रोवृ॑णी॒तेश्रु॒ष्टिंराजे॑वाजु॒र्यम् । ( १ )
क्षेमो॒नसा॒धुःक्रतु॒र्नभ॒द्रोभुव॑त्स्वा॒धीर्होता॑हव्य॒वाट् ( २ ) ॥१॥

वने॑षु । जा॒युः । मर्ते॑षु । मि॒त्रः । वृ॒णी॒ते । श्रु॒ष्टिम् । राजा॑ऽइव । अ॒जु॒र्यम् । ( १ ) क्षेमः॑ । न । सा॒धुः । क्रतुः॑ । न । भ॒द्रः । भुव॑त् । सु॒ऽआ॒धीः । होता॑ । ह॒व्य॒ऽवाट् ( २ ) ॥ १ ॥

१ नि० १०. २१. । २ नि० ३. २०. ।

वनेषुजायुः अरण्येषुजायमानः मर्तेषुमनुष्येषुमित्रः सखा सोयमग्निः श्रुष्टिंशुआशुअश्नुते कर्माणिव्याप्नोतीतिश्रुष्टिर्यजमानः क्षिप्रेणकर्मणामनुष्ठातेत्यर्थः तथाचयास्कः—श्रुष्टीतिक्षिप्रनामाशुअष्टीति[1] । एवंभूतंयजमानंवृणीतेसम्भजते अनेनप्रत्तंहविःस्वीकृत्यरक्षतीतिभावः तत्रदृष्टान्तः—राजेवाजुर्यंअजुर्यंजरारहितंदृढाङ्गंसर्वकार्येषुशक्तमित्यर्थः एवंभूतंपुरुषंयथाराजावृणीतेतद्वत् क्षेमोन रक्षकइव साधुःसाधयिता क्रतुर्न क्रतुःकर्मणांकर्तासइवभद्रोभजनीयःकल्याणोवाहोतादेवानामाह्वाता हव्यवाट्हव्यवाहनोनामदेवानामग्निः तथाचाम्नायते—त्रयोवाअग्नयोहव्यवाहनोदेवानांकव्यवाहनःपितृणांसहरक्षाअसुराणामिति[2] । एवंभूतोग्निःस्वाधीःशोभनकर्माशोभनाध्यानोवाभुवद्भवतु ॥ जायुः जिजये कृवापाजीत्युण् । अजुर्यं जॄष्वयोहानौ भावे ण्यत् वृद्धौकृतायामाकारस्यव्यत्ययेनउकारः । जुर्यं जरानास्त्यस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । भुवत् भवतेर्लेटचडागमः बहुलंछन्दसीतिविकरणस्यलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः ॥ १ ॥

द्वितीयामृचमाह—

हस्ते॒ दधा॑नो नृ॒म्णा विश्वा॒न्यमे॑ दे॒वान्धा॑द्गु॒हा॑ नि॒षीद॑न् । (३)
वि॒दन्ती॒मत्र॒ नरो॑ धियं॒धा हृ॒दा यत्त॒ष्टान्मन्त्राँ॒ अशं॑सन् (४) ॥ २ ॥

हस्ते॑ । दधा॑नः । नृ॒म्णा । विश्वा॑नि । अमे॑ । दे॒वान् । धा॒त् । गु॒हा॑ । नि॒ऽसीद॑न् । (३) वि॒दन्ति॑ । ई॒म् । अत्र॑ । नरः॑ । धि॒य॒म्ऽधाः । हृ॒दा । यत् । त॒ष्टान् । मन्त्रा॑न् । अशं॑सन् (४) ॥ २ ॥

विश्वानिसर्वाणिनृम्णानृम्णानिहविर्लक्षणानि धनानिहस्तेस्वकीयेबाहौदधानोधारयन्नयमग्निर्गुहागुहायांअप्सुमध्येअश्वत्थादौवासंवृतप्रदेशेनिषीदन् निगूढोवर्तमानःसन्अमेभयेदेवान्धात्अस्थापयत् अग्नौहविर्भिःसहपलायितेसतिसर्वेदेवाअभैषुरित्यर्थः नरोनेतारःधियंधाःकर्मणांबुद्धीनांवाधारयितारोदेवाअत्रास्मिन्कालेईमेनमग्निंविदन्तिजानन्ति यद्यदाहृदाहृदयावस्थितयाबुद्ध्यातष्टान्निर्मितानअग्निस्तुतिपरानमन्त्रानशंसन् अस्तुवन् अवोचन्नित्यर्थः ॥ निषीदन् सदिरप्रतेरितिषत्वम् । विदन्ति विदज्ञाने अदादिलाच्छपोलुक् प्रत्ययस्वरः । धियंधाः आतोनुपसर्गेकइतिकः तत्पुरुषेकृतिबहुलमितिबहुलवचनाद्द्वितीयायाअप्यलुक् । तष्टान् तक्षूत्वक्षूतनूकरणे निष्ठा यस्यविभाषेतीट्प्रतिषेधः स्कोःसंयोगाद्योरितिकलोपः ॥ २ ॥

---

१ नि० ६. १२ । २ तै० सं० २. ५. ८.

तृतीयामृचमाह—

अजोनक्षांदाधारपृथिवींतस्तम्भद्यांमत्रेभिःसत्यैः । ( ५ )
प्रियापदानिपश्वोनिपाहिविश्वायुरग्नेगुहागुहंगाः ( ६ ) ॥ ३ ॥

अजः । न । क्षाम् । दाधार । पृथिवीम् । तस्तम्भ । द्याम् । मन्त्रेभिः । सत्यैः । ( ५ ) प्रिया । पदानि । पश्वः । नि । पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहम् । गाः ( ६ ) ॥ ३ ॥

अजोन अजतिगच्छतीत्यजःसूर्यः यद्वा नजायतइत्यजःजन्मरहितइत्यर्थः सइवक्षां क्षेति-पृथिवीनाम क्षांभूमिंदाधारअयमग्निःप्रकाशकत्वेनधारयति पृथिवीत्यन्तरिक्षनाम पृथिवींअन्त-रिक्षंचधारयतीत्येवद्यांद्युलोकंसत्यैरवितथार्थैःमत्रेभिर्मंत्रैः तस्तंभस्तभ्नाति यथाअधोनपतति उपर्येवतिष्ठतितथाकरोतीत्यर्थः मन्त्रैर्दिवोधारणंतैत्तिरीये समाम्नातम्—देवावाआदित्यस्यस्वर्ग-स्यलोकस्यपराचोतिपातादबिभयुस्तंछन्दोभिरदृंहन्धृत्याइति[1]। यद्वा सत्यैर्मंत्रैःस्तूयमानोग्निःद्यां तस्तम्भेति हेअग्ने विश्वायुःविश्वंसर्वमायुरन्नंयस्यसत्वं पश्वःपशोःप्रियाप्रियाणिपदानिशोभनव-णोदकोपेतानिस्थानानि निपाहिनितरांपालय माधाक्षीरित्यर्थःतर्हिकुत्रनिवसामीतिचेद् तत्राह गुहागुहायाअपिगुहंगुहांगवांसंचारायोग्यस्थानंगाःगच्छ तत्रैवनिवसेत्यर्थः ॥ पश्वः जसादिषु-छन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः उदात्तयणइतिविभक्तेरुदात्तत्वम् । गुहा सुपांसुलुगितिपञ्चम्याआजादेशः चित्त्वादन्तोदात्तत्वम्।गुहं व्यत्ययेनह्रस्वत्वम्।गाः छान्दसो-लुङ् इणोगाल्लुङीतिगादेशः॥ ३ ॥

चतुर्थीमृचमाह—

यईंचिकेतगुहाभवन्तमायःससादधारामृतस्य । ( ७ )
वियेचृतन्त्यृतासपन्तआदिद्वसूनिप्रववाचास्मै (८)॥४॥

यः । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य । ( ७ ) वि । ये । चृतन्ति । ऋता । सपन्तः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ( ८ ) ॥ ४ ॥

1 तै० ब्रा० १. २. ४.

यः पुमान्ईंएनंगुहाभवन्तंगुहायांसन्तंअग्निंचिकेतजानाति यश्चऋतस्यसत्यस्ययज्ञस्यवाधारयितारमेनमग्निंआससादआसीदवित्पास्तइत्यर्थः येचऋता ऋतानिसत्यानियज्ञान्वासपन्तः समवयन्तः स्पृशन्तोवापुरुषाः एतमग्निंविचृतन्तिअग्निमुद्दिश्यस्तुतीर्ग्रथ्नन्तिकुर्वन्तीत्यर्थःआदित्स्तुत्यनन्तरमेव अस्मैसर्वस्मैस्तोतृजनायवसूनिधनानिप्रववाचप्रकथयति॥ चिकेत कितज्ञाने लिटि णलि लित्स्वरः।चृतन्ति चृतीहिंसाग्रन्थनयोः तौदादिकः तसार्वधातुकानुदात्तत्वेविकरणस्वरःशिष्यते । ववाच लिटिब्रुवोवचिः लिट्यभ्यासस्योभयेषामितिअभ्यासस्यसम्प्रसारणम् सम्प्रसारणाच्चेतिपरपूर्वत्वस्यवाछन्दसीतिविकल्पनाद्यणादेशः ॥ ४ ॥

पञ्चमीमृचमाह–

वियोवी॒रुत्सु॒रोध॑न्महि॒त्वोत प्र॒जाउ॒त प्र॒सूष्व॒न्तः । ( ९ )
चि॒त्तिर॒पांदमे॑वि॒श्वायु॑ःसद्मे॑व॒धीरा॑ःसम्मा॒य॑चक्रुः(१०)॥५॥११॥

वि । यः । वी॒रुत्ऽसु॑ । रोध॑त् । म॒हि॒ऽत्वा । उ॒त । प्र॒ऽजाः । उ॒त ।
प्र॒ऽसूषु॑ । अ॒न्तरिति॑ । (९) चित्तिः॑ । अ॒पाम् । दमे॑ । वि॒श्वऽआ॑युः ।
सद्म॑ऽइव । धीरा॑ः । स॒म्ऽमाय॑ । च॒क्रुः ( १० ) ॥ ५ ॥ ११ ॥

योग्निः वीरुत्सुओषधीषुमहित्वायानिमहत्त्वानिसन्तितानिविरोधत् विरुणद्धिविशेषेणावृणोति नावशेषयति उतअपिच प्रजाः प्रकर्षेणोत्पन्नाःपुष्पफलादिलक्षणाः प्रसूषुउत्पादयित्रीषुमातृस्थानीयास्वोषधीषुअन्तर्मध्येविरुणद्धीत्येव द्वितीयउतशब्दः पदपूरणः तथाचित्तिश्चेतयिताज्ञापयिताअपांदमेजलानांमध्यभूतेगृहेविश्वायुः सर्वात्रोयोग्निर्वर्ततइतिशेषः तमग्निंधीरामेधाविनः संमायसंमाननंपूजनंकृत्वा स्तुतिभिःस्तुत्वेत्यर्थः चक्रुः कर्माणिकुर्वन्ति तत्रदृष्टान्तः– सद्मेव यथासदनंगृहंप्रथमतःसम्पूज्यपश्चात्तत्रकर्माण्याचरन्तितद्वत् ॥ वीरुत्सु विपूर्वाद्रोहतेः क्विप् न्यंक्वादिपुवीरुधइतिपठितत्वादुपसर्गस्यदीर्घोधकारश्चान्तादेशः उक्तंच–वीरुधओषधयोभवन्ति[1] । रोधत् रुधिर्आवरणे लेट्यडागमः इतश्चलोपइतीकारलोपः । संमाय माङ्मानेशब्देच समासेनञ्पूर्वेक्त्वोल्यप् नल्यपीतीत्वप्रतिषेधः ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेएकादशोवर्गः ॥ ११ ॥

---

१ नि० ६. ३.।

श्रीणन्नितिदशर्चचतुर्थसूक्तम् तत्राध्ययनतःपञ्चर्चम् ऋष्याद्याःपूर्ववत् विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

श्री॒णन्नुप॑स्था॒द्दिवं॑भुर॒ण्युःस्था॒तुश्च॒रथ॑म॒क्तून्व्यूर्णो॑त् । (१)
परि॒यदे॑षा॒मेको॒विश्वे॑षां॒भुव॑द्दे॒वोदे॒वानां॑महि॒त्वा ( २ ) ॥१॥

श्री॒णन् । उप॑ । स्था॒त् । दिव॑म् । भु॒र॒ण्युः । स्था॒तुः । च॒रथ॑म् । अ॒क्तून् । वि । ऊ॒र्णो॒त् ।(१) परि॑ । यत् । ए॒षा॒म् । एकः॑ । विश्वे॑षाम् । भुव॑त् । दे॒वः । दे॒वाना॑म् । म॒हि॒ऽत्वा ( २ ) ॥ १ ॥

भुरण्युःहविषांभर्ताधारयिता पयःप्रभृतिनाश्रयणद्रव्येणसोमभिवर्तेहविर्भिःश्रीणन्मिश्रयन्दिवमुपस्थात्उपतिष्ठतिप्राप्नोतीत्यर्थः स्थातुःस्थावरंचरथंजङ्गमंतदुभयात्मकंजगदक्तून्सर्वारात्रीश्चव्यूर्णोत् स्वतेजसाविशेषेणाच्छादयति हविर्वहनंकुर्वन्सर्वमपिजगत्स्वभासाप्रकाशयतीतिभावः विश्वेषांसर्वेषांदेवानां दानादिगुणयुक्तानां इन्द्रादीनांमध्येदेवोद्योतमानः एकएवायमग्निः एषांपूर्वोक्तानां स्थावरादीनांमहित्वामहत्वानिमाहात्म्यानियद्यस्मात् परिभुवत्परिभवति परिगृह्णाति परितोव्याप्यवर्तते परिपूर्वोभवतिःपरिग्रहार्थः यद्वा एषांविश्वेषां स्थावरादीनां मध्येवर्तमानोयंदेवोग्निर्देवानांमहत्त्वानियद्यदापरिभुवत् परितोव्याप्नोति तदानीमितिपूर्वत्रान्वयः ॥ ऊर्णोत् ऊर्णुञ्आच्छादने ऊर्णोतेर्विभाषेतिवृद्धेर्विकल्पः ॥ १ ॥

द्वितीयामृचमाह—

आदित्ते॒विश्वे॒क्रतुं॑जुषन्त॒शुष्का॒द्यद्दे॑वजी॒वोज॒नि॑ष्ठाः । (३)
भज॑न्त॒विश्वे॑देव॒त्वन्नाम॑ऋ॒तंसप॑न्तोअ॒मृत॒मेवैः॑ ( ४ )॥२॥

आत् । इत् । ते॒ । विश्वे॑ । क्रतु॑म् । जु॒ष॒न्त॒ । शुष्का॑त् । यत् । दे॒व॒ । जी॒वः । ज॒नि॑ष्ठाः । (३) भज॑न्त । विश्वे॑ । दे॒व॒ऽत्वम् । नाम॑ । ऋ॒तम् । सप॑न्तः । अ॒मृत॑म् । एवैः॑ ( ४ ) ॥ २ ॥

हेदेवद्योतमानाग्ने जीवोजीवन्प्रज्वलन् शुष्कात् नीरसादरणिरूपात्काष्ठाद्यद्यदाजनिष्ठाः प्रादुर्भवसिमथनेनोत्पद्यसे आदित् अनन्तरमेवविश्वे सर्वेयजमानाः तेतुभ्यंक्रतुंकर्मजुषन्तसेवन्ते अनुतिष्ठन्ति तथानुष्ठायचविश्वेतेसर्वेनामनामकंऋतंअवितथंदेवत्वंदेवतात्वंभजन्तभजन्तेप्राप्नुवन्ति किंकुर्वन्तः अमृतंअमरणंत्वांएवैः त्वांगन्तृभिःस्तोत्रैः सपन्तःसमवयन्तः प्राप्नुवन्तइत्यर्थः ॥ जुषन्तेत्यादीनित्रीण्याख्यातानि छन्दसिलुङ्लङ्लिटइतिवर्तमानार्थानि । एवैः यन्तिस्तोतव्याभिमुख्येनगच्छन्तीतिएवानिस्तोत्राणि इणूशीङ्भ्यांवन् ॥ २ ॥

तृतीयामृचमाह—

ऋतस्य॒प्रेषा॑ऋ॒तस्य॑धी॒तिर्वि॒श्वायु॒र्विश्वे॒अपां॑सिचक्रुः । ( ५ )
यस्तुभ्यं॒दाशा॒द्योवा॑ते॒शिक्षा॒त्तस्मै॑चिकि॒त्वान्र॒यिंद॑यस्व ( ६ )॥३॥

ऋ॒तस्य॑ । प्रे॒षाः । ऋ॒तस्य॑ । धी॒तिः । वि॒श्वऽआ॑युः । विश्वे॑ ।
अपां॑सि । च॒क्रुः । (५) यः । तु॒भ्य॑म् । दाशा॑त् । यः । वा॒ । ते॒ । शिक्षा॑त् ।
तस्मै॑ । चि॒कि॒त्वान् । र॒यिम् । द॒य॒स्व ( ६ ) ॥ ३ ॥

ऋतस्यगतस्यदेवयजनंप्राप्तस्याग्नेःप्रेषाःप्रकर्षेणेष्यमाणाःस्तुतयःक्रियन्ते धीतिः धीयतेसोमःपीयतेस्मिन्निति धीतिर्यागः सोपिऋतस्यदेवयजनदेशंप्राप्तस्याग्नेरेवक्रियते अतःसोग्निर्विश्वायुः विश्वंसर्वमायुरन्नंयस्यसतथाविधोभवति अपिचास्मैविश्वेसर्वेयजमानाःअपांसिदर्शपूर्णमासादीनिकर्माणिचक्रुः कुर्वन्ति हेअग्ने तुभ्यंयोदाशात्चरुपुरोडाशादीनिहवींषिददातियोवापि योन्योयजमानःतेशिक्षात्त्वदीयंकर्मकर्तुंशक्तोभूयासमितिइच्छति उभयविधायतस्मैयजमानायचिकित्वान्तत्कृतमनुष्ठानंजानन्त्वंरयिंदयस्वधनंदेहि ॥ दाशात् दाशृदाने लेटआडागमः । शिक्षात् शकॢशक्तौ इच्छार्थेसन् सनिमीमाघुरभलभशकेतिअकारस्यइसादेशः अत्रलोपोभ्यासस्येतिअभ्यासलोपः स्कोःसंयोगाद्योरितिसकारलोपः पूर्ववल्लेटआडागमः । चिकित्वान् कितज्ञाने लिटःक्वसुः । दयस्व दयदानगतिरक्षणहिंसादानेषु ॥ ३ ॥

चतुर्थीमृचमाह—

होता॒निष॑त्तो॒मनो॒रप॑त्ये॒सचि॒न्न्वा॑सां॒पती॑रयी॒णाम् । ( ७ )
इ॒च्छन्त॒रेतो॑मि॒थस्त॒नूषु॒सञ्जा॑नत॒स्वैर्दक्षै॒रमू॑राः ( ८ ) ॥४॥

होता॑ । निऽस॑त्तः । मनो॑ः । अप॑त्ये । सः । चित् । नु । आ॒साम् । पति॑ः । र॒यी॒णाम् । ( ७ ) इ॒च्छन्त॑ । रेत॑ः । मि॒थः । त॒नूषु॑ । सम् । जा॒न॒त॒ । स्वैः । दक्षैः॑ । अमू॑राः ( ८ ) ॥ ४ ॥

हेअग्ने त्वंमनोरपत्येयजमानस्वरूपायांप्रजायां होतादेवानामाह्वातासन् निपत्तोनिषण्णः मानव्योहिप्रजाइतिहिब्राह्मणम्। सचिन्नुसएवत्वंआसांप्रजानांरयीणांगवादीनांधनानामधिपतिःस्वामी अतस्ताःप्रजास्तनूषुआत्मीयेषुशरीरेषुमिथःसंसृष्टमेकीभूतंपुत्ररूपेणपरिणतंरेतोवीर्यमिच्छन्त ऐच्छन् त्वदनुग्रहेणपुत्रमलभन्तेतियावत् लब्धपुत्राश्चताःप्रजाःअमूराःअमूढाःसत्यःस्वैःस्वकीयैःदक्षैः समर्थैःपुत्रैःसहसंजानत सम्यगवगच्छन्ति चिरकालंजीवन्तीत्यर्थः यद्वा दक्षशब्दःप्राणवाची प्राणोवैदक्षोपानःक्रतुरितिश्रुतेः। स्वैःदक्षैःस्वकीयैःप्राणैःअमूराःसद्भवास्त्वयैवसर्वंजानन्ति॥इच्छन्त व्यत्ययेनात्मनेपदम्। जानत छान्दसोलङ् झस्यादादेशे श्नाभ्यस्तयोरातइत्याकारलोपः। अमूराः मूराअमूरेत्यत्रयास्कएवंव्याचख्यौ—मूढावयंस्मोअमूढस्त्वमसीति[3]।अतोत्राप्यमूरशब्देनामूढत्वमुच्यते वर्णव्यापत्त्याढकारस्यरेफः यद्वा मुर्छामोहसमुच्छ्राययोः अस्मात्सम्पदादिलक्षणोभावे क्विप् राल्लोपइतिछलोपः रोमत्वर्थीयःनमूराअमूराः अथवा अगमत्यादिषु अस्मादौणादिकऊरनप्रत्ययः ॥ ४ ॥

पञ्चमीमृचमाह—

पि॒तुर्न पु॒त्राः क्रतुं॑ जुषन्त॒ श्रोष॒न्ये अ॑स्य॒ शास॑न्तु॒रास॑ः । ( ९ )
वि राय॑ और्णो॒द्दुर॑ः पुरु॒क्षुः पि॒पेश॒ नाकं॑ स्तृ॒भिर्दमू॑नाः ( १० )॥५॥१२॥

पि॒तुः । न । पु॒त्राः । क्रतु॑म् । जु॒ष॒न्त॒ । श्रोष॑न् । ये । अ॒स्य॒ । शास॑म् । तु॒रास॑ः । (९) वि । राय॑ः । औ॒र्णो॒त् । दुर॑ः । पु॒रु॒ऽक्षुः । पि॒पेश॑ । नाक॑म् । स्तृऽभि॑ः । दमू॑नाः (१०) ॥ ५ ॥ १२ ॥

अस्याग्नेःशासं शासनंतुरासस्त्वरमाणाःसन्तोयेयजमानाः श्रोषन्शृण्वन्तितेसर्वेतेनानुशिष्टंक्रतुंकर्मजुषन्तसेवन्ते तत्रदृष्टान्तः—पितुर्नपुत्राः यथापुत्राः पुरुबहुलंत्रायकाः पुन्नाम्नोनरकाद्वाक्षकारस्तनयाः पितुराज्ञांकुर्वन्तितद्वत् पुत्रःपुरुत्रायतेनिपरणाद्वापुंनरकंततस्त्रायतइतिवेनियास्कः।

१ तै० सं० ५. १. १५. । २ तै० सं० २. ५. २. ।
३ नि० ६. ८. । ४ नि० २. ११. ।

पुरुक्षुः क्षुइत्यन्ननाम बह्वन्नः सोग्निःएषांयजमानानांदुरोद्वाराणियज्ञस्यद्वारभूतानिरायोधनानिव्यौ-र्णोत् विवृणोतिप्रकाशयतिददातीतियावत् अपिच दमूनाः दमेयज्ञगृहेमनोयस्यसोग्निः नास्मिन्न-कंदुःखमस्तीतिनाकोद्युलोकःतं स्तृभिरितिनक्षत्रनाम स्तृभिर्नक्षत्रैः पिपेश अवयवीचकार नक्षत्रै-र्युक्तमकरोदित्यर्थः ॥ श्रोषन् श्रुश्रवणे लेट्यडागमः सिब्बहुलंलेटीतिसिप् बहुलंछन्दसीतिविक-रणस्यलुक् इतश्चलोपइतीकारलोपः संयोगान्तस्यलोपः । पिपेश पिशअवयवे ॥ ५॥

॥ इतिप्रथमस्यपञ्चमेद्वादशोवर्गः ॥ १२ ॥

शुक्रइतिद्विपदंदशर्चं अध्ययनतःपञ्चर्चं पञ्चमंसूक्तंपराशरस्यार्षं आग्नेयं शुक्रइत्यनुक्रान्तं विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

शुक्रःशुशुक्वाँउषोनजारःपप्रासमीचीदिवोनज्योतिः । ( १ )
परिप्रजातःक्रत्वाबभूथभुवोदेवानांपितापुत्रःसन् ( २ )॥१॥

शुक्रः । शुशुक्वान् । उषः । न । जारः । पप्रा । समीची इति सम्ऽईची ।
दिवः । न । ज्योतिः । परि । (१) प्रऽजातः । क्रत्वा । बभूथ । भुवः ।
देवानाम् । पिता । पुत्रः । सन् ( २ ) ॥ १ ॥

शुक्रः शुभ्रवर्णोयमग्निः उषोनजारःउषसोजरयितासूर्यइव शुशुक्वान् शोचयितासर्वस्यप्र-काशयिताभवति तथासमीचीसंगतेद्यावापृथिव्यौदिवोनज्योतिः द्योतमानस्यसूर्यस्यज्योतिरिव पप्रा स्वतेजसापूरयिता हेअग्ने अतस्त्वंप्रजातः प्रादुर्भूतःसन्क्रत्वाकर्मणा यद्वा ज्ञानहेतुनाप्रकाशेन उक्तप्रकारेणसर्वंजगत्परिबभूथपरितोव्याप्नोषि दीव्यन्तीतिदेवाऋत्विजः तेषांपुत्रःसन् पुन्नाम्नो-नरकात्त्रायकःसन् पिताभुवः पालयिताभवसि यद्वा देवानामिन्द्रादीनामेवपुत्रःसन्पुत्रइवदूतो-भूत्वापिताहविर्भिःपालयिताभवसि ॥ शुशुक्वान् शुचदीप्तौ लिटःक्वसुः व्यत्ययेनकुत्वम् । पप्रा पॄपालनपूरणयोरित्यस्मादाटगमहनजनइतिकिप्रत्ययः सुपांसुलुगितिसोडादेशः।समीची सम्पूर्वा-दञ्चतेः ऋत्विगित्यादिनाक्विन् समःसमीतिसम्यादेशः अञ्चतेश्चेतिवक्तव्यमितिङीप् अचइत्य-कारलोपेचावितिदीर्घत्वम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घत्वम्

यदितु सम् ईचीइतिपदविभागःक्रियते तर्हि उदईदितिविधीयमानमीत्वंसमउत्तरस्यापिद्रष्टव्यम्। बभूथ बभूथाततन्थेतिनिपातनादिडभावः ॥ १ ॥

द्वितीयामृचमाह—

वेधाअदृप्तोअग्निर्विजानन्नूधर्नगोनांस्वाद्मापितूनाम्। ( ३ )
जनेनशेवआहूर्यःसन्मध्येनिषत्तोरण्वोदुरोणे ( ४ )॥२॥

वेधाः। अदृप्तः। अग्निः। विऽजानन्। ऊधः। न। गोनाम्। स्वाद्म। पितूनाम्। (३)जने। न। शेवः। आऽहूर्यः।सन्। मध्ये। निऽसत्तः। रण्वः। दुरोणे ( ४ )॥ २ ॥

वेधाःमेधाविनामैतत् मेधावी यद्वा विधाता सर्वस्यकर्ताअदृप्तः दर्परहितःविजानन्कर्तव्याकर्तव्यविभागंजानन्नग्निःगोनांगवामूधर्न गोसम्बन्धिपयसआश्रयभूतंस्थानमिव पितूनामन्नानां स्वाद्मस्वादयितारसयिता यथागोरूधःपयःप्रदानेनसर्वाण्यन्नानिस्वादूनिकरोतितद्वदग्निरपिसम्यक्पाकेनसर्वाण्यन्नानिस्वादूनिकरोतीत्यर्थः अपिच एवम्भूतोग्निः जनेनशेवःजनपदेलोकेसुखकरः पुरुषइवमध्येयज्ञेपुमध्येआहूर्यःआह्वातव्यःसन् दुरोणेयज्ञगृहेनिपत्तोनिषण्णोरण्वोरमयितासुत्योवाभवति ॥ गोनां गोःपादान्तेइतिअपादान्तेपिनुट्। स्वाद्म स्वादआस्वादने अन्तर्भावितण्यर्थात्अन्येभ्योपिदृश्यन्तइतिमनिन् सुपांसुलुगितिसोर्लुक्। पितूनां नामन्यतरस्यामितिनामउदात्तत्वम्। आहूर्यः आङ्पूर्वात्ह्वयतेरचोयदितियत् बहुलंछन्दसीतिसम्प्रसारणम् हलइतिदीर्घः रेफोपजनश्छान्दसः यतोनावइत्याद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

पुत्रोनजातोरण्वोदुरोणेवाजीनप्रीतोविशोवितारीत्। ( ५ )
विशोयदह्वेनृभिःसनीळाअग्निर्देवत्वाविश्वान्यश्याः ( ६ ) ॥३॥

पुत्रः। न। जातः। रण्वः। दुरोणे। वाजी। न। प्रीतः। विशः। वि। तारीत्। (५) विशः। यत्। अह्वे। नृऽभिः। सऽनीळाः। अग्निः। देवऽत्वा। विश्वानि। अश्याः ( ६ )॥ ३ ॥

पुत्रोन पुत्रइव जातःप्रादुर्भूतोग्निःदुरोणेगृहेरण्वोरमयिताभवति वाजीन अश्वइव प्रीतोहर्षयुक्तःसन् विशः संग्रामेवर्तमानाःशत्रुभूताःप्रजाः वितारीत् विशेषेणतरति अतिक्रामति अपिच नृभिः ऋत्विग्लक्षणैर्मनुष्यैःसहितोहं सनीळाः समाननिवासस्थानाःविशोदैवीःप्रजायद्यदाअह्वे आह्वयामि तदानीमयमग्निर्विश्वानिसर्वाणिदेवत्वादेवत्वानिअश्याः अश्नुतेप्राप्नोतिस्वयमेवतत्तद्देवतारूपोभवतीत्यर्थः । तथाचमन्त्रान्तरमाम्नास्यते—त्वमग्नेवरुणोजायसेयत्त्वंमित्रोभवसियत्समिद्धइत्यादि[1] ॥ अश्याः अशूङ्व्याप्तौ लिङिव्यत्ययेनपरस्मैपदमध्यमौ बहुलंछन्दसीतिविकरणस्यलुक् ॥ ३ ॥

चतुर्थीमृचमाह—

नकिष्टएताव्रतामिनन्तिनृभ्योयदेभ्यःश्रुष्टिंचकर्थ । (७)
तत्तुतेदंसोयदहन्त्समानैर्नृभिर्यद्युक्तोविवेरपांसि ( ८ ) ॥४॥

नकिः । ते । एता । व्रता । मिनन्ति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ (७)। तत् । तु । ते । दंसः । यत् । अहन् । समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ( ८ )॥ ४॥

हेअग्ने तेतवसम्बन्धीनि एताव्रता एतानिपरिदृश्यमानानिदर्शपूर्णमासादीनिकर्माणिनकिर्मिनन्ति राक्षसादयोबाधकानहिंसन्ति यद्यस्मात्त्वंएभ्यः कर्मसुवर्तमानेभ्योनृभ्योयज्ञस्यनेतृभ्योयजमानेभ्यःश्रुष्टिंआशुअश्नुतेव्याप्नोतीतिश्रुष्टिः यज्ञफलरूपंसुखंचकर्थकृतवानसि सतिहि तवव्रतानांबाधकेएतन्नोपपद्यतेअतोवगम्यतेतवव्रतानांहिंसकानसन्तीति हेअग्ने तेत्वदीयंतत्तुदंसः तदेवकर्मयद्यदिराक्षसादिरहन्हन्विनाशयति तदानींसमानैःसप्तगणरूपेणसदृशैर्नृभिर्नेतृभिर्मरुद्भिर्युक्तस्त्वं रपांसिबाधकानिराक्षसादीनियद्यस्मात्त्वंविवेःगमयसिपलायनंप्रापयसितत्तस्मात्तव व्रतानिनहिंसन्तीतियोज्यम् ॥ मिनन्ति मीञ्हिंसायां क्र्यादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् । विवेःछन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् वीगत्यादिषु सिपिअदादित्वाच्छपोलुकिप्राप्ते बहुलंछन्दसीतिशपःश्लुः ॥ ४ ॥

---

[1] ऋ० सं० . ३. ८. १६. ।

पञ्चमीमृचमाह—

उपोनजारोविभावोस्रःसंज्ञातरूपश्चिकेतदस्मै । ( ९ )
त्मनावहन्तोदुरोव्यृण्वन्नवन्तविश्वेस्वः१र्दृशीके (१०) ॥५॥१३॥

उपः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकेतत् । अस्मै । (९) त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे । स्वः । दृशीके (१०) ॥ ५ ॥ १३ ॥

उपोनजारउपसोजरयिताआदित्यइव विभावाविशिष्टप्रकाशयुक्तः उस्रोनिवासयितासंज्ञातरूपःसर्वैःप्राणिभिरवगतस्वरूपः देवतान्तरवदप्रत्यक्षोनभवतीत्यर्थः एवम्भूतोग्निरस्मैयजमानायचिकेतत् जानातु अभिमतफलंददात्वित्यर्थः यद्वा विभक्तिव्यत्ययः अस्मेइदंसूक्तरूपंस्तोत्रंचिकेतत्जानातु तथाअस्यरश्मयःत्मनाआत्मनैवस्वयमेववहन्तोहविर्वहनंकुर्वन्तोदुरोयज्ञगृहद्वाराणिव्यृण्वन् विशेषेणगच्छन्तिव्याप्नुवन्तीत्यर्थः तदनन्तरंदृशीकेदर्शनीयेस्वःनभसिविश्वेसर्वेरश्मयोनवन्तगच्छन्ति नवतिर्गतिकर्मा देवान्प्राप्नुवन्तीत्यर्थः ॥ उस्रः वसनिवासे स्फायितञ्चीत्यादिनारक् यजादित्वात्सम्प्रसारणम् । चिकेतत् कितज्ञाने जौहोत्यादिकः लेटयडागमः बहुलंछन्दसीतिवक्तव्यमितिवचनाल्लाभ्यस्तस्याचिपितीतिलघूपधगुणप्रतिषेधाभावः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । ऋण्वन् इविरिविरविधिविगत्यर्थाः इदित्वान्नुम् छान्दसोलुङ् व्यत्ययेनरेफस्य सम्प्रसारणम् यद्वा ऋणुगतौ तनोत्यादिः ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेत्रयोदशोवर्गः ॥ १३ ॥

वनेमेतिद्वैपदमेकादशर्चं अध्ययनतःपङ्क्तंपष्ठंसूक्तम् ऋष्याद्याःपूर्ववत् अनुक्रान्तंच—वनेमैकादशेति । विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

वनेमपूर्वीरर्योमनीषाअग्निःसुशोकोविश्वान्यश्याः । ( १ )
आदैव्यानिव्रताचिकित्वानामानुषस्यजनस्यजन्म ( २ )॥१॥

१ नि० ३. २०. ।

वनेम । पूर्वीः । अर्यः । मनीषा । अग्निः । सुऽशोकः । विश्वानि । अश्याः । (१) आ । दैव्यानि । व्रता । चिकित्वान् । आ । मानुषस्य । जनस्य । जन्म ( २ ) ॥ १ ॥

पूर्वीः प्रभूताः इषोन्नानिवनेमसंभजेमहि अग्निस्तादृशान्नानिददात्वित्यर्थः मनीषामनीषयाबुध्याअर्योगन्तव्यः प्राप्तव्यः यद्वा मनीषयाअर्यःस्वामीसुशोकः शोभनदीप्तिःएवम्भूतोग्निःविश्वानिसर्वाणिकर्माणिअश्याः अश्नुतेव्याप्नोति किंकुर्वन् दैव्यानिदेवेषुभवानिव्रताव्रतानिकर्माणिचिकित्वान्आसमन्तावजानन् तथामानुषस्यजनस्यमनुष्यजातस्यजन्मउत्पत्तिरूपंकर्मचिकित्वान् आभिमुख्येनजानन्द्यावापृथिव्योः सम्बन्धीनियानिकर्माणितानिसर्वाणिअवगच्छन् अवगत्यव्याप्नोतीत्यर्थः ॥ वनेम वनषणसम्भक्तौ शपिप्राप्तेव्यत्ययेनशः आत्मनेपदंच अदुपदेशाल्लसार्वधातुकानुदात्तत्वेविकरणस्वरःशिष्यते । पूर्वीः पुरुशब्दाद्वोतोगुणवचनादितिङीष् हलिचेतिदीर्घः । मनीषा ईषाअक्षादित्वात् प्रकृतिभावः । सुशोकः शुचदीप्तौ भावेघञ् चजोःकुघिण्ण्यतोरितिकुत्वम् । शोभनःशोकोयस्य आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । अश्याः देवत्वाविश्वान्यर्याइतिवत् । चिकित्वान् कितज्ञानेलिटःक्वसुः ॥ १ ॥

द्वितीयामृचमाह—

गर्भोयोअपांगर्भोवनानांगर्भश्चस्थातांगर्भश्चरथाम् । (३)
अद्रौचिदस्माअन्तर्दुरोणेविशांनविश्वोअमृतःस्वाधीः (४) ॥२॥

गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् । (३)अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ( ४ ) ॥ २ ॥

योग्निरपांगर्भोगर्भवदन्तर्वर्तीअपान्नपात्संज्ञः यश्चवनानांअरण्यानांगर्भःदावाग्निरूपेणतन्मध्येवर्तते यश्चस्थातांस्थावराणांकाष्ठादीनांगर्भोन्तरवस्थाता चरथांचरणवतांजङ्गमानां गर्भोजाठररूपेणदेहमध्येवतिष्ठते एवम्भूतायास्माअग्नयेदुरोणेदुस्तर्पगृहेअद्रौचित्पर्वतेपिअन्तर्मध्येहविःप्रयच्छन्तीतिशेषः सोयंअमृतः अमरणधर्माग्निः स्वाधीः शोभनकर्मयुक्तःशोभनध्यानोवाअस्माकंभवत्वितिशेषःतत्रदृष्टान्तः—विश्वः निवेशयिताप्रसुखेनावस्थापयितारराजाविशांन प्र-

१ ऋ० सं० १.५.१३.।

जानांयथारक्षणरूपशोभनकर्मयुक्तोभवतितद्वत् ॥ स्थातां तिष्ठतेःक्विपि छान्दसस्तुक् यद्वा औणादिकस्तुप्रत्ययः आमिअन्त्यलोपश्छान्दसः। चरथां शीङ्शपिरुगमीतिविधीयमानोथप्रत्ययोवहुलवचनाच्चरेरपिद्रष्टव्यः आगमानुशासनस्यानित्यत्वादामोनुडभावेसवर्णदीर्घः। विश्वः विशप्रवेशने अस्मादन्तर्भावितण्यर्थादशूप्रुषीत्यादिनाक्वन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह–

सहिक्षपावाँ अग्नीरयीणांदाशद्योअस्माअरंसूक्तैः । (५)
एताचिकित्वोभूमानिपाहिदेवानांजन्ममर्ताँश्चविद्वान् (६) ॥३॥

सः । हि । क्षपाऽवान् । अग्निः । रयीणाम् । दाशत् । यः । अस्मै ।
अरम् । सुऽउक्तैः । (५) एता । चिकित्वः । भूम । नि । पाहि ।
देवानाम् । जन्म । मर्तान् । च । विद्वान् (६) ॥ ३ ॥

सहाग्निःक्षपावान् क्षपेतिरात्रिनाम रात्रिमान् आग्नेयीवैरात्रिरितिश्रुतेः[1]। रात्रेरग्निसम्बन्धोपि अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिहूयमानत्वात्। यद्वा राक्षसादीनांक्षपणेन नाशनेनयुक्तः एवम्भूतोग्निः स्तोत्रेयजमानायरयीणांधनानिदाशत्दाशतिप्रयच्छति योयजमानःअस्माअग्नये सूक्तैः सुष्टूक्तैःयथाशास्त्रं प्रयुक्तैर्मन्त्रैःअरंअलंपर्याप्तं स्तोत्रंकरोतितस्माइत्यर्थः हेचिकित्वः चिकित्वांश्चेतनावानितियास्कः[2]। हेचेतनावन्सर्वज्ञ अग्ने त्वं देवानामिन्द्रादीनां जन्मजन्मानिमर्तान्मनुष्यांश्चविद्वान् जानन् एताएतानिभूमभूम्युपलक्षितानिभूतजातानिनिपाहिनितरांपालय यतस्त्वंदेवमनुष्यादीन् सर्वान् जानासिअतएवमुच्यसइत्यर्थः ॥ रयीणां क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । दाशत् दाशृदाने लेटचडागमः । अरं वाल्मूलेत्यादिनालत्वविकल्पः । सूक्तैः सूपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम् । चिकित्वः मतुवसोरितिनकारस्यरुत्वम् । भूम सुपांसुलुगितिभूमिशब्दादुत्तरस्याद्वितीयायाडादेशः पदकालेह्रस्वश्छान्दसः॥३॥

चतुर्थीमृचमाह–

वधान्यंपूर्वीःक्षपोविरूपाःस्थातुश्चरथमृतप्रवीतम् । (७)
अराधिहोतास्व१र्निषत्तःकृण्वन्विश्वान्यपांसिसत्या (८) ॥४॥

१तै० ब्रा० १. १. ४. । २ तै० ब्रा० २. १. ९. । ३ नि० २. ११. ।

वर्धान् । यम् । पूर्वीः । क्षपः । विऽरूपाः । स्थातुः । च । रथम् । ऋतऽप्रवीतम् । ( ७ ) अराधि । होता । स्वः । निऽसत्तः । कृण्वन् विश्वानि । अपांसि । सत्या ( ८ ) ॥ ४ ॥

पूर्वीर्बह्वीःउषसःक्षपोनिशाश्चविरूपाः [illegible] मिंवर्धान्व न्तितथास्थातुः स्थावरं [illegible] रथंरमम [illegible] ऋतप्रवीतं ऋतेन [illegible] हेनवाभकर्षेणवेष्टितंयमग्निंवर्धयन्ति सोग्निःस्वःसुष्ठुअरणीयेदेवयजनेनिषत्तोनिषण्णः [illegible] सन् होतादेवानामाह्वाता अराधि संसिद्धोभूत् यद्वा ऋत्विग्भिरराधि आराधितइत्यर्थः [illegible] र्वन् विश्वानिसर्वा [illegible] अपांसिकर्मा [illegible] वर्धान् वृधेर्ण्यन्ताल्लेटयाडागमः छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णिलोपः इतश्चलोपइत्ये कारलोपे संयोगान्तलोपः । ऋतप्रवीतं व्येञ्संवरणे अस्मात्कर्मणिनिष्ठा वचिस्वपीत्यादिना स म्प्रसारणं कृद्ग्रहणेगतिकारकपूर्वस्यग्रहणात् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । अरा राधसाधसंसिद्धौ कर्तरिलुङिव्यत्ययेनचिण् ॥ ४ ॥

पञ्चमीमृचमाह—

गोषुप्रशस्तिंवनेषुधिषेभरन्तविश्वेबलिंस्वर्णः । ( ९ )
वित्वानरःपुरुत्रासपर्यन्पितुर्नजिव्रेर्विवेदोभरन्त (१०) ॥५॥

गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे । बलिम् । स्वः । नः । ( ९ ) वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरन्त (१०) ॥ ५ ॥

हेअग्ने त्वंवनेषुवननीयेषु सम्भजनीयेषुगोषुअस्मदीयेषुपशुषुप्रशस्तिं प्रशंसां धिषे दधि स्थापयसि अस्माकंप्रशस्ताःगवादिपशवोभवन्त्वित्यर्थः विश्वेसर्वेजनाः नोस्मभ्यं स्वःसुष्ठु अ रणीयंबलिंउपायनरूपंधनंभरन्तआहरन्तु हेअग्ने त्वान्वांनरोमनुष्याः पुरुत्राबहुषुदेवयजनदेशे षुविसपर्यन् विविधंपूजयन्ति पूजयित्वाचवेदोधनंविभरन्त त्वत्तोविशेषेणहरन्तिगृह्णन्तीत्यर्थः त त्रदृष्टान्तः—जिव्रेर्जीर्णाद्वृद्धात्पितुर्नपितुरिव यथापुत्राःवृद्धात्पितुःसकाशाद्धनंहरन्तितद्वत् ॥ धिषे छान्दसोवर्तमानेलिट् द्विर्वचनप्रकरणेछन्दसिवेतिवक्तव्यमितिद्विर्वचनाभावः । भरन्त हृञ्हरणे

वलोपिसोपसर्गार्थोद्रष्टव्यः छान्दसोऽङ् ह्यहोभंइतिभत्वम्। पुरुत्रा देवमनुष्यपुरुषपुरुमर्त्येत्या-दिनासप्तम्यर्थेत्राप्रत्ययः। जिवेः जृपूर्वयोर्हानौ जृशूस्तृजागृभ्यःक्विन् ऋतइद्धातोरितीत्वम् उणा-दयोव्युत्पन्नानिप्रातिपदिकानीतिजिव्रिः कियोंगिर्योरित्येवमादिपुदीर्घोनभवतीत्युक्त्वात् हलि-चेतिदीर्घस्याभावःरेफवकारयोर्विपर्ययःउक्तंच—वर्णागमोवर्णविपर्ययश्चेति निच्वादाद्युदात्तत्वम्। वेदइतिधननाम विद्यतेलभ्यतइतिवेदः विद्लाभे कर्मण्यसुन् ॥ ५ ॥

द्विपदास्त्वयुक्संख्यासुयान्त्यातिरिच्यतेसातथैवपठितव्येत्युक्तम् उत्तरातादृशीद्विपदा ।

तामेतांपष्ठीमृचमाह—

साधुर्नगृध्नुरस्तेवशूरोयातेवभीमस्त्वेषःसमत्सु (११)॥६॥१४॥

साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । यातांऽइव । भीमः । त्वेषः । समत्ऽसु (११) ॥ ६ ॥ १४ ॥

अयमग्निः साधुर्नसाधकइवगृध्नुःगृहीता यथासाधकःसाध्यफलमाशुगृह्णाति तद्वदग्निर-पिसर्वस्वीकरोतीत्यर्थः तथायमग्निःअस्तेवशूरोयथाइपूणांक्षेप्तावानुष्कः शत्रून्प्रेरयतितद्वदग्निर-पिदहन्सर्वप्राणिजातंप्रेरयति तथायातेवभीमः यातायातयिताहिंसकः भीमःसर्वेषांभयंकरोभवति तद्वदग्निरपिदृष्टमात्रेणसर्वेषांभयमुत्पादयति अतएवंविधोग्निः समत्सुसङ्ग्रामेषुत्वेषोदीप्तःसन् अस्माकंसहायोभवत्वित्यर्थः ॥ गृध्नुः गृधुअभिकांक्षायां त्रसिगृधिधृषिक्षिपेःक्नुः । शूरः शुग-तौ अन्तर्भावितण्यर्थादस्मात् शुषिचिमीनांदीर्घश्चेतिक्रन् ॥ ६ ॥

॥ इतिप्रथमस्यपञ्चमेचतुर्दशोवर्गः ॥ १४ ॥

उपप्रेतिदशर्चसप्तमंसूक्तम् अत्रानुक्रम्यते—उपप्रदशेति। ऋषिश्चान्यस्मादितिपरिभाषयाश-क्तिपुत्रःपराशरऋषिः अनादेशपरिभाषयात्रिष्टुप् परमाग्नेयंमन्त्रादितिपरिभाषितत्वादग्निर्देवता प्रा-तरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादीनित्रीणिसूक्तानि अथैतस्याइतिखण्डेतथैवसूत्रितम्— उपप्रजिन्वन्निति त्रीणिकानउपेतिरितिसूक्तेइति। आश्विनशस्त्रेपिप्रातरनुवाकातिदेशादिदमादीनि त्रीणिसूक्तानि तथैवसूत्र्यते—एवयाग्नेयंगायत्रमुपसन्तनुयात्प्रातरनुवाकन्यायेनेति ।

तत्रप्रथमामृचमाह—

उपप्रजिन्वन्नुशतीरुशन्तंपतिंननित्यंजनयःसनीळाः।
स्वसारःश्यावीमरुषीमजुष्रञ्चित्रमुच्छन्तीमुपसंनगावः ॥१॥

उप। प्र। जिन्वन्। उशतीः। उशन्तम्। पतिम्। न। नित्यम्।
जनयः। सऽनीळाः। स्वसारः। श्यावीम्। अरुषीम्। अजुष्रन्।
चित्रम्। उच्छन्तीम्। उपसम्। न। गावः ॥ १ ॥

उशतीरुशत्यःकामयमानाः सनीळाःनीळोनिवासस्थानंसमाननिव[illegible]
नाव स्वसारः [illegible]कुलिन[illegible]अङ्गुल्य[illegible]
साधारणंपतिंन भर्तारमिवउपप्रजिन्वन्उपआगत्यहविःप्रदानादिकर्मणाप्रीणयन्ति [illegible]
चित्रंचायनीयंपूजनीयंतमग्निंअञ्जलिबन्धनेनाजुषन्असेवन्त तत्रदृष्टान्तः [illegible]
सम्बन्धात्कृष्णांततउच्छन्तींसूर्यकिरणसम्बन्धात्तमोवर्जयन्तीं अतएवारुषींआरोचमानां
शुभ्ररूपयुक्तांउपसंनउषोदेवतांगावोरश्मयोयथासेवन्तेतद्वत् यथारश्मयउषसानित्यसम्बद्धाः [illegible]
सर्वेषुयज्ञेषुअग्निपरिचरणेनअङ्गुल्योनित्यसम्बद्धाइतितात्पर्यार्थः ॥ जिन्वन् जिविप्रीणनार्थः
दित्वान्नुम् लेटयडागमः। उशतीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् [illegible]
म्। स्वसारः असुक्षेपणेइत्यस्मात सुञिअसेर्ऋन्नितिऋन् [illegible]
त्वादाद्युदात्तत्वम्।श्यावीं शुगतौ इण्शीङ्भ्यामितिबाहुलकाद्वन् शार्ङ्गरवादित्वान्ङीन्। [illegible]
अरुषमितिरूपनाम ऋगतौ ऋहनिभ्यामुषन् छन्दसीवनिपावितिमत्वर्थीयईकारः [illegible]
द्युदात्तत्वम्। अजुषन् जुषीप्रीतिसेवनयोः तौदादिकः लङिव्यत्ययेनपरस्मैपदम् [illegible]
सौबहुलंछन्दसीत्यन्तादेशस्यरुडागमः ॥ १ ॥

द्वितीयामृचमाह—

वीळुचिद्दृळ्हापितरोनउक्थैरद्रिंरुजन्नङ्गिरसोरवेण।
चक्रुर्दिवोबृहतोगातुमस्मेअहःस्वर्विविदुःकेतुमुस्राः ॥२॥

वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिम् । रुजन् ।
अङ्गिरसः । रवेण । चक्रुः । दिवः । बृहतः । गातुम् । अस्मे इति ।
अहरिति । स्वः । विविदुः । केतुम् । उस्राः ॥ २ ॥

नोस्माकंपितरोङ्गिरसः एतत्संज्ञाऋषयः उक्थैःशस्त्रैः अग्निंस्तुत्वा वीळुचिद्दृळ्हा वीळ्विति-बलनाम बलवन्तंदृढाङ्गमपिअद्रिमत्तारंपणिनामानमसुरं रवेणस्तुतिशब्दमात्रेणैवरुजन्अभञ्जन् तैःस्तुतोग्निस्तमसुरंहतवानित्यर्थः किञ्च बृहतोमहतोदिवोद्युलोकस्यगातुंमार्गंअस्मेअस्माकंचक्रुः कृतवन्तः आवरकस्यासुरस्य अग्निनाहतत्वात्मार्गंकृत्वाचस्वःसुष्ठुअरणीयं असुरराहित्येनसुखे-नमाप्यंअहःदिवसंविविदुरजानन्लब्धवन्तोवा तथा केतुंअह्नांकेतयितारं ज्ञापयितारमादित्यंउस्राः पणिनापहतागाश्चविविदुरित्यनुषङ्गः॥वीळु सुपांसुलुगितिविभक्तेर्लुक्।दृळ्हा दृढःस्थूलबलयोरिति निपातितः सुपांसुलुगितिडादेशः । रुजन् रुजोभङ्गे तौदादिकः बहुलंछन्दस्यमाङ्योगेपीत्यडभा-वः । विविदुः विदज्ञाने विद्लृलाभेइतिवा लिटिउसिरूपम् ॥ २ ॥

तृतीयामृचमाह—

दधन्नृतंधनयन्नस्यधीतिमादिदर्यो दिधिष्वो३ विभृत्राः ।
अतृष्यन्तीरपसोयन्त्यच्छादेवाञ्जन्मप्रयसावर्धयन्तीः ॥३॥

दधन् । ऋतम् । धनयन् । अस्य । धीतिम् । आत् । इत् ।
अर्यः । दिधिष्वः । विऽभृत्राः । अतृष्यन्तीः । अपसः । यन्ति ।
अच्छ । देवान् । जन्म । प्रयसा । वर्धयन्तीः ॥ ३ ॥

ऋतंदेवयजनदेशंप्राप्तमग्निंअङ्गिरसोमहर्षयःदधन् गार्हपत्यादिरूपेणाधारयन् धारयित्वा चास्याग्नेर्धीतिंकर्मंअग्निहोत्रादिलक्षणंधनयन्धनमकुर्वन् यथापुरुषाःधनंसंपादयन्तितद्वदग्नेरे-तत्पंकर्मान्वतिष्ठन्नित्यर्थः आदित्अङ्गिरसामनुष्ठानानन्तरमेव अर्यःअर्याःधनस्यस्वामिन्यःदि-धिष्वःतेनधनेनअग्नीनांधारणंकुर्वत्यःकृताग्न्याधानाइत्यर्थः विभृत्राःआहितानग्नीनग्निहोत्रादि-कर्मणिविहरन्त्यः अतृष्यन्तीःविषयान्तरतृष्णारहिताः अतएवापसः अपसाकर्मणायुक्ताः ए-वंभूतायजमानलक्षणाःप्रजाःप्रयसाहविर्लक्षणेनान्नेनदेवानिन्द्रादीन्जन्मजातान्मनुष्यांश्चवर्धय-

न्तीःवर्धयन्त्यःसत्यः एनमग्निंअच्छआभिमुख्येनयन्तिप्राप्नुवन्तिपरिचरन्तीतियावत् ॥ दधन् धधारणे लङिव्यत्ययेनपरस्मैपदम् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः॥ धनयन् धन [illegible] रोतीतिणिच् इष्ठवण्णौप्रातिपदिकस्येतीष्ठवद्भावाट्टिलोपः लङिपूर्ववत्। अर्यः [illegible] योरितिनिपातितः लिङ्गवचनव्यत्ययो अर्यःस्वाम्याख्याचेदित्यन्तोदात्तत्वम्। दिधिष्वः डुधाञ्धा रणपोषणयोः [illegible] प्रत्ययस्वरः उदात्तस्वरितयोर्यणइतिजसःस्वरितत्वम् । विभ्राः हञ्हरणे विपूर्वादस्मादौणा दिकःत्रन्प्रत्ययः हग्रहोर्भइतिभत्वम्। अतृष्यन्तीः ञितृपापिपासायां जसिवाछन्दसीतिपू सवर्णदीर्घस्यविकल्पितत्वात्पूर्वसवर्णदीर्घः अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अपसः अपस्शब्दात् त्पन्नस्यमत्वर्थीयस्यविनोबहुलंछन्दसीतिबहुलवचनाल्लुक् [illegible] वात्प्रातिपदिकस्वरेणान्तोदात्तत्वम् [illegible] निन् सुपांसुलुगितिशसोलुक् ॥ ३ ॥

चतुर्थीमृचमाह—

मथीद्यदींविभृतोमातरिश्वागृहेगृहेश्येतोजेन्योभूत्।
आदींराज्ञेनसहीयसेसचासन्नादूत्यं[1]भृगवाणोविवाय ॥४॥

मथीत्। यत्। ईम्। विऽभृतः। मातरिश्वा। गृहेऽगृहे।
श्येतः। जेन्यः। भूत्। आत्। ईम्। राज्ञे। न। सहीयसे।
सचा। सन्। आ। दूत्यम्। भृगवाणः। विवाय ॥ ४ ॥

मातरिश्वाव्यानवृत्तिस्वरूपेणावस्थितोमुख्यःप्राणः ईमेनमग्निंयद्यदामथीत् अमथ्नात् अग्नेर्मन्थनस्यव्यानवायुसाध्यत्वम् अथ [illegible] वीयान्यन्यानिवीर्यवन्तिकर्माणियथाग्नेर्मन्थनमाजेःसरणंदृढस्यधनुषआयमनमप्राणन्नपानस्तानिकरोतीति मन्त्रान्तरंचभवति—आन्यंदिवोमातरिश्वाजभारामथ्नादन्यंपरिश्येनोअद्रेरिति। कीदृशोमातरिश्वा विभृतःप्राणिषुप्राणापानादिपञ्चवृत्तिरूपेणविहृतोविभज्यस्थितः तदपिप्राणसंवादेतैरेवाम्नातम्—तान्वरिष्ठःप्राणउवाच मामोहमापद्यथाहमेवैतत्पंचधात्मानंप्रविभज्यैतद्बाणमवष्टभ्यविधारयामीति।मन्थनेनोत्पन्नोयमग्निःश्येतःशुभ्रवर्णोगृहेगृहेसर्वस्मिन्यज्ञगृहेयदाजेन्यःप्रादुर्भू-

[1] ऋ० सं० १.६.२८.।

तोभूव यद्वा रक्षसांजेन्योजेताअभिभविताभूव तथाचतैत्तिरीयकम्—देवासुराःसंयत्ताआसन्तेदेवा-विभ्यतोग्निंमाविशन् तस्मादाहुरग्निःसर्वादेवताइति। तेग्निमेववरूथंकृत्वासुराअभ्यभवन्निति।ऐ-तरेयिणोप्यामनन्ति—तेदेवाःप्रतिबुध्याग्निंपुरस्तात्प्रातःसवनेपर्यौहंस्तेग्निनैवपुरस्तात्प्रातःसवनेसुर-रक्षांस्यपाघ्नतेति।आत् यत्तगृहेप्रादुर्भावानन्तरंई एनमग्निंभृगवाणोभृगुर्क्षपिःसइवाचरन्यजमानो-दूत्यंदूतस्यकर्मआविवाय शास्त्रमर्यादयामापयामास तत्रदृष्टान्तः-सचासन्सखाभवन्नन्योराजास-हीयसेअभिभवित्रेप्रपलायराज्ञेन यथाराज्ञेस्वपुरुषःदूतकर्मप्रापयतितद्वत् ॥ मथीत् मथेविलोडने लुङि ह्यन्तक्षणेतिवृद्धिप्रतिषेधः।जेन्यः जनीप्रादुर्भावे अस्मादौणादिकएन्यप्रत्ययः टिलोपश्चेति भट्टभास्करमिश्रः। यद्वा जिजयेइत्यस्मात्कृत्यल्युटोबहुलमितिबहुलवचनात्कर्तर्यंचोयदितियत् तस्यनुडागमश्च यतोनावइत्याद्युदात्तत्वम्।दूत्यं दूतस्यकर्मदूत्यंदूतस्यभागकर्मणीइतियत् तित्स्व-रितमितिस्वरितत्वम् यतोनावइत्याद्युदात्तत्वंतु अनित्यमितिवीरवीर्यौचेत्यत्रज्ञापितम्। भृगवाणः भृगुरिवाचरन् सर्वप्रातिपदिकेभ्यःक्विब्वक्तव्यइतिक्विप् तदन्ताल्लटोव्यत्ययेनशानच् अदुपदेशाल्ल-सार्वधातुकानुदात्तत्वेप्रत्ययान्तधातोरन्तोदात्तत्वेप्राप्तेवृषादेराकृतिगणत्वादाद्युदात्तत्वम् । विवाय वीगत्यादिषु अस्मादन्तर्भावितण्यर्थाल्लिट् ॥ ४ ॥

पञ्चमीमृचमाह—

म॒हे यत्पि॒त्र ईं॒ रसं॑ दि॒वे कर॒व त्स॑रत्पृश॒न्य॑श्चिकि॒त्वान् ।
सृ॒जदस्ता॑ धृष॒ता दि॒द्युम॑स्मै॒ स्वायां॑ दे॒वो दु॑हि॒तरि॒ त्विषिं॑ धात् ॥५॥१५॥

म॒हे । यत् । पि॒त्रे । ई॒म् । रस॑म् । दि॒वे । क॒रिति॑ कः । अव॑ । त्स॒र॒त् ।
पृ॒श॒न्यः॑ । चि॒कि॒त्वान् । सृ॒जत् । अस्ता॑ । धृ॒ष॒ता । दि॒द्युम् ।
अ॒स्मै॒ । स्वाया॑म् । दे॒वः । दु॒हि॒तरि॑ । त्विषि॑म् । धा॒त् ॥ ५ ॥ १५ ॥

महे महतेपित्रेपालयित्रेदिवेद्योतमानायदेवगणायईइमंरसंपृथिव्याःसारभूतंहविः यद्यदा-यजमानः कःकरोति तदानींपृशन्यःस्पर्शनकुशलोराक्षसादिश्चिकित्वानहवींषिवहन्तं हेअग्ने त्वां जानन् अवत्सरवत्सरत्क्षयावपलायते अस्ता इषुक्षेपणशीलोग्निः धृषताधर्षकेणधनुषाअस्मैपलाय-मानायराक्षसादयेदिद्युंदीप्यमानंबाणंसृजत् विसृजति देवोदीप्यमानः उपःकालंप्राप्तोग्निः स्वायां स्वकीयायांदुहितरिदुहितृवत्समनन्तरभाविन्यांउपसित्विषिंस्वकीयांदीप्तिंधावस्थापयतिउपःका-

१ तै० सं० ६. २. २. । २ ऐ०ब्रा० ६. ४. ।

लेहिसूर्यकिरणाःप्रादुर्भवन्ति तैःस्वकीयंप्रकाशमेकीकरोति तथाचतैत्तिरी... यादित्यमग्निरनुसमारोहति तस्माद्धूमएवाग्नेर्दिवाददृश्इति । अतउपसिद्दीतिंनिदधातीत्युच्यते कः करोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् ।त्सरवत्सरछद्मगतौ लेटयडागमः इतश्चेतीकारलोपः। शन्यः स्पृशसंस्पर्शने कृपृवृजीतिविधीयमानःक्युप्रत्ययोबहुलवचनादस्मादपिभवति ... स्पर्शः तत्रसाधुरितियत् सलोपश्छान्दसः तित्स्वरितमितिस्वरितत्वम् । दिद्युं दिद्युदितिवचन... अन्त्यलोपश्छान्दसः । धात् छान्दसोवर्तमानेलुङ् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेपञ्चदशोवर्गः ॥ १५ ॥

षष्ठीमृचमाह–

स्वआयस्तुभ्यंदमआविभातिनमोवादाशादुशतोअनुद्यून् ।
वर्धोअग्नेवयोअस्यद्विबर्हायासद्रायासरथंयंजुनासि ॥६॥
स्वे । आ । यः । तुभ्यम् । दमे । आ । विऽभाति । नमः । वा ।
दाशात् । उशतः । अनु । द्यून् । वर्धो इति । अग्ने । वयः । अस्य ।
द्विऽबर्हाः । यासत् । राया । सऽरथम् । यम् । जुनासि ॥ ६ ॥

हेअग्ने तुभ्यं त्वांस्वेदमेस्वकीयेयज्ञगृहेयोयजमानः ... विभातिआसमन्तात् समिदादिभिःकाष्ठैःप्रज्वलयति अनुद्यून् अनुदिवसं ... तुभ्यंनमोवादाशात् हविर्लक्षणमन्नंवादद्यात् अस्ययजमानस्य हेअग्ने द्विबर्हाः द्व... मस्थानयोः बृंहितोवर्धितस्त्वं वयोन्नंवर्धोवर्धयैव सरथंरथेनसहितं युयुत्सुंयंपुरुषंजुनासि ... मेरयसि सपुरुषः रायाधनेनयासत्संगच्छते ॥ तुभ्यं क्रिया... कर्तव्य... नत्वाच्चतुर्थी । दाशात् दाश्दाने लेटयाडागमः । उशतः शतुरनुमइतिविभक्तेरुदात्तत्वम् ... थ्यर्थे बहुलंछन्दसीतिषष्ठी । अनुद्यून् द्युरित्यहर्नाम लक्षणे अनोःकर्मप्रवचनीयत्वम् ... नीययुक्तेइतिद्वितीया ।वर्धोवर्धउवृधेण्यन्ता... ...पिति...आर्धधातुकत्वा...णेरनि... तिणिलोपः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते उआसहैकादेशेउञइतिप्रगृह्यत्वम् । या... यामापणे सिब्बहुलंलेटीतिसिप् लेटोडाटावित्यडागमः । जुनासि जुइतिगत्यर्थःसौत्रोधातुः ... प्राप्तेव्यत्ययेनश्ना ॥ ३ ॥

२ तै० ब्रा० २.१.२ ।

सप्तमीमृचमाह—

अ॒ग्निं विश्वा॑ अ॒भि पृक्षः॑ सचन्ते समु॒द्रं न स्र॒वतः॑ स॒प्त य॒ह्वीः ।
न जा॒मिभि॒र्वि चि॑किते॒ वयो॑ नो वि॒दा दे॒वेषु॒ प्रम॑तिं चिकि॒त्वान् ॥७॥

अ॒ग्निम् । विश्वाः॑ । अ॒भि । पृक्षः॑ । स॒च॒न्ते॒ । स॒मु॒द्रम् । न । स्र॒वतः॑ ।
स॒प्त । य॒ह्वीः । न । जा॒मिऽभिः॑ । वि । चि॒कि॒ते॒ । वयः॑ । नः॒ ।
वि॒दाः । दे॒वेषु॑ । प्रऽम॑तिम् । चि॒कि॒त्वान् ॥ ७॥

विश्वाःपृक्षःचरुपुरोडाशादीनिसर्वाण्यन्नानिअग्निंअंगनादिगुणयुक्तंएनं अभिवचन्ते आभिमुख्येन समवयन्तिमाप्नुवन्ति तत्रदृष्टान्तः—स्रवतःसमुद्रंन यथास्रवतोनद्यःसमुद्रमभिगच्छन्तितद्वत् कीदृश्योनद्यः सप्त सप्तसंख्याकाः इमंमेगंगइत्यस्यामृचिसप्तहिनद्यःप्राधान्येनश्रूयन्ते यह्वीः महन्नामैतत् महत्यः जामिभिः जमन्त्येकस्मिन्पात्रेसहभुञ्जतइतिजामयोज्ञातयः तैर्नोस्मदीयंवयोन्नं नविचिकिते नज्ञायते तेभ्योदातुमस्माकंअन्नंप्रभूतंनास्तीतिभावः अतोहेअग्ने त्वंदेवेषु दीव्यन्तीतिदेवाःधनपतयः तेषुप्रमतिंप्रकर्षेणमननीयंधनंचिकित्वानवगच्छन्विदाःअस्मभ्यंलम्भय यद्वा प्रमतिंप्रकृष्टंस्तोत्रंदेवेषुविदाःवेदयज्ञापय पृक्षःअन्ननामैतत् पृचीसंपर्केइत्यस्मादौणादिकःकर्मणिक्विप् धातोःपुमागमश्च यद्वा असुनि सुपांसुलुगितिजसोलुक् । स्रवतः स्रुगतौ स्रवणंस्रवः तत्कुर्वन्ति सर्वप्रातिपदिकेभ्यःक्विब्वक्तव्यइतिक्विप् एतदन्ताद्धातोःक्विप्चेतिक्विप् ह्रस्वस्यपितीतितुक् क्विबन्ताद्धातोःसतिशिष्टत्वाद्धातुस्वरेणान्तोदात्तत्वम् । यह्वीः पिप्पल्यादिगयश्चेतिगौरादिषुपठितत्वात् तस्यचाकृतिगणत्वाद्वापिङीष् वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । चिकिते छान्दसोवर्तमानेकर्मणिलिट् । विदाः विदॢलाभे अन्तर्भावितण्यर्थाल्लेटयाडागमः तुदादित्वाच्छः आगमानुशासनस्यानित्यत्वान्नुमभावः विकरणस्वरःशिष्यते यद्वा विदेर्ज्ञानार्थस्य लेटि व्यत्ययेनशः ॥ ७ ॥

अष्टमीमृचमाह—

आ यदि॒षे नृ॒पतिं॒ तेज॒ आन॒ट् शुचि॒ रेतो॒ निषि॑क्तं॒ द्यौर॒भीके॑ ।
अ॒ग्निः शर्ध॑मनव॒द्यं युवा॑नं स्वा॒ध्यं॑ जनयत्सू॒दय॑च्च ॥८॥

आ । यत् । इषे । नृऽपतिम् । तेजः । आनट् । शुचि । रेतः । निऽसिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् । युवानम् । सुऽआध्यम् । जनयत् । सूदयत् । च ॥ ८ ॥

अग्नेर्यत्तेजोनृपतिंनृणामृत्विजांपालकंयजमानंआनट् [illegible] किमर्थंइषेन्नाय कीदृशंशुचिशुद्धं द्यौर्दीप्तं तेनतेजसा [illegible] भ्यक्तेअभिगतेअभिप्रासेगर्भस्थानेनिषिक्तंनितरांसिक्तं [illegible] नयत् जनयतु शर्धंबलवन्तं अनवद्यं अवद्यरहितंयुवानंतरुणंजरारहितमित्यर्थः स्वाध्यं [illegible] भनकर्माणंशोभनप्रज्ञंवाउत्पन्नंपुत्रंसूदयच्च यागादिकर्मसुप्रेरयतुच यद्वा रेतइत्युदकनाम [illegible] क्तंमेघेनवृष्टमुदकंइषेन्नायसस्यादिनिष्पत्तयेअग्नेर्यत्तेजःआनट्व्याप्नोत् वृष्टेनोदकेनभौमाग्नेः [illegible] गेसतिहिसस्यान्युत्पद्यन्ते कीदृशंतेजः [illegible] भीकेआसन्नकालएवशर्धाद्यगुणविशिष्टंपुत्रंजनयतुचप्रेरयतुयज्ञादौ॥ [illegible] दात्तत्वम्। नृपतिं परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम्। आनट्अशूव्याप्तौ [illegible] नपरस्मैपदश्नमौआडागमः व्रश्चादिषत्वेष्टुत्वम्। निषिक्तं षिचिरक्षरणे कर्मणिनिष्ठा गतिरनन्त रइतिगतेःप्रकृतिस्वरत्वम् उपसर्गात्सुनोतीतिषत्वम्। अभीके अभिपूर्वादञ्चतेःपचाद्यचि पृषो दरादित्वाद्रूपसिद्धिः यद्वा इण्गतावित्यस्मादौणादिकः ककप्रत्ययः उभयथापिदासीभारादित्वा त्पूर्वपदप्रकृतिस्वरत्वम्। स्वाध्यं एरनेकाचइतियणादेशः उदात्तस्वरितयोर्यणइतिस्वरितत्वम् जनयत् जनेर्ण्यन्ताल्लेटयडागमः। सूदयत् षूदक्षरणे पूर्ववल्लेटयडागमः ॥ ८ ॥

नवमीमृचमाह—

मनोनयोध्वनःसद्यएत्येकःसत्रासूरोवस्वईशे ।
राजानामित्रावरुणासुपाणीगोषुप्रियममृतंरक्षमाणा ॥९॥

मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । गोषु । प्रियम् । अमृतम् । रक्षमाणा ॥ ९ ॥

यःसूरः सूर्यः एकःएकाकीअसहायःसन् अध्वनोदिव्यान्मार्गान्सद्यएतिआशुगच्छति असहायत्वंचश्रूयते—सूर्यएकाकीचरतीत्याह असौवाआदित्यएकाकीचरतीति । शीघ्रगमनंचस्मर्यते—योजनानांसहस्रेद्वेद्वेशतेद्वेचयोजने । एकेननिमिषार्धेनक्रममाणनमोऽस्तुतइति । शीघ्रगमनेदृष्टान्तः—मनोनयथामनःशीघ्रंगच्छति तद्वत्सचशूरःअस्वोधनस्यसत्रासहैवयुगपदेवईशेईष्टे योहि शीघ्रंगच्छति सबहुषुदेशेष्ववस्थितानिधनानिप्राप्नोति तथा राजाना राजमानौसुपाणीशोभनबाहू मित्रावरुणामित्रावरुणौअस्मदीयासुगोषुप्रियंसर्वेषांप्रीतिकरंअमृतंअमृतवत्स्वादुभूतंपयोरक्षमाणारक्षन्तौवर्तेते हेअग्ने तत्तद्रूपेणात्वमेवेवंवर्तसइतिभावः ॥ वस्वः लिङ्गव्यत्ययः जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः । ईशे ईशऐश्वर्ये लोपस्तआत्मनेपदेष्वितितलोपः । मित्रावरुणा देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

मानोअग्नेसख्यापित्र्याणिप्रमर्षिष्ठाअभिविदुष्कविःसन् ।
नभोनरूपंजरिमामिनातिपुरातस्याअभिशस्तेरधीहि ॥ १० ॥ १६ ॥

मा । नः । अग्ने । सख्या । पित्र्याणि । प्र । मर्षिष्ठाः । अभि ।
विदुः । कविः । सन् । नभः । न । रूपम् । जरिमा । मिनाति ।
पुरा । तस्याः । अभिऽशस्तेः । अधि । इहि ॥ १० ॥ १६ ॥

हेअग्ने पित्र्याणिपितरंवसिष्ठमुपक्रम्यागतानि सख्यासखित्वानिमाप्रमर्षिष्ठाः माविनाशय अत्रमृष्यतेरुपसर्गवशात्अर्थान्तरेवृत्तिः यतस्त्वंकविः क्रान्तदर्शीसन् अभिआभिमुख्येनविदुः सर्वविद्वान्नभोनरूपं यथान्तरिक्षंरूपवन्तःसूर्यरश्मयःआच्छादयन्तितद्वद्वाच्छादयति जरिमा जरामिनातिमांसक्तद्रष्टारंहिनस्ति अभिशस्तेर्हिंसाहेतोस्तस्याजरायाः पुराअधीहिमांबुध्यस्व सायथानप्राप्नोतितथाकुरु अमृतत्वंप्रयच्छेतियावत् ॥ सख्यासख्युर्भावःसख्यं सख्युर्यइतियः। पित्र्याणि पितृभ्यआगतानि पितुर्यच्चेतियत्प्रत्ययः रीङृतइतिरीङादेशः यस्येतिचेतीकारलोपः यतोनावइत्याद्युदात्तत्वम् । मर्षिष्ठाः मृषतितिक्षायां प्रार्थनायांछान्दसोलुङ् नमाङ्योगेइत्यडभावः । विदुः विदज्ञाने बहुलमन्यत्रापीत्युसिप्रत्ययः अतएवबहुलवचनाद्गुणाभावः छन्दसिवाप्राप्ते-

१ तै० ब्रा० ३.९.५.।

डितयोरितिविसर्जनीयस्यपत्वम्।नभः नहेर्दिविभश्चेत्यसुन [illegible] भावेइमनिच्प्रत्ययः। मिनाति मीञ्हिंसायां प्वादीनांह्रस्वइतिह्रस्वत्वम्। अभिशस्तेः शस्यतेर्हिंस्यतेनयेत्यभिशस्तिः करणेक्तिन् तादौचेतिगतेःप्रकृतिस्वरत्वम्। अधीहि [illegible] लोटिअदादित्वाच्छपोलुक् हेरपित्त्वेनङित्त्वाद्गुणाभावः ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेषोडशोवर्गः ॥ १६ ॥

निकाव्येतिदशर्चमष्टमंसूक्तं त्रैष्टुभमाग्नेयंपराशरस्यार्षं अनुक्रान्तञ्च—निकाव्येति [illegible] वाकाश्विनशस्त्रयोरुक्तोविनियोगः।

तत्रप्रथमामृचमाह—

निकाव्यावेधसःशश्वतस्कर्हस्तेदधानोनर्यापुरूणि।
अग्निर्भुवद्रयिपतीरयीणांसत्राचक्राणोअमृतानिविश्वा ॥१॥

नि। काव्या। वेधसः। शश्वतः। कः। हस्ते। दधानः।
नर्या। पुरूणि। अग्निः। भुवत्। रयिऽपतिः। रयीणाम्। सत्रा।
चक्राणः। अमृतानि। विश्वा ॥ १ ॥

[illegible] नित्य[illegible]वसोविधातु[illegible] काव्यानिमन्त्र[illegible] णि अयमग्निर्निकः नियमेनस्वात्माभिमुखंकरोति किंकुर्वन् नर्या [illegible] हितानि [illegible] रूणिबहूनिधनानिहस्तेदधानोहस्तेधारयन् ईदृग्भूतमग्निमवलोक्यसर्वेजनाःस्तुवन्तीतिभावः [illegible] ष्योधनेषुद् तेष्वपिअग्नेर्धनंनक्षीयतइत्याह—अग्निरिति अयमग्निःरयीणांरयिपतिर्भुवत् नांमध्येयानिधनानिउत्कृष्टानितेषांस्वामीभवति किंकुर्वन् [illegible] अमृतानि हि[illegible] ण्यनामैतत् अमृतंवैहिरण्यमितिश्रुतेः। सर्वाणिहिरण्यानिस्तोतृभ्यःसत्रासहैवचक्राणःकुर्वन्युग पत्प्रयच्छन्नित्यर्थः॥ कः करोतेश्छान्दसोलुङ् मन्त्रेघसेतिच्लेर्लुक् हल्ङ्याब्भ्यइतितकारलोपः नर्या नरशब्दाद्धिताथेंगवादिलक्षणोयत्प्रत्ययोद्रष्टव्यः यद्वा तत्रसाधुरितियत्। चक्राणः करोतेर्लटःशानच् बहुलंछन्दसीतिविकरणस्यश्लुः [illegible] एवंतर्हिलिटःकानजस्तु तस्यार्धधातुकत्वेनअभ्यस्ताद्युदात्तत्वाभावेचित्स्वरएवशिष्यते ॥ १ ॥

१ तै० ब्रा० १. २. ७.।

द्वितीयामृचमाह—

अस्मेवत्संपरिषन्तंनविन्दन्निच्छन्तोविश्वेअमृताअमूराः।
श्रमयुवःपदव्योधियंधास्तस्थुःपदेपरमेचार्वग्नेः ॥२॥

अस्मे इति । वत्सम् । परि । सन्तम् । न । विन्दन् । इच्छन्तः । विश्वे । अमृताः । अमूराः । श्रमऽयुवः । पदऽव्यः । धियम्ऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ॥ २ ॥

अस्मेअस्माकं वत्संवत्सवदत्यन्तंप्रियं यद्वा वत्सःपुत्रः पश्चादुत्पन्नत्वात् तद्वदग्निरप्यस्माकं पुत्रः पश्चादुत्पन्नत्वात् तथाचाम्नायते—ममैवसन्वहहव्यान्यग्ने पुत्रः पित्रेलोककृज्जातवेदइति। परिषन्तंपरितः सर्वत्रवर्तमानंदेवेभ्योनिर्गत्यअश्वत्थवेण्वादिषुनिलीनंसन्तमित्यर्थः एवंविधमग्निमिच्छन्तोविश्वे अमृताः सर्वेऽमरणधर्माणोदेवाः अमूराःअमूढाः मरुतश्चनविन्दन् तमग्निंनालभन्त अलभमानाश्च तेश्रमयुवः हव्यवाहनस्याभावेनहविषामभावात् तज्जन्येनश्रमेण क्लेशेनएकीभूताः तस्याग्नेरन्वेषणायपदव्यः पादैर्गच्छन्तः धियन्धाः धियांअग्नेःशयनासनस्थानादिलक्षणानांकर्मणांधारयितारः एवंविधाःसन्तः चारुचारूणिशोभने अग्नेःपरमेउत्तमेअन्तेपदेयत्राग्निर्निलीनोवर्ततेतत्रेत्यर्थः तस्मिंन्पदेतस्थुः स्थितवन्तः बहुविधेनप्रयासेनअग्निंददृशुरित्यर्थः ॥ परिषन्तं उपसर्गप्रादुर्भ्यांमस्तिर्यच्परइतिषत्वम् । श्रमयुवः युमिश्रणे श्रमेणयूयंतइतिश्रमयुवः क्विब्वचिप्रच्छीत्यादिना विधीयमानौक्विब्दीर्घौ अस्मादपिधातोर्भवतः तन्वादित्वादुवङ् । पदव्यः वीगत्यादिषु पादेन वियन्तिगच्छन्तीतिपदव्यः क्विप्चेतिक्विप् । धियन्धाःआतोनुपसर्गेकइतिकः तत्पुरुषेकृतिबहुलमितिबहुलवचनात् द्वितीयायाअप्यलुक् । तस्थुः पादादित्वान्निघाताभावः। चारु सुपांसुलुगितिसप्तम्यालुक् ॥ २ ॥

तृतीयामृचमाह—

तिस्रोयदग्नेशरदस्त्वामिच्छुचिंघृतेनशुचंयःसपर्यान् ।
नामानिचिद्दधिरेयज्ञियान्यसूदयन्ततन्वः[1]सुजाताः ॥३॥

---

१ तै० ब्रा० १.२.१.१

बृहतीमहत्यौरोदसीद्यावापृथिव्यौ आवेविदानाः अत्यर्थंज्ञापयन्तः कुत्राग्निर्वर्ततइतिपरस्परंवदन्तोद्यावापृथिव्योर्मध्येवर्तमानाइत्यर्थः यद्वा महत्योर्द्यावापृथिव्योर्मध्येआवेविदानाः अग्निमुपलभ्यमानाः एवंभूतायज्ञियासोयज्ञार्हादेवाः रुद्रियारुद्रोग्निर्देवानामसुरैःसहयुद्धसमये तैर्देवैःस्थापितंधनंअपहृत्यगतवन्तमग्निंदेवाआगत्यअग्निसकाशाद्बलेनतद्धनमगृह्णन् तदानींसोग्निःअरोदीत् तस्माद्रुद्रइत्याख्यायते तथाचतैत्तिरीयकम्—तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवाविजित्यावरुरुत्समानाअन्वायन् तदस्यसहसादित्सन्तसोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमिति[1]। तस्यरुद्रस्याहोणिस्तोत्राणिमजभ्रिरेमजह्निरेचक्रुरित्यर्थः नेमधिता नेमशब्दोर्धवचनः तथाचयास्कः—त्वोनेमइत्यर्धस्येति[2]। सर्वेषांदेवानामर्धभागेनधीयतेधार्यतेइतिनेमधितइन्द्रः सर्वेदेवाएकोर्धः इन्द्रएकएवापरोर्धइतियावत् तथाचतैत्तिरीयकम्—यत्सर्वेषामर्धमिन्द्रःमतितस्मादिन्द्रोदेवतानांभूयिष्ठभाक्तमइति[3]। तेनेन्द्रेणसहितोमर्तोमरुद्गणः परमेउत्तमेअन्त्येपदेस्थानेअश्वत्थादौतस्थिवांसंस्थितवन्तं तमग्निंचिकित्वान् जानन् विदत्अलभत॥ वेविदानाः विदेर्ज्ञानार्थाज्ज्ञापयन्ताल्लटःशानच् बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिशानचआर्धधातुकत्वादतोलोपयलोपौ अभ्यस्तानामादिरित्याद्युदात्तत्वम्। विदत् विद्लृलाभे लुङिलृदित्वात् च्लेरङादेशः।नेमधिता दधातेः कर्मणिनिष्ठा सुधितवसुधितनेमधितेतिधिभावोनिपात्यते तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् सुपांसुलुगितितृतीयायाआकारः।तस्थिवांसं तिष्ठतेर्लिटःक्वसुः वस्वेकाजाद्घसामितीडागमः॥४॥

पर्याभिष्टवेसजानानाइत्येषा अथोत्तरमितिखण्डेसूत्रितम्—संजानानाउपसीदन्नभिज्ञ्वादशभिर्विवस्वतइति।

तामेतांसूक्तेपञ्चमीमृचमाह—

संजानानाउपसीदन्नभिज्ञुपत्नीवन्तोनमस्यंनमस्यन्।
रिरिक्वांसस्तन्वःकृण्वतस्वाःसखासख्युर्निमिषिरक्षमाणाः॥५॥१७

सम्ऽजानानाः। उप। सीदन्। अभिऽज्ञु। पत्नीऽवन्तः। नमस्यम्। नमस्यन्निति नमस्यन्। रिरिक्वांसः। तन्वः। कृण्वत। स्वाः। सखा। सख्युः। निऽमिषि। रक्षमाणाः॥ ५॥ १७॥

---

१ तै० सं० १.५.१. २ नि० ३.२०। ३ तै० सं ५.४.८.१

हेअग्ने त्वांसज्ञानानाःसम्यक्जानन्तोदेवाःउपसीदन्उपसीदन्तिमाप्नुवन्ति ... पत्नीवन्तः सपत्नीकाःसन्तः नमस्यंनमस्काराहंअभिज्ञुआभिमुख्येनावस्थितजानु... स्यन्अपूजयन् पूजयित्वाचसख्युर्मित्रस्यतवनिमिषिदर्शनेनिमित्तभूतेसतिरक्षमाणाः त्वयापरिरक्ष्यमाणाः सखासखायोदेवाः स्वास्तन्वः स्वकीयानिशरीराणिरिरिक्वांसःअनशनादिरूपेणदीक्षानियमेनरिक्तीकुर्वन्तः शोषयन्तः कृण्वतयागानकुर्वन् देवावैयज्ञमतन्वतेतिश्रुतेः ॥ ... नमोवरिवश्चित्रङइतिपूजार्थेक्यच् लङिबहुलंछन्दस्यमाङ्योगेपीत्यडभावः। रिरिक्वांसः रि... विरेचने लिटःक्वसुः। निमिषि मिषस्पर्धायां अत्रोपसर्गवशाद्दर्शनार्थः ... क्विप्। रक्षमाणास्त्वयापरिरक्ष्यमाणाः कर्मणिलटःशानच् यकिप्राप्तेव्यत्ययेनशप् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेसप्तदशोवर्गः ॥ १७ ॥

षष्ठीमृचमाह—

त्रिःसप्तयद्गुह्यानित्वेइत्पदाविदन्निहितायज्ञियासः ।
तेभीरक्षन्तेअमृतंसजोषाःपशूंश्चस्थातॄंश्चरथंचपाहि ॥६॥

त्रिः । सप्त । यत् । गुह्यानि । त्वे इति । इत् । पदा । अविदन्
निऽहिता । यज्ञियासः । तेभिः । रक्षन्ते । अमृतम् । सऽजोषाः ।
पशून् । च । स्थातॄन् । चरथम् । च । पाहि ॥ ६ ॥

त्रिःसप्तएकविंशतिसंख्याकानिगुह्यानिरहस्यानिवेदैकसमधिगम्यानियज्ञरूपाणि पद्यन्तेगम्यतेस्वर्गएभिरितिल्युत्पत्त्यापदशब्देनात्रयज्ञाउच्यन्ते तेचएकविंशतिसंख्याकाः औपासनहोमवैश्वदेवादयःसप्तपाकयज्ञाः अग्न्याधेयदर्शपूर्णमासादयःसप्तहविर्यज्ञाः अग्निष्टोमात्यग्निष्टोमादयःसप्तसोमयज्ञाःएवमेकविंशतिसङ्ख्याकानियज्ञलक्षणानिपदानि हेअग्ने त्वेइत्त्वय्येवनिहितास्थापितानि तेषांसर्वेषांत्वत्प्रधानत्वात् नह्यग्निमन्तरेणयागाअनुष्ठातुंशक्यन्ते यज्ञियासोयज्ञार्हाः अर्थित्वसामर्थ्यवैदुष्यादिभिरधिकारहेतुभिर्युक्ताः तथाचोक्तम्—अर्थीसमर्थोविद्वान्शास्त्रेणाप-

२ एषांपरिसंख्यापूर्वं ( १८३ ) पृष्ठे तेनोक्तानिपत्तनेनि

१ ऐ० ब्रा० ६. ४. १
१. २. २. मद्यभाष्यटिप्पण्यां दर्शिता.

येदस्तः कर्मण्यधिकारीति । एवंविधलक्षणोपेता यजमानाः तानि पदान्यविदन् अलभंत लब्ध्वा च तेभिर्यज्ञलक्षणैः पदैरमृतममरणधर्माणं त्वां रक्षन्ते पालयन्ति यजन्तीत्यर्थः सजोषाः तैर्यजमानैः समानमीतिस्त्वं पशून् गवाश्वादिपशून् च स्थातॄन् व्रीह्यादिस्थावराणि चरथं पशुव्यतिरिक्तं अन्यद्यत् प्राणिजातमस्ति तच्च पाहि रक्ष तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा अतस्त्वमेव मुख्यस इत्यर्थः ॥ यत् सुपां सुलुगिति विभक्तेर्लुक् । गुहानि गुहायां भवानि भवे छन्दसीति यत् यतोऽनाव इत्याद्युदात्तत्वम् । त्वे सुपां सुलुगिति सप्तम्याः शे आदेशः । अविदन् विदॢ लाभे लुङि इरितो वा इति अङ् । पशून् स्थातॄन् उभयत्र उभयथर्क्ष्वित्युभयथाभावान्नकारस्य रुत्वाभावः ॥६॥

सप्तमीमृचमाह—

विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः ।
अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ॥७॥

विद्वान् । अग्ने । वयुनानि । क्षितीनाम् । वि । आनुषक् । शुरुधः ।
जीवसे । धाः । अन्तःऽविद्वान् । अर्ध्वनः देवऽयानान् । अतन्द्रः ।
दूतः । अभवः । हविःऽवाट् ॥ ७ ॥

हे अग्ने वयुनानि ज्ञाननामैतत् इह तु ज्ञातव्ये वर्तते सर्वाणि ज्ञातव्यानि विद्वान् जानंस्त्वं क्षितीनां यजमानलक्षणानां प्रजानां जीवसे जीवितुं शुरुधः क्षुद्रूपस्य शोधकस्य रोधयित्रीरिषोऽन्नानि आनुषक् अनुषक्तं सततं यथा भवति तथा विधाः विधेहि कुर्वित्यर्थः एवं यजमानानन्नसमृद्धान् कृत्वा अनन्तरं हविर्वाट् तद्देवेभ्यः प्रत्तं हविर्वहन् दूतोऽभवः देवानां दूतः भवसि कीदृशस्त्वं अन्तर्विद्वान् द्यावापृथिव्योर्मध्ये जानन् किं जानन् अध्वनो मार्गान् कीदृशान् देवयानान् देवाः यैर्मार्गैर्यन्ति गच्छन्ति तान् जानन्नित्यर्थः अतन्द्रः पुनःपुनर्हविर्वहनेऽपि अनलसः ॥ वयुनानि अज गतिक्षेपणयोः अजियमिशीङ्भ्यश्चेति कर्मण्युनप्रत्ययः अजेर्व्यघञपोरिति वीभावः । क्षितीनां क्षियन्ति निवसन्तीति क्षितयो मनुष्याः क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तिच् अन्तोदात्तात् ह्रस्वान्तात् क्षितिशब्दात् उत्तरस्य नामो नामन्यतरस्यामिति उदात्तत्वम् । शुरुधः शुचं रुन्धन्तीति शुरुधः क्विप् चेति क्विप् पूर्वपदस्यान्त्यलोपः पृषोदरादित्वात् ॥ ७ ॥

अष्टमीमृचमाह—

स्वाध्योदिवआसप्तयह्वीरायोदुरोव्यृतज्ञाअजानन् ।
विदद्गव्यंसरमादृह्ळमूर्वंयेनानुकंमानुंषीभोजंतेविट् ॥८॥

सुऽआध्यः । दिवः । आ । सप्त । यह्वीः ।रायः । दुरः । वि । ऋतऽज्ञाः ।
अजानन् । विदत् । गव्यम् । सरमा । दृह्ळम् । ऊर्वम् । येन । नु ।
कम् । मानुंषी । भोजंते । विट् ॥ ८ ॥

स्वाध्यःशोभनकर्मयुक्ताःयह्वीःयह्वयोमहत्यःसप्त गङ्गाद्याःसप्तनद्यःदिवःद्युलोकात्आगत्य भूम्यांमवहन्तीतिशेषः हेअग्नेईदृग्विधानद्यःत्वयास्थापिताःअग्नौहोमेसतिहितेनतृप्तःसूर्योवृष्टिंकरोति तस्मिन्नर्थेस्मृतिःपूर्वमुदाहृता अतोवृष्टिद्वाराअग्निरेवनदीःकरोतीत्युच्यते तथाऋतज्ञाःऋतंयज्ञंजानन्तोङ्गिरसः रायोबलनाम्नासुरेणापहृतस्यगोरूपस्यधनस्यदुरोद्वाराणिगमनमार्गान्अजानन्त्यपाशातवन्तः त्वत्साध्येनयागेनप्रीतइन्द्रोगवामन्वेषणायसरमांनामदेवशुनींमेपितवान्साचसरमागवांस्थानमवगत्येन्द्रस्यन्यवेदयत् इन्द्रश्चतानङ्गिरसोगाःप्रापयत् अतएतत्सर्वंत्वमेवकृतवान् अङ्गिरोभ्यःसकाशात्गव्यंगविभवंदृह्ळंस्थूलंबहुलमित्यर्थः एवंविधंपयोलक्षणंऊर्वंअन्नं सरमादेवशुनी विदद्लभत कमित्येतत्पदपूरणम् येननुयेनहिगव्येनमानुषीविट्मनोःसम्बन्धिनीप्रजाभोजते इदानींभुंक्ते तद्गव्यमपिपरम्परयाअग्निरेवकरोति ॥ स्वाध्यः सुआङ्पूर्वाद्धीशब्दात्जसिएरनेकाचइतियणादेशः। यह्वीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । गव्यं सर्वत्रगोरजादिप्रत्ययप्रसङ्गेयदुक्तव्यइतिभवार्थेयत्। ऊर्वं उर्वीहिंसार्थः ऊर्वतिक्षुधंहिनस्तीत्यूर्वमन्नं पचाद्यच् । भोजते भुजपालनाभ्यवहारयोः श्नमिप्राप्तेव्यत्ययेनशप् ॥ ८ ॥

नवमीमृचमाह—

आयेविश्वांस्वपत्यानितस्थुःकृण्वानासोअमृतत्वायगातुम् ।
मह्नामहद्भिःपृथिवीवितस्थेमातापुत्रैरदितिर्धायसेवेः ॥९॥

आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः । कृण्वानासः ।
अमृतऽत्वाय । गातुम् । मह्ना । महत्ऽभिः । पृथिवी । वि । तस्थे ।
माता । पुत्रैः । अदितिः । धायसे । वे रितिवेः ॥९ ॥

येआदित्याःअमृतत्वायअमरणत्वसिद्धये गातुंमार्गमुपायंकृण्वानासःकुर्वाणाःसन्तःविश्वा विश्वानिसर्वाणिस्वपत्यानिशोभनान्यपवनहेतुभूतानिचतुर्दशरात्रपट्त्रिंशद्रात्रादित्यानामयनादीनिकर्माण्यातस्थुः आस्थितवन्तःकृतवन्तइत्यर्थः तथाचतैत्तिरीयकम्—आदित्याअकामयन्त-सुवर्गंलोकमियामेतीति तएतंषट्त्रिंशद्रात्रमपश्यन् तमाहरन्तवेनायजन्तेतिच। महद्भिःअनुष्ठानेन महानुभावैःतैःपुत्रैःसहितामाताजनयित्रीअदितिरदीनापृथिवीधायसेसर्वस्यजगतोधारणायमह्ना-स्वकीयेनमहत्त्वेनवितस्थेविशेषेणतिष्ठति हेअग्ने यतस्त्वंवैःआदित्यैरनुष्ठितेपुयागेपुचरुपुरोडाशादीनिहवींषिअभक्षयः अतएवतत्सर्वंजातमित्यर्थः॥ कृण्वानासः कृविर्हिंसाकरणयोश्च व्यत्ययेनात्मनेपदम् धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनअकारान्तादेशश्च तस्यातोलोपेसतिस्थानिवद्भावादगुणाभावः शानचश्चित्त्वादन्तोदात्तत्वम् आज्जसेरसुक्। मह्ना महिम्नेत्यस्यवर्णलोपश्छान्दसः। धायसे दधातेर्बाहुलकाद्धायसे दीर्घश्च। वहिहाधाञ्भ्यश्छन्दसीतिदधातेर्भावेऽसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुक्। वेः वीगतिव्याप्तिप्रजनकान्त्यसनखादनेपु इगुपधज्ञाप्रीकिरःकः। अदादित्वाच्छपोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। धायसे इत्यस्यवाक्यान्तरगतत्वादस्यनिघाताभावः॥ ९॥

दशमीमृचमाह—

अधि॒श्रियं॒निद॑धु॒श्चारु॑मस्मिन्दि॒वोयद॒क्षीअ॒मृता॒अकृ॑ण्वन्।
अध॑क्षरन्ति॒सिन्ध॑वो॒नसृ॒ष्टाःप्रनीची॑रग्ने॒अरु॑षीरजानन्॥१०॥१८॥

अधि। श्रिय॑म्। नि। द॒धुः। चारु॑म्। अ॒स्मिन्। दि॒वः। यत्। अ॒क्षी इति॑। अ॒मृताः॑। अकृ॑ण्वन्। अध॑। क्षर॑न्ति। सिन्ध॑वः। न। सृ॒ष्टाः। प्र। नीचीः॑। अ॒ग्ने॒। अरु॑षीः। अ॒जा॒न॒न्॥१०॥१८॥

अस्मिन्नग्नौचारुंशोभनांश्रियंपरिस्तरणपरिपेचनादिरूपांयज्ञसम्पदंअधिनिदधुः यजमानाःस्थापितवन्तः निधायचयद्यदाअक्षीयज्ञस्यआज्यभागलक्षणेचक्षुषीअकृण्वन्कुर्वन्ति चक्षुषीवाएतेयज्ञस्ययदाज्यभागाविनिश्रुतेः तदानींदिवःद्युलोकात्अमृताःअमरणधर्माणोदेवाःयागसमयोगादहत्यवगम्यआगच्छन्तीतिशेषः अथअथआज्यभागानन्तरंसृष्टाःअभिसृष्टाःसिन्धवोन यथासिन्धवःग-च्छन्त्योनद्यश्च नीचीःनितरांसर्वासुदिक्षुगच्छन्तीःअरुषीःरोचमानाः यदानिर्मलाःहेअग्ने एवंभू-

---

१ तै० सं० ७. ४. ६. १। २ तै० सं० ७. ४. ६. १।

तास्त्वदीयाज्वालाःउत्पन्नाःक्षरन्ति सञ्चलन्ति सर्वासुदिक्षुगच्छन्तीत्यर्थः आगतादेवाश्वमाजानन्- अस्माकंहोमायईदृश्योज्वालाउत्पन्नाइतिहृष्टाःसन्तःप्रकर्षेणजानन्ति ॥ अक्षी परत्वान्नुमंबा- धित्वाईचद्विवचनेइतिअक्षिशब्दस्यईकारान्तादेशः सचोदात्तः ईत्वेकृतेसकृद्गतपरिभाषयापुनर्नु- म् नभवति सवर्णदीर्घः । नीचीः निपूर्वादञ्चतेः ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अञ्चतेश्चोपसङ्ख्यानमितिङीप् अचइत्यकारलोपेचावितिदीर्घत्वम् न्यधीचेतिगतेःप्रकृतिस्वर- त्वम् । अरुपीः अरुपमितिरूपनाम ऋहनिभ्यामुपजितिअर्वेरुपच् छन्दसीवनिपावितिमत्वर्थी- यईकारः ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेष्टादशोवर्गः ॥ १८ ॥

रयिर्नेतिदशर्चंनवमंसूक्तंपराशरस्यार्षंत्रैष्टुभंआग्नेयं अनुक्रान्तंच—रयिर्नेति प्रातरनुवाका- श्विनशस्त्रयोरुक्तोविनियोगः ।

तत्रप्रथमामृचमाह—

र॒यिर्न यः पि॑तृवि॒त्तो व॑यो॒धाः सु॒प्रणी॑तिश्चिकि॒तुषो॒ न शासुः॑ ।
स्यो॒न॒शीरति॑थि॒र्न प्री॑णा॒नो होते॑व॒ सद्म॑ विध॒तो वि ता॑रीत् ॥१॥

र॒यिः । न । यः । पि॒तृ॒ऽवि॒त्तः । व॒यः॒ऽधाः । सु॒ऽप्रनी॑तिः ।
चि॒कि॒तुषः॑ । न । शासुः॑ । स्यो॒न॒ऽशीः । अति॑थिः । न । प्री॒णा॒नः ।
होता॑ऽइव । सद्म॑ । वि॒ध॒तः । वि । ता॒री॒त् ॥ १ ॥

पितृवित्तःपितुःसकाशाल्लब्धोरयिर्धनमिवयोग्निर्वयोधाःअन्नस्यदातायथापैतृकंधनंविस्रम्भेण व्यवह्रियमाणंसत्अन्नप्रदंभवति तद्वदग्निरपिसर्वेषुयज्ञेषुविस्रम्भेणव्यवहृतःसन् अन्नप्रदोभवतीत्य- र्थः चिकितुषोविदुषोधर्मशास्त्राभिज्ञस्यशासुःन शासनमिवसुप्रणीतिः सुखेनप्रणेतव्यः यथाविद्- च्छासनंसर्वेष्वनुष्ठेयेषुतत्तत्संशयनिर्णयायनीयतेतद्वदग्निरपिसर्वेषुयज्ञेषुप्रणीयते यश्चस्योनशीःसुख- प्रदेगार्हपत्यायतनादौशयानोऽतिथिर्न सुखासनउपवेशितोचंपाद्यादिभिः सत्कृतोतिथिरिव प्रीणा- नोहविर्भिस्तर्पणीयःसोग्निर्विधतःपरिचरतोयजमानस्यसद्मगृहंवितारीत् प्रवर्धयतिद्दृशातिवा तत्र दृष्टान्तः—होतेव होताहोमकर्ताध्वर्युस्तत्तत्कर्मकरणेनफलैर्यजमानस्यगृहंयथाप्रवर्धयतितद्वत्॥पितृ- वित्तः विद्लृलाभे कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः विभाषागमहनविदविशामितिक्वसावस्य-

धातोरिटोविकल्पितत्वात् तत्रापिविशिसाहचर्यात् तौदादिकएवविदिर्गृह्यतइत्युक्तम् वित्तोभोगप्रत्यययोरितिनिष्ठानत्वाभावोनिपातितः। वयोधाः डुधाञ्धारणपोषणयोः आतोमनिन्निति विच्। सुप्रणीतिः प्रणीयतइतिप्रणीतिः कर्मणिक्तिन् तादौचेतिगतेःप्रकृतिस्वरत्वम् पुनःसुशब्देनसमासे कृद्ग्रहणेगतिकारकपूर्वस्यापिग्रहणात् कृदुत्तरपदप्रकृतिस्वरत्वम्। चिकितुषः लिटःक्वसुः षष्ठ्येकवचनेवसोःसम्प्रसारणमितिसम्प्रसारणम् शासिवसिघसीनांचेतिषत्वम्। शासुः शासुअनुशिष्टौ शृस्वृस्निहीत्यादिनाविधीयमानउप्रत्ययोबहुलवचनादस्मादपिद्रष्टव्यः तत्रनिदित्यनुवृत्तेराद्युदात्तत्वम्। स्योनशीः स्योनमितिसुखनाम स्योनेसुखकरेगार्हपत्यादिस्थानेशेतेइतिस्योनशीः क्विप्चेतिक्विप्। प्रीणानः प्रीञ्तर्पणे कर्मणिशानच्व्यत्ययेनश्ना। विधतः विधविधाने विधतिः परिचरणकर्मेतिनैरुक्ताः। तुदादित्वाच्छप्रत्ययः शतुरनुमइतिविभक्तेरुदात्तत्वम्॥ १॥

द्वितीयामृचमाह—

दे॒वो न॒ यः स॑वि॒ता स॒त्यम॑न्मा॒ क्रत्वा॑ नि॒पाति॑ वृ॒जना॑नि॒ विश्वा॑।
पु॒रु॒प्र॒श॒स्तो अ॒मति॒र्न स॒त्य आ॒त्मेव॒ शेवो॑ दिधि॒षाय्यो॑ भूत्॥२॥

दे॒वः। न। यः। स॒वि॒ता। स॒त्यऽम॑न्मा। क्रत्वा॑। नि॒ऽपाति॑।
वृ॒जना॑नि। विश्वा॑। पु॒रु॒ऽप्र॒श॒स्तः। अ॒मतिः॑। न। स॒त्यः।
आ॒त्माऽइ॑व। शेवः॑। दि॒धि॒षाय्यः॑। भू॒त्॥ २॥

देवोनसविता द्योतमानः सर्वस्यप्रेरकः सूर्यइवयोग्निः सत्यमन्मासत्यज्ञानःयथार्थदर्शीसोग्निः क्रत्वाआत्मीयेनकर्मणाविश्वावृजनानिविभक्तिव्यत्ययः सर्वेभ्यःसंग्रामेभ्यः निपातिनितरांपालयति वर्ज्यन्तेहिंस्यन्तेस्मिन्निति वृजनंसङ्ग्रामः अपिचपुरुप्रशस्तः पुरुभिर्यजमानैः स्तुतोग्निः अमतिर्न रूपनामैतत् रूपमिव सत्योबाधरहितः रूप्यतइतिरूपंस्वरूपं यथापृथिव्यादेः स्वरूपंआगमापायिषुविशेषेषुसत्स्वपिस्वयमेकरूप्येणनित्यंभवति तद्वदग्निरपिउच्चावचेषुसर्वेषुकर्मसुस्वपंएकएवव्याप्यवर्तते सोग्निः शेवः सुखकरः तत्रदृष्टान्तः—आत्मेव परमप्रेमास्पदतयानिरतिशयानन्दस्वरूपआत्मायथा सर्वान्सुखयतिएतस्यैवानन्दस्यान्यानिभूतानिमात्रामुपजीवन्ति। एषह्येवानन्दयातीतिश्रवणात्। तद्वदग्निरपिस्वर्गादिफलहेतुतयासुखयति एवंभूतोग्निर्दिधिषाय्योभूत् सर्वैर्यजमानैर्धारणीयोभवति परित्यागेह्यग्नीरहत्याख्यदोषोभवति तथाचतैत्तिरीयकम्—वीर-

1 नि० ३. १२। 2 तै० आ० अष्टमप्रपाठके.

ह्यावाएषदेवानांयोऽग्निमुद्वासयतइति[1]॥ सत्यमन्मा मननंमन्म मनज्ञाने अन्येभ्योपिदृश्यन्तइतिमनि-न् सत्यमवितथंमन्मयस्य बहुव्रीहिस्वरः । वृजनानि वृजीवर्जने कृपृवृजीत्यादिनाक्युप्रत्ययः। उरुप्रशस्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वेप्राप्तेप्रवृद्धादीनांचेत्युत्तरपदान्तोदात्तत्वम् सद्याकृतिगणइत्युक्तम्। अमतिः अमगत्यादिषु अमेरतिः। दिधिषाय्यः दधातेर्दिधिषाय्यइतिपाय्य-प्रत्ययान्तोनिपात्यते ॥ २ ॥

तृतीयामृचमाह—

देवोनयःपृथिवींविश्वधायाउपक्षेतिहितमित्रोनराजा ।
पुरःसदःशर्मसदोनवीराअनवद्यापतिजुष्टेवनारी ॥३॥

देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति ।
हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः ।
अनवद्या । पतिजुष्टाऽइव । नारी ॥ ३ ॥

देवोनद्योतमानःसूर्यइव योऽग्निःविश्वधायाःसर्वस्यजगतोधर्ता यथासूर्योवृष्टयादिप्रदानेन सर्वंजगद्धत्ते एवमग्निरपियज्ञादिसाधनेन कृत्स्नस्यजगतोधारयिता सोऽग्निः पृथिवींपृथिव्यां उप-क्षेतिसर्वेषांप्रियःसन्यज्ञगृहादौनिवसति तत्रदृष्टान्तः—हितमित्रोनराजा हितान्यनुकूलानिमित्राणि यस्यतादृशोराजायथासुखेननिवसतितद्वत् यथासर्वजनमित्रोराजा एवमग्निरपिसर्वजनमित्रइ-त्यर्थः नह्यग्निंकश्चनद्विष्टे यस्याग्नेःपुरःसदः पुरस्तात्सीदन्तःउपविशन्तःपुरुषाःशर्मसदोनवीराः पितृगृहेवर्तमानाःपुत्राइववर्तन्ते पितापुत्रानिवाग्निःस्वस्यपरिचारकान् रक्षतीतिभावः सोयमग्निः अतिशयेनशुद्धःकर्मयोग्योभवति तत्रदृष्टान्तः—अनवद्याअनिन्दितापतिजुष्टेवनारीस्वपतिनासे-वितास्वीकृतायोषिदिव सायथापातिव्रत्येनशुद्धासतीसर्वकर्मयोग्याभवतिएवमग्निरपि ॥ विश्व-धायाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात् कारकपूर्वादपिदधातेःबहिह्याधांञ्भ्य-श्छन्दसीत्यसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरितियुक् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्। उपक्षेति क्षिनिवासगत्योः बहुलंछन्दसीतिविकरणस्यलुक् । अनवद्या बहुव्रीहौनञ्सुभ्यामित्यु-त्तरपदान्तोदात्तत्वम् । पतिजुष्टेव तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । नारी नृनरयोर्वृद्धिश्चे-तिशार्ङ्गरवादिषुपाठात् ङीनन्तआद्युदात्तः ॥३॥

---

१ तै०सं० १.५.२।

चतुर्थीमृचमाह—

तन्त्वानरोदमआनित्यमिद्धमग्नेसचन्तक्षितिपुंध्रुवासुं ।
अधिद्युम्नंनिदधुर्भूर्यस्मिन्भवाविश्वायुर्धरुणोरयीणाम् ॥४॥

तम् । त्वा । नरः । दमे । आ । नित्यम् । इद्धम् । अग्ने । सचन्त । क्षितिषु । ध्रुवासु । अधि । द्युम्नम् । नि । दधुः । भूरि । अस्मिन् । भव । विश्वऽआयुः । धरुणः । रयीणाम् ॥ ४ ॥

हेअग्ने तंत्वापूर्वोक्तगुणविशिष्टं त्वांनरोयज्ञस्यनेतारोयजमानाःध्रुवासुक्षितिषुनिश्चलासुचलनरहितासुभूमिषुनिरुपद्रवेषुग्रामेष्वित्यर्थः दमेस्वकीयेयज्ञगृहेनित्यमिद्धंअनवरतंसमिद्भिःप्रज्वलितंकृत्वाआसचन्तआभिमुख्येनसेवन्ते किञ्च अस्मिन्नग्नौद्युम्नं हविर्लक्षणमन्नंभूरिचरुपुरोडाशादिरूपेण बहुविधंअधिनिदधुःस्थापितवन्तः एवंगुणविशिष्टोयोग्निःसत्वंविश्वायुःउक्तप्रकारेणसर्वान्नोभूत्वारयीणांधनानांधरुणोधारयिताभव अस्मभ्यंदातुंधनानिधारयेत्यर्थः ॥ सचन्त षचसमवाये छान्दसोवर्तमानेलङ् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । भव द्व्यचोतस्तिङइतिसंहितायांदीर्घः । धरुणः धारेर्णिलुक्चेत्युनप्रत्ययः ॥ ४ ॥

पञ्चमीमृचमाह—

विपृक्षोअग्नेमघवानोअश्युर्विसूरयोददतोविश्वमायुः ।
सनेमवाजंसमिथेष्वर्योभागंदेवेषुश्रवसेदधानाः ॥५॥१९॥

वि । पृक्षः । अग्ने । मघऽवानः । अश्युः । वि । सूरयः । ददतः । विश्वम् । आयुः । सनेम । वाजम् । समऽइथेषु । अर्यः । भागम् । देवेषु । श्रवसे । दधानाः ॥ ५ ॥ १९ ॥

हेअग्ने मघवानोहविर्लक्षणेनधनेनयुक्तायजमानाः पृक्षोन्नानिव्यश्युः व्याप्नुवन्तु त्वयानुगृहीताः सर्वाण्यन्नानिलभंतां येचसूरयोविद्वांसःस्तोतारस्त्वांस्तुवन्तिददतःयेचतुभ्यंहवींषिददतःप्रयच्छन्तोवर्तन्ते तेसर्वेविश्वमायुः सर्वंजीवितंव्यश्युः व्याप्नुवन्तु वयंचसमिथेषुसङ्ग्रामेषुअर्यःअरेःशत्रोःसम्बन्धिनंवाजमन्नंसनेमत्वदनुग्रहात् संभजेमहि तदनन्तरंदेवेषुत्वत्प्रमुखेषुइन्द्रादिषुश्रवसेयश-

सेतदर्थंभागंहविर्भागंदधानाः स्थापयन्तोभूयास्मेतिशेषः ॥ अश्युः अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिविकरणस्यलुक् । ददतः नाभ्यस्ताच्छतुरितिनुमागमप्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम्। सनेम वनषणसम्भक्तौ व्यत्ययेनशः । अर्यः अरिशब्दात्षष्ठ्येकवचनेजसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः अरिशब्दःअचइरितिइप्रत्ययान्तोन्तोदात्तः उदात्तयणइतिविभक्तेरुदात्तत्वम्। भागं कर्पात्वतइत्यन्तोदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेएकोनविंशोवर्गः॥१९॥

षष्ठीमृचमाह—

ऋतस्यहिधेनवोवावशानाःस्मदूध्नीःपीपयन्तद्युभक्ताः ।
परावतःसुमतिंभिक्षमाणाविसिन्धवःसमयासस्रुरद्रिम् ॥६॥

ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः । पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ॥ ६ ॥

ऋतस्यहिऋतंदेवयजनदेशं प्राप्तमग्निमेवधेनवः अग्निहोत्रादिहविषांदोग्ध्र्योगावःपीपयन्तक्षीरादिलक्षणंगव्यंअपाययन् कीदृश्योगावःवावशानाःअग्निंपुनःपुनःकामयमानाःस्मदूध्नीः स्मच्छब्दोनित्यशब्दसमानार्थः नित्यंऊधसायुक्ताः सर्वदापयसःप्रदात्र्यइत्यर्थः द्युभक्ताः दिवाप्रकाशेन सम्भक्ताःसंश्लिष्टास्तेजस्विन्यइत्यर्थः अपिचसिन्धवः स्यन्दनशीलाःनद्यःसुमतिंअस्याग्नेःशोभनामनुग्रहात्मिकांबुद्धिंभिक्षमाणाः याचमानाः सत्यः अद्रिंसमयाअद्रेःपर्वतस्यसमीपेपरावतोदूरदेशाद्विसस्रुः विशेषेणगच्छन्तिप्रवहन्ति अग्नयेदातव्यानांहविषांनिष्पत्तयेप्रवहन्तीत्यर्थः ॥ ऋतस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । वावशानाः वशकान्तौ यङन्ताच्छानच् नवशइतिसम्प्रसारणप्रतिषेधः बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिशानच आर्धधातुकत्वादअतोलोपयलोपौ अतएवत्सार्वधातुकानुदात्तत्वाभावेचित्स्वरएवशिष्यते। स्मदूध्नीः स्मन्नित्यानिऊधांसियासांताः ऊधसोनङित्यनङादेशःसमासान्तः संख्याव्ययादेर्ङीविनिङीप् भसंज्ञायामल्लोपोनइत्यल्लोपः ङीपःपित्वादनुदात्तत्वेबहुव्रीहिस्वरएवशिष्यते । पीपयन्त पापाने अस्माद्धेतुमतिणिच् शाच्छासाह्वेतियुक् ण्यन्तात्लुङिचङिचङ्अडागमादेशादि चङ्यन्यतर-

स्यामितिचङःपूर्वस्योदात्तत्वम् हिचेतिनिघातप्रतिषेधः । परावतः परागताद्दूरंहिपरागतंभवति अस्मिन्धात्वर्थेगम्यमानेउपसर्गाच्छन्दसिधात्वर्थेइतिवतिः ॥ ६ ॥

सप्तमीमृचमाह—

त्वेअ॑ग्नेसुम॒तिंभिक्ष॑माणादि॒विश्रवो॑दधिरेय॒ज्ञियां॑सः ।
नक्तां॑चच॒क्रुरु॒षसा॒विरू॑पेकृ॒ष्णंच॒वर्ण॑मरु॒णंच॒सं॑धुः ॥७॥

त्वे इति॑ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । भिक्ष॑माणाः । दि॒वि । श्रवः॑ । द॒धि॒रे॒ । य॒ज्ञियां॑सः । नक्ता॑ । च॒ । च॒क्रुः । उ॒षसा॑ । विरू॑पे॒इति॒विऽरू॑पे । कृ॒ष्णम् । च॒ । वर्ण॑म् । अ॒रु॒णम् । च॒ । सम् । धु॒रिति॑धुः ॥ ७ ॥

हेअग्नेसुमतिंशोभनामनुग्रहात्मिकांबुद्धिंभिक्षमाणाःयाचमानाःयज्ञियासोयज्ञार्हाः सर्वे देवाः दिविद्योतमानेत्वेत्वयिश्रवोहविर्लक्षणमन्नंदधिरेअस्थापयन् अग्निर्देवानामन्नादइति श्रुतेः। तदनन्तरंतादृशे हविर्युक्तायअनुष्ठानायविरूपेउषसाउषःकालोपलक्षितमहः नक्ताचनक्तं चरात्रिंचचक्रुः अकुर्वन् एतदेवस्पष्टयति—कृष्णंचवर्णंरात्र्यांश्यामलवर्णमन्धकारं अह्निअरुणमारोचनंश्वेतवर्णंतेजश्चसन्धुः सम्यक्स्थापितवन्तः ॥ त्वे सुपांसुलुगितिसप्तम्याःशेआदेशः । नक्ता तेनैवद्वितीयायाडादेशः । उषसा तेनैवविभक्तेराकारः । धुः डुधाञ्धारणपोषणयोः लुङि गातिस्थेतिसिचोलुक् आतइतिझेरुसादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥ ७ ॥

अष्टमीमृचमाह—

यान्रा॒येमर्ता॒न्त्सुषू॑दोअग्ने॒तेस्या॑ममघवा॑नोव॒यंच॑ ।
छा॒येव॒विश्वं॒भुव॑नंसिसक्ष्यापप्रि॒वान्रोद॑सीअ॒न्तरि॑क्षम् ॥८॥

यान् । रा॒ये । मर्ता॑न् । सु॒ऽसू॑दः । अ॒ग्ने॒ । ते॒ । स्या॒म॒ । म॒घऽवा॑नः । व॒यम् । च॒ । छा॒याऽइ॑व । विश्व॑म् । भुव॑नम् । सि॒स॒क्षि॒ । आ॒प॒प्रि॒ऽवान् । रोद॑सी॒ इति॑ । अ॒न्तरि॑क्षम् ॥८॥

हेअग्ने यान्मर्तान्मनुष्यानस्मानरायेधनायसुषूदः अग्निहोत्रादिषुकर्मसुप्रेरयसि तेतादृशाव-यंचमघवानोधनिनः स्यामभवेम रोदसीद्यावापृथिव्यौ अन्तरिक्षंचआपप्रिवान्स्वतेजसाव्याप्तवान्द-

केनवाआपूरितवांस्त्वंचविश्वंभुवनंसर्वंजगद्वसिसक्षिसेवसे अनुगृह्यसर्वंरक्षसीत्यर्थः तत्रदृष्टान्तः-छायेव यथाछत्रादेश्छायाआतपादिजनितंक्लेशंनिवार्यरक्षतिवद्वत् ॥ राये ऊडिदमिति विभक्तेरुदात्तत्वम्। सुपूदः पूदप्रेरणे लेटयडागमः बहुलंछन्दसीतिशपःश्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । सिसक्षि षचसमवाये बहुलंछन्दसीतिशपःश्लुः इदित्यनुवृत्तौ बहुलंछन्दसीत्यभ्यासस्येत्वम् । आपप्रिवान् प्रापूरणे लिटःक्वसुः वस्वेकाजाद्घसामितीडागमः आतोलोपइटिचेत्याकारलोपः द्विर्वचनेचीतिस्थानिवद्भावाद्द्विर्भावादि ॥ ८ ॥

नवमीमृचमाह—

**अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः ।**
**ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥९॥**

अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नॄन् । वीरैः । वीरान् ।
वनुयाम । त्वाऽऊताः । ईशानासः । पितृऽवित्तस्य । रायः ।
वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥ ९ ॥

हेअग्ने त्वोताः त्वयारक्षिताःसन्तोवयमर्वद्भिःअस्मदीयैरश्वैःअर्वतःशत्रुसम्बन्धिनोश्वानभिर स्मदीयैर्भटैर्नॄन्शत्रोर्भटान् वीर्यावजायन्तइतिवीराःपुत्राःतैर्वीरान्शत्रुपुत्रांश्चवनुयामहन्याम वनुष्यतिर्हन्तिकर्मा नवगतसंस्कारोभवतीतियास्कः । पितृवित्तस्यपित्रादिपरंपरयालब्धस्यरायोधनस्य ईशानासःस्वामिनःसूरयोविद्वांसःनोस्माकंपुत्राःशतंहिमाःशतंसंवत्सरान्जीवन्तःसन्तःव्यश्युःविशेषेणभुञ्जन्तां अस्मदीयानांपुत्राणांआरोग्यंदीर्घमायुश्चभवत्वित्यर्थः॥त्वोताः त्वयाऊताः मत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः व्यत्ययेनात्वम् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । शतहिमाः अत्रहिमशब्देनतद्वान्हेमन्तोलक्ष्यते ब्राह्मणंचभवति-शतंहिमाइत्याह शतंत्वाहेमन्तानिंधिषीयेतिवावैतदाहेति । शतंहिमाःशतंहेमन्तर्तवोयेषांविशवसंवत्सरजीविनइत्यर्थः । अश्युः अशभोजने बहुलंछन्दसीतिविकरणस्यलुक्॥ ९ ॥

---

१ नि० ५.२ । २ तै० सं० १.५.७.

दशमीमृचमाह—

एतातेअग्नउचथांनिवेधोजुष्टांनिसन्तुमनंसेहृदेचं ।
शकेमंरायःसुधुरोयमंतेधिश्रवोदेवभंक्तंदधांनाः ॥१०॥२०॥

एता । ते । अग्ने । उचथांनि । वेधः । जुष्टांनि । सन्तु । मनसे ।
हृदे । च । शकेमं । रायः । सुऽधुरः । यमंम् । ते । अधिं ।
श्रवंः । देवऽभंक्तम् । दधांनाः ॥ १० ॥ २० ॥

हेवेधः मेधाविनामैतत् मेधाविन्नग्ने एताउचथानिएतानि इदानीं अस्माभिःप्रयुक्तानिस्तोत्राणि तेतवमनसेमनोवृत्तयेहृदेचहृत्तिमते न्तःकरणायचजुष्टानिसन्तु प्रियाणिभवन्तु तेतवसम्बन्धिनः सुधुरः सुष्ठुनिर्वाहकस्य यद्वाशोभनंधूर्वंतिदारिद्र्यंहिनस्तीतिसुधूः ताहशस्यरायोधनस्ययमंनियमंकर्तुंशकेमशक्ताभूयास्म किंकुर्वन्तःदेवभक्तंदेवैःसंभजनीयंश्रवोहविर्लक्षणमन्नंअधिदधानाः अग्नेरुपरिधारयन्तः अग्नौहविर्भिर्होमंकुर्वन्तइत्यर्थः ॥ उचथानि वचपरिभाषणे रुदिविदिभ्यां किदितिविधीयमानोथमत्ययःकित्त्वंचबहुलवचनादस्मादपिभवति वच्यादिनासंप्रसारणम् । जुष्टानि जुष्टार्पितेचच्छन्दसि नित्यंमन्त्रेइत्याद्युदात्तत्वम् । हृदे पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः । शकेम शकॢशक्तौ लिङ्याशिष्यङ् । सुधुरः धुर्वीहिंसार्थः क्विप्चेतिक्विप् राल्लोपइतिवकारलोपः नपूजनादितिसमासान्तप्रतिषेधः । देवैर्भक्तंदेवभक्तं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेविंशोवर्गः ॥ २० ॥

॥ इतिप्रथमेमण्डलेद्वादशोनुवाकः ॥ १२ ॥

त्रयोदशानुवाकेएकादशसूक्तानि तत्रोपप्रयन्तइतिनवर्चंप्रथमंसूक्तं तत्रानुक्रम्यते—उपप्रयन्तोनवगोतमोराहूगणोगायत्रंत्विति । अस्यायमर्थः—रहूगणनामाकश्चिदृषिः तस्यपुत्रोगोतमोस्यसूक्तस्यऋषिः गायत्रंत्वित्युक्तत्वादिदमुत्तरंचगायत्रीछन्दस्कं परमाग्नेयमैन्द्रादितिपरिभाषितत्वादग्निर्देवता प्रातरनुवाकस्याग्नेयेक्रतौगायत्रेछन्दस्येतदादिकेद्वेसूक्ते सूत्रितंच—आपोरेवतीः क्षयथाहिवस्वउपप्रयन्तइतिसूक्तेइति । आश्विनशस्त्रेप्येतेसूक्ते प्रातरनुवाकन्यायेनेत्यतिदेशात् पृष्ठ्यषडहस्यप्रथमेहन्यग्निर्देवसूक्तमाग्यथशस्त्रसूत्रितंच—उपप्रयन्तइतिपृथमेहन्याज्यमिति ।

तत्रप्रथमामृचमाह—

उपप्रयन्तोअध्वरंमन्त्रंवोचेमाग्नये। आरेअस्मेचशृण्वते ॥ १ ॥

उपऽप्रयन्तः। अध्वरम्। मन्त्रम्। वोचेम। अग्नये। आरे।
अस्मे इति। च। शृण्वते ॥ १ ॥

अध्वरंहिंसाप्रत्यवायरहितं अग्निष्टोमादियज्ञं उपप्रयन्तः उपेत्यप्रकर्षेणयन्तोगच्छन्तः प्राप्यविच्छेदेनसम्यगनुतिष्ठन्तइत्यर्थः तादृशावयमग्नयेअङ्गनादिगुणयुक्तायदेवायमन्त्रंमननसाधनं एतत्सूक्तरूपंस्तोत्रंवोचेम वक्तारोभूयास्मेत्याशास्यते कीदृशायाग्नये आरेअस्मेचशृण्वते चशब्दोप्यर्थेआरेशब्दात्परोद्रष्टव्यः आरेचदूरेपिस्थित्वाअस्माकंस्तुतीःशृण्वते अस्मासुप्रीत्यतिशयेनसर्वत्रवर्तमानोग्निःअस्मदीयमेवस्तोत्रंशृणोतीतिभावः ॥ वोचेम ब्रुवोवचिः लिङ्याशिष्यङ् वचउमित्युमागमः। शृण्वते शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

यःस्नीहितीषुपूर्व्यःसंजग्मानासुकृष्टिषु। अरक्षद्दाशुषेगयम् ॥२॥

यः। स्नीहितीषु। पूर्व्यः। सम्ऽजग्मानासु। कृष्टिषु। अरक्षत्।
दाशुषे। गयम् ॥ २ ॥

पूर्व्यश्चिरन्तनोयोग्निः स्नीहितीषुवधकारिणीषुकृष्टिषुशत्रुभूतासुप्रजासुसंजग्मानासुसंगतासुसतीषु दाशुषेहवींषिदत्तवतेयजमानायगयंधनंअरक्षद्रक्षति तस्मैमन्त्रंवोचेमेतिपूर्वेणसम्बन्धः ॥ स्नीहितीषु ष्णिहस्नेहने चुरादिः स्नेहयतीतिवधकर्मसुपठितं स्नेहन्तेहिंस्यन्तेप्रजाआभिरितिस्नेहितयः करणेक्तिन् तितुत्रेष्वग्रहादीनामितिवक्तव्यमितिवचनान्निगृहीतिर्निपठितिरिरितिवदिडागमः व्यत्ययेनएकारस्यईकारादेशःक्तिनोदीर्घश्च नित्त्वादाद्युदात्तत्वम्। संजग्मानासु समोगम्यृच्छीत्यात्मनेपदं लिटःकानच् गमहनेत्यादिनोपधालोपः। अरक्षत् छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् ॥ २ ॥

अग्निमन्थने जातायानुब्रूहीतिउक्ते उतब्रुवन्त्वित्येषानुवचनीया प्रातर्वैश्वदेव्यामितिखण्डेसूत्रितम्—शिष्टेनोत्तरामुतब्रुवन्तुजन्तवइति तथासाकमेधेषुमरुद्भ्यःक्रीळिभ्यःपुरोडाशमित्यस्यामिष्टौ एषैवप्रथमाज्यभागानुवाक्या सूत्रितंच—मरुद्भ्यःक्रीळिभ्यउत्तरोतब्रुवन्तुजन्तवइति ॥

तामेवांसूक्तेतृतीयामृचमाह—

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥३॥

उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रऽहा । अजनि । धनम्ऽजयः । रणेऽरणे ॥ ३ ॥

अग्निरुदजनि अरण्योः सकाशादुत्पन्नः उतानन्तरं जन्तवो जाताः सर्वेऋत्विजो ब्रुवन्तु तमग्निं स्तुवन्तु कीदृशोग्निः वृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता रणेरणे सर्वेषु सङ्ग्रामेषु धनंजयः शत्रुधनानां जेता ॥ धनंजयः संज्ञायां भृतॄवृजीतिखच् अरुर्द्विषदजन्तस्येतिमुम् चित्स्वरेणान्तोदात्तत्वम् । रणेरणे रणशब्दार्थः रणन्तिदुन्दुभयोस्मिन्निति रणः सङ्ग्रामः वशिरण्योरुपसङ्ख्यानमित्यप् नित्यवीप्सयोरितिद्विर्वचनं आम्रेडितानुदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत्कृणोष्यध्वरम् ॥४॥

यस्य । दूतः । असि । क्षये । वेषि । हव्यानि । वीतये । दस्मत् । कृणोषि । अध्वरम् ॥ ४ ॥

हेअग्ने यस्ययजमानस्यक्षयेदेवयजनलक्षणेगृहेदेवानांदूतस्त्वंअसिभवसि यस्यचहव्यानि चरुपुरोडाशादीनिहवींषिवीतयेदेवानांभक्षणायवेषिगमयसि यस्यचाध्वरंयज्ञंदस्मवत्सर्वैर्दर्शनीयंकृणोषिकरोषि तमित्सुहव्यमित्युत्तरयासम्बन्धः॥वेषि वीगत्यादिषु अन्तर्भावितण्यर्थाल्लट् अदादित्वाच्छपोलुक् पादादित्वान्निघाताभावः । दस्मत् दसिदंसनदर्शनयोः इषुयुधीन्धीत्यादिनामक् दस्ममित्यत्रमकारस्यवर्णव्यापत्त्यातकारः । कृणोषि कृविहिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्याकारः तस्यातोलोपेसतिस्थानिवद्भावाल्लघूपधगुणाभावः यस्येत्यनुपक्रान्निघाताभावः ॥ ४ ॥

पञ्चमीमृचमाह—

तमित्सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषम् ॥५॥२

तम् । इत् । सुऽहव्यम् । अङ्गिरः । सुऽदेवम् । सहसः । यहो इति । जनाः । आहुः । सुऽबर्हिषम् ॥ ५ ॥ २१ ॥

हेसहसोयह्वोबलस्यपुत्र अङ्गिरःअङ्गनादिगुणयुक्ताग्ने योयजमानःपूर्वमुक्तः तमिवत्तमेव यजमानंसुहव्यंशोभनहविष्कं सुदेवंशोभनदैवतंसुबर्हिषं बर्हिरितियज्ञनाम शोभनयज्ञंच जनाः सर्वेमनुष्याआहुःकथयन्ति ॥ सुहव्यमित्यादिपुनर्वृषुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सहसोयह्वो सुबामन्त्रितेइतिपराङ्गवद्भावात्षष्ठ्यामन्त्रितेसमुदायस्याष्टमिकमामन्त्रितानुदात्तत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेएकविंशोवर्गः ॥ २१ ॥

षष्ठीमृचमाह—

आ॒च॒वहा॑सि॒ताँ इ॒हदे॒वाँ उप॒प्रश॑स्तये । ह॒व्यासु॑श्चन्द्रवी॒तये॑ ॥६॥

आ । च॒ । वहा॑सि । तान् । इ॒ह । दे॒वान् । उप॑ । प्रऽश॑स्तये ।
ह॒व्या । सु॒ऽच॒न्द्र॒ । वी॒तये॑ ॥ ६ ॥

हेसुश्चन्द्रशोभनाह्लादनाग्ने तान्देवानिहास्मिन्कर्मणि उप अस्मत्समीपंप्रशस्तयेस्तुतयेआवहासिचआवहप्रापयच आगतेभ्यस्तेभ्योहव्याहव्यानिचरुपुरोडाशादीनिहवींषि वीतयेभक्षणाय प्रापयेत्यर्थः ॥ वहासि वहप्रापणे लेट्याडागमः । प्रशस्तये शंसुस्तुतौ भावेक्तिन् तितुत्रेतीड्प्रतिषेधः अनिदितामितिनलोपः तादौचेतिगतेःप्रकृतिस्वरत्वम् । सुश्चन्द्र ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रेइतिसुट् ॥ ६ ॥

सप्तमीमृचमाह—

नयोरु॑प॒ब्दिर॒श्व्यः॑शृ॒ण्वेरथ॑स्य॒कच्च॒न । यद॑ग्ने॒यासि॑दू॒त्य॑म् ॥७॥

न । योः । उ॒प॒ब्दिः । अ॒श्व्यः॑ । शृ॒ण्वे । रथ॑स्य । कत् । च॒न । यत् ।
अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् ॥ ७ ॥

हेअग्ने यद्यदादूत्यंदेवानांदूतत्वंयासिप्राप्नोषि कच्चनकदाचनतदानींसर्वदापियोःगच्छतः तवरथस्यअश्व्यःअश्वैरुत्पादितःउपब्दिःश्रवणार्हःशब्दोनशृण्वेनश्रूयते रथस्यशीघ्रगमनेनअस्माभिः शब्दोनोपलभ्यतइत्यर्थः ॥ योः यापापणेइत्यस्माद्योद्वेचेत्यौणादिकःकुप्रत्ययः बहुलवचनाद्द्विर्भावाभावः । उपब्दिः इत्येतच्छ्रोतुमर्हस्यशब्दस्याख्या तथाचतैत्तिरीयाणांप्रातिशाख्यम्—सशब्दमुपब्दिमदिति । शृण्वे श्रुश्रवणे कर्मणिलट्श्रुवःशृचेतिश्नुप्रत्ययेनश्रुः शृभावश्च लोपस्तआत्मनेपदेष्विनितलोपः हुश्नुवोःसार्वधातुकेइतियणादेशः ॥ ७ ॥

अष्टमीमृचमाह—

त्वोतो॑ वा॒ज्यह्र॑यो॒ऽभि पूर्व॑स्मा॒दप॑रः । प्र दा॒श्वाँ अ॑ग्ने अस्थात् ॥८॥

त्वाऽऊ॑तः । वा॒जी । अह्र॑यः । अ॒भि । पूर्व॑स्मात् । अप॑रः । प्र । दा॒श्वान् । अ॒ग्ने । अ॒स्था॒त् ॥ ८ ॥

यःपुरुषःपूर्वस्मादस्मादधिकारादपरोनिकृष्टोभवति हेअग्ने सइदानींदाश्वानतुभ्यंहवींषिदाताचसन्त्वोतः त्वया. ऊतोरक्षितः वाजी अन्नवान्अह्रयोलज्जारहितःएवंभूतःसन्अभिप्रास्थाव ऐश्वर्यमभिप्राप्यप्रतितिष्ठति सर्वोत्कृष्टोभवतीत्यर्थः॥अह्रयः ह्रीलज्जायां जिह्रेतीतिह्रयःनह्रयः अह्रयः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दाश्वान् दाशृदाने दाश्वान्साह्वानितिक्कसुप्रत्ययान्तोनिपातितः ॥ ८ ॥

नवमीमृचमाह—

उ॒त द्यु॒मत्सु॒वीर्यं॑ बृ॒हद॑ग्ने विवाससि । दे॒वेभ्यो॑ देव दा॒शुषे॑ ॥९॥२२॥

उ॒त । द्यु॒ऽमत् । सु॒ऽवीर्य॑म् । बृ॒हत् । अ॒ग्ने । वि॒वा॒स॒सि । दे॒वेभ्यः॑ । दे॒व॒ । दा॒शुषे॑ ॥ ९ ॥ २२ ॥

उतअपिच हेदेवद्योतमानाग्ने देवेभ्योदाशुषेचरुपुरोडाशादीनिहवींषिदत्तवतेतस्मैयजमानाय बृहत्प्रौढंधनंविवाससिगमयितुमिच्छसिप्रापयसीतियावत् कीदृशं द्युमत् अतिशयेनदीप्तं सुवीर्यं शोभनवीर्योपेतम्॥ सुवीर्यं वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्। विवाससि वनगतिगन्धनयोः सनिद्विर्भावेसन्यतइतीत्वम्। दाशुषे चतुर्थ्येकवचनेवसोःसम्प्रसारणमितिसम्प्रसारणम् शासिवसिघसीनांचेतिषत्वम् ॥ ९ ॥

॥ इतिप्रथमस्यपञ्चमेद्वाविंशोवर्गः ॥२२॥

जुषस्वेतिपञ्चर्चंद्वितीयंसूक्तं अनुक्रान्तंच—जुषस्वपञ्चेति । ऋष्याद्याःपूर्ववत् प्रातरनुवाकाश्विनशस्त्रयोःपूर्वसूक्तेनसहोक्तःसूक्तविनियोगः पशौस्तोकानुवचनेआद्याविनियुक्ता सूत्रितंच—प्रेषितःस्तोकेभ्योन्वाहजुषस्वसप्रथस्तममिति ।

तामेतांसूक्तेप्रथमामृचमाह—

जुषस्वंसप्रथंस्तमंवचोंदेवप्संरस्तमम् । हव्याजुह्वांनआसनिं ॥१॥
जुषस्वं । सप्रथंःऽतमम् । वचंः । देवप्संरःऽतमम् । हव्या । जुह्वांनः ।
आसनिं ॥ १ ॥

हेअग्ने सप्रथस्तमंअतिशयेनविस्तीर्णंवचःस्तोत्रलक्षणमस्मदीयंवचनंजुषस्व सेवस्व कीदृशं देवप्सरस्तमंदेवानांप्रीणयितृतमम् किंकुर्वन् आसनि तवास्येहव्याहव्यानिस्तोकलक्षणानिहवींषिजुह्वानःप्रक्षिपन् इमानिस्तोकलक्षणानिहवींषिवृथामाभूवन् तत्सर्वंत्वदीयेनमुखेनस्वीकुर्वित्यर्थः ॥ देवप्सरस्तमम् स्पृप्रीणिचलनयोः देवान्स्पृणोतिप्रीणयतीतिदेवप्सराः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंच सकारपकारयोःस्थानविपर्ययः अतिशयेनदेवप्सराःदेवप्सरस्तमः । जुह्वानः जुहोतेर्व्यत्ययेनशानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम् । आसनि पद्न्नित्यादिनाआस्यशब्दस्यआसन्नादेशः ॥१॥

द्वितीयामृचमाह—

अथातेअङ्गिरस्तमाग्नेवेधस्तमप्रियम् । वोचेमब्रह्मंसानसि ॥२॥
अर्थ । ते । अंगिरःऽतम । अग्नें । वेधःऽतम । प्रियम् । वोचेमं ।
ब्रह्मं । सानसि ॥ २ ॥

हेअङ्गिरस्तम अतिशयेनाङ्गनादिगुणयुक्त यद्वा अङ्गिरसांवरिष्ठवेधस्तम वेधाइतिमेधाविनाम अतिशयेनमेधाविन्नग्ने अथानन्तरंतेतुभ्यं सानसिसम्भजनीयंप्रियंप्रीतिकरंब्रह्मस्तोत्रंवोचेमवक्तारोभूयास्म ॥वोचेम लिङ्याशिष्यङ् वचउमित्युमागमः। सानसि वनषणसंभक्तौ सानसिधर्णसीत्यादावसिप्रत्ययान्तोनिपात्यते॥ २ ॥

तृतीयामृचमाह—

कस्तेंजामिर्जनांनामग्नेकोदाश्वंध्वरः । कोहकस्मिन्नसिश्रितः ॥३॥
कः । ते । जामिः । जनांनाम् । अग्नें । कः । दाशुऽअंध्वरः । कः ।
ह । कस्मिन् । असि । श्रितः ॥ ३ ॥

हेअग्ने जनानांमनुष्याणांमध्येतेतवकोजामिः कोबन्धुः त्वंसर्वैर्गुणैरधिकोसि तवानुरूपो-बन्धुर्नास्तीतिभावः कोदाश्वध्वरः दाशुर्दत्तोध्वरोयज्ञोयेनसतथोक्तः त्वां यष्टुमपिसमर्थःकोपि-नास्तीत्यर्थः कोहत्वं कथंभूतस्त्वमीदृग्रूपइतिसर्वैर्नज्ञायसइत्यर्थः कस्मिनस्थानेश्रितआश्रि-तोसिवर्तसेतत्स्थानमपिनकेनचिद्वज्ञायते अतस्त्वमस्माभिर्मांसदृष्टिभिः कथमुपलब्धव्यइत्यग्निः प्रशस्यते॥ दाश्वध्वरः दाशृदाने उणादयोबहुलमितिबहुलवचनात्कर्मण्युण्प्रत्ययः बहुव्रीहौपूर्व-पदप्रकृतिस्वरत्वम् यणादेशेउदात्तस्वरितयोर्यणःस्वरितोनुदात्तस्येतिस्वरितत्वम्॥ ३ ॥

चतुर्थीमृचमाह—

त्वंजामिर्जनानामग्नेमित्रोअसिप्रियः। सखासखिभ्यईड्यः ॥४॥

त्वम्। जामिः। जनानाम्। अग्ने। मित्रः। असि। प्रियः। सखा। सखिऽभ्यः। ईड्यः॥ ४ ॥

हेअग्ने त्वंउक्तप्रकारेणाचिन्त्यरूपोपिअनुगृहीतृतयासर्वेषांजनानांजामिर्बन्धुरसि तथा प्रियः प्रीणयितात्वंयजमानानांमित्रःप्रमीतेस्त्रायकोसि ईड्यः स्तुतिभिःस्तुत्यः त्वंसखिभ्यः समानख्यानेभ्यऋत्विग्भ्यः सखासखिवदत्यन्तंप्रियोसि॥ जामिः जमुअदने जमन्तिसहैकस्मिन्पात्रे अदन्तीतिजामयोबन्धवः जनिघसिभ्यामिणितिविधीयमानोबहुलवचनादस्मादपिद्रष्टव्यः। ईड्यः ईडस्तुतौ ईडवन्दवृशंसदुहांण्यतइत्याद्युदात्तत्वम्॥ ४ ॥

पञ्चमीमृचमाह—

यजानोमित्रावरुणायजादेवाँऋतंबृहत्। अग्नेयक्षिस्वंदमम्॥५॥२३॥

यज। नः। मित्रावरुणा। यज। देवान्। ऋतम्। बृहत्। अग्ने। यक्षि। स्वम्। दमम्॥ ५ ॥ २३ ॥

हेअग्ने नोस्मदर्थंमित्रावरुणाएतत्संज्ञौदेवौयज हविषापूजय तथादेवानिन्द्रादीन्यजपूजय ऋतंसत्यंयथार्थफलंयज्ञंचयजेत्येव तदर्थंबृहत्प्रौढंस्वंस्वकीयंदमंयज्ञगृहंयक्षियज सद्गच्छस्व त्वयिअन्तर्विद्यमानेसतिहियज्ञगृहंपूज्यते॥ यज द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम्। देवान् दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतोटिनित्यमित्यनुनासिकआकारः यत्वलोपौ। यक्षि यजेर्बहुलंछन्दसीतिशपोलुक्॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेत्रयोविंशोवर्गः॥ २३॥

कातइतिपञ्चर्चंसूक्तंतृतीयं कावइत्यनुक्रान्तम् राहूगणोगोतमऋषिः त्रिष्टुप्छन्दः अग्निर्देवता प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसीदमादिकेद्वेसूक्ते सूत्रितंच—उपप्रजिन्वन्नितितिस्रः काउपेतिरितिसूक्तेइति आश्विनशस्त्रेप्येते प्रातरनुवाकातिदेशात् ।

तत्रप्रथमामृचमाह—

कात॒उपे॑ति॒र्मन॑सो॒वरा॑यभु॒वद॑ग्ने॒शंत॑मा॒कामनी॒षा ।
कोवा॑य॒ज्ञैःपरि॒दक्षं॑तआप॒केन॑वाते॒मन॑सादाशेम ॥१॥

का । ते॒ । उप॑ऽइतिः । मन॑सः । वरा॑य । भुव॑त् । अ॒ग्ने॒ । शम्ऽत॑मा ।
का । म॒नी॒षा । कः । वा॒ । य॒ज्ञैः । परि॑ । दक्ष॑म् । ते॒ । आ॒प॒ ।
केन॑ । वा॒ । ते॒ । मन॑सा । दा॒शे॒म॒ ॥ १ ॥

हेअग्ने तेतवमनसोवरायनिवारणायअस्मास्ववस्थापनायकाउपेतिर्भुवत् कीदृशमुपगमनं भवेत् नकाप्यस्ति तवोचितमुपगमनं वयंकर्तुंनशक्नुमइतिभावः मनीषास्तुतिः शंतमा तवातिशयेनसुखकरी का कीदृशीभवेत् तवोचितास्तुतिरपिनास्तीत्यर्थः कोवायजमानः यज्ञैः तवसम्बन्धिभिर्यागैः दक्षंवृद्धिंवलंवा पर्याप पर्याप्नोत् नकोपीत्यर्थः तवोचितान्यागाननुष्ठाय तैः फलं प्राप्यतइत्येतदपिदुर्घटमेवेतिभावः उपगमनादिकंतावदास्तां तस्यसर्वस्यसाधनभूतंमनएवास्माकंदुर्लभमित्याह केनेति हेअग्ने तेतुभ्यंकेनमनसाकीदृश्याबुद्ध्यादाशेमहवींषिप्रयच्छाम तवोपगमनाद्यनुरूपंमनोस्माकंनोत्पद्यतइत्यर्थः ॥ उपेति तादौचेतिगतेःप्रकृतिस्वरत्वम् । वराय वृञ्वरणे अस्मादन्तर्भावितण्यर्थात् ग्रहवृदृनिश्चिगमश्चेत्यप् तस्यपित्वादनुदात्तत्वेधातुस्वरः । भुवत् लेट्यडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः । दक्षं दक्षवृद्धौ भावेकरणे वाघञ् ञित्वादाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

एह्य॑ग्न इ॒ह होता॒ नि षी॒दाद॑ब्धः॒ सु पु॑रए॒ता भ॑वा नः ।
अव॑तां त्वा॒ रोद॑सी विश्वमि॒न्वे यजा॑ म॒हे सौ॑मन॒साय॑ दे॒वान् ॥२॥

आ । इ॒हि॒ । अ॒ग्ने॒ । इ॒ह । होता॑ । नि । सी॒द॒ । अद॑ब्धः । सु । पु॒रः॒ऽए॒ता । भ॒व॒ । नः॒ । अव॑ताम् । त्वा॒ । रोद॑सी॒ इति॑ । वि॒श्व॒मि॒न्वे इति॑ वि॒श्व॒म्ऽइ॒न्वे । यज॑ । म॒हे । सौ॒म॒न॒साय॑ । दे॒वान् ॥ २ ॥

हेअग्ने एहिआगच्छ इहास्मिन्यज्ञेहोतादेवानामाह्वातासन् निषीदउपविश उपविश्य नोस्माकंपुरएतापुरतोगन्तासुभवसुष्ठुभव यस्मात्त्वंअदब्धः राक्षसादिभिरहिंस्योसि तादृशंत्वांविश्वमिन्वेसर्वंव्यापुवंत्यौरोदसीद्यावापृथिव्यौत्वात्वामवतांरक्षतां आगत्योपविश्यचद्यावापृथिवीभ्यांरक्षितश्चसन् महेमहतेसौमनसायसौमनस्यायदेवान् दानादिगुणयुक्तानिन्द्रादीन्यजहविर्भिःपूजय ॥ निषीद सदिरप्रतेरितिषत्वम् । सौमनसाय सुमनसोभावःसौमनसं तस्येदमितिसम्बन्धसामान्येइत्यण्प्रत्ययः सचात्रभावलक्षणेसम्बन्धविशेषेपर्यवस्यति यद्वा हायनान्तयुवादिभ्योणितिभावेअण् युवादिष्वस्यपाठोद्रष्टव्यः ॥ २ ॥

तृतीयामृचमाह--

प्रसुविश्वा॑न्र॒क्षसो॒धक्ष्य॑ग्ने॒भवा॑य॒ज्ञाना॑मभिश॒स्ति॒पावा॑ । अथाव॑ह॒सोम॑पतिं॒हरि॑भ्यामाति॒थ्यम॑स्मैचकृमासु॒दाव्ने॑ ॥३॥

प्र । सु । विश्वा॑न् । र॒क्षसः॑ । धक्षि॑ । अ॒ग्ने॒ । भव॑ । य॒ज्ञाना॑म् । अ॒भि॒श॒स्ति॒ऽपावा॑ । अथ॑ । आ । व॒ह॒ । सोम॑ऽपतिम् । हरि॑ऽभ्याम् । आ॒ति॒थ्यम् । अ॒स्मै॒ । च॒कृ॒म॒ । सु॒ऽदाव्ने॑ ॥ ३ ॥

हेअग्ने विश्वान्सर्वान्रक्षसोराक्षसान् प्रसुधक्षिप्रकर्षेणदह दग्ध्वाच यज्ञानांअस्माभिरनुष्ठेयानां यागानांअभिशस्तिपावा अभिशस्तेर्हिंसायाःपातारक्षिताभव अथानन्तरंसोमपतिंसर्वेषां सोमानांपालकं इन्द्रं हरिभ्यांतदीयाश्वाभ्यांआवह अस्मद्यज्ञंमापयआगतायास्मैसुदाव्नेशोभनस्यफलस्यदात्रेइन्द्रायआतिथ्यंअतिथ्यर्हंसत्कारंचकृमकुर्मः ॥ धक्षि दहभस्मीकरणे बहुलंछन्दसीतिशपोलुक् ढत्वभष्भावकत्वषत्वानि । अभिशस्तिपावा शसुहिंसायां अस्मादभिपूर्वाद्भावे क्तिन् अभिशस्तेःपातीत्यभिशस्तिपावा पारक्षणे आतोमनिन्क्वनिब्वनिप । सोमपतिं पत्यावैश्वर्यइतिपूर्वपदप्रकृतिस्वरत्वम् । सुदाव्ने पूर्ववद्दातेर्वनिप् अल्लोपोनइत्यकारलोपः ॥ ३ ॥

चतुर्थीमृचमाह—

प्रजावंतावचंसावह्निरासाचहुवेनिचंसत्सीहदेवैः ।
वेषिहोत्रमुतपोत्रंयजत्रबोधिप्रयन्तर्जनितर्वसूनाम् ॥४॥

प्रजाऽवंता । वचंसा । वह्निः । आसा । आ । च । हुवे । नि । च ।
सत्सि । इह । देवैः । वेषि । होत्रम् । उत । पोत्रम् । यजत्र । बोधि ।
प्रऽयन्तः । जनितः । वसूनाम् ॥ ४ ॥

प्रजावतायजमानेभ्योदातव्यापत्यादिफलोपेतेनवचसास्तोत्रेणस्तुतःसन् योग्निःआसाआस्यस्थानीययाज्वालयावह्निःदेवेभ्योहविषांवोढातमग्निंआचहुवेआह्वयामि आहूतःसन्त्वं इहास्मिन्कर्मणिदेवैरन्यैःसहनिषत्सिचनिषीदचनिषद्यच हेयजत्रयजनीयाग्ने होत्रंहोत्राक्रियमाणं कर्म उतअपिच पोत्रंपोत्राकृतंकर्मचवेषिकामयस्व वसूनांधनानांप्रयन्तःप्रकर्षेणनियन्तः वसूनिअस्मदायत्तानिकुर्वन्जनितःआहुतिद्वारासर्वस्यजनयितरग्ने बोधि अस्मान् बोधय ॥ आसा पद्दन्नित्यादिनाआस्यशब्दस्यासन्नादेशः सुपांसुलुगितितृतीयायाडादेशः टिलोपेउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । हुवे ह्वेञोलटिबहुलंछन्दसीतिसंप्रसारणम् बहुलंछन्दसीतिशपोलुक् चवायोगेप्रथमेतिनिघातप्रतिषेधः । बोधि बुधअवगमने अस्माण्ण्यन्तात् छन्दस्युभयथेतिहेरार्धधातुकत्वात् णेरनिटीतिणिलोपः हुझल्भ्योहेर्धिः धातोरन्त्यलोपश्छान्दसः हेरपित्वात्तस्यैवस्वरःशिष्यते ॥ ४ ॥

एकादशिनस्याग्नेयस्यपशोः यथाविप्रस्येत्येपापशुपुरोडाशस्ययाज्या सूत्रितंचप्रदानानामितिखण्डे—यथाविप्रस्यमनुषोहविर्भिःप्रकारवोमननावच्यमानाइति ।

तामेतांसूक्तेपञ्चमीमृचमाह—

यथाविप्रस्यमनुंषोहविर्भिर्देवाँअयंजःकविभिःकविःसन् ।
एवाहोंतःसत्यतरत्वमद्याग्नेमन्द्रयांजुह्वांयजस्व ॥५॥२४॥

यथां । विप्रस्य । मनुंषः । हविःऽभिः । देवान् । अयंजः । कविऽभिः ।
कविः । सन् । एव । होतः । सत्यऽतर । त्वम् । अद्य । अग्ने ।
मन्द्रयां । जुह्वां । यजस्व ॥ ५ ॥ २४ ॥

कविः क्रान्तदर्शीसन्कविभिः मेधाविभिःऋत्विग्भिःसह विप्रस्यमेधाविनः मनुषोमनोर्यज्ञे हविर्भिः चरुपुरोडाशादिभिः हेअग्नेयथादेवानयजः एवमेवहोतः होमनिष्पादकसत्यतरअतिशयेनसत्सुसाधोअग्ने त्वं अद्यास्मिन्यज्ञेमन्द्रयाहर्षयित्र्याजुह्वाहोमसाधनभूतयास्रुचायजस्व देवान् हविर्भिःपूजय ॥ मनुषः मनज्ञाने बहुलमन्यत्रापीतिमनेरुसिन्प्रत्ययः ॥ ५ ॥

॥ इतिप्रथमस्यपञ्चमेचतुर्विंशोवर्गः ॥ २४ ॥

कथेतिपञ्चर्चंचतुर्थंसूक्तंत्रैष्टुभंगोतमस्यार्षमाग्नेयम् अनुक्रान्तंच—कथेति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्रप्रथमामृचमाह—

क॒था दा॑शेमा॒ग्नये॒ का॑स्मै॑ दे॒वजु॑ष्टोच्यते भा॒मिने॒ गीः ।
यो मर्त्ये॑ष्व॒मृत॑ ऋ॒तावा॒ होता॒ यजि॑ष्ठ॒ इत्कृ॒णोति॑ दे॒वान् ॥१॥

क॒था । दा॒शे॒म॒ । अ॒ग्नये॑ । का । अ॒स्मै॒ । दे॒वऽजु॑ष्टा । उ॒च्य॒ते॒ । भा॒मिने॑ । गीः । यः । मर्त्ये॑षु । अ॒मृतः॑ । ऋ॒तऽवा॑ । होता॑ । यजि॑ष्ठः । इत् । कृ॒णोति॑ । दे॒वान् ॥ १ ॥

अस्मा अग्नयेकथादाशेम कथंहवींषिदद्याम अग्नेःअनुरूपंयजनंकर्तुंअशक्तावयमित्यर्थः अथवाअस्मैभामिनेतेजस्विनेअग्नयेदेवजुष्टासर्वैःदेवैःसेवितव्यावाक्स्तुतिरपिकाकीदृश्युच्यते तादृशीं स्तुतिमपिकर्तुंनशक्ताइत्यर्थः अमृतोमरणरहितः ऋतावाऋतवान् सत्यवान् यज्ञवान्वाहोतादेवानामाह्वाताहोमनिष्पादकोवायजिष्ठोऽतिशयेनयष्टाएवंभूतोयोग्निः मर्त्येषुमरणधर्मसुअस्मासुवर्तमानःसन्देवान् इत्कृणोति हविर्भिर्युक्तान्करोत्येव तादृशायाग्नयेकथादाशेमेतिपूर्वेणान्वयः॥ कथा थाहेतौचच्छन्दसीतिथाप्रत्ययः।भामिने भादीप्तौ अर्तिस्तुस्वित्यादिनामनप्रत्ययः ततोमत्वर्थीयइनिः।ऋतावा छन्दसीवनिपाविति मत्वर्थीयोवनिप् अन्येषामपिदृश्यतइतिदीर्घत्वम् ॥ १ ॥

द्वितीयामृचमाह—

यो अ॑ध्व॒रेषु॒ शंत॑म ऋ॒तावा॒ होता॒ तमू॒ नमो॑भि॒रा कृ॑णुध्वम् ।
अ॒ग्निर्यद्वेर्मर्ता॑य दे॒वान्त्स चा॒ बोधा॑ति॒ मन॑सा यजाति ॥२॥

यः । अध्वरेषु । शम्ऽतमः । ऋतऽवा । होता । तम् । ऊम् इति । नमःऽभिः । आ । कृणुध्वम् । अग्निः । यत् । वेः । मर्ताय । देवान् । सः । च । बोधाति । मनसा । यजाति ॥ २ ॥

योग्निःअध्वरेषुयागेषुशंतमः अतिशयेनसुखकारीऋतावासत्यवान्यथार्थदर्शीत्यर्थः होतादेवानामाह्वाताभवति हेऋत्विग्यजमानायूयंतमुतमेवाग्निंनमोभिःस्तोत्रैःआकृणुध्वमभिमुखीकुरुत यद्यदाअयमग्निः मर्तायमनुष्याययजमानार्थंदेवान्वेः वेति गच्छति तदानींसोग्निःयष्टव्यान्सर्वान्देवान् बोधातिचजानातिच ज्ञात्वाच मनसानमसाताम् यजातिच हविर्भिःपूजयति अतस्तमेवाग्निमाकृणुध्वमितियोज्यम् ॥ वेः वीगत्यादिषु छन्दसिलुङ्लङ्लिटइतिवर्तमानेलङ् तिङांतिङोभवन्तीतिप्रथमपुरुषैकवचनस्यमध्यमपुरुषैकवचनादेशः । बोधाति बुधअवगमने लेटयाडागमः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते चवायोगेप्रथमेतिनिघातप्रतिषेधः । मनसा मकारनकारयोःस्थानविपर्ययः ॥ २ ॥

तृतीयामृचमाह—

सहिक्रतुःसमर्यःससाधुर्मित्रोनभूदद्भुतस्यरथीः ।
तंमेधेषुप्रथमंदेवयन्तीर्विशउपब्रुवतेदस्ममारीः ॥३॥

सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः । तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ॥ ३ ॥

सह्यग्निःक्रतुःकर्मणांकर्तासएवमर्योमारयिताविश्वस्योपसंहर्ता साधुःसाधयिताउत्पादयितापिसएव अद्भुतस्याभूतस्यालब्धस्यधनस्यरथीःरंहयितामापयिताभूद्भवति तत्रदृष्टान्तः— मित्रोन यथासखाधनानिप्रापयति तद्वत् एवंभूतोयोग्निस्तमेवमेधेषुयज्ञेषुदेवयन्तीर्देवयन्त्योदेवानात्मनइच्छन्त्योविशःप्रजाःप्रथममुपब्रुवते स्तुतिभिरुपेत्यप्रधानभूतइतिकथयन्ति कीदृश्योविशःदस्मंदर्शनीयंतमग्निंआरीर्गच्छन्त्यःभजन्त्यइत्यर्थः॥मर्यः मृङ्प्राणत्यागे अस्मादन्तर्भावितण्यर्थाद्छन्दसिनिष्टक्र्येत्यादौनिपातनाद्यत् कृत्यल्युटोबहुलमितिबहुलवचनात्कर्तरिदृष्टव्यः यतोनावइत्याद्युदात्तत्वम् । देवयन्तीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । आरीः ऋगतौ जनिघसि-

स्यामिणिति बहुलग्रहणादस्मादपिइण्प्रत्ययः कृदिकारादक्तिनइतिङीप् वाछन्दसीतिपूर्वसवर्ण-दीर्घत्वम् व्यत्ययेनाद्युदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

सनोनृणांनृतमोरिशादाअग्निर्गिरोवसावेतुधीतिम् ।
तनाचयेमघवानःशविष्ठावाजप्रसूताइषयन्तमन्म ॥४॥

सः । नः । नृणाम् । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा ।
वेतु । धीतिम् । तना । च । ये । मघऽवानः । शविष्ठाः ।
वाजऽप्रसूताः । इषयन्त । मन्म ॥ ४ ॥

नृणांप्रशस्यनेतृणांमध्येनृतमोऽतिशयेननेतारिशादाःरिशानांशत्रूणांअत्ताभक्षयिता यद्वा रिशतांहिंसतांअसितानिरसिता एवंविधःसोग्निःनोस्माकंगिरःस्तुतीःअवसाहविर्लक्षणेनान्नेनयुक्तांधीतिंकर्मचवेतुकामयतां अपिचयेयजमानाः तनाधननामैतत् विस्तृतेनधनेनमघवानोधनवन्तः शविष्ठाःअतिशयेनबलिनश्चसन्तः वाजप्रसूताः प्रसूतंप्रेरितंवाजोहविर्लक्षणमन्नंयैः तादृशाभूत्वामन्म अग्नेर्मननरूपंस्तोत्रं इषयन्त एषयन्ति ऋत्विग्भिःकारयितुमिच्छन्ति तेषामपिस्तुतिंअग्निःकामयतामितिभावः ॥ नृणां नृचेत्युभयथाभावाद्दीर्घाभावः नामन्यतरस्यामितिनामउदात्तत्वम् । तना तनुविस्तारे पचाद्यच् तृतीयैकवचनस्यसुपांसुलुगित्याकारः वृषादेराकृतिगणत्वाद्आद्युदात्तत्वम् । शविष्ठाः शवइतिबलनाम अस्मायामेधेतिमत्वर्थीयोविनिः ततआतिशायनिकइष्ठन् विन्मतोर्लुगितिविनोलुक् टेरितिटिलोपः इष्ठनोनित्त्वादाद्युदात्तत्वम् । इषयन्त इषइच्छायां अस्माण्ण्यन्ताच्छान्दसोलङ् संज्ञापूर्वकस्यविधेरनित्यत्वाण्णौ लघूपधगुणाभावः अडुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचएवस्वरः शिष्यते ॥ ४ ॥

पञ्चमीमृचमाह—

एवाग्निर्गोतमेभिर्ऋतावाविप्रेभिरस्तोष्टजातवेदाः ।
सएषुद्युम्नंपीपयत्सवाजंसपुष्टिंयातिजोषमाचिकित्वान् ॥५॥२५॥

एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट ।
जातऽवेदाः । सः । एषु । द्युम्नम् । पीपयत् । सः । वाजम् । सः ।
पुष्टिम् । याति । जोषम् । आ । चिकित्वान् ॥ ५ ॥ २५ ॥

ऋतावाऋतवान्यज्ञवान्जातवेदाः जातधनोजातप्रज्ञोवायमग्निः विप्रेभिः मेधाविभिर्गोतमेभिर्गोतमैर्ऋषिभिरेव मुक्तेनप्रकारेणास्तोष्टस्तुतोभूत् स्तुतश्चसोग्निः एषुगोतमेषुद्युम्नंद्योतमानंसोमं पीपयत् अपिबत् यद्वा तान्पीनपाययत् तथासोग्निर्वाजंहविर्लक्षणमन्नंपीपयदित्येव एवंसोमलक्षणंचरुपुरोडाशादिलक्षणंहविश्चस्वीकृत्यसोग्निः जोषंअस्माभिः कृतंसेवनंआचिकित्वान् आसमन्तात् जानन् पुष्टिंयातिपोषंप्राप्नोतु यद्वा अस्माकंधनानिपोषंप्रापयतु ॥ गोतमेभिः ऋष्यन्धकवृष्णिकुरुभ्यश्चेतिविहितस्याणः अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चेतिबहुषुलुक् । अस्तोष्ट स्तौतेःकर्मणिलुङि चिणभावश्छान्दसः । पीपयत् पापाने ण्यन्तात् लुङिचङ्युश्चङादि । जोषं जुषीप्रीतिसेवनयोः भावेघञ् ञित्त्वादाद्युदात्तत्वम् ॥ ५ ॥

इतिप्रथमस्यपञ्चमेपञ्चविंशोवर्गः ॥ २५ ॥

अभित्वेतिपञ्चर्चंपञ्चमंसूक्तं गोतमस्यार्षमाग्नेयंगायत्रं तथाचानुक्रान्तम्—अभित्वागायत्रंत्विति विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

अभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः ॥१॥

अभि । त्वा । गोतमाः । गिरा । जातऽवेदः । विऽचर्षणे । द्युम्नैः ।
अभि । प्र । नोनुमः ॥ १ ॥

हेजातवेदोजातानांवेदितः विचर्षणेविशेषेणसर्वस्यद्रष्टः एवंभूताग्नेत्वात्वांगोतमाअस्यसूक्तस्यद्रष्टागोतमऋषिः ऋषेरेकत्वेपिपूजार्थंबहुवचनं गिरास्तोत्रलक्षणयावाचाअभिआभिमुख्येन अस्तौदितिशेषः वद्वद्वयमपित्वांद्युम्नैः त्वदीयगुणप्रकाशकैर्मंत्रैः अभिप्रणोनुमः आभिमुख्येनपुनःपुनःस्तुमः ॥ नोनुमः णुस्तुतौ अस्माद्यङ्लुगन्ताल्लट् उपसर्गादसमासेपीतिणत्वम् ॥ १ ॥

द्वितीयामृचमाह—

तमुंत्वागोतंमोगिरारायस्कांमोदुवस्यति। द्युम्नैरभिप्रणोंनुमः ॥२॥

तम् । ऊम् इति । त्वा । गोतमः । गिरा । रायःऽकामः । दुवस्यति ।
द्युम्नैः । अभि । प्र । नोनुमः ॥ २ ॥

रायस्कामोधनकामोगोतमोयमग्निंगिरास्तुत्यादुवस्यतिपरिचरति तमु तमेवत्वांद्युम्नैर्द्योतमानैःस्तोत्रैः आभिमुख्येनपुनःपुनःस्तुमः ॥ रायस्कामः रायोधनानिकामयतइतिरायस्कामः कर्मण्यण् तत्पुरुषेकृतिबहुलमितिबहुलवचनादलुक् ऊडिदमित्यादिनापूर्वपदस्यविभक्तेरुदात्तत्वम् दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् अतःकृकमिकंसकुम्भेतिविसर्जनीयस्यसत्वम् । दुवस्यति दुवसउपतापे परिचरणेकण्ड्वादिः ॥ २ ॥

तृतीयामृचमाह—

तमुंत्वावाजसातंममङ्गिरस्वद्धंवामहे। द्युम्नैरभिप्रणोंनुमः ॥३॥

तम् । ऊम् इति । त्वा । वाजऽसातमम् । अङ्गिरस्वत् । हवामहे ।
द्युम्नैः । अभि । प्र । नोनुमः ॥ ३ ॥

हेअग्ने वाजसातमंवाजानामन्नानामतिशयेनसनितारंदातारंतमेवत्वांअङ्गिरस्वत् अङ्गिरसइवहवामहेआह्वयामः शिष्टंगतम् ॥ वाजसातमम् षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् अतिशयेनवाजसाःवाजसातमः तमपःपित्त्वादनुदात्तत्वेकृदुत्तरपदप्रकृतिस्वरएवशिष्यते। अङ्गिरस्वत् तेनतुल्यमितिवतिः नभोंगिरोमनुषांवत्युपसंख्यानमितिभत्वेपदत्वाभावाद्रुत्वाद्यभावः ॥ ३ ॥

चतुर्थीमृचमाह—

तमुंत्वावृत्रहन्तंमंयोदस्यूँरवधूनुषे। द्युम्नैरभिप्रणोंनुमः ॥४॥

तम् । ऊम् इति । त्वा । वृत्रहन्ऽतमम् । यः । दस्यून् । अवऽधूनुषे ।
द्युम्नैः । अभि । प्र । नोनुमः ॥ ४ ॥

हेअग्ने दस्यूनउपक्षपयितॄन्राक्षसादीन्यस्त्वम वधूनुषेअवचालयसि स्थानात्प्रच्यावयसि वृत्रहन्तमंवृत्राणांपाप्मनांअतिशयेनहन्तारंतमुत्वातमेवत्वांद्युम्नैरित्यादिपूर्ववत् ॥ वृत्रहन्तमं अ-तिशयेनवृत्रहावृत्रहन्तमः पदसंज्ञायांनलोपेनाद्रस्येवितमपोनुट्। दस्यून् दीर्घादटिसमानपादेइति नकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिऊकारःसानुनासिकः ॥ ४ ॥

पञ्चमीमृचमाह—

अवो॑चाम॒रहू॑गणाअ॒ग्नये॒मधु॑म॒द्वचः॑ । द्यु॒म्नैर॒भिप्रणो॑नुमः॥५॥२६॥

अवो॑चाम । रहू॑गणाः । अ॒ग्नये॑ । मधु॑ऽमत् । वचः॑ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ॥ ५ ॥ २६ ॥

ऋषिःकृतंस्तोत्रंअनयोपसंहरति रहूगणाःरहूगणस्यपुत्रावयंगोतमाः अग्नयेअङ्गनादिगु-णयुक्तायदेवायमधुमद्वचः माधुर्योपेतंवचनंअवोचामप्रावादिष्म वद्वचनरूपैर्द्युम्नैर्द्योतमानैःस्तो-त्रैःपुनःपुनरग्निंवयमभिप्रणोनुमः आभिमुख्येनप्रकर्षेणस्तुमः ॥ ५ ॥

इतिप्रथमस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

हिरण्यकेशइतिद्वादशर्चंषष्ठंसूक्तंरहूगणपुत्रस्यगोतमस्यार्षं अत्रानुक्रम्यते—हिरण्यकेशो-द्वादशाद्योतृचौत्रैष्टुभौष्णिहौपूर्वोग्नयेवामध्यमायेतिपूर्वत्रगायत्रंत्वित्युक्त्वादिदमपिगायत्रंसूक्तं ए-तावांस्तुविशेषः आद्यस्तृचस्त्रैष्टुभः द्वितीयस्त्वौष्णिहः प्रथमतृचस्यमध्यमस्थानेवैद्युतोग्निःशुद्धा-ग्निर्वादेवता शिष्टानवर्चःकेवलाग्निदेवताकाः प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसिआश्विनशस्त्रे चाद्यस्तृचः सूत्रितंच—हिरण्यकेशइतितिस्रोपश्यमस्यमहतइविसूक्तेइति । कारीर्यामग्नेर्धामच्छदः हिरण्यकेशइतिद्वेकचौयाज्यानुवाक्ये सूत्रितंच—हिरण्यकेशोरजसोविसारइतिद्वे त्वंत्याचिदच्यु-ताधामन्तेविश्वंभुवनमधिश्रितमितिवेति ।

तत्रप्रथमामृचमाह—

हिर॑ण्यकेशो॒रज॑सोविसा॒रेहिर्धुनि॒र्वात॑इव॒ध्रजी॑मान् । शुचि॑भ्राजाउ॒षसो॒नवे॑दा॒यश॑स्वतीरप॒स्युवो॒नस॒त्याः ॥१॥

हिर॑ण्यऽकेशः । रज॑सः । वि॒ऽसा॒रे । अहिः॑ । धुनिः॑ । वातः॑ऽइव । ध्रजी॑मान् । शुचि॑ऽभ्राजाः । उ॒षसः॑ । नवे॑दाः । यश॑स्वतीः । अ॒प॒स्युवः॑ । न । स॒त्याः । १ ॥

हिरण्यकेशः हितरमणीयाः केशस्थानीयाज्वालायस्यसतथोक्तः सुवर्णवद्रोचमानज्वालो वाअहिः आगत्यहन्तामेघानांधुनिः तेषांकम्पयिता वातइववायुरिवध्रजीमानशीघ्रगतियुक्तः एवंभूतोवैद्युतोग्निः रजसउदकस्यविसारेविसरणेमेघान्निर्गमनेनिमित्तभूतेसति शुचिभ्राजाः शोभनदीप्तिःसन्मेघाज्ज्वालानिर्निर्गमयितुंजानाति उषसः उषोदेवताः नवेदाः नविदन्तीतिनवेदाः मेघादुदकस्यनिःसारणंअग्निरेवजानाति उषसस्तुनजानन्तीत्यर्थः अज्ञानेदृष्टान्तः—यशस्वतीः अन्नयुक्ताः अन्नवत्यः अपस्युवः अपः कर्मआत्मनइच्छन्त्यः सत्याः अवितथारंभान एवंभूताःप्रजाइव अत्रोपमामज्ञानेनअग्निः प्रशस्यते नतुतानिन्द्यन्ते नहिनिंदानिन्द्यंनिन्दितुंअपितुस्तुत्यंस्तोतुमितिन्यायात् ॥ ध्रजीमान् ध्रजगतौ इनसर्वधातुभ्यइतिभावेइन्प्रत्ययः ततोमतुप् तस्यापित्त्वादनुदात्तत्वेइनोनित्त्वात्प्रातिपदिकस्याद्युदात्तत्वम् । नवेदाः नञ्पूर्वाद्वेत्तेःपचाद्यच् नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । अपस्युवः अपस्शब्दात्सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः तन्वादीनांछन्दसिबहुलमुपसंख्यानमितिउवङ् ॥ १ ॥

द्वितीयामृचमाह—

आते॑सुप॒र्णाअ॑मिनन्तँ॒एवैः॑कृ॒ष्णोनो॑नाववृष॒भोयदी॒दम् ।
शि॒वाभि॒र्नस्मय॑मानाभि॒रागा॒त्पत॑न्ति॒मिहः॑स्त॒नय॑न्त्य॒भ्रा ॥२॥

आ । ते॒ । सु॒ऽप॒र्णाः । अ॒मि॒न॒न्त॒ । एवैः॑ । कृ॒ष्णः । नो॒ना॒व॒ । वृ॒ष॒भः । यदि॑ । इ॒दम् । शि॒वाभिः॑ । न । स्मय॑मानाभिः । आ । अ॒गा॒त् । पत॑न्ति । मिहः॑ । स्त॒नय॑न्ति । अ॒भ्रा ॥ २ ॥

हेअग्नेतेतवसुपर्णाः शोभनपतनारश्मयः एवैर्गन्तृभिर्मरुद्भिःसहामिनन्त आसमन्तान्मेघं हिंसन्ति वर्षणार्थंताडयन्ति महतश्च कृष्णः कृष्णवर्णोवृषभोवर्षितामेघःनोनावभृशंशब्दमकरोत् यदियदाइदमीदृशंकर्म तदानींशिवाभिःसुखकारिणीभिःस्मयमानाभिःहसनवतीभिः कान्तिभिरिवशुभ्रवर्णाभिःफेनयुक्ताभिरिवाद्भिर्विद्युद्भिर्वासहअगात् वैद्युताग्निमेरितःपर्जन्यआगच्छतितदनन्तरमिहआपःपतन्ति दिवःसकाशात्प्रवृष्टाभवन्ति अभ्राअभ्राणिअद्भिःपूर्णामेघाःस्तनयन्ति इतस्ततःशब्दंकुर्वन्ति ॥ अमिनन्त मीञ्हिंसायां क्रैयादिकः व्यत्ययेनान्तादेशः ईपाअक्षादित्वात्प्रकृतिभावःअणोमगृह्यस्येतिवैकल्पिकमवसानेविधीयमानमनुनासिकत्वम् व्यत्ययेनाप्रसंहितायामपिद्रष्टव्यम् । नोनाव नौतेर्यङ्लुगन्तात्लिटिअमन्त्रेइतिनिषेधादाम्प्रत्ययाभावः । स्मयमानाभिः ष्मिङ्ईषद्धसने शपःपित्त्वादनुदात्तत्वं शानचोल्सार्वधातुकस्वरेणधातुस्वरःशिष्यते ।

स्तनयन्ति स्तनशब्दे चुरादिरदन्तः पतन्तिस्तनयन्तीत्यनयोःपादादित्वाद्वाक्यादित्वाच्चनि-घाताभावः ॥ २ ॥

तृतीयामृचमाह—

यदीमृतस्यपयसापियानोनयन्नृतस्यपथिभीरजिष्ठैः ।
अर्यमामित्रोवरुणःपरिज्मात्वचंपृञ्चन्त्युपरस्ययोनौ ॥३॥

यत् । ईम् । ऋतस्य । पयसा । पियानः । नयन् । ऋतस्य ।
पथिऽभिः । रजिष्ठैः । अर्यमा । मित्रः । वरुणः । परिऽज्मा ।
त्वचम् । पृञ्चन्ति । उपरस्य । योनौ ॥ ३ ॥

यदींयदायमग्निःऋतस्योदकस्यपयसापयोवत्सारभूतेनरसेनपियानोजगदाप्यायनंकुर्वन् आप्यायितंचजगदृतस्योदकस्यसम्बन्धिभिःरजिष्ठैःऋजुतमैःपथिभिर्मार्गैःस्नानपानादिभिःनयन्मापयन्वर्तते तदानींअर्यमामित्रोवरुणश्चपरिज्मापरितोगन्तामरुद्गणश्चउपरस्यमेघस्ययोनौवृष्ट्युदकोत्पत्तिस्थानेत्वचंपृञ्चन्ति वृष्ट्युदकस्याच्छादकंप्रदेशंस्वकीयैरायुधैःसंयोजयंति उद्घाटयन्तीतियावत्॥ पियानः स्फायीओप्यायीवृद्धौ बहुलंछन्दसीतिशपोलुक् धातोर्व्यत्ययेनपीभावः अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरःशिष्यते । रजिष्ठैः ऋजुशब्दादिष्ठनिविभाषर्जोश्छन्दसीतिऋकारस्यरत्वम् टेरितिटिलोपः । पृञ्चन्ति पृचीसंपर्के रौधादिकः ॥ ३ ॥

मातरनुवाकस्याग्नेयेक्रतौऔष्णिहेछन्दसिआश्विनशस्त्रेचाग्नेवाजस्येत्याद्यास्तिस्रऋचःसूत्रितंच—अग्नेवाजस्येतितिस्रःपुरस्तात्साम्नइति ।

तृचेप्रथमांसूक्तेचतुर्थीमृचमाह—

अग्नेवाजस्यगोमतईशानःसहसोयहो ।
अस्मेधेहिजातवेदोमहिश्रवः ॥ ४ ॥

अग्ने । वाजस्य । गोऽमतः । ईशानः । सहसः । यहो इति ।
अस्मे इति । धेहि । जातऽवेदः । महि । श्रवः ॥४ ॥

हिरण्यकेशः हितरमणीयाः केशस्थानीयाज्वालायस्यसतथोक्तः सुवर्णवद्रोचमानज्वालोवाअहिः आगत्यहन्तामेघानांधुनिः तेषांकम्पयिता वातइववायुरिवध्रजीमान्शीघ्रगतियुक्तः एवंभूतोवैद्युतोग्निः रजसउदकस्यविसारेविसरणेमेघान्निर्गमनेनिमित्तभूतेसति शुचिभ्राजाः शोभनदीप्तिःसन्मेघान्जलानिनिर्गमयितुंजानाति उषसः उषोदेवताः नवेदाः नविदन्तीतिनवेदाः मेघादुदकस्यनिःसारणंअग्निरेवजानाति उषसस्तुनजानन्तीत्यर्थः अज्ञानेदृष्टान्तः—यशस्वतीः अन्नयुक्ताः अन्नवत्यः अपस्युवः अपः कर्मआत्मनइच्छन्त्यः सत्याः अवितथारंभान एवंभूताःप्रजाइव अत्रोषसामज्ञानेनअग्निः प्रशस्यते नतुतानिन्द्यन्ते नहिनिंदानिन्द्यंनिन्दितुंअपितुस्तुत्यंस्तोतुमितिन्यायात् ॥ ध्रजीमान् ध्रजगतौ इन्सर्वधातुभ्यइतिभावेइन्प्रत्ययः ततोमतुप् तस्यापित्त्वादनुदात्तत्वेइनोनित्त्वात्मातिपदिकस्याद्युदात्तत्वम् । नवेदाः नञ्पूर्वोद्वेत्तेःपचाद्यच् नभ्राण्नपादित्यादिनानञःप्रकृतिभावः । अपस्युवः अपस्शब्दात्सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः तन्वादीनांछन्दसिबहुलमुपसंख्यानमितिउवङ् ॥ १ ॥

द्वितीयामृचमाह—

आ॒ते॑सु॒प॒र्णा अ॑मिनन्तँ॒ एवैः॑कृ॒ष्णोनो॑नाववृ॒ष॒भोयदी॒दम् ।
शि॒वाभि॒र्नस्मय॑मानाभि॒राग॒त्पत॑न्ति॒मिहः॑स्त॒नय॑न्त्य॒भ्रा ॥२॥

आ । ते॒ । सु॒ऽप॒र्णाः । अ॒मि॒न॒न्त॒ । एवैः॑ । कृ॒ष्णः । नो॒ना॒व॒ । वृ॒ष॒भः ।
यदि॑ । इ॒दम् । शि॒वाभिः॑ । न । स्मय॑मानाभिः । आ । अ॒गा॒त् ।
पत॑न्ति । मिहः॑ । स्त॒नय॑न्ति । अ॒भ्रा ॥ २ ॥

हेअग्नेतेतवसुपर्णाः शोभनपतनारश्मयः एवैर्गन्तृभिर्मरुद्भिःसहामिनन्त आसमन्तान्मेघं हिंसन्ति वर्षणार्थंताडयन्ति प्रहृतश्च कृष्णः कृष्णवर्णोवृषभोवर्षितामेघःनोनावभृशंशब्दमकरोत् यदियदाइदमीदृशंकर्म तदानींशिवाभिःसुखकारिणीभिःस्मयमानाभिःहसनवतीभिः कान्तिभिरिवशुभ्रवर्णाभिःफेनयुक्ताभिरिवाद्भिर्विद्युद्भिर्वासहअगात् वैद्युताग्निप्रेरितःपर्जन्यआगच्छतितदनन्तरमिहआपःपतन्ति दिवःसकाशात्प्रवृष्टाभवन्ति अभ्राअभ्राणिअद्भिःपूर्णामेघाः स्तनयन्ति इतस्तनःशब्दंकुर्वन्ति ॥ अमिनन्त मीञ्हिंसायां क्रैयादिकः व्यत्ययेनान्तादेशः ईषाअक्षादित्वात्प्रकृतिभावःअणोप्रगृह्यस्येतिविकल्पिकमवसानेविधीयमानमनुनासिकत्वम् व्यत्ययेनाप्रसंहितायामपिद्रष्टव्यम् । नोनाव नौतेर्यङ्लुगन्तात्लिटिअमन्त्रेइतिनिषेधादाम्प्रत्ययाभावः । स्मयमानाभिः ष्मिङ्ईषद्धसने शपःपित्त्वादनुदात्तत्वं शानचोऽसार्वधातुकस्वरेणधातुस्वरःशिष्यते ।

स्तनयन्ति स्तनशब्दे चुरादिरदन्तः पतन्विस्तनयन्तीत्यनयोःपादादित्वाद्वाक्यादित्वाच्चनिघाताभावः ॥ २ ॥

तृतीयामृचमाह—

यदीमृतस्यपयसापियानोनयन्नृतस्यपथिभीरजिष्ठैः ।
अर्यमामित्रोवरुणःपरिज्मात्वचंपृञ्चन्त्युपरस्ययोनौ ॥३॥

यत् । ईम् । ऋतस्यं । पयसा । पियानः । नयन् । ऋतस्यं ।
पथिऽभिः । रजिष्ठैः । अर्यमा । मित्रः । वरुणः । परिऽज्मा ।
त्वचम् । पृञ्चन्ति । उपरस्य । योनौ ॥ ३ ॥

यदींयदायमग्निः ऋतस्योदकस्यपयसापयोवत्सारभूतेनरसेनपियानोजगदाप्यायनंकुर्वन् आप्यायितंचजगवृतस्योदकस्यसम्बन्धिभिःरजिष्ठैःऋजुतमैःपथिभिर्मार्गैःस्नानपानादिभिःनयन्भापयन्वर्तते तदानींअर्यमामित्रोवरुणश्चपरिज्मापरितोगन्तामरुद्गणश्चउपरस्यमेघस्ययोनौवृष्ट्युदकोत्पत्तिस्थानेत्वचंपृञ्चन्ति वृष्ट्युदकस्याच्छादकंमदेशंस्वकीयैरायुधैःसंयोजयंति उद्घाटयन्तीतियावत्॥ पियानः स्फायीओप्यायीवृद्धौ बहुलंछन्दसीतिशपोलुक् धातोर्व्यत्ययेनपीभावः अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरःशिष्यते । रजिष्ठैः ऋजुशब्दादिष्ठनिविभाषर्जोश्छन्दसीतिऋकारस्यरत्वम् टेरितिटिलोपः । पृञ्चन्ति पृचीसंपर्के रौधादिकः ॥ ३ ॥

मातरनुवाकस्याग्नेयेक्रतौऔष्णिहेछन्दसिआश्विनशस्त्रेचाग्नेवाजस्येत्याद्यास्तिस्रऋचः सूत्रितंच—अग्नेवाजस्येतितिस्रःपुरुत्वात्वामग्नइति ।

तृचेमथमांसूक्तेचतुर्थीमृचमाह—

अग्नेवाजस्यगोमतईशानःसहसोयहो ।
अस्मेधेहिजातवेदोमहिश्रवः ॥ ४ ॥

अग्ने । वाजस्य । गोऽमतः । ईशानः । सहसः । यहो इति ।
अस्मे इति । धेहि । जातऽवेदः । महि । श्रवः ॥४ ॥

हेसहसोयहो बलस्यपुत्राग्ने गोमतोबहुभिर्गोभिर्युक्तस्य वाजस्यान्नस्य ईशानईश्वरस्त्वमसि अतोस्मे अस्मासुहेजातवेदोजातधनजातानांविदितर्वाग्ने महिमभूतंश्रवोन्नं धेहिस्थापय ॥ सहसोयहो पराङ्गवद्भावादामन्त्रितस्यचेतिषष्ठ्यामन्त्रितसमुदायोनिहन्यते । अस्मे सुपांसुलुगितिसप्तम्याः शेआदेशः ॥ ४ ॥

पञ्चमीमृचमाह—

सइधानोवसुंष्कविरग्निरीळेन्योंगिरा । रेवदस्मभ्यंपुर्वणीकदीदिहि ॥ ५ ॥

सः । इधानः । वसुः । कविः । अग्निः । ईळेन्यः । गिरा ।
रेवत् । अस्मभ्यम् । पुरुऽअनीक । दीदिहि ॥ ५ ॥

सोग्निः इधानोदीपनशीलः वसुर्निवासयितासर्वेषांकविः क्रान्तदर्शनोमेधावीवा गिरास्तोत्ररूपयावाचाईळेन्यः स्तोतव्योभवति हेपुर्वणीक अनीकंमुखंपुरुभिर्बह्वीभिरनीकस्थानीयाभिर्ज्वालाभिर्युक्ताग्ने अस्मभ्यं रेवद्धनयुक्तमन्नं यथाभवतितथादीदिहिदीप्यस्व ॥ इधानः ञिइन्धीदीप्तौ ताच्छीलिकश्चानश् बहुलंछन्दसीतिशपोलुक् । ईळेन्यः ईडस्तुतौ औणादिकएन्यप्रत्ययः । रेवत् रयेर्मतौबहुलमितिसम्प्रसारणम् छन्दसीरइतिमतुपोवत्वम् रेशब्दाच्चमतुपउदात्तत्वंवक्तव्यमितिमतुपउदात्तत्वम् । दीदिहि दीदेतिश्छान्दसोदीप्तिकर्मा ॥ ५ ॥

षष्ठीमृचमाह—

क्षपोराजन्नुतत्मनाग्नेवस्तोरुतोषसः ।
सतिग्मजम्भरक्षसोदहप्रति ॥ ६ ॥२७ ॥

क्षपः । राजन् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः ।
सः । तिग्मऽजम्भ । रक्षसः । दह । प्रति ॥ ६ ॥ २७ ॥

हेराजन् राजनशीलाग्ने क्षपःक्षपय राक्षसादीन्स्वकीयैःपुरुषैर्बाधस्व उत अपिच त्मना नकेवलमन्यैरेवआत्मनाचतान् बाधस्व कदेतिचेत् उच्यते वस्तोः सर्वाण्यहानि उतअपिच उषसः उषःकालोपलक्षितारात्रीः अत्यन्तसंयोगेद्वितीया सर्वेष्वहस्सुसर्वासुरात्रिषुचेत्यर्थः हेतिग्मजम्भ तीक्ष्णमुखाग्ने रक्षसोराक्षसान् उक्तप्रकारेणक्षपयित्वासएकत्वं प्रतिदहप्रत्येकंदह नकिंचिद्दग्धव्यमित्युदासेत्यर्थः ॥ क्षपः क्षपक्षान्त्यां टोडर्थेछान्दसोरङ् छन्दस्युभयथेतिशपआर्धधातुकत्वात्

णेरनिटीतिणिलोपः उदात्तनिवृत्तिस्वरेणशपउदात्तत्वम् । त्मना मन्त्रेष्वाङ्यादेरात्मनइत्याकार-लोपः । रक्षसः रक्षपालने रक्षितव्यमस्मादितिरक्षः भीमादित्वादपादाने असिप्रत्ययः क्षरतेर्वाण्य-न्तादसिप्रत्ययेणिलोपः वर्णविपर्ययश्च अस्यच रक्षःशब्दस्य असिप्रत्ययान्तत्वात्प्रत्ययस्वरएव-शिष्यते ॥ ६ ॥

॥ इतिप्रथमस्यपञ्चमेसप्तविंशोवर्गः ॥ २७ ॥

प्रातरनुवाकस्याग्नेयेक्रतौगायत्रेछन्दसिअवानोअग्नइत्याद्याः षळृचः सूत्रितंच—अवानोअ-ग्नइतिषळग्निमीळेग्निंदूतमिति आश्विनशस्त्रेचैताःशंसनीयाः प्रातरनुवाकातिदेशात् ।

षट्सुमध्यमांसूक्तेसप्तमीमृचमाह—

अवानोअग्नऊतिभिर्गायत्रस्यप्रभर्मणि । विश्वासुधीषुवन्द्य ॥ ७ ॥

अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि ।
विश्वासु । धीषु । वन्द्य ॥ ७ ॥

विश्वासुधीषुसर्वेषुकर्मसुवन्द्यस्तुत्य हेअग्ने गायत्रस्यगायत्रसाम्नः गायत्रीछन्दस्कस्यसू-क्तस्यवाप्रभर्मणिप्रभरणेसम्पादनेनिमित्तभूतेसति नोस्मानूतिभिःत्वदीयैः पालनैः अवरक्ष॥ अव द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

आनोअग्नेरयिंभरसत्रासाहंवरेण्यम् । विश्वासुपृत्सुदुष्टरम् ॥ ८ ॥

आ । नः । अग्ने । रयिम् । भर । सत्राऽसहम् । वरेण्यम् । विश्वासु ।
पृत्ऽसु । दुस्तरम् ॥ ८ ॥

हेअग्ने रयिंधनंनोस्मभ्यंआभरप्रयच्छ कीदृशं सत्रासाहंसत्रासहयुगपदेवदारिद्र्यस्यनाशकं वरेण्यंसर्वैर्वरणीयंविश्वासुपृत्सुसर्वेषुसङ्ग्रामेषुदुष्टरंशत्रुभिस्तरीतुमशक्यम् ॥ सत्रासाहं छन्दसि-सहइतिण्विः । वरेण्यं वृञ्एण्यः । पृत्सु पदादिषुमांस्पृत्स्नूनामुपसंख्यानमितिपृतनाशब्दस्यपृ-न्भावः सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ८ ॥

आयुष्कामेष्ट्यांप्रथमस्याज्यभागस्यानुवाक्या आनोअग्नइति सूत्रितंच—आयुष्कामेष्ट्यां-जीवातुमन्तावानोअग्नेसुचेतुनेति । महापितृयज्ञेप्यैवमथमाज्यभागस्यानुवाक्या सूत्रितंच—जीवातुमन्तौसव्योत्तर्युपस्थाइति ।

वामेवांसूक्तेनवमीमृचमाह—

आनोअग्नेसुचेतुनारयिंविश्वायुंपोपसम् । मार्डीकंधेहिजीवसें ॥ ९ ॥

आ । नः । अग्ने । सुऽचेतुना । रयिम् । विश्वायुंऽपोपसम् ।
मार्डीकम् । धेहि । जीवसें ॥ ९ ॥

हेअग्ने नोस्माकंजीवसे जीवनायसुचेतुनाशोभनेनज्ञानेनयुक्तंरयिंधनं आधेहि आस्थापय कीदृशंमार्डीकं मृडीकंसुखं तद्धेतुभूतं विश्वायुपोपसंसर्वस्मिन्नायुषिदेहादेःपोषकं यावज्जीवमस्-दुपभोगपर्याप्तमित्यर्थः ॥ सुचेतुना चितीसंज्ञाने औणादिकउप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्व-म् । विश्वायुपोपसं विश्वमायुरस्मिन्शरीरादौतद्विश्वायुः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदा-न्तोदात्तत्वम् तत्पुष्णातीतिविश्वायुपोपाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुन्पूर्वपदप्र-कृतिस्वरत्वंच सकारलोपश्छान्दसः दीर्घायुत्वायवर्चसइतियथा ॥ ९ ॥

दशमीमृचमाह—

प्रपूतास्तिग्मशोचिषेवाचोगोतमाग्नये । भरस्वसुम्नयुर्गिरः ॥ १० ॥

प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये ।
भरस्व । सुम्नऽयुः । गिरः ॥ १० ॥

हेगोतमसूक्तद्रष्टः सुम्नयुःसुम्नंधनमात्मनइच्छंस्त्वंतिग्मशोचिषेतीक्ष्णज्वालायाग्नयेपूताः शुद्धावाचःअग्नेर्गुणान्सम्यगभिदधतीः गिरःस्तुतीः प्रभरस्व प्रकर्षेणसम्पादय ॥ तिग्मशोचिषे तिजनिशाने युजिरुजितिजांकुत्वंचेतिमक्‌ तिग्मानिशोचींषियस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । सुम्नयुः सुम्नशब्दात्क्यचिनच्छन्दस्यपुत्रस्येतिईत्वदीर्घयोःप्रतिषेधः क्याच्छन्दसीत्युप्रत्ययः ॥ १० ॥

एकादशीमृचमाह—

योनोअग्नेभिदासत्यन्तिदूरेपदीष्टसः । अस्माकमिद्वृधेभव ॥ ११॥

यः । नः । अग्ने । अभिऽदासति । अन्ति । दूरे । पदीष्ट । सः ।
अस्माकम् । इत् । वृधे । भव ॥ ११ ॥

हेअग्ने नोऽस्मान् अन्ति अन्तिकेसमीपेदूरेविप्रकृष्टदेशेवस्थितःसन् यःशत्रुरभिदासति उपक्षपयतिसशत्रुःपदीष्टपततुनश्यतु त्वंच अस्माकमित् अस्माकमेववृधेवर्धनायभव ॥ अभिदासति दसुउपक्षये अस्माण्ण्यन्ताल्लटिछन्दस्युभयथेतिशप् आर्धधातुकत्वात् णेरनिटीतिणिलोपः अन्तिकादिलोपोबहुलमितिवक्तव्यमितिअन्तिकशब्दस्यककारलोपः । वृधे वृधुवृद्धौ सम्पदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ११ ॥

द्वादशीमृचमाह—

सहस्राक्षोविचर्षणिरग्नीरक्षांसिसेधति । होतागृणीतउक्थ्यः॥१२॥२८॥

सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि । सेधति ।
होता । गृणीते । उक्थ्यः ॥ १२ ॥ २८ ॥

सहस्राक्षः असंख्यातज्वालःविचर्षणिःविशेषेणसर्वस्यद्रष्टायमग्निः रक्षांसिसेधतिप्रतिषेधति यज्ञान्निर्गमयति सचाग्निरुक्थ्यःउक्थैःशस्त्रैरस्माभिः स्तूयमानःसन् होतादेवानामाह्वाताभूत्वागृणीते तान्स्तौति ॥ सहस्राक्षः बहुव्रीहौसक्थ्यक्ष्णोरितिषच्समासान्तः सतिशिष्टत्वात्तस्यैवस्वरःशिष्यते । सेधति षिधुगत्यां अत्रकेवलोपिसोपसर्गार्थोद्रष्टव्यः । गृणीते गॄशब्दे प्वादीनांह्रस्वइतिह्रस्वत्वम् ॥ १२ ॥

॥ इतिप्रथमस्यपञ्चमेष्टाविंशोवर्गः ॥ २८ ॥

इत्थेतिषोडशर्चंसप्तमंसूक्तंगौतमस्यार्षमैन्द्रंपंक्तिछन्दस्कम् अनुक्रान्तंच-इत्थाषोळशैन्द्रंपाङ्क्तंहि हिशब्दप्रयोगात्तुह्यादिपरिभाषयाइदमुत्तरेचद्वेपङ्क्तिछन्दस्के पृष्ठ्यषडहस्यपञ्चमेहनिमरुत्वतीयेइदंसूक्तं सूत्रितंच—अविवासीत्थाहीन्द्रपिबतुभ्यमितिमरुत्वतीयमिति। चतुर्विंशेहन्यच्छावाकस्याद्यस्तृचोवैकल्पिकोनुरूपः होत्रकाणामितिखण्डेसूत्रितम्—इत्थाहिसोमइन्मदउभेयदि-

न्द्ररोदसीइति । महाव्रतेनिष्केवल्यस्यदक्षिणपक्षेइत्थाहीत्येका तथैवपञ्चमारण्यकेसूत्रितम्—इत्थाहिसोमइन्मदइतिपङ्क्तिरिति ।

तामेतांसूक्तेप्रथमामृचमाह—

इत्थाहिसोमइन्मदेंब्रह्माचकारवर्धनम् ।
शविष्ठवज्रिन्नोजसापृथिव्यानिःशशाअहिमर्चन्ननुस्वराज्यम् ॥ १ ॥

इत्था । हि । सोमे । इत् । मदे । ब्रह्मा । चकार । वर्धनम् ।
शविष्ठ । वज्रिन् । ओजसा । पृथिव्याः । निः । शशाः । अहिम् ।
अर्चन् । अनु । स्वऽराज्यम् ॥ १ ॥

हेशविष्ठ अतिशयेनबलवन् वज्रिन्वज्रवन्निन्द्र इत्थाहिइत्थमेवअनेनशास्त्रोक्तप्रकारेणैवमदेमदकरेहर्षकरेसोमेत्वयापीतेसति ब्रह्माब्राह्मणः स्तोतावर्धनंतववृद्धिकरंस्तोत्रंचकार अनेनसूक्तेनकृतवान् इदित्येतत्पदपूरणं अतस्त्वंओजसाबलेनपृथिव्याःसकाशादहिंआगत्यहन्तारंवृत्रंनिःशशाःनिःशेषेणअशाःमायाधस्वेति शासनंकृत्वापृथिव्याःसकाशान्निरगमयइत्यर्थः किंकुर्वन् स्वराज्यं स्वस्यराज्यंराजत्वंअनुअनुलक्ष्यअर्चन्पूजयन्स्वस्यस्वामित्वंप्रकटयन्नित्यर्थः ॥शशाः शासुअनुशिष्टौ लङिलुकिमाले बहुलंछन्दसीतिशपःश्लुः । स्वराज्यं राज्ञोभावःकर्मवाराज्यम् पत्यंतपुरोहितादिभ्योयगितियक् तत्रहिराजासइतिपठ्यते स्वस्यराज्यंस्वराज्यम् अकर्मधारयेराज्यं इत्युत्तरपदाद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

सत्वामदद्वृषामदःसोमःश्येनाभृतःसुतः ।
येनावृत्रंनिरद्भ्योजघन्थवज्रिन्नोजसार्चन्ननुस्वराज्यम् ॥ २ ॥

सः । त्वा । अमदत् । वृषा । मदः । सोमः । श्येनऽआभृतः । सुतः ।
येन । वृत्रम् । निः । अत्ऽभ्यः । जघन्थ । वज्रिन् । ओजसा ।
पृथिव्याः । निः । शशाः । अहिम् । अर्चन् । अनु ।
स्वऽराज्यम् ॥ २ ॥

हेइन्द्र त्वात्वांससोमःअमदत्अमदयत् हर्षमापयत् कीदृशःसोमःवृषा सेचनस्वभावःमदः मदकरोहर्षकारीश्येनाभृतःश्येनरूपमापन्नयापक्ष्याकारयागायत्र्या दिवःसकाशादआहृतःसुतःअ-भिषुतः हेइन्द्रवज्रिन्वज्रवन् येनपीतेनसोमेन ओजसाबलकरेणअद्भ्योन्तरिक्षसकाशाद्वृत्रंनिर्जघ-न्थहतवानसि अन्यत्पूर्ववत् ॥ अमदत् मदीहर्षेअस्माण्णिचि मदीहर्षग्लेपनयोरितिघटादिषुपाठात् मित्त्वेसतिमितांह्रस्वइतिह्रस्वत्वम्लङि छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः। अभ्द्यः आपइत्यन्तरिक्षनाम अपोभीतिपकारस्यतत्वम्। जघन्थ क्रादिनियममाप्तस्येटः उपदेशे-त्वतइतिप्रतिषेधः अभ्यासाच्चेतिहकारस्यघत्वम् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् यद्वृत्तयोगा-दनिघातः ॥ २ ॥

तृतीयामृचमाह—

प्रेह्यभीहिधृष्णुहिनतेवज्रोनियंसते।
इन्द्रनृम्णंहितेशवोहनोवृत्रंजयाअपोर्चन्ननुस्वराज्यम् ॥ ३ ॥

प्र । इहि । अभि । इहि । धृष्णुहि । न । ते । वज्रः । नि ।
यंसते । इन्द्र । नृम्णम् । हि । ते । शवः । हनः । वृत्रम् । जयाः ।
अपः । अर्चन् । अनु । स्वऽराज्यम् ॥ ३ ॥

हेइन्द्र प्रेहि प्रकर्षेणगच्छ अभीहि हन्तव्यानशत्रूनाभिमुख्येनप्राप्नुहि प्राप्यचधृष्णुहि तान्शत्रूनभिभव ते तववज्रोननियंसतेशत्रुभिर्ननियम्यते अप्रतिहतगतिरित्यर्थः तथातेशवःत्वदीयंबलं नृम्णंनृणांपुरुषाणांनामकंअभिभावकंहि यस्मादेवंतस्माद्वृत्रमसुरंमेघं वा हनःजहि ततोनन्तरंते-ननिरुद्धाअपः उदकानि जयाः जय वृत्रंहत्वातेनावृतमुदकं लभस्वेत्यर्थः अन्यत्समानम् ॥ यं सते यमेःकर्मणिलेटिसिब्बहुलमितिसिप् लेटोडाटावित्यडागमः। हनः लोडर्थेछान्दसोलङ् बहुलं छन्दसीतिशपोलुगभावः शपःपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते पूर्वपदस्यासमानवाक्यस्थत्वा-न्निघाताभावः। जयाः जयतेर्लेट्याडागमः पूर्ववत्स्वरः ॥ ३ ॥

चतुर्थीमृचमाह—

निरिन्द्रभूम्याअधिवृत्रंजघन्थनिर्दिवः।
सृजामरुत्वतीरवजीवधन्याइमाअपोर्चन्ननुस्वराज्यम् ॥ ४॥

निः । इन्द्र । भूम्याः । अधि । वृत्रम् । जघन्थ । निः । दिवः । सृजा । मरुत्वतीः । अव । जीवऽधन्याः । इमाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ॥ ४ ॥

हेइन्द्र भूम्याअधि भूलोकस्योपरिवृत्रंनिर्जघन्थ निःशेषेणहतवानसि तथादिवोद्युलोकान्निर्जघन्थ हत्वाचइमाःअपोवृष्ट्युदकानिअवसृज अधःपातय कीदृशीरपःमरुत्वतीः मरुद्भिः संयुक्ताः जीवधन्याः जीवाः प्राणिनोधन्याःतृप्तायाभिस्ताः अन्यत्समानम् ॥ ४ ॥

पञ्चमीमृचमाह—

इन्द्रो॑वृ॒त्रस्य॒दोध॑तः॒सानुं॒वज्रे॑ण॒हीळि॑तः ।
अ॒भि॒क्रम्याव॑जिघ्नते॒पः॒सर्मा॑यचो॒दय॒न्नर्च॒न्ननु॑स्व॒राज्य॑म् ॥५॥२९॥

इन्द्रः॑ । वृ॒त्रस्य॑ । दोध॑तः । सानु॑म् । वज्रे॑ण । हीळि॑तः । अ॒भि॒ऽक्रम्य॑ । अव॑ । जि॒घ्न॒ते॒ । अ॒पः । सर्मा॑य । चो॒दय॑न् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ ५ ॥ २९ ॥

हीळितः क्रुद्धइन्द्रः अभिक्रम्यआभिमुख्येनगत्वादोधतः भृशंकम्पयमानस्यवृत्रस्यसानुं समुच्छ्रितंहनुप्रदेशंवज्रेण अवजिघ्नतेप्रहरति किंकुर्वन् अपोवृष्ट्युदकानिसर्मायसरणायनिर्गमनायचोदयनप्रेरयन् ॥ दोधतः धूञ्कम्पने अस्माद्यङ्लुगन्ताच्छतरिअन्त्यलोपश्छान्दसः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । हीळितः हेडृहोडृअनादरे हेळतइत्येतत्क्रुध्यतिकर्मसुपठितम् अस्मान्निष्ठायांवर्णव्यापत्त्याईकारः। जिघ्नते हन्तेर्लटिव्यत्ययेनात्मनेपदं बहुवचनंच बहुलंछन्दसीतिशपःश्लुः इदित्यनुवृत्तौबहुलंछन्दसीत्यभ्यासस्येत्वम् गमहनेत्यादिनोपधालोपः । सर्माय सृगतौ अर्तिस्तुसुस्वित्यादिनाभावेमन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ ५ ॥

॥इतिप्रथमस्यपञ्चमेएकोनत्रिंशोवर्गः ॥ २९॥

षष्ठीमृचमाह—

अधि॒सानौ॒निर्जि॑घ्नते॒वज्रे॑ण॒शत॑पर्वणा ।
म॒न्दा॒नइन्द्रो॒अन्ध॑सः॒सखि॑भ्योगा॒तुमि॑च्छ॒त्यर्च॒न्ननु॑स्व॒राज्य॑म् ॥६॥

अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा । मन्दानः ।
इन्द्रः । अन्धसः । सखिऽभ्यः । गातुम् । इच्छति । अर्चन् ।
अनु । स्वऽराज्यम् ॥ ६ ॥

इन्द्रः शतपर्वणा शतसङ्ख्याकपर्वधाराभिर्युक्तेनवज्रेणसानावधिनिजिघ्नते अधिःसप्तम्यर्थानुवादी समुच्छ्रितेवृत्रस्यकपोलप्रदेशस्थानेनितरांहिनस्ति सचेन्द्रोमन्दानोमन्दमानः स्तूयमानःसन् सखिभ्यः समानख्यानेभ्यः स्तोतृभ्योन्धसोन्नस्यगातुंमार्गमुपायमिच्छति अन्यत्पूर्ववत् ॥ मन्दानः मदिस्तुतौ कर्मणिशानचियक् छन्दस्युभयथेतिशानचआर्धधातुकत्वादतोलोपयलोपौ अनुदात्तेतःपरत्वाच्छानचोलसार्वधातुकानुदात्तत्वेसतियकएवोदात्तत्वम् अनुदात्तेशानचितस्ययकोलोपेसति उदात्तनिवृत्तिस्वरेणशानचउदात्तत्वंप्राप्नोति एवंतर्हिशानचआर्धधातुकत्वादेवलसार्वधातुकानुदात्तत्वाभावे चित्स्वरएवावशिष्यते ॥ ६ ॥

सप्तमीमृचमाह—

इन्द्रतुभ्यमिदद्रिवोनुत्तंवज्रिन्वीर्यम् ।
यद्धत्यंमायिनंमृगंतमुत्वंमाययावधीरर्चन्ननुस्वराज्यम् ॥ ७ ॥

इन्द्र । तुभ्यम् । इत् । अद्रिऽवः । अनुत्तम् । वज्रिन् । वीर्यम् ।
यत् । ह । त्यम् । मायिनम् । मृगम् । तम् । ऊम् इति । त्वम् ।
मायया । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ॥ ७॥

अद्रिरितिमेघनाम हेअद्रिवः वाहनरूपमेघयुक्तवज्रिन्वज्रवन्निन्द्र तुभ्यमित्षष्ठ्यर्थेचतुर्थी तवैववीर्यंसामर्थ्यं अनुत्तंशत्रुभिरतिरस्कृतंयद्ध यस्माद्येनवीर्येणखलुमायिनंमायाविनंत्यं तंप्रसिद्धंवञ्चयितारंलोकोपद्रवकारिणमित्यर्थः मृगं मृगरूपमापन्नं तंवृत्रं त्वमपिमाययैवावधीः हतवानसि ॥ अनुत्तं नसत्तनिषत्तेतिनिपातनान्निष्ठानत्वाभावः । अवधीः हन्तेर्लुङिचेतिवधादेशः सचादन्तः तस्यातोलोपेसतिस्थानिवद्भावात्सिचिवृद्ध्यभावः ॥ ७ ॥

अष्टमीमृचमाह—

वि॒ते॒वज्रा॑सो॒अस्थि॑रन्नव॒तिंना॒व्या॑३॒॑अनु॑ ।
म॒हत्त॑इन्द्रवी॒र्यं॑बा॒ह्वोस्ते॒बलं॑हि॒तमर्च॒न्ननु॑स्व॒राज्य॑म् ॥ ८ ॥

वि । ते॒ । वज्रा॑सः । अ॒स्थि॒र॒न् । न॒व॒तिम् । ना॒व्याः॑ । अनु॑ । म॒हत् । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । बा॒ह्वोः । ते॒ । बल॑म् । हि॒तम् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ ८ ॥

हेइन्द्र तेतववज्रासोवज्राः त्वत्सकाशान्निर्गतान्यायुधानिनाव्याःनावातार्याःनवतिं नवतिसङ्ख्याकाः वृत्रेणनिरुद्धानदीरनु उपलक्ष्यव्यस्थिरन विविधमस्थिपत सर्वत्रव्याप्यवर्तमानंवृत्रंहन्तुंतववज्रःएकोपिअनेकइवासीदित्यर्थः किञ्च इन्द्र तेतववीर्यंमहत्मभूतं अन्यैरजेयमित्यर्थःतथाते बाह्वोः त्वदीययोर्हस्तयोर्बलंहितंनिहितं त्वदीयौबाहूअपि अतिशयेनबलिनावित्यर्थः अन्यत्पूर्ववत् ॥ अस्थिरन् तिष्ठतेर्लुङि समवप्रविभ्यःस्थइत्यात्मनेपदम् मन्त्रेघसेतिच्लेर्लुक् स्थाघ्वोरिच्चेतीत्वम् व्यत्ययेनझस्यरन्नादेशः । नाव्याः नौवयोधर्मेत्यादिनायत् यतोनावइतिपर्युदासात्तित्स्वरितमितिस्वरितत्वम् । बाह्वोः उदात्तयणइतिविभक्त्युदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

स॒हस्रं॑सा॒कम॑र्चत॒परि॑ष्टोभत विंश॒तिः ।
श॒तैन॒मन्व॑नोनवु॒रिन्द्रा॑य॒ब्रह्मोद्य॑तम॒र्च॒न्ननु॑स्व॒राज्य॑म् ॥ ९ ॥

स॒हस्र॑म् । सा॒कम् । अ॒र्च॒त॒ । परि॑ । स्तो॒भ॒त॒ । विं॒श॒तिः । श॒ता । ए॒न॒म् । अनु॑ । अ॒नो॒न॒वुः॒ । इन्द्रा॑य । ब्रह्म॑ । उत्ऽय॑तम् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ।

सहस्रंसहस्रसङ्ख्याकामनुष्याः साकमर्चत एनमिन्द्रंयुगपदेवापूजयन् तथा विंशतिः षोडशर्त्विजः यजमानःपत्नीच सदस्यःशमिताचेतिविंशतिसङ्ख्याकास्तेषांयाविंशतिःसङ्ख्यापरिष्टोभत परितःसर्वतोस्तौत् तथाचशताशतसङ्ख्याकाऋषयः एनमिन्द्रमन्वनोनवुःपुनःपुनः अस्तुवन् अस्माएवेन्द्रायब्रह्मविलक्षणमन्नं उद्यतंदातुमूर्ध्वधृतमतएवंविधइन्द्रः वृत्रमहन्नित्यर्थः अन्यत्पूर्ववत् ॥परिष्टोभत स्तोभतिःस्तुतिकर्मा उपसर्गात्सुनोतीतिषत्वम् । अनोनवुःणुस्तुतौ

अस्माद्यङ्लुगन्ताल्लङि सिजभ्यस्तविदिभ्यश्चेतिझेरुसादेशः । उद्यवं यमउपरमे उत्पूर्वोदस्मा-त्कर्मणिनिष्ठा अनुदात्तोपदेशेत्यादिनानुनासिकलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ ९ ॥

दशमीमृचमाह—

इन्द्रोवृत्रस्यतविषींनिरहन्त्सहसासहः ।
महत्तदस्यपौंस्यंवृत्रंजघन्वाँअसृजदर्चन्ननुस्वराज्यम् ॥ १० ॥ ३० ॥

इन्द्रः । वृत्रस्य । तविषीम् । निः । अहन् । सहसा । सहः । महत् ।
तत् । अस्य । पौंस्यम् । वृत्रम् । जघन्वान् । असृजत् । अर्चन् ।
अनु । स्वऽराज्यम् ॥ १० ॥ ३० ॥

इन्द्रःवृत्रस्यासुरस्यतविषींबलं स्वकीयेनबलेननिरहन् हतवान्सहसासहनेनाभिभवसा-धनेनायुधेनसहःअभिभवसाधनम् वृत्रायुधंनिरहन् हतवान् अस्येन्द्रस्यतत्पौंस्यंबलंमहत्अ-तिप्रौढंयस्मादयंवृत्रंजघन्वान्हतवान् हत्वाच तन्निरुद्धाअपः असृजत् तस्माद्वृत्रान्निरगमयत् । अन्यत्पूर्ववत् ॥ पौंस्यं पुंसअभिवर्धने चुरादिः अचोयदितियत् यतोनावइत्याद्युदात्तत्वम् । जघन्वान् हन्तेर्लिटःक्वसुः विभाषागमहनविदेतिइटोविकल्पादिडभावः अभ्यासाच्चेत्यभ्या-सादुत्तरस्यहन्तेर्हकारस्यघत्वम् ॥ १० ॥

॥ इतिप्रथमस्यपञ्चमेत्रिंशोवर्गः ॥ ३० ॥

एकादशीमृचमाह—

इमेचित्तवमन्यवेवेपेतेभियसामही ।
यदिन्द्रवज्रिन्नोजसावृत्रंमरुत्वाँअवधीरर्चन्ननुस्वराज्यम् ॥ ११ ॥

इमे इति । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति ।
यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः ।
अर्चन् । अनु । स्वऽराज्यम् ॥ ११ ॥

महीमहत्यौ इमेद्यावापृथिव्यौअपि हेइन्द्र तवमन्यवेत्वदीयकोपात् भियसाभीत्यावेपेते कम्पेते हेवज्रिन्वज्रवन्निन्द्र मरुत्वान्मरुद्भिर्युक्तस्त्वं ओजसाबलेनयद्यदावृत्रमवधीः तदानीं

द्यावापृथिव्यावपिभयेनअकम्पिपातामित्यर्थः ॥ वेपेते टुवेपृकम्पने । भियसा ञिभीभये औणादिकःकसिमत्ययः ॥ ११ ॥

द्वादशीमृचमाह—

नवेपसानतन्यतेन्द्रंवृत्रोविबीभयत् ।
अभ्येनंवज्रआयसःसहस्रभृष्टिरायतार्चन्ननुस्वराज्यम् ॥ १२ ॥

न । वेपसा । न । तन्यता । इन्द्रम् । वृत्रः । वि । बीभयत् । अभि । एनम् । वज्रः । आयसः । सहस्रऽभृष्टिः । आयत । अर्चन् । अनु । स्वऽराज्यम् ॥ १२ ॥

वृत्रःइन्द्रंवेपसास्वकीयेनवेपनेनकम्पनेन नविबीभयत् भीतंनाकरोत् तथातन्यतास्वकीयेनघोरेणगर्जनशब्देननविबीभयत् अपिचेन्द्रेणविसृष्टआयसः अयोमयःसहस्रभृष्टिः अनेकाभिर्धाराभिर्युक्तोवज्रः एनंवृत्रंअभ्यायत हन्तुमाभिमुख्येनागच्छत् अन्यत्पूर्ववत् ॥ तन्यता स्तनशब्दे कृतन्यजीत्यादिनातनोतेर्विधीयमानोयतुच्बहुलवचनादस्मादपिभवति अतएवसलोपश्च सुपांसुलुगितितृतीयायाडादेशः उदात्तनिवृत्तिस्वरेणतस्योदात्तत्वम् । बीभयत् ञिभीभये हेतुमतिणिच् अत्रवेपनस्तन्यतुभ्यांभयं नहेतोःवृत्रादितिहेतुभयाभावाद्बिभेतेर्हेतुभयइत्यात्वाभावः ण्यन्तालुङिच्लेश्चङादि । आयत अयपयगतौ भौवादिरात्मनेपदी ॥ १२ ॥

त्रयोदशीमृचमाह—

यद्वृत्रंतवचाशनिंवज्रेणसमयोधयः ।
अहिमिन्द्रजिघांसतोदिवितेबद्बधेशवोर्चन्ननुस्वराज्यम् ॥ १३ ॥

यत् । वृत्रम् । तव । च । अशनिम् । वज्रेण । सम्ऽअयोधयः । अहिम् । इन्द्र । जिघांसतः । दिवि । ते । बद्बधे । शवः । अर्चन् । अनु । स्वऽराज्यम् ॥ १३॥

हेइन्द्र यद्यदावृत्रंतवहननार्थंतेनसृष्टामशनिंवज्रंवज्रेणसमयोधयः सम्यक्प्राहार्षीः तदानीमहिमागत्यहन्तारंवृत्रंजिघांसतोहन्तुमिच्छतस्तेतवशवोवलंदिविबद्बधेबद्धमनुस्यूतं व्याप्तमा-

सीव् शिष्टंपूर्ववत्॥ जिघांसतः हन्तेरिच्छार्थेसनिअज्झनगमांसनीत्युपधादीर्घत्वम् ।वद्‌धे वधव-न्वने कर्मणिलिडित्यत्ययेनहत्त्यादिशेषाभावः॥ १३ ॥

चतुर्दशीमृचमाह—

अ॒भि॒ष्ट॒नेते॑अद्रि॒वो॒यत्स्था॒जग॑च्च॒रेज॑ते ।
त्वष्टा॑चि॒त्तव॑म॒न्यव॒इन्द्र॑वेवि॒ज्यते॑भि॒यार्च॒न्ननु॑स्व॒राज्य॑म् ॥ १४ ॥

अ॒भि॒ऽस्त॒ने । ते॒ । अ॒द्रि॒ऽव॒ः । यत् । स्थाः । जग॑त् । च॒ । रे॒ज॑ते॒ ।
त्वष्टा॑ । चि॒त् । तव॑ । म॒न्यवे॑ । इन्द्र॑ । वे॒वि॒ज्यते॑ । भि॒या । अर्च॑न् ।
अनु॑ । स्व॒ऽराज्य॑म् ॥ १४ ॥

हेअद्रिवोवज्रिन्निन्द्र तेतव अभिष्टनेसिंहनादेसतियत्स्थाः स्थावरंजगत् जंगमंचयदस्तितदु-भयंरेजतेकम्पते त्वष्टाचित् वज्रनिर्मातात्वष्टापितवमन्यवेत्वदीयायकोपायभियाभीत्यावेविज्यते भृशंकम्पते अन्यत्समानम् ॥ स्थाः तिष्ठतेःक्विप्चेतिक्विप् । वेविज्यते ओविजीभयचलनयोः अस्माक्रियासमभिहारेयङ् सन्यङोरितिद्विर्भावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयङएवस्वरः-शिष्यते । इन्द्रेत्यस्यपादादौवर्तमानस्यामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्त्वेसति अस्यपा-दादित्वादपादादावितिपर्युदासान्निघाताभावः ॥ १४ ॥

पञ्चदशीमृचमाह—

न॒हिनुयाद॑धी॒मसीन्द्रं॒कोवी॒र्या॑प॒रः ।
तस्मि॑न्नृ॒म्णमु॒तक्रतुं॑दे॒वाओजां॑सि॒संद॑धु॒रर्च॒न्ननु॑स्व॒राज्य॑म् ॥१५॥

न॒हि । नु॒ । यात् । अ॒धि॒ऽइ॒मसि॑ । इन्द्र॑म् । कः । वी॒र्या॑ । प॒रः ।
त॒स्मि॑न् । नृ॒म्णम् । उ॒त । क्रतु॑म् । दे॒वाः । ओजां॑सि । सम् । द॒धुः॒ ।
अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ १५ ॥

यात्यान्तंसर्वत्रव्याप्यवर्तमानमिन्द्रंनहिन्वधीमसि वयंनखवगच्छामः यतोवयमल्पाः पर-इत्येतत्सकारान्तमव्ययंवैदूर्यमाचष्टे परोदिवापरएनेतियथापरः परस्तात् अतिदूरेमनुष्यैः अन-

वगाह्येस्थानेवीर्यावीर्येणसामर्थ्येनवर्तमानमिन्द्रंकोमनुष्योजानीयात् नकोपीत्यर्थः कस्मादिति चेदत्राह तस्मिन्निति यस्मात् तस्मिन्निन्द्र देवाः नृम्णंधनं उत अपिच क्रतुंवीर्यंकर्म ओजांसिबलानिचसन्दधुः स्थापयाञ्चक्रुः तस्मादित्यर्थः ॥ यात् यामापणे अस्माल्लटःशतृ सुपांसुलुगिति द्वितीयायालुक् । अधीमसि इण्गतौ इदन्तोमसिः । वीर्या सुपांसुलुगितितृतीयायाआकारः ॥ १५ ॥

षोडशीमृचमाह—

यामथर्वामनुंष्पितादुध्यङ्धियमत्नत ।
तस्मिन्ब्रह्माणिपूर्वथेन्द्रउक्थासमंग्मताचन्ननुंस्वराज्यम् ॥ १६ ॥

याम् । अथर्वा । मनुः । पिता । दध्यङ् । धियम् । अत्नत । तस्मिन् । ब्रह्माणि । पूर्वऽथा । इन्द्रे । उक्था । सम् । अग्मत । अर्चन् । अनु । स्वऽराज्यम् ॥ १६ ॥ ३१ ॥

अथर्वाएतत्संज्ञकऋषिः पितासर्वासांप्रजानांपितृभूतोमनुश्चदध्यङ् अथर्वणःपुत्रएतत्संज्ञकऋषिश्चयांधियमत्नत यत्कर्मातन्वत अकुर्वन् तस्मिन्कर्मणियानिब्रह्माणिहविर्लक्षणान्यन्नानि उक्था शस्त्ररूपाणिस्तोत्राणिचयानिसन्ति तानिसर्वाणितस्मिन्निन्द्रेसमग्मतसमगच्छन्त तत्रदृष्टान्तः—पूर्वथा पूर्वेषामन्येषांवसिष्ठादीनांयज्ञेषुयथाहवींषिस्तोत्राणिचइन्द्रेणसङ्गच्छन्ते तद्वद्यइन्द्रः स्वराज्यंस्वस्यराजत्वं अन्वर्चन् अनुपूजयन् वृत्रवधादिरूपेणकर्मणास्वकीयमधिपतित्वंप्रकटयन्नित्यर्थः॥ अत्नत तनुविस्तारे बहुलंछन्दसीतिविकरणस्यलुक् तनिपत्योश्छन्दसीत्युपधालोपः। पूर्वथा प्रत्नपूर्वविश्वेमात्थाल्छन्दसीतिइवार्थेपूर्वशब्दात्थाल्प्रत्ययः लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् । उक्था शेश्छन्दसिबहुलमितिशेर्लोपः । समग्मत समोगम्यृच्छीत्यात्मनेपदम् लुङि मन्त्रेघसेतिच्लेर्लुक् गमहनेत्यादिनोपधालोपः ॥ १६ ॥

॥ इतिप्रथमस्यपञ्चमेएकत्रिंशोवर्गः ॥ ३१ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेपञ्चमोध्यायःसमाप्तः ॥५॥

## ॥ श्रीगणेशाय नमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत्। निर्ममेतमहंवंदेविद्यातीर्थमहेश्वरम् ॥ १ ॥
दाशतय्यापञ्चमोयमध्यायोव्याकृतःपुरा। धीमतासायणार्येणषष्ठोऽध्यायोऽथवर्ण्यते ॥१॥

प्रथममण्डलेत्रयोदशानुवाकेसप्तसूक्तानिव्याख्यातानि इन्द्रोमदायेतिनवर्चमष्टमंसूक्तम् अत्रा-नुक्रम्यते-इन्द्रोनवेति ऋषिश्चान्यस्मादृषेरितिपरिभाषयारहूगणपुत्रस्यगोतमस्यानुवृत्तेरस्यसूक्त-स्यसऋषिः पूर्वसूक्तेपाङ्क्तं हीत्युक्तत्वात् तुह्यादिपरिभाषयाइदमुत्तरंचसूक्तंपाङ्क्तं अनादेशपरिभाषये-न्द्रोदेवता पृष्ठ्यस्यपञ्चमेहनिनिष्केवल्यशस्त्रेइदंसूक्तम् सूत्रितंच-मेदंव्रतेन्द्रोमदायसत्रामदासइ-तिनिष्केवल्यमिति आरंभणीयेचातुर्विंशिकेहनिमाध्यन्दिनेसवनेब्राह्मणाच्छंसिनःशस्त्रे इन्द्रो-मदायेति आद्यस्तृचोवैकल्पिकस्तोत्रियः होत्रकाणामितिखण्डेसूत्रितम्—इन्द्रोमदायवावृधेमदे-मदेहिनोददिरिति। महाव्रतेनिष्केवल्येउत्तरपक्षे इन्द्रोमदायेत्येकाशंसनीया तथैवपञ्चमारण्य-केसूत्रितम्-इन्द्रोमदायवावृधइतिपङ्क्तिःसूददोहाइति।

तामेतांसूक्तेप्रथमामृचमाह—

ओम् इन्द्रो॒मदा॑यवावृधे॒शव॑सेवृत्र॒हानृभिः॑।
तमिन्म॒हत्स्वा॒जिषू॒तेमर्भे॑हवामहे॒सवाजे॑षु॒प्रनो॑ऽविषत्॥ १ ॥

इन्द्रः॑। मदा॑य। व॒वृ॒धे॒। शव॑से। वृ॒त्र॒ऽहा। नृऽभिः॑। तम्। इत्।
म॒हत्ऽसु॑। आ॒जिषु॑। उ॒त। ई॒म्। अर्भे॑। ह॒वा॒म॒हे॒। सः। वाजे॑षु।
प्र। नः॒। अ॒वि॒ष॒त्॥ १ ॥

वृत्रहावृत्रस्यावरकस्यवृष्टिनिरोधकस्यमेघस्यासुरस्यवाहन्ता यद्वा आवरकाणांशत्रूणांह-न्ताइन्द्रः मदायहर्षार्थंशवसे बलनीमतत् बलार्थंच नृभिर्यज्ञस्यनेतृभिर्ऋत्विग्भिः ववृधे स्तोत्रशस्त्र-रूपाभिःस्तुतिभिः सवर्धितोबभूव स्तुत्याहिदेवतामाप्तबलासतीप्रवर्धते तमित् तमेवेन्द्रंमहत्सुप्रभू-तेषुआजिषुसंग्रामेषुहवामहे अस्माकंरक्षणायाह्वयामहे उतअपिचईमेनमर्भेऽल्पेसंग्रामेहवामहे अस्माभिराहूतःसचेन्द्रोवाजेषुसङ्ग्रामेषुनोऽस्मान्प्राविषत्प्रावतुप्रकर्षेणरक्षतु॥ ववृधे वृधेःकर्मणि-

लिट् संहितायामभ्यासस्य अन्येषामपिदृश्यतइतिदीर्घत्वम् तुजादित्वेहितूतुजानइतिवत्पदकाले दीर्घःश्रूयते । नृभिः सावेकाचइतिप्राप्तस्यविभक्त्युदात्तत्वस्यनृचान्यतरस्यामितिप्रतिषेधः । हवामहे ह्वयतेर्लेटिह्वइत्यनुवृत्तौबहुलंछन्दसीतिसंप्रसारणम् शपिगुणावादेशौ । अविषत अवरक्षणे लेटचडागमः इतश्चलोपइतीकारलोपः सिब्बहुलंलेटीतिसिप् तस्यार्धधातुकत्वाद्वलादिलक्षणइट् ॥१॥

द्वितीयामृचमाह—

अ॒सि॒हि्वी॑र॒सेन्यो॒ऽसि॒भूरि॑परादु॒दिः ।
अ॒सि॑द॒भ्रस्य॑चिद्वृ॒धोयज॑मानायशिक्षसि॒सु॒न्व॒तेभूरि॑ते॒वसु॑ ॥ २॥

असि॑ । हि । वी॒र॒ । सेन्यः॑ । असि॑ । भूरि॑ । प॒रा॒ऽद॒दिः । असि॑ । द॒भ्रस्य॑ । चि॒त् । वृ॒धः । यज॑मानाय । शि॒क्ष॒सि॒ । सु॒न्व॒ते । भूरि॑ । ते॒ । वसु॑ ॥ २ ॥

हेवीर शत्रुक्षेपणकुशलेन्द्र त्वंसेन्योऽसि सेनार्होभवसि त्वमेकोऽपिसेनासदृशोभवसीत्यर्थः हियस्मादेवंतस्माद्भूरिप्रभूतंशत्रूणांधनंपरादुदिः परादाताशत्रूणांपराङ्मुखंयथाभवतितथाआदातासिभवसि दभ्रस्यचित् अल्पनामैतत् अल्पस्यापितवस्तोतुःवृधोवर्धयितासि तथायजमानाययागंकुर्वतेसुन्वतेसोमाभिषवंकुर्वतेपुरुषायशिक्षसि अपेक्षितंधनंददासि शिक्षतिर्दानकर्मा यस्मात्तेतववसुधनंभूरिबहुलंअक्षय्यंविद्यते तस्माद्ददासीतिभावः ॥ परादुदिः डुदाञ्दाने आदृगमहनजनइतिकिप्रत्ययः लिड्वद्भावाद्द्विर्वचनेह्रस्वत्वम् आतोलोपइटिचेत्याकारलोपः । वृधः वृधेरन्तर्भावितण्यर्थात् इगुपधलक्षणःकः । सुन्वते शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

यदु॒दीर॑तआ॒जयो॑धृ॒ष्णवे॑धीयते॒धना॑ ।
यु॒क्ष्वाम॑द॒च्युता॒हरी॒कंहनः॒कंवसौ॑दधो॒ऽस्माँइ॑न्द्र॒वसौ॑दधः ॥३॥

यत् । उ॒त्ऽईर॑ते । आ॒जयः॑ । धृ॒ष्णवे॑ । धी॒य॒ते॒ । धना॑ । यु॒क्ष्व । म॒द॒ऽच्युता॑ । हरी॒ इति॑ । कम् । हनः॑ । कम् । वसौ॑ । द॒धः॒ । अ॒स्मान् । इ॒न्द्र॒ । वसौ॑ । द॒धः॒ ॥ ३ ॥

---

१ नि० १.७. ।

अत्रेदमाख्यानम्—रहूगणपुत्रोगोतमःकुरुसृञ्जयानांराज्ञांपुरोहितआसीत् तेषांराज्ञांपरैःसहयुद्धेसति सऋषिरनेनसूक्तेनेन्द्रंस्तुत्वास्वकीयानांजयंप्रार्थयामासेति । तस्यचतत्पुरोहितत्वंवाजसनेयिभिराम्नातम्—गोतमोहवैराहूगणउभयेषांकुरुसृञ्जयानांपुरोहितआसीदिति । यद्यदाआजयःसङ्ग्रामाःउदीरतेउद्गच्छन्ति उत्पद्यन्ते तदानींधनाधनंधृष्णवे योधृष्णुः धर्षयिता शत्रूणांजेताभवति तस्मैधीयतेनिधीयते जयतोधनंभवतीत्यर्थः हेइन्द्र त्वंतादृशेषुयुद्धेषु प्रवृत्तेषुमदच्युताशत्रूणांमदस्यगर्वस्यच्यावयितारौहरीत्वदीयावश्वौयुक्ष्वरथेयोजय योजयित्वाच कं कंचिद्राजानंतवपरिचरणमकुर्वन्तं हनः हन्याः कंचनत्वांपरिचरन्तं वसौवसुनिधनेदधःस्थापयसि अतोजयपराजययोस्त्वमेवकारयितासि तस्मात् हेइन्द्र अस्मानस्मदीयान् राज्ञोवसौधने दधःस्थापय ॥ उदीरते ईरगतौ आशादिकः अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरएवशिष्यते यद्वृत्तयोगादनिघातः । धना सुपांसुलुगितिडादेशः । युक्ष्व युजिर्योगे अन्तर्भावितण्यर्थाल्लोटि बहुलंछन्दसीतिविकरणस्यलुक् द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । हनः हन्तेर्लेटिसिप्यडागमः हनश्चदधश्चेतिचार्थमतीतेश्चादिलोपेविभाषेतिप्रथमायास्तिङ्विभक्तेर्निघातमतिषेधः वसौलिङ्गव्यत्ययः । दधः दधधारणे लेटिव्यत्ययेनपरस्मैपदम् ॥ ३ ॥

चतुर्थीमृचमाह—

क्रत्वा॑म॒हाँअ॑नुष्व॒धंभी॒मआवा॑वृधे॒शवः॑ ।
श्रि॒यऋ॒ष्वउ॑पा॒कयो॒र्निशि॒प्रीह॒रि॑वान्दधे॒हस्त॑यो॒र्वज्र॑माय॒सम् ॥४॥

क्रत्वा॑ । म॒हान् । अ॒नु॒ऽस्व॒धम् । भी॒मः । आ । व॒वृ॒धे॒ । शवः॑ । श्रि॒ये । ऋ॒ष्वः । उ॒पा॒कयोः॑ । नि । शि॒प्री । हरि॑ऽवान् । द॒धे॒ । हस्त॑योः । वज्र॑म् । आ॒य॒सम् ॥ ४ ॥

क्रत्वाकर्मणाप्रज्ञयावा महान्सर्वाधिकः भीमः शत्रूणांभयंकरः इन्द्रः अनुष्वधं स्वधेत्यन्ननाम स्वधायां विभक्त्यर्थेऽव्ययीभावः सोमलक्षणस्यान्नस्यपानेसतीत्यर्थः शवः आत्मीयंबलं आववृधे आभिमुख्येनावर्धयत् तदनन्तरं ऋष्वोदर्शनीयः शिप्री शिप्रेहनूनासिकेवा तद्युक्तः हरिवान् हरिनामकाश्वोपेतइन्द्रउपाकयोः अन्तिकनामैतत् समीपवर्तिनोर्हस्तयोर्बाह्वोः आयसं अयोमयं वज्रं श्रिये संपदर्थंनिदधेनिदधाति स्थापयति सोमपानेनहृष्टःप्रबलइन्द्रः शत्रूणांहन-

नायहस्तेवज्रंगृह्णातीतितात्पर्यार्थः ॥ कृत्वा जसादिषुछन्दसिवावचनमितीनाभावस्यविकल्पितत्वादभावः । आयसं तस्यविकारइत्यणूप्रत्ययः ॥ ४ ॥

पञ्चमीमृचमाह—

आपंप्रौपार्थिवंरजोंबद्बधेरोंचनादिवि ।
नत्वावाँइन्द्रकश्चनजातोनजंनिप्यतेतिविश्वंववक्षिथ ॥५॥१॥

आ । पप्रौ । पार्थिवम् । रजः । बद्बधे । रोचना । दिवि । न । त्वाऽवान् । इन्द्र । कः । चन । न । जातः । न । जनिष्यते । अति । विश्वम् । ववक्षिथ ॥ ५ ॥ १ ॥

इन्द्रः स्वतेजसापार्थिवं पृथिव्याःसंबन्धिवस्तुजातं रजोऽन्तरिक्षलोकंचआपप्रौआपूरयति तथादिविद्युलोकेरोचनारोचमानानिदीप्तानिनक्षत्राणिबद्बधेबबंध स्थापितवान् अतोहेइन्द्र त्वावान् त्वत्सदृशःकश्चनजातोनोत्पन्नोऽस्ति नचजनिष्यतेउत्पत्स्यमानोऽपिनास्ति तादृशस्त्वंविश्वंसर्वंरक्षितव्यंजगत् अतिववक्षिथअतिशयेनवोढुमिच्छसि सर्वस्यजगतोनिर्वाहकोभवसीत्यर्थः ॥ पप्रौ प्रापूरणे लिटि आतऔणलइत्यौकारादेशः । पार्थिवं पृथिव्याञ्ञावित्यञ्प्रत्ययः ञित्वादाद्युदात्तत्वम् । रजः रजन्त्यस्मिन्गन्धर्वादयइतिरजोऽन्तरिक्षं रञ्जरागे असुनिरजकरजनरजस्सूपसंख्यानमितिनलोपः । बद्बधे बधबन्धने लिटिव्यत्ययेनहलादिशेषाभावः एकहल्मध्यगतत्वाभावादेत्वाभ्यासलोपावपिनस्तः पादादित्वान्निघाताभावः । त्वावान् वतुप्प्रकरणे युष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानमितिवतुप् आसर्वनाम्नइत्यात्वम् । ववक्षिथ वहप्रापणे अस्मादिच्छासनि सन्यतइतीत्वस्यसर्वेविधयश्छन्दसिविकल्प्यन्तइत्यभावः सन्नन्ताल्लिटि अमन्त्रेइतिप्रतिषेधादाम्प्रत्ययाभावः ॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेप्रथमोवर्गः ॥ १ ॥

षष्ठीमृचमाह—

योअर्योमर्तभोजनंपरादुदातिदाशुषे ।
इन्द्रोअस्मभ्यंशिक्षतुविभंजाभूरितेवसुंभक्षीयतवराधसः ॥६॥

यः । अर्यः । मर्तंऽभोजनम् । पराऽददाति । दाशुषे । इन्द्रः ।
अस्मभ्यम् । शिक्षतु । वि । भज । भूरिं । ते । वसुं । भक्षीय ।
तवं । राधंसः ॥ ६ ॥

अर्यःस्वामीपालयितायइन्द्रः मर्तभोजनंसर्वैर्मनुष्यैरुपभोज्यमन्नंदाशुषेचरुपुरोडाशादीनि दत्तवतेयजमानायपराददातिप्रयच्छति सइन्द्रोऽस्मभ्यंशिक्षतु तादृशमन्नंददातु अवशिष्टपादद्वयंमन्त्यक्षकृतं हेइन्द्रअस्मभ्यंदातुंधनंविभज विभक्तंकुरु यतस्तेतववसुधनंभूरिबहुलमसंख्यातं अतस्तवराधसोधनस्यएकदेशंभक्षीयभजेय प्राप्नुयाम् ॥ पराददाति अभ्यस्तानामादिरित्याद्युदात्तत्वम् तिङिचोदात्तवतीतिगतेरनुदात्तत्वम्।दाशुषे दाशृदाने दाश्वान्साह्वानितिक्कसुप्रत्ययान्तोनिपात्यते चतुर्थ्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् । भक्षीय भजसेवायां प्रार्थनायांलिङि तस्यछन्दस्युभयथेत्यार्धधातुकत्वाच्छबभावः सलोपाभावश्च एकाचइतीट्प्रतिषेधः आगमानुदात्तत्वेप्रत्ययस्वरएवशिष्यते पूर्वपदस्यासमानवाक्यगतत्वान्निघाताभावः समानवाक्येनिघातयुष्मदस्मदादेशावक्तव्याइतिवचनात् ॥ ६ ॥

चातुर्विंशिकेऽहनिमाध्यन्दिनसवनेब्राह्मणाच्छंसिनोमदेमदेहिनोददिरितिवैकल्पिकोनुरूपस्तृचः होत्रकाणामितिखण्डेसूत्रितम्—मदेमदेहिनोददिः शुरूपकृत्नुमूतयइति ।

तृचेप्रथमांसूक्तेसप्तमीमृचमाह—

मदेमदेहिनोददिर्यूथागवामृजुक्रतुः ।
संगृभायपुरूशतोभयाहस्त्यावसुंशिशीहिरायआभर ॥७॥

मदेंऽमदे । हि । नः । ददिः । यूथा । गवाम् । ऋजुऽक्रतुः । सम् ।
गृभाय । पुरु । शता । उभयाहस्त्या । वसुं । शिशीहि । रायः ।
आ । भर ॥ ७ ॥

मदेमदेसोमपानेनहर्षेहर्षेसति ऋजुक्रतुःऋजुकर्मासइन्द्रोनोऽस्मभ्यंगवांयूथानिददिःहि गोयूथानांदाताखलु हेइन्द्र सत्वंपुरु पुरूणिप्रभूतानि शताशतसंख्याकानि अपरिमितानीत्यर्थः वसुवसूनि धनानिउभयाहस्त्या उभाभ्यांहस्ताभ्यां संगृभायअस्मभ्यंदातुं सम्यक् गृहाण शिशीहि अस्मांस्तीक्ष्णीकुरु निशितबुद्धियुक्तान्कुर्वित्यर्थः रायोधनानिहस्तयोःस्थितानिआभर

आहरप्रयच्छ ॥ ददिः डुदाञ्दाने आदृगमहनजनइतिकिप्रत्ययः । यूथा शेश्छन्दसिबहुलमितिशेर्लोपः । गवां सावेकाचइतिप्राप्तस्यनगोश्वन्त्सावर्णेतिप्रतिषेधः । गृभाय ग्रहउपादाने लोटिहौ छन्दसिशायजपीतिश्नाप्रत्ययस्यशायजादेशः हृग्रहोर्भइतिभत्वम् । उभयाहस्त्या उभयहस्तशब्दादुत्तरस्यतृतीयाद्विवचनस्यसुपांसुलुगितिडाद्यादेशः अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घत्वम् समासान्तोदात्तत्वेउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । वसु सुपांसुलुगितिविभक्तेर्लुक् । शिशीहि शोतनूकरणे बहुलंछन्दसीतिविकरणस्यश्लुः आदेचइत्यात्वं इदित्यनुवृत्तौ बहुलंछन्दसीत्यभ्यासस्येत्वं ईहल्यघोरितिधातोरीत्वं पादादित्वान्निघाताभावः । रायः ऊडिदमितिविभक्तेरुदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

मादयस्वसुतेसचाशवसेशूरराधसे ।
विद्माहित्वांपुरूवसुमुपकामान्त्ससृज्महेथानोविताभव ॥८॥

मादयस्व । सुते । सचा । शवसे । शूर । राधसे । विद्म । हि । त्वा । पुरुऽवसुम् । उप । कामान् । ससृज्महे । अथ । नः । अविता । भव ॥ ८ ॥

हेशूरशौर्यवन्निन्द्र सुते सोमेअभिषुतेसतिआगत्य सचास्माकंसखासन्मादयस्व तेनसोमेनतृप्तोभव किमर्थं शवसेबलार्थराधसेस्माकंधनार्थंच त्वात्वांपुरूवसुंबहुधनंविद्माहिवयं जानीमःखलु अतोऽस्मदीयान्कामान् माभागवावत्सानिव त्वयाउपससृज्महेहि त्वया खल्वेकीकुर्मः अथानन्तरं नोऽस्माकं अविताअभिलषितफलप्रदानेनरक्षिताभव ॥ मादयस्व मदतृप्तियोगे चुरादिरात्मनेपदी अदुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचएवस्वरःशिष्यते । ससृज्महे सृजविसर्गे बहुलंछन्दसीतिविकरणस्यश्लुः प्रत्ययाद्युदात्तत्वम् अत्रापिशब्दानुपह्नाव छन्दस्यनेकमपिसाकांक्षमितिनिघातप्रतिषेधः ॥ ८ ॥

नवमीमृचमाह—

एतेतंइन्द्रजन्तवोविश्वंपुष्यन्तिवार्यम् ।
अन्तर्हिख्योजनानामर्योवेदोअदाशुषांतेषांनोवेदआभर ॥९॥ २॥

एते । ते । इन्द्र । जन्तवः । विश्वम् । पुष्यन्ति । वार्यम् । अन्तः ।
हि । ख्यः । जनानाम् । अर्यः । वेदः । अदाशुषाम् । तेषाम् । नः ।
वेदः । आ । भर ॥ ९ ॥ २ ॥

हेइन्द्र तेतवस्वभूताएतेजन्तवोयजमानलक्षणाजनाः विश्वंसर्वंवार्यं सर्वैःसंभजनीयंहविः पुष्यन्तिवर्धयन्ति अदाशुषां हविषामदातॄणांजनानांअन्तर्मध्येविद्यमानंवेदोधनं अर्यःसर्वेषांस्वामीत्वंख्योहि पश्यसिहि जानासीत्यर्थः तेषामयजमानानांवेदोधनंनोस्मभ्यंआभर आहृत्यप्रयच्छेतियावत् अयजमानेषुविद्यमानंधनंयागानुपयुक्तत्वाद्व्यर्थमेवभवेत् अतस्तस्यधनस्य सार्थकत्वायतदीयंधनमपहृत्य यजमानेभ्यःप्रयच्छेतिवातात्पर्यार्थः ॥ ख्यः ख्याप्रकथने अयंदर्शनार्थोपि वर्तमानेछान्दसोलुङ् अस्यतिवक्तीत्यादिनाच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः बहुलंछन्दस्यमाङ्योगेऽपीत्यडभावः हिचेतिनिघातप्रतिषेधः ॥ ९ ॥

॥ इतिप्रथमस्यपष्ठेद्वितीयोवर्गः ॥ २ ॥

उपोष्विितिषळ्र्चंनवमंसूक्तम् गोतमस्यार्षमैन्द्रं अन्त्याजगती आद्याःपङ्क्तयः अनुक्रान्तंच—उपोषुषड्जगत्यन्तमिति । सूक्तविनियोगोलैङ्गिकः षोडशिशस्त्रे आद्यात्सुसंदृशमित्यादिकेद्वेऋचौ चविनियुज्यन्ते अथषोडशीतिखण्डेसूत्रितम्—उपोषुशृणुहीगिरःसुसंदृशंत्वावयंमघवन्नित्येकाद्वेचपङ्क्तीइति ।

तत्रप्रथमामृचमाह—

उपोषुशृणुहीगिरोमघवन्मातथाइव ।
यदानःसूनृतावतःकरआदर्थयासइद्योजान्विन्द्रतेहरी ॥१॥

उपोइति । सु । शृणुहि । गिरः । मघऽवन् । मा । अतथाःऽइव ।
यदा । नः । सूनृताऽवतः । करः । आत् । अर्थयासे । इत् । योज । 
नु । इन्द्र । ते । हरी इति ॥ १ ॥

हेमघवन्धनवन्निन्द्र गिरःअस्मदीयाःस्तुतीः उपोउपैवसुशृणुहि उपगत्यसम्यक्शृणु अतथाइवपूर्वंयथाविधस्त्वंतद्विपरीतोमाभूः अस्मासुपूर्वंयथाअनुग्रहबुद्धियुक्तः तथाविधएवभवेत्यर्थः अपिचनोऽस्मान्सूनृतावतः प्रियसत्यात्मिकावाक्सूनृता तयास्तुतिरूपयावाचायुक्तान्

मदाकरःकरोपि आवअनन्तरंत्वमपिअर्थयासेइव अर्थयसएव याचयसएवनतदास्ते अस्माभिः प्रयुक्तास्तुतीः त्वमपिस्वीकरोपीत्यर्थः अतोहेइन्द्र तेहरीत्वदीयावश्वौनुक्षिप्रंमयोजरथेयोजय ॥ शृणुहि उतश्चप्रत्ययाच्छन्दसिवावचनमितिवचनाद्उतश्चप्रत्ययादितिहेर्लुगभावः । अतथाइव तथेवाचरतितथाति सर्वप्रातिपदिकेभ्यइत्येकइतिक्विप् तथातेरप्रत्ययः नतथाइवअतथाइव अव्ययपूर्वपदप्रकृतिस्वरत्वम् । करः डुकृञ्करणे लुङि कृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः ननुअङः सतिशिष्टत्वात्तिरस्वरेणान्तोदात्तेनभवितव्यम् तर्हिलङिव्यत्ययेनशप् ननुकृञ्करणेइतिभ्वादौ पठ्यते अतोव्यत्ययःकस्मात्क्रियतेइतिचेत् मैवम् यस्मादस्यधातोस्तत्रपाठःअनार्षः तथाहिकः करत्करतीत्यत्रयदाहतुर्न्यासकारहरदत्तौव्यत्ययेनशबिति तस्मादस्यधातोर्भ्वादौपाठोनास्तीति गम्यते किंच यद्ययंपठ्येत करदित्येवमादिरूपसिद्ध्यर्थंकृमृदृरुहिभ्यश्छन्दसीतिकरोतेरङ्विधानमनर्थकंस्यात् अस्माल्लङिशपिअस्यरूपसिद्धेः लुङ्लङोरर्थभेदात् लुङ्येतद्रूपसिद्धयेकर्तव्यमङ्विधानमितिचेत् न छन्दसिलुङ्लङ्लिटइतिलुङादीनामेकत्रविधानेनार्थभेदाभावादिति अनेनप्रकारेणास्माभिर्धातुवृत्तावयंधातुर्निराकृतः अतोव्यत्ययेनेतिसिद्धम् । अर्थयासेअर्थयाच्ञायां चुरादिरात्मनेपदी लेटचाडागमः । योज युजिर्योगे ण्यन्ताल्लोटि छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् ॥ १ ॥

द्वितीयामृचमाह—

**अक्ष॒न्नमी॑मदन्त॒ह्यव॑प्रि॒या अ॑धूषत ।**
**अस्तो॑षत॒स्वभा॑नवो॒विप्रा॒नवि॑ष्ठयाम॒तीयोजा॒न्विन्द्र॑ते॒हरी॑ ॥२॥**

अक्ष॑न् । अमी॑मदन्त । हि । अव॑ । प्रि॒याः । अ॒धू॒ष॒त । अस्तो॑षत । स्वऽभा॑नवः । विप्राः॑ । नवि॑ष्ठया । म॒ती । योज॑ । नु । इ॒न्द्र॒ । ते॒ । हरी॒ इति॑ ॥ २ ॥

हेइन्द्र त्वयादत्तान्यन्नानिअक्षन् यजमानाभुक्तवन्तः भुक्त्वाचअमीमदन्तहि तृप्ताश्चासन् प्रियाः स्वकीयास्तनूः अवाधूषत अकंपयन् अतिशयितरसास्वादनेनवक्तुमशक्नुवन्तः शरीराण्यकंपयन् तदनन्तरंस्वभानवः स्वायत्तदीप्तयोविप्राः मेधाविनस्ते नविष्ठयानवितृतमया मतीमत्या स्तुत्या अस्तोषतास्तुवन् अन्यत्पूर्ववद्योज्यम् ॥ अक्षन् अदेर्लुङि लुङ्सनोर्घस्लृइतिघस्लादेशः मन्त्रेघसेत्यादिनाच्लेर्लुक् गमहनेत्यादिनोपधालोपः खरिचेतिचर्त्वं शासिवसिघसीनांचेतिषत्वम् अडागमउदात्तः । अमीमदन्त मदतृप्तियोगे चुरादिरात्मनेपदी लुङिच्लेश्चङिणिलोपोपधाह-

स्वद्विर्भावसन्यङ्गावेत्वदीर्घाः । अधूषत धूञ्कंपने लुङिसिचिव्यत्ययेनगुणाभावः यद्वा छन्दस्युभयथेतिसिचःसार्वधातुकत्वेनङित्त्वात् ग्क्ङितिचेतिप्रतिषेधः अथवा धूविधूनने तौदादिकः कुटादिः अस्मात्कर्मणिलुङि गाङ्कुटादिभ्यइतिसिचोङित्त्वाद्गुणाभावः । नविष्ठया णुस्तुतौ करणभूतायाअपिस्तुतेःस्वव्यापारेकर्तृत्वात्तृच् तदन्तात्तुश्छन्दसीतीष्ठन्प्रत्ययः तुरिष्ठेमेयःस्वितितृलोपः । मती सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घत्वम् मन्त्रेवृषेषपचमनविदेतिक्तिनउदात्तत्वम् ॥ २ ॥

महापितृयज्ञेसुसंदृशमित्येषाआहवनीयोपस्थानेविनियुक्ता सूत्रितंच—आहवनीयंसुसंदृशंत्वेतिपंक्त्येति ।

तामेतांसूक्तेतृतीयामृचमाह—

सुसन्दृशंत्वावयंमघवन्वन्दिषीमहि ।
प्रनूनंपूर्णवन्धुरस्तुतोयाहिवशाँअनुयोजान्विन्द्रतेहरी ॥३॥

सुऽसन्दृशम् । त्वा । वयम् । मघऽवन् । वन्दिषीमहि । प्र । नूनम् । पूर्णऽवन्धुरः । स्तुतः । याहि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ॥ ३ ॥

हेमघवन्निन्द्र सुसंदृशंसुष्ठुअनुग्रहदृष्ट्यासर्वस्यद्रष्टारंत्वात्वां वयंवन्दिषीमहिस्तवामहि स्तुविकर्तारोभूयास्मेत्याशास्यते अस्माभिर्वन्दिभिःस्तुतस्त्वं पूर्णवन्धुरःस्तोतृभ्योदेयैर्धनैःपूरितेन रथेनयुक्तःसन् वशान् अनुकामयमानान् अन्यान् यजमानान्प्रति नूनंप्रयाहिअवश्यंप्रतिष्ठस्व योजेत्यादिपूर्ववत्॥ वन्दिषीमहि वदिअभिवादनस्तुत्योः आशीर्लिङ् लिङाशिषीतितस्यार्धधातुकत्वेनलसार्वधातुकस्वराभावेप्रत्ययाद्युदात्तत्वम् । मघवन्नित्यस्यामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्त्वेसतिपादादित्वान्निघाताभावः ॥ ३ ॥

चतुर्थीमृचमाह—

सघातंवृषणंरथमधितिष्ठातिगोविदम् ।
यःपात्रंहारियोजनंपूर्णमिन्द्रचिकेततियोजान्विन्द्रतेहरी ॥४॥

सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् । यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ॥ ४ ॥

सघ सखल्विन्द्रः वृषणंकामाभिवर्षकंगोविदंगवांलंभयितारं तंरथंअधितिष्ठातिइंद्रशरथं अधितिष्ठतु आरूढोभवतु हेइन्द्र योरथः हारियोजनं एतत्संज्ञकंधानामिश्रितंपूर्णंसोमेनपूर्णंपात्रं चिकेतति ज्ञापयति तंरथंअधितिष्ठेतिपूर्वेणान्वयः अधिष्ठायच त्वदीयावश्वौक्षिप्रंयोजय ॥ घ ऋचितुनुघेतिदीर्घः । रथं अधिशीङ्स्थासांकर्मेत्यधिकरणस्यकर्मसंज्ञा । तिष्ठाति तिष्ठतेर्लेटयाडागमः । चिकेतति कितज्ञाने लेटयडागमः जुहोत्यादित्वाच्छपःश्लुः बहुलंछन्दसीतिवक्तव्य-मितिवचनात् नाभ्यस्तस्याचिपितीतिलघूपधगुणमतिषेधोनभवति ॥ ४ ॥

पञ्चमीमृचमाह—

युक्तस्तेअस्तुदक्षिणउतसव्यःशतक्रतो ।
तेनंजायामुपप्रियांमन्दानोयाह्यन्धसोयोजान्विन्द्रतेहरी ॥५॥

युक्तः । ते । अस्तु । दक्षिणः । उत । सव्यः । शतक्रतो इति शतऽक्रतो । तेन । जायाम् । उप । प्रियाम् । मन्दानः । याहि । अन्धसः । योज । नु । इन्द्र । ते । हरी इति ॥ ५ ॥

हेशतक्रतोबहुकर्मवन्निन्द्र तेत्वदीयेरथेदक्षिणोदक्षिणपार्श्वस्थोऽश्वोयुक्तोऽस्तु उतअपिच सव्यः वामपार्श्वस्थोपियुक्तोऽस्तु तेनरथेन अन्धसः सोमलक्षणस्यान्नस्यपानेनमन्दानोमत्तस्त्वं प्रियांप्रीणयित्रींजायामुपयाहि सायत्रवर्ततेतत्रगच्छेत्यर्थः तदर्थंहेइन्द्र त्वदीयावश्वौरथेक्षिप्रंयोजयअनयोत्तरयाचपीतसोमस्येन्द्रस्यस्वगृहंप्रतिप्रस्थानंप्रतिपाद्यते ॥ मन्दानः मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु लिटःकानच् द्विर्वचनप्रकरणे छन्दसिवेतिवक्तव्यमितिद्विर्वचनाभावः । अन्धसः अदभक्षणे अदेर्नुम्धश्चेत्यसुन् धातोर्नुमागमोधकारान्तादेशश्च ॥ ५ ॥

अन्येद्युरहःसुहारियोजनस्ययुनज्मात्येपायाज्या सूत्रितंच—युनज्मितेब्रह्मणाकेशिनाहरी-इतियाज्यानुवाक्येअन्येद्युरहःस्विति ।

तामेतांसूक्तेषष्ठीमृचमाह—

युनज्मितेब्रह्मणाकेशिनाहरीउपप्रयाहिदधिषेगभस्त्योः।
उत्त्वासुतासोरभसाअमन्दिषुःपूषण्वान्वज्रिन्त्समुपत्न्यामदः ॥६॥३॥

युनज्मि। ते। ब्रह्मणा। केशिना। हरी इति। उप। प्र। याहि। दधिषे। गभस्त्योः। उत्। त्वा। सुतासः। रभसाः। अमन्दिषुः। पूषण्ऽवान्। वज्रिन्। सम्। ऊम् इति। पत्न्या। अमदः ॥ ६ ॥ ३ ॥

हेइन्द्र केशिनाकेशयुक्तौशिखावन्तौतेहरीन्त्वदीयावश्वौ ब्रह्मणास्तोत्ररूपेणमन्त्रेणयुनज्मि रथेसंयोजयामि तेनरथेनउपप्रयाहि त्वद्गृहमुपगच्छ गभस्त्योःबाहुनामैतत् बाह्वोः अश्वबन्धकान् रश्मीन्दधिषेधारयस्व त्वात्वांसुतासोयज्ञेऽभिषुताःसोमाः रभसाः वेगवन्तःतीव्राः क्षिप्रंमदकारिण- इत्यर्थः उदमन्दिषुः उत्कृष्टमदयुक्तमकार्षुः हेवज्रिन् अतस्त्वंस्वगृहंगत्वापूषण्वान् अत्रपूषन्श- ब्दःपुष्टौवर्तते पुष्टिर्वैपूषा पुष्टिमेवावरुन्धइतिश्रुतेः। सोमपानजनितयापुष्ट्यायुक्तःसन्पत्न्या स्वभार्ययासहसमुअमदः सम्यगेवहृष्टोभव ॥ केशिना केशशब्दान्मत्वर्थीयइनिः सुपांसुलुगिति विभक्तेराकारः। रभसाःअर्शआदित्वादच्। अमन्दिषुः व्यत्ययेनपरस्मैपदम्। पूषण्वान् पुषपुष्टौ श्व- न्नुक्षन्नित्यादौपूषन्निति निपात्यते तच्चात्रभावसाधनंद्रष्टव्यम् पूषाअस्यास्तीतिपूषण्वान् मादुपधाया- इतिमतुपोवत्वम् नलोपेअनोनुडितिनुट् ह्रस्वनुड्भ्यांमतुपउदात्तत्वम्। अमदः मदीहर्षे छन्दसिलुङ्- लङ्लिटइतिमार्थनायांलङ् श्यनिप्राप्तेव्यत्ययेनशप् ॥ ६॥

॥ इतिप्रथमस्यषष्ठेतृतीयोवर्गः ॥ ३ ॥

अश्वावतीतिषड्चंदशमंसूक्तम् गोतमस्यार्षमैन्द्रंजागतम् तथाचानुक्रान्तम्—अश्वावति- जागतमिति। अतिरात्रेतृतीयेपर्यायेब्राह्मणाच्छंसिशस्त्रइदंसूक्तम् सूत्रितंच—अश्वावतिप्रोग्रां- पीतिंवृष्णइयर्मिसत्यामितियाज्येति।

तत्रप्रथमामृचमाह—

अश्वावतिप्रथमोगोषुगच्छतिसुप्रावीरिन्द्रमर्त्यस्तवोतिभिः।
तमित्पृणक्षिवसुनाभवीयसासिन्धुमापोयथाभितोविचेतसः ॥१॥

१ तै० आ० २. ७. २.।

अश्वंऽवति । प्रथमः । गोषु । गच्छति । सुप्रऽअवीः । इन्द्र । मर्त्यः ।
तवं । ऊतिऽभिः । तम् । इत् । पृणक्षि । वसुना । भवीयसा ।
सिन्धुम् । आपः । यथा । अभितः । विऽचेतसः ॥ १ ॥

हेइन्द्र योमर्त्योमनुष्यः तवोतिभिः त्वदीयैरक्षणैः सुप्रावीः सुष्ठुमरक्षितोभवति समर्त्यः अश्वावतिबहुभिरश्वैर्युक्तेगृहेवर्तमानः गोषुमामव्येषुप्रथमोगच्छति सर्वेभ्योयजमानेभ्यःपूर्वमेवगोमान्भवतीत्यर्थः त्वंतमित् तमेवपुरुषंभवीयसाबहुतरेणभवितृतमेनवाशतसहस्रादिसंख्यायुक्तेन वसुनाधनेनपृणक्षि संपृक्तं संपूर्णंकरोषि तत्रदृष्टान्तः—विचेतसः विशिष्टज्ञानहेतुभूताआपोयथा अभितः सर्वासुदिक्षुसिन्धुंसमुद्रंपूरयन्ति तद्वत् ॥ अश्वावति मन्त्रेसोमाश्वेतिमतौदीर्घत्वम् । सुप्रावीः अवितृस्तृतन्त्रिभ्यईरित्यवतेरीकारप्रत्ययः । ऊतिभिः ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् । पृणक्षि पृचीसंपर्के रौधादिकः । भवीयसा बहुशब्दादीयसुनिबहोर्लोपोभूचबहोरितिबहुशब्दस्य भूभावः ईयसुनईकारलोपश्च अनतुछान्दसत्वादीकारलोपोनक्रियते भूभावश्चक्रियते अथवाभवितृशब्दात् तुश्छन्दसीतीयसुन् तुरिष्ठेमेयःस्वितितृलोपः ॥ १ ॥

अपोनप्त्रीयेहोतृचमसेन्द्रिःपूर्यमाणेआपोनदेवीरित्येषानुवक्या सूत्रितंच—आपोनदेवीरुपयन्तिहोत्रियमितिसमाप्येति । ब्राह्मणंच—आपोनदेवीरुपयन्तिहोत्रियमितिहोतृचमसेसमवनीयमानास्वन्वाहेति ।

तामेतांद्वितीयामृचमाह—

आपोनदेवीरुपयन्तिहोत्रियमवःपश्यन्तिविततंयथारजः ।
प्राचैर्देवासःप्रणयन्तिदेवयुंब्रह्मप्रियंजोषयन्तेवराइव ॥२॥

आपः । न । देवीः । उप । यन्ति । होत्रियम् । अवः । पश्यन्ति ।
विऽततम् । यथा । रजः । प्राचैः । देवासः । प्र । नयन्ति । देवऽयुम् ।
ब्रह्मऽप्रियम् । जोषयन्ते । वराःऽइव ॥ २ ॥

१ ऐ० ब्रा० २. २०. ।

होत्रियं होतुःस्वभूतं चमसंदैवीर्दैव्योद्योतमानाआपोन यथाआपःउपयन्ति उपगच्छन्ति तद्वदुपरिवर्तमानादेवासःदेवाःएतमेवचमसंअवः अवस्तात्पश्यन्ति होतृचमसे अस्माकंसोमाभिषवायापःपूरिताइतितेषांदृष्टिरप्यस्मिन्संलग्नाभूत् तत्रदृष्टान्तः—विततंविस्तीर्णं रजोज्योतिः सूर्यसंबन्धियथानिरन्तरमवस्तात्पतितद्वद्देवयुं देवान्कामयमानमेतंचमसंप्राचैः प्राचीनं यद्वा प्रांचनैःप्रगमनैः उत्तरवेद्यभिमुखंहोमकालेप्रणयन्ति होमार्थंप्रणीतंत्रह्मप्रियं ब्रह्मणासोमलक्षणेनान्नेनप्रीतंसंतृप्तंपूरितमित्यर्थः जोषयन्ते सर्वेदेवास्तंचमसंसेवन्ते वराइवकन्यकां यथावरामेयंभविष्यतिममेयंभविष्यतिइतिकन्यकांसेवन्ते एवंदेवाअपिममायंसोमः ममायंसोमइति अस्यपार्श्वेवर्तन्तइत्यर्थः एवमपोनप्त्रीयविनियोगानुसारेणयोजितम् मन्त्रस्यानुष्ठेयार्थप्रकाशकत्वात् यदातुराज्ञिपर्यायेस्याःविनियोगस्तदात्वेवंव्याख्येयम्—हेइन्द्र देव्यआपोयथानिम्नदेशं उपगच्छन्ति एवंदेवास्त्वदीयंस्तोत्रंशुश्रूषमाणाः होत्रियंहोतृसंबन्धिधिष्ण्यंस्थानंउपगच्छन्ति उपगत्यच अवस्तात्पश्यन्तिविततंज्योतिरिवदेवयुंदेवानात्मनइच्छन्तमेतंशंसितारं आगताःसर्वे देवाः प्राचीनंप्रणयन्ति अग्रतोधारयन्ति ब्रह्मप्रियंस्तोत्रप्रियंत्वांशंसन्तं वराः कन्यकाइवसेवन्ते ॥ होत्रियं होतृशब्दात्तस्येदमर्थेघप्रत्ययः ।अवः पूर्वाधरावराणामसिपुरधवश्चैषामित्यसिप्रत्ययान्तोन्तोदात्तः। प्राचैः उच्चैर्नीचैरितिवदव्ययम् यद्वा प्रपूर्वादञ्चतेर्वैत्रर्थेकविधानं स्थास्नापाव्यधिहृनियुध्यर्थमितिपरिगणनस्योपलक्षणार्थत्वाद्भावेकप्रत्ययः अनिदितामितिनलोपः । जोषयन्ते जुषीप्रीतिसेवनयोः स्वात्मनःप्रयोज्यत्वाद्धेतुमतिणिच् ॥ २ ॥

प्रवर्ग्याभिष्टवे अधिद्वयोरित्येषा स्पृष्ट्वोदकमितिखण्डेसूत्रितम्—अधिद्वयोरदधाउक्थ्यंवचःशुक्रन्तेअन्यद्यजतन्तेअन्यदिति । हविर्धानप्रवर्तनेप्येषा सूत्रितंच—यमेइवयतमानेयदैतमधिद्वयोरदधाउक्थ्यंवचइत्यर्धर्चंआरभेदिति ।

तामेतांसूक्तेतृतीयामृचमाह—

अधि॒द्वयो॑रदधा उ॒क्थ्यं१॒॑ वचो॑ य॒तस्रु॑चा मिथु॒ना या स॑प॒र्यतः॑ ।
अस॑यत्तो व्र॒ते ते॑ क्षेति॒ पुष्य॑ति भ॒द्रा श॒क्तिर्यज॑मानाय सुन्व॒ते ॥३॥

अधि॑ । द्व॒योः॑ । अ॒द॒धाः॒ । उ॒क्थ्य॑म् । वचः॑ । य॒तऽस्रु॑चा । मि॒थु॒ना । या । स॒प॒र्यतः॑ । अस॑म्ऽयत्तः । व्र॒ते । ते॒ । क्षे॒ति॒ । पुष्य॑ति । भ॒द्रा । श॒क्तिः । यज॑मानाय । सु॒न्व॒ते ॥ ३ ॥

हेइन्द्र द्वयोर्हविर्धानयोः उक्थ्यंउक्थंशस्त्रं तद्योग्यंवचः युजे वामित्यादिमन्त्ररूपं वचनंअध्यदधाः निहितवानसि ननुहविर्धानयोर्द्वयोः कथमेकमेववचोधिनिधीयते इत्याशंक्य ब्राह्मणेनैवं व्याख्यातम्-अधिद्वयोरदधाउक्थ्यंवचइतिद्वयोर्ह्येतत्तृतीयंछदिरधिनिधीयतउक्थ्यंवचइतियदाह यज्ञियंवैकर्मोक्थ्यंवचोयज्ञमेवैतेनसमर्धयतीति । तत्रयथाहविर्धानद्वयेएकमेवतृतीयंछदिरधिनिधीयते एवंस्तोत्रमप्युभयोरेकंयुक्तम् उक्थंनामयज्ञसंबन्धिशस्त्रंतद्योग्यंवचनमपियज्ञियंकर्म तस्यायज्ञरूपयोर्हविर्धानयोर्यज्ञत्वसंपादनायाधिनिधानाद्यज्ञोपिसमृद्धोभवति कीदृशयोर्हविर्धानयोः यतस्रुचा यताःसंबद्धाःस्रुचःग्रहचमसादिलक्षणानिपात्राणिययोः तेमिथुनायुगलरूपेणवर्तमाने या येहविर्धाने त्वांसपर्यतःपूजयतः तयोरित्यर्थः किञ्च इंद्रयूपहविर्धानयुक्तोयजमानः असंयत्तः शत्रुभिःसहयुद्धार्थमनभिगतःसन् तेतव ते त्वदीयेकर्मणिक्षेतिनिवसति पुष्यतिचप्रजयापशुभिश्चपुष्टोभवतिच सुन्वते त्वद्देवत्येयागेसोमाभिषवंकुर्वतोयजमानस्य भद्राकल्याणीशक्तिः उत्कृष्टंबलंभवति एतत्सर्वंहविर्धानयोःउक्थ्यस्यवचसोनिधानेनत्वयाकृतमित्यर्थः॥ यतस्रुचा यमउपरमे निष्ठायांअनुदात्तोपदेशेत्यादिनानुनासिकलोपः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् इदमादिपुनिपुपदेषुसुपांसुलुगितिविभक्तेराकारः। सपर्यंत सपरपूजायां कण्ड्वादिभ्योयक् अदुपदेशात्सार्वधातुकानुदात्तत्वे तस्यैवस्वरःशिष्यते । क्षेति क्षिनिवासगत्योः बहुलंछन्दसीतिविकरणस्य लुक् । सुन्वते यजमानाय षष्ठ्यर्थेचतुर्थीवक्तव्येतिचतुर्थी शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

आदङ्गिराःप्रथमंदधिरेवयइद्धाग्नयःशम्यायेसुकृत्यया ।
सर्वंपणेःसमविन्दन्तभोजनमश्वावन्तंगोमन्तमापशुंनरः ॥४॥

आत् । अङ्गिराः । प्रथमम् । दधिरे । वयः । इद्धऽअग्नयः । शम्या ।
ये । सुऽकृत्यया । सर्वम् । पणेः । सम् । अविन्दन्त । भोजनम् ।
अश्वऽवन्तम् । गोऽमन्तम् । आ । पशुम् । नरः ॥ ४ ॥

यदागिभिर्गावोपहृतास्तदानींअङ्गिराः अङ्गिरसः प्रथमंपूर्वअमनः वयोहविर्लक्षणमन्नंदधिरे इन्द्रार्थंसंपादितवन्तः आत्अनन्तरं तादृशायेंगिरसः इद्धाग्नयः सम्यक्दीप्ताग्नियुक्ताः

1 ऐ० ब्रा० १.२९ ।

सन्तः सुकृत्यया शोभनकरणोपेतया शम्याकर्मणाशोभनेनयागेनइन्द्रमयजन्नितिशेषः वेनरो-यज्ञस्यनेतारोङ्गिरसः पणेः एतन्नाम्नोसुरस्यसंबन्धिसर्वंभोजनंधनंसमविन्दन्त समलभन्त कीदृशं अश्वावन्तं अश्वैर्युक्तम् गोमन्तंगोभिर्युक्तम् आकारःसमुच्चये गवाश्वव्यतिरिक्तं अन्यत्पशुं प-शुजातंचसमविन्दन्त ॥ अङ्गिराः सुपांसुलुगितिजसःसुः । शम्या शमीतिकर्मनाम शाम्यत्यनया क्रिययादोषजातमितिशमी करणेघञ् नोदात्तोपदेशस्यमान्तस्यानाचमेरितिवृद्धिप्रतिषेधः गौ-रादित्वान्ङीप् व्यत्ययेनाद्युदात्तत्वम् । सुकृत्यया शोभनंकृत्यंकरणंयस्यांसातथोक्ता नञ्सुभ्या-मित्युत्तरपदान्तोदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

यज्ञैरथर्वाप्रथमःपथस्ततेततःसूर्योव्रतपावेनआजनि ।
आगाआजदुशनाकाव्यःसचायमस्यजातममृतंयजामहे ॥५॥

यज्ञैः । अथर्वा । प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः ।
वेनः । आ । अजनि । आ । गाः । आजत् । उशना । काव्यः ।
सचा । यमस्य । जातम् । अमृतम् । यजामहे ॥ ५ ॥

पणिभिरपहृतासुगोषु अथर्वाएतत्संज्ञकऋषिः यज्ञैरिन्द्रदेवत्यैःअनुष्ठितैर्यागैःपथःगोसंबन्धि-नोमार्गान्प्रथमस्ततेतनुते सर्वेभ्यऋषिभ्यःपूर्वमेवकृतवानित्यर्थः ततस्तदनन्तरं व्रतपाः व्रतानां कर्मणांपालयितावेनःकान्तः सूर्यःसूर्यरूपइन्द्रः आजनि गवांप्रदर्शनायआविरभूत् ततोथर्वाता-गाआजत्आभिमुख्येनप्रापत् तादृशस्येन्द्रस्यकाव्यःकवेःपुत्रउशनाभृगुःसचाअसुरनिरसनाय सहायोऽभूत् यमस्यअसुराणांनियमार्थंजातंप्रादुर्भूतंअमृतंमरणरहितंतमिन्द्रंयजामहे हविर्भिः पूजयामः ॥ पथः शसिभस्यटेर्लोपइतिटेर्लोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । तते तनु-विस्तारे बहुलंछन्दसीतिविकरणस्यलुक् अनुदात्तोपदेशेत्यादिनाअनुनासिकलोपः ॥ अजनि जनीप्रादुर्भावे दीपजनबुधेत्यादिनाकर्तरिलुङि च्लेश्चिण् । आजत् अजगतिक्षेपणयोः ॥ ५ ॥

षष्ठीमृचमाह—

बर्हिर्वायत्स्वपत्यायवृज्यतेर्कोवाश्लोकमाघोषतेदिवि ।
ग्रावायत्रवदतिकारुरुक्थ्यस्तस्येदिन्द्रोअभिपित्वेषुरण्यति ॥६॥४॥

ब॒र्हिः । वा॒ । यत् । सु॒ऽअ॒प॒त्याय॑ । वृ॒ज्यते॑ । अ॒र्कः । वा॒ ।
श्लोक॑म् । आ॒ऽघोष॑ते । दि॒वि । ग्रावा॑ । यत्र॑ । वद॑ति । का॒रुः ।
उ॒क्थ्यः॑ । तस्य॑ । इत् । इन्द्रः॑ । अ॒भि॒ऽपि॒त्वेषु॑ । र॒ण्य॒ति॒ ॥६॥४॥

स्वपत्यायशोभनापतनहेतुभूतायकर्मणेबर्हिर्वायद्यदावृज्यतेछिद्यतेअध्वर्युणायागार्थमा-हियतेअर्कोवास्तोत्रनिष्पादकोहोतावाश्लोकंस्तुतिरूपांवाचंदिविद्योतमानेयज्ञेयदाआघोषते उ-च्चारयति यत्रयस्मिन्कालेग्रावाअभिषवार्थंप्रवृत्तउपलः वदतिशब्दंकरोति तत्रदृष्टान्तः—कारुरु-क्थ्यः लुप्तोपममेतत् उक्थस्यशस्त्रस्यशंसिताकारुः स्तोतायथाअभिमतंशब्दंकरोतितद्वत् तस्ये-त्पूर्वोक्तस्यसर्वस्यअभिपित्वेषुअभिप्राप्तिषुइन्द्रोरण्यतिरमते यद्वा पूर्वोक्तानांबर्हिरादीनां अभि-प्राप्तिषुसतीषुइन्द्रोरण्यति अस्मदीयोयागोभविष्यतीतिहर्षंशब्दंकरोति॥ वृज्यते वृजीवर्जने अ-दुपदेशाल्लसार्वधातुकानुदात्तत्वेयकएवस्वरःशिष्यते निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः। आ-घोषते घुषिरविशब्दने भौवादिकः अत्रापियदित्यस्यनिपातस्यानुषङ्गान्निघाताभावः। रण्यति रमुक्रीडायां व्यत्ययेनश्यन्परस्मैपदंच अन्त्यविकारश्छान्दसः यद्वा रणशब्दार्थः व्यत्ययेनश्यन्॥ ६ ॥

॥ इतिप्रथमस्यषष्ठेचतुर्थोवर्गः ॥४॥

असावीतिविंशत्यृचमेकादशंसूक्तम् अत्रानुक्रम्यते—असाविविंशतिःपळनुष्टुभऔष्णिह-पाङ्क्तगायत्रत्रैष्टुभास्त्वृचाःप्रगाथइति। आदितःषळनुष्टुभः सप्तम्याद्यास्तिस्रउष्णिहः दशम्याद्या-स्तिस्रःपङ्क्तयः त्रयोदश्याद्यास्तिस्रोगायत्र्यः षोडश्याद्यास्तिस्रस्त्रिष्टुभः एकोनविंशीबृहती विं-शीसतोबृहती अनुवर्तनात्प्रोतमऋषिः अनादेशपरिभाषयेन्द्रोदेवता सूक्तविनियोगोलिङ्गादव-गन्तव्यः अविहृतषोडशिशस्त्रेआद्यौतृचौस्तोत्रियानुरूपौ सूत्रितंच—अथषोडश्यसाविसोमइन्द्र-तइतिस्तोत्रियानुरूपाविति। आभिप्लविकेपृष्ठ्येषुतृतीयसवनेच्छावाकस्यइमावेवतृचौविकल्पितौ स्तोत्रियानुरूपौ एसूप्विति खण्डेसूत्रितम्—असाविसोमइन्द्रतइममिन्द्रसुतंपिबेति।

तत्रप्रथमामृचमाह—

अ॒सा॑वि॒सोम॑इन्द्रते॒शवि॑ष्ठधृष्ण॒वाग॑हि ।
आत्वा॑पृणक्त्विन्द्रि॒यंरजः॒सूर्यो॒नर॒श्मिभिः॑ ॥१॥

असांवि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो इति । आ ।
गहि । आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न ।
रश्मिऽभिः ॥ १ ॥

हेइन्द्र तेत्वदर्थंसोमःअसाविअभिषुतोऽभूत् हेशविष्ठअतिशयेनबलवन् अतएवधृष्णो शत्रूणांधर्षयितः इन्द्रआगहि देवयजनदेशमागच्छ आगतंचत्वात्वांइन्द्रियंसोमपानेनोत्पन्नं प्रभूतं सामर्थ्यं आपृणक्तुआपूरयतु रजोन्तरिक्षंरश्मिभिःकिरणैःसूर्योन यथासूर्यःपूरयतितद्वत् ॥ शविष्ठ शवस्विन्शब्दादिष्ठनिविन्मतोर्लुक् टेरितिटिलोपः पादादित्वान्निघाताभावः । गहि गमेर्लोटिबहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः तस्यासिद्धवदत्राभादित्यसिद्धवत्त्वाद्धेर्लुगभावः ॥ १ ॥

द्वितीयामृचमाह—

इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम् ।
ऋषीणांचस्तुतीरुपयज्ञंचमानुषाणाम् ॥२॥

इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टऽशवसम् ।
ऋषीणाम् । च । स्तुतीः । उप । यज्ञम् । च । मानुषाणाम् ॥ २ ॥

अप्रतिधृष्टशवसंकेनाप्यप्रतिधर्षितबलंअहिंसितबलमित्यर्थः इन्द्रमिदइन्द्रमेवऋषीणांवसिष्ठादीनांमानुषाणांअन्येषांमनुष्याणांच स्तुतीर्यज्ञंचहरीअश्वौउपवहतः समीपंप्रापयतः यत्रयत्रस्तुवन्तियत्रयत्रयजन्तेतत्रतत्रसर्वत्रेन्द्रमश्वौप्रापयतइत्यर्थः॥ मानुषाणां मनोर्जातावितिमनुशब्दादञ्षुगागमश्च ॥ २ ॥

तृतीयामृचमाह—

आतिष्ठवृत्रहन्रथंयुक्तातेब्रह्मणाहरी ।
अर्वाचीनंसुतेमनोग्रावाकृणोतुवग्नुना ॥ ३ ॥

आ । तिष्ठ । वृत्रऽहन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इति ।
अर्वाचीनम् । सु । ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥ ३ ॥

हेवृत्रहन् शत्रूणांहन्तरिन्द्र रथमातिष्ठआरोह यस्मात्तेहरीत्वदीयावश्वौ ब्रह्मणास्तोत्रलक्षणेनमन्त्रेणयुक्तारथेऽस्माभिर्योजितौतस्मात्त्वंरथमातिष्ठ तेमनःत्वदीयंमनश्चग्रावाअभिषवार्थंप्रवृत्तःपाषाणः वग्नुनावचनीयेनाभिषवशब्देनअर्वाचीनं अस्मदभिमुखंसुकृणोतु सुष्ठुकरोतु ॥ युक्ता सुपांसुलुगित्याकारः । वग्नुना वचेर्गश्चेतिनुप्रत्ययः गकारश्चान्तादेशः ॥ ३ ॥

चतुर्थीमृचमाह—

इ॒मम्रि॑न्द्र सु॒तं पि॑ब॒ ज्येष्ठ॒मम॑र्त्यं॒ मद॑म् ।
शु॒क्रस्य॑ त्वा॒भ्य॑क्षर॒न्धारा॑ ऋ॒तस्य॒ साद॑ने ॥४॥

इ॒मम् । इ॒न्द्र॒ । सु॒तम् । पि॒ब॒ । ज्येष्ठ॑म् । अम॑र्त्यम् । मद॑म् ।
शु॒क्रस्य॑ । त्वा॒ । अ॒भि । अ॒क्ष॒र॒न् । धारा॑ः । ऋ॒तस्य॑ । सद॑ने ॥ ४ ॥

हेइन्द्र सुतमभिषुतमिमंसोमंपिब कीदृशंज्येष्ठंअतिशयेनप्रशस्यं मदंमदकरम् अमर्त्यंअमारकम् सोमपानजन्योमदोमदान्तरवन्मादकोनभवतीत्यर्थः तथाऋतस्ययज्ञस्यसंबन्धिनिसदने गृहेवर्तमानाः शुक्रस्यदीप्तस्यास्यसोमस्यधाराः त्वात्वामभ्यक्षरन्आभिमुख्येनसंचलन्ति त्वांप्राप्नुवन्ति स्वयमेवागच्छन्तीत्यर्थः॥ज्येष्ठं प्रशस्यशब्दादिष्ठनि ज्यचेतिज्यादेशः । अक्षरन् क्षरसंचलने छान्दसोलङ् ॥ ४ ॥

पञ्चमीमृचमाह—

इन्द्रा॑य नू॒नम॑र्चतो॒क्थानि॑ च ब्रवीतन ।
सु॒ता अ॑मत्सु॒रिन्द॑वो॒ ज्येष्ठं॑ नमस्यता॒ सहः॑ ॥५॥५॥

इन्द्रा॑य । नू॒नम् । अ॒र्च॒त॒ । उ॒क्थानि॑ । च॒ । ब्र॒वी॒त॒न॒ । सु॒ताः ।
अ॒म॒त्सु॒ः । इन्द॑वः । ज्येष्ठ॑म् । न॒म॒स्य॒त॒ । सहः॑ ॥ ५ ॥ ५ ॥

हेऋत्विजः इन्द्रायनूनं क्षिप्रमर्चतपूजनंकुरुत एतदेवस्पष्टीक्रियते—उक्थानिअप्रगीतमन्त्रसाध्यानिस्तोत्राणिचब्रवीतनब्रूत सुताअभिषुताइन्दवःसोमाश्चअमत्सुःआगतमेनमिन्द्रंमत्तंकुर्वन्तु अनन्तरंज्येष्ठंप्रशस्यतमंसहःसहस्विनंबलवन्तंतमिन्द्रंनमस्यत नमस्कुरुत ॥ ब्रवीतन ब्रवीतेर्लोटितप्तनप्तनथनाश्चेतितनादेशः । अमत्सुः मदीहर्षे छान्दसःप्रार्थनायांलुङ् आगमानुशास-

नस्यानित्यत्वादिडभावः । नमस्यत नमोवरिवश्चित्रङइतिक्यच् । सहः लुगकारेकाररेफाश्चवक्तव्याइतिमत्वर्थीयस्यलुक् ॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेपञ्चमोवर्गः ॥ ५ ॥

षष्ठीमृचमाह—

नकिष्ट्वद्रथीतरोहरीयदिन्द्रयच्छसे ।
नकिष्ट्वानुमज्मनानकिःस्वश्वआनशे ॥ ६ ॥

नकिः । त्वत् । रथिऽतरः । हरी इति । यत् । इन्द्र । यच्छसे । नकिः । त्वा । अनु । मज्मना । नकिः । सुऽअश्वः । आनशे ॥ ६ ॥

हेइन्द्र यद्यस्मात्त्वं हरीएतत्संज्ञावश्वौयच्छसेरथेयोजयसि तस्मात्त्वत् त्वत्तोऽन्यः कश्चिद्रथीतरः अतिशयेनरथवान्नकिःनास्ति अन्येषामीदृगश्वयुक्तरथाभावात् त्वा त्वामनुलक्ष्यमज्मना बलनामैतत् बलेनसदृशोऽपिनकिर्नह्यस्ति स्वश्वःशोभनाश्वोन्यश्चत्वांनकिरानशेनमाप इन्द्रस्य बलाश्वयोरसाधारणत्वादिन्द्रसदृशबलवानश्ववान्लोकेकश्चिदपिनास्तीत्यर्थः ॥ नकिष्ट्वत् युष्मत्ततक्षुष्वन्तःपादमितिषत्वम् । रथीतरः अतिशयेनरथी तरपि ईद्रथिनइतीकारान्तादेशः अवग्रहसमयेछान्दसंह्रस्वत्वम् । यच्छसे यमेर्व्यत्ययेनात्मनेपदम् । स्वश्वः बहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । आनशे अश्नोतेश्चेतिअभ्यासादुत्तरस्यनुट् ॥ ६ ॥

आभिप्लविकेपूक्थ्येषुतृतीयसवनेब्राह्मणाच्छंसिनोयएकइद्विदयतइतिवैकल्पिकःस्तोत्रियस्तृचः एषूप्विितिखण्डेसूत्रितम्—सखायआशिषामहियएकइद्विदयतइति । महाव्रतेऽपिनिष्केवल्ये औष्णिहतृचाशीतावयंतृचोविनियुक्तः तथैवपञ्चमारण्यकेसूत्र्यते—यएकइद्विदयतआयाहद्रिभिःसुतमिति ।

तृचेप्रथमांसूक्तेसप्तमीमृचमाह—

यएकइद्विदयतेवसुमर्ताययदाशुषे ।
ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ ७ ॥

यः । एकः । इत् । विऽदयते । वसु । मर्ताय । दाशुषे । ईशानः ।
अप्रतिऽस्कुतः । इन्द्रः । अङ्ग ॥ ७ ॥

यइन्द्रः एकइव् एकएवदाशुषे हविर्दत्तवतेमर्त्यायमनुष्याययजमानायवसुधनंविदयतेविशेषेण ददाति अङ्गेतिक्षिप्रनाम अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहितइत्यर्थः एवंभूतः सइन्द्रः क्षिप्रमीशानः सर्वस्यजगतःस्वामीभवति ॥ विदयते दयदानगतिरक्षणहिंसादानेषु शपःपित्वादनुदात्तत्वम् तिङश्चलसार्वधातुकस्वरेणधातुस्वरएवशिष्यते यद्वृत्तयोगादनिघातः । अप्रतिष्कुतः कुशब्दे प्रतिकूलं कूयतेशब्द्यतइतिप्रतिष्कुतः पारस्करादेराकृतिगणत्वात्सुट् सुपामादित्वात्षत्वम् नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

कुदामर्तमराधसंपदाक्षुम्पमिवस्फुरत् । कुदानःशुश्रवद्गिरइन्द्रोअङ्ग॥८॥

कुदा । मर्तम् । अराधसम् । पदा । क्षुम्पम्ऽइव । स्फुरत् ।
कुदा । नः । शुश्रवत् । गिरः । इन्द्रः । अङ्ग ॥ ८ ॥

अराधसंहविर्लक्षणेनराधसाधनेनरहितम्अयष्टारमित्यर्थः एवंविधंमर्तंमनुष्यंइन्द्रः पदापादेनक्षुंपमिवअहिच्छत्रकमिव कदास्फुरत् स्फुरिष्यति बाधिष्यति यथा अहिच्छत्रंमण्डलाकारेणशयानंकश्चिद्नायासेनहन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून्हनिष्यतीत्यर्थः स्फुरतिर्वधकर्मा स्फुरतिस्फुलतीतिवधकर्मसुपठितत्वात् नोऽस्माकंयष्टॄणांगिरः स्तुतिलक्षणावाचःइन्द्रः कदाकस्मिन्कालेअङ्गक्षिप्रं शुश्रवत् श्रोष्यतीतिवितर्क्यते अत्रनिरुक्तम्—क्षुंपमहिच्छत्रकंभवतियत्क्षुभ्यते । कदामर्तमनाराधयन्तंपादेनक्षुंपमिवावस्फुरिष्यति कदानःश्रोष्यतिगिरइन्द्रोअङ्गाङ्गेतिक्षिप्रनामेति[1] ॥ पदा पादशब्दस्यपद्न्नित्यादिनापदादेशः ऊडिदमितिविभक्तेरुदात्तत्वम् । क्षुंपमिव क्षुभसंचलने अस्मात्कर्मणिघञ्वहुलवचनाद्धातोर्नुमागमः वर्णव्यापत्त्याभकारस्यपकारः । स्फुरत् स्फुरसंचलने छन्दसिलुङ्लङ्लिटइतिलडर्थेलङ् बहुलंछन्दस्यमाङ्योगेऽपीत्यडभावः । शुश्रवत् श्रुश्रवणे लेटचडागमः बहुलंछन्दसीतिशपःश्लुः ॥ ८ ॥

नवमीमृचमाह—

यश्चिद्धित्वाबहुभ्यआसुतावाँआविवासति ।
उग्रंतत्पत्यतेशवइन्द्रोअङ्ग ॥ ९ ॥

1 नि० ५. १६—१७. ।

यः । चित् । हि । त्वा । बहुऽभ्यः । आ । सुतऽवान् । आऽविवासति ।
उग्रम् । तत् । पत्यते । शवः । इन्द्रः । अङ्ग ॥ ९ ॥

बहुभ्योमनुष्येभ्यःसकाशाद्यश्चिद्धियएवखलुयजमानः सुतावान् अभिषुतसोमयुक्तःसन्हेइन्द्र त्वात्वां आविवासतिपरिचरति विवासतिःपरिचरणकर्मा तस्मैयजमानायतदुग्रमुद्गूर्णं शवोबलंइन्द्रः अङ्गक्षिप्रंपत्यतेपातयतिप्रापयति॥ तव सुपांसुलुगितिचतुर्थ्यालुक् । पत्यते पत्लृगतौ अस्मादन्तर्भावितण्यर्थाद्व्यत्ययेनश्यन् ॥ ९ ॥

चातुर्विंशिकेहनिमाध्यंदिनेसवनेच्छावाकस्यस्वादोरित्थाविषूवतइतिवैकल्पिकःस्तोत्रियस्तृचः होत्रकाणामितिखण्डेसूत्रितम्—यःसत्राहाविचर्षणिःस्वादोरित्थाविषूवतइति पृष्ठ्यस्यपञ्चमेहनिनिष्केवल्येऽप्ययंतृचोनुरूपः स्तोमेवर्धमानइतिखण्डेसूत्रितम्—स्वादोरित्थाविषूवतउपनोहरिभिःसुतमिति ।

तृचेमथमांसूक्तेदशमीमृचमाह—

स्वादोरित्थाविषूवतोमध्वःपिबन्तिगौर्यः ।
याइन्द्रेणसयावरीर्वृष्णामदन्तिशोभसेवस्वीरनुस्वराज्यम् ॥१०॥६॥

स्वादोः । इत्था । विषुऽवतः । मध्वः । पिबन्ति । गौर्यः । याः ।
इन्द्रेण । सऽयावरीः । वृष्णा । मदन्ति । शोभसे । वस्वीः । अनु ।
स्वऽराज्यम् ॥ १० ॥ ६ ॥

स्वादोः स्वादुभूतस्य रसयुक्तस्यइत्थाविषूवतः इत्थमनेनप्रकारेणसर्वेषुयज्ञेषु व्याप्तियुक्तस्य मध्वोमधुररसस्यसोमस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी एवंविधंसोमंगौर्योगौरवर्णागावः पिबन्ति यागावः शोभसेशोभार्थं वृष्णाकामाभिवर्षकेणेन्द्रेण सयावरीः सहयान्त्योगच्छन्त्यःसत्योमदन्तिहृष्टाभवन्ति ताःइन्द्रपीतस्यसोमस्यशेषंपिबन्तीत्यर्थः वस्वीःपयःप्रदानेननिवासकारिण्यस्तागावःस्वराज्यंस्वकीयस्येन्द्रस्ययद्राज्यंराजत्वं तदनुलक्ष्यावस्थिताइतिशेषः॥ विषूवतः विपूर्व्याप्तौ अस्मादौणादिकःकुप्रत्ययः ततोमतुप् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् अन्येषामपिदृश्यतइतिसंहितायांदीर्घः व्यत्ययेनमतोर्वत्वम् । मध्वः जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावे यणादेशः। गौर्यः षिद्गौरादिभ्यश्चेतिङीष्जसिय-

णादेशे उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम्।सयावरीः यामापणे आतोमनिन्क्वनिप् वनोरचेतिङीब्रेफौ।मदन्ति मदीहर्षे श्यनिप्राप्तेव्यत्ययेनशप्।वस्वीःवसनिवासे शृस्वृस्निहीत्यादिनावसेरुप्रत्ययः धान्येनिदित्यनुवृत्तेराद्युदात्तत्वम् वोतोगुणवचनादित्यत्रवसुशब्दाद्गुणवचनाद्ङीप् आद्युदात्तार्थइतिवचनाद्वसुशब्दाद्ङीपियणादेशः जसिवाछन्दसीतिपूर्वसवर्णदीर्घत्वम्। स्वस्यराज्यंस्वराज्यं अकर्मधारयेराज्यमित्युत्तरपदाद्युदात्तत्वम्॥ १०॥

॥ इतिप्रथमस्यषष्ठेषष्ठोवर्गः॥ ६॥

एकादशीमृचमाह—

**ताअ॑स्यपृश॒नायुव॒ःसोमं॑श्रीणन्ति॒पृश्न॑यः।**
**प्रि॒याइन्द्र॑स्यधे॒नवो॒वज्रं॑हिन्वन्ति॒साय॑कं॒वस्वी॒रनु॑स्व॒राज्य॑म्॥११॥**

ताः। अ॒स्य॒। पृ॒शन॒ऽयुव॑ः। सोम॑म्। श्री॒णन्ति॒। पृश्न॑यः। प्रि॒याः। इन्द्र॑स्य। धे॒नव॑ः। वज्र॑म्। हि॒न्व॒न्ति॒। साय॑कम्। वस्वी॑ः। अनु॑। स्व॒ऽराज्य॑म्॥ ११॥

ताः पूर्वोक्ताअस्येन्द्रस्यपृशनायुवः स्पर्शनकामाः पृश्नयोनानावर्णागावः इन्द्रेणपातव्यं सोमंपयसाश्रीणन्ति मिश्रीकुर्वन्ति इन्द्रस्यप्रियाः प्रीतिहेतुभूतास्ताधेनवः सायकंशत्रूणामन्तकारकं वज्रमायुधंहिन्वन्ति शत्रुषुप्रेरयन्ति इन्द्रोयथाशत्रुषुवज्रंप्रेरयति तथेन्द्रस्यमदमुत्पादयन्तीत्यर्थः अन्यत्पूर्ववत्॥ हिन्वन्ति हिविःप्रीणनार्थः इदित्वान्नुम्। सायकं षोन्तकर्मणि ण्वुलिआत्वेयुगागमः॥ ११॥

द्वादशीमृचमाह—

**ताअ॑स्य॒नम॑सा॒सह॑ःसप॒र्यन्ति॒प्रचे॑तसः।**
**व्र॒तान्य॑स्यसश्चिरेपु॒रूणि॑पू॒र्वचि॑त्तये॒वस्वी॒रनु॑स्व॒राज्य॑म्॥१२॥**

ताः। अ॒स्य॒। नम॑सा। सह॑ः। स॒प॒र्यन्ति॑। प्रऽचे॑तसः। व्र॒तानि॑। अ॒स्य॒। स॒श्चि॒रे॒। पु॒रूणि॑। पू॒र्वऽचि॑त्तये। वस्वी॑ः। अनु॑। स्व॒ऽराज्य॑म्॥ १२॥

प्रचेतसः प्रकृष्टज्ञानास्तागावःअस्येन्द्रस्य सहोबलंनमसास्वकीयेनपयोरूपेणान्नेनसपर्यन्तिपरिचरन्ति पुरूणिबहूनि अस्येन्द्रस्यव्रतानि शत्रुवधादिरूपाणि वीर्यकर्माणिसश्चिरे सिषेविरे ज्ञापयन्तइत्यर्थः किमर्थं पूर्वचित्तये युयुत्सूनांशत्रूणांपूर्वमेवप्रज्ञापनाय अनेनयुध्यमानावृत्रादयःसर्वेमरणंप्राप्ताः किमर्थंभवद्भिःप्राणास्त्यज्यन्तेइतितेषांबोधनायेत्यर्थः अन्यत्पूर्ववत् ॥ सश्चिरे सश्चगतौ व्यत्ययेनात्मनेपदम्। पूर्वचित्तये चितीसंज्ञाने भावेक्तिन् मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ १२ ॥

चातुर्विंशिकेहनिमाध्यंदिनेसवने ब्राह्मणाच्छंसिनःशस्त्रे इन्द्रोदधीचइतिपळ्हस्तोत्रियसंज्ञकस्तृचः सूत्रितंच—आदहस्वधामन्विन्द्रोदधीचोअस्थभिरिति।

तृचेप्रथमांसूक्तेत्रयोदशीमृचमाह—

इन्द्रो॑ दधी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः। ज॒घान॑ नव॒तीर्नव॑ ॥१३॥

इन्द्रः॑। द॒धी॒चः। अ॒स्थऽभिः॑। वृ॒त्राणि॑। अप्र॑तिऽस्कुतः। ज॒घान॑। न॒व॒तीः। नव॑ ॥ १३ ॥

अत्रशाट्यायनिनइतिहासमाचक्षते—आथर्वणस्यदधीचोजीवतोदर्शनेनअसुराःपराबभूवुः अथतस्मिन्स्वर्गते असुरैःपूर्णापृथिव्यभवत् अथेन्द्रस्तैरसुरैःसहयोद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गंगतइतिशुश्राव अथपप्रच्छतत्रत्यान् नेहकिमस्यकिंचित्परिशिष्टमङ्गमस्तीति तस्मैअवोचन् अस्त्येतदाश्वंशीर्षं येनशिरसाअश्विभ्यांमधुविद्यांप्राब्रवीत् तत्तुनविद्मयत्राभवदिति। पुनरिन्द्रोऽब्रवीत् तदन्विच्छतेति तद्धान्वेषिषुः तच्छर्यणावत्यनुविद्याजहुः शर्यणावद्धवैनामकुरुक्षेत्रस्यजघनार्धेसरःस्यन्दते तस्यशिरसोऽस्थिभिरिन्द्रोऽसुरानजघानेति। अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः इन्द्रःआथर्वणस्यदधीचः एतत्संज्ञकस्यऋषेः अस्थभिःअश्वशिरःसंबन्धिभिरस्थिभिः नवतीर्नवनवसंख्याकानवतीःदशोत्तराष्टशतसंख्याकाः वथाहिलोकत्रयवर्तिनोदेवान्जेतुंआदावासुरीमायात्रिधासंपद्यते त्रिविधाअतीतानागतवर्तमानकालभेदेनतत्कालवर्तिनोदेवान्जेतुंपुनरपिप्रत्येकंत्रिगुणिताभवति एवंनवसंपद्यते पुनरपिउत्साहादिशक्तित्रयरूपेणत्रैगुण्ये सतिसप्तविंशतिःसंपद्यते पुनःसात्विकादिगुणत्रयभेदेनत्रैगुण्येसतिएकोत्तराअशीतिःसंपद्यते एवंचतुर्भिस्त्रिकैर्गुणितायामायायाः दशसुदिक्षुप्रत्येकमवस्थानेसति नवनवतयः संपद्यन्ते एवंविधानिमायारूपाणिवृत्राणिआवरकाणिअसुरजातानिजघानहतवान् ॥ दधीचः दधिअश्चतीति

दध्यङ् अश्वेतेक्रंत्विगित्यादिनाक्विन् अनिदितामितिनलोपः षष्ठ्येकवचनेअचइत्यकारलोपे चाविति दीर्घत्वम् उदात्तनिवृत्तिस्वरेणविभक्त्युदात्तत्वेप्राप्तेतदपवादतया चाविति पूर्वपदस्यान्तोदात्तत्वंप्राप्तम् अश्वेश्छन्दस्यसर्वनामस्थानमितिपुनर्विभक्त्युदात्तत्वविधानेनतद्बाध्यते । अस्थभिः छन्दस्यपिदृश्यतइतिअनजादावपिअस्थिशब्दस्यानङादेशः सचोदात्तः ॥ १३ ॥

चतुर्दशीमृचमाह—

इ॒च्छन्नश्व॑स्य॒ यच्छिरः॒ पर्व॑ते॒ष्वप॑श्रितम् । तद्वि॑दच्छर्य॒णाव॑ति ॥ १४ ॥

इ॒च्छन् । अश्व॑स्य । यत् । शिरः॑ । पर्व॑तेषु । अप॑ऽश्रितम् । तत् । वि॒दत् । श॒र्य॒णाऽव॑ति ॥ १४ ॥

पर्वतेषुपर्ववत्सुगिरिषु अपश्रितं अपगत्यश्रितं अश्वस्यअश्वसंबन्धिदधीचोयच्छिरः इच्छन्निन्द्रोवर्तते शर्यणावतिएतत्संज्ञकेसरसितच्छिरोविदत् अज्ञासीत् ज्ञात्वातदाहृत्यतदीयैरस्थिभिर्वृत्राणिजघानेतिपूर्वस्यामृचिसंबन्धः ॥ इच्छन् इषइच्छायां तुदादित्वाच्छप्रत्ययः। विदत् वेत्तेर्लुङिव्यत्ययेनच्लेरङादेशः । शर्यणावति शर्यणानामदेशाः तेषामदूरभवंसरः शर्यणावत् मध्वादिषुशर्यणाशब्दस्यपाठात् मध्वादिभ्यश्चेतिचातुर्थिकोमतुप् संज्ञायामितिमतुपोवत्वम् मतौबह्वचोनजिरादीनामितिदीर्घः ॥ १४ ॥

अतिमूर्तिनाम्न्येकाहेकर्तव्येपूर्वमेवैकमासंसूर्याचन्द्रमसीभ्यामिष्टिभ्यांयष्टव्यम् तत्रपूर्वपक्षे चान्द्रमसीष्टिः अत्राहगोरितितस्यांप्रधानस्यानुवाक्या अतिमूर्तिनेतिखण्डेसूत्रितम्—अत्राहगोरमन्वतनवोनवोभवतिजायमानइति ।

तामेतांसूक्तेपञ्चदशीमृचमाह—

अत्राह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म् । इ॒त्था च॒न्द्रम॑सो गृ॒हे ॥ १५ ॥ ७ ॥

अत्र॑ । अह॑ । गोः । अ॒म॒न्व॒त॒ । नाम॑ । त्वष्टुः॑ । अ॒पी॒च्य॑म् । इ॒त्था । च॒न्द्रम॑सः । गृ॒हे ॥ १५ ॥ ७ ॥

अत्राहअस्मिन्नेवगोर्गन्तुश्चन्द्रमसोगृहेमण्डले त्वष्टुर्दीप्तस्यसंबन्धिअपीच्यं रात्रावन्तर्हितंस्वकीयंयन्नामतेजःतदादित्यरश्मयः इत्थाइत्थमनेनप्रकारेणअमन्वतअजानन् उदकमयेस्वच्छेच-

न्द्रबिम्बे सूर्यकिरणाःप्रतिफलन्ति तत्रप्रतिफलिताःकिरणाः सूर्ययादृशींसंज्ञांलभन्ते तादृशींच-न्द्रेऽपिवर्तमानाल्लभन्तइत्यर्थः एतदुक्तंभवति यद्रात्रावन्तर्हितंसौरंतेजस्तच्चन्द्रमण्डलंप्रविश्यअ-तीवनैशंतमोनिवार्यसर्वंप्रकाशयति ईदृग्भूततेजसायुक्तःसूर्यश्चेन्द्रएव द्वादशस्वादित्येष्विन्द्रस्या-पिपरिगणितत्वात् अतोहोरात्रयोःप्रकाशकइन्द्रएवेतिइन्द्रस्तुतेःप्रतीयमानत्वादिन्द्रोदेवतेत्येतदु-पपन्नंभवति ईदृग्भूतस्यतेजसः आश्रयत्वेनचन्द्रमसःप्राधान्यविवक्षयाचान्द्रमस्यामिष्टौविनि-योगोऽप्युपपद्यते अत्रनिरुक्तम्—अथाप्यस्यैकोरश्मिश्चन्द्रमसंप्रतिदीप्यतेतदेतेनोपेक्षितव्यमादि-त्यतोस्यदीप्तिर्भवतीतिसुषुम्नःसूर्यरश्मिश्चन्द्रमागन्धर्वइत्यपिनिगमोभवति सोऽपिगौरुच्यतेअत्रा-हगोरमन्वतेति। अत्रेहगोःसमयंसतादित्यरश्मयःस्वनामापीच्यमपचितमपगतमपहृतमन्तर्हितंवे-ति ॥अमन्वत मनुअवबोधने।अपीच्यम् अपिपूर्वाञ्चिनोतेरघ्न्यादयश्चेतिनिपातनाद्यत् अतएवा-भिमतरूपसिद्धिः यद्वा अपिपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अपिगतेनि-गतेभवमपीच्यं भवेछन्दसीतियत् अचइत्यकारलोपेचाविति दीर्घत्वम् तित्स्वरितः अपीच्योप्रका-शइतिभट्टभास्करमिश्रः। इत्था इदमश्शब्दात्थाहेत्वौचच्छन्दसीतिप्रकारवचनेथाप्रत्ययः यदित्वे-दम्शब्दोनानुवर्तते तदानीमिदमस्थमुरितिथमुप्रत्ययः अव्ययादाप्सुपइतिसुब्लुकंबाधित्वासुपां-सुलुगितिडादेशः। चन्द्रमसः चन्द्रमाह्लादनंमिमीतेनिर्मिमीतइतिचन्द्रमाः चन्द्रेमोडिदित्यसिप्र-त्ययः दासीभारादिषुपठितत्वात्पूर्वपदप्रकृतिस्वरत्वम् पूर्वपदंच स्फायितञ्चीत्यादिनारक्प्रत्यया-न्तमन्तोदात्तम् ॥ १५ ॥

॥ इतिप्रथमस्यषष्ठेसप्तमोवर्गः ॥ ७ ॥

सर्वपृष्ठायामिष्टौकायस्यहविषः कोअद्येतिद्वेऋचौयाज्यानुवाक्ये सूत्रितंच—कायंदशमंको-अद्ययुंक्तेधुरिगाऋतस्येतिद्वेइति।

तत्रप्रथमांसूक्तेषोडशीमृचमाह—

कोअद्ययुंक्तेधुरिगाऋतस्यशिमीवतोभामिनोदुर्हृणायून्।
आसन्निषून्हृत्स्वसोमयोभून्यएषांभृत्यामृणधत्सजीवात् ॥१६ ॥

---

१ नि० २.६.।   २ नि० ४.२५.।

कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य॑ । शिमी॑ऽवतः । भा॒मिनः॑ । दुः॒ऽहृणा॒यून् । आ॒सन्ऽइ॑षून् । हृत्सुऽअसः॑ । मयः॒ऽभून् । यः । एषा॒म् । भृत्याम् । ऋणध॑त् । सः । जी॒वा॒त् ॥ १६ ॥

अद्यास्मिन्कर्मणिऋतस्यगच्छतइन्द्रसंबन्धिनोरथस्यधुरिअश्ववहनप्रदेशेगाः गतिमतोऽश्वान्कोयुङ्क्ते कोनामनियोक्तुंशक्नोति नकोपीत्यर्थः कीदृशानश्वान् शिमीवतः वीर्यकर्मोपेतान्भामिनः तेजसायुक्तान् दुर्हृणायून् परैर्दुःसहेनक्रोधेनयुक्तान् हृणीयतिःक्रुध्यतिकर्मा आसन्निषून् येषामासन्यास्येमुखप्रदेशेशत्रूणांप्रहरणार्थमिषवोबाणाबद्धास्तान् हृत्स्वसः हृत्सुशत्रूणांहृदयेषुअस्यन्तिस्वकीयंपादंक्षिपन्तीतिहृत्स्वसः मयोभून्मयसःसुखस्यभावयितॄन्स्वकीयानांसुखप्रदानित्यर्थः योयजमानएषामीदृशानामश्वानांभृत्यांभरणक्रियांरथवाहनक्रियां ऋणधत्समर्धयति स्तौतीतियावत् सयजमानःजीवात्जीवनवान्भवेत् यद्वा कइतिप्रजापतिरुच्यते कोहवैनामप्रजापतिरितिश्रुतेः । ऋतस्ययज्ञस्यधुरिनिर्वाहे गाः वेदरूपान्वाग्विशेषान्अद्यइदानींयुङ्क्ते संयोजयति कीदृशान्शिमीवतः प्रतिपाद्यैःकर्मभिर्युक्तान् भामिनःउज्ज्वलान् दुर्हृणायून् हृणीयतिर्हानिकर्मा हातुंअशक्यान् वेदाध्ययनस्यनित्यत्वात् आसन्निषून् आसन्यास्येइषुरेषणंगमनमुच्चारणंयेषांतान् हृत्स्वसः हृत्सुहृदयेषुदीप्यमानान्प्रकाशमानानित्यर्थः मयोभून्मयसः अध्ययनप्रभवस्यसुखसाधनस्यादृष्टस्यभावयितॄन्योयजमानः एषांवचसांभृत्यांभरणक्रियां ऋणधत् ऋद्धिमतींकरोति सजीवात् सएवजीवेत् अन्येजीवन्मृताइत्यर्थः ॥ दुर्हृणायून् हृणीङ्लज्जायां कण्ड्वादित्वाद्यक् बहुलवचनादस्मादुणूप्रत्ययः अतोलोपेसतिवर्णव्यत्ययेनाकारः मृगय्वादिर्वाद्रष्टव्यः । आसन्निषून् पद्दन्नित्यादिनाआस्यशब्दस्यासन्नादेशः इषगतावित्यस्मादिषेःकिच्चेत्युप्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । हृत्स्वसः असुक्षेपणे असगतिदीप्त्यादानेषु क्विप्चेतिक्विप् तत्पुरुषेकृतिबहुलमित्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम् । मयोभून् व्यत्ययेनह्रस्वत्वं यद्वा मितद्र्वादिभ्यउपसंख्यानमितिडुप्रत्ययः । भृत्यां भृञ्भरणे संज्ञायांसमजनिपदेतिक्यप् उदात्तइत्यनुवृत्तेःप्रत्ययस्योदात्तत्वम् । ऋणधत् ऋधुवृद्धौ लेटिव्यत्ययेनश्नम् लेटोडाटावित्यडागमः इतश्चलोपइतीकारलोपः । जीवात् जीवप्राणधारणे पूर्ववल्लेट्याडागमः ॥ १६ ॥

सप्तदशीमृचमाह—

कई॑षते तुज्यते को बि॑भाय॒ को मं॑सते॒ सन्त॒मिन्द्रं॒ को अन्ति॑ ।
कस्तो॒काय॒ क इभा॑यो॒त रा॒येऽधि॑ ब्रवत्त॒न्वे॒३॒॑ को जना॑य ॥ १७ ॥

कः । ईपते । तुज्यते । कः । बिभाय । कः । मंसते । सन्तम् । इन्द्रम् ।
कः । अन्ति । कः । तोकाय । कः । इभाय । उत । राये । अधि ।
ब्रवत् । तन्वे । कः । जनाय ॥ १७ ॥

अनुग्रहीतरीन्द्रे आगतेसतिकईपते शत्रोर्भीतःसन्कोनिर्गच्छतिनकोऽपीत्यर्थः कस्तुज्यतेकोहिंस्यते शत्रुभिर्हिंस्योऽपिकश्चिन्नास्तीत्यर्थः कोयजमानोबिभायबिभेति इन्द्रेरक्षकेसति भयमपिनोत्पद्यते दूरेतस्यशत्रुकृताहिंसा अन्ति अन्तिकेसमीपे सन्तंअस्माकंरक्षकत्वेनवर्तमानमिन्द्रंकःपुरुषोमंसतेजानाति वयमेवजानीमोनान्यइत्यर्थः एकःकःपूरकः युद्धेसहायार्थमिन्द्रेआगतेसति कोयजमानः तोकायपुत्रायअधिब्रवत् हेइन्द्रास्मदीयंपुत्रंरक्षेत्येवंरूपं अधिवचनं पक्षपातेनवचनंब्राह्मणायाधिब्रूयात् इतियथा एवंरूपमधिवचनंकोयजमानःकुर्यात् स्वयमेवेन्द्रोरक्षतीतिभावः इभायगजायकोऽधिब्रवत् उतअपिचराये शत्रुभिरपह्रियमाणायधनायकोऽधिब्रवत् अपह्रियमाणमस्मदीयंधनंरक्षेत्यधिवचनमपि कोयजमानःकुर्यात् नकोपीत्यर्थः अपिचतन्वेस्वकीयायशरीरायजनायपरिजनायचकोधिब्रवत् स्वशरीररक्षार्थंपरिजनरक्षार्थंचेन्द्रस्याधिवचनंनापेक्षितम् स्तुत्याप्रीतइन्द्रः स्वयमेवरक्षतीत्यर्थः यदातु कशब्दाभिधेयस्यप्रजापतेःसंबन्धिनिकर्मणिविनियोगः तदानींपरमैश्वर्ययोगात् इन्द्रशब्देनप्रजापतिरेवाभिधीयते यथाऐन्द्र्यागार्हपत्यमुपतिष्ठतइतिविनियोगानुसारेणकदाचनेत्यस्यामृचिविद्यमानइन्द्रोगार्हपत्यपरतयानीयतेतद्वत् ॥ ईपते ईपगतिहिंसादर्शनेषु भौवादिकआत्मनेपदी । तुज्यते तुजहिंसायां कर्मणियक् अनुपदेशाल्लसार्वधातुकानुदात्तत्वेयकएवस्वरःशिष्यते अतिङीतिपर्युदासान्निघाताभावः । मंसते लेटयडागमः सिब्बहुलंलेटीतिसिप् । अन्ति अन्तिकस्यकादिलोपोबहुलमिति कलोपः । ब्रवत् ब्रवीतेर्लेटयडागमः । तन्वे तनुशब्दाच्चतुर्थ्येकवचनेजसादिषुछन्दसिवावचनमितिवेर्ङितीतिगुणाभावेयणादेशः उदात्तस्वरितयोर्यणइतिविभक्तेःस्वरितत्वम् ॥ १७ ॥

अष्टादशीमृचमाह—

कोअग्निमीट्टेहविषाघृतेनस्रुचायजातामृतुभिर्ध्रुवेभिः ।
कस्मैदेवाआवहानाशुहोमकोमंसतेवीतिहोत्रःसुदेवः ॥१८॥

कः । अ॒ग्निम् । ई॒ट्टे॑ । ह॒विषा॑ । घृ॒तेन॑ । स्रु॒चा । य॒जा॒तै॒ । ऋ॒तुऽभिः॑ । ध्रु॒वेभिः॑ । कस्मै॑ । दे॒वाः । आ । व॒हा॒न् । आ॒शु । होम॑ । कः । मं॒स॒ते॒ । वी॒तिऽहो॑त्रः । सु॒ऽदे॒वः ॥ १८ ॥

कोयजमानोऽग्निमीट्टे इन्द्रार्थंहविर्निरूप्य अग्निंस्तौतिइन्द्रायहविर्निर्वापोऽपि सम्यक्कर्तुंन शक्यते इन्द्रस्यदुर्विज्ञानत्वात् कोवाइन्द्रयागार्थंअग्निंस्रुचाजुह्वाध्रुवेभिः. ध्रुवैर्नित्यैः ऋतुभिःवसन्तादिकालैः उपलक्षितेनघृतेन हविषायजातै यजेत् यद्वा ऋतवः प्रयाजदेवताः ऋतवोवैप्रयाजाइतिश्रुतेः । ताभिर्ध्रुवैःप्रकृतावनुष्ठेयतयानिश्चलैर्ऋतुभिःसहअग्निं आज्यभागदेवतांघृतेनहविषाकोयजेत् नकोऽपीत्यर्थः कस्मैयजमानाय होमह्वातव्यंप्रशस्यंधनं आशुशीघ्रंदेवाः आवहान्आवहन्ति प्रयच्छन्तिनकस्माअपीत्यर्थः इन्द्रएवधनस्यदातानान्येदेवाइतिइन्द्रःस्तूयते वीतिहोत्रः प्राप्तयज्ञः सुदेवःशोभनदेवताकः कोयजमानोमंसते इन्द्रंसम्यक्जानाति नकोपीत्यर्थः वहुविधेनस्तोत्रेणचिरकालोपासनेनचेन्द्रःप्रत्यक्षोभवति नान्येनप्रकारेणेतितात्पर्यार्थः॥ ईट्टे ईडस्तुतौ अदादित्वाच्छपोलुक् । स्रुचा सावेकाचइतिविभक्तेरुदात्तत्वम् । यजातै यजतेर्लेट्याडागमः वैतोन्यत्रेत्यैकारः । वहान् वहतेर्लेट्याडागमः इतश्चलोपइतीकारलोपः संयोगान्तस्येतितकारलोपः । होम ह्वयतेःकृतात्वस्यआतोमनिन्निति मनिन् ह्वइत्यनुवृत्तौबहुलंछन्दसीति संप्रसारणं यद्वा नामन्सीमन्नित्यादौहोमन्शब्दोमनिन्प्रत्ययान्तोनिपात्यते । मंसते मनज्ञाने लेटचडागमः सिव्बहुलंलेटीतिसिप् । वीतिहोत्रः वीगत्यादिषु अस्मात्कर्मणिमन्त्रेवृषेत्यादिना क्तिन् सचोदात्तः होत्रंहोमः हुयामाश्रुभसिभ्यस्त्रन् इतित्रन्प्रत्ययः वीतिः प्राप्तोहोमोयेन बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। सुदेवः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्॥ १८॥

एकोनविंशीमृचमाह—

त्वम॑ङ्ग॒ प्रशं॑सिषो दे॒वः श॑विष्ठ॒ मर्त्य॑म् ।
न त्वद॒न्यो म॑घवन्नस्ति मर्डि॒तेन्द्र॒ ब्रवी॑मि ते॒ वचः॑ ॥१९॥

त्वम् । अ॒ङ्ग । प्र । शं॒सि॒षः॒ । दे॒वः । श॒वि॒ष्ठ॒ । मर्त्य॑म् । न । त्वत् । अ॒न्यः । म॒घ॒ऽव॒न् । अ॒स्ति॒ । म॒र्डि॒ता । इन्द्र॑ । ब्रवी॑मि । ते॒ । वचः॑ ॥१९

१ तै० सं० १. ६. ११. ।

अङ्गेत्यभिमुखीकरणे अङ्गशविष्ठ हेबलवत्तमइन्द्र देवोद्योतमानस्त्वं मर्त्यंमरणधर्माणं त्वां स्तुवन्तंपुरुषं प्रशंसिषः सम्यगनेनस्तुतमितिप्रशंस हेमघवन्धनवन्निन्द्र त्वदन्यस्त्वत्तोऽन्यः कश्चिन्मर्डितासुखयितानास्ति अतःकारणात्तेतुभ्यं इदंस्तुतिलक्षणंवचोब्रवीमिउच्चारयामि ॥ शंसिषः शंसुस्तुतौ लेटिसिप्यडागमः सिब्बहुलंलेटीतिविकरणस्यसिप् तस्यार्धधातुकत्वादिडागमः। शविष्ठ अतिशयेनशवस्वीशविष्ठः इष्ठनिविन्मतोर्लुक् टेरितिटिलोपः। मर्डिता मृडसुखने तृचइडागमः ॥ १९ ॥

विंशीमृचमाह—

मातेराधांसिमातऊतयोवसोस्मान्कदाचनादभन्।
विश्वाचनउपमिमीहिमानुपवसूनिचर्पणिभ्यआ॥२०॥८॥

मा। ते। राधांसि। मा। ते। ऊतयः। वसो इति। अस्मान्। कदा। चन। दभन्। विश्वा। च। नः। उपऽमिमीहि। मानुष। वसूनि। चर्पणिऽभ्यः। आ॥ २०॥ ८॥

हेवसोनिवासयितः इन्द्र तेतवसंबन्धीनिराधोत्येभिरितिराधांसिभूतानिअस्मान् कदाचन कदाचिदपिमादभन्माविनाशयन्तु तथाऊतयोगन्तारः यद्वा धूतयइत्यत्रवर्णलोपः धूतयः कंपयितारः तेत्वदीयामरुतश्चमादभन् हेमानुषमनुष्यहितेन्द्र चर्षणिभ्यः मन्त्रद्रष्टृभ्यः नोऽस्मभ्यंविश्वा विश्वानिसर्वाणिवसूनिधनानिचआउपमिमीहि सर्वतआहत्यअस्मत्समीपेकुरु सर्वत्रवर्तमानंधनमस्मभ्यंप्रयच्छेत्यर्थः ॥ कदा किंशब्दात्सर्वैकान्यकियत्तदःकालेदेतिदाप्रत्ययः किमःकइतिकादेशः व्यत्ययेनाद्युदात्तत्वम्। दभन् दंभुदंभे लोडर्थे छान्दसेलङि बहुलंछन्दसीतिविकरणस्यलुक् नमाङ्योगेइत्यडभावः। मिमीहि माङ्मानेशब्देच व्यत्ययेनपरस्मैपदं जुहोत्यादित्वाच्श्लुः भृञामित्यभ्यासस्येत्वम् हेर्ङित्त्वादघुमास्थेतीत्वम् ॥ २० ॥

॥ इतिप्रथमस्यषष्ठेऽष्टमोवर्गः ॥ ८ ॥

॥ इतिप्रथमेमण्डलेत्रयोदशोनुवाकः ॥ १३ ॥

चतुर्दशानुवाकेनवसूक्तानि तत्रमरुतइतिद्वादशर्चंप्रथमंसूक्तम् गोतमस्यार्षं पञ्चमीद्वादश्यौ त्रिष्टुभौ शिष्टाजगत्यः मरुतोदेवताः तथाचानुक्रान्तम्—प्रयेद्वादशमारुतंहपञ्चम्यन्तेत्रिष्टुभाविति।

हशब्दप्रयोगादिदमादीनिचत्वारिसूक्तानिमरुद्देवत्यानि । अभिप्लवषडहस्यचतुर्थेहनिआग्निमारुतेएतत्सूक्तंमारुतनिविद्धानीयम् सूत्रितंच—प्रयेशुंभन्तेजनस्यगोपाइत्याग्निमारुतमिति ।

तत्रप्रथमामृचमाह—

प्रयेशुंभन्तेजनयोनसप्तयोयामन्रुद्रस्यसूनवःसुदंससः ।
रोदसीहिमरुतश्चक्रिरेवृधेमदन्तिवीराविदथेषुघृष्वयः ॥१॥

प्र । ये । शुंभन्ते । जनयः । न । सप्तयः । यामन् । रुद्रस्य । सूनवः । सुऽदंससः । रोदसी इति । हि । मरुतः । चक्रिरे । वृधे । मदन्ति । वीराः । विदथेषु । घृष्वयः ॥ १ ॥

येमरुतः यामन्यामनिगमनेनिमित्तभूतेसति प्रशुंभन्ते प्रकर्षेणस्वकीयान्यङ्गान्यलंकुर्वन्ति जनयोन जायाइव यथायोषितः स्वकीयान्यङ्गान्यलंकुर्वन्तितद्वत् कीदृशामरुतः सप्तयः सर्पणशीलाः रुद्रस्यसूनवः रोदयतिसर्वमन्तकालेइतिरुद्रःपरमेश्वरः तस्यपुत्राः सुदंससः शोभनकर्माणः एतदेवोपपादयति हियस्मान्मरुतोरोदसीद्यावापृथिव्यौवृधेवृष्टिप्रदानादिनावर्धनायचक्रिरेकृतवन्तः अतःसुदंससइत्यर्थः वीराःविशेषेणशत्रुक्षेपणशीलाः घृष्वयःघर्षणशीलाः महीरुहशिलोच्चयादेर्भञ्जकाइत्यर्थः एवंभूतास्तेमरुतोविदथेषु विदन्त्येषुषष्ठव्यतयादेवानितिविदथायज्ञाः तेषुमदन्तिसोमपानेनहृष्यन्ति ॥ शुंभन्ते शुभशुंभदीप्तौ भौवादिकः । जनयः जायन्तेआस्वपत्यानीतिजनयोजायाः इन्सर्वधातुभ्यइतीन्प्रत्ययः । यामन् यामापणे कृत्यल्युटोबहुलमितिबहुलवचनादातोमनिन्निति भावेमनिन् सुपांसुलुगितिसप्तम्यालुक् । सुदंससः दंसइतिकर्मनाम शोभनंदंसोयेषां सोर्मनसीअलोमोपसीइत्युत्तरपदाद्युदात्तत्वम् । चक्रिरे हिचेतिनिघातप्रतिषेधः । वृधे वृधुवृद्धौ संपदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम् । मदन्ति मदीहर्षे श्यनिप्राप्तेव्यत्ययेनशप् पादादित्वान्निघाताभावः । विदथेषु विदज्ञाने रुदिविदिभ्यांकिदितिअथप्रत्ययः । घृष्वयः घृषुसंघर्षे कुविघृष्वीत्यादिनाविन्प्रत्ययान्तोनिपात्यते ॥१॥

द्वितीयामृचमाह—

तउक्षितासोमहिमानमाशतदिविरुद्रासोअधिचक्रिरेसदः ।
अर्चन्तोअर्कंजनयन्तइन्द्रियमधिश्रियोदधिरेपृश्निमातरः ॥२॥

ते । उक्षितासः । महिमानम् । आशत । दिवि । रुद्रासः । अधि । चक्रिरे । सदः । अर्चन्तः । अर्कम् । जनयन्तः । इन्द्रियम् । अधि । श्रियः । दधिरे । पृश्निऽमातरः ॥ २ ॥

येपूर्वोक्तगुणविशिष्टास्तेमरुतः उक्षितासोदेवैरभिषिक्ताःसन्तोमहिमानंमहत्त्वं आशत आप्नुवन् रुद्रासोरुद्रस्यपुत्राः उपचाराज्जन्येजनकशब्दः तेरुद्रपुत्रामरुतः दिविद्योतमानेनभसि सदःसदनंस्थानंअधिचक्रिरेअधिकंसर्वोत्कृष्टंकृतवन्तः अर्कमर्चनीयमिन्द्रं अर्चन्तः पूजयन्तः इन्द्रियंइन्द्रस्यलिङ्गंवीर्यंजनयन्तः महरभगवोजहिवीरयस्वेत्येवंरूपेणवाक्येनोत्पादयन्तः पृश्निमातरः पृश्नेर्नानारूपायाभूमेःपुत्रामरुतः श्रियः ऐश्वर्याणिअधिदधिरे आधिक्येनाधारयन् ॥ उक्षितासः उक्षसेचने कर्मणिनिष्ठा आज्जसेरसुक्। महिमानं महच्छब्दात्पृथ्वादिलक्षणइमनिच् टेरितिटिलोपः।आशत अशूव्याप्तौ लङिबहुलंछन्दसीतिविकरणस्यलुक्। इन्द्रियं इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमितिघच्प्रत्ययान्तोनिपात्यते । पृश्निमातरः प्राश्नुवेसर्वाणिरूपाणीतिपृश्निर्भूमिः श्रूयतेचं–इयंवैपृश्निः । घृणिपृश्निरित्यादौनिपातनादभिमतरूपसिद्धिः पृश्निर्मातायेषांतेनथोक्ताः ऋतश्छन्दसीतिसमासान्तस्यकपःप्रतिषेधः ॥ २ ॥

तृतीयामृचमाह–

गोमातरोयच्छुभयन्तेअञ्जिभिस्तनूषुशुभ्रादधिरेविरुक्मतः ।
बाधन्तेविश्वमभिमातिनमपवर्त्मान्येषामनुरीयतेघृतम् ॥ ३ ॥

गोऽमातरः । यत् । शुभयन्ते । अञ्जिऽभिः । तनूषु । शुभ्राः । दधिरे । विरुक्मतः । बाधन्ते । विश्वम् । अभिऽमातिनम् । अप । वर्त्मानि । एषाम् । अनु । रीयते । घृतम् ॥ ३ ॥

गोमातरः गोरूपाभूमिर्मातायेषांतेमरुतः अञ्जिभिः रूपाभिव्यञ्जकैराभरणैर्यद्यदाशुभयन्ते स्वकीयान्यङ्गानिशोभायुक्तानिकुर्वन्ति तदानींशुभ्रादीप्तामरुतः तनूषुस्वकीयेषुशरीरेषु विरुक्मतोविशेषेणरोचमानानलङ्कारान्दधिरेधारयन्ति अपिचविश्वंसर्वंअभिमातिनंशत्रुंअपबाधन्तेहिंसन्ति एषांमरुतांवर्त्मानिमार्गाननुसृत्यघृतंक्षरणशीलमुदकंरीयतेस्रवति यत्रमरुतोगच्छन्तिवृष्टयु-

१ तै० ब्रा० १. ४. १. १

दकमपितदनुसारेणतत्रगच्छतीत्यर्थः॥ शुभयन्ते संज्ञापूर्वकस्यविधेरनित्यत्वाल्लघूपधगुणाभावः। अञ्जिभिः अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु खनिकष्यज्यसिवसिध्वनिस्तनिवनिसनिग्रन्थिचरिभ्यश्चेतिइप्रत्ययः। शुभ्राः शुभदीप्तौ स्फायितञ्चीत्यादिनारक्। विरुक्मतः विशिष्टारुक्विरुक् तद्वन्तोविरुक्मन्तः मतुपिअयस्मयादित्वेनपदत्वात्कुत्वं भत्वाज्जश्त्वाभावः। रीयते रीङ्स्रवणे दैवादिकः॥३॥

चतुर्थीमृचमाह—

वियेभ्राजन्तेसुमखासऋष्टिभिःप्रच्यावयन्तोअच्युताचिदोजसा।
मनोजुवोयन्मरुतोरथेष्वावृषव्रातासःपृषतीरयुग्ध्वम्॥ ४ ॥

वि। ये। भ्राजन्ते। सुऽमखासः। ऋष्टिऽभिः। प्रऽच्यवयन्तः। अच्युता। चित्। ओजसा। मनःऽजुवः। यत्। मरुतः। रथेषु। आ। वृषऽव्रातासः। पृषतीः। अयुग्ध्वम्॥ ४ ॥

सुमखासः शोभनयज्ञाःयेमरुतःऋष्टिभिरायुधैर्विभ्राजन्ते विशेषेणदीप्यन्ते तेमरुतःअच्युताचित् च्यावयितुमशक्यानिदृढानिपर्वतादीन्यपि ओजसास्वकीयेनबलेनप्रच्यावयन्तः प्रकर्षेणच्यावयितारः प्रेरयितारोभवन्ति उत्तरार्धःप्रत्यक्षकृतः हेमरुतःमनोजुवः मनोवद्वेगगतयः वृषव्रातासः वृष्ट्युदकसेचनसमर्थसङ्घसंघात्मकाः यूयंरथेषुआत्मीयेषुपृषतीः पृषत्यइतिमरुद्वाहनानांसंज्ञा पृषत्योमरुतामित्युक्तत्वात् पृषद्भिःश्वेतबिन्दुभिःयुक्तामृगीःयद्यदाअयुग्ध्वंआभिमुख्येननियुक्ताअकुरुध्वम् तदानींपर्वतादिकंप्रच्यवतइत्यर्थः॥ सुमखासः सर्वेविधयश्छन्दसिविकल्प्यन्तइति नञ्सुभ्यामित्युत्तरपदस्यप्रवृत्त्यभावे बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। अच्युता शेश्छन्दसिबहुलमितिशेर्लोपः। मनोजुवः जुइतिसौत्रोधातुर्गत्यर्थः क्विब्वचीत्यादिनाक्विब्दीर्घौ। अयुग्ध्वं युजिर्योगे लुङिधिचेतिसकारलोपः॥ ४ ॥

पञ्चमीमृचमाह—

प्रयद्रथेषुपृषतीरयुग्ध्वंवाजेअद्रिंमरुतोरंहयन्तः।
उतारुषस्यविष्यन्तिधाराश्चर्मेवोदभिर्व्युन्दन्तिभूम॥५॥

प्र। यत्। रथेषु। पृषतीः। अयुग्ध्वम्। वाजे। अद्रिम्। मरुतः। रंहयन्तः। उत। अरुषस्य। वि। स्यन्ति। धाराः। चर्मऽइव। उदऽभिः। वि। उन्दन्ति। भूम॥ ५ ॥

हेमरुतः पृषतीः यद्यथारथेषुप्रायुग्ध्वं प्रायूयुजन् किंकुर्वन्तः वाजेअन्नेनिमित्तभूतेसति अद्रिंमेघंरंहयन्तः वर्षणार्थमेरयन्तः उततदानीं अरुषस्यआरोचमानस्यसूर्यस्यविद्युतामेवांसकाशात् वृष्ट्युदकधाराः भवन्तोविष्यन्तिविमुञ्चन्ति विमुक्तास्ताश्चधाराः उदभिरुदकैश्चर्मेवपरिमितमल्पंचर्मयथाअमयत्नेनक्लेदयते एवंभूम सर्वांभूमिंव्युन्दन्तिविशेषेणआर्द्रांकुर्वन्ति ॥ रंहयन्तः रहिगतौ। विष्यन्ति षोऽन्तकर्मणि दैवादिकः ओतःश्यनीत्योकारलोपः उपसर्गात्सुनोतीतिषत्वम्। उन्दन्ति पद्दन्नित्यादिनाउदकशब्दस्यउदन्नादेशः। व्युन्दन्ति उन्दीक्लेदने। भूम सुपांसुलुगिति भूमिशब्दादुत्तरस्यामोडादेशः छान्दसंह्रस्वत्वम् ॥ ५ ॥

तृतीयसवनेआवोवहन्त्वितिपोतुःप्रस्थितयाज्या सूत्रितंच—आवोवहन्तुसप्तयोरघुष्यदोऽमेवनःसुहवाआहिगन्तनेति।

तामेतांसूक्तेषष्ठीमृचमाह—

आवो॑वह॒न्तु॒सप्त॑यो॒रघु॒ष्यदो॑र॒घुप॑त्वा॒नः॒प्रजि॑गात॒बा॒हुभिः॑।
सीद॒ता॒ब॒र्हिरु॒रुवः॒सद॑स्कृ॒तंमा॒दय॑ध्वंमरुतो॒मध्वो॒अन्ध॑सः ॥६॥९॥

आ। वः॒। व॒ह॒न्तु॒। सप्त॑यः। र॒घु॒ऽस्यदः॑। र॒घु॒ऽपत्वा॑नः। प्र।
जि॒गा॒त॒। बा॒हुऽभिः॑। सीद॑त। आ। ब॒र्हिः। उ॒रु। वः॒। सदः॑।
कृ॒तम्। मा॒दय॑ध्वम्। म॒रु॒तः॒। मध्वः॑। अन्ध॑सः ॥ ६ ॥ ९ ॥

हेमरुतो वोयुष्मान्सप्तयः सर्पणशीलाः अश्वाः आवहन्तु अस्मद्यज्ञंप्रापयन्तु कीदृशाः सप्तयः रघुष्यदः लघुशीघ्रंस्यन्दमानाः वेगेनगच्छन्तइत्यर्थः रघुपत्वानः लघुशीघ्रंपतन्तोगच्छन्तोयूयं बाहुभिःस्वकीयैःहस्तैःअस्मभ्यंदातव्यंधनमाहृत्यप्रजिगातप्रकर्षेणगच्छत हेमरुतोवोयुष्माकंसदःसदनंवेदिलक्षणंस्थानंउरुविस्तीर्णंकृतं तत्रयदास्तीर्णंबर्हिस्तदासीदत तस्मिन्बर्हिष्युपविशत उपविश्यचमध्वोमधुरस्यअन्धसः सोमलक्षणस्यान्नस्यपानेनमादयध्वंहृष्टाभवत ॥ रघुष्यदः रघुस्यन्दन्तइतिरघुष्यदः स्यन्दूप्रस्रवणे क्विप्चेतिक्विप् अनिदितामितिनलोपः कृदुत्तरपदप्रकृतिस्वरत्वम्। रघुपत्वानः पत्लृगतौ अन्येभ्योऽपिदृश्यन्तइतिवनिप्। जिगात गास्तुतौ जौहोत्यादिकः जिगातीतिगतिकर्मसुपाठात् अत्रगत्यर्थः लोण्मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेतितबादेशः तस्यपित्त्वेनङित्त्वाभावादीहल्यघोरितीत्वाभावः। सदः अतःकृकमीतिविसर्जनीयस्यसत्वम्। मादयध्वं मदतृप्तियोगे चुरादिरात्मनेपदी ॥६॥

॥इतिप्रथमस्यषष्ठेनवमोवर्गः ॥ ९ ॥

सप्तमीमृचमाह—

तेंवर्धन्तुस्वतंवसोमहित्वनानाकंतुस्थुरुरुचंक्रिरेसदंः ।
विष्णुर्यद्धावद्वृषणंमदुच्युतंवयोनसींदुन्नधिंबर्हिषिंप्रिये ॥७॥

ते । अवर्धन्त । स्वऽतंवसः । महिऽत्वना । आ । नाकंम् । तुस्थुः । उरु । चक्रिरे । सदंः । विष्णुंः । यत् । ह । आवंत् । वृषंणम् । मदुऽच्युतंम् । वयंः । न । सीदुन् । अधिं । बर्हिषिं । प्रिये ॥ ७ ॥

तेमरुतः अवर्धन्तवृद्धिंगताः कीदृशाःस्वतवसःस्वाश्रयबलाःनान्यस्यकस्यचित् बलमपेक्षन्ते वृद्धिंमाप्यच महित्वनामहिम्नामहत्त्वेननाकंस्वर्गंआतस्थुः आस्थितवन्तःसदःसदनंनभोलक्षणंस्थानंचस्वकीयनिवासायउरुविस्तीर्णंचक्रिरे यत्र्येभ्योमरुद्भ्यः यदर्थंवृषणंकामाभिवर्षकं मदच्युतंमदस्यहर्षस्यआसेक्तारंयज्ञंविष्णुर्हावत् विष्णुरेवागत्यरक्षति तेमरुतःवयोनपक्षिणोयथा शीघ्रमागच्छन्ति एवंशीघ्रमागत्यबर्हिष्यधि अस्मदीययज्ञेप्रियेप्रीतिकरेसीदन्सीदन्तु उपविशन्तु ॥ तेवर्धन्त स्वरितोवानुदात्तेपदादावित्येकादेशस्यस्वरितत्वम् । महित्वना भावमत्ययादुत्तरस्याङोव्यत्ययेननाभावः उदात्तत्वंच यद्वा सुपांसुलुगितिआजादेशोनकारोपजनश्च । तस्थुः नाकमातस्थुश्चसदश्चविस्तीर्णंचक्रिरइतिचार्थमतीतेश्चादिलोपेविभाषेतिमथमायास्तिङ्विभक्तेर्निघातमतिषेधः । यत् सुपांसुलुगितिचतुर्थ्यालुक् । आवत् छान्दसोवर्तमानेलङ् । वृषणं वाषपूर्वस्यनिगमेइतिउपधादीर्घाभावः । मदच्युतं मदंच्योवतीतिमदच्युत् च्युतिर्आसेचने क्विप्चेतिक्विप् । सीदन् लिङर्थेलेट्यडागमः ॥ ७॥

अष्टमीमृचमाह—

शूराइवेद्युयुधयोनजग्मयःश्रवस्यवोनपृतंनासुयेतिरे ।
भयंन्तेविश्वाभुवनामरुद्भ्योराजानइवत्वेषसंन्दृशोनरंः ॥८॥

शूराःऽइव । इत् । युयुधयः । न । जग्मयः । श्रवस्यवंः । न । पृतंनासु । येतिरे । भयंन्ते । विश्वां । भुवंना । मुरुत्ऽभ्यंः । राजानःऽइव । त्वेषऽसंन्दृशः । नरंः ॥ ८ ॥

इदित्येतत्समुच्चये शूराइवेव शौर्योपेतायुयुत्सवः पुरुषाइवच युयुधयोन शत्रुभिर्युध्यमानाः पुरुषाइवच जग्मयःशीघ्रंगच्छन्तोमरुतः श्रवस्यवोनश्रवोन्नमात्मनइच्छन्तःपुरुषाइव पृतनासु सङ्ग्रामेषुयेतिरे प्रयतन्ते वृत्रादिभिर्युद्धंव्याप्नुवन्ते तादृशेभ्योमरुद्भ्योविश्वाभुवनासर्वाणिभूतजातानि भयन्ते बिभ्यति येनरोवृष्ट्यादेर्नेतारोमरुतः राजानइव राजमानानृपतयइवत्वेषसंदृशः दीप्तसंदर्शनाउग्ररूपतयादृष्टुमशक्याभवन्तितेभ्यइत्यर्थः ॥ युयुधयः युधसंप्रहारे आदृगमहनजनइत्यत्रोत्सर्गश्छन्दसीतिवचनात्किन्प्रत्ययः लिड्वद्भावाद्द्विर्भावादि कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तत्वम् । जग्मयः तेनैवसूत्रेणकिन्प्रत्ययः गमहनेत्यादिनोपधालोपः स्थानिवद्भावाद्द्विर्भावादि । श्रवस्यवः श्रवइच्छतिश्रवस्यति क्याच्छन्दसीत्युप्रत्ययः । येतिरे यतीप्रयत्ने छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् । भयन्ते ञिभीभये बहुलंछन्दसीतिशपःश्लोरभावः । त्वेषसंदृशः त्विषदीप्तौ पचाद्यच् दृशिर्प्रेक्षणे संपूर्वादस्मात्संपदादिलक्षणोभावेक्विप् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

त्वष्टायद्वज्रंसुकृतंहिरण्ययंसहस्रभृष्टिंस्वपाअवर्तयत् ।
धत्तइन्द्रोनर्यपांसिकर्तवेहन्वृत्रंनिरपामौब्जदर्णवम् ॥९॥

त्वष्टा । यत् । वज्रम् । सुऽकृतम् । हिरण्ययम् । सहस्रऽभृष्टिम् ।
सुऽअपाः । अवर्तयत् । धत्ते । इन्द्रः । नरि । अपांसि । कर्तवे ।
अहन् । वृत्रम् । निः । अपाम् । औब्जत् । अर्णवम् ॥ ९ ॥

स्वपाः शोभनकर्मा त्वष्टाविश्वनिर्माता यद्वज्रं अवर्तयत् इन्द्रंप्रत्यगमयत् दत्तवानित्यर्थः कीदृशंसुकृतंसम्यक्निष्पादितं हिरण्ययं सुवर्णमयंसहस्रभृष्टिंअनेकाभिर्धाराभिर्युक्तं तद्वज्रंइन्द्रोधत्ते धारयति किमर्थं नरिअग्रनृसंबन्धात् नृशब्देनसंग्रामोऽभिधीयते संग्रामेअपांसि शत्रुहननादिलक्षणानिकर्माणिकर्तवेकर्तुं एवंवज्रंधृत्वा तेनवज्रेणवृत्रंवृष्ट्युदकस्यावरकं अर्णवं अर्णसोदकेनयुक्तंमेघंअहन्अवधीत् अपां तेननिरुद्धाअपश्च निरौब्जत्निःशेषेणाधोमुखंअपातयन् प्रवृद्धाअकरोदित्यर्थः ॥ सुकृतं सुपूर्वात्करोतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । हिरण्ययं हिरण्यशब्दादुत्तरस्यमयटोमकारस्यलोपः ऋत्व्यवास्त्व्यवास्त्वेत्यादिनानिपात्यते।

स्वपाः सोमनसीअलोमोपसीइत्युत्तरपदाद्युदात्तत्वम्। कर्तवे तुमर्थेसेसेनितिकरोतेस्तवेन्प्रत्ययः। अपां क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी ऊडिदमितिविभक्तेरुदात्तत्वम्। औब्जत् उब्जआर्जवे। अर्णवं अर्णसोलोपश्चेतिमत्वर्थीयोवः सलोपश्च ॥ ९ ॥

दशमीमृचमाह—

ऊर्ध्वंनुनुद्रेवतंतओजसादादृहाणंचिद्बिभिदुर्विपर्वतम्।
धमन्तोवाणंमरुतःसुदानवोमदेसोमस्यरण्यानिचक्रिरे ॥१०॥

ऊर्ध्वम्। नुनुद्रे। अवतम्। ते। ओजसा। दादृहाणम्। चित्। बिभिदुः। वि। पर्वतम्। धमन्तः। वाणम्। मरुतः। सुऽदानवः। मदे। सोमस्य। रण्यानि। चक्रिरे ॥ १० ॥

अत्रेयमाख्यायिका—गोतमऋषिःपिपासयापीडितःसन्मरुतःउदकंययाचे तदनन्तरं मरुतोदूरस्थंकूपमुद्धृत्ययत्रसगोतमऋषिस्तिष्ठतितांदिशंनीत्वाऋषिसमीपेकूपमवस्थाप्य तत्पार्श्वे आहावंचकृत्वा तस्मिन्नाहावेकूपमुत्सिच्यतमृषिंतेनोदकेनतर्पयांचक्रुः अयमर्थोनयोत्तरयाचमतिपाद्यते—तेमरुतः अवतं अवस्तात्ततोभवतीतिअवतःकूपः कूपनामसुच अवतःअवटइतिपठितम् तमूर्ध्वंउपरियथाभवतितथाओजसास्वकीयेनबलेन नुनुद्रेप्रेरितवन्तः उत्खातवन्तइत्यर्थः एवंकूपमुत्खायऋषेराश्रमंप्रतिनयन्तोमरुतः मार्गमध्येदादृहाणंप्रवृद्धंगतिनिरोधकं पर्वतंचित् पर्ववन्तंशिलोच्चयमपिविबिभिदुःविशेषेणबभंजुः सुदानवःशोभनदानास्तेमरुतः वाणंशतसंख्याभिस्तन्त्रीभिर्युक्तंवीणाविशेषंधमन्तोवादयन्तः सोमस्यमदे सोमपानेनहर्षेसति रण्यानिस्तुत्यानिरमणीयानिधनानिचक्रिरे स्तोतृभ्यःकुर्वन्ति ॥ नुनुद्रे णुदप्रेरणे लिटि इरयोरेइतिरेआदेशः। दादृहाणं दृहदृहिवृद्धौ लिटःकानच्। धमन्तः ध्माशब्दाग्निसंयोगयोः पाघ्रेत्यादिनाधमादेशः। वाणं अणरणवणशब्दार्थाः कर्मणिघञ् कर्षात्वतइत्यन्तोदात्तत्वम्। रण्यानि रणतेर्भावे घञ्रिरण्योरुपसंख्यानमित्यप् ततोभवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम्॥ १०॥

एकादशीमृचमाह—

जिह्मंनुनुद्रेवतंतयादिशासिञ्चन्नुत्संगोतमायतृष्णजे।
आगच्छन्तीमवसाचित्रभानवःकामंविप्रस्यतर्पयन्तधामभिः ॥११॥

जि॒ह्मम् । नु॒नु॒द्रे॒ । अ॒व॒तम् । तया॑ । दि॒शा । असि॑ञ्चन् । उत्स॑म् ।
गोत॑माय । तृ॒ष्णऽजे॑ । आ । ग॒च्छ॒न्ति॒ । ई॒म् । अव॑सा ।
चि॒त्रऽभा॑नवः । काम॑म् । विप्र॑स्य । त॒र्पय॑न्त । धाम॑ऽभिः ॥ ११ ॥

मरुतः अवतंउद्धृतंकूपंयस्यांदिशिऋषिर्वसतितयादिशाजिह्मंवक्रं तिर्यञ्चंनुनुद्रे प्रेरितवन्तः एवंकूपंनीत्वाऋष्याश्रमेवस्थाप्यतृष्णजेतृषितायगोतमायऋषयेतदर्थंउत्सं जलप्रवाहंकूपादुद्धृत्य असिञ्चन्आहावेअवानयन् एवंकृत्वा ईमेनंस्तोतारमृषिंचित्रभानवः विचित्रदीप्तयस्तेमरुतः अवसाईदृशेनरक्षणेनसहआगच्छन्तितत्समीपंप्राप्नुवन्ति प्राप्यचविप्रस्यमेधाविनोगोतमस्यकाममभिलाषंधामभिरायुधोधारकैरुदकैस्तर्पयन्तअतर्पयन् ॥ तया नगोश्वन्त्सावर्णेतिसावेकाचइतिप्राप्तस्यविभक्त्युदात्तस्यप्रतिषेधः । दिशा सावेकाचइतिविभक्तेरुदात्तत्वम् । तृष्णजे ञितृषापिपासायां स्वपितृषोर्नजिङ् प्रत्ययाद्युदात्तत्वम् पदकारस्यशाकल्यस्यत्वयमभिप्रायः अन्येष्वपिदृश्यतइतिदृशिग्रहणात् केवलादपिजिनङ्प्रत्ययः तृष्णाजावायस्यसतथोक्तः ङ्यापोःसंज्ञाछन्दसोर्बहुलमितिह्रस्वत्वं बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । धामभिः दधातेरातोमनिन्निति मनिन् ॥ ११ ॥

मारुतेपशौयावःशर्मेतिहविषोयाज्या, प्रदानानामितिखण्डेसूत्रितम्—अराइवेदचरमाअहेवयावःशर्मशशमानायसन्तीति ।

तामेतांसूक्तेद्वादशीमृचमाह—

या॒वः॒शर्म॑शशमा॒नाय॒सन्ति॑त्रि॒धातू॑निदा॒शुषे॑यच्छ॒ताधि॑ ।
अ॒स्मभ्यं॒तानि॑मरुतो॒वियं॑न्तर॒यिंनो॑धत्तवृषणःसु॒वीर॑म् ॥१२॥ १०॥

या । व॒ः । शर्म॑ । श॒श॒मा॒नाय॑ । सन्ति॑ । त्रि॒ऽधातू॑नि । दा॒शुषे॑ ।
य॒च्छ॒त॒ । अधि॑ । अ॒स्मभ्य॑म् । तानि॑ । म॒रु॒तः॒ । वि । य॒न्तु॒ । र॒यिम् ।
नः॒ । ध॒त्त॒ । वृ॒ष॒णः॒ । सु॒ऽवीर॑म् ॥ १२ ॥ १० ॥

हेमरुतः योयुष्माकंसंबन्धीनि या यानिशर्मशर्माणिसुखानिगृहाणिवा कीदृशानि त्रिधातूनिपृथिव्यादिषुत्रिषुस्थानेष्ववस्थितानि शशमानाययुष्मान्स्तुतिभिःप्रजमानायदाशुंसंपादितानि

पूर्वोक्तलक्षणानिशर्माणियानिसन्ति यानिचदाशुषेहविर्दत्तवतेयजमानायअधियच्छतअधिकंम- यच्छथ हेमरुतः तानिसर्वाणिशर्माण्यस्मभ्यंवियन्त विशेषेणप्रयच्छत किञ्च हेवृषणः कामानांव- र्षितारोमरुतः नोऽस्मभ्यंसुवीरंशोभनैर्वीरैःपुत्रादिभिर्युक्तंरयिंधनंधत्त दत्त॥ या शेश्छन्दसिबहुल- मितिशेर्लोपः। शर्म सुपांसुलुगितिजसोलुक्।शशमानाय शशप्लुतगतौ ताच्छीलिकश्चानश्। यच्छत छान्दसेलङिबहुलंछन्दस्यमाङ्योगेपीत्यडभावः। यन्त यमेर्लोटिबहुलंछन्दसीतिशपोलुक् तप्तन- प्तनथनाश्चेतितस्यतबादेशः अतस्तस्यपित्त्वेनङित्त्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपो- नभवति। वृषणः वापपूर्वस्यनिगमेइत्युपधादीर्घाभावः। सुवीरं बहुव्रीहौवीरवीर्यौचेत्युत्तरपदा- द्युदात्तत्वम्॥ १२ ॥

॥ इतिप्रथमस्यपष्ठेदशमोवर्गः ॥ १० ॥

मरुतोयस्येतिदशर्चंद्वितीयंसूक्तम् गोतमस्यार्षंगायत्रंमरुद्देवताकं अनुक्रम्यतेच–मरुतोद- शगायत्रमिति। व्यूळ्हेतृतीयेछन्दोमेआग्निमारुतशस्त्रेएतत्सूक्तं तृतीयस्यागन्ममहेतिखण्डेसूत्रित- म्–मरुतोयस्यहिमाग्नयेवाचमित्याग्निमारुतमिति। ऐन्द्रामारुत्यांप्रधानस्यहविषोमरुतोयस्येत्ये- षानुवाक्या सूत्रितंच–ऐन्द्रामारुतीभेदकामामरुतोयस्यहिक्षयइति। एषैववरुणप्रघासेमारुत्या- आमिक्षायाअनुवाक्या सूत्रितंच–मरुतोयस्यहिक्षयेराइवेदचरमाअहेवेति। तथाप्रातःसवनेपोतु- रेषाप्रस्थितयाज्या सूत्रितंच–मरुतोयस्यहिक्षयेग्नेपत्नीरिहावहेति।

तामेतांसूक्तेप्रथमामृचमाह–

मरु॑तो॒यस्य॒हि॒क्षये॒पा॒थादि॒वोवि॑महसः। सस्रु॒गो॒पात॑मो॒जनः॑ ॥१॥

मरु॑तः। यस्य॑। हि। क्षये॑। पा॒थ। दि॒वः। वि॒ऽम॒ह॒सः। सः। सु॒ऽगो॒पात॑मः। जनः॑ ॥१॥

हेविमहसोविशिष्टप्रकाशामरुतः दिवोन्तरिक्षलोकादागत्य यस्यहियस्यखलुयजमानस्य क्षयेयज्ञगृहेपाथ सोमंपिबथ सजनोजातोयजमानःसुगोपातमः शोभनैःपालकैरत्यन्तंयुक्तोभव- ति॥ पाथ पापाने लेटि बहुलंछन्दसीतिशपोलुक् यद्वृत्तयोगादनिघातः। विमहसः विशिष्टंमह- स्तेजोयेषांतेतथोक्ताः। सुगोपातमः शोभनोगोपाः रक्षकोयस्यससुगोपाः अतिशयेनसुगोपाः सु- गोपातमः तमपःपित्त्वादनुदात्तत्वेसति बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वमेवशिष्यते॥ १॥

द्वितीयामृचमाह—

यज्ञैर्वायज्ञवाहसोविप्रस्यवामतीनाम् । मरुतःशृणुताहवम् ॥ २ ॥

यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनाम् । मरुतः ।
शृणुत । हवम् ॥ २ ॥

हेयज्ञवाहसःयज्ञस्यवोढारोमरुतः यूयं यज्ञैर्वा वाशब्दःसमुच्चये यज्ञैश्चयजमानस्यमतीनांस्तुतीनांसंबन्धिनोविप्रस्यवा अयजमानस्यमेधाविनश्चहवमाह्वानंशृणुत यज्ञवतोयजमानस्ययागरहितस्यस्तोतुश्चाह्वानंअवश्यंभवद्भिःश्रोतव्यं यतोभवन्तोयज्ञस्यवोढारः स्तुतिप्रियाश्चेतिभावः ॥ यज्ञवाहसः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात् वहिहाधाञ्भ्यश्छन्दसीतिकारकपूर्वाद्वहतेरसुन् णिदित्यनुवृत्तेरुपधावृद्धिः । मतीनां मनज्ञाने अस्मात्करणेक्तिन् नामन्यतरस्यामितिनामउदात्तत्वम् । शृणुत श्रुवःशृचेतिश्नुः सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यइतिवचनान्निङएवस्वरःशिष्यते मरुतइत्यस्यामन्त्रितस्यामन्त्रितंपूर्वमविद्यमानवदित्यविद्यमानवत्त्वेनपदादपरत्वान्निघाताभावः । हवं भावेनुपसर्गस्येतिह्वयतेरप् संप्रसारणंच ॥ २ ॥

तृतीयामृचमाह—

उतवायस्यवाजिनोनुविप्रमतक्षत । सगन्तागोमतिव्रजे ॥३॥

उत । वा । यस्य । वाजिनः । अनु । विप्रम् । अतक्षत । सः ।
गन्ता । गोऽमति । व्रजे ॥ ३ ॥

उतवाअपिच यस्ययजमानस्यवाजिनोहविर्लक्षणान्नोपेताऋत्विजः विप्रंमेधाविनंमरुद्गणंअन्वतक्षत हविःप्रदानादिनातीक्ष्णीकुर्वन्ति सयजमानः गोमति गोभिर्बहुभिर्युक्तेव्रजेगोष्ठे गन्तागमनशीलोभवति ॥ अतक्षत तक्षूत्वक्षूतनूकरणे छान्दसोलङ् व्यत्ययेनमध्यमः । गन्ता गमेस्ताच्छीलिकस्तृन् ॥ ३ ॥

चतुर्थीमृचमाह—

अस्यवीरस्यबर्हिषिसुतःसोमोदिविष्टिषु । उक्थंमदश्चशस्यते॥४॥

अस्य । वीरस्य । बर्हिषि । सुतः । सोमः । दिविष्टिषु । उक्थम् ।
मदः । च । शस्यते ॥ ४ ॥

दिविष्टिषुयजनीयदिवसेषु बर्हिषियज्ञे वीरस्यशत्रुक्षेपणकुशलस्यास्यमरुद्गणस्ययागाय सोमःसुतः ऋत्विग्भिरभिषुतोभवति उक्थंमरुद्देवताकंशस्त्रं मदश्चमदिधातुनायुक्तामरुतोदेवाः सोमस्यमत्तन्नित्यादिकामारुतीनिविच्च अस्यमरुद्गणस्यहर्षायशस्यतेहोत्रापठ्यते ॥ अस्य ऊडिदमितिविभक्तेरुदात्तत्वम् । दिविष्टिषु इष्टयएषणानिगमनानि दिवोद्योतमानस्यसूर्यस्य इष्टयोयेषुदिवसेषुतेतथोक्ताः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् व्यत्ययेनोत्वाभावः ॥ ४ ॥

पञ्चमीमृचमाह—

अ॒स्य श्रो॑ष॒न्त्वा भुवो॒ विश्वा॒ यश्च॑र्ष॒णीर॒भि । सूरं॑ चित्स॒स्रुषी॒रिषः॑ ॥५॥११

अ॒स्य । श्रो॒ष॒न्तु॒ । आ । भुवः॑ । विश्वाः॑ । यः । च॒र्ष॒णीः । अ॒भि ।
सूर॑म् । चि॒त् । स॒स्रुषीः॑ । इषः॑ ॥ ५ ॥ ११ ॥

अस्ययजमानस्यस्तुतिंमरुतः आआभिमुख्येनश्रोषन्तु शृण्वन्तु योमरुद्गणःविश्वाः चर्षणीः सर्वान्शत्रुभूतान्मनुष्यान् अभिभुवः अभिभवतिताहग्गणाकारामरुतः शृण्वन्त्वित्यर्थः सूरंचित् सूरं स्तुतेःप्रेरयितारंयजमानमपि इषोमरुद्भिःप्रत्तान्यन्नानि सस्रुषीः प्राप्तानिभवन्तु॥श्रोषन्तु श्रु-श्रवणे लोटिसिब्बहुलंलेटीतिबहुलवचनात्सिप् । भुवः भवतेर्लेटि विपस्तिङांतिङोभवन्तीतिसिप् लेटोडाटावित्यडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः । सूरं षूप्रेरणे सुसूधागृधिभ्यःक्रन्नितिक्रन्प्रत्ययः । सस्रुषीः सृगतौ अस्माल्लिटःक्वसुः उगितश्चेतिङीप् भसंज्ञायां वसोःसंप्रसारणमितिसंप्रसारणं शासिवसिघसीनांचेतिषत्वम् जसि वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेएकादशोवर्गः ॥ ११ ॥

षष्ठीमृचमाह—

पू॒र्वीभि॒र्हि द॑दाशि॒म श॒रद्भि॑र्मरुतो व॒यम् । अवो॑भिश्चर्षणी॒नाम् ॥६॥

पू॒र्वीभिः॑ । हि । द॒दा॒शि॒म । श॒रत्ऽभिः॑ । म॒रु॒तः॒ । व॒यम् । अवः॑ऽभिः ।
च॒र्ष॒णी॒नाम् ॥ ६ ॥

हेमरुतःपूर्वीभिर्बह्वीभिः शरद्भिःसंवत्सरैः चर्षणीनांसर्वस्यद्रष्टॄणां सर्वज्ञानांभवतांसंवन्धिभिरवोभिः रक्षणैर्युक्ताःसन्तोवयं दद्दाशिमयुष्मभ्यंहवींषिदत्तवन्तः हियस्मादर्थे यस्मादेवंतस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छतेत्यर्थः ॥ पूर्वीभिः पुरुशब्दाद्वोतोगुणवचनादितिङीप् यणादेशेहलिचेतिदीर्घत्वम् । दद्दाशिम दाशृदाने लिटिइडागमः हिचेतिनिघातप्रतिषेधः । चर्षणीनां नामन्यतरस्यामितिनामउदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

सुभगःसप्रयज्यवोमरुतोअस्तुमर्त्यः । यस्यप्रयांसिपर्षथ ॥७॥

सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ॥ ७ ॥

हेप्रयज्यवः प्रकर्षेणयष्टव्यामरुतः समर्त्योमनुष्योयजमानः सुभगोस्तु शोभनधनयुक्तोभवतु यस्ययजमानस्यप्रयांसि हविर्लक्षणान्यन्नानिपर्षथ आत्मनिसिञ्चथ स्वीकुरुथेत्यर्थः ॥ सुभगः भगइतिधननाम शोभनोभगोयस्य क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम्। पर्षथ पृषुवृषुमृषुसेचने भौवादिकः यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः ॥ ७ ॥

अष्टमीमृचमाह—

शशमानस्यवानरःस्वेदस्यसत्यशवसः । विदाकामस्यवेनतः ॥८॥

शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ॥ ८ ॥

हेसत्यशवसः अवितथबलाः नरोनेतारोमरुतः शशमानस्ययुष्मान् स्तुतिभिःसंभजमानस्यस्वेदस्य स्तावकमन्त्रोच्चारणजनितश्रमेणस्विद्यमानगात्रस्य वेनतः वेनतिःकान्तिकर्मा कामयमानस्य वाशब्दःसमुच्चये एवंभूतस्यस्तोतुश्च कामस्य काममभिलाषंविद लंभयत प्रयच्छतेत्यर्थः॥ शशमानस्य शशप्लुतगतौ ताच्छीलिकश्चानश् । स्वेदस्य ञिष्विदागात्रप्रक्षरणे अन्तर्भावितण्यर्थात्कर्मणिघञ् ञित्वादाद्युदात्तत्वम् । विद विद्लृलाभे लोटिमध्यमपुरुषस्यबहुवचनस्यव्यत्ययेन झादेशः बहुलंछन्दसीतिविकरणस्यलुक् झस्यादादेशः लोपस्त्वआत्मनेपदेष्वितितलोपः प्रत्यया-

द्युदात्तत्वम् पादादित्वान्निघाताभावः श्चोतस्तिङइतिसंहितायांदीर्घः। कामस्य वृषादिपुपाठा-दाद्युदात्तत्वम् क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी ॥ ८॥

नवमीमृचमाह—

यूयंतत्सत्यशवसआविष्कर्तमहित्वना। विध्यंताविद्युतारक्षः॥९॥

यूयम्। तत्। सत्यऽशवसः। आविः। कर्त। महिऽत्वना। विध्यत। विऽद्युता। रक्षः॥ ९॥

हेसत्यशवसः सत्यबलाः अन्यैरप्रधृष्यबलामरुतोयूयं तद्वृत्रवधादिषुप्रसिद्धंयुष्मदीयंमाहात्म्यंआविष्कर्तआविष्कुरुतप्रकाशयत विद्युताविद्योतमानेनमहित्वना तेनमहत्त्वेनमाहात्म्येनरक्षः अस्माकमुपद्रवकारिणंराक्षसादिकंविध्यततताडयत नाशयतेत्यर्थः॥ कर्त करोतेर्लोटि बहुलंछन्दसीतिविकरणस्यलुक् तप्तनप्तनथनाश्चेतितबादेशः गुणः इदुदुपधस्यचाप्रत्ययस्येतिआविःशब्दविसर्जनीयस्यषत्वम्। महित्वना भावप्रत्ययाद्युत्तरस्याङोव्यत्ययेननाभावः उदात्तत्वंच यद्वा सुपांसुलुगितितृतीयायाआजादेशः नकारोपजनश्च। विध्यतव्यधताडने श्यनिग्रहिज्यादिनासंप्रसारणम् तशब्दस्यसार्वधातुकमपिदितिङित्वेसतिऋचितुनुघमक्षुतङितिसंहितायांदीर्घः॥ ९॥

दशमीमृचमाह—

गूहतागुह्यंतमोवियातविश्वमत्रिणम्। ज्योतिष्कर्तायदुश्मसि॥१०॥१२॥

गूहत। गुह्यम्। तमः। वि। यात। विश्वम्। अत्रिणम्। ज्योतिः। कर्त। यत्। उश्मसि ॥ १०॥ १२॥

हेमरुतः गुह्यंगुहायांस्थितंसर्वत्रव्याप्यवर्तमानं तमोन्धकारंगूहतसंवृतंकुरुत यथास्माभिर्नदृश्यते तथाअदर्शनंप्रापयत विनाशयतेत्यर्थः विश्वंसर्वअत्रिणंअत्तारंराक्षसादिकंवियातवि-विधंयापयत अस्मत्सकाशान्निर्गमयत यज्ज्योतिः सूर्यादिकंवयमुश्मसिकामयामहे तत्कर्तकुरुत यद्वा गुह्यंगुहायां शरीरान्तर्गतगुहारूपेहृदयेभवंतमोभावरूपाज्ञानंतद्गूहत विनाशयत अत्रिणंपुरुषार्थस्यात्तारंकामक्रोधादिकंसर्वविनिर्गमयत यत्तज्ज्योतिः परतत्त्वसाक्षात्काररूपंज्ञानंकामयामहे प्राणापानादिपञ्चवृत्तिरूपाहेमरुतः तत्कर्तकुरुत॥ गूहत गुहूसंवरणे शपिलघूपधगुणे ऊदुपधायागोहइतिउपधायाऊकारः। यात यापापणे अस्मादन्तर्भावितण्यर्थाल्लोट्। अत्रिणं अदेस्त्रिनि-

चेतित्रिनिप्रत्ययः । उशमसि वशकान्तौ इदन्तोमसिः अदादित्वाच्छपोलुक् ग्रहिज्यादिनासंप्रसारणम् ॥ १० ॥

॥ इतिप्रथमस्यषष्ठेद्वादशोवर्गः॥ १२ ॥

प्रत्वक्षसइतिषळृचंतृतीयंसूक्तम् गोतमस्यार्षंजागतंमारुतंतथाचानुक्रान्तम्—प्रत्वक्षसःषड्गागतमिति अग्निष्टोमेआग्निमारुतशस्त्रेइदंसूक्तंमारुतनिविद्धानं अथयथेतमितिखण्डेसूत्रितम्—प्रत्वक्षसःप्रतवसोयज्ञायज्ञावोअग्नयइति ।

तत्रप्रथमामृचमाह—

प्रत्व॑क्षसः॒प्रत॑वसोविर॒प्शिनोना॑नता॒अवि॑थुरा॒ऋजी॒षिणः॑ ।
जुष्ट॑तमासो॒नृत॑मासोअ॒ञ्जिभि॒र्व्या॑नज्रे॒के॑चिदु॒स्रा इ॑व॒स्तृभिः॑ ॥ १ ॥

प्रऽत्व॑क्षसः । प्रऽत॑वसः । वि॒ऽर॒प्शिनः॑ । अना॑नताः । अवि॑थुराः ।
ऋ॒जी॒षिणः॑ । जुष्ट॑ऽतमासः । । नृऽत॑मासः । अ॒ञ्जिऽभिः॑ । वि ।
आ॒न॒ज्रे॒ । के । चि॒त् । उ॒स्राःऽइ॑व । स्तृऽभिः॑ ॥ १ ॥

प्रत्वक्षसः शत्रूणांप्रकर्षेणतनूकर्तारः शत्रुघातिनइत्यर्थः यतःप्रतवसः प्रकृष्टबलोपेताः अतएवविरप्शिनः विविधेनजयघोषेणोपेताः यद्वा बहुनामैतत् महान्तोहिविविधैःशब्दैःप्रशस्यन्ते अतएवानानताः आनतिरहिताः सर्वोत्कृष्टाइत्यर्थः अविथुराःअवियुक्ताः सप्तगणरूपेणसंघीभूताइत्यर्थः ऋजीषिणः तृतीयसवनेऋजीषस्याभिषवात् तत्रचमरुतःस्तूयन्तइतितेषांऋजीषित्वम् यद्वा ऋजीषिणः मार्जयितारोरसानां जुष्टतमासःअतिशयेनयष्टृभिःसेविताः नृतमासःअतिशयेनमेघादेर्नेतारः एवंभूतामरुतः स्तृभिःस्वशरीरस्याच्छादकैः अञ्जिभिःरूपाभिव्यञ्जकैराभरणैः व्यानज्रेनभसिव्यक्तादृश्यन्ते तत्रदृष्टान्तः—केचिदुस्राइव येकेचनसूर्यरश्मयोयथानभसिदीप्यन्तेतद्वत् ॥ प्रत्वक्षसः प्रकर्षेणत्वक्षन्तेतनूकुर्वन्तीतिप्रत्वक्षसः तक्षूत्वक्षूतनूकरणे गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेत्यसुन्पूर्वपदप्रकृतिस्वरत्वंच । प्रतवसः तवइतिबलनाम प्रकृष्टंतवोयेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । विरप्शिनः रपलपव्यक्तायांवाचि विरपणंविरप्शः औणादिकःशक्प्रत्ययः तद्वन्तोविरप्शिनः । अनानताः आनताअवनताः प्रह्वीभूताः नआनताःअनानताः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अविथुराःव्यथभयसंचलनयोः व्यथेःसंप्रसारणंधःकिचेत्युरच्प्र-

त्ययः अत्रतुबहुलवचनाद्धत्वंनक्रियते पूर्ववत्समासस्वरो । जुष्टतमासः नित्यंमन्त्रेइतिजुष्टशब्दआद्युदात्तः ततआतिशायनिकस्यतमपःपित्त्वादनुदात्तत्वेसएवस्वरःशिष्यते । आनञ्ज्रे अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु कर्मणि छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् अतआदेरित्यभ्यासस्यात्वम् तस्मान्नुड्द्विहलइतिनुट् व्यत्ययेनउपधालोपः इरयोरे । स्तृभिः स्तृञ्आच्छादने क्विप् आगमानुशासनस्यानित्यत्वात्तुगभावः ॥ १ ॥

द्वितीयामृचमाह—

उपह्वरेषुयदचिध्वंयुयिंवयइवमरुतःकेनचित्पथा ।
श्चोतन्तिकोशाउपवोरथेष्वाघृतमुक्षतामधुवर्णमर्चते ॥२॥

उपऽह्वरेषु । यत् । अचिध्वम् । ययिम् । वयःऽइव । मरुतः । केन । चित् । पथा । श्चोतन्ति । कोशाः । उप । वः । रथेषु । आ । घृतम् । उक्षत । मधुऽवर्णम् । अर्चते ॥ २ ॥

हेमरुतः उपह्वरेषुउपह्वर्तव्येषुगन्तव्येषुअस्माकंसन्निकृष्टेषु नभसःप्रदेशेषुयद्यदायायिंगतिमन्तंमेघंअचिध्वं वर्षणसामर्थ्येनोपचितंकुरुथ किंकुर्वन्तः वयइवपक्षिणइवकेनचित्पथाकेनचिदाकाशमार्गेणशीघ्रंगच्छन्तः नभसिशीघ्रंवर्षणार्थंप्रवर्तमानैर्मरुद्भिः मेघाउपचीयन्तइत्यर्थः तदानींकोशाः मेघनामैतत् वोयुष्माकंरथेषु आसक्तामेघाश्चोतन्ति जलंमुञ्चन्ति यस्मादेवंतस्मात् हे मरुतः यूयंअर्चतेयुष्मान्हविर्भिःपूजयतेमह्यंयजमानायमधुवर्णंमधुसदृशरूपंस्वच्छंघृतंवृष्ट्युदकं आसमन्तात् उक्षतसिञ्चत अस्मदभिलषितांवृष्टिंकुरुतेत्यर्थः ॥ उपह्वरेषु ह्वृकौटिल्ये उपह्वरन्तिकौटिल्येनतिर्यग्गच्छन्त्येष्वित्युपह्वरानभःप्रदेशाः पुंसिसंज्ञायांघःप्रायेणेत्यधिकरणेघः । अचिध्वं चिनोतेर्वर्तमानेलङ्बहुलंछन्दसीतिविकरणस्यलुक् । ययिं यामापणे आदृगमहनजनइति किप्रत्ययः । पथा आङि भस्यटेर्लोपइतिटिलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् । श्चोतन्ति श्चुतिर्क्षरणे छान्दसोयलोपः । उक्षत उक्षसेचने लोटितशब्दस्यङित्त्वेसतिऋचितुनुघेत्यादिनासांहितिकोदीर्घः ॥२॥

तृतीयामृचमाह—

प्रैषामज्मेषुविथुरेवरेजतेभूमिर्यामेषुयद्धयुञ्जतेशुभे ।
तेक्रीळयोधुनयोभ्राजदृष्टयःस्वयंमहित्वंपनयन्तधूतयः ॥३॥

प्र । एषाम् । अज्मेषु । विथुराऽइंव । रेजते । भूमिः । यामेषु ।
यत् । ह । युञ्जते । शुभे । ते । क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः ।
स्वयम् । महिऽत्वम् । पनयन्त । धूतयः ॥ ३ ॥

यद्ध यदाखलु एतेमरुतः शुभेशोभनाय वृष्ट्युदकाययुञ्जते मेघान्सज्जीकुर्वन्ति तदानीं अज्मेषु मेघानामुत्क्षेपकेषुएषांमरुतां संबन्धिषुयामेषु मेघानांनियमनेषुसत्सु भूमिःपृथिवी प्ररेजतेमकर्षेणकम्पते यद्वा यदाखलुमरुतः स्वकीयान्रथान्युञ्जते अश्वैर्योजयन्ति तदानीं एषांरथानां संबन्धिषु पर्वतादेरुत्क्षेपकेषुयामेषुगमनेषुसत्सुभूमिर्भीत्याकम्पते तत्रदृष्टान्तः—विथुरेवयथाभर्त्रावियुक्ताजायाराजोपद्रवादिषुसत्सुनिरालंबासतीकम्पतेतद्वत् तेतादृशाःक्रीळयः विहारशीलाः धुनयः चलनस्वभावाः भ्राजदृष्टयः दीप्यमानायुधाः एवंभूतामरुतः धूतयः पर्वतादीन्धुन्वन्तः सन्तः महित्वंस्वकीयं महिमानंस्वयमेवपनयन्त व्यवहरन्ति प्रकटयन्तीत्यर्थः ॥ अज्मेषु अजगतिक्षेपणयोः अर्तिस्तुसुस्वित्यादिनाविधीयमानोमन्बहुलवचनादस्मादपिद्रष्टव्यः वलादावार्धधातुकेविकल्पइष्यतइतिवचनादजेर्व्यघञपोरितिवीभावाभावः नित्त्वादाद्युदात्तत्वम् ।रेजते रेजृकम्पने ञ्यसतेरेजतइतिभयवेपनयोरितियास्कः ।यामेषु यमउपरमे भावेघञ् कर्षात्वतइत्यन्तोदात्तत्वेमाप्तेवृषादिषुपाठादाद्युदात्तत्वम् यद्वा यामापणेइत्यस्मादर्तिस्तुसुस्वित्यादिनामन्मत्ययः । शुभे शुभदीप्तौ संपदादिलक्षणःकर्मणिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्। पनयन्त पनव्यवहारे गुपूधूपविच्छीत्यायः अस्माच्छान्दसोलङ् व्यत्ययेनहस्वत्वम्॥ ३ ॥

चतुर्थीमृचमाह—

सहिस्वसृत्पृषदश्वोयुवागणो३याईशानस्तविषीभिरावृतः ।
असिसत्यऋणयावानेद्योस्याधियःप्राविताथावृषागणः ॥४॥

सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः ।
तविषीभिः । आऽवृतः । असि । सत्यः । ऋणऽयावा । अनेद्यः ।
अस्याः । धियः । प्रऽअविता । अथ । वृषा । गणः ॥ ४ ॥

१ नि० ३. २१.

सहि सखलुमरुद्गणः अयाअस्यसर्वस्यजगतः ईशानः ईश्वरशीलोभवति कीदृशः स्वसृ-वस्वयमेवसरन् नह्यन्यःकश्चिदस्यमरुद्गणस्यप्रेरकोऽस्ति पृषदश्वः पृषत्यःश्वेतबिन्द्वंकितामृग्यो-श्वस्थानीयायस्यसतथोक्तः युवानित्यतरुणः तविषीभिरन्येषामसाधारणैर्बलैरावृतः परिवेष्टि-तः सत्यःसत्कर्माहः ऋणयावास्तोतृणामृणस्यापगमयितावहुलस्यधनस्यदातेत्यर्थः अनेद्यः प्र-शस्यनामैतत् सर्वैरनिन्दितः वृषा जलानांवर्षिता एवंभूतोमरुद्गणः अस्याधियः अस्मदीयस्यास्य कर्मणः अथानन्तरंभावितासिप्रकर्षेणरक्षिताभवति ॥ अया सुपांसुलुगितिपष्ठयायाजादेशः ह-लिलोपइतीदमइन्नूपस्यलोपः । ईशानः ईशऐश्वर्येइत्यस्मात्ताच्छीलिकश्चानश् तस्यलसार्व-धातुकत्वाभावेनचित्स्वरेणान्तोदात्तत्वम् । अया ईशानइत्यत्र ईषाअक्षादित्वात्प्रकृतिभावः । अ-सि पुरुषव्यत्ययः । ऋणयावा यामापणेइत्यस्मादन्तर्भावितण्यर्थादातोमनिन्क्विनिप् । अनेद्यः णिदिकुत्सायां ऋहलोर्ण्यदितिण्यत् आगमानुशासनस्यानित्यत्वान्नुमभावेलघूपधगुणः नञ्स-मासेव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

पि॒तुः प्र॒त्नस्य॒ जन्म॑ना वदामसि॒ सोम॑स्य जि॒ह्वा प्र जि॑गाति॒ चक्ष॑सा ।
यदी॒मिन्द्रं॒ शम्यृक्वा॑ण॒ आश॒तादिन्नामा॑नि य॒ज्ञिया॑नि दधिरे ॥५॥

पि॒तुः । प्र॒त्नस्य॑ । जन्म॑ना । व॒दा॒म॒सि॒ । सोम॑स्य । जि॒ह्वा । प्र । जि॒गा॒ति॒ । चक्ष॑सा । यत् । ई॒म् । इन्द्र॑म् । शमि॑ । ऋक्वा॑णः । आश॑त । आत् । इत् । नामा॑नि । य॒ज्ञिया॑नि । द॒धि॒रे ॥ ५ ॥

प्रत्नस्यचिरन्तनस्यपितुः अस्माकंजनकस्यरहूगणस्य सकाशात्जन्मना यज्जन्मतेनवयं वदामसिब्रूमः वक्ष्यमाणंवृत्तान्तं अस्माकंपिताउपदिष्टवान् अतोवयंब्रूमइत्यर्थः कोसौवृत्तान्त-इतिचेदुच्यते—सोमस्ययज्ञेष्वभिषुतस्यसोमद्रव्यस्यचक्षसाप्रकाशमानयाहुत्यासहिताजिह्वा स्तु-तिरूपावाक् प्रजिगाति मरुद्गणंप्रकर्षेणगच्छति यज्ञेषुसोमाहुतिःस्तुतिश्चमरुद्भ्यःक्रियते यद्यस्मा-दीमेनमिन्द्रं शमिवृत्रवधादिरूपेकर्मणि ऋक्वाणः मदरभगवोजहिवीरयस्वेत्येवंरूपयास्तुत्यायु-क्ताःसन्तःआशतआप्नुवन् नपर्यत्याक्षुः आदित् एवमिन्द्रप्राप्त्यनन्तरमेवयज्ञियानियज्ञार्हाणिईदृङ्-चान्यादृङ्ङित्येवमादीनिनामानि इन्द्रसकाशाल्लब्ध्वा दधिरेधृतवन्तः तस्मादेषांयज्ञेसोमाहुतिःस्तु-तिश्चक्रियते ॥ शमि शमीतिकर्मनाम सप्तम्येकवचनेछान्दसईकारलोपः । ऋक्वाणः ऋचस्तुतौ संप-

दादिलक्षणोभावेक्किप् छन्दसीवनिपाविविमत्वर्थीयोवनिप् अन्यविकारश्छान्दसः यद्वा अयस्मयादिषुकचिदुभयंभवतीत्युक्तत्वात् सत्तुष्टुभासऋक्वतेत्यादाविवपदत्वात्कुत्वम् भत्वाज्जश्त्वाभावः। आशत लुङिबहुलंछन्दसीतिविकरणस्यलुक्। यज्ञियानि यज्ञर्त्विग्भ्यांघखञाविति अर्हार्थेघः॥ ५॥

षष्ठीमृचमाह—

श्रि॒यसे॒कंभा॒नुभिः॒संमि॑मिक्षिरे॒तेर॒श्मिभि॒स्तऋक्व॑भिःसुखा॒दयः॑।
तेवाशी॑मन्तइ॒ष्मिणो॒अभी॑रवोवि॒द्रेप्रि॒यस्य॒मारु॑तस्य॒धाम्नः॑॥६॥१३॥

श्रि॒यसे॑। कम्। भा॒नुऽभिः॑। सम्। मि॒मि॒क्षि॒रे॒। ते। र॒श्मिऽभिः॑।
ते। ऋक्व॑ऽभिः। सु॒ऽखा॒दयः॑। ते। वाशी॑ऽमन्तः। इ॒ष्मिणः॑।
अभी॑रवः। वि॒द्रे। प्रि॒यस्य॑। मारु॑तस्य। धाम्नः॑॥ ६॥ १३॥

तेपूर्वोक्ताःमरुतः भानुभिःभानुशीलैर्दीप्यमानैःसूर्यरश्मिभिःसह कंवृष्ट्युदकं श्रियसेश्रयितुंप्राणिभिःसेवितुं संमिमिक्षिरे सम्यक्मेढुमिच्छन्ति पृथिवींवृष्ट्युदकेन सम्यक्सेक्तुमिच्छन्ति एवंवृष्टिमुत्पाद्य तेमरुतः ऋक्वभिः स्तुतिमद्भिःऋत्विग्भिःसह सुखादयः शोभनस्यहविषोभक्षयितारोभवन्ति वाशीमन्तः वाशीतिवाङ्नाम शोभनयास्तुतिलक्षणयावाचोपेताः इष्मिणोगतिमन्तः अभीरवोभयरहितास्तेमरुतः प्रियस्यसर्वाभिमतस्यमारुतस्यमरुत्संबन्धिनोधाम्नःस्थानस्यसर्वाभिमतंमरुत्संबद्धंविशिष्टंस्थानं विद्रे लब्धवन्तः॥ श्रियसे तुमर्थेसेसेनितिकसेनप्रत्ययः। मिमिक्षिरे मिहसेचने अस्मादिच्छासन्नन्ताल्लिटिअमन्त्रइतिप्रतिषेधादाम्भावः व्यत्ययेनात्मनेपदम्। सुखादयः खादभक्षणे औणादिकइप्रत्ययः शोभनाखादिर्भक्षणंयेषां नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। इष्मिणः इषगतौ इषियुधीन्धीत्यादिनामक् ततोमत्वर्थीयइनिः। विद्रे विद्लृलाभे लिटिद्विर्वचनप्रकरणेछन्दसिचेतिवक्तव्यमितिद्विर्वचनाभावः इरयोरेइतिइरेचोरेभावः॥ ६॥

॥ इतिप्रथमस्यषष्ठेत्रयोदशोवर्गः॥ १३॥

आविद्युन्मद्भिरितिपञ्चर्चंचतुर्थंसूक्तम् अत्रानुक्रम्यते—आविद्युन्मद्भिराद्यान्त्येप्रस्तारपङ्क्तीपञ्चमीविराड्रूपेति पूर्ववदृषिदेवते आद्यापङ्क्तीचद्वेप्रस्तारपङ्क्ती आद्यौपादौजागतौतृतीयचतुर्थौ

गायत्रीयस्याः सामस्तारपङ्क्तिः सूत्रितंच—प्रस्तारपंक्तिःपुरतइति अस्यायमर्थः जागतौगायत्रौचेत्यनुवर्तते यदिपुरतःपुरस्ताद्वौजागतौपादौस्यातांअन्त्यौगायत्रौसाप्रस्तारपङ्क्तिरिति एतत्त्यदित्येषापञ्चमीविराड्रूपाआदितस्त्रयः पादाएकादशकाः अन्त्योष्टकः साविराड्रूपेत्युच्यते विनियोगोलैङ्गिकः।

तत्रप्रथमामृचमाह—

आविद्युन्मद्भिर्मरुतःस्वर्कैरथेभिर्यातऋष्टिमद्भिरश्वपर्णैः।
आवर्षिष्ठयानइषावयोनपप्तनासुमायाः॥१॥

आ। विद्युन्मत्ऽभिः। मरुतः। सुऽअर्कैः। रथेभिः। यात। ऋष्टिमत्ऽभिः। अश्वऽपर्णैः। आ। वर्षिष्ठया। नः। इषा। वयः। न। पप्तत। सुऽमायाः॥ १ ॥

हेमरुतः मितंनिर्मितमन्तरिक्षं प्राप्यरुवन्ति शब्दंकुर्वन्ति इतिमरुतः यद्वा अमितं भृशंशब्दकारिणः अथवामितंस्वैर्निर्मितंमेघंप्राप्यविद्युदात्मनारोचमानाः अथवा महत्यन्तरिक्षेद्रवन्तीति मरुतः येमध्यमस्थानेदेवगणाः समाम्नातास्तेसर्वेमरुतआख्यायन्ते तथाचाहुः—सर्वास्त्रीमध्यमस्थानापुमान्वायुश्चसर्वगः।गणाश्चसर्वेमरुतइतिवृद्धानुशासनमिति।पौराणिकास्त्वाचक्षते—मारीचाकश्यपात्सप्तगणात्मकाएकोनपञ्चाशत्संख्याकामरुतोजज्ञिरइति।एवंभूताहेमरुतः रथेभिःआत्मीयैरथैःआयातअस्मदीयंयज्ञमागच्छत कीदृशैरथैर्विद्युन्मद्भिः विद्योतनंविद्युत् विशिष्टदीप्तियुक्तैः स्वर्कैःस्वर्चनैःशोभनगमनयुक्तैः यद्वा शोभनमर्कोर्चनंस्तुतिर्येषामस्तितादृशैः अथवाशोभनदीप्तियुक्तैः ऋष्टिमद्भिः ऋष्टयःशक्तिरूपाण्यायुधानि स्थूणाइत्यन्ये तद्वद्भिःअश्वपर्णैः अश्वानां पतनंगमनंएषामस्तितादृशैः यद्वा रंहणशीलामेघारथास्तैःसहान्तरिक्षेवर्षणार्थमागच्छत कीदृशैर्विद्युन्मद्भिः विद्युत्तडित्तद्वद्भिः स्वर्कैः शोभनगमनैः ऋष्टिमद्भिः अर्षणंगमनं तत्स्वभावनीरयुक्तैः अश्वपर्णैः अश्वंव्याप्तंपर्णंपतनंगमनंयेषां अन्तरिक्षंव्याप्यवर्तमानैरित्यर्थः हेसुमायाः मायेतिकर्मणोज्ञानस्यचनामधेयम् शोभनकर्माणः शोभनप्रज्ञावामरुतः वर्षिष्ठयापवृद्धयाइषाअस्मभ्यंदातव्येनान्नेनसहनोऽस्मान्प्रतिवयोनपक्षिणइव शीघ्रं आपप्ततआपततआगच्छतेत्यर्थः अत्रनिरुक्तम्—अथातोमध्यस्थानादेवगणास्तेषांमरुतःप्रथमागामिनोभवन्ति

मरुतोमितराविणोवामितरोचिनोवामहद्दवन्तीतिवेति । विद्युन्मद्भिर्मरुतः स्वर्कैः स्वश्वैरिति-वास्वचैनैरितिवास्वर्चिभिरितिवारथैरायातऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वयःपित्वेनचनोनेनवयइवा-पततसुमायाः कल्याणकर्माणोवाकल्याणप्रज्ञावेति ॥ विद्युन्मद्भिः यवादेराकृतिगणत्वेनविद्यु-च्छन्दस्ययवाद्यन्तर्भावादयवादिभ्यइत्यनानुवृत्तेर्झयइतिमतुपोवत्वंनभवति । ऋष्टिमद्भिः ह्र-स्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् । अश्वपर्णैः अशूव्याप्तौ अशूप्रुषीत्यादिनाक्वन्प्रत्ययः बहुव्री-हौपूर्वपदप्रकृतिस्वरत्वम् । वयःपित्वया वृद्धशब्दादातिशायनिकेइष्ठनिप्रियस्थिरेत्यादिनावयादेशः । पप्तत पतॢगतौ लुङि लृदित्वात् च्लेरङादेशः पतःपुमितिपुमागमः ॥ १ ॥

द्वितीयामृचमाह—

तेऽरुणेभिर्वरमापिशङ्गैः शुभेकंयान्तिरथतूर्भिरश्वैः ।
रुक्मोनचित्रः स्वधितीवान्पव्यारथस्यजंघनन्तभूम ॥२॥

ते । अरुणेभिः । वरम् । आ । पिशङ्गैः । शुभे । कम् । यान्ति ।
रथतूःऽभिः । अश्वैः । रुक्मः । न । चित्रः । स्वधितिऽवान् । पव्या ।
रथस्य । जंघनन्त । भूम ॥ २ ॥

तेपूर्वोक्तामरुतः अरुणेभिररुणवर्णैः पिशङ्गैःपिङ्गलवर्णैःउभयवर्णोपेतैः रथतूर्भिः रथस्य प्रेरयितृभिः अश्वैः वरंदेवानांवरीतारंकंशब्दयितारंस्तुवन्तंयजमानंआयान्ति आगच्छन्ति कि-मर्थं शुभेतस्यशोभांकर्तुं अथवा शुभेउदकायवृष्ट्यर्थमित्यर्थः तेषांमरुतांगणः रुक्मोन रोचमानं सुवर्णमिवचित्रः अतिशयेनदर्शनीयः स्वधितीवान्स्वधितिरितिवज्रनाम शत्रूणांखण्डकेनायुधेनो-पेतः एवंविधगणरूपास्तेमरुतः रथस्यपव्याचक्रधारयाभूमभूमिंजंघनंतअत्यर्थंघ्नन्तिस्तोतृरक्ष-णार्थमागतानांतेषांमरुतांभारमसहमानाभूमिरतिपीडितात्रभूवेत्यर्थः ॥ वरं व्रियन्तेदेवाअनेने-तिवरः ग्रहवृदृनिश्चिगमश्चेतिकरणेअप् । कं कैगैशब्दे कायतीतिकः बहुलवचनात्कप्रत्ययः । रथ-तूर्भिः तुरत्वरणे रथंतुतुरतित्वरायुक्तंकुर्वन्तीतिरथतुरः क्विप्चेतिक्विप् भिसिहलिचेतिदीर्घत्वम् । पव्या पवीरथनेमिर्भवतीतियास्कः । पूङ्पवने अस्मादचइरितिइप्रत्ययः उदात्तयणइतिविभक्तेरु-दात्तत्वम् । जंघनन्त हन्तेर्यङन्ताद्वर्तमानेछान्दसोलङ् छन्दस्युभयथेतिशपआर्धधातुकत्वादतो-लोपयलोपौ । भूम भूमिशब्दादुत्तरस्यामःसुपांसुलुगितिडादेशः छान्दसंह्रस्वत्वम् ॥२॥

---

१ नि० ११. १३. । २ नि० ११. १४. । ३ नि० ५. ५ ।

तृतीयामृचमाह—

श्रियेकंवोअधितनूपुवाशीर्मेधावनानकृणवन्तऊर्ध्वा ।
युष्मभ्यंकंमरुतःसुजातास्तुविद्युम्नासोधनयन्तेअद्रिम् ॥३॥

श्रिये । कम् । वः । अधि । तनूषु । वाशीः । मेधा । वना । न ।
कृणवन्ते । ऊर्ध्वा । युष्मभ्यम् । कम् । मरुतः । सुऽजाताः ।
तुविऽद्युम्नासः । धनयन्ते । अद्रिम् ॥ ३ ॥

हेमरुतोवोयुष्माकं तनूपुशरीरेपु अंसप्रदेशेपुवाशीः शत्रूणामाक्रोशकमाराख्यमायुधंअधिश्रिये कं ऐश्वर्यार्थंवर्ततइतिशेषः कमित्येतत्पदपूरणं तदुक्तम्—अथापिपदपूरणाःकमीमिद्विती̆ति । तादृशामरुतः वनान उच्छ्रितान्वृक्षसमूहानिव मेधायज्ञान् ऊर्ध्वाऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितान् कृणवन्तेयजमानैःकारयन्ति हेसुजाताः शोभनजननयुक्तामरुतः युष्मभ्यं युष्मदर्थं कंसुखकरं अद्रिंसोमाभिषवेप्रवृत्तंग्रावाणं तुविद्युम्नासः प्रभूतधनायजमानाः धनयन्तेधनंकुर्वन्ति युष्माकंयागायग्रावभिरभिषुण्वन्तीत्यर्थः ॥ वाशीः शत्रूणांभयोत्पादनेनाक्रोशशब्दकरणंवाशः तत्श्छन्दसीवनिपाविितिमत्वर्थीयईकारः व्यत्ययेनाद्युदात्तत्वम् । मेधा सुपांसुलुगितिशसोडादेशः । वना शेश्छन्दसिबहुलमितिशेर्लोपः । कृणवन्ते कृविहिंसाकरणयोश्च लटि व्यत्ययेनात्मनेपदं धिन्विकृण्व्योरचेत्युप्रत्ययः पुनरपिव्यत्ययेनान्तादेशः छन्दस्युभयथेत्यार्धधातुकत्वेनडस्याङित्त्वाद्गुणेअवादेशः । ऊर्ध्वा पूर्ववड्डादेशः । धनयन्ते धनशब्दात् तत्करोतीतिणिच् ॥ ३ ॥

चतुर्थीमृचमाह—

अहानिगृध्राःपर्यावआगुरिमांधियंवार्कार्यांचदेवीम् ।
ब्रह्मकृण्वन्तोगोतमासोअर्कैरूर्ध्वंनुनुद्रउत्सधिंपिबध्यै ॥ ४ ॥

अहानि । गृध्राः । परि । आ । वः । । आ । अगुः । इमाम् ।
धियम् । वार्कार्याम् । च । देवीम् । ब्रह्म । कृण्वन्तः । गोतमासः ।
अर्कैः । ऊर्ध्वम् । नुनुद्रे । उत्सऽधिम् । पिबध्यै ॥४॥

---

१ नि० १. ९. ।

तृषितैर्गोतमैः स्तुतामरुतस्तेभ्योगोतमेभ्योदेशान्तरेवर्तमानं कूपमुत्खायानीयप्रददुः एतद्व-ष्ट्वाकश्चिदृषिर्ब्रूते हेगोतमाः गृधाः जलाभिकाङ्क्षायुक्तान्वोयुष्मान्अहानिशोभनोदकोपेतानिदिना-निपर्यागुः पर्यागतानिपरितः आभिमुख्येनप्राप्तानि प्राप्यच इमांवार्कार्यांवार्भिरुदकैर्निष्पाद्यां धि-यं ज्योतिष्टोमादिलक्षणंकर्मचदेवीं द्योतमानंअकुर्वन् येष्वहस्सुब्रह्मसहविर्लक्षणं अन्नं अर्कैर्मन्त्रसा-ध्यैःस्तोत्रैःसहकृण्वन्तोमरुद्भ्यःकुर्वन्तोगोतमासोगोतमाऋषयःउत्सधिंउत्सोजलप्रवाहोस्मिन्धीय-तइतिउत्सधिःकूपः तंपिबध्यैस्वकोयपानायऊर्ध्वंनुनुद्रेनुनुदिरे देशान्तरे वर्तमानंकूपंउत्खातवन्तः एतदीयस्तोत्रैःस्तुतामरुतःकूपंउत्खातवन्तः इतियत् तदेवतदीयस्तोत्रकारितमित्येतेषुउपचर्यते ॥ गृधाः गृधुअभिकांक्षायां सुसूधागृधिभ्यःक्रन्नितिक्रन्प्रत्ययः सुपांसुपोभवन्तीतिशसोजस् नि-त्त्वादाद्युदात्तत्वम् । अगुः एतेर्लुङि इणोगालुङीतिगादेशः आतइतिझेर्जुस् । वार्कार्यां डुकृञ्कर-णे ऋहलोर्ण्यत् वार्भिःकार्यावार्कार्या त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । नुनुद्रे णुदप्रेरणे इ-रयोरेइतिरेआदेशः । उत्सधिं कर्मण्यधिकरणेचेतिदधातेरधिकरणेकिप्रत्ययः । पिबध्यै पापाने तुमर्थेसेसेनितिशध्यैन्प्रत्ययः पाघ्रेत्यादिनापिबादेशः ॥ ४ ॥

पञ्चमीमृचमाह—

एतत्त्यन्नयोजनमचेतिसस्वर्हयन्मरुतोगोतमोवः ।
पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतोवराहून् ॥ ५ ॥

एतत् । त्यत् । न । योजनम् । अचेति । सस्वः । ह । यत् । मरुतः ।
गोतमः । वः । पश्यन् । हिरण्यऽचक्रान् । अयःऽदंष्ट्रान् ।
विऽधावतः । वराहून् ॥ ६ ॥ १४ ॥

हेमरुतः एतद्योजनंयुज्यतेनेनदेवतेतियोजनमेतत्सूक्तसाध्यंस्तोत्रं त्यन्न त्यत्प्रसिद्धंअन्यदु-त्कृष्टंस्तोत्रमिव अचेतिसर्वैर्ज्ञायते वोयुष्मदर्थं यद्यदेतत्सूक्तरूपंस्तोत्रंगोतमऋषिःसस्वर्हउच्चारित-वान्खलु किंकुर्वन् हिरण्यचक्रान् हिरण्मयचक्ररथारूढान् हितरमणीयकर्मयुक्तान्वा अयोदंष्ट्रा-न्दशतीतिदंष्ट्राचक्रधारा अयोमयीभिः चक्रधाराभिर्युक्तान् यद्वा दंशनसाधनाऋष्टयोदंष्ट्राः अयोमयाऋष्टयोयेषांतान् विधावतःविविधमितस्ततःप्रवर्तमानान्वराहून्वरस्योत्कृष्टस्यशत्रो-र्हन्तॄन् यद्वा उत्कृष्टस्यवृष्ट्युदकस्याहर्तॄन् यद्वा उत्कृष्टानांदेवानांआह्वातॄन् वरस्यहविषोभक्षयि-

तृन्वा एवंभूतान्मरुतः पश्यन्सम्यग्जानन् गोतमोयत्स्तोत्रंकृतवान् तदेतत्सर्वोत्कृष्टंसदस्माभिःसर्वैरुपलभ्यतइत्यर्थः अत्रनिरुक्तम्—अथाप्येतेमाध्यमिकादेवगणावराहवउच्यन्तेपश्यन्हिरण्यचक्रानिति[1] ॥ अचेति चितीसंज्ञाने छान्दसोवर्तमानेकर्मणिलुङ् । सस्वः स्वृशब्दोपतापयोः लङि तिपिबहुलंछन्दसीतिशपःश्लुः गुणोहल्ङ्याब्भ्यइतितलोपः धातुस्वरेणान्तोदात्तत्वम् । वराहून् वरशब्दोपपदादाङ्पूर्वाद्धन्तेर्वाहरतेर्वाह्वयतेर्वाजुहोतेरदनार्थाद्वाहुइत्येतस्यनिष्पत्तिरितिस्कन्दस्वामीअस्यच पृषोदरादित्वादभिमतसिद्धिः ॥ ५ ॥

षष्ठीमृचमाह—

एषास्यावोमरुतोनुभर्त्रीप्रतिष्टोभतिवाघतोनवाणी ।
अस्तोभयद्वृथासामनुस्वधांगभस्त्योः ॥६ ॥ १४॥

एषा । स्या । वः । मरुतः । अनुऽभर्त्री । प्रति । स्तोभति । वाघतः । न । वाणी । अस्तोभयत् । वृथा । आसाम् । अनु । स्वधाम् । गभस्त्योः ॥ ६ ॥ १४ ॥

हेमरुतः स्या सैषा अस्मदीयास्तुतिः वोयुष्माकमनुभर्त्रीयुष्माननुहरन्ती युष्मद्गुणसदृशी प्रतिष्टोभति प्रत्येकंस्तौति स्तोभतिःस्तुतिकर्मा तथावाघतोनवाणी नशब्दःसंप्रत्यर्थे तदुक्तंयास्केन—अस्त्युपमार्थस्यसंप्रत्यर्थेप्रयोगइति । इदानीमृत्विक्संबन्धिनीवागपिवृथाअनायासेन आसांआभिरृग्भिरस्तोभयत अस्तौत् इदानीमित्युक्तेकदेत्याह गभस्त्योरस्मदीययोर्बाह्वोः स्वधांअन्ननामैतत् यदायहुविधंअन्नंमरुतःस्थापयन्तितामनुलक्ष्येत्यर्थः ॥ अनुभर्त्री हृञ्हरणे तृच् ऋन्नेभ्योङीप् इतिङीप् उदात्तयणोहल्पूर्वादितिनद्याउदात्तत्वम् ॥ ६ ॥

॥ इतिप्रथमस्यपष्ठेचतुर्दशोवर्गः ॥ १४ ॥

आनोभद्राइतिदशर्चंपञ्चमंसूक्तम् गोतमस्यार्षंवैश्वदेवं आदितःपञ्चर्चःसप्तमीचजगत्यः षष्ठीस्वस्तिनइन्द्रइत्येषाविराट्स्थाना नवकौविराजसंष्टुभश्चेत्युक्तलक्षणयोगात् अष्टम्याद्यास्तिस्रस्त्रिष्टुभः तथाचानुक्रान्तम्—आनोदशवैश्वदेवंतुपञ्चाद्याःसप्तमीचजगत्यःषष्ठीविराट्स्थानेति अग्निष्टोमेवैश्वदेवशस्त्रेउत्तमावर्जमेतत्सूक्तंवैश्वदेवनिविद्धानीयं सातुमरुत्वतीविरुतौचवैश्वदेवशस्त्र-

[1] नि० ५.४. । [2] नि० ७.३१. ।

स्यपरिधानीया तथाचसूत्रितम्—आनोभद्राःक्रतवोयन्तुविश्वतइतिनववैश्वदेवमिति अदिति- र्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्रवैश्वदेवइतिच। ब्राह्मणंचभवति—सदैवपञ्चजनीययापरि- दध्यादिति। महाव्रतेनिष्केवल्येएतत्सूक्तम् तथापञ्चमारण्यकेसूत्र्यते—आनोभद्रीयंचतस्य- स्थानइति।

तत्रप्रथमामृचमाह—

आनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोअपरीतासउद्भिदः।
देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे॥ १॥

आ। नः। भद्राः। क्रतवः। यन्तु। विश्वतः। अदब्धासः।
अपरिऽइतासः। उत्ऽभिदः। देवाः। नः। यथा। सदम्। इत्।
वृधे। असन्। अप्रऽआयुवः। रक्षितारः। दिवेऽदिवे॥ १॥

नोऽस्मान्क्रतवोऽग्निष्टोमादयोमहायज्ञाविश्वतः सर्वस्मादपिदिग्भागात् आयन्तुआगच्छ- न्तु कीदृशाः क्रतवः भद्राःसमीचीनफलसाधनत्वेनकल्याणाः भजनीयावा अदब्धासः असुरैर- हिंसिताः अपरीतासः शत्रुभिरपरिगताः अप्रतिरुद्धाइत्यर्थःउद्भिदः शत्रूणामुद्भेत्तारः कीदृशाः क्रतवः अस्मांस्तथाआगच्छन्तु यथा अप्रायुवः अपगच्छन्तः स्वकीयंरक्षितव्यंअपरित्यजन्तः अतएवदिवेदिवेप्रतिदिवसंरक्षितारोरक्षांकुर्वन्तः एवंगुणविशिष्टाःसर्वेदेवानोऽस्माकंसदमित् सदै- व वृधे वर्धनायअसन्भवन्तु॥ अदब्धासः दंभुदंभे दंभोहिंसा निष्ठायांयस्यविभाषेतीट्प्रतिषेधः नञ्समासेव्ययपूर्वपदप्रकृतिस्वरत्वम्। अपरीतासः इण्गतौ पूर्ववत्कर्मणिनिष्ठा उभयत्राज्जसेरसुक्। वृधे वृधुवृद्धौ संपदादिलक्षणोभावेकिप् सावेकाचइतिविभक्तेरुदात्तत्वम्। असन् असभुवि लेट्यडा- गमःबहुलंछन्दसीतिशपोलुगभावः तस्याङित्त्वात् श्नसोरल्लोपइत्यकारलोपाभावः। अप्रायुवः इण् गतौ अस्मात्प्रपूर्वाच्छन्दसीणइतिउण्प्रत्ययः नञ्समासेव्ययपूर्वपदप्रकृतिस्वरत्वम् जसि ज- सादिषुछन्दसिवावचनमितिगुणस्यविकल्पितत्वात् अभावेतन्वादित्वादुवङ्॥ १॥

द्वितीयामृचमाह—

देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततताम्।
देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरन्तुजीवसे॥ २॥

१ ऐ० ब्रा० ३. ३१।

देवानाम् । भद्रा । सुऽमतिः । ऋजुऽयताम् । देवानाम् । रातिः ।
अभि । नः । नि । वर्तताम् । देवानाम् । सख्यम् । उप । सेदिम ।
वयम् । देवाः । नः । आयुः । प्र । तिरन्तु । जीवसे ॥ २ ॥

भद्रासुखयित्रीभजनीयावा देवानांसुमतिः शोभनामतिरनुग्रहात्मिकाबुद्धिरस्माकं अस्त्विशेषः कीदृशानां ऋजूयतां ऋजुं आर्जवयुक्तंसम्यगनुष्ठातारंयजमानं आत्मनइच्छतां तथादेवानांरातिर्दानंनोऽस्मान्आभिमुख्येननितरांवर्ततां तदभिमतफलप्रदानमपिअस्माकंभवत्वित्यर्थः वयंचतेषांदेवानांसख्यंसखित्वं सख्युःकर्मवा उपसेदिममाप्नुवाम तादृशादेवानोस्माकमायुर्जीवसे जीवितुंप्रतिरन्तु प्रवर्धयन्तु ॥ भद्रा भदिकल्याणेसुखेच ऋज्रेन्द्राग्रेत्यादौरक्प्रत्ययान्तोनिपातितः । ऋजूयतां ऋजुमात्मनइच्छतिऋजूयति सुपआत्मनःक्यच् तदन्ताल्लटःशतृ शतुरनुमइतिअजादिविभक्तेरुदात्तत्वम् । रातिः रादाने मन्त्रेवृषेतिक्तिनउदात्तत्वम् । सख्यं सख्युर्यइतिभावेकर्मणिवायप्रत्ययः । सेदिम षद्लृविशरणगत्यवसादनेषु छन्दसिलुङ्लङ्लिटइतिवर्तमानेप्रार्थनायांलिट् सत्वस्यानैमित्तिकत्वेनलिटिपरतआदेशादित्वाभावात् अतएकहल्मध्यइत्येत्वाभ्यासलोपौ अन्येषामपिदृश्यतइतिसंहितायांदीर्घत्वम् । प्रतिरन्तु प्रपूर्वस्तिरतिर्वर्धनार्थः तथाचयास्कोव्याचख्यौ—देवानांसख्यमुपसादेमवयंदेवानआयुःप्रवर्धयन्तुचिरंजीवनायेति ॥ २ ॥

तृतीयामृचमाह—

तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधम् ।
अर्यमणंवरुणंसोमम्अश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥

तान् । पूर्वया । निऽविदा । हूमहे । वयम् । भगम् । मित्रम् ।
अदितिम् । दक्षम् । अस्रिधम् । अर्यमणम् । वरुणम् । सोमम् ।
अश्विना । सरस्वती । नः । सुऽभगा । मयः । करत् ॥ ३ ॥

तान्विश्वान्देवान् पूर्वयापूर्वकालीनयानित्ययानिविदावेदात्मिकयावाचा निविदितिवाङ्नाम यद्वा निविदा विश्वेदेवाःसोमस्यमत्सन्नित्यादिकयावैश्वदेव्यानिविदावयंहूमहेआह्वयामः देवानितिपदसामान्येनोक्तंतदेवविविनक्ति भगंभजनीयंद्वादशानामादित्यानामन्यतमंमित्रंप्रमीतेस्त्रायकंअ-

१ नि० १२.३९. । २ निविदाध्यायेसप्तमखण्डे. ।

हरभिमानिनंदेवं मैत्रंवाअहरितिश्रुतेः। अदितिंअखण्डनीयामदीनांवादेवमातरं दक्षंसर्वस्यजगतो-निर्माणेसमर्थंप्रजापतिं यद्वा प्राणरूपेणसर्वेषुप्राणिषुव्याप्यवर्तमानंहिरण्यगर्भं प्राणोवैदक्षइतिश्रु-तेः। अस्त्रिधंशोषणरहितं सर्वदाऐकरूप्येणवर्तमानं मरुद्गणंअर्यमणंअरीन्मन्देहादीनसुरान्यच्छ-तिनियच्छतीत्यर्यमासूर्यः असौवाआदित्योर्यमेतिश्रुतेः। तंवरुणंवृणोतिपापकृतःस्वकीयैःपाशै-रावृणोतीतिरात्र्यभिमानीदेवोवरुणः श्रूयतेच—वारुणीरात्रिरिति। सोमंद्वेधाआत्मानंविभज्यपृ-थिव्यांलतारूपेणदिविचचन्द्रात्मनादेवतारूपेणवर्तमानं अश्विना अश्ववन्तौ यद्वा सर्वं व्यामु-वन्तौ तथाचयास्कः—अश्विनौयद्व्यश्नुवातेसर्वंरसेनान्योज्योतिषान्योश्वैरश्विनावित्यौर्णवाभस्त-त्कावश्विनौद्यावापृथिव्यावित्येकेऽहोरात्रावित्येकेसूर्याचन्द्रमसावित्येकेराजानौपुण्यकृतावित्यै-तिहासिकाइति। एवंभूतान्सर्वान्देवान् अस्मद्रक्षणार्थमाह्वयामइतिपूर्वत्रसंबन्धः अस्माभिराहू-तासुभगाशोभनधनोपेतासरस्वतीनोऽस्मभ्यंमयः सुखंकरत् करोतु॥ हूमहे ह्वेञोलटिह्वइत्यनुवृ-त्तौबहुलंछन्दसीतिसंप्रसारणम् परपूर्वत्वेहलइतिदीर्घत्वं बहुलंछन्दसीतिशपोलुक्। अस्त्रिधं स्त्रि-धुशोषणे संपदादिलक्षणोभावेक्विप् बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। मयस्करत् करोतेर्लेटयडागमः बहुलंछन्दसीतिविकरणस्यलुक् अतःकृकमीतिविसर्जनीयस्यसत्वम्॥ ३॥

चतुर्थीमृचमाह—

तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः।
तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवम्॥४॥

तत्। नः। वातः। मयःऽभु। वातु। भेषजम्। तत्। माता।
पृथिवी। तत्। पिता। द्यौः। तत्। ग्रावाणः। सोमऽसुतः।
मयःऽभुवः। तत्। अश्विना। शृणुतम्। धिष्ण्या। युवम्॥ ४॥

वातोवायुः तद्भेषजमौषधंनोऽस्मान्वातुप्रापयतु यद्भेषजं मयोभु मयसःसुखस्यभावयितृ मातासर्वेषांजननीपृथिवीभूमिरपि तद्भेषजंअस्मान्प्रापयतु पितावृष्टिप्रदानेनसर्वेषांरक्षिता द्यौर्द्यु-लोकोपि तद्भेषजंअस्मान्प्रापयतु सोमसुतः सोमाभिषवंकृतवन्तः मयोभुवः मयसोयागफलभूत-

१ तै० ब्रा० १. ७. ९. १   २ तै०सं० २. ५. २. १   ३ तै० सं० २. ४. ४. १
४ तै० ब्रा० १. ७. ९. १   ५ नि० १२. १. १

स्यसुखस्यभावयितारोग्रावाणः अभिषवसाधनाः पाषाणाश्च तच्छेपजमस्मान्श्रापयन्तु हेधिष्ण्या धिषणाबुद्धिः तदर्हावश्विनौ युवंयुवांतच्छेपजंशृणुतं आकर्णयतं यच्छेपजमस्माभिर्वाय्वादिषु प्रार्थ्यते तच्छेपजं देवानांभिषजौयुवां अस्माकमनुकूलंयथाभवतितथाजानीतमित्यर्थः॥ मयोभु ह्रस्वोनपुंसकेप्रातिपदिकस्येतिह्रस्वत्वम्। वातु वागतिगन्धनयोः अन्तर्भावितण्यर्थात्प्रार्थनायां लोट्। सोमसुतः सोमेसुञ्इतिभूतेक्विप्। धिष्ण्या धिषणाशब्दादर्हार्थेछन्दसिचेतियः वर्णलोपश्छान्दसः सुपांसुलुगित्याकारः॥ ४॥

पञ्चमीमृचमाह—

तमीशा॑नं॒जग॑तस्त॒स्थुष॒स्पतिं॑धियंजि॒न्वमव॑सेहूमहेव॒यम्।
पू॒षानो॒यथा॒वेद॑सा॒मस॑द्वृ॒धेर॑क्षि॒तापा॒युरद॑ब्धःस्व॒स्तये॑॥५॥१५॥

तम्। ईशा॑नम्। जग॑तः। त॒स्थुषः॑। पति॑म्। धि॒य॒म्ऽजि॒न्वम्। अव॑से। हू॒म॒हे॒। व॒यम्। पू॒षा। नः॒। यथा॑। वेद॑साम्। अस॑त्। वृ॒धे। र॒क्षि॒ता। पा॒युः। अद॑ब्धः। स्व॒स्तये॑॥ ५॥ १५॥

पूर्वार्धेनेन्द्रःस्तूयते अपरार्धेनपूषा ईशानंऐश्वर्यवन्तं अतएवजगतोजङ्गमस्यप्राणिजातस्यतस्थुषःस्थावरस्यचपतिंस्वामिनं धियंजिन्वं धीभिःकर्मभिःप्रीणयितव्यं एवंभूततमिन्द्रंअवसेरक्षणायवयंहूमहेआह्वयामः पूषानोऽस्माकंवेदसांधनानांवृधेवर्धनायरक्षिता यथाऽसत् येनप्रकारेणभवति तेनैवप्रकारेण अदब्धःकेनाप्यहिंसितःपूषा स्वस्तयेऽस्माकंअविनाशाय पायुःरक्षिताभवतु॥ तस्थुषः तिष्ठतेर्लिटःक्वसुः षष्ठ्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणं शासिवसिघसीनांचेतिषत्वं षष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम्। धियंजिन्वं जिविःप्रीणनार्थः कृत्यल्युटोबहुलमितिबहुलवचनात्खच् इचएकाचोम्प्रत्ययवच्चेतिअमागमः।असत् असभुवि लेटयडागमः बहुलंछन्दसीतिशपोलुगभावः।पायुः पारक्षणे कृवापाजीत्युण्। स्वस्तये सुपूर्वादस्तेर्भावेक्तिन् छन्दस्युभयथेतितस्यसार्वधातुकत्वात् अस्तेर्भूरितिभूभावाभावइतिवृत्तानुक्रम्॥५॥

॥ इतिप्रथमस्यषष्ठेपञ्चदशोवर्गः॥ १५॥

षष्ठीमृचमाह—

स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ।
स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥६॥

स्वस्ति । नः । इन्द्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः ।
स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः ।
दधातु ॥ ६ ॥

वृद्धश्रवाः वृद्धंप्रभूतंश्रवःश्रवणंस्तोत्रंहविर्लक्षणमन्नंवायस्य तादृशइन्द्रोनोऽस्माकं स्वस्तीत्यविनाशिनाम स्वस्तिअविनाशंदधातुविदधातुकरोतु विश्ववेदाःविश्वानिवेत्तीतिविश्ववेदाः यद्वा विश्वानिसर्वाणि वेदांसिज्ञानानिधनानिवायस्यतादृशःपूषापोषकोदेवः नोऽस्माकंस्वस्ति विदधातु अरिष्टनेमिः नेमिरित्यायुधनाम अरिष्टोऽहिंसितोनेमिर्यस्य यद्वा रथचक्रस्यधारानेमिः यत्संबन्धिनोरथस्यनेमिर्नहिंस्यतेसोरिष्टनेमिः एवंभूतस्तार्क्ष्यः तृक्षस्यपुत्रोगरुत्मान् नोऽस्माकं स्वस्तिअविनाशंविदधातु तथाबृहस्पतिः बृहतांदेवानांपालयितानोऽस्माकंस्वस्तिअविनाशंविदधातु ॥ वृद्धश्रवाः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । विश्ववेदाः विदज्ञाने विद्लृलाभेआभ्यामसुन्प्रत्ययान्तोवेदस्शब्दः बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् । तार्क्ष्यः तृक्षस्यापत्यं गर्गादिभ्योयञ् ञित्वादाद्युदात्तत्वम् । अरिष्टनेमिः नरिष्टाअरिष्टा अव्ययपूर्वपदप्रकृतिस्वरत्वं अरिष्टानेमिर्यस्यसतथोक्तः । बृहस्पतिः तद्बृहतोःकरपत्योरितिसुट्तलोपौ उभेवनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ।
अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह ॥७॥

पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभम्ऽयावानः । विदथेषु ।
जग्मयः । अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः ।
देवाः । अवसा । आ । गमन् । इह ॥ ७ ॥

पृषदश्वाः पृषद्भिः श्वेतबिन्दुभिर्युक्ताअश्वायेषांतेतथोक्ताः पृश्निमातरः पृश्निर्नानावर्णा गौःमातायेषां शुभंयावानः शुभंशोभनंयान्तिगच्छन्तीतिशुभंयावानःशोभनगतयइत्यर्थः विदथेषुयज्ञेषुजग्मयोगन्तारः अग्निजिह्वाःअग्नेर्जिह्वायांवर्तमानाः सर्वेहिदेवाः हविःस्वीकरणायअग्नेर्जिह्वायांवर्तन्ते तात्स्थ्यात्ताच्छब्द्यं मनवः सर्वस्यमन्तारः सूरचक्षसः सूर्यप्रकाशइवचक्षःप्रकाशोयेषांते एवंभूतामरुतः मरुत्संज्ञकाविश्वेदेवाः सर्वेदेवाः नोऽस्मान् इहास्मिन्काले अवसारक्षणेनसहआगमन्आगच्छन्तु॥ शुभंयावानः यामापणे आतोमनिन्निति वनिप् तत्पुरुषेकृतिबहुलमितिबहुलवचनाद्द्वितीयायाअप्यलुक् । गमन् गमेःप्रार्थनायांलेटचडागमः इतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपोलुक् ॥ ७ ॥

अस्तिसौम्यचरुस्तृतीयसवने तेनचरुणादेवताइष्ट्वा इष्टशेषेतस्मिन्बहुघृतमवनीयतस्मिन्चपश्यन्स्वकीयाछायाद्रष्टव्या सायदिनदृश्येततदानींभद्रमित्येकापठितव्या त्वंसोमइतिखण्डे तथैवसूत्रितम्—राज्ञासोमेनतद्वयमस्मासुधारयामसिभद्रंकर्णेभिःशृणुयामदेवाइतिचेति । महानाम्नीनतेष्वेपाभूमिस्पर्शनेजप्या सूत्रितंचएतद्विदमिखण्डे—भद्रंकर्णेभिःशृणुयामदेवाःशन्नइन्द्राग्नीभवतामवोभिरिति ।

तामेतांसूक्तेअष्टमीमृचमाह—

भ॒द्रंकर्णे॑भिःशृणुयामदेवाभ॒द्रंप॑श्येमा॒क्षभि॒र्यज॑त्राः ।
स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेमदे॒वहि॑तं॒यदायुः॑ ॥८॥

भ॒द्रम् । कर्णे॑भिः । शृ॒णु॒या॒म॒ । दे॒वाः॒ । भ॒द्रम् । प॒श्ये॒म॒ । अ॒क्षऽभिः॑ । य॒ज॒त्राः॒ । स्थि॒रैः । अङ्गैः॑ । तु॒ष्टु॒ऽवांसः॑ । त॒नूभिः॑ । वि । अ॒शे॒म॒ । दे॒वऽहि॑तम् । यत् । आयुः॑ ॥ ८ ॥

हेदेवाःदानादिगुणयुक्ताः सर्वेदेवाःकर्णेभिरस्मदीयैःश्रोत्रैर्भद्रंभजनीयं कल्याणवचनंशृणुयाम युष्मत्प्रसादाच्छ्रोतुंसमर्थाःस्याम अस्माकं बाधिर्यंकदाचिदपिमाभूत् हेयजत्राः यागेषु चरुपुरोडाशादिभिर्यष्टव्याः देवाः अक्षभिः अक्षिभिरालोचैश्चक्षुर्भिः भद्रंशोभनंपश्येम द्रष्टुंसमर्थाःस्याम अस्माकंदृष्टिमनिघातोऽपिमाभूत् स्थिरैर्दृढैरङ्गैर्हस्तपादादिभिरवयवैः तनूभिः शरीरैश्चयुक्तावयं तुष्टुवांसः युष्मांस्तुवन्तः यदायुःषोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणंवादेवहितं

देवेनप्रजापतिनास्थापितं तद्यशोमप्राप्नुयाम ॥ कर्णेभिः बहुलंछन्दसीतिभिसऐसभावः । अक्षभिः छन्दस्यपिदृश्यतइत्यनङ् सचोदात्तः । यजत्राः अमिनक्षीत्यादिनायजेरत्रन्प्रत्ययः । तुष्टुवांसः ष्टुञ्स्तुतौ लिटःक्वसुः शर्पूर्वाःखयइतितकारःशिष्यते । अशेम अशूव्याप्तौ लिङ्याशिष्यङ् यदितुतत्रपरिगणनं अन्यव्यावृत्त्यर्थं तदानींलिङिव्यत्ययेनशप् । देवहितं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसंतनूनाम् ।
पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥९॥

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र ।
जरसम् । तनूनाम् । पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः ।
मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

हेदेवाः अन्तिअन्तिके मनुष्याणांसमीपे आयुष्ट्वेनभवद्भिःकल्पिताःशरदःसंवत्सराः शतमिन्नु शतंखलु यस्मात्सृष्टिकाले मनुष्याणांशतंसंवत्सराआयुरितियुष्माभिःपरिकल्पितं तस्मान्नोस्माकमायुर्गन्तोः कृत्स्नस्यायुपोगमनात्पूर्वं मध्या मध्येमारीरिषत माहिंसिष्ट कीदृशान् नोऽस्माकं तनूनांशरीराणांजरसंजरांयत्रयस्यामवस्थायांचक्र कृतवन्तोयूयं यत्रचपुत्रासःपुत्राः पितरोऽस्माकंरक्षितारोभवन्ति ईदृग्दशापन्नानित्यर्थः ॥ अन्ति अन्तिकशब्दस्यकादिलोपोबहुलमितिवक्तव्यमितिकलोपः । यत्र ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिसंहितायांदीर्घः । चक्र लिटिमध्यमबहुवचनस्यकित्त्वाद्गुणाभावेयणादेशः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । जरसं जरायाजरसन्यतरस्यामितिजरसादेशः । मध्या सुपांसुलुगितिसप्तम्याडादेशः । रीरिषत रुषरिषहिंसायां अस्माण्ण्यन्तान्माङिलुङिमध्यमबहुवचने चङ्श्चङिणिलोपोपधाह्रस्वत्वद्विर्वचनहलादिशेषसन्वद्भावदीर्घाः छान्दसःपदकालीनोह्रस्वः । गन्तोः भावलक्षणेस्थेणितिगमेस्तोसुन्प्रत्ययः ॥ ९ ॥

अदितिर्द्यौरित्येषा अदितिदेवताकेपशौ हविषोयाज्या सूत्रितंच—अदितिर्द्यौरदितिरन्तरिक्षंनतेविष्णोजायमानोनजातइति ।

पृषदश्वाः पृषद्भिः श्वेतबिन्दुभिर्युक्ताअश्वायेषांतेतथोक्ताः पृश्निमातरः पृश्निर्नानावर्णा गौःमातायेषां शुभंयावानः शुभंशोभनंयान्तिगच्छन्तीतिशुभंयावानःशोभनगतयइत्यर्थः विदथेषुयज्ञेषुजग्मयोगन्तारः अग्निजिह्वाःअग्नेर्जिह्वायांवर्तमानाः सर्वेहिदेवाः हविःस्वीकरणायअग्नेर्जिह्वायांवर्तन्ते तात्स्थ्यात्ताच्छब्द्यं मनवः सर्वस्यमन्तारः सूरचक्षसः सूर्यप्रकाशइवचक्षःप्रकाशोयेषांते एवंभूतामरुतः मरुत्संज्ञकाविश्वेदेवाः सर्वेदेवाः नोऽस्मान् इहास्मिन्काले अवसारक्षणेनसहआगमन्आगच्छन्तु॥ शुभंयावानः यामापणे आतोमनिन्निति वनिप् तत्पुरुषेकृतिबहुलमितिबहुलवचनाद्द्वितीयायाअप्यलुक् । गमन् गमेःप्रार्थनायांलिङ्ङडागमः इतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपोलुक् ॥ ७ ॥

अस्तिसौम्यचरुस्तृतीयसवने तेनचरुणादेवताइष्ट्वा इष्टशेषेतस्मिन्बहुघृतमवनीयतस्मिन्नपइक्यमाणांस्वकीयाछायाद्रष्टव्या सायदिनदृश्येततदानींभद्रमित्येकापठितव्या त्वंसोमइतिखण्डे तथैवसूत्रितम्—राज्ञासोमेनतद्वयमस्मासुधारयामसिभद्रंकर्णेभिःशृणुयामदेवाइतिचेति । महानाम्नीव्रतेप्येषाभूमिस्पर्शनेजप्या सूत्रितंचएतद्विद्रमिखण्डे—भद्रंकर्णेभिःशृणुयामदेवाःशन्नइन्द्राग्नीभवतामवोभिरिति ।

तामेतांसूक्तेअष्टमीमृचमाह—

भ॒द्रंकर्णे॑भिःशृणुयामदेवाभ॒द्रंप॑श्येमा॒क्षभि॒र्यज॑त्राः ।
स्थि॒रैरङ्गै॑स्तुष्टु॒वांस॑स्त॒नूभि॒र्व्य॑शेमदे॒वहि॑तं॒यदायुः॑ ॥८॥

भ॒द्रम् । कर्णे॑भिः । शृ॒णु॒या॒म॒ । दे॒वाः॒ । भ॒द्रम् । प॒श्ये॒म॒ । अ॒क्षऽभिः॑ ।
य॒ज॒त्राः॒ । स्थि॒रैः । अङ्गैः॑ । तु॒स्तु॒ऽवांसः॑ । त॒नूभिः॑ । वि । अ॒शे॒म॒ ।
दे॒वऽहि॑तम् । यत् । आयुः॑ ॥ ८ ॥

हेदेवाःदानादिगुणयुक्ताः सर्वेदेवाःकर्णेभिरस्मदीयैःश्रोत्रैर्भद्रंभजनीयं कल्याणवचनंशृणुयाम युष्मत्प्रसादाच्छ्रोतुंसमर्थाःस्याम अस्माकं बाधिर्यंकदाचिदपिमाभूत् हेयजत्राः यागेषु चरुपुरोडाशादिभिर्यष्टव्याः देवाः अक्षभिः अक्षिभिरालोचयितृभिः चक्षुर्भिः भद्रंशोभनंपश्येम द्रष्टुंसमर्थाःस्याम अस्माकंदृष्टिमान्द्यंकदाचिदपिमाभूत् स्थिरैर्दृढैरङ्गैर्हस्तपादादिभिरवयवैः तनूभिः शरीरैश्चयुक्तावयं तुष्टुवांसः युष्मांस्तुवन्तः यदायुःषोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणंवादेवहितं

देवेनप्रजापतिनास्थापितं तद्व्यशेमप्राप्नुयाम ॥ कर्णेभिः बहुलंछन्दसीतिभिसऐसभावः । अक्षभिः छन्दस्यपिदृश्यतइत्यनङ् सचोदात्तः । यजत्राः अमिनक्षीत्यादिनायजेरत्रन्प्रत्ययः । तुष्टुवांसः ष्टुञ्स्तुतौ लिटःक्वसुः शर्पूर्वाःखयइतितकारःशिष्यते । अशेम अशूव्याप्तौ लिङ्याशिष्यङ् यद्यपितत्रपरिगणनं अन्यव्यावृत्त्यर्थं तथापिलिङिव्यत्ययेनशप्।देवहितं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसंतनूनाम् ।
पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥९॥

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र ।
जरसम् । तनूनाम् । पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः ।
मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

हेदेवाः अन्तिअन्तिके मनुष्याणांसमीपे आयुष्ट्वेनभवद्भिःकल्पिताःशरदःसंवत्सराः शतमिन्नु शतंखलु यस्मात्सृष्टिकाले मनुष्याणांशतंसंवत्सराआयुरितियुष्माभिःपरिकल्पितं तस्मान्नोस्माकमायुर्गन्तोः कृत्स्नस्यायुषोगमनात्पूर्वं मध्या मध्येमारीरिषत माहिंसिष्ट कीदृशान् नोऽस्माकं तनूनांशरीराणांजरसंजरांयत्रयस्यामवस्थायांचक्र कृतवन्तोयूयं यत्रचपुत्रासःपुत्राः पितरोऽस्माकंरक्षितारोभवन्ति ईदृग्दशापन्नानित्यर्थः ॥ अन्ति अन्तिकशब्दस्यकादिलोपोबहुलमितिवक्तव्यमितिकलोपः । यत्र ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिसंहितायांदीर्घः । चक्र लिटिमध्यमबहुवचनस्यकित्त्वाद्गुणाभावेयणादेशः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । जरसं जरायाजरसन्यतरस्यामितिजरसादेशः । मध्या सुपांसुलुगितिसप्तम्याडादेशः । रीरिषत रुषरिषहिंसायां अस्माण्ण्यन्तान्माङिलुङिमध्यमबहुवचने चेश्चङिणिलोपोपधाह्रस्वत्वद्विर्वचनहलादिशेषसन्वद्भावदीर्घाः छान्दसःपदकालीनोह्रस्वः । गन्तोः भावलक्षणेस्थेणितिगमेस्तोसुन्प्रत्ययः ॥ ९ ॥

अदितिर्द्यौरित्येषा अदितिदेवताकेपशौ हविषोयाज्या सूत्रितंच—अदितिर्द्यौरदितिरन्तरिक्षंनतेविष्णोजायमानोनजातइति ।

पृषदश्वाः पृषद्भिः श्वेतबिन्दुभिर्युक्ताअश्वायेषांतेतथोक्ताः पृश्निमातरः पृश्निर्नानावर्णा गौःमातायेषां शुभंयावानः शुभंशोभनंयान्तिगच्छन्तीतिशुभंयावानःशोभनगतयइत्यर्थः विदथेषुयज्ञेषुजग्मयोगन्तारः अग्निजिह्वाःअग्नेर्जिह्वायांवर्तमानाः सर्वेहिदेवाः हविःस्वीकरणायअग्नेर्जिह्वायांवर्तन्ते तात्स्थ्यात्ताच्छब्द्यं मनवः सर्वस्यमन्तारः सूरचक्षसः सूर्यप्रकाशइवचक्षःप्रकाशोयेषांते एवंभूतामरुतः मरुत्संज्ञकाविश्वेदेवाः सर्वेदेवाः नोऽस्मान् इहास्मिन्काले अवसारक्षणेनसहआगमन्आगच्छन्तु॥ शुभंयावानः यामापणे आतोमनिन्क्वनिब्वनिपश्च तत्पुरुषेकृतिबहुलमितिबहुलवचनाद्द्वितीयायाअप्यलुक् । गमन् गमेःप्रार्थनायांलेटिचडागमः इतश्चलोपइतीकारलोपः बहुलंछन्दसीतिशपोलुक् ॥ ७ ॥

अस्तिसौम्यचरुस्तृतीयसवने तेनचरुणादेवताइष्ट्वा इष्टशेषेतस्मिन्बहुघृतमवनीयतस्मिन्नपदृक्तर्वास्वकीयाछायाद्रष्टव्या सायद्दिनदृश्येततदानींभद्रमित्येकापठितव्या त्वंसोमइतिखण्डे तथैवसूत्रितम्—राज्ञासोमेनतद्वयमस्मासुधारयामसिभद्रंकर्णेभिःशृणुयामदेवाइतिचेति ।महानाम्नीव्रतेप्येषाभूमिस्पर्शनेजप्या सूत्रितंचएतद्विद्दमिखण्डे—भद्रंकर्णेभिःशृणुयामदेवाःशन्नइन्द्राग्नीभवतामवोभिरिति ।

तामेतांसूक्तेअष्टमीमृचमाह—

भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥८॥

भद्रम् । कर्णेभिः । शृणुयाम । देवाः । भद्रम् । पश्येम । अक्षऽभिः । यजत्राः । स्थिरैः । अङ्गैः । तुस्तुऽवांसः । तनूभिः । वि । अशेम । देवऽहितम् । यत् । आयुः ॥ ८ ॥

हेदेवाःदानादिगुणयुक्ताः सर्वेदेवाःकर्णेभिरस्मदीयैःश्रोत्रैर्भद्रंभजनीयं कल्याणवचनंशृणुयाम युष्मत्प्रसादाच्छ्रोतुंसमर्थाःस्याम अस्माकं बाधिर्यकदाचिदपिमाभूत् हेयजत्राः यागेषु चरुपुरोडाशादिभिर्यष्टव्याः देवाः अक्षभिः अक्षिभिरात्मीयैश्चक्षुर्भिः भद्रंशोभनंपश्येम द्रष्टुंसमर्थाःस्याम अस्माकंदृष्टिमनिपातोऽपिमाभूत् स्थिरैर्दृढैरङ्गैर्हस्तपादादिभिरवयवैः तनूभिः शरीरैश्चयुक्तावयं तुष्टुवांसः युष्मांस्तुवन्तः यदायुःषोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणंवादेवहितं

देवेनप्रजापतिनास्थापितं तद्व्यशेमप्राप्नुयाम ॥ कर्णेभिः बहुलंछन्दसीतिभिसऐसभावः । अक्षभिः छन्दस्यपिदृश्यतइत्यनङ् सचोदात्तः । यजत्राः अमिनक्षीत्यादिनायजेरत्रन्प्रत्ययः । तुष्टुवांसः ष्टुञ्स्तुतौ लिटःक्वसुः शर्पूर्वाःखयइतितकारःशिष्यते । अशेम अशूव्याप्तौ लिङ्याशिष्यङ् यदितुतत्रपरिगणनं अन्यव्यावृत्त्यर्थं तदानींलिङिव्यत्ययेनशप्।देवहितं तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसंतनूनाम् ।
पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥९॥

शतम् । इत् । नु । शरदः । अन्ति । देवाः । यत्र । नः । चक्र ।
जरसम् । तनूनाम् । पुत्रासः । यत्र । पितरः । भवन्ति । मा । नः ।
मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

हेदेवाः अन्तिअन्तिके मनुष्याणांसमीपे आयुष्ट्वेनभवद्भिःकल्पिताःशरदःसंवत्सराः शतमिन्नु शतंखलु यस्मात्सृष्टिकाले मनुष्याणांशतंसंवत्सराआयुरितियुष्माभिःपरिकल्पितं तस्मान्नोस्माकमायुर्गन्तोः कृत्स्नस्यायुषोगमनात्पूर्वं मध्या मध्येमारीरिषत माहिंसिष्ट कीदृशान् नोऽस्माकं तनूनांशरीराणांजरसंजरांयत्रयस्यामवस्थायांचक्र कृतवन्तोयूयं यत्रचपुत्रासःपुत्राः पितरोऽस्माकंरक्षितारोभवन्ति ईदृग्दशापन्नानित्यर्थः ॥ अन्ति अन्तिकशब्दस्यकादिलोपोबहुलमितिवक्तव्यमितिकलोपः । यत्र ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणामितिसंहितायांदीर्घः । चक्र लिटिमध्यमबहुवचनस्यकित्त्वाद्गुणाभावेयणादेशः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । जरसं जरायाजरसन्यतरस्यामितिजरसादेशः । मध्या सुपांसुलुगितिसप्तम्याडादेशः । रीरिषत रुषरिषहिंसायां अस्माण्ण्यन्तान्माङिलुङिमध्यमबहुवचने चेङ्श्चङिणिलोपोपधाह्रस्वत्वद्विर्वचनहलादिशेषसन्वद्भावदीर्घाः छान्दसःपदकालीनोह्रस्वः । गन्तोः भावलक्षणेस्थेणितिगमेस्तोसुन्प्रत्ययः ॥ ९ ॥

अदितिर्द्यौरित्येषा अदितिर्देवताकेपशौ हविषोयाज्या सूत्रितंच—अदितिर्द्यौरदितिरन्तरिक्षंनतेविष्णोजायमानोनजातइति ।

तामेतांसूक्तैकदेशमीमृचमाह—

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः ।
विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १० ॥ १६ ॥

अदि॑तिः । द्यौः । अदि॑तिः । अ॒न्तरि॑क्षम् । अदि॑तिः । मा॒ता । सः ।
पि॒ता । सः । पु॒त्रः । विश्वे॑ । दे॒वाः । अदि॑तिः । पञ्च॑ । जनाः॑ ।
अदि॑तिः । जा॒तम् । अदि॑तिः । जनि॑ऽत्वम् ॥ १० ॥ १६ ॥

अदितिरदीना अखण्डनीया वा पृथिवी देवमाता वा सैव द्यौः द्योतनशीलो नाकः सैवान्तरिक्षं अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम सैव माता निर्मात्री जगतो जननी सैव पिता उत्पादकः तातश्च स पुत्रः मातापित्रोर्जातः पुत्रोऽपि सैव विश्वे देवाः सर्वेऽपि देवाः अदितिरेव पञ्चजना निषादपञ्चमाश्चत्वारो वर्णाः यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसीति तदुक्तं यास्केन—गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः इति । ब्राह्मणेऽप्येवमाम्नातम्—सर्वेषां वा एतत् पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च इति । तत्र गन्धर्वाप्सरसामैक्यात् पञ्चजनत्वं एवंविधाः पञ्चजना अप्यदितिरेव जातं जननं प्रजानामुत्पत्तिः साप्यदितिरेव जनित्वं जन्माधिकरणं तदप्यदितिरेव एवं सकलजगदात्मना अदितिः स्तूयते उक्तं च यास्केन—इत्यदितेर्विभूतिमाचष्टे इति ॥ अदितिः दो अवखण्डने अस्मात्कर्मणि क्तिनि द्यतिस्यतिमास्थामित्तीत्वम् यास्कपक्षे तु दीङ् क्षये इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वं नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । स पिता निर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददत इत्युद्देश्यलिङ्गतया पुंलिङ्गत्वम् । जनित्वं जनेरौणादिकस्त्वन्प्रत्ययः ॥ १० ॥

॥ इति प्रथमस्य षष्ठे षोडशो वर्गः ॥ १६ ॥

ऋजुनीतीति नवर्चं पञ्चदशं सूक्तम् गोतमस्यार्षं अत्रानुक्रम्यते—ऋजुनीतीति नव गायत्रमन्त्यानुष्टुबिति । पूर्वत्र वैश्वदेवं त्वित्युक्तत्वात् तुह्यादिपरिभाषया इदमपि सूक्तं बहुदेवताकं सूक्तविनियोगो लैङ्गिकः चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य ऋजुनीती न इत्येषारम्भणीया चतुर्विंश इति खण्डे सू-

१ नि० ३.८. । २ ऐ० ब्रा० ३.३१. । ३ नि० ४.२३. ।

नितम्–ऋजुनीतीनोवरुणइन्द्रंवोविश्वतस्परीति । अहर्गणेपुद्वितीयादिष्वहःस्वपिएषारंभणीया शंसनीया . सूत्रितंच–आरंभणीयाःपर्यासात्कद्वतोहरहःशस्यानीतिहोत्रकाद्वितीयादिष्वेवेति ।

तामेतांसूक्तेप्रथमामृचमाह–

ऋजुनीतीनोवरुणोमित्रोनयतुविद्वान् । अर्यमादेवैःसजोषाः ॥१॥

ऋजुऽनीती । नः । वरुणः । मित्रः । नयतु । विद्वान् । अर्यमा । देवैः । सऽजोषाः ॥ १ ॥

अहरभिमानीदेवोमित्रःवरुणोरात्र्यभिमानी मित्रश्चवरुणश्चविद्वान् नेतव्यमुत्तमंस्थानं जानन्नोऽस्मान् ऋजुनीती ऋजुनीत्या ऋजुनयनेनकौटिल्यरहितेनगमनेननयतु अभिमतंफलंमापयतु तथादेवैरन्यैरिन्द्रादिभिः सजोषाः समानप्रीतिरर्यमा अहोरात्रस्यविभागकर्तासूर्यश्चास्मानृजुगमनेनाभिमतंस्थानंमापयतु ॥ ऋजुनीती सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घत्वम्.॥ १ ॥

द्वितीयामृचमाह–

तेहिवस्वोवसवानास्तेअप्रमूरामहोभिः । व्रतारक्षन्तेविश्वाहा॥२॥

ते । हि । वस्वः । वसवानाः । ते । अप्रऽमूराः । महःऽभिः । व्रता । रक्षन्ते । विश्वाहा ॥ २ ॥

तेहिपूर्वोक्तामित्रादयः वस्वोवसुनोधनस्यवसवानावासकाः आच्छादयितारः सर्वंजगद्धनेन आच्छादयन्तीत्यर्थः अतस्तेमित्रादयः अप्रमूराः अप्रमूर्छिताः अमूढाः प्राज्ञाःसन्तोमहोभिरात्मीयैस्तेजोभिर्विश्वाहासर्वाण्यहानि अत्यन्तसंयोगेद्वितीया सर्वेष्वप्यहःसु व्रताव्रतानि जगन्निर्वाहरूपाणिस्वकीयानिकर्माणि रक्षन्तेपालयन्ति ॥ वस्वः आगमानुशासनस्यानित्यत्वान्नुमभावेजसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणस्यविकल्पनाद्भावेयणादेशः । वसवानाः वसआच्छादने अस्मादन्तर्भावितण्यर्थाल्लटःशानच् बहुलंछन्दसीतिशपोलुगभावः वर्णव्यापत्त्यामकारस्यवकारः । अप्रमूराः मुर्छामोहसमुच्छ्राययोः अस्मात्संपदादिलक्षणोभावेक्विप् राल्लोपइतिछकारलोपः मरुष्टाम्ः प्रमूः तवोमत्वर्थीयोरः रोरीतिरेफलोपः नप्रमूराः अप्रमूराः अव्ययपूर्वपदप्रकृतिस्वरत्वम्। रक्षन्ते रक्षपालने व्यत्ययेनतङ् ॥ २ ॥

तृतीयामृचमाह—

तेअस्मभ्यंशर्मयंसन्नमृतामर्त्येभ्यः। बाधमानाअपद्विषः ॥३॥

ते। अस्मभ्यम्। शर्म। यंसन्। अमृताः। मर्त्येभ्यः। बाधमानाः। अप। द्विषः॥ ३ ॥

अमृताः अमरणधर्माणः तेविश्वेदेवाः मर्त्येभ्यः मरणधर्मभ्योऽस्मभ्यमनुष्ठातृभ्यःशर्मअमृतलक्षणंसुखं यंसन् यच्छन्तु प्रयच्छन्तु किंकुर्वन्तः द्विषोऽस्मदीयान् पापलक्षणाञ्छत्रूनपबाधमानाःविनाशंप्रापयन्तः॥ यंसन् यमउपरमे लेटयडागमः सिब्बहुलंलेटीतिसिप्। अमृताः मृतं मरणंयेषांनास्तीत्यमृताः नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम्॥ ३॥

चतुर्थीमृचमाह—

विनःपथःसुवितायचियन्त्विन्द्रोमरुतः। पूषाभगोवन्द्यासः ॥४॥

वि। नः। पथः। सुविताय। चियन्तु। इन्द्रः। मरुतः। पूषा। भगः। वन्द्यासः॥ ४ ॥

वन्द्यासः सर्वैर्वन्दनीयाः स्तोतव्याःनमस्कर्तव्यावाइन्द्रादयोदेवानोऽस्माकंपथोमार्गान् विचियन्तु विचिन्वन्तु अशोभनेभ्योमार्गेभ्यःसकाशात्पृथक्कुर्वन्तु किमर्थं सुवितायसुष्टुप्राप्तव्याय स्वर्गादिफलाय॥ पथः शसिभस्यटेर्लोपइतिटिलोपःउदात्तनिवृत्तिस्वरेणशसउदात्तत्वम्। सुविताय इण्गतावित्यस्मात्कर्मणिनिष्ठा यन्वादीनांछन्दसिबहुलमुपसंख्यानमितिउवङ् गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वेप्राप्ते सूपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम्। चियन्तु चिञ्चयने बहुलंछन्दसीतिविकरणस्यलुक् इयङ् पादादित्वान्निघाताभावः। वन्द्यासः वदिअभिवादनस्तुत्योः ऋहलोर्ण्यत् ईडवन्दवृशंसदुहांण्यतइत्याद्युदात्तत्वम् आज्जसेरसुक्॥ ४॥

आद्योर्यामेसन्तिचत्वार्यतिरिक्तोक्थानि तत्रचतुर्थेअच्छावाकातिरिक्तोक्थेउतनोधियइत्येषानुरूपतृचस्यवैकल्पिकीतृतीया सूत्रितंच—उतनोधियोगोअग्राइतिवानुरूपस्योत्तमेति।

तामेतांसंक्षेपञ्चमीमृचमाह—

उतनोधियोगोअग्राःपूषन्विष्णवेवयावः। कर्तानःस्वस्तिमतः ॥५॥१७

उत । नः । धियः । गोऽअंग्राः । पूषन् । विष्णो इति । एवंऽयावः ।
कर्त । नः । स्वस्तिऽमतः ॥ ५ ॥ १७ ॥

हेपूषन्पोषकदेव हेविष्णोव्यापनशीलदेव हेएवयावः एवैर्गन्तृभिरश्वैर्यातिगच्छतीत्येवयावामरुद्गणः हेमरुद्गण तेसर्वेयूयं नोऽस्माकंधियः आप्तोर्यामलक्षणानिकर्माणि गोअग्राःपश्वग्राणि पशुमुखानिअस्मत्सकाशाद्भवैः पशुभिर्युक्तानिकर्वंकुरुत आप्तोर्यामकर्मणश्चपशुमाप्तिहेतुत्वमाम्नायते—यस्मात्पशवःप्रमेवप्ररेशेरन् सएतेनयज्ञेनयजेतेति । उतापिचनोस्मान्स्वस्तिमतः अविनाशिनः कुरुत ॥ एवयावः इण्गतौ इण्शीङ्भ्यांवन्नितिवन्प्रत्ययःअस्मिन्नुपपदे यामापणेइत्यस्माद्दातोमनिन्क्तिवनिप् संबुद्धौवनउपसंख्यानमितिवकारस्यरुत्वम्॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेसप्तदशोवर्गः॥ १७ ॥

ऋत्विगाद्यर्थमाहृतंमधुपर्कंमधुवाताइतितृचेनऋत्विगादिःप्रतिगृहीतावेक्षेत तथाचसूत्र्यते—मधुवाताइतितृचेनावेक्ष्येति ।

तृचेप्रथमांसूक्तेषष्ठीमृचमाह—

मधुवाताऋतायतेमधुक्षरन्तिसिन्धवः । माध्वीर्नःसन्त्वोषधीः॥६॥

मधु । वाताः । ऋतऽयते । मधु । क्षरन्ति । सिन्धवः । माध्वीः ।
नः । सन्तु । ओषधीः ॥ ६ ॥

ऋतायतेऋतंयज्ञमात्मनइच्छतेयजमानाय वाताःवायवः मधुमाधुर्योपेतंकर्मफलंक्षरन्तिवर्षन्ति प्रयच्छन्तीत्यर्थः तथा सिन्धवःस्यन्दनशीलानद्यः समुद्रावामधुमाधुर्योपेतंस्वकीयंरसंक्षरन्ति एवंनोस्मभ्यंओषधीः फलपाकान्ताओषधयः ताश्चमाध्वीर्माधुर्योपेताःसन्तुभवन्तु ॥ मधु अस्मादुत्तरस्यमत्वर्थीयस्यलुगकारेकारेफाश्चवक्तव्याइतिलुक् । ऋतायते ऋतमात्मनइच्छति सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतिइत्वदीर्घयोर्निषेधः अन्येषामपीतिसंहितायांदीर्घत्वम् क्यजन्ताल्लटःशतृ शतुरनुमइतिविभक्तेरुदात्तत्वम् । माध्वीः मधोरञ्चेतिमत्वर्थीयोञ्प्रत्ययः ऋत्व्यवास्त्व्येत्यादौअत्रि यणादेशोनिपात्यते वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । ओषधीःओषःपाकआसुधीयतइत्योषधयः कर्मण्यधिकरणेचेतिकिप्रत्ययः कृदिकारादक्तिनइतिङीप् जसिपूर्ववत्पूर्वस-

१ तै० ब्रा० २.७.१४.।

वर्णदीर्घः दासीभारादिपुपठितत्वात्पूर्वपदप्रकृतिस्वरत्वम् तच्चघञन्तमाद्युदात्तम् ॥ ६॥

सप्तमीमृचमाह—

मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः । मधुद्यौरस्तुनःपिता ॥७॥

मधु । नक्तम् । उत । उषसः । मधुऽमत् । पार्थिवम् । रजः । मधु । द्यौः । अस्तु । नः । पिता ॥ ७ ॥

नक्तंरात्रिर्नोऽस्माकं मधुमधुमतीमाधुर्योपेतफलप्रदाभवतु उतअपिच उषसःउषःकालोपलक्षितान्यहानिचमधुमन्तिभवन्तु पार्थिवंरजः पृथिव्याःसंबन्धीलोकः अस्माकंमधुमत् माधुर्यविशिष्टफलयुक्तोभवतु पितावृष्टिप्रदानेनसर्वेषांपालयितादौर्द्युलोकोपिमधुमधुयुक्तोभवतु॥ पार्थिवं पृथिव्याञाञावितिप्राग्दीव्यतीयोऽञ्प्रत्ययः । रजः रजःशब्दोलोकवाची लोकारजांस्युच्यन्तइतियास्कः । रजन्त्यस्मिञ्जनाइतिरजः असुनिरजकरजनरजःसूपसंख्यानमितिरञ्जेर्नलोपः॥७॥

अष्टमीमृचमाह—

मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः । माध्वीर्गावोभवन्तुनः ॥८॥

मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः । माध्वीः । गावः । भवन्तु । नः ॥ ८ ॥

नोऽस्माकंवनस्पतिः वनानांपालयितायूपाभिमानीदेवः मधुमान्माधुर्योपेतफलवानस्तु तादृशंफलमस्मभ्यंप्रयच्छत्वित्यर्थः सूर्यःसर्वस्यप्रेरकःसविताचमधुमानस्तु गावःअग्निहोत्राद्यर्थाधेनवश्चनोऽस्माकंमाध्वीः माधुर्योपेतेनपयसायुक्ताभवन्तु ॥ वनस्पतिः वनानांपतिर्वनस्पतिः पारस्करादित्वात्सुट् वनपतिशब्दावाद्युदात्तौ उभेवनस्पत्यादिषुयुगपदितिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

शंनोमित्रःशंवरुणःशंनोभवत्वर्यमा ।
शंनइन्द्रोबृहस्पतिःशंनोविष्णुरुरुक्रमः ॥९॥१८॥

१ नि० ४. १९. ।

शम् । नः । मित्रः । शम् । वरुणः । शम् । नः । भवतु । अर्यमा ।
शम् । नः । इन्द्रः । बृहस्पतिः । शम् । नः । विष्णुः । उरुऽक्रमः॥९॥१८॥

अहरभिमानीमित्रोदेवोनोऽस्माकंशंसुखकरोभवतु यद्वा अस्मदीयानामुपद्रवाणांशमयिताभवतु रात्र्यभिमानीवरुणश्चशंसुखकरोभवतु अर्यमाअहोरात्रयोःव्यापयितासूर्यश्चनोऽस्माकंशंसुखकरोभवतु बृहस्पतिः बृहतांदेवानांपालयिताइन्द्रश्चनोऽस्माकंशंसुखकरोभवतु उरुक्रमःउरुविस्तीर्णंक्रामतिपादौविक्षिपतीत्युरुक्रमः विष्णुर्हिवामनावतारेपृथिव्यादीँल्लोकान्पदत्रयरूपेणाक्रान्तवान् अतउरुक्रमोविष्णुश्चनोऽस्माकंशंसुखकरः उपद्रवाणांशमयितावाभवतु ॥ उरुक्रमः क्रमुपादविक्षेपे पचाद्यच् यद्वा उरून्क्रामतीत्युरुक्रमः कर्मण्यण् नोदात्तोपदेशस्यमान्तस्येतिवृद्धिप्रतिषेधः ॥ ९ ॥

॥ इतिप्रथमस्यपष्ठेष्टादशोवर्गः ॥ १८ ॥

त्वंसोमेतित्रयोविंशत्यृचंसप्तमंसूक्तम् गोतमस्यार्षंसोमदेवताकं पञ्चम्याद्याः षोडशयन्त्याः द्वादशर्चोगायत्र्यः सप्तदशीउष्णिक् शिष्टाद्यस्त्रिष्टुभः तथाचानुक्रान्तम्—त्वंसोमत्र्यधिकासौम्यं पञ्चम्यादिगायत्र्योद्वादशोष्णिक्चेति । सूक्तविनियोगोलैङ्गिकः एकादशिनस्यसौम्यस्यपशोर्वपापुरोडाशयोस्त्वंसोमेतिद्वेऋचावनुवाक्ये सूत्रितंच—त्वंसोमप्रचिकितोमनीषेतिद्वेइति । महापितृयज्ञेएकैकस्यहविषोद्वेद्वेअनुवाक्ये तत्रसोमस्यपितृमतस्त्वंसोमेत्येषाप्रथमानुवाक्या दक्षिणाग्नेरग्निमितिखण्डेसूत्रितम्—त्वंसोमप्रचिकितोमनीषात्वंसोमोधेनुमिति । एवंप्रायणीयेष्टौसौम्यस्यानुवाक्या तदहःप्रायणीयेष्टिरित्यत्रसूत्रितम्—त्वंसोमप्रचिकितोमनीषायातेधामानिदिवियापृथिव्यामिति ।

तामेतांसूक्तेप्रथमामृचमाह—

त्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपन्थाम् ।
तवप्रणीतीपितरोनइन्दोदेवेषुरत्नमभजन्तधीराः ॥१॥

त्वम् । सोम । प्र । चिकितः । मनीषा । त्वम् । रजिष्ठम् । अनु ।
नेषि । पन्थाम् । तव । प्रऽनीती । पितरः । नः । इन्दो इति । देवेषु ।
रत्नम् । अभजन्त । धीराः ॥ १ ॥

हेसोम त्वं मनीषा मनीषया अस्मदीयया बुद्ध्या प्रचिकितः प्रकर्षेण ज्ञातोऽसि वयं त्वां स्तुतिभिर्ज्ञासिष्मेत्यर्थः अतस्त्वं रजिष्ठं ऋजुतममकुटिलं पन्थां पन्थानं कर्मफलावाप्तिहेतुभूतं मार्गमनु नेषि अस्माननुक्रमेण प्रापयसि किञ्च हेइन्दो उन्दनशील सर्वं जगदमृतेन क्लेदयितः सोम तव प्रणीती प्रणीत्या त्वत्कर्तृकेन प्रकृष्टनयनेन धीराः धीमन्तः कर्मवन्तः प्रज्ञावन्तो नोऽस्माकं पितरो देवेष्विन्द्रादिषु रत्नं रमणीयं धनमभजन्त असेवन्त प्राप्नुवन् अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः॥ प्रचिकितः कित ज्ञाने अस्मात्कर्मणि निष्ठा छान्दसं द्विर्वचनं यद्वा यङ्लुगन्तान्निष्ठा संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणो यङ्लुकोरित्यभ्यासस्य गुणाभावः यद्वा छन्दस्युभयथेति निष्ठायाः सार्वधातुकसंज्ञायां शप् जुहोत्यादित्वात्तस्य श्लुः श्लाविति द्विर्वचनं गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। मनीषा सुपां सुलुगिति तृतीयाया डादेशः। रजिष्ठं ऋजुशब्दादिष्ठनि विभाषर्जोश्छन्दसीति रत्वम् टेरिति टिलोपः। नेषि नयतेर्लेटि बहुलं छन्दसीति शपो लुक्। पन्थां पथिमथ्यृभुक्षामादित्यसावपि व्यत्ययेनात्वम् पथिमथोः सर्वनामस्थाने इत्याद्युदात्तत्वम्। प्रणीती वादौ चेति गतेः प्रकृतिस्वरत्वम् सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम् ॥ १ ॥

अग्निष्टोमे मरुत्वतीये त्वं सोम क्रतुभिरित्येषा धाय्या सूत्रितं च—अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्या इति।

वामेवांसकेद्वितीयामृचमाह—

त्वं सो॑म॒ क्रतु॑भिः सु॒क्रतु॑र्भू॒स्त्वं दक्षैः॑ सु॒दक्षो॑ वि॒श्ववे॑दाः।
त्वं वृषा॑ वृष॒त्वेभि॑र्महि॒त्वा द्यु॒म्नेभि॑र्द्यु॒म्न्य॑भवो नृ॒चक्षाः॑ ॥ २ ॥

त्वम्। सो॒म॒। क्रतु॑ऽभिः। सु॒ऽक्रतुः॑। भूः॒। त्वम्। दक्षैः॑। सु॒ऽदक्षः॑। वि॒श्वऽवे॑दाः। त्वम्। वृषा॑। वृ॒ष॒ऽत्वेभिः॑। म॒हि॒ऽत्वा। द्यु॒म्नेभिः॑। द्यु॒म्नी। अ॒भ॒वः॒। नृ॒ऽचक्षाः॑ ॥ २ ॥

हेसोम त्वं क्रतुभिः त्वत्संबन्धिभिरग्निष्टोमादिकर्मभिरात्मीयैर्ज्ञानैर्वा सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा भूर्भवसि तथा विश्ववेदाः सर्वधनस्त्वं दक्षैरात्मीयैर्बलैः सुदक्षः शोभनबलो भवसि तथा त्वं वृषत्वेभिः वृषत्वैः कामाभिवर्षणैः महित्वा महत्त्वेन माहात्म्येन च वृषा कामानां वर्षिता महांश्च भवसि तथा त्वं नृचक्षाः नृणां पश्यत्यनेन नृणां यजमानानां अभिमतफलस्य दर्शयिता सन् द्युम्नेभिः द्युम्नैर्दत्तैः हविर्लक्षणैरन्नैर्द्युम्न्यन्नवान् अभूः आसीः भवसि ॥ सुक्रतुः बहु-

मीहौकृत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम्। सुदक्षः दक्षवृद्धौ दक्ष्यतेअनेनेतिदक्षोबलम् करणेघञ् ञित्त्वादाद्युदात्तत्वम् सुशब्देनबहुव्रीहावाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। विश्ववेदाः विश्वानिवेदांसियस्यासौ बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम्। वृषत्वेभिः वृष्णोभावोवृषत्वं बहुलंछन्दसीतिभिसऐसभावः। महित्वा महेरौणादिकइन्प्रत्ययः भावप्रत्ययान्तात्सुपांसुलुगितिविभक्तेराकारः ॥ २ ॥

तृतीयामृचमाह—

राज्ञोनुतेवरुणस्यव्रतानिंबृहद्गंभीरन्तवसोमधाम।
शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योअर्यमेवासिसोम ॥३॥

राज्ञः। नु। ते। वरुणस्य। व्रतानि। बृहत्। गभीरम्। तव। सोम। धाम। शुचिः। त्वम्। असि। प्रियः। न। मित्रः। दक्षाय्यः। अर्यमाऽइव। असि। सोम ॥ ३ ॥

हेसोम राज्ञः ब्राह्मणानांस्वामिनः सोमोऽस्माकंब्राह्मणानां[1]राजेतिश्रुतेः। वरुणस्ययागार्थमाहृतः क्रीतोवस्त्रेणावृतः सोमोवरुणः वरुणोसिधृतव्रतइतिमन्त्रेलिङ्गात् क्रीतस्यतेनुतवसंबन्धीनि हिव्रतानिसर्वाण्यग्निष्टोमादीनिकर्माणि अतःसर्वेषुयागेषुत्वमेवकरणभूतोभवसीत्यर्थः अतस्तव धाम त्वदीयंतेजः बृहत्महद्विस्तीर्णंगभीरंगांभीर्योपेतंच यद्वा नुइत्येतदुपमार्थे तदुक्तंयास्केन—अथाप्युपमार्थेभवतिवृक्षस्यनुतेपुरुहूतवयाइवि[3]। राज्ञोराजमानस्यवरुणस्यनुवरुणस्येव हेसोम ते तवव्रतानिकर्माणिलोकहितकारीणि शिष्टंसमानम् हेसोम त्वंशुचिः सर्वेषांशोधकोऽसि तत्रदृष्टान्तः—प्रियोनमित्रः यथासर्वेषां अनुकूलोऽहरभिमानीमित्रोदेवःशोधयिताभवतितद्वत् तथात्वं अर्यमेव अस्माभिर्दृश्यमानःसूर्यइवदक्षाय्योऽसि सर्वेषांवर्धकोभवसि यथा अहनिसूर्यः प्रकाशेनसर्वंवर्धयति एवंनिशिअमृतमयैःसोमकिरणैः प्यायमानंसर्वस्थावरजङ्गमात्मकंसर्वंजगद्वर्धते ॥ शुचिष्ट्वं युष्मत्ततक्षुष्वन्तःपादमितिविसर्जनीयस्यषत्वम्। दक्षाय्यः दक्षवृद्धौ श्रुदक्षिस्पृहिगृहिभ्यआय्यइतिआय्यप्रत्ययः ॥ ३ ॥

---

१ तै० सं० १-८. १०.।  २ तै० सं० १. २. १०.।  ३ नि० १. ४.।

आग्रयणेष्टौसौम्यस्यहविषोयातेधामानीतियाज्या आग्रयणंव्रीहिश्यामाकयवानामिति खण्डेसूत्रितम्—सोमयास्तेमयोभुवोयातेधामानिदिवियापृथिव्यामिति । एवैवैकादशिनस्यसौम्यस्यपशोर्वपायांयाज्या सूत्रितंच—यातेधामानिदिवियापृथिव्यामपाढ्यंयुत्सुपृतनासुपप्रिमिति । प्रायणीयेष्टावप्येषैवसौम्यस्ययाज्या सूत्रितंच—त्वंसोमप्रचिकितोमनीषायातेधामानिदिवियापृथिव्यामिति ।

तामेतांसूक्तेचतुर्थीमृचमाह—

यातेधामानिदिवियापृथिव्यांयापर्वतेष्वोषधीष्वप्सु ।
तेभिर्नोविश्वैःसुमनाअहेळन्राजन्त्सोमप्रतिहव्यागृभाय ॥४॥

या । ते । धामानि । दिवि । या । पृथिव्याम् । या । पर्वतेषु । ओषधीषु । अप्ऽसु । तेभिः । नः । विश्वैः । सुऽमनाः । अहेळन् । राजन् । सोम । प्रति । हव्या । गृभाय ॥ ४ ॥

हेसोम तेतवदिविद्युलोकेयायानिधामानितेजांसिवर्तन्ते तथा पृथिव्यांभूमौयायानिवर्तन्ते तथापर्वतेषुपर्ववत्सुशिलोच्चयेषुयानिवर्तन्ते तथाव्रीह्याद्योषधीषुअप्सुचयानिवर्तन्ते तेभिर्विश्वैस्तैः सर्वैस्तेजोभिर्युक्तः सुमनाःशोभनमनाअहेळन्नक्रुध्यन् हेराजन्सोम राजमानसोम एवंभूतस्त्वं नः हव्याअस्माभिःप्रत्तानिहवींषिप्रतिगृभाय प्रतिगृहाण ॥ या शेश्छन्दसिबहुलमितिशेर्लोपः । पृथिव्यां उदात्तयणइतिविभक्तेरुदात्तत्वम् । ओषधीषु ओषधेश्चविभक्तावप्रथमायामितिदीर्घः । अप्सु ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । सुमनाः सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वम् । गृभाय ग्रहउपादाने छन्दसिशायजपीतिहेर्श्नाप्रत्ययस्यशायजादेशः ॥ ४ ॥

पौर्णमासेष्टौसौम्यस्याज्यभागस्यत्वंसोमेत्येषानुवाक्या सूत्रितंच—अग्निर्वृत्राणिजंघनदितिपूर्वस्याज्यभागस्यानुवाक्यात्वंसोमासिसत्पतिरित्युत्तरस्येति । एवंयत्रयत्रवार्त्रघ्नावाज्यभागौतत्रसर्वत्रास्याविनियोगः प्रातःकालीनायामुपसदिप्रधानस्यसौम्यस्यैषानुवाक्या आपराह्णिक्यामुपसदिसैवयाज्या सूत्रितंच—त्वंसोमासिसत्पतिर्गयस्फानोअमीवहेति विपर्यासोयाज्यानुवाक्यानामितिच ।

तामेतांसूक्तेपञ्चमीमृचमाह—

त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा। त्वंभद्रोअसिक्रतुः॥५॥१९॥

त्वम्। सोम। असि। सत्ऽपतिः। त्वम्। राजा। उत। वृत्रऽहा। त्वम्। भद्रः। असि। क्रतुः॥ ५ ॥ १९ ॥

हेसोम त्वंसत्पतिरसि सतांकर्मसुवर्तमानानांब्राह्मणानांअधिपतिर्भवसि तस्मात्सोमराजानो-ब्राह्मणाइतिश्रुतेः। यद्वा सन्तःस्वानादयःपतयःपालकायस्यसोमस्यतादृशोभवसि तथाचाम्ना-यते—स्वानभ्राजेत्याहैतेवाअमुष्मिँल्लोकेसोममरक्षन्निति। उतअपिचराजा राजमानस्त्वं वृत्रहावृ-त्रस्यासुरस्यशत्रोर्वाहन्तासि भद्रःशोभनः क्रतुः योयमग्निष्टोमादियागः त्वमेवतद्रूपोभवसि त्व-त्ताध्यत्वाद्यागानाम्॥ सत्पतिः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् तत्पुरुषपक्षेतुपत्यावैश्वर्येइतिपूर्व-पदप्रकृतिस्वरत्वम्॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेएकोनविंशोवर्गः ॥ १९ ॥

साग्निचित्येकतौअग्नीषोमीयस्यपशुपुरोडाशमनु अष्टौदेवसुवांहवींषिनिरूप्यन्ते तत्रसोम-स्यवनस्पतेर्हविषः त्वंचसोमेत्येषानुवाक्या अथाग्नीषोमीयेणेतिखण्डेतिसूत्रितम्—त्वंचसोमनो-वशोब्रह्मादेवानांपदवीःकवीनामिति।

तामेतांषष्ठीमृचमाह—

त्वंचसोमनोवशोजीवातुंनमरामहे। प्रियस्तोत्रोवनस्पतिः॥६॥

त्वम्। च। सोम। नः। वशः। जीवातुम्। न। मरामहे। प्रियऽस्तोत्रः। वनस्पतिः॥ ६ ॥

हेसोम नोऽस्माकं स्तोतॄणांजीवातुं जीवनौषधं त्वंच त्वंचेद्वशः कामयेथाः तदानींवयंनम-रामहे नम्रियामहे कीदृशस्त्वं प्रियस्तोत्रः प्रियाणिस्तोत्राणियस्यसतथोक्तः बहुभिःस्तोतव्यइ-त्यर्थः वनस्पतिः वनानामोषधिवनस्पतिरूपाणांपतिः पालयितासि सोमोवाओषधीनांराजेतिश्रु-तेः॥ वशः वशकान्तौ लेटिसिप्यडागमः आगमानुदात्तलेधातुस्वरःशिष्यते त्वंचेति चशब्दः च-णितिनिपातान्तरं चेदर्थम् तद्योगान्निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः। जीवातुं जीवप्राणधा-रणे जीवेरातुः। मरामहे मृङ्प्राणत्यागे व्यत्ययेनशप्॥ ६ ॥

१ तै० ब्रा० १.७.६.। २ तै० सं० ६.१.१०.।

आयुष्कामेष्ट्यांद्वितीयस्याज्यभागस्यत्वंसोममहेभगमित्येपानुवाक्या अथकाम्याइतिख-ण्डेसूत्रितम्—आनोअग्नेसुचेतुनात्वंसोममहेभगमिति।

तामेतांसप्तमीमृचमाह—

त्वंसो॑मम॒हेभगं॒त्वंयून॑ऋता॒यते। दक्षं॑दधासिजी॒वसे॑ ॥७॥

त्वम्। सो॒म॒। म॒हे। भग॑म्। त्वम्। यूने॑। ऋ॒त॒ऽय॒ते। दक्ष॑म्। द॒धा॒सि॒। जी॒वसे॑ ॥ ७ ॥

हेसोम त्वंमहेमहतेवृद्धायऋतायते ऋतंयज्ञमात्मनइच्छतेपुरुषाय जीवसेजीवितुं दक्षंउपभो-गसमर्थंभगं धनंददासि विदधासिकरोषि तथात्वंयूनेतरुणायचऋतायते जीवितुंधनंकरोषि ॥ म-हे महते अच्छन्दलोपश्छान्दसः बृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम्। यूने श्वयुवमघो-नामतद्धितेइतिसंप्रसारणम्। ऋतायते ऋतंआत्मनइच्छति सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येती-त्वदीर्घयोर्निषेधः अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः क्यजन्ताल्लटःशतृ शतुरनुमोनद्यजादी-इतिविभक्तेरुदात्तत्वम्। जीवसे जीवप्राणधारणे तुमर्थेसेसेनितिअसेप्रत्ययः ॥ ७ ॥

स्वस्त्ययन्यांद्वितीयस्याज्यभागस्य त्वंनःसोमेत्येपानुवाक्या सूत्रितंच—स्वस्त्ययन्यांरक्षि-तवन्तावग्नेरक्षाणोअंहसस्त्वंनःसोमविश्वतइति।

तामेतांसूक्तेअष्टमीमृचमाह—

त्वंनः॑सोमवि॒श्वतो॒रक्षा॑राजन्नघाय॒तः। नरि॑ष्येत्वाव॑तः॒सखा॑ ॥८॥

त्वम्। नः॒। सो॒म॒। वि॒श्वतः॑। रक्ष॑। रा॒ज॒न्। अ॒घ॒ऽय॒तः। न। रि॒ष्ये॒त्। त्वाऽव॑तः। सखा॑ ॥ ८ ॥

हेसोमराजन् राजनशील त्वंअघायतःअघंपापंतद्धेतुंदुःखंअस्माकंकर्तुमिच्छतःविश्व-तःसर्वस्मादपिपुरुषान्नोऽस्मान्रक्षपालय त्वावतः त्वत्सदृशस्यसखासख्यंमाप्तः पुरुषःनरिष्येत् नहिविनश्येत् किमुवक्तव्यंत्वत्सखानविनश्यतीति ॥ अघायतः अघंपापंपरेषांइच्छतीतिअघायन् छन्दसिपरेच्छायामपीतिक्यच् अश्वाघस्यादित्यात्वम्। रिष्येत् रुषरिषहिंसायाम्। त्वावतः वतुप्प्रकरणेयुष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानमितिवतुप् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्त-स्यत्वादेशः आसर्वनाम्नइत्यात्वम् ॥ ८ ॥

सोमप्रवहणेसोमयास्तइतितृचोनुवक्यः सूत्रितंच—सोमयास्तेमयोभुवइतितिस्रइति। आग्रयणेसौम्यस्यसोमयास्तइत्येषानुवाक्या सूत्रितंच—सोमयास्तेमयोभुवोयातेधामानिदिवियापृथिव्यामिति। अश्वमेधेपिपौष्ण्यामिष्टौद्वितीयस्याज्यभागस्यैषानुवाक्या सूत्रितंच—त्वमग्नेसप्रथाअसिसोमयास्तेमयोभुवइतिसद्वन्ताविति।

सामेतांसूक्तेनवमीमृचमाह—

सोम॒यास्ते॑मयो॒भुव॑ऊ॒तय॒:सन्ति॑दा॒शुषे॑। ताभि॑र्नो॒ऽवि॒ता भ॑व ॥९॥

सोम॑। याः। ते॒। म॒य॒:ऽभुव॑:। ऊ॒तय॑:। सन्ति॑। दा॒शुषे॑। ताभि॑:। न॒:। अ॒वि॒ता। भ॒व॒ ॥ ९ ॥

हेसोम तेतवसंबन्धिन्योदाशुषेचरुपुरोडाशादीनिदत्तवतेयजमानाय मयोभुवः मयसःसुखस्य भावयित्र्योयाऊतयोरक्षाःसन्तिविद्यन्ते ताभीरक्षाभिर्नोऽस्माकंअविताराक्षिताभव ॥ मयोभुवः अस्येतिविशेषणत्वेनस्त्रीलिङ्गत्वेभुवश्चेतिङीपूप्रप्तोति बह्वोतोगुणवचनादित्यस्मादुतइतिपरकरणस्यानुवर्तनान्नभवति ॥ ९ ॥

दशमीमृचमाह—

इ॒मं य॒ज्ञमि॒दं वचो॑जुजुषा॒णउ॒पाग॑हि। सोम॒त्वंनो॑वृ॒धे भ॑व॥१०॥२०

इ॒मम्। य॒ज्ञम्। इ॒दम्। वच॑:। जु॒जु॒षा॒णः। उ॒प॒ऽआग॑हि। सोम॑। त्वम्। न॒:। वृ॒धे॥ भ॒व ॥ १० ॥ २० ॥

हेसोम त्वंइमंअस्माभिःक्रियमाणंयज्ञंइदंवचःइदानींक्रियमाणंस्तुतिलक्षणंवचनंजुजुषाणः सेवमानःसन्उपागहिउपागच्छ प्राचीनवंशलक्षणंगृहंप्रप्नुहि प्राप्यचनोऽस्माकं वृधेयज्ञस्यवर्धनायभव ॥ जुजुषाणः जुषीप्रीतिसेवनयोः छन्दसिलिट् लिटःकानच् चितइत्यन्तोदात्तत्वम्। उपागहि गमेर्लोटिबहुलंछन्दसीतिशपोलुक् अनुदात्तोपदेशेत्यादिनाअनुनासिकलोपः असिद्धवदत्राभादित्यस्यासिद्धत्वाद्धेर्लुगभावः गतिर्गताविति पूर्वस्यगतेर्निघातः ॥ १० ॥

॥ इतिप्रथमस्यषष्ठेविंशोवर्गः ॥ २० ॥

१ गृहीत्यस्यआङासमासेउत्तरपदस्योदात्तत्वं शून्यत्वेनआद्युदात्तः पुनरपि उपेनसमासे गतिकारकोपपदादितिउत्तरपदप्रकृतिस्वरेणसएवोदात्तः।

दर्शयागेसौम्यस्याज्यभागस्यसोमगीर्भिरित्येषानुवाक्या सूत्रितंच—अग्निःप्रत्नेनमन्मना सोमगीर्भिष्ट्वावयमिति । अन्यत्रापियत्रवृधन्वन्तावाज्यभागौतत्रैषाद्वितीयाज्यभागानुवाक्या ।

तामेतांसूक्तेएकादशीमृचमाह—

सोमंगीर्भिष्ट्वांव॒यंव॒र्धया॑मोवचो॒विदः॑ । सु॒मृ॒ळी॒कोन॒आवि॑श॥११॥

सोम॑ । गीः॒ऽभिः । त्वा॒ । व॒यम् । व॒र्धया॑मः । व॒चः॒ऽविदः॑ ।
सु॒ऽमृ॒ळी॒कः । नः॒ । आ । वि॒श ॥ ११ ॥

हेसोम त्वात्वां वचोविदः स्तुतिलक्षणानांवचसांवेदितारोवयमनुष्ठातारोगीर्भिःस्तुतिलक्षणैर्वचोभिः वर्धयामः प्रवृद्धंकुर्मः तादृशस्त्वंचनोऽस्माकं सुमृडीकःशोभनंसुखंकुर्वन्सन् आविश आगच्छ॥ सुमृळीकः मृडसुखने मृडेःकीकन्कंकनावितिभावेकीकन्प्रत्ययः शोभनंमृडीकंयस्येतिबहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् ॥ ११ ॥

सन्निपवमानेष्टयस्तिस्रः तत्रतृतीयस्यामिष्टौउत्तरस्याज्यभागस्यगयस्फानइत्येषानुवाक्या सूत्रितंच—पुष्टिमन्तावग्निनारयिमश्नवद्गयस्फानोअमीवहेति । एवमेवमातःकालीनोपसदिसौम्ययागस्ययाज्या सायंकालीनायांत्वनुवाक्या सूत्रितंच अथोपसदितिखण्डे—त्वंसोमासिसत्पतिर्गयस्फानोअमीवहेति ।

तामेतांद्वादशीमृचमाह—

ग॒य॒स्फानो॑अमी॒व॒हाव॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । सु॒मि॒त्रःसो॑मनोभव ॥१२

ग॒य॒ऽस्फानः॑ । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सु॒ऽमि॒त्रः ।
सो॒म॒ । नः॒ । भ॒व ॥ १२ ॥

गयस्फानः गयइतिधननाम धनस्यवर्धयिता अमीवहा अमीवानांरोगाणांहन्ता वसुवित्स्तोतॄणांधनस्यलंभयितामापयिता पुष्टिवर्धनः पुष्टेःसंपदोवर्धयिता सुमित्रः शोभनानिमित्राणिसखायोयस्यतादृशः हेसोम त्वंनोऽस्माकमेवंगुणविशिष्टोभव ॥ गयस्फानः स्फायीवृद्धौ-अन्तर्भावितण्यर्थात् ल्युटि व्यत्ययेनयलोपः इदमादिपुचतुर्थपदेपूत्तरपदप्रकृतिस्वरत्वम् । सुमित्रः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्॥ १२ ॥

त्रयोदशीमृचमाह—

सोमरारन्धिनोहृदिगावोनयवसेष्वा । मर्यइवस्वओक्ये ॥१३॥

सोम । ररन्धि । नः । हृदि । गावः । न । यवसेषु । आ । मर्यःऽइव । स्वे । ओक्ये ॥ १३ ॥

हेसोम त्वंनोऽस्माकं हृदिहृदयेररन्धिरमस्व तत्रनिदर्शनद्वयमुच्यते—गावोन यथागावः यवसेषुशोभनतृणेषुआभिमुख्येनरमन्ते मर्यइव यथावामर्योमरणधर्मामनुष्यःस्वेओक्येस्वकीयेओकसिगृहेपुत्रादिभिःसहरमते तद्वदस्माभिर्दत्तेनहविषातृप्तःसन् अस्मास्वेवअवतिष्ठस्व नान्यत्रगच्छेतिनिदर्शनद्वयस्यतात्पर्यार्थः ॥ ररन्धि रमुक्रीडायां व्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिशपःश्लुः छन्दस्युभयथेतिहेरार्धधातुकत्वेनङित्त्वाभावादङितश्चेतिहेर्धिः अतएवङित्त्वादनुनासिकलोपाभावः सेर्ह्यपिच्चेतिहेरपित्त्वात्तस्यैवस्वरःशिष्यते छान्दसमभ्यासस्यदीर्घत्वम् आमन्त्रितंपूर्वमविद्यमानवदितिपूर्वस्यामन्त्रितस्याविद्यमानवत्त्वात्पदादपरत्वेननिघातः। मर्यइव छन्दसिनिष्टक्र्येत्यादौमर्यशब्दोयत्प्रत्ययान्तोनिपात्यते यतोनावइत्याद्युदात्तत्वम्। ओक्ये उचसमवाये उच्यतेसमवेयतेभाग्यतइत्योक्यंगृहं ऋहलोर्ण्यत् चजोःकुघिण्ण्यतोरितिकुत्वं तित्स्वरितः॥१३॥

चतुर्दशीमृचमाह—

यःसोमसख्येतवरारणद्देवमर्त्यः । तंदक्षःसचतेकविः ॥१४॥

यः । सोम । सख्ये । तव । ररणत् । देव । मर्त्यः । तम् । दक्षः । सचते । कविः ॥ १४ ॥

हेदेव द्योतमानसोम तवसख्येत्वदीयेसखित्वेनिमित्तभूतेसति योमर्त्योमरणधर्मायजमानः ररणत्ररणति एतत्सूक्तरूपेणस्तोत्रेणत्वांस्तौति तंयजमानंकविःक्रान्तदर्शीदक्षः सर्वकार्यसमर्थः त्वंसचतेसेवसे अनुग्रहीतासीत्यर्थः॥ ररणत् रणशब्दार्थः लेट्यडागमः बहुलंछन्दसीतिशपः श्लुः इतश्चलोपइतीकारलोपः छन्दस्युभयथेत्यार्धधातुकत्वात् अभ्यस्तानामादिरितिसार्वधातुकेविधीयमानस्याभ्यस्ताद्युदात्तत्वस्याभावेधातुस्वरःशिष्यते । सचते षचसमवाये पुरुषव्यत्ययः॥१४॥

---

१ इदंसांहितिकमेव अन्यथापदकालेह्रस्वपाठः अयुक्तःस्यात्। २ पूर्ववत्सांहितिकोदीर्घः।

पञ्चदशीमृचमाह—

उरुष्याणोअभिशंस्तेःसोमनिपाह्यंहसः। सखासुशेवएधिनः॥१५॥२१

उरुष्य। नः। अभिऽशंस्तेः। सोम। नि। पाहि। अंहसः। सखा। सुऽशेवः। एधि। नः॥ १५॥ २१॥

हेसोम त्वंनोऽस्मान् अभिशस्तेःअभिशंसनात् अभिशापरूपान्निन्दनात् उरुष्यरक्ष उरुष्यतीरक्षाकर्मेतियास्कः।तथा अंहसः अस्मत्कृतात्पापाच्चनिपाहि नितरांपालय एवंनः अस्मदीयं पापंपरिहृत्य सुशेवःअस्मभ्यंदातव्येनशोभनेनसुखेनयुक्तःसन् सखाएवहितकारीभव॥ अभिशस्तेः शंसुस्तुतौ अस्मान्भावेक्तिन् तादौचेतिगतेःप्रकृतिस्वरत्वम्। एधि असभुवि लोटिसेर्हिः तस्यङित्त्वात् श्नसोरल्लोपइत्यकारलोपः घ्वसोरेद्धावभ्यासलोपश्चेतिसकारस्यैत्वम तस्यासिद्धवदत्राभादित्यसिद्धत्वात् हुझल्भ्योहेर्धिरितिहेर्धिरादेशः॥ १५॥

॥ इतिप्रथमस्यषष्ठेएकविंशोवर्गः॥२१॥

ग्रावस्तोत्रेआप्यायस्वसमेतुतइतितृचोविनियुक्तः सूत्रितंच—आप्यायस्वसमेतुतइतितिस्रोऽमृजन्तित्वादशक्षिपइति। पत्नीसंयाजेषु सौम्यस्याप्यायस्वेत्येषानुवाक्या सूत्रितंच—आप्यायस्वसमेतुतेसन्तेपयांसिसमुयन्तुवाजाइति। चमसाप्यायनेप्येषाविनियुक्ता सूत्रितंच—आप्यायस्वसमेतुतेसन्तेपयांसिसमुयन्तुवाजाइतिचमसानाप्याययानिति।

तामेतांसूक्तेषोडशीमृचमाह—

आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम्। भवावाजस्यसंगथे॥१६

आ। प्यायस्व। सम्। एतु। ते। विश्वतः। सोम। वृष्ण्यम्। भव। वाजस्य। सम्ऽगथे॥ १६ ॥

हेसोम त्वंआप्यायस्व वर्धस्व तेतववृष्ण्यंवृषत्वंवीर्यसामर्थ्यं विश्वतःसर्वतः समेतु संगच्छतां त्वयासंपृक्तंभवतु एवंभूतस्त्वंवाजस्यान्नस्यसंगथेसंगमनेभव अस्माकंअन्नप्रदोभवेत्यर्थः॥ वृष्ण्यं वृषसेचने कनिन्युवृषीत्यादिनाकनिन् वृष्णिभवंवृष्ण्यं भवेछन्दसीतियत् अ-

१ नि० ५.२३।

लोपोनइत्यकारलोपः येचाभावकर्मणोरितिप्रकृतिभावस्तुव्यत्ययेननभवर्तते यतोनावइत्याद्युदात्तत्वम् । भव द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । संगथे ,पातूतुदिवचीत्यादिनाविधीयमानस्थक्प्रत्ययोबहुलवचनात्क्रमेरपिभवति थाथादिनोत्तरपदान्तोदात्तत्वम् ॥ १६ ॥

सप्तदशीमृचमाह—

आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः ।
भवानःसुश्रवस्तमःसखावृधे ॥१७॥

आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥ १७ ॥

हेमदिन्तम अतिशयेनमदवन् सोम विश्वेभिःसर्वैरंशुभिः लतावयवैराप्यायस्व आसमन्ताद्वृद्धोभव सत्वंसुश्रवस्तमः अतिशयेनशोभनान्नयुक्तःसन्नोस्माकंवृधेवर्धनायसखाभव मित्रीभव ॥ मदिन्तम मदोहर्षस्तद्वान्मदी अतिशयेनमदीमदिन्तमः नाद्घस्येतितमपोनुट् । सुश्रवस्तमः श्रवइत्यन्ननाम श्रूयतइतिसतइतियास्कः । शोभनंश्रवोयस्यसतथोक्तः अतिशयेनसुश्रवाः सुश्रवस्तमः तमपःपित्वादनुदात्तत्वे सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वमेवशिष्यते ॥ १७ ॥

पत्नीसंयाजेषुसोमस्यसन्तेपयांसीतियाज्या सूत्रितंच—सन्तेपयांसिसमुयन्तुवाजाइहत्वष्टारमग्रियमिति । चमसाप्यायनेप्येषा सूत्रितंच—सन्तेपयांसिसमुयन्तुवाजाइतिचमसानाप्याययेति ।

वामेतांसूक्तेष्टादशीमृचमाह—

संतेपयांसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः ।
आप्यायमानोअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥१८॥

सम् । ते । पयांसि । सम् । ऊम् इति । यन्तु । वाजाः । सम् । वृष्ण्यानि । अभिमातिऽसहः । आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥ १८ ॥

नि० १०. ३ ।

हेसोम अभिमातिषाहः अभिमातीनांशत्रूणांहन्तुस्तेतवएवंभूतंत्वांपयांसिअपणार्थानि क्षीराणिसंयन्तु संगच्छन्तां तथा वाजाउ हविर्लक्षणान्यन्नानिचत्वांसंगच्छन्तां वृष्ण्यानिवीर्याणिचसंगच्छन्तां हेसोम त्वंअमृताय अस्माकंअमृतत्वाय अमरणत्वाय आप्यायमानः आसमन्ताद्वर्धमानःसन् दिविनभसि स्वर्गेउत्तमानिउद्गततमानि उत्कृष्टानिश्रवांसिअन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानिवा धिष्व धारय ॥ते क्रियाग्रहणंकर्तव्यमितिकर्मणः संप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । अभिमातिषाहः षहअभिभवे छन्दसिसहइतिण्विप्रत्ययः सुषामादित्वात्षत्वम् । अमृताय नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । उत्तमानि उच्छब्दात्ससाधनक्रियावचनादातिशायनिकस्तमप् उत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिषुपाठादन्तोदात्तत्वम् । धिष्व सुधितवसुधितनेमधितधिष्वधिषीयचेतितिविभावोनिपात्यते ॥ १८ ॥

सोमप्रवहणेयातेधामानीत्येषा सूत्रितंच—यातेधामानिहविषायजन्तीमांधियंशिक्षमाणस्यदेवेतिनिहितेपरिदध्यादिति । एकादशिनस्यसौम्यस्यपशोर्हविषएषैवयाज्या प्रदानानामितिखण्डेसूत्रितम्—अपाह्वंयुरसुपृतनासुपर्मियातेधामानिहविषायजन्तीति ।

तामेतांसूक्तेएकोनविंशीमृचमाह—

यातेधामानिहविषायजन्तितातेविश्वापरिभूरस्तुयज्ञम् ।
गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान् ॥ १९॥

या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिऽभूः । अस्तु । यज्ञम् । गयऽस्फानः । प्रऽतरणः । सुऽवीरः । अवीरऽहा । प्र । चर । सोम । दुर्यान् ॥ १९ ॥

हेसोम तेत्वदीयानि यानिधामानि द्युप्रभृतिष्ववस्थितानि तेजांसि हविषाचरुपुरोडाशादिनायजन्ति यजमानाःपूजयन्ति तातेविश्वा त्वदीयानितानिसर्वाणिधामानियज्ञं अस्मदीयं अध्वरंपरिभूरस्तु परितोभावयितॄणिपरितःप्राप्तानिसन्तु यद्वा त्वदीयानांतेषां सर्वेषांधाम्नां अस्मदीयोयजमानः परिभूः यज्ञंप्रतिपरिग्रहीतायागेनस्वीकर्तास्तुभवतु परिपूर्वोभवतिःपरिग्रहार्थः तादृशीवांमभिरुपेतस्त्वं दुर्यान्प्राचीनवंशादिलक्षणानस्मदीयान्गृहान् गृहायैदुर्याइतिश्रुतेः । प्रचर प्रकर्षेणगच्छ कीदृशस्त्वं गयस्फानः गयस्यगृहस्यधनस्यवावर्धयि-

१ तै० सं० ६.२.९.।

ता प्रतरणः प्रकर्षेणदुरितात्तारयिता सुवीरःशोभनैर्वीरैःपुत्रैरुपेतः अवीरहावीराजायन्तइ-तिवीराःपुत्राः तेषामहन्ता ॥ परिभूः भूमाबौ अस्मात्किप्चेतिक्विप् व्यत्ययोबहुलमितिलिङ्गव-चनव्यत्ययौ । अस्तु व्यत्ययेनैकवचनम् । गयस्फानः गयइतिगृहस्यधनस्यचनामधेयं तेषां स्फायितावर्धयिता स्फायतेर्ल्युटोबहुलमितिकर्तरिल्युटिछान्दसोयलोपः । अवीरहा वीराणां ह-न्तावीरहा नवीरहाअवीरहा ॥ १९ ॥

महापितृयज्ञेसोमस्यपितृमतोयागे सोमोधेनुमित्येषाद्वितीयानुवाक्या तत्रसैकैकस्यहवि-षोद्वेद्वेअनुवाक्येसमुच्चयेनविहिते तथैव दक्षिणाग्नेरितिखण्डेसूत्रितम्—सोमोधेनुंसोमोअर्वन्तमा-शुंत्वंसोमपितृभिःसंविदानइति ।

तामेतांसूक्तेविंशीमृचमाह—

सोमो॑धे॒नुंसोमो॒ अर्व॑न्तमा॒शुंसोमो॑वी॒रंक॑र्म॒ण्यं॑ददाति ।
सा॒द॒न्यं॑विद॒थ्यं॑स॒भेयं॑पितृ॒श्रव॑णं॒योददा॑शदस्मै ॥ २० ॥ २२ ॥

सोम॑ः । धे॒नुम् । सोम॑ः । अर्व॑न्तम् । आ॒शुम् । सोम॑ः । वी॒रम् । क॒र्म॒ण्य॑म् । द॒दा॒ति॒ । स॒द॒न्य॑म् । वि॒द॒थ्य॑म् । स॒भेय॑म् । पि॒तृ॒ऽश्रव॑णम् । यः । द॒दा॑शत् । अ॒स्मै ॥ २० ॥ २२ ॥

योयजमानः ददाशत् सोमायहविर्लक्षणान्यन्नानिदद्यात्तस्मैयजमानायसोमोधेनुं सवत्सां दोग्ध्रींगांददाति तथाअर्वन्तंआशुं शीघ्रगामिनंअश्वंददाति प्रयच्छति तथावीरंपुत्रं अस्मैयज-मानायददाति कीदृशंपुत्रं कर्मण्यंलौकिककर्मसुकुशलं सदन्यं सदनंगृहंतदर्हं गृहकार्यकुशलमि-त्यर्थः विदथ्यंविदन्त्येषुदेवानितिविदथायज्ञाः तदर्हं दर्शपूर्णमासादियागानुष्ठानतत्परमित्यर्थः सभेयंसभायांसाधुं सकलशास्त्राभिज्ञमित्यर्थः पितृश्रवणं पिताश्रूयतेमख्यायतेयेनपुत्रेणतादृश-म् ॥ कर्मण्यं कर्मसुसाधुःकर्मण्यः तत्रसाधुरितियत् येचाभावकर्मणोरितिप्रकृतिभावः तित्स्वरि-तमितिस्वरितत्वं एवमुत्तरत्रापियत्प्रत्ययः । सभेयम् ढश्छन्दसीतितत्रसाधुरित्यर्थेढप्रत्ययः । ददा-शत् दाशृदाने लेटयडागमः बहुलंछन्दसीतिशपःश्लुः ॥ २० ॥

॥ इतिप्रथमस्यषष्ठेद्वाविंशोवर्गः ॥ २२ ॥

एकादशिनस्यसौम्यस्यपशोः पुरोडाशस्यअषाह्ळंयुत्स्वित्येषायाज्या प्रदानानामितिखण्डे सूत्रितम्—अषाह्ळंयुत्सुपृतनासुपप्रिंयामेधामानिहविषायजन्तीति ।

तामेतामेकविंशीमृचमाह—

अषाळ्हंयुत्सुपृतनासुपप्रिंस्वर्षामप्सांवृजनस्यगोपाम्।
भरेषुजांसुक्षितिंसुश्रवसंजयन्तंत्वामनुमदेमसोम ॥२१॥

अषाळ्हम्। युत्ऽसु। पृतनासु। पप्रिम्। स्वःऽसाम्। अप्साम्। वृजनस्य। गोपाम्। भरेषुऽजाम्। सुऽक्षितिम्। सुऽश्रवसम्। जयन्तम्। त्वाम्। अनु। मदेम। सोम ॥२१॥

युत्सुयुद्धेषु अषाळ्हंशत्रुभिरनभिभवनीयं तथापृतनासुसेनासुपप्रिं जयस्यपूरयितारं स्वर्षां स्वर्गस्यसनितारंदातारम् अप्सामपांवृष्टिलक्षणानामुदकानांदातारम् यद्वा अप्सांअप्सादृकंभक्षकरहितंसर्वेषामनुग्राहकमित्यर्थः वृजनस्यगोपां वृज्यतेअनेनेतिवृजनंबलं तस्यगोपांगोपायितारंरक्षितारं भरेषुजां भ्रियन्तएषुहवींषीतिभरायागाः तेषुप्रादुर्भवन्तं सुक्षितिंशोभननिवासस्थानं सुश्रवसंशोभनयशस्कं जयन्तंशत्रूनभिभवन्तं हेसोम ईदृग्भूतंत्वां अनुलक्ष्यमदेम हर्षयुक्ताभवेम॥ अषाळ्हं षहअभिभवे साढ्यैसाढ्वासाढेतिनिगमेइतिनिपातनात्सहिवहोरोदवर्णस्येत्योत्वाभावः सहेःसाडःसइतिषत्वम्। पप्रिं पॄपालनपूरणयोः आदृगमहनजनइतिकिन्प्रत्ययः। स्वर्षां स्वःस्वर्गंसनोतीतिस्वर्षाः षणुदाने जनसनखनेतिविट् विड्वनोरनुनासिकस्यादित्यात्वम्। अप्सां अप्शब्दोपपदात्सनोतेःपूर्ववद्विट् यद्वा प्साभक्षणे प्सातिभक्षयतीतिप्साः क्विप्चेतिक्विप् नविद्यतेप्साअस्येति बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। भरेषुजां जनीप्रादुर्भावे पूर्ववद्विट् आत्वंच। मदेम मदीहर्षे व्यत्ययेनशप्॥ २१ ॥

द्वाविंशीमृचमाह—

त्वमिमाओषधीःसोमविश्वास्त्वमपोअजनयस्त्वंगाः।
त्वमाततन्थोर्वं१न्तरिक्षंत्वंज्योतिषावितमोववर्थ ॥२२॥

त्वम्। इमाः। ओषधीः। सोम। विश्वाः। त्वम्। अपः। अजनयः। त्वम्। गाः। त्वम्। आ। ततन्थ। उरु। अन्तरिक्षम्। त्वम्। ज्योतिषा। वि। तमः। ववर्थ ॥ २२ ॥

हेसोम त्वंइमाःभूम्यांवर्तमानाविश्वाः सर्वाओषधीःअजनयः उत्पादितवानसि। तथात्वं अपः तासामोषधीनांकारणभूतानिवृष्ट्युदकानिअजनयः तथात्वं गाःसर्वान्पशूनुदपादयः उरु विस्तीर्णअन्तरिक्षं त्वंआततन्थ विस्तारितवानसि तस्मिन्नन्तरिक्षेयत्तमः अस्मद्दृष्टिनिरोधकंअन्धकारंतदपि त्वं ज्योतिषाआत्मीयेनप्रकाशेनविववर्थ विवृतंविश्लिष्टंविनष्टंकृतवानसि॥ ततन्थ तनुविस्तारे ववर्थ वृञ्वरणे उभत्रलिटस्थलि बभूथाततन्थजगृभ्मववर्थेतिनिगमेइति निपात्यते॥ २२॥

त्रयोविंशीमृचमाह—

देवेननोमनसादेवसोमरायोभागंसहसावन्नभियुध्य।
मात्वातनदीशिषेवीर्यस्योभयेभ्यःप्रचिकित्सागविष्टौ॥२३॥२३॥

देवेन। नः। मनसा। देव। सोम। रायः। भागम्। सहसाऽवन्।
अभि। युध्य। मा। त्वा। आ। तनत्। ईशिषे। वीर्यस्य।
उभयेभ्यः। प्र। चिकित्स। गोऽइष्टौ॥ २३॥ २३॥

हेदेव द्योतमान सहसावन्बलवन् सोम देवेनमनसाद्योतमानयात्वदीययाबुद्ध्या रायोभागंधनस्यांशंनोऽस्मानभिलक्ष्ययुध्यप्रेरय यद्वा नोस्माकं रायोधनस्यभागंभक्तारं अपहर्तारंशत्रुं अभियुध्यआभिमुख्येनसम्यक्प्रहर त्वा तादृशंत्वांकश्चिदपिशत्रुः माआतनत् क्लेशेनआततंमाकार्षीत् माहिंसीदित्यर्थः उभयेभ्यःउभयेषां युध्यमानानांसंबन्धिनोवीर्यस्यबलस्यत्वमीशिषे ईश्वरोभवसि सत्वंगविष्टौसंग्रामेप्रचिकित्सअस्मदीयमुपद्रवंपरिहर॥ रायः ऊडिदमितिविभक्तेरुदात्तत्वम्। भागं भजतेःकर्मणिघञ् कृत्यल्युटोबहुलमितिबहुलवचनात्कर्तरिवा कर्षात्वतइत्यन्तोदात्तत्वम्। सहसावन् सहःशब्दान्मतुपिछान्दसआकारोपजनः। युध्य युधसंप्रहारे व्यत्ययेनपरस्मैपदम्। तनत् तनुविस्तारे व्यत्ययेनशप् नमाङ्योगेइत्यडभावः। ईशिषे ईशःसेइतीडागमः। चिकित्स कितज्ञाने गुप्तिज्किद्भ्यःसन्। गविष्टौ गवांत्राणानांइष्टयःएषणानिगमनानियेष्विति बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥ २३॥

॥ इतिप्रथमस्यषष्ठेत्रयोविंशोवर्गः॥ २३॥

एताउत्याइत्यधादृशर्चंअष्टमंसूक्तम् गोतमस्यार्षं आदितश्चत्वसोजगत्यः त्रयोदश्याद्याः पङ्क्तयउष्णिहः शिष्टाअष्टौत्रिष्टुभः उषादेवता अश्विनावर्विरित्यन्त्यस्तृचोश्विदेवत्यः तथाचानुक्रा-

न्तम्—एताउत्याङ्म्नोपस्यंचतुर्जगत्यादिपळुष्णिगन्तंतृचोन्त्यआश्विनइति । सूक्तविनियोगोलैङ्गिकः प्रातरनुवाकेउषस्येक्रतौजागतेछन्दसिआश्विनशस्त्रेचएताउत्याइतिचतस्रोविनियुक्ताः सूत्रितंच—एताउत्याइतिचतस्रोजागतमिति ।

तत्रप्रथमामृचमाह—

एताउत्याउषसः केतुमक्रतपूर्वेअर्धेरजसोभानुमञ्जते ।
निष्कृण्वानाआयुधानीवधृष्णवःप्रतिगावोरुषीर्यन्तिमातरः ॥१॥

एताः । ऊम् इति । त्याः । उषसः । केतुम् । अक्रत । पूर्वे । अर्धे । रजसः । भानुम् । अञ्जते । निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यन्ति । मातरः ॥ १ ॥

उइत्येतत्पदपूरणः त्याः ताएताउषसः प्रभातकालाभिमानिन्योदेवताः केतुं अन्धकारावृतस्यसर्वस्यजगतःप्रज्ञापकं प्रकाशंअक्रत अकृषत कृतवत्यः यस्मादेवंतस्मादुषसोरजसोन्तरिक्षलोकस्यपूर्वेअर्धेप्राचीनदिग्भागे भानुंप्रकाशंअञ्जतेव्यक्तीकुर्वन्ति धृष्णवोधर्षणशीलायोद्धारः आयुधानीव यथाअसिप्रभृतीन्यायुधानिसंस्कुर्वन्ति एवंनिष्कृण्वानाः स्वभासा जगत्संस्कुर्वाणाः गावः गमनस्वभावाः अरुषीः आरोचमानाः मातरः सूर्यप्रकाशस्यनिर्मात्र्यः जगज्जनन्योवाउषसः प्रतियन्तिप्रतिदिवसंगच्छन्ति एवंविधाउषसोऽस्मान्रक्षन्त्वित्यर्थः । अत्र निरुक्तम्—एतास्ताउषसःकेतुमकृषतप्रज्ञानमेकस्याएवपूजनार्थेबहुवचनंस्यात्पूर्वेर्धेन्तरिक्षलोकस्य समञ्जतेभानुनानिष्कृण्वानाआयुधानीवधृष्णवः निरित्येषसमित्येतस्यस्थाने एमीदेषां निष्कृतंजारिणीवेत्यपिनिगमोभवति प्रतियन्तिगावोगमनादरुषीरारोचनान्मातरोभासोनिर्मात्र्यइति ॥ अक्रत करोतेर्लुङि मन्त्रेघसेतिच्लेर्लुक् । निष्कृण्वानाः कृविर्हिंसाकरणयोश्च अस्माच्ताच्छीलिकश्चानश् धिन्विकृण्व्योरचेत्युप्रत्ययः इदुदुपधस्यचाप्रत्ययस्येतिविसर्जनीयस्यषत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १ ॥

---

१ नि० १२. ७. । १ ऋ० सं० ७. ८. ३. १.

द्वितीयामृचमाह—

उदपप्तन्नरुणाभानवोवृथास्वायुजोअरुषीर्गाअयुक्षत ।
अक्रन्नुषासोवयुनानिपूर्वथारुशन्तंभानुमरुषीरशिश्रयुः ॥२॥

उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत । अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशन्तम् । भानुम् । अरुषीः । अशिश्रयुः ॥ २ ॥

अरुणाआरोचमानाभानवः औषस्योदीप्तयः वृथाअनायासेन स्वयमेवोदपप्तन् उदगमन् तदनन्तरंउषसश्च स्वायुजः सुखेनरथे आयोक्तुंशक्याः अरुषीः शुभ्रवर्णागाः पूर्वमुत्थितान्रश्मीन् ईदृशीः स्ववाहनभूताश्चतुष्पदीर्गाएववाअयुक्षत स्वरथे अयोजयन् उक्तंच—अरुण्योगावउषसामिति । एवंगोभिर्युक्तंरथमारुह्य उषसः पूर्वथापूर्वेषुअतीतेष्वहःस्विव वयुनानिसर्वेषांप्राणिनांज्ञानानिअक्रन्अकार्षुः उषःकालेजातेहिसर्वेप्राणिनोज्ञानयुक्ताभवन्ति तदनन्तरमरुषीरारोचमानास्ताउषसः रुशन्तं रुशदितिवर्णनामरोचतेर्ज्वलतिकर्मणइतियास्कः[1] । शुभ्रवर्णंभानुं सूर्यमशिश्रयुः असेवन्त तेनसहैकीभवन्तीत्यर्थः ॥ अपप्तन् पतॢगतौ लुङिलृदित्वात् च्लेरङादेशः पतःपुमितिधातोःपुमागमः । अक्रन् मन्त्रेघसेत्यादिनाच्लेर्लुक् । पूर्वथाप्रत्नपूर्वविश्वेमात्थाल्छन्दसीतीवार्थेथाल्प्रत्ययः । अशिश्रयुः श्रिञ्सेवायां बहुलंछन्दसीतिशपःश्लुः सिजभ्यस्तविदिभ्यश्चेतिझेर्जुस् जुसिचेतिगुणः ॥ २ ॥

तृतीयामृचमाह—

अर्चन्तिनारीरपसोनविष्टिभिःसमानेनयोजनेनापरावतः ।
इषंवहन्तीःसुकृतेसुदानवेविश्वेदहयजमानायसुन्वते ॥३॥

अर्चन्ति । नारीः । अपसः । न । विष्टिऽभिः । समानेन । योजनेन । आ । पराऽवतः । इषम् । वहन्तीः । सुऽकृते । सुऽदानवे । विश्वा । इत् । अह । यजमानाय । सुन्वते ॥ ३ ॥

---

१ नि० २.२०.१

नारीर्नेत्र्यउषसः विष्टिभिर्निवेशकैःस्वकीयैस्तेजोभिः समानेनयोजनेन एकेनैवोद्योगेन आपरावतः आदूरदेशात् आपश्चिमदिग्भागात् अर्चन्ति नभःप्रदेशंपूजयन्ति कृत्स्नंजगद्युगपदेवव्याप्नुवन्तीत्यर्थः तत्रदृष्टान्तः—अपसोन युद्धकर्मणोपेताःपुरुषाःयथास्वकीयैरायुधैर्धाटीमुखेनसर्वदेशंव्याप्नुवन्तितद्वत् किंकुर्वत्यः सुकृतेशोभनस्यकर्मणःकर्त्रे सुन्वते सोमाभिषवंकुर्वते सुदानवे कल्याणींदक्षिणाऋत्विग्भ्योददतेयजमानाय विश्वेदह सर्वमेव इषमन्नंवहन्तीरावहन्त्यः प्रयच्छन्त्यइत्यर्थः ॥ नारीः नृनयने ऋदोरप् नृनरयोर्वृद्धिश्चेतिशार्ङ्गरवादिपुपाठात् ङीन् जसि वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । अपसः अपस्शब्दादर्शआदिभ्योजित्यच् सुपांसुलुगितिजसःसुः व्यत्ययेनप्रत्ययात्पूर्वस्योदात्तत्वम् । विष्टिभिः विशप्रवेशने विशन्तिप्रविशन्तीतिविष्टयःकिरणाः क्तिच्क्तौचसंज्ञायामितिक्तिच् । विश्वा सुपांसुलुगितिअमोडादेशः ॥३॥

चतुर्थीमृचमाह—

अधिपेशांसिवपतेनृतूरिवापोर्णुतेवक्षउस्रेवबर्जहम् ।
ज्योतिर्विश्वस्मैभुवनायकृण्वतीगावोनव्रजंव्यु१षाआवर्तमः ॥४॥

अधि । पेशांसि । वपते । नृतूःऽइव । अप । ऊर्णुते । वक्षः ।
उस्राऽइव । बर्जहम् । ज्योतिः । विश्वस्मै । भुवनाय । कृण्वती ।
गावः । न । व्रजम् । वि । उषाः । आवरित्यावः । तमः ॥ ४ ॥

उषाःपेशांसि जगत्याश्लिष्टानिकृष्णवर्णानितमांसिअधिआधिक्येनवपतेछिनत्ति तत्रदृष्टान्तः—नृतूरिव नृंस्तूर्वतिकेशोनरिक्तीकरोतीतिनृतूर्नापितः सयथाकेशान्निःशेषेणछिनत्ति एवमुषा अप्यन्धकारंसमूलंहिनस्तीत्यर्थः यद्वा नृतूरिव नृत्यन्तीयोषिदिव पेशांसिरूपनामैतत् सर्वैर्दर्शनीयानिरूपाणिउषाअधिवपते स्वात्मनिअधिकंधारयति एवंप्रथमतोऽन्धकारंस्वकिरणैर्निरस्य वक्षः स्वकीयमुरःप्रदेशंअपोर्णुतेतमसाअनाच्छादितंकरोति स्वयमाविर्भवतीत्यर्थः बर्जहं पयसउत्पत्तिस्थानंदोहनसमयेउस्रेव उस्रागौर्यथाआविष्करोतितद्वत् किंकुर्वती गावोनव्रजं यथागावःस्वकीयंगोष्ठंस्वयमेवशीघ्रंव्याप्नुवन्ति एवंस्वयमेवप्राचींदिशंप्राप्य विश्वस्मैभुवनायसर्वलोकायज्योतिष्कृण्वतीप्रकाशंकुर्वती एवमुक्तेनप्रकारेणउषास्तमोन्धकारंव्यावः विवृतमपश्लिष्टमकरोत् ॥ नृतूरिव तुर्वीहिंसार्थः क्विप्चेतिक्विप् राल्लोपइतिवलोपः र्वोरुपधायाइतिदीर्घत्वम् यद्वा नृतीगात्रविनामे नृतिगृध्योःकूरिनिकूप्रत्ययः । बर्जहं वृजुसंभक्तौ वृणीतेसंभजतेगामितिवृजःपयः

विच्-तन्महातीतिवर्जहः ओहाकृत्यागे स्वशूपकरणे वातशुनीतिलशर्धेष्वजघेट्तुदजहातिभ्यउपसंख्यानमित्यशर्धेशब्दोपपदादपिकृत्यल्युटोबहुलमितिबहुलवचनात्खश् तस्यसार्वधातुकत्वेनकर्तरिशपि जुहोत्यादित्वाच्छ्लुः द्विर्वचनादि ववयोरभेदइतिबत्वम्-दिवोदासादित्वात्पूर्वपदाद्युदात्तत्वम्। आवः वृञ्वरणे लुङि मन्त्रेघसेतिच्लेर्लुक् गुणे हल्ङ्याब्भ्यइतितिलोपः छन्दस्यपिदृश्यतइत्याडागमः ॥ ४ ॥

प्रातरनुवाकस्योपस्येकतौप्रत्यर्चिरित्यष्टावनुवक्तव्याःआश्विनशस्त्रेच तथाचसूत्रितम्-प्रत्यर्चिरित्यष्टौ व्युपाआवोदिविजाइतिपळिति त्रैष्टुभमिति।

अष्टसुप्रथमांसूक्तेपञ्चमीमृचमाह—

प्रत्य॒र्चीरु॒शद॑स्या अदर्शि॒ वि ति॑ष्ठते॒ बाध॑ते कृ॒ष्णमभ्व॑म्।
स्वरुं॒ न पेशो॑ वि॒दथे॑ष्व॒ञ्जञ्चि॒त्रं दि॒वो दु॑हि॒ता भा॒नुम॑श्रेत् ॥५॥२४॥

प्रति॑। अ॒र्चिः। रु॒शत्। अ॒स्याः। अ॒द॒र्शि॒। वि। ति॒ष्ठ॒ते॒। बाध॑ते। कृ॒ष्णम्। अभ्व॑म्। स्वरु॑म्। न। पेशः॑। वि॒दथे॑षु। अ॒ञ्जन्। चि॒त्रम्। दि॒वः। दु॒हि॒ता। भा॒नुम्। अ॒श्रे॒त् ॥ ५ ॥ २४ ॥

अस्याउषसः रुशत् दीप्यमानंअर्चिः तेजः प्रत्यदर्शि सर्वैःपूर्वस्यांदिशिप्रथमतोदृश्यते वितिष्ठतेसर्वासुदिक्षुविविधमवतिष्ठते व्याप्नोतीत्यर्थः सर्वादिशोव्याप्यच अभ्वं महत्नामैतत् अतिशयेनविपुलंकृष्णं कृष्णवर्णमन्धकारं बाधते अपसारयति विदथेषु यज्ञेषु स्वरुंन स्वरुनाम्नाशकलेनयुक्तंयूपंयथाआज्येनअध्वर्यवःअञ्जनअञ्जन्ति तद्वत्भासिस्वकीयंपेशःरूपंउषाअनक्ति संश्लिष्टंकरोति तदनन्तरंचित्रं चायनीयं भानुंसूर्यं दिवोदुहिता द्युलोकादुत्पन्नाउषाअश्रेत् असेवत ॥ वितिष्ठते समवप्रविभ्यइत्यात्मनेपदम्। अश्रेत् श्रिञ्सेवायां लुङि बहुलंछन्दसीतिशपोलुक् ॥ ५ ॥

॥ इतिप्रथमस्यषष्ठेचतुर्विंशोवर्गः ॥ २४ ॥

षष्ठीमृचमाह—

अता॑रिष्म॒ तम॑सस्पा॒रम॒स्योषा उ॒च्छन्ती॑ व॒युना॑ कृणोति।
श्रि॒ये छन्दो॒ न स्म॑यते विभा॒ती सु॒प्रती॑का सौमन॒साया॑जीगः ॥६॥

अतारिष्म । तमसः । पारम् । अस्य । उषाः । उच्छन्ती । वयुना । कृणोति । श्रिये । छन्दः । न । स्मयते । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति ॥ ६ ॥

अस्यनैशस्यतमसोन्धकारस्यपारंसमाप्तिमदेशं अतारिष्म उत्तीर्णाअभूम अनन्तरं उच्छन्तीनैशंतमोवर्जयन्ती उषाः वयुनावयुनानि सर्वेषांप्राणिनांज्ञानानि कृणोति निर्मिमीते श्रिये संपदर्थंछन्दोनस्मयते यथाउपच्छन्दयिता वशीकरणेसमर्थःपुरुषः आढ्यसमीपंप्राप्य तत्प्रीत्यर्थं स्मयते हसति एवंविभातीविशिष्टप्रकाशंकुर्वन्तीउषाः स्वकीययानिर्मलदीप्त्याहसन्तीवदृश्यते एवंसुप्रतीकाविशिष्टप्रकाशरूपत्वेनशोभमानासती सौमनसायसर्वेषांसौमनस्यायअजीगः अन्धकारंभक्षितवती ॥ अतारिष्म तॄप्लवनतरणयोः लुङिसिचिवृद्धिः । तमसः पष्ठ्याःपतिपुत्रेति विसर्जनीयस्यसंहितायांसत्वम् । स्मयते ष्मिङ्ईषद्धसने भौवादिकः । अजीगः गॄनिगरणे लङि बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासत्वेत्वम् तुजादीत्यादिनादीर्घः ॥ ६ ॥

सप्तमीमृचमाह—

भास्वतीनेत्रीसूनृतानांदिवस्स्तवेदुहितागोतमेभिः ।
प्रजावतोनृवतोअश्वबुध्यानुषोगोअग्राँउपमासिवाजान् ॥७॥

भास्वती । नेत्री । सूनृतानाम् । दिवः । स्तवे । दुहिता । गोतमेभिः । प्रजाऽवतः । नृऽवतः । अश्वऽबुध्यान् । उषः । गोऽअग्रान् । उप । मासि । वाजान् ॥ ७ ॥

भास्वती तेजस्विनी सूनृतेतिवाङ्नाम सूनृतानांप्रियसत्यात्मिकानां नेत्रीप्रणेत्रीकारयित्री उषसिहिजातायांमनुष्यप्रमुखाःप्राणिनः स्वस्वव्यापारायइतस्ततःशब्दंकुर्वन्ति एवंभूतादिवोदुहिता द्युलोकात्सकाशादुत्पन्नाउषाः गोतमेभिर्ऋषिभिरस्माभिः स्तवेस्तूयते हेउषः अस्माभिःस्तुतात्वं वाजान् अन्नानिउपमासि प्रयच्छ कीदृशान्वाजान्प्रजावतः प्रजाभिःपुत्रपौत्रादिभिर्युक्तान् नृवतः दासलक्षणैर्नृभिरुपेतानअश्वबुध्यान् अश्वाबुध्याविद्यमानत्वेनबोद्धव्यायेषुवाजेषुतान् यद्वा अश्वबुधान् वर्णव्यापत्त्यायकारः अश्वमूलान् अश्वैर्हिराजानोधनान्यन्नानिचलभन्ते अतोन्नानांतन्मूलत्वम् गोअग्रान् गावःअग्रेप्रमुखेयेषांतादृशान् ॥ भास्वती भादीप्तौ असुन् ततोमतुप् मादुपधाया-

इतिमतुपोवत्वं उगितश्चेतिङीप्। नेत्री ऋन्नेभ्योङीप् उदात्तयणोहल्पूर्वादितिङीपउदात्तत्वम्। स्तवे ष्टुञ्स्तुतौ कर्मणिलिङि बहुलंछन्दसीतिबहुलग्रहणाद्यकोपिलुक् लोपस्तआत्मनेपदेष्वितितलोपः छन्दस्युभयथेत्येकारस्यार्धधातुकत्वेनङित्त्वाभावाद्गुणावादेशौ। नृवतः व्यत्ययेनमतोर्वत्वं ह्रस्व-नुड्भ्यांमतुब्वितिमतुपउदात्तत्वम्। भासि भामाने आदादिकः ॥७॥

अष्टमीमृचमाह—

उप॒स्तम॑श्यांय॒शसं॑सु॒वीरं॑दा॒सप्र॑वर्गंर॒यिमश्व॑बुध्यम्।
सु॒दंस॑सा॒श्रव॑सा॒याविभासि॒वाज॑प्रसूतासुभगेबृ॒हन्त॑म्॥ ८ ॥

उषः॑। तम्। अ॒श्या॒म्। य॒शस॑म्। सु॒ऽवीर॑म्। दा॒सऽप्र॑वर्गम्। र॒यिम्। अश्व॑ऽबुध्यम्। सु॒ऽदंस॑सा। श्रव॑सा। या। वि॒ऽभासि॑। वाज॑ऽप्रसूता। सु॒ऽभ॒गे॒। बृ॒हन्त॑म्॥ ८ ॥

हेउषः उषोदेवते तंरयिंधनमश्यांप्राप्नुयाम् कीदृशं यशसं यशसाकीर्त्यायुक्तं सर्वैःप्रशस्यमित्यर्थः सुवीरंशोभनैर्वीरैःपुत्रादिभिर्युक्तं दासप्रवर्गं प्रकृष्टोवर्गःसंघःप्रवर्गः दासानांकर्मकराणांप्रवर्गोयस्मिन्तस्मिन् तं अनेकैर्भृत्यैरुपेतमित्यर्थः अश्वबुध्यं अश्वाबुध्याबोद्धव्यायेनधनेनतादृशं हेसुभगेशोभनधनेउषः सुदंससाशोभनेनकर्मणायुक्तेन श्रवसाश्रवणीयेनस्तोत्रेण प्रीतात्वंवाजप्रसूता अस्मभ्यंदत्तान्नासती बृहन्तंप्रौढं या यां रयिं विभासि विशेषेणप्रकाशयसि तमश्यामितिपूर्वेणसंबन्धः॥ अश्यां अशूव्याप्तौ व्यत्ययेनपरस्मैपदं बहुलंछन्दसीतिविकरणस्यलुक्। यशसं अर्शआदित्वान्मत्वर्थीयोच् व्यत्ययेनप्रत्ययात्पूर्वस्योदात्तत्वम्। दासप्रवर्गं दासयत्युपक्षयतिशत्रूनिति दासोभृत्यः दसुउपक्षये अस्माण्ण्यन्तात्पचाद्यच् चित्त्वादन्तोदात्तत्वं तदेवबहुव्रीहिस्वरेणशिष्यते। सुदंससा सोर्मनसीअलोमोषसीइतिबहुव्रीहावुत्तरपदाद्युदात्तत्वम्। या सुपांसुलुगितिअमोडादेशः॥ ८ ॥

नवमीमृचमाह—

विश्वा॑निदे॒वीभुव॑नाभि॒चक्ष्या॑प्रती॒चीचक्षु॑रुर्वि॒याविभा॑ति।
विश्वं॒जी॒वंच॒रसे॑बो॒धय॑न्ती॒विश्व॑स्य॒वाच॑मविदन्मना॒योः॥ ९ ॥

विश्वानि । देवी । भुवना । अभिऽचक्ष्य । प्रतीची । चक्षुः । उर्विया ।
वि । भाति । विश्वम् । जीवम् । । चरसे । बोधयन्ती । विश्वस्य ।
वाचम् । अविदत् । मनायोः ॥ ९ ॥

देवीद्योतमानोषाः विश्वाविश्वानिसर्वाणिभुवनानि भूतजातानि अभिचक्ष्य अभिप्रकाश्य प्रकाशवन्तिकृत्वा अनन्तरंप्रतीचीप्रत्यङ्मुखीसती चक्षुःप्रकाशकेनतेजसाउर्वियाउर्वीविस्तीर्णासतीविभातिप्रकाशते अपिच विश्वंजीवंसर्वंप्राणिजातंचरसेचरणायस्वस्वव्यापारेषुप्रवर्तनायबोधयन्ती निद्रातःसकाशादुद्बोधयन्तीउषाः विश्वस्यसर्वस्यमनायोः मनसायुक्तस्यवाग्व्यवहारसमर्थस्यप्राणिजातस्ययावागस्तितांवाचमविदत्अलभत अतएवोषसः सूनृतावतीतिसंज्ञोपपन्नाभवति ॥ अभिचक्ष्य चक्षिङ्व्यक्तायांवाचि अयंप्रकाशनार्थोऽपि समासेनञ्पूर्वेइतिक्त्वाप्रत्ययस्यल्यबादेशः । प्रतीची प्रतिपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपेचावितिदीर्घत्वम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् । उर्विया उर्वीशब्दादुत्तरस्यसोः इयाडियाजीकाराणांचोपसंख्यानमितिडियाजादेशः आदेशसामर्थ्यात्तस्य लोपोनभवति । मनायोः मनआत्मनइच्छतिमनस्यति सुपआत्मनःक्यच् क्याच्छन्दसीत्युः वर्णव्यापत्त्यासकारेआकारः यद्वा कर्तुःक्यङ्सलोपश्चेतिक्यङ्सकारलोपश्च अकृत्सार्वधातुकयोरितिदीर्घः ॥ ९ ॥

दशमीमृचमाह—

पुनःपुनर्जायमानापुराणीसमानंवर्णमभिशुम्भमाना ।
श्वघ्नीवकृत्नुर्विजआमिनानामर्तस्यदेवीजरयन्त्यायुः ॥१०॥२५॥

पुनःऽपुनः । । जायमाना । पुराणी । समानम् । वर्णम् । अभि ।
शुम्भमाना । श्वघ्नीऽइव । कृत्नुः । विजः । आऽमिनाना । मर्तस्य ।
देवी । जरयन्ती । आयुः ॥ १० ॥२५॥

पुनःपुनर्जायमाना प्रतिदिवसंप्रादुर्भवन्ती पुराणीचिरन्तनीनित्येत्यर्थः यस्मात्समानंवर्णं एकमेवरूपं अभिप्राप्यशुंभमानाशोभमाना भिन्नेष्वपिदिवसेषुअस्याएकरूपेणावस्थानान्नित्यत्वमित्यर्थः एवंगुणविशिष्टादेवी देवनशीलोषाः मर्तस्यमर्त्यस्य मरणधर्मणःसर्व-

स्यमाणिजातस्यायुर्जीवनंजरयन्तीऊनयन्तीवर्तते वह्वीपूषःस्वतीतासुहिसर्वेषामायुर्हीयते उपाश्च पुनःपुनर्जायमानेत्युक्तं अतः सैवायुर्जरयति तत्रदृष्टान्तः—कृत्नुः कर्तनशीलाश्वघ्नीव व्याधस्त्रीव सायथाविजश्चलतःपक्षिणः आमिनाना पक्षादिच्छेदनेनाहिंसन्ती तेषामायुर्जरयति तद्वत् ॥ पुराणी पुरेत्यस्मादव्ययात्सायंचिरंप्राह्णेइत्यादिनाभवार्थेट्युप्रत्ययः पुराणप्रोक्तेषुब्राह्मणकल्पेष्विति निपातनात्तुडभावः योरनादेशः टिड्ढाणञित्यादिनाङीप् व्यत्ययेनान्तोदात्तत्वम् । शुंभमाना शुंभदीप्तौ शपःपित्त्वादनुदात्तत्वम् शानचोलसार्वधातुकस्वरेणधातुस्वरःशिष्यते । श्वघ्नी शुनाघ्नन्हन्तवान्श्वहा बहुलंछन्दसीतिवचनाद्भूतादिव्यतिरिक्तेऽप्युपपदेहन्तेःक्विप् ऋन्नेभ्योङीबितिङीप् अल्लोपोनइत्यकारलोपः होहन्तेरितिघत्वम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् । कृत्नुः कृतीछेदने औणादिकःक्नुप्रत्ययः । विजः ओविजीभयचलनयोः विजन्तिचलन्तीतिविजःपक्षिणः । आमिनाना मीञ्हिंसायां क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् शानचश्चित्त्वादन्तोदात्तत्वम् ॥१०॥

॥ इतिप्रथमस्यषष्ठेपञ्चविंशोवर्गः ॥ २५ ॥

एकादशीमृचमाह—

व्यूर्ण्वतीदिवोअन्ताँअबोध्यपस्वसारंसनुतर्युयोति ।
प्रमिनतीमनुष्यायुगानियोषाजारस्यचक्षसाविभाति ॥११॥

विऽऊर्ण्वती । दिवः । अन्तान् । अबोधि । अप । स्वसारम् । सनुतः । युयोति । प्रऽमिनती । मनुष्या । युगानि । योषा । जारस्य । चक्षसा । वि । भाति ॥११॥

दिवोनभसोऽन्तान्प्रान्तान्व्यूर्ण्वतीविवृतान् तमसावियुक्तान्कुर्वतीउषाः अबोधिसर्वैःप्राणिभिरज्ञायिज्ञाताभूत् तदनन्तरंस्वसारंस्वसःप्रादुर्भविष्यति स्वयमेवसरन्तींनिशांसनुतः अन्तर्हितनामैतत् अन्तर्हितप्रदेशेअपयुयोति अपगमय्यपृथक्करोति मनुष्यामनुष्याणांसंबन्धीनियुगानिकृतत्रेतादीनि प्रमिनती स्वगमनागमनाभ्यांप्रकर्षेणाहिंसन्ती जारस्यरात्रेर्जरयितुःसूर्यस्ययोषाजाया उषाः चक्षसाआत्मीयेनप्रकाशेनविभाति विशेषेणप्रकाशते ॥ व्यूर्ण्वती ऊर्णुञ्आच्छादने विपूर्वाद्स्माल्लटःशतृ उगितश्चेतिङीप् शतुरनुमइतिनद्याउदात्तत्वम् । सनुतः एतदन्तोदात्तत्वंस्वरादिपुनिपातितम् अतोव्ययसंज्ञायां अव्ययादाप्सुपइतिसुपोलुक् । युयोति युमिश्रणामिश्रणयोः बहुलंछन्दसीतिशपःश्लुः । मनुष्या सुपांसुलुगितिषष्ठ्याडादेशः । युगानि युजेःकरणेकर्मणिवा

घञ् चजोःकुघिण्ण्यतोरितिकुत्वम् उञ्छादिषु कालविशेषेरथाद्युपकरणेचयुगशब्दपाठाल्लघूपधगुणाभावःउञ्छादीनांचेत्यन्तोदात्तत्वम्।जारस्य दारजारौकर्तरिणिलुक्चेतिघञन्तोनिपात्यते॥११॥

द्वादशीमृचमाह—

पशून्नचित्रासुभगाप्रथानासिन्धुर्नक्षोदंउर्विया व्यश्वैत् ।
अमिनतीदैव्यानिव्रतानिसूर्यस्यचेतिरश्मिभिर्दृशाना ॥१२॥

पशून् । न । चित्रा । सुऽभगा । प्रथाना । सिन्धुः । न । क्षोदः । उर्विया । वि । अश्वैत् । अमिनती । दैव्यानि । व्रतानि । सूर्यस्य । चेति । रश्मिऽभिः । दृशाना ॥१२॥

सुभगाशोभनधनाचित्राचायनीयापूजनीयोषाः पशून्न यथापशून्गोपालकोरण्येविस्तारयति तथाप्रथानातेजांसिविस्तारयन्ती उर्विया उर्वीमहतीएवंभूतासाव्यश्वैत् सर्वंजगद्व्याप्नोत् तत्रदृष्टान्तः—सिन्धुर्नक्षोदः यथास्यन्दनशीलमुदकं निम्नदेशेअचिरादेवव्याप्नोति तद्वत् सैवोषाः सूर्यस्यरश्मिभिःकिरणैःसहदृशाना दृश्यमानासती चेति प्रज्ञातासीत् किंकुर्वती दैव्यानिदेवसंबन्धीनि व्रतानिदर्शपूर्णमासादीनिकर्माणि अमिनती अहिंसती अनुष्ठानेयजमानान्प्रवर्तयन्तीत्यर्थः उषसः प्रादुर्भावानन्तरंहिअग्निहोत्रादीनिसर्वाणिकर्माण्यनुष्ठीयन्तेनरात्रौ नसायमस्तिदेवयाअजुष्टमितिश्रुतेः[1]॥ प्रथाना प्रथप्रख्याने अस्मादन्तर्भावितण्यर्थाच्छीलिकथानश् बहुलंछन्दसीतिशपोलुक् । सिन्धुः स्यन्दूप्रस्रवणे स्यन्देःसंप्रसारणंधश्चेत्युप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम् । अश्वैत् टुओश्विगतिवृद्ध्योः लुङि अङ्चङोर्वैकल्पिकत्वात् च्लेःसिच् आगमानुशासनस्यानित्यत्वादिडभावः सिचिवृद्धिः अनिडादित्वात् ह्म्यन्तक्षणेतिवृद्धिप्रतिषेधाभावः बहुलंछन्दसीतीडागमाभावः स्कोःसंयोगाद्योरितिसलोपः । चेति चितीसंज्ञाने कर्मणिलुङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । दृशाना दृशेःकर्मणिलटःशानच् बहुलंछन्दसीतिविकरणस्यलुक् ॥ १२ ॥

प्रातरनुवाकस्योपस्येक्रतौ औष्णिहेछन्दसि उपस्तचित्रमितितिस्रोविनियुक्ताः आश्विनशस्त्रेच अथोपस्यइतिखण्डेसूत्रितम्—उपस्तचित्रमाभरेतितिस्रऔष्णिहइति ।

[1] ऋ० सं० ४.४.१८.

तत्रप्रथमांसूक्तेत्रयोदशीमृचमाह—

उपस्तच्चित्रमाभरास्मभ्यंवाजिनीवति । येनतोकंचतनयंचधामहे ॥१३

उपः । तत् । चित्रम् । आ । भर । अस्मभ्यम् । वाजिनीऽवति ।
येन । तोकम् । च । तनयम् । च । धामहे ॥ १३ ॥

हेवाजिनीवति वाजोहविर्लक्षणमन्नं तद्युक्ताक्रियावाजिनी तयाक्रिययायुक्ते उपःउपोदेवते अस्मभ्यं चित्रंचायनीयं तद्धनंआभर आहर प्रयच्छ येनधनेनतोकंपुत्रंचतनयं तत्पुत्रंच धामहे दध्महे धारयामः अत्रनिरुक्तम्—उपस्तच्चित्रंचायनीयंधनमाहरास्मभ्यमन्नवतियेनपुत्रांश्चपौत्रांश्चदधीमहीति[1] ॥ धामहे दधातेर्लटि बहुलंछन्दसीतिशपोलुक् व्यत्ययेनाद्युदात्तत्वम् यद्वा लोटि आडुत्तमस्यपिच्चेत्याडागमः प्रत्ययस्यपिद्वद्भावश्च अतःप्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते अस्मिन्पक्षे एतऐ इतिऐत्वाभावोव्यत्ययेनद्रष्टव्यः यद्वृत्तयोगादनिघातः ॥ १३ ॥

चतुर्दशीमृचमाह—

उपोअद्येहगोमत्यश्वावतिविभावरि । रेवदस्मेव्युच्छसूनृतावति ॥१४॥

उपः । अद्य । इह । गोऽमति । अश्वऽवति । विभाऽवरि ।
रेवत् । अस्मे इति । वि । उच्छ । सूनृताऽवति ॥ १४ ॥

हेगोमतिअस्मभ्यंदातव्यैर्गोभिर्युक्ते तथा अश्वावति अश्वैर्युक्ते विभावरिविशिष्टप्रकाशोपेते सूनृतावति प्रियसत्यात्मिकावाक्सूनृता तादृश्यावाचायुक्ते एवंभूतेहेउपःउपोदेवते अद्य इदानींप्रभातसमये इहास्मिन्देशे अस्मे अस्माकंरेवद्धनयुक्तंकर्मयथाभवतितथाव्युच्छ नैशंतमोनिवारय ॥ अश्वावति मन्त्रेसोमाश्वेन्द्रियेतिमतौदीर्घत्वं पादादित्वाद्यामन्त्रितस्याष्टमिकनिघाताभावः । रेवत् रयेर्मतौबहुलमितिसंप्रसारणं छन्दसीरइतिमतुपोवत्वं रेशब्दाच्चमतुपउदात्तत्वंवक्तव्यमितिमतुपउदात्तत्वम्। उच्छ उच्छीविवासे विवासोवर्जनम्॥ १४ ॥

---

1 नि० १२. ६. ।

पञ्चदशीमृचमाह—

युक्ष्वाहिवाजिनीवत्यश्वाँअद्यारुणाँउषः ।
अथानोविश्वासौभगान्यावह॥१५॥२६॥

युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् ।
उषः । अर्थ । नः । विश्वा । सौभगानि । आ । वह ॥ १५ ॥ २६ ॥

हेवाजिनीवति हविर्लक्षणान्नवति उषः उषोदेवते अरुणान् अरुणवर्णानश्वान् अश्वस्थानीयान्गोविशेषान् अद्यास्मिन्कालेयुक्ष्वाहियोजयैव हिर्निर्धारणे अथानन्तरंरथमारुह्य विश्वासर्वाणिसौभगानिसौभाग्यानिनोऽस्मभ्यमावह आनय ॥ अश्वान् दीर्घादटिसमानपादेइतिसंहितायांनकारस्यरुत्वम् आतोटिनित्यमितिसानुनासिकआकारः । सौभगानि सुभगान्मन्त्रे इत्युद्गात्रादिषुपाटाद्भावकर्मणोरर्थयोः प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योञित्यञ् प्रत्ययः हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेत्युभयपदवृद्धौप्राप्तायां सर्वविधीनांछन्दसिविकल्पितत्वादत्रोत्तरपदवृद्धिर्नभवतीत्युक्तम् ॥ १५ ॥

॥ इतिप्रथमस्यपष्ठेपड्विंशोवर्गः ॥२६॥

प्रातरनुवाकस्याश्विनेक्रतौऔष्णिहेछन्दसि अश्विनावर्तिरित्यर्यंतृचः आश्विनशस्त्रेच तथाचसूत्रितम्—अश्विनावर्तिरस्मदा अश्विनावेहगच्छतमितितृचाविति ।

तृचेप्रथमासूक्तेषोडशीमृचमाह—

अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ।
अर्वाग्रथंसमनसानियच्छतम् ॥१६॥

अश्विना । वर्तिः । अस्मत् । आ । गोऽमत् । दस्रा । हिरण्यऽवत् ।
अर्वाक् । रथम् । सऽमनसा । नि । यच्छतम् ॥१६॥

उषःसाहचर्याद्द्युस्थानावश्विनावित्यादिकेनतृचेनस्तूयेते हेअश्विना अश्ववन्तौ व्यापनशीलौवादेवौ दस्राशत्रूणामुपक्षपयितारौ अस्मदस्माकंवर्तिः वर्तनहेतुभूतंगृहं आसमन्ताद्गोमत् बहुभिर्गोभिर्युक्तम् हिरण्यवत् हितरमणीयधनयुक्तंचयथाभवति तथासमनसासमानमन-

स्कौसन्तौ युवांयुष्मदीयंरथंअर्वाक् अर्वाचीनमस्मदीयगृहमभिमुखंनियच्छतं आवर्तयतम् ॥ अश्विना सुपांसुलुगित्याकारः । वर्तिः वर्ततेस्मिन्निति वर्तिर्गृहं औणादिकइसिप्रत्ययः । अस्म-व सुपांसुलुगितिषष्ठ्यालुक् । समनसा समानंमनोययोस्तौ समानस्यच्छन्दसीतिसभावः ॥१६॥

सप्तदशीमृचमाह—

यावित्थाश्लोकमादिवोज्योतिर्जनायचक्रथुः ।
आनऊर्जंवहतमश्विनायुवम् ॥१७॥

यौ । इत्था । श्लोकम् । आ । दिवः । ज्योतिः । जनाय । चक्रथुः ।
आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् ॥ १७ ॥

हेअश्विनौ यौयुवां दिवोद्युलोकात्श्लोकं उपश्लोकनीयंप्रशंसनीयंज्योतिस्तेजः इत्थाइ-त्थंभूतमस्माभिरनुभूयमानेनप्रकारेणचक्रथुः कृतवन्तौ केषांचिन्मतेन सूर्याचन्द्रमसौअश्वि-नावुच्येते तदुक्तंयास्केन—तत्कावश्विनौद्यावापृथिव्यावित्येकेहोरात्रावित्येकेसूर्याचन्द्रमसावि-त्येकइति । तथाचप्रकाशकत्वंतयोरुपपन्नं तौयुवंयुवांनोऽस्मभ्यं ऊर्जंबलप्रदमन्नं आवह-तं आनयतम् प्रयच्छतम् ॥ श्लोकं श्लोकृसंघाते अयंस्तुत्यर्थोऽपि कर्मणिघञ् ञित्त्वादा-द्युदात्तत्वम् ॥ १७॥

अष्टादशीमृचमाह—

एहदेवामयोभुवादस्राहिरण्यवर्तनी ।
उषर्बुधोवहन्तुसोमपीतये ॥१८॥२७॥

आ । इह । देवा । मयःऽभुवा । दस्रा । हिरण्यवर्तनी इति
हिरण्यऽवर्तनी । उषःऽबुधः । वहन्तु । सोमऽपीतये ॥ १८ ॥२७ ॥

उषर्बुधः उषसिप्रबुद्धाअश्वाःइह अस्मिन्यागेसोमपीतयेसोमपानायदस्राशत्रूणामुपक्षयि-तारौअश्विनौआवहन्तुआनयन्तु कीदृशौ देवा देवनशीलौदानादिगुणयुक्तौवा मयोभुवा मयसः आरोग्यप्रदस्यसुखस्यभावयितारौ अश्विनौवैदेवानांभिषजावितिश्रुतेः । हिरण्यवर्तनी वर्ति-

१ नि० १२. १. ।     २ ऐ० ब्रा० १. १८. ।

नेनेतिव्युत्पत्त्यावर्तनिशब्देनरथउच्यते सुवर्णमयोवर्तनिर्ययोस्तौ ॥ देवेत्यादिपुत्रिषु सुपांसुलुगित्याकारः । सोमपीतये पापाने भावेक्तिनिघुमास्थेत्येतीत्वम् । सोमपीतये सोमस्यपीतिःसोमपीतिः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥ १८ ॥

॥ इतिप्रथमस्यषष्ठेसप्तविंशोवर्गः ॥ २७ ॥

अग्नीषोमाविमिति द्वादशर्चनवमंसूक्तम् गोतमस्यार्षं आदितस्तिस्रोऽनुष्टुभः नवम्याद्यास्तिस्रोगायत्र्यः अष्टमीजगतीत्रिष्टुब्वा शिष्टाःपञ्चत्रिष्टुभः अग्नीषोमौदेवता तथाचानुक्रान्तम्—अग्नीषोमौद्वादशाग्नीषोमीयमाद्यास्तिस्रोऽनुष्टुभउपान्त्यास्तिस्रोगायत्र्योऽष्टमीजगतीवेति । अग्नीषोमीयस्यपशोर्वपापुरोडाशहविषांआदितस्तिस्रऋचःक्रमेणानुवाक्याः सूत्रितंच—अग्नीषोमाविमंसुमेयुवमेतानिदिविरोचनानीतितृचाविति ।

तत्रप्रथमामृचमाह—

**अग्नीषोमाविमंसुमेंशृणुतंवृषणाहवंम् ।**
**प्रतिंसूक्तानिंहर्यतंभवंतंदाशुषेमयः ॥१॥**

**अग्नीषोमौ । इमम्सु । मे । शृणुतम् । वृषणा । हवंम् । प्रतिं ।**
**सुऽउक्तानिं । हर्यतम् । भवंतम् । दाशुषें । मयंः ॥ १ ॥**

वृषणावृषणौकामानांवर्षितारौ हेअग्नीषोमौ इमंइदानींप्रयुज्यमानं मेमदीयंहवंआह्वानंसुशृणुतंसम्यगवगच्छतं सूक्तानिशोभनानिस्तुतिलक्षणानि अस्माभिःकृतानिवचांसिप्रतिहर्यतंप्रत्येकंकामयेथां तदनन्तरंदाशुषेचरुपुरोडाशादीनिदत्तवतेयजमानाय मयः मयसःसुखस्यदातारौ भवतम् ॥ अग्नीषोमौ अग्निश्चसोमश्च द्वन्द्वे ईदग्नेःसोमवरुणयोरितीत्वं अग्नेःस्तुत्स्तोमसोमाइतिषत्वम् देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरेप्राप्ते आमन्त्रितस्यचेत्याद्युदात्तत्वम् । वृषणा सुपांसुलुगित्याकारः वाषपूर्वस्येतिविकल्पनादुपधायादीर्घाभावः । हवं भावेनुपसर्गस्येतिह्वयतेःसंप्रसारणं च । सूक्तानि सुपूर्वाद्वक्तेःकर्मणिनिष्ठा सूपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम् । हर्यतं हर्यगतिकान्त्योः भौवादिकः ॥ १ ॥

यदापौर्णमास्यामग्नीषोमावुपांशुयाजस्यदेवता तदानींअग्नीषोमायोअद्येतितस्यानुवाक्या सूत्रितंचउक्तादेवताइतिखण्डे—अग्नीषोमायोअद्यवामान्यंदिवोमातरिश्वाजभारेति ।

तामेवांद्वितीयामृचमाह—

अग्नींषोमा॒यो अ॒द्य वा॑मि॒दं वचः॑ सप॒र्यति॑ ।
तस्मै॑ धत्तं सु॒वीर्यं॒ गवां॒ पोषं॒ स्वश्व्य॑म् ॥२॥

अग्नीषोमा । यः । अ॒द्य । वा॒म् । इ॒दम् । वचः॑ । स॒पर्यति॑ । तस्मै॑ ।
ध॒त्त॒म् । सु॒ऽवीर्य॑म् । गवा॑म् । पोष॑म् । सु॒ऽअ॒श्व्य॑म् ॥ २ ॥

हेअग्नीषोमौ योयजमानःअद्यास्मिन्कर्मणिवांयुवाभ्यां युष्मदर्थंइदंस्तुतिलक्षणंवचोवाक्यं सपर्यति पूजितंकरोति तस्मैयजमानायगवांपशूनांपोषंअभिवृद्धिंधत्तंप्रयच्छतं कीदृशंपोषं सुवीर्यं शोभनेनवीर्येणसामर्थ्येनोपेतं स्वश्व्यंशोभनैरश्वैर्युक्तम् ॥ गवां सावेकाचइतिमाभूस्यविभक्त्यु-दात्तत्वस्य नगोश्वन्सावर्णेतिप्रतिषेधः ॥ २ ॥

तृतीयामृचमाह—

अग्नीषोमा॒य आहु॑तिं॒ यो वां॒ दाशा॑द्ध॒विष्कृ॑तिम् ।
स प्र॒जया॑ सु॒वीर्यं॒ विश्व॒मायु॒र्व्य॑श्नवत् ॥३॥

अग्नीषोमा । यः । आऽहु॑तिम् । यः । वा॒म् । दाशा॑त् । ह॒विःऽकृ॑तिम् ।
सः । प्र॒ऽजया॑ । सु॒ऽवीर्य॑म् । विश्व॑म् । आयुः॑ । वि । अ॒श्न॒व॒त् ॥ ३ ॥

हेअग्नीषोमौ योयजमानः आहुतिंआज्याहुतिंवांयुवाभ्यांदाशावद्द्यात् अथवा हविष्कृ-तिंहविषाचरुपुरोडाशादिनाकृतामाहुतिंयोयजमानोदद्यात् सयजमानः प्रजयापुत्रपौत्रादिनायु-क्तं सुवीर्यंशोभनवीर्ययुक्तं विश्वंसर्वंआयुर्जीवनं व्यश्नवव्द्याप्नोतु ॥ आहुतिं जुहोतेःक्तिनि तादौचेतिगतेःप्रकृतिस्वरत्वम् । दाशात् दाशृदाने लेट्याडागमः यद्वृत्तयोगादनिघातः । हविष्कृ-तिं हविषःकृतिःकरणंयस्यामाहुतौ बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं नित्यंसमासेनुत्तरपदस्थस्ये-तिविसर्जनीयस्यषत्वम् । अश्नवत् अश्नोतेर्व्यत्ययेनपरस्मैपदम् लेट्यडागमः ॥ ३ ॥

चतुर्थीमृचमाह—

अग्नींषोमा॒ चेति॒ तद्वी॒र्यं॑ वां॒ यदमु॑ष्णीतमव॒सं प॒णिं गाः ।
अवा॑तिरतं॒ बृस॑यस्य॒ शेषोऽवि॑न्दतं॒ ज्योति॒रेकं॑ ब॒हुभ्यः॑ ॥४॥

अग्नीषोमा । चेति॑ । तत् । वी॒र्य॑म् । वा॒म् । यत् । अमु॑ष्णीतम् । अ॒व॒सम् । प॒णिम् । गाः । अव॑ । अ॒ति॒र॒त॒म् । बृस॑यस्य । शेपः॑ । अवि॑न्दतम् । ज्योतिः॑ । एक॑म् । ब॒हुऽभ्यः॑ ॥ ४ ॥

हेअग्नीषोमौ वांयुवयोः तद्वक्ष्यमाणंवीर्यंसामर्थ्यंचेतिअस्माभिर्ज्ञातमभूत् यत् येनवीर्येण गाःअवसंगोरूपंअन्नं पणिंपणेः विभक्तिव्यत्ययः एतन्नाम्नोऽसुरात्अमुष्णीतं अपाहार्ष्टम् तथा बृसयस्यबृसिर्वेष्टनार्थः बृसयतिसर्वंवेष्टयतीतिबृसयोसुरःत्वष्टा तस्यासुरस्यशेपःअपत्यं शेपइत्यपत्यनाम शिष्यतेःप्रयतइतियास्कः[1] ।त्वष्टुःसकाशादुत्पन्नंवृत्रंअवातिरतं अवधिष्टं अवतिरतिर्वधकर्मा । प्राणापानरूपयोर्युवयोर्वृत्रेणावस्थानात्समरणंप्राप्तः तथाचाम्नायते—तस्माज्जंजम्यमानादग्नीषोमौनिरक्रामतांप्राणापानौवाएनंतदजहितामिति[2] । ततोवृत्रवधानन्तरंज्योतिर्द्योतमानंसूर्यंएकंनभसिगच्छन्तंबहुभ्योजनेभ्यः बहूनामर्थायअविन्दतं अलभ्साथां एतत्सर्वंयेनवीर्येणक्रियते तदस्माभिर्ज्ञातमित्यर्थः ॥ चेति चितीसंज्ञाने लुङि चिण्भावकर्मणोरितिच्लेश्चिणादेशः चिणोलुगिति तशब्दस्यलुक् । अमुष्णीतं मुषस्तेये क्र्यादिकः । अवसं अवतेरौणादिकोऽसच् । शेपः सुपांसुलुगितिद्वितीयायाःसुः । एकं इण्गतौ इण्भीकापाशल्यतिमर्चिभ्यःकन्नितिकन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

अग्नीषोमीयस्यपशोर्वपापुरोडाशहविषांयुवमेतानीत्याद्यास्तिस्रऋचःक्रमेणयाज्याः सूत्रं तुपूर्वमेवोदाहृतम् पौर्णमासयागेऽग्नीषोमीयस्यपुरोडाशस्ययुवमेतानीत्येषायाज्या उक्तादेवताइतिखण्डेसूत्रितम्—युवमेतानिदिविरोचनानीन्द्राग्नीअवसागतमिति ।

तामेतांसूक्तेपञ्चमीमृचमाह—

यु॒वमे॒तानि॑ दि॒वि रो॑च॒नान्य॒ग्निश्च॑ सोम॒ सक्र॑तू अधत्तम् ।
यु॒वं सिन्धूँ॑र॒भिश॑स्तेरव॒द्याद॑ग्नीषोमा॒वमु॑ञ्चतं गृभी॒तान् ॥ ५ ॥

यु॒वम् । ए॒तानि॑ । दि॒वि । रो॒च॒नानि॑ । अ॒ग्निः । च॒ । सो॒म॒ । सक्र॑तू॒ इति॒ सऽक्र॑तू । अ॒ध॒त्त॒म् । यु॒वम् । सिन्धू॑न् । अ॒भिऽश॑स्तेः । अ॒व॒द्यात् । अग्नी॑षोमौ । अमु॑ञ्चतम् ॥ गृ॒भी॒तान् ॥ ५ ॥

१ नि० ३. २. । २ तै० सं० २. ५. २. ।

हेसोम त्वमग्निश्च सक्रतूसमानकर्माणौसन्तौयुवंयुवां रोचनानिरोचमानानि दीप्यमानानि एतान्यस्माभिर्निरीक्ष्यमाणानि ताराग्रहादीनिज्योतींषि दिविद्युलोके अधत्तं अधारयतम् उत्तरार्धस्येयमाख्यायिका—इन्द्रोवृत्रंहत्वाब्रह्महत्यायाभीतःसन् पृथिव्यांवृक्षेषुस्त्रीष्वप्सुचतांब्रह्महत्यांन्यमार्क्षीत् तासामपांशुद्धिरग्नीषोमाभ्यांजातेति । ब्रह्महत्यांशेनपापेन गृभीतान्गृहीतानाक्रान्तान्सिन्धून्नदीविशेषान् हेअग्नीषोमौ युवंयुवां अभिशस्तेःअभिशस्यमानाद्भितःप्रकटितादवद्यात्स्मात्तपापात्अमुञ्चतं मुक्तवन्तौ यद्वा वृत्रः इन्द्रेणहतःसन् नदीषुपपात ततोवृत्तेनवृत्रशरीरेणनद्यः सर्वादुष्टाबभूवुः तथाचतैत्तिरीयकम्—इन्द्रोवृत्रमहन्त्सो १ पो १ भ्यम्रियततासांयन्मेध्यंयज्ञियंसदेवमासीत्तदपोदक्रामदिति[1] । तेनदोषेणगृहीतानदीस्तस्माद्दोषादग्नीषोमौमुक्तवन्तौ ॥ रोचनानि रुचदीप्तौ अनुदात्तेतश्चहलादेरितियुच् । सिन्धून् दीर्घादटिसमानपादेइतिनकारस्यरुत्वम् अत्रानुनासिकःस्यनुनासिकः । गृभीतान् हृग्रहोर्भइतिभत्वम् ॥ ५ ॥

अग्नीषोमीयस्योपांशुयाजस्यआन्यंदिवइत्येषायाज्या अग्नीषोमायोअद्यवामित्यत्रसूत्रमुदाहृतम् ।

तामेतांषष्ठीमृचमाह—

आन्यंदिवोमातरिश्वाजभारामथ्नादन्यंपरिश्येनोअद्रेः ।
अग्नीषोमाब्रह्मणावावृधानोरुंयज्ञायचक्रथुरुलोकम् ॥६॥२८॥

आ । अन्यम् । दिवः । मातरिश्वा । जभार । अमथ्नात् । अन्यम् । परि । श्येनः । अद्रेः । अग्नीषोमा । ब्रह्मणा । वावृधाना । उरुम् । यज्ञाय । चक्रथुः । ऊम् इति । लोकम् ॥ ६ ॥ २८ ॥

हेअग्नीषोमौ युवयोर्मध्येअन्यमेकमग्निं मातरिश्वावायुर्दिवोद्युलोकादाजभार भृगवेयजमानायआजहार तथाचमन्त्रान्तरम्—द्विजन्मानंरयिमिवप्रशस्तंरातिंभरद्भृगवेमातरिश्वेति[2] । श्येनः शंसनीयगतिमान् पक्षीपक्ष्याकारागायत्री अन्यं सोमंअद्रेःपरि मेरोरुपरि अवस्थितात् स्वर्गाद्अमथ्नात् बलादाहृतवती एवंमहानुभावौयुवां ब्रह्मणास्तुतिमन्त्ररूपेणस्तोत्रेणहविर्लक्षणेनान्नेन वा वावृधाना वर्धमानौयुवांयज्ञायअन्येषांदेवानां यागायउरुविस्तीर्णंलोकंस्थानं चक्रथुः कृतव-

१ तै० सं० ६. १. १. । २ ऋ० सं० १. ४. २६. ।

न्तौ उइत्येतत्पदपूरणं आज्यभागदेवतयोरग्नीषोमयोरुत्तरार्धदक्षिणार्धयोर्हूयते तन्मध्येअन्यदेवत्यानिसर्वाणिहवींषिहूयन्ते तन्मध्यमंस्थानमग्नीषोमरूपं तथाचतैत्तिरीयकम्—राजानौवाएतौदेवतानांयदग्नीषोमावन्तरादेवताइज्येते देवतानांविधृत्याइति[1]॥ वनृधाना वृधेर्लिटिकानच् छान्दसमभ्यासस्यदीर्घत्वं सुपांसुलुगित्याकारः॥ ६ ॥

॥ इतिप्रथमस्यषष्ठेष्टाविंशोवर्गः ॥ २८ ॥

सप्तमीमृचमाह—

अग्नीषोमाहविषःप्रस्थितस्यवीतंहर्यतंवृषणाजुषेथाम् ।
सुशर्माणास्ववसाहिभूतमथाधत्तंयजमानायशंयोः ॥७॥

अग्नीषोमा । हविषः । प्रऽस्थितस्य । वीतम् । हर्यतम् । वृषणा । जुषेथाम् । सुऽशर्माणा । सुऽअवसा । हि । भूतम् । अथ । धत्तम् । यजमानाय । शम् । योः ॥ ७ ॥

हेअग्नीषोमौ प्रस्थितस्यहोमार्थमाहवनीयसमीपंप्राप्तंहविषःइदंहविःवीतंभक्षयतं तदनन्तरंच हर्यतं अस्मान्कामयेथां हेवृषणा कामानांवर्षितारौजुषेथांअस्मदीयंपरिचरणंसेवेथां तदनन्तरंसुशर्माणाशोभनसुखौ स्ववसाहि शोभनरक्षणौचभूतं अस्माकंभवतं अथानन्तरंहविर्दत्तवतेयजमानाय शं शमनीयानांरोगाणांशमनं योः पृथक्कर्तव्यानांभयानांयावनंपृथक्करणंचधत्तंविधत्तंकुरुतं उक्तंचयास्केन—शमनंचरोगाणांयावनंचभयानामिति[2] ॥ हविषः क्रियाग्रहणंकर्तव्यमितिकर्मणः संप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी।वीतं वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु थसस्तं अदादित्वाच्छपोलुक् वीतंचहर्यतंचेतिचार्थप्रतीतेश्चादिलोपेविभाषेतिप्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः हर्यतं पादादित्वान्निघाताभावः। जुषेथां वृषणेत्यामन्त्रितस्यामन्त्रितंपूर्वमित्यविद्यमानवत्त्वेसतितिङःपरत्वान्निघाताभावः। सुशर्माणा स्ववसा उभयत्रबहुव्रीहौ सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वम्। भूतं लोटि बहुलंछन्दसीतिशपोलुक् ॥ ७ ॥

अष्टमीमृचमाह—

योअग्नीषोमाहविषासपर्याद्देवद्रीचामनसायोघृतेन ।
तस्यव्रतंरक्षतंपातमंहसोविशेजनायमहिशर्मयच्छतम् ॥८॥

१ तै० सं० २.६.२.। २ नि० ४.२१.।

यः । अ॒ग्नीषो॑मा । ह॒विषा॑ । स॒प॒र्यात् । दे॒व॒द्रीचा॑ । मन॑सा । यः । घृ॒तेन॑ । तस्य॑ । व्र॒तम् । र॒क्ष॒त॒म् । पा॒त॒म् । अंह॑सः । वि॒शे । जना॑य । महि॑ । शर्म॑ । य॒च्छ॒त॒म् ॥ ८ ॥

योयजमानः अग्नीषोमा अग्नीषोमौ देवद्रीचादेवानञ्चतादेवतापरायणेनश्रद्धायुक्तेन मनसान्तःकरणेनयुक्तःसन्हविषा चरुपुरोडाशादिनासपर्यात् सपर्यतिपरिचरति यश्चयजमानो-घृतेनाज्येनाग्नीषोमौपरिचरति तस्ययजमानस्यव्रतंकर्मरक्षतं अंहसः पापात्तंचयजमानं पातंरक्ष-तम् विशेयागेप्रविशते तस्मैजनाययजमानाय महिमहत्प्रभूतं शर्मसुखंयच्छतंदत्तम् ॥ अग्नी-षोमा देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् । सपर्यात् सपरपूजायां कण्ड्वादिः लेट्याडागमः । देवद्रीचा देवान् अञ्चतीतिदेवद्र्यङ् अञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः विष्व-ग्देवयोश्चटेरद्र्यञ्चतौवप्रत्ययेइति देवशब्दस्यटेरद्र्यादेशः तृतीयैकवचने अचइत्यकारलोपेचा-विति दीर्घत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेप्राप्ते अद्रिसध्र्योरन्तोदात्तनिपातनंकृत्स्वरनिवृत्त्यर्थमि-तिवचनादद्र्यादेशोऽन्तोदात्तोनिपातितः । विशे सावेकाचइतिविभक्तेरुदात्तत्वम् ॥ ८ ॥

पौर्णमासयागेग्नीषोमीयस्ययागस्यअग्नीषोमेत्येषानुवाक्या तथाचसूत्रितंउक्तादेवता-इतिखण्डे—अग्नीषोमासवेदसायुवमेतानिदिविरोचनानीति ।

तावेतांसूक्तेनवमीमृचमाह—

अग्नीषो॑मा॒सवे॑दसा॒सहू॑तीवनतं॒गिरः॑ । सं॒दे॒व॒त्राब॑भूवथुः ॥९॥

अ॒ग्नीषो॑मा । सऽवे॑दसा । सहू॑ती॒ इति॒ सऽहू॑ती । व॒न॒त॒म् । गिरः॑ । सम् । दे॒व॒ऽत्रा । ब॒भू॒व॒थुः ॥ ९ ॥

हेअग्नीषोमौ युवांसवेदसा समानेनएकेनवेदसाहविर्लक्षणेनधनेनयुक्तौसहूतीसमानाह्वानौ चसन्तौ गिरः अस्मदीयाः स्तुतीर्वनतं संभजेथां देवत्रा देवेषुसर्वेषु यौयुवांसंबभूवथुः संभूतौ संभावितौप्रशस्तौस्थः राजानौवाएतौदेवतानांयदग्नीषोमाविति[1]श्रुतेः ॥ सवेदसा समानंवेदोय-योः समानस्यच्छन्दसीति सभावः । वनतं वनषणसंभक्तौ । देवत्रा देवमनुष्यपुरुषपुरुमर्त्येत्या-दिनासप्तम्यर्थेत्राप्रत्ययः ॥ ९ ॥

1 तै० सं० २. ६. २ ।

दशमीमृचमाह–

अग्नीषोमावनेनवांयोवांघृतेनदाशति । तस्मैदीदयतंबृहत् ॥१०॥

अग्नीषोमौ । अनेन । वाम् । यः । वाम् । घृतेन । दाशति । तस्मै । दीदयतम् । बृहत् ॥ १० ॥

हेअग्नीषोमौ वांयुवयोःसंबन्धीयोयजमानः अनेनघृतेनउत्पवनादिभिःसंस्कृतेनाज्येनयुक्तंहविः वांयुवाभ्यांदाशतिप्रयच्छति तस्मैयजमानायबृहत्प्रभूतंधनंदीदयतंप्रकाशयतंप्रयच्छतमित्यर्थः॥ दाशति दाशृदाने शप्तिपोःपित्त्वादनुदात्तत्वेधातुस्वरः यद्वृत्तयोगादनिघातः। दीदयतम् - दीदयतिर्दीप्तिकर्मा ॥ १० ॥

एकादशीमृचमाह–

अग्नीषोमाविमानिनोयुवंहव्याजुजोषतम् । आयातमुपनःसचा॥११॥

अग्नीषोमौ । इमानि । नः । युवम् । हव्या । जुजोषतम् । आ । यातम् । उप । नः । सचा ॥ ११ ॥

हेअग्नीषोमौ युवंयुवांनोऽस्मदीयानीमानिहव्याहवींषिजुजोषतंसेवेथाम् तदर्थंनोऽस्मान्सचासह युवामुपायातंउपगच्छतम्॥ जुजोषतं जुषीप्रीतिसेवनयोः लोटिव्यत्ययेनशप् छान्दसंद्विर्वचनम् यद्वा विकरणस्यबहुलंछन्दसीतिश्लुः ततोव्यत्ययेनशप् बहुलंछन्दसीतिवक्तव्यमिति वचनात् नाभ्यस्तस्याचिपितीतिलघूपधगुणप्रतिषेधाभावः॥ ११ ॥

द्वादशीमृचमाह–

अग्नीषोमापिपृतमर्वतोनआप्यायन्तामुस्रियाहव्यसूदः ।
अस्मेबलानिमघवत्सुधत्तंकृणुतंनोअध्वरंश्रुष्टिमन्तम्॥१२॥२१॥

अग्नीषोमा । पिपृतम् । अर्वतः । नः । आ । प्यायन्ताम् । उस्रियाः । हव्यऽसूदः । अस्मे इति । बलानि । मघवत्ऽसु । धत्तम् । कृणुतम् । नः । अध्वरम् । श्रुष्टिऽमन्तम् ॥ १२ ॥ २१ ॥

हेअग्नीषोमौ नोऽस्माकं अर्वतोऽश्वान्पिपृतंपालयतम् हव्यसूदः क्षीरादिहविषांउत्पादयित्र्यः उस्रियाअस्मदीयागावश्चआप्यायन्तां आप्यायिताःप्रवृद्धाःसन्तु मघवत्सुहविर्लक्षणधनयुक्तेषु अस्मे अस्मासुबलानिधत्तंस्थापयतम् तथानोऽस्माकंअध्वरंयागंश्नुष्टिमन्तंधनयुक्तंकृणुतंकुरुतम् ॥ पिपृतं पृपालनपूरणयोः पृइत्येके जुहोत्यादित्वाच्छपःश्लुः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् । हव्यसूदः हव्यंसूदन्तेक्षरन्तीतिहव्यसूदः पूदक्षरणे क्विप्चेतिक्विप् । अस्मे सुपांसुलुगितिसप्तम्याःशेआदेशः । श्नुष्टिमन्तं श्नुष्टीतिधननाम शुआशुअश्यतेव्याप्यतेइतिश्नुष्टिः पृषोदरादिः ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् ॥ १२ ॥

॥ इतिप्रथमस्यपष्ठेएकोनत्रिंशोवर्गः ॥ २९ ॥

॥ इतिप्रथमेमण्डलेचतुर्दशोनुवाकः ॥ १४ ॥

पञ्चदशेऽनुवाकेद्वादशसूक्तानि तत्रेमंस्तोममितिषोडशर्चंप्रथमंसूक्तम् आङ्गिरसस्यकुत्सस्यार्षम् पञ्चदशीषोडश्यौत्रिष्टुभौ शिष्टाजगत्यः अग्निर्देवता पूर्वोदेवाभवतुसुन्वतोरथइतित्रयः पादादेवदेवत्याः तन्नोमित्रइत्यर्धर्चोलिङ्गोक्तमित्रावरुणादिषड्देवत्यः अथवा तस्याप्यग्निरेवदेवता मित्रावरुणादयस्तुनिपातभाक्त्वेनामधानाः एतत्सर्वमनुक्रान्तम्—इमंषोडशकुत्सआग्नेयंतद्धित्रिष्टुबन्तं पूर्वोदेवास्त्रयःपादादेवास्तन्नोमित्रोऽर्धर्चोलिङ्गोक्तदेवतोयद्देवत्यंवासूक्तमिति । प्रातरनुवाकस्याग्नेयेक्रतौजागतेछन्दस्येतत्सूक्तं आश्विनशस्त्रेच तथाचसूत्रितम्—इमंस्तोममर्हतेसंजागृवद्भिरिति । आभिप्लविकेपष्ठेहनि आग्निमारुतेप्येतत्सूक्तंजातवेदस्यंनिविद्धानं सूत्रितंच—प्रयज्यवइमंस्तोममित्याग्निमारुतमिति । तृतीयसवनेइमंस्तोममित्येषाग्नीधःप्रस्थितयाज्या सूत्रितंच—इमंस्तोममर्हतेजातवेदसइतितार्तीयसवनिक्यइति ।

तामेतांसूक्तेप्रथमामृचमाह—

इ॒मं स्तोम॒मर्ह॑ते जा॒तवे॑दसे॒ रथ॑मिव॒ सं म॑हेमा मनी॒षया॑ ।
भ॒द्रा हि नः॒ प्रम॑तिरस्य सं॒सद्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥१॥

इ॒मम् । स्तोम॑म् । अर्ह॑ते । जा॒तऽवे॑दसे । रथ॑म्ऽइव । सम् । म॒हे॒म॒ । म॒नी॒षया॑ । भ॒द्रा । हि । नः॒ । प्रऽम॑तिः । अ॒स्य॒ । स॒म्ऽसदि॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ १ ॥

अर्हतेपूज्याय जातवेदसेजातानांउत्पन्नानांविदित्रेजातप्रज्ञायजातधनायवाअग्नये मनीषयानिशितयाबुद्ध्या इमंएतत्सूक्तरूपंस्तोमंस्तोत्रंरथमिव यथातक्षारथंसंस्करोति तथासंमहेमसम्यक्पूजितं कुर्मः अस्याग्नेः संसदिसंभजनेनोऽस्माकं ममतिःप्रकृष्टाबुद्धिः भद्राहि कल्याणीसमर्थाखलु अतस्तया बुद्ध्यास्तुमइत्यर्थः हेअग्ने तवसख्येऽस्माकंत्वयासहसखित्वेसति वयंमारिषाम हिंसितानभवाम अस्मान्रक्षेत्यर्थः ॥ अर्हते अर्हपूजायां अर्हःप्रशंसायामितिलटःशत्रादेशः शपःपित्त्वादनुदात्तत्वम् शतुश्चादुपदेशाल्लसार्वधातुकस्वरेणधातुस्वरःशिष्यते । महेम महपूजायाम् । रिषाम रिषहिंसायां व्यत्ययेनशः । तव युष्मदस्मदोर्ङसीत्याद्युदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह—

यस्मै॒त्वमा॒यज॑से॒सस॑ाधत्यन॒र्वाक्षे॑ति॒दध॑ते॒सु॒वीर्य॑म् ।
सतू॑ताव॒नैन॑मश्नोत्यंह॒तिरग्ने॑स॒ख्येमारि॑षामाव॒यंतव॑ ॥२॥

यस्मै॑ । त्वम् । आ॒ऽयज॑से । सः । सा॒ध॒ति॒ । अ॒न॒र्वा । क्षे॒ति॒ ।
दध॑ते । सु॒ऽवीर्य॑म् । सः । तू॒ता॒व॒ । न । ए॒न॒म् । अ॒श्नो॒ति॒ । अं॒ह॒तिः ।
अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यम् । तव॑ ॥ २ ॥

यस्मैयजमानाय हेअग्ने त्वंआयजसे देवानाभिमुख्येनयजसि सयजमानः साधतिस्वाभिलषितंसाधयति प्रामोतीत्यर्थः किञ्च सयजमानः अनर्वाशत्रुभिरप्रत्यृतःसन् क्षेतिनिवसति तथासुवीर्यंशोभनवीर्योपेतंधनंदधतेधारयतिप्रामोतीत्यर्थः धृत्वाचसयजमानःतूताव वर्धतेएनंयजमानं अंहतिः अर्तिर्दारिद्र्यंनाश्नोतिनप्रामोति अन्यत्पूर्ववत् ॥ साधति षिधुसंराद्धौ णिचि सिध्यतेरपारलौकिकेइत्यात्वम् छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः । क्षेति क्षिनिवासगत्योः बहुलंछन्दसीतिविकरणस्यलुक् । दधते दधधारणे भौवादिकः । तूताव तुइतिवृद्ध्यर्थःसौत्रोधातुः अस्माच्छान्दसोलिट् तुजादित्वादभ्यासस्यदीर्घत्वम् । अश्नोति व्यत्ययेनपरस्मैपदम् । अंहतिः हन्तेरंहचेतिअतिप्रत्ययः चिदित्यनुवृत्तेरन्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

श॒केम॑त्वास॒मिधं॑सा॒धया॒धिय॒स्त्वेदे॒वाह॒विर॑द॒न्त्याहु॑तम् ।
त्वमा॑दि॒त्याँआव॑ह॒तान्ह्यु॑१॒श्मस्यग्ने॑स॒ख्येमारि॑षामाव॒यंतव॑ ॥३॥

---

१ धातुस्वरःशेषेणाद्युदात्तत्वं इतिपाठः ।

शकेम । त्वा । सम्ऽइधम् । साधय । धियः । त्वे इति । देवाः ।
हविः । अदन्ति । आऽहुतम् । त्वम् । आदित्यान् । आ । वह ।
तान् । हि । उश्मसि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥३॥

हेअग्ने त्वात्वांसमिधंसम्यगिद्धंकर्तुंशकेम शक्ताभूयास्म त्वंच धियःअस्मदीयानिदर्शपूर्णमासादीनिकर्माणिसाधयनिष्पादय त्वयाहिसर्वेयागानिष्पाद्यन्ते यस्मात्त्वे त्वय्यग्नावाहुतंऋत्विग्भिःप्रक्षिप्तंचरुपुरोडाशादिकंहविःदेवाअदन्तिभक्षयन्तितस्मात्त्वंसाधयेत्यर्थः अपिच त्वं आदित्यान् अदितेःपुत्रान्सर्वान्देवानावह अस्मद्यज्ञार्थमानय तान्हिइदानींमेववयमुश्मसि कामयामहे अन्यत्पूर्ववत् ॥ शकेम शक्लृशक्तौ लिङ्याशिष्यङ् अदुपदेशाल्लसार्वधातुकानुदात्तत्वेअङएवस्वरःशिष्यते।समिधं ञिइन्धीदीप्तौ अस्मात्संपदादिलक्षणःकर्मणिक्विप्।त्वे सुपांसुलुगिति सप्तम्येकवचनस्यशेआदेशः । उश्मसि वशकान्तौ इदन्तोमसिः अदादित्वाच्छपोलुक् ग्रहिज्येत्यादिनासंप्रसारणम् ॥ ३ ॥

चतुर्थीमृचमाह—

भरामेध्मंकृणवामाहवींषितेचितयन्तःपर्वणापर्वणावयम् ।
जीवातवेप्रतरंसाधयाधियोग्नेसख्येमारिषामावयंतव ॥४॥

भराम । इध्मम् । कृणवाम । हवींषि । ते । चितयन्तः ।
पर्वणाऽपर्वणा । वयम् । जीवातवे । प्रऽतरम् । साधय । धियः ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ४ ॥

हेअग्ने त्वद्यागार्थं इध्मंइन्धनसाधनं एकविंशतिदार्वात्मकं समित्समूहं भराम संपादयाम तदनन्तरंतेतुभ्यंहवींषिचरुपुरोडाशलक्षणान्यन्नानिवयंकृणवाम करवाम किंकुर्वन्तः पर्वणापर्वणा प्रतिपक्षमावृत्ताभ्यांदर्शपूर्णमासाभ्यां चितयन्तः त्वांप्रज्ञापयन्तः सत्वंजीवातवे अस्माकंजीवनौपधाय चिरकालावस्थानाय धियःकर्माणि अग्निहोत्रादीनि प्रतरं प्रकृष्टतरं साधयनिष्पादय अन्यत्समानम् ॥ चितयन्तः चितीसंज्ञाने संज्ञापूर्वकस्यविधेरनित्यत्वाल्लघूपधगुणाभावः । पर्वणापर्वणा नित्यवीप्सयोरितिवीप्सायांद्विर्भावः तस्यपरमाम्रेडितमितिपरस्याम्रेडितसंज्ञायां अनुदात्तंचेत्यनुदात्तत्वम्।प्रतरं तरप्नन्ताच्छब्दात्क्रियाप्रकर्षेवर्तमानादमुप्रच्छन्दसीत्यमुप्रत्ययः॥४॥

पञ्चमीमृचमाह—

विशांगोपाअंस्यचरन्तिजन्तवोद्विपच्चयदुतचतुंष्पदक्तुभिंः ।
चित्रःप्रकेतउपसोमहाँअस्यग्नेसख्येमारिंपामावयंतवं ॥ ५ ॥३०॥

विशाम् । गोपाः । अस्य ।। चरन्ति । जन्तवः । द्विऽपत् । च । यत् । उत । चतुःऽपत् । अक्तुऽभिंः । चित्रः । प्रऽकेतः । उपसः । महान् । असि । अग्ने । सख्ये । मा । रिपाम । वयम् । तव ॥५॥३०॥

अस्याग्नेर्जन्तवोजातारश्मयोविशांसर्वेषांप्राणिनांगोपाः गोपायितारोरक्षकाःसन्तः चरन्ति उद्गच्छन्ति तदनन्तरं यच्चद्विपद्द्विपान्मनुष्यादिकमस्ति उत अपिच चतुष्पद् चतुष्पाद् गवादिकंयदस्ति तदुभयंअक्तुभिःअञ्जकैः अस्यरश्मिभिः अक्तमाश्लिष्टमभूद् हेअग्ने चित्रोविचित्रदीप्तियुक्तः प्रकेतःरात्रावन्धकारावृतानांसर्वेषांप्रज्ञापयिताप्रदर्शयिता उपसः उपोदेवताया-अपिमहान्गुणैरधिकोऽसिभवसि उपास्तुरात्रेश्चरमभागेप्रकाशयति अग्निस्तुसर्वस्यांरात्रौप्रकाशयतीतितस्यगुणाधिक्यम् ॥ गोपाः गुपूरक्षणे गुपूधूपविच्छीत्यायप्रत्ययः अस्मात्क्विप् अतोलोपः येरपृक्तलोपाद्वलिलोपोबलीयानितिपूर्वंवलिलोपः नचातोलोपस्यस्थानिवत्त्वं नपदान्तेत्यादिनायलोपंप्रतितन्निषेधात्। द्विपद् द्वौपादावस्येतिबहुव्रीहौ संख्यासुपूर्वस्येतिपादशब्दस्यान्त्यलोपःसमासान्तः अयस्मयादित्वेनभत्वेनपादःपदितिपद्भावः एकदेशविकृतस्यानन्यवत्त्वाद् द्वित्रिभ्यांपादन्मूर्धस्वितिउत्तरपदान्तोदात्तत्वम्। चतुष्पद् पूर्ववत्समासान्तःपद्भावश्च इदुदुपधस्यचाप्रत्ययस्येतिविसर्जनीयस्यपत्वम् त्रःसंख्याया इतिचतुर्शब्दआद्युदात्तः सएवबहुव्रीहिस्वरेणशिष्यते॥५॥

॥ इतिप्रथमस्यषष्ठेत्रिंशोवर्गः ॥ ३० ॥

षष्ठीमृचमाह—

त्वमंध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुपापुरोहिंतः ।
विश्वाविद्वाँआर्त्विज्याधीरपुष्यस्यग्नेसख्येमारिंपामावयंतवं ॥६॥

त्वम् । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता । जनुषा । पुरःऽहितः । विश्वा ।। विद्वान् । आर्त्विज्या । धीर । पुष्यसि । अग्ने । सख्ये । मा । रिपाम । वयम् । तव ॥ ६ ॥

हेअग्ने त्वं अध्वर्युः अध्वरस्ययागस्यनेतादेवान्प्रतिप्रेरयिता यद्वा यागेआध्वर्यवस्यकर्तासिभवसि अध्वर्यौमनुष्येजाठररूपेणवाँगिन्द्रियाधिष्ठातृत्वेनवावस्थाय यागनिष्पादकोऽसि उत अपिच पूर्व्यःमुख्योहोतादेवानामाह्वातापूर्ववद्धोतर्यवस्थायहौत्रस्यकर्मणःकर्तासिभवसि मानुषोहोताअमुख्यः तदपेक्षयास्यमुख्यत्वम् तथाप्रशास्ताप्रकर्षेणशास्तासर्वेषांशिक्षकोऽसि यद्वा होतर्यजपोतर्यजेत्यादिनाप्रैषेणशास्तीतिमित्रावरुणःप्रशास्ता पूर्ववत्तस्मिन्नवस्थाययागनिष्पादकोऽसि पोता यज्ञस्यपावयिताशोधयितासि यद्वा पोतृनामकस्यर्त्विजः पूर्ववदधिष्ठाययागनिष्पादकोऽसि तथा जनुषाजन्मनास्वाभाव्येनपुरोहितः पुरस्तादागामिनिस्वर्गादौहितः अनुकूलाचरणोऽसि यद्वा सर्वेषुकर्मसु पूर्वस्यांदिश्याहवनीयेस्थापितोऽसि अथवापुरोहितोब्रह्मा देवपुरोहितस्यबृहस्पतेः प्रतिनिधित्वात् तथाचमन्त्रान्तरम्—बृहस्पतिर्देवानांब्रह्माअहंमनुष्याणामिति । अतस्तस्मिन्ब्रह्मणिपूर्ववदवस्थायतद्रूपःसन्विश्वा सर्वाणि आर्त्विज्या ऋत्विजःकर्माण्याध्वर्यवादीनिविद्वान्जानंस्त्वं हेधीर प्राज्ञाग्ने पुष्यसि न्यूनाधिकभावराहित्येनसंपूर्णानिकरोषि अन्यत्समानम् ॥ जनुषा जनेरुसिः । पुरोहितः दधातेः कर्मणिनिष्ठा पूर्वाधरेत्यादिना असिप्रत्ययान्तःपुरस्शब्दोऽन्तोदात्तः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोव्ययमितिगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । आर्त्विज्या ब्राह्मणादित्वात्ष्यञ् ञित्त्वादाद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

योविश्वतःसुप्रतीकःसदृङ्ङसिंदूरेचित्सन्तळिदिवातिरोचसे ।
राञ्याश्चिदन्धोअतिदेवपश्यस्यग्नेसख्येमारिषामावयंतव ॥७॥

यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् । तळित्ऽइव । अति । रोचसे । राञ्याः । चित् । अन्धः । अति । देव । पश्यसि । । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ७ ॥

हेअग्ने यस्त्वंसुप्रतीकः शोभनाङ्गःसन्विश्वतः सर्वस्मादपिसदृङ्ङसि अन्यूनःसदृशोभवसि सत्वंदूरेचित्सन्दूरेऽपिवर्तमानःसन् तळिदिव अन्तिकनामैतत् अन्तिकेवर्तमानइवअतिरोचसे

१ त्वमिन्द्रियाधिष्ठातृत्वेनेतिवापाठः।     २ तै०ब्रा० ३. ७. ६.।

पञ्चमीमृचमाह—

विशांगोपाअंस्यचरन्तिजन्तवोद्विपच्चयदुतचतुंष्पदक्तुभिः ।
चित्रःप्रकेतउपसोमहाँअस्यग्नेसख्येमारिपामावयंतव ॥ ५ ॥ ३० ॥

विशाम् । गोपाः । अस्य । । चरन्ति । जन्तवः । द्विऽपत् । च ।
यत् । उत । चतुःऽपत् । अक्तुऽभिः । चित्रः । प्रऽकेतः । उपसः ।
महान् । असि । अग्ने । सख्ये । मा । रिपाम । वयम् । तव ॥ ५ ॥ ३० ॥

अस्याग्नेर्जन्तवोजातारश्मयोविशांसर्वेषांप्राणिनांगोपाः गोपायितारोरक्षकाःसन्तः चरन्ति उद्गच्छन्ति तदनन्तरं यच्चद्विपद्द्विपान्मनुष्यादिकमस्ति उत अपिच चतुष्पद् चतुष्पाद् गवादिकंयदस्ति तदुभयंअक्तुभिःअञ्जकैः अस्यरश्मिभिः अक्तमाश्लिष्टमभूत् हेअग्ने चित्रोविचित्रदीप्तियुक्तः प्रकेतःरात्रावन्धकारावृतानांसर्वेषांप्रज्ञापयिताप्रदर्शयिता उषसः उषोदेवताया-अपिमहान्गुणैरधिकोऽसिभवसि उषास्तुरात्रेश्चरमभागेप्रकाशयति अग्निस्तुसर्वस्यांरात्रौप्रकाशयतीतितस्यगुणाधिक्यम् ॥ गोपाः गुपूरक्षणे गुपूधूपविच्छीत्यायप्रत्ययः अस्मात्क्विप् अतोलोपः वेरपृक्तलोपाद्वलिलोपोवलीयानितिपूर्वंवलिलोपः नचातोलोपस्यस्थानिवत्त्वं नपदान्तेत्यादिनायलोपंप्रतितन्निषेधात्। द्विपत् द्वौपादावस्येतिबहुव्रीहौ संख्यासुपूर्वस्येतिपादशब्दस्यान्त्यलोपःसमासान्तः अयस्मयादित्वेनभत्वेनपादःपदितिपद्भावः एकदेशविकृतस्यानन्यवत्त्वात् द्वित्रिभ्यांपाद्न्मूर्धस्वितिउत्तरपदान्तोदात्तत्वम्। चतुष्पत् पूर्ववत्समासान्तःपद्भावश्च इदुदुपधस्यचाप्रत्ययस्येतिविसर्जनीयस्यपत्वम् त्रेःसंख्यायाइतिचतुर्शब्दआद्युदात्तः सएवबहुव्रीहिस्वरेणशिष्यते॥५॥

॥ इतिप्रथमस्यपष्ठेत्रिंशोवर्गः ॥ ३० ॥

षष्ठीमृचमाह—

त्वमध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुषापुरोहितः ।
विश्वाविद्वाँआर्त्विज्याधीरपुष्यस्यग्नेसख्येमारिपामावयंतव ॥ ६ ॥

त्वम् । अध्वर्युः । उत । होता । असि । पूर्व्यः । प्रऽशास्ता । पोता ।
जनुषा । पुरःऽहितः । विश्वा । । विद्वान् । आर्त्विज्या । धीर ।
पुष्यसि । अग्ने । सख्ये । मा । रिपाम । वयम् । तव ॥ ६ ॥

हेअग्ने त्वं अध्वर्युः अध्वरस्ययागस्यनेतादेवान्प्रतिप्रेरयिता यद्वा यागेआध्वर्यवस्यकर्ताभवसि अध्वर्यौमनुष्येजाठररूपेणवांगिन्द्रियाधिष्ठातृत्वेनवावस्थाय यागनिष्पादकोऽसि उतअपिच पूर्व्यःमुख्योहोतादेवानामाह्वातापूर्ववद्धोतर्यवस्थायहौत्रस्यकर्मणःकर्तासिभवसि मानुषोहोताअमुख्यः तदपेक्षयास्यमुख्यत्वम् तथाप्रशास्ताप्रकर्षेणशास्तासर्वेषांशिक्षकोऽसि यद्वा होतर्यजपोतर्यजेत्यादिनाप्रैषेणशास्तीतिमित्रावरुणःप्रशास्ता पूर्ववत्तस्मिन्नवस्थाययागनिष्पादकोऽसि पोता यज्ञस्यपावयिताशोधयितासि यद्वा पोतृनामकस्यार्त्विजः पूर्ववदधिष्ठायमागनिष्पादकोऽसि तथा जनुषाजन्मनास्वाभाव्येनपुरोहितः पुरस्तादागामिनिस्वर्गादौहितः अनुकूलाचरणोऽसि यद्वा सर्वेषुकर्मसु पूर्वस्यांदिश्याहवनीयेस्थापितोऽसि अथवापुरोहितोब्रह्मा देवपुरोहितस्यबृहस्पतेः प्रतिनिधित्वात्तथाचमन्त्रान्तरम्—बृहस्पतिर्देवानांब्रह्माअहंमनुष्याणामिति । अतस्तस्मिन्ब्रह्मणिपूर्ववदवस्थायतद्रूपःसन्विश्वा सर्वाणि आर्त्विज्या ऋत्विजःकर्माण्याध्वर्यवादीनिविद्वान्जानंस्त्वं हेधीर प्राज्ञाग्ने पुष्यसि न्यूनाधिकभावराहित्येनसंपूर्णानिकरोषि अन्यत्समानम् ॥ जनुषा जनेरुसिः । पुरोहितः दधातेः कर्मणिनिष्ठा पूर्वाधरेत्यादिना असिप्रत्ययान्तःपुरस्शब्दोऽन्तोदात्तः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोव्ययमितिगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । आर्त्विज्या ब्राह्मणादित्वात्ष्यञ् ञित्यादिर्नित्यमित्याद्युदात्तत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

योविश्वतःसुप्रतीकःसदृङ्ङसिदूरेचित्सन्तळिदिवातिरोचसे ।
रात्र्याश्चिदन्धोअतिदेवपश्यस्यग्नेसख्येमारिषामावयंतव ॥७॥

यः । विश्वतः । सुऽप्रतीकः । सऽदृङ् । असि । दूरे । चित् । सन् ।
तळित्ऽइव । अति । रोचसे । रात्र्याः । चित् । अन्धः । अति ।
देव । पश्यसि । । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ७॥

हेअग्ने यस्त्वंसुप्रतीकः शोभनाङ्गःसन्विश्वतः सर्वस्मादपिसदृङ्ङसि अन्यूनःसदृशोभवसि सत्वंदूरेचित्सन्दूरेऽपिवर्तमानःसन् तळिदिव अन्तिकनामैतत् अन्तिकेवर्तमानइव अतिरोचसे

१ त्वमिन्द्रियाधिष्ठातृत्वेनेतिवापाठः। २ तै०ब्रा० ३.७.६.।

अतिशयेनदीप्यसे तदुक्तंयास्केन—दूरेऽपिसन्नन्तिकइवसंदृश्यसइति । रात्र्याश्चित् रात्रेरपि रा-
त्रेःसंबन्धिनमन्धः बहुलमन्धकारमपि हेदेव द्योतमानाग्ने अतिपश्यसिअतीत्यप्रकाशसे अन्यत्पू-
र्ववत्॥ सुप्रतीकः शोभनंप्रतीकोऽङ्गंयस्य कत्वादयश्चेत्युत्तरपदाद्युदात्तत्वम् । सदृङ् समानान्य-
योश्चेतिवक्तव्यमितिसमानोपपदाद्दृशेःक्विन् दृग्दृशवतुष्वितिसमानस्यसभावः दृक्स्ववःस्वतवसां
छन्दसीतिनुम् संयोगान्तलोपः क्विन्प्रत्ययस्यकुरितिकुत्वं कृदुत्तरपदप्रकृतिस्वरत्वम् । रात्र्याः
रात्रेश्चाजसाविितिङीप् ॥ ७ ॥

अष्टमीमृचमाह—

पूर्वोदेवाभवतुसुन्वतोरथोस्माकंशंसोअभ्यस्तुदूढ्यः ।
तदाजानीतोतपुष्यतावचोग्नेसख्येमारिषामावयंतव ॥८॥

पूर्वः । देवाः । भवतु । सुन्वतः । रथः । अस्माकम् । शंसः । अभि ।
अस्तु । दुःऽध्यः । तत् । आ । जानीत । उत । पुष्यत । वचः ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ८ ॥

हेदेवाः अग्न्यवयवभूताःसर्वेदेवाः सुन्वतः सोमाभिषवंकुर्वतोयजमानस्यरथः पूर्वःअन्ये-
षामयजमानानांरथेभ्योमुख्योभवतु अपिचास्माकंशंसः शंसनीयंअभिशापरूपंपापं दूढ्यः दुर्धि-
यः पापबुद्धीन् अस्मदनिष्टाचरणपरान्शत्रून् अभ्यस्तुअभिभवतु तान्प्राप्नोतु तदिदंमद्वाक्यं हेदे-
वाः आजानीतआभिमुख्येनावगच्छत उत अपिच तद्वचोऽस्मदीयंवचनंतदर्थाचरणेनपुष्यतप्रव-
र्धयत हेसर्वदेवात्मकाग्ने सख्येइत्यादिपूर्ववत् ॥ सुन्वतं शतुरनुमइतिविभक्तेरुदात्तत्वम् । शंसः शंस्य-
तेकीर्त्यतेइतिशंसोभिशापः कर्मणिघञ् ञित्वादाद्युदात्तत्वम् । दूढ्यः दुष्टंध्यायन्तीतिदुर्धियः ध्यै-
चिन्तायामित्यस्मात्क्विप्चेतिक्विप् दृशिग्रहणानुवृत्तेः तस्यचविध्यन्तरोपसंग्रहार्थत्वात्संप्रसारणं
पृषोदरादिषु ध्यैचेतिपाठादुरोरेफस्योत्वं उत्तरपदादेष्टुत्वंच ॥ ८ ॥

नवमीमृचमाह—

वधैर्दुःशंसाँअपदूढ्योजहिदूरेवायेअन्तिवाकेचिदत्रिणः ।
अथायज्ञायगृणतेसुगंकृध्यग्नेसख्येमारिषामावयंतव ॥९॥

१ नि० ३. ११. ।

वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अन्ति ।
वा । के । चित् । अत्रिणः । अर्थ । यज्ञार्य । गृणते । सुऽगम् ।
कृधि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ९ ॥

हेअग्ने त्वंवधैः हननसाधनैरायुधैः दुःशंसान् दुःखेनकीर्तनीयान् दूढ्यःदुर्धियः पापबुद्धीन् अपजहि वधंप्रापय येकेचिद्येकेचनदूरेविप्रकृष्टदेशेवा अन्ति अन्तिके समीपदेशेवावर्तमानाः अत्रिणोत्तारोराक्षसादयोविद्यन्ते तान्दुर्धियोपजहीत्यर्थः अथानन्तरं यज्ञाययज्ञपतये गृणते त्वांस्तुवतेयजमानायसुगंशोभनंमार्गंकृधिकुरु अन्यत्पूर्ववत् ॥ वधैः हनश्चवधइतिहन्तेः करणेअप् वधादेशश्च सचादन्तोन्तोदात्तः तस्यातोलोपेसतिउदात्तनिवृत्तिस्वरेणप्रत्ययस्योदात्तत्वम् । दुःशंसान् ईषद्दुःसुष्वितिकर्मणिखल् लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । जहि लोटिहिः हन्तेर्जइतिजादेशः तस्यासिद्धवदत्राभादित्यसिद्धत्वाद्धेर्लुगभावः । अन्ति अन्तिकस्यकादिलोपोबहुलमितिकलोपः । अत्रिणः अदेस्त्रिनिचेतित्रिनिप्रत्ययः इकारोनकारपरित्राणार्थः । गृणते शतुरनुमइति विभक्तेरुदात्तत्वम् । सुगं सुदुरोरधिकरणेइतिगमेर्डः । कृधि श्रुशृणुपृकृवृभ्यश्छन्दसिइति हेर्धिः बहुलंछन्दसीतिविकरणस्यलुक् ॥ ९ ॥

दशमीमृचमाह—

यदयुंक्थाअरुषारोहिंतारथेवातंजूताऋषभस्येवतेरवः ।
आदिन्वसिवनिनोधूमकेतुनाग्नेसख्येमारिषामावयंतव ॥ १० ॥ ३१ ॥

यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातंऽजूता ।
ऋषभस्यंऽइव । ते । रवः । आत् । इन्वसि । वनिनः । धूमऽकेतुना ।
अग्ने । सख्ये । मा रिषाम । वयम् । तव ॥ १० ॥ ३१ ॥

हेअग्ने अरुषा रोचमानौ रोहिता रोहितवर्णौ रोहितइतिअग्नेरश्वस्याख्या रोहितोग्नेरितिनिदर्शनात् रोहितेनत्वाग्निर्देवतांगमयत्वितिनिगमदर्शनाच । एवंवदेवाश्वइतिहितत्व्याख्यातम् वातजूतावातस्यवायोर्जूतंजवोवेगइववेगोययोस्तौ ईदृशावश्वौरथेयदा अयुक्थाः अयोजयः तदानीं यनानिदहतस्तेतव रवःशब्दोवृषभस्येव दृप्तस्यमहोक्षस्यशब्दइवगंभीरोभवति आदनन्तरंवनि-

---

१ तै॰ सं॰ १. ६. ४. ।

नोवनसंबद्धान् वृक्षान्धूमकेतुनाधूमःकेतुःप्रज्ञापकोयस्यताहशेनरश्मिनाइन्वसि व्यामोषि अन्यत्पूर्ववत् ॥ अयुक्थाः युजिर्योगे लुङि झलोझलीतिसकारलोपः । अरुषेत्यादिषुद्विवचनेषु सुपांसुलुगित्याकारः । रवः रुशब्दे ऋदोरविति भावेअप् । इन्वसि इविव्याप्तौ भौवादिकः इदित्वान्नुम् ॥ १० ॥

॥ इतिप्रथमस्यपष्ठेएकत्रिंशोवर्गः ॥ ३१ ॥

एकादशीमृचमाह—

अर्धस्वनादुतबिभ्युःपतत्रिणोद्रप्सायत्तेयवसादोव्यस्थिरन् ।
सुगंतत्तेतावकेभ्योरथेभ्योऽग्नेसख्येमारिषामावयंतव ॥११॥

अध । स्वनात् । उत । बिभ्युः । पतत्रिणः । द्रप्साः । यत् । ते ।
यवसऽअदः । वि । अस्थिरन् । सुऽगम् । तत् । ते । तावकेभ्यः ।
रथेभ्यः । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥११॥

हेअग्ने अध दग्धुंवनप्रवेशानन्तरं स्वनात्त्वदीयात्पूर्वोक्तगंभीरशब्दात् उतशब्दोऽप्यर्थः पतत्रिणः पक्षिणोऽपिबिभ्युः बिभ्यतिभयंप्राप्नुवन्ति उत्पतनेनदेशान्तरंगन्तुंसमर्थाःपक्षिणोऽपि यदाभयंप्राप्नुवन्ति किमुवक्तव्यमन्येषांतत्रत्यानांवृकादीनांभीतिर्जायतइति अतस्त्वयिवनंप्रविशति सर्वप्राणिनोभयंप्राप्नुवन्तीत्यर्थः ताहशस्यतेतवद्रप्साः ज्वालैकदेशाः यवसादः यवसानामरण्येवर्तमानानांतृणानामत्तारःसन्तोयद्यदाव्यस्थिरन् विविधमवतिष्ठन्ते तत्तदातेतवसर्वमरण्यं सुगंसुखेनगन्तुंशक्यं अतस्तावकेभ्यस्त्वदीयेभ्योरथेभ्यश्च तदरण्यंसुगंभवति पूर्वप्रवृत्तैर्ज्वालाग्रैस्तृणादिषुदग्धेषुसत्सुत्वदीयारथाः प्रतिबन्धमन्तरेणपश्चाद्गच्छन्तीतिभावः अन्यत्समानम् ॥ बिभ्युः ञिभीभये छान्दसोलिट् एरनेकाचइतियण् । व्यस्थिरन् समवप्रविभ्यइतितिष्ठतेरात्मनेपदम् लुङिप्रत्ययेनझस्यरन् स्थाघ्वोरिच्चेतीत्वम् ह्रस्वादङ्गादितिसलोपः । तावकेभ्यः तवकममकावेकवचनेइतियुष्मदस्तवकादेशः ॥ ११ ॥

द्वादशीमृचमाह—

अयंमित्रस्यवरुणस्यधायसेवयातांमरुतांहेळोअद्भुतः ।
मृळासुनोभूत्वेषांमनःपुनरग्नेसख्येमारिषामावयंतव ॥१२॥

अयम् । मित्रस्य । वरुणस्य । धायसे । अवऽयाताम् । मरुताम् ।
हेळः । अद्भुतः । मृळ । सु । नः । भूतु । एषाम् । मनः । पुनः ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १२ ॥

अयमग्नेःस्तोतामित्रस्य अहरभिमानिनोदेवस्य वरुणस्यरात्र्यभिमानिनश्च संबन्धिनेधायसेधारणाय अवस्थापनायभवतु मित्रावरुणाविममग्नेःस्तोतारंधारयतामित्यर्थः अवयातांअवस्ताद्गच्छतांस्वर्गलोकस्याधस्तादन्तरिक्षेवर्तमानानां मरुतांएवत्संज्ञानां देवानांहेळः क्रोधः अद्भुतः महान्भवति अद्भुतइत्येतन्महन्नाम तस्मात्क्रोधादिममग्नेःस्तोतारंमित्रावरुणौरक्षतामितिशेषः अपिच नोऽस्मान् हेअग्ने सुमृळसुष्ठुमृडयसुखय एषांमरुतांमनश्च पुनर्भूतु पुनरपिमसन्नंभवतु अन्यत्समानम् ॥ धायसे वहिहाधाञ्भ्यश्छन्दसीतिभावेसुन् णिदित्यनुवृत्तेरातोयुक्चिण्कृतोरिति युक् । अवयातां याप्रापणे अस्मादवपूर्वाल्लटःशतृ शतुरनुमइतिविभक्तेरुदात्तत्वम् । मृळ मृडसुखने छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः द्व्यचोतस्तिङइतिसंहितायांदीर्घत्वम् । भूतु बहुलंछन्दसीतिशपोलुक् ॥ १२ ॥

त्रयोदशीमृचमाह—

देवोदेवानामसिमित्रोअद्भुतोवसुर्वसूनामसिचारुरध्वरे ।
शर्मन्त्स्यामतवसप्रथस्तमेऽग्नेसख्येमारिषामावयंतव ॥१३॥

देवः । देवानाम् । असि । मित्रः । अद्भुतः । वसुः । वसूनाम् । असि ।
चारुः । अध्वरे । शर्मन् । स्याम । तव । सप्रथःऽतमे । अग्ने । सख्ये ।
मा । रिषाम । वयम् । तव ॥ १३ ॥

हेअग्ने देवोद्योतमानस्त्वं देवानांसर्वेषां अद्भुतोमहान्मित्रोऽसि मित्रःसखाभवसि तथाचारुः शोभनस्त्वं अध्वरेयज्ञे वसूनांसर्वेषांधनानांवसुरसि निवासयिताभवसि अतोऽस्माकंवसूनिदेही-

त्यर्थः किंच समथस्तमेसर्वतःपृथुतमेअतिशयेनविस्तीर्णे तव त्वत्संबन्धिनिशर्मन्शर्मणियज्ञगृहेस्यामवर्तमानाभवेम अन्यत्पूर्ववत् ॥ शर्मन् सुपांसुलुगितिसप्तम्यालुक् ॥ १३ ॥

चतुर्दशीमृचमाह—

तत्तेभद्रंयत्समिद्धःस्वेदमेसोमाहुतोजरसेमृळयत्तमः ।
दधासिरत्नंद्रविणंचदाशुषेअग्नेसख्येमारिषामावयंतव ॥१४॥

तत् । ते । भद्रम् । यत् । सम्ऽइद्धः । स्वे । दमे । सोमऽआहुतः ।
जरसे । मृळयत्ऽतमः । दधासि । रत्नम् । द्रविणम् । च । दाशुषे ।
अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ १४ ॥

हेअग्ने तेत्वत्संबन्धिततत्खलुभद्रंभजनीयंप्रशस्तमित्यर्थः किंपुनस्तत् स्वेदमेस्वकीयेउत्तरवेदिलक्षणेनिवासस्थाने तस्यैपस्वोलोकोयदुत्तरवेदीनाभिरितिश्रुतेः । तस्यामुत्तरवेद्यांसमिद्धः सम्यगिद्धःप्रज्वलितः सोमाहुतोहुतेनसोमरसेनसंतर्पितःसन् जरसेऋत्विग्भिःस्तूयसे इतियदस्ति तद्भद्रमित्यर्थः एवंप्रशस्तस्त्वंमृळयत्तमः अतिशयेनास्माकंसुखयिताभूत्वा रत्नंरमणीयंकर्मफलं वाद्रविणंधनंच दाशुषेहविर्दत्तवतेयजमानायदधासिप्रयच्छसि अन्यत्समानम् ॥ समिद्धः ञिइन्धीदीप्तौ कर्मणिनिष्ठा श्वीदितोनिष्ठायामितीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । सोमाहुतः सोमेनाहुतः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । जरसे जरतिःस्तुतिकर्मा व्यत्ययेन कर्मणिकर्तृप्रत्ययः यद्वृत्तयोगादनिघातः । दधासि अनुदात्तेचेत्यभ्यस्तस्याद्युदात्तत्वम् ॥ १४ ॥

पञ्चदशीमृचमाह—

यस्मैत्वंसुद्रविणोददाशोनागास्त्वमदितेसर्वताता ।
यंभद्रेणशवसाचोदयासिप्रजावतारधसातेस्याम ॥१५॥

---

१ ऐ० ब्रा० १.२८. । २ नि० १०.८. ।

यस्मै । त्वम् । सुऽद्रविणः । ददाशः । अनागाःऽत्वम् । अदिते ।
सर्वऽताता । यम् । भद्रेण । शवसा । चोदयासि । प्रजाऽवता ।
राधसा । ते । स्याम ॥ १५ ॥

हेसुद्रविणःशोभनधन अदितेअखण्डनीयाग्ने सर्वतातासर्वासुकर्मततिषु यद्वा सर्वेषुयज्ञेषुवर्तमानाय यस्मैयजमानाय अनागास्त्वंअपापत्वंपापराहित्येनकर्मार्हत्वंददाशः प्रयच्छसि सयजमानःसमृद्धोभवति यंचयजमानं भद्रेणभजनीयेनकल्याणेनशवसाबलेनचोदयासिसंयोजयसि सोऽपिसमृद्धोभवति वयंचस्तोतारः प्रजावताप्रजाभिःपुत्रपौत्रैर्युक्तेन ते राधसा त्वयादत्तेनधनेनयुक्ताःस्याम भवेम ॥ सुद्रविणः शोभनानिद्रविणानिधनानियस्य द्रुगतौ द्रुदक्षिभ्यामिनन् द्रविणशब्दस्यान्तेसकारोपजनश्छान्दसः । ददाशः दाश्रृदाने लेटयडागमः बहुलंछन्दसीतिशपः श्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । सर्वताता सर्वदेवात्तातिलितिस्वार्थेतातिल्प्रत्ययः यास्कपक्षेतु सर्वास्ततयोयेषुयागेष्विति बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् वर्णव्यापत्त्या आत्वं उभयत्रापिसुपांसुलुगितिसप्तम्याडादेशः । चोदयासि चुदप्रेरणे लेट्याडागमः ॥ १५ ॥

षोडशीमृचमाह—

सत्वमग्नेसौभगत्वस्यविद्वानस्माकमायुःप्रतिरेहदेव ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ १६ ॥ ३२ ॥

सः । त्वम् । अग्ने । सौभगऽत्वस्य । विद्वान् । अस्माकम् । आयुः ।
प्र । तिर । इह । देव । तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ १६ ॥ ३२ ॥

हेदेव दानादिगुणयुक्ताग्ने सपूर्वोक्तगुणविशिष्टस्त्वं सौभगत्वस्यसुभगत्वंसौभाग्यंविद्वान्जानन् इहास्मिन्कर्मणि अस्माकमायुःप्रतिर प्रवर्धय प्रपूर्वस्तिरतिर्वर्धनार्थः त्वयाप्रवर्धितंनोऽस्माकं तदायुः मित्रादयःषड्देवताः ममहन्तांपूजयन्तां रक्षन्त्वित्यर्थः मित्रःप्रमीतेस्त्राता वरुणः अवशिष्टानांनिवारयिता अदितिःअदीना अखण्डनीयावादेवमाता सिन्धुःस्यन्दनशीलोदकाभिमानिदेवता पृथिवीम-

थिता भूर्देवता उवेति समुच्चये द्यौः प्रकाशमाना द्युलोकात्मा देवता एताश्च सर्वा अग्निना प्रवर्धितमायुर्मंहन्तामिति पूर्वेणान्वयः ॥ सौभगत्वस्य सुभगस्य भावः सौभगं सुभगान्मन्त्रे इति उद्गात्रादिषु पाठात् भावे अञ् पुनरपि भावप्रत्ययोत्पत्तिश्छान्दसी । प्रमहन्तां महपूजायां भौवादिकः लोटि बहुलं छन्दसीति शपः श्लुः तुजादित्वादभ्यासस्य दीर्घत्वम् ॥ १६ ॥

॥ इति प्रथमस्य षष्ठे द्वात्रिंशो वर्गः ॥ ३२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

प्रथमेमण्डलेपञ्चदशेनुवाकेप्रथमंसूक्तंव्याख्यातम् द्वेविरूपइत्येकादशर्चंद्वितीयंसूक्तम् तत्रानुक्रम्यते—द्वेएकादशौपसायवाग्नेयेइति ऋषिश्चान्यस्मादितिपरिभाषयाकुत्सस्यानुवृत्तेराङ्गिरसःकुत्सऋषिः अनादेशपरिभाषयात्रिष्टुपछन्दः उपसिप्रातःकालेहविर्भागयोग्निरस्मिन्सदेवता यद्वा आग्नेयंतदितिपूर्वंप्रोक्तत्वात् तुह्यादिपरिभाषयाइदमादीनिपञ्चसूक्तानिकेवलाग्निदेवत्यानि अतोस्यसूक्तस्यऔपसगुणविशिष्टोग्निः शुद्धोग्निर्वादेवतेतिवाशब्दार्थः प्रातरनुवाकस्याग्नेयेक्रतौत्रैष्टुभेछन्दसि इदमादिकेद्वेसूक्ते तथाचसूत्रितंअथैतस्याइतिखण्डे—द्वेविरूपेइतिसूक्तेइति । आश्विनशस्त्रेचैतेप्रातरनुवाकन्यायेनतस्यैवसमाम्नायस्येत्यतिदिष्टत्वात् ।

तत्रप्रथमामृचमाह—

ॐम् द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥१॥

द्वे इति । विरूपे इति विऽरूपे । चरतः । स्वर्थे इति सुऽअर्थे ।
अन्याऽअन्या । वत्सम् । उप । धापयेते इति । हरिः । अन्यस्याम् ।
भवति । स्वधाऽवान् । शुक्रः । अन्यस्याम् । ददृशे । सुऽवर्चाः ॥१॥

स्वर्थेस्वरणेशोभनगमनागमने यद्वा अर्थःप्रयोजनंशोभनप्रयोजनोपेते विरूपेविषमरूपे शुक्लकृष्णतयानानारूपेद्वेअहोरात्रेचरतः पुनःपुनःपर्यावर्तेते तेचाहोरात्रेअग्नेःसूर्यस्यचजनन्यौतत्ररात्रेःपुत्रःसूर्यःसहिगर्भवद्रात्रावन्तर्हितःसन्तस्याश्चरमभागादुत्पद्यते अह्नःपुत्रोग्निः सहितत्रक्रियमाणोपिप्रकाशराहित्येनासत्कल्पःसन्तस्मादह्नःसकाशान्निर्मुक्तःप्रकाशमानंस्वात्मानंलभते अनयोरेतयोःपुत्रत्वंचतैत्तिरीयैराम्नायते— तयोरेतौवत्सौ अग्निश्चादित्यश्च रात्रेर्वत्सःश्वेतआदित्यः अह्नोग्निस्ताम्रोरुणइति[१] । तेचाहोरात्रेयत्संस्वंस्वंपुत्रंअन्यान्यापरस्परव्यतिहारेणोपधापयेते स्वकीयंरसंपाययतः यद्रात्र्याकर्तव्यंस्वपुत्रस्यादित्यस्यरसस्यपायनंतदहःकरोति यदह्नाकर्तव्यं

१ तै० आ० प्रथमप्रपाठके.

स्वपुत्रस्याग्नेःरसस्यपायनंतद्दात्रिःकरोति एतच्चसायंप्रातःकालीनाहुत्यभिप्रायम् श्रूयतेच—तस्मा अग्नयेसायंहूयतेसूर्यायप्रातरिति[1]। यस्मादेवंतस्मादन्यस्यांस्वजनन्याअन्यस्यामहरात्मिकायां अग्नेर्जनन्यांहरिःरसहरणशीलआदित्यःस्वधावान्हविर्लक्षणान्नवान्भवति शुक्रःनिर्मलदीप्तिरग्निः स्वजनन्याअन्यस्यांरात्र्यामादित्यस्यजनन्यांसुवर्चाःशोभनदीप्तियुक्तःसन्ददृशेदृश्यते॥स्वर्थे ऋगतौ उपिकुपिगार्तिभ्यस्थनितिभावेकर्मणिवाथन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् शोभनोर्थोययोस्ते आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्।अन्यान्या कर्मव्यतिहारेसर्वनाम्नोद्वेभवतइतिवक्तव्यं समासवच्चबहुलमितिद्विर्भावः बहुलग्रहणात्समासवद्भावाभावेतस्यपरमाम्रेडितमितिपरस्याम्रेडितसंज्ञायामनुदात्तंचेत्याम्रेडितानुदात्तत्वम्। धापयेते धेट्पाने आदेचइत्यात्वम् ततोहेतुमतिणिच् अर्तिह्रीत्यादिनाधातोःपुगागमः तत्रहि लक्षणप्रतिपदोक्तपरिभाषानास्तीतिज्ञापितम् शाच्छासाह्वाव्येतिकृतात्वानांनिर्देशेन सहिपुक्प्राप्तिख्यापनार्थः यदितत्रलक्षणप्रतिपदोक्तपरिभाषयापुक्नप्राप्नोतिसोनर्थकःस्यात् तस्माद्ध्यापयतीत्यादाविवधापयेतेइत्यत्रापिपुगागमःसिद्धः निगरणचलनार्थेभ्यश्चेतिप्राप्तस्यपरस्मैपदस्य पादिषुधेटउपसंख्यानमितिप्रतिषेधादात्मनेपदम्। हरिः हञ्हरणे औणादिकइन्प्रत्ययः भ्रित्यादिर्नित्यमित्याद्युदात्तत्वम्। भवति एकान्याभ्यांसमर्थाभ्यामिति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। ददृशे दृशेः छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट्। सुवर्चाः शोभनंवर्चस्तेजोयस्य सोर्मनसीअलोमोषसीइत्युत्तरपदाद्युदात्तत्वम्॥१॥

द्वितीयामृचमाह—

**दशे॒मंत्वष्टु॒र्जन॑यन्त॒गर्भ॒मत॑न्द्रासोयुव॒तयो॒विभृ॑त्रम्।**
**ति॒ग्मानी॑कं॒स्वय॑शसं॒जने॑षु॒वि॒रोच॑मानं॒परि॑षीं॒नयन्ति॥२॥**

**दश॑। इ॒मम्। त्वष्टुः॑। ज॒नय॑न्त॒। गर्भ॑म्। अत॑न्द्रासः। यु॒व॒तयः॑।**
**विऽभृ॑त्रम्। ति॒ग्मऽअ॑नीकम्। स्वऽय॑शसम्। जने॑षु। वि॒ऽरोच॑मानम्।**
**परि॑। सी॒म्। न॒य॒न्ति॒॥ २॥**

अतन्द्रासः स्वकार्यजगतः पोषणेअनलसाः आलस्यरहिताः जागरूकाइत्यर्थः युवतयः नित्यतरुण्यः अजरामरणाइत्यर्थः एवम्भूतादश प्राच्याद्यादशसङ्ख्याकादिशः गर्भमिषेपुगर्भरूपेणान्तर्वर्तमानं त्वष्टुर्दीप्तान्मध्यमाद्वायोः सकाशाज्जनयन्त वैद्युतमग्निंउत्पादयन्ति यद्वा

[1] तै० ब्रा० २.१.२.१

;दशसङ्ख्याकाअङ्गुलयः त्वष्टुर्दीप्तस्यवायोः गर्भंस्वकारणभूतेवायौगर्भरूपेणवर्तमानं अग्नेर्हिवायुःकारणं वायोरग्निरितिश्रुतेः । एवंभूतमिममग्निंअरण्योःसकाशाज्जनयन्तउत्पादयन्ति कीदृश्योङ्गुलयःअतन्द्रासः पुनःपुनःकर्मकरणेआलस्यरहिताः युवतयः अपृथक्कृत्यवर्तमानाः एकस्मिन्पाणौसंहत्यावस्थिताइत्यर्थः कीदृशमग्निं विभृत्रंसर्वेषुभूतेषुविहृतंजाठररूपेणविभज्यवर्तमानमित्यर्थः तिग्मानीकं तीक्ष्णमुखंतीक्ष्णतेजसं अतएवहिवैद्युताग्निदर्शनेदृष्टिःप्रतिहन्यते स्वयशसंस्वायत्तयशस्कं अतिशयेनयशस्विनमित्यर्थः जनेषुजनपदेषुसर्वेषुदेशेषुविरोचमानंविशेषेणदीप्यमानं बहूनामुपकारकमित्यर्थः एवंभूतंसीं एनमग्निंपरिपरितः सर्वतोनयन्ति स्वस्वोपकारायसर्वेजनाः स्वकीयंदेशंप्रापयन्ति ॥ त्वष्टुः त्विषदीप्तौ नप्तृनेष्टृत्वष्टृक्षत्तृइत्यादिनाउणादिषुतृजन्तोनिपातितः अतोनित्त्वादाद्युदात्तत्वम् । विभृत्रं हृञ्हरणे अस्मात्कर्मणिनिष्ठा छान्दसोरेफोपजनःगतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् हृग्रहोर्भइतिभत्वम् यद्वा औणादिकःक्रप्रत्ययः । तिग्मानीकं तिजनिशाने युजिरुजितिजांकुश्चेतिमक् अनप्राणने अनिहृषिभ्यांचेतिकीकन् तिग्मंतीक्ष्णमनीकंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । परिषीं पूर्वपदादितिषत्वम् ॥ २ ॥

तृतीयामृचमाह—

त्रीणि॒जाना॒परि॑भूष॒न्त्य॑स्यसमु॒द्रएकं॑दि॒व्येक॑म॒प्सु ।
पूर्वा॒मनु॒प्रदिशं॒पार्थि॑वानामृ॒तून्प्र॒शास॒द्विद॑धावनु॒ष्ठु ॥३॥

त्रीणि॑ । जाना॑ । परि॑ । भू॒ष॒न्ति॒ । अ॒स्य॒ । स॒मु॒द्रे । एक॑म् । दि॒वि । एक॑म् । अ॒प्ऽसु । पूर्वा॑म् । अनु॑ । प्र । दिश॑म् । पार्थि॑वानाम् । ऋ॒तून् । प्र॒ऽशास॑त् । वि । द॒धौ॒ । अ॒नु॒ष्ठु ॥ ३ ॥

अस्याग्नेस्त्रीणित्रिसंख्याकानि जाना जननानिजन्मानिपरिभूषन्ति परितःसर्वतोलंकुर्वन्ति यद्वा परीत्येपसमित्येतस्यस्थाने अस्याग्नेस्त्रीणिजन्मानिसंभवन्ति समुद्रे अब्धौवडवानलरूपेणैकंजन्म दिविद्युलोकेआदित्यात्मनाएकं अप्सुआपइत्यन्तरिक्षनाम अन्तरिक्षेवैद्युताग्निरूपेणैकं एवमग्निस्त्रियात्मानंविभज्यत्रिषुस्थानेषुवर्ततइत्यर्थः तत्रादित्यात्मनावर्तमानःसोग्निर्ऋतून्वसन्ताद्यान्षड्ऋतून्प्रशासत्प्रकर्षेणविभक्ततयाज्ञापयन् पार्थिवानांपृथिव्याःसम्बन्धिनां सर्वेषांप्राणिनांपूर्वांप्राचींप्रदिशंप्रकृष्टांककुभं अनुष्ठु इत्येतदव्ययंसम्यक्शब्दसमानार्थं सुष्ठुइतिवत् अनुविपूर्वो धा सम्यगनुक्रमेणविदधौकृतवान् स्वतोभेदरहितयोरखण्डयोर्दिक्कालयोः प्राच्यादिभेदोवसन्ता-

दिभेदश्चसूर्यगत्यानिष्पाद्यते अतःसूर्यएवतयोःकर्तेत्यर्थः ॥ जाना जनीप्रादुर्भावे भावेघञ् कर्षात्वतइत्यन्तोदात्तत्वेप्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम् शेश्छन्दसिबहुलमितिशेर्लोपः। भूषन्ति भूषअलंकारे भौवादिकः यद्वा भवतेर्लेटिसिब्बहुलंलेटीतिसिप् आगमानुशासनस्यानित्यत्वादिङभावः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावश्च। दिवि अप्सु उभयत्र ऊडिदमिति विभक्तेरुदात्तत्वम्। पार्थिवानां पृथिव्याञाञावितिप्राग्दीव्यतीयोञ्प्रत्ययः। प्रशासत् शासुअनुशिष्टौ अस्माल्लटःशतृ जक्षित्यादयःषडितिअभ्यस्तसंज्ञायां नाभ्यस्ताच्छतुरितिनुम्प्रतिषेधः कृदुत्तरपदप्रकृतिस्वरत्वम्। अनुष्ठु अपदुःसुषुस्थइतिविधीयमानःकुप्रत्ययोबहुलवचनात्तिष्ठतेरनुपूर्वादपिभवति ॥ ३ ॥

चतुर्थीमृचमाह—

कइ॒मंवो॑नि॒ण्यमाचि॑केतव॒त्सोमा॒तॄर्ज॑नयतस्व॒धाभिः॑।
व॒ह्वीनां॒गर्भो॑अ॒पसा॑मु॒पस्था॑न्म॒हान्क॒विर्निश्च॑रतिस्व॒धावा॑न् ॥४॥

कः। इ॒मम्। वः॒। नि॒ण्यम्। आ। चि॒के॒त॒। व॒त्सः। मा॒तॄः। ज॒न॒य॒त॒। स्व॒धाभिः॑। व॒ह्वीना॑म्। गर्भः॑। अ॒पसा॑म्। उ॒पऽस्था॑त्। म॒हान्। क॒विः। निः। च॒र॒ति॒। स्व॒धाऽवा॑न् ॥ ४ ॥

हेऋत्विग्यजमानाः निण्यं निर्णीतान्तर्हितनामैतत् अन्नादिपुगर्भरूपेणान्तर्हितं तथाचमन्त्रान्तरम्—गर्भोयोअपांगर्भोवनानांगर्भश्चस्थातांगर्भश्चरथामिति[1]। एवंभूतमिममग्निंवोयुष्माकंमध्येकआचिकेतकोजानाति नकोपीत्यर्थः सोयमग्निर्वत्सःमेघस्थानामपांविद्युताग्निरूपेणपुत्रस्थानीयःसन्मातृःतस्यमातृस्थानीयानिवृष्ट्युदकानिस्वधाभिर्हविर्लक्षणैरन्नैःजनयतउत्पादयति तथाचस्मर्यते—अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति। अपिच वह्वीनांमेघस्थानामपांगर्भःवैद्युतरूपेणगर्भस्थानीयः सोग्निःअपसामुपस्थात्समुद्रान्निश्चरति औपसाग्निरूपेणादित्यःसन्निर्गच्छति कीदृशः महान् तेजसाप्रौढः कविःक्रान्तदर्शी स्वधावानहविर्लक्षणान्नवान् एकएवाग्निर्होमनिष्पादकत्वलक्षणेनपार्थिवरूपेणवैद्युतात्मनाऔपसरूपेणादित्यात्मनाचविभज्यवर्ततइत्यर्थः ॥ चिकेत कितज्ञाने छान्दसोलिट्। जनयत जनीप्रकृरुरञोमन्ताश्चेनिमित्वान्मितांह्रस्वइतिह्रस्वत्वम् पूर्ववच्छान्दसोलङ्। वह्वीनां नित्यंछन्दसी-

[1] ऋ० सं० १. ५. १२.।

तिव्रहुशब्दावङीप् ङ्याच्छन्दसिबहुलमितिनामउदात्तत्वम् । अपसां आप्नृव्याप्तौ आपःकर्माख्यायांह्रस्वश्चनुट्चवेतिबहुलवचनादकर्माख्यायामपिआमोऽवेरसिप्रत्ययोह्रस्वश्च । उपस्थात् उपतिष्ठन्त्यापोऽत्रेत्युपस्थः आतश्चोपसर्गेइतिकत्यल्युटोबहुलमितिबहुलवचनादधिकरणेकप्रत्ययः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्मानां॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।
उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥५॥१॥

आ॒विः॒ऽत्यः॑ । व॒र्ध॒ते॒ । चारुः॑ । आ॒सु॒ । जि॒ह्मानां॑म् । ऊ॒र्ध्वः ।
स्वऽय॑शाः । उ॒पऽस्थे॑ । उ॒भे इति॑ । त्वष्टुः॑ । बि॒भ्य॒तुः॒ । जाय॑मानात् ।
प्र॒ती॒ची इति॑ । सिं॒हम् । प्रति॑ । जो॒ष॒ये॒ते॒ इति॑ ॥ ५ ॥ १ ॥

आसुमेघस्थास्वप्सु वैद्युतात्मनावर्तमानोऽग्निः चारुःशोभनदीप्तिःसन् आविष्ट्योवर्धतेआविर्भूतः प्रकाशमानोवृद्धिमाप्नोति किंकुर्वन् जिह्मानांकुटिलानांमेघेपुतिर्यगवस्थितानांतासामपामुपस्थेउत्सङ्गेस्वयशाः स्वायत्तयशस्कोऽग्निः ऊर्ध्वःऊर्ध्वज्वलनःसन् अकारणास्वप्सुतिर्यगवस्थितास्वपिस्वयमूर्ध्वंज्वलन्नित्यर्थः तदुक्तंवैशेषिकेः—अग्नेरूर्ध्वज्वलनंवायोस्तिर्यक्पवनंअणुमनसोराद्यंकर्मेत्यान्यदृष्टकारितानीति । अपिच उभेद्यावापृथिव्यौत्वष्टुर्दीप्तात्जायमानादुत्पद्यमानात्तस्मादग्नेर्बिभ्यतुः भयंप्रापतुः तदनन्तरंउत्पन्नंसिंहंसहनशीलंअभिभवनशीलंतमग्निंप्रतीची प्रत्यञ्चन्त्यौ प्रतिगच्छन्त्यौ आभिमुख्येनप्राप्नुवन्त्यौप्रतिजोषयेतेसेवेते यास्कस्त्वाह—आविरावेदनात्त्योवर्धतेचारुरासुचारुचरतेर्जिह्मंजिहीतेरूर्ध्वउच्छ्रितोभवतिस्वयशाआत्मयशाउपस्थउपस्थानेउभेत्वष्टुर्बिभ्यतुर्जायमानात्प्रतीचीसिंहंप्रतिजोषयेतेद्यावापृथिव्याविरितवाहोरात्रेइतिवारणीइतिवापिंचेनेप्रत्युक्तेसिंहंसहनंप्रत्यासेवेतेइति[1] ॥ आविष्ट्यः आविःशब्दात् छन्दसीतिशैषिकस्त्यप् ह्रस्वात्तादौतद्धितइतिषत्वम् । आसु इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावित्यशादेशोऽनुदात्तः विभक्तिश्चसुप्त्वादनुदात्तेति सर्वानुदात्तत्वम् नचोडिदमितिविभक्तेरुदात्तत्वंशङ्कनीयम् अन्वोदात्तादिदमुशब्दाद्विहितविधीयते । प्रतीची प्रतिपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अञ्चतेश्चोपसंख्यानमितिङी-

1 नि० ८. १५. ।

प् अचइत्यकारलोपेचावितिदीत्वर्थम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घः । जोषयेते जुषीप्रीतिसेवनयोः स्वार्थेणिच् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेप्रथमोवर्गः ॥ १ ॥

षष्ठीमृचमाह—

उभेभद्रेजोषयेतेनमेनेगावोनवाश्राउपतस्थुरेवैः ।
सदक्षाणांदक्षपतिर्बभूवाञ्जन्तियंदक्षिणतोहविर्भिः ॥६॥

उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः । सः । दक्षाणाम् । दक्षऽपतिः । बभूव । अञ्जन्ति । यम् । दक्षिणतः । हविःऽभिः ॥ ६ ॥

उभेअहश्चरात्रिश्च यद्वा द्यावापृथिव्यौ अरणीवा भद्रेभजनीयेशोभनांग्यौमेनेस्त्रियौजोषयेतेन सेवेतेइव यथाशोभनेस्त्रियौचमरहस्तेराजानंउभयतःसेवेते एवंद्यावापृथिव्यौएनमग्निंउभयतःसेवेतेइत्यर्थः अपिच वाश्राः हंभारवंकुर्वन्त्यः गावोन गावोयथा एवैः स्वकीयैश्चरित्रैःआदरातिशयेनस्वकीयान्वत्सानुपतस्थुः संगच्छन्ते तथेममग्निंद्यावापृथिव्यावुपस्थिते भवतः पूर्वंसेवनमात्रमुक्तं इदानींपुनः गोनिदर्शनेनतत्रैवादरातिशयोद्योत्यते अतःसोग्निर्दक्षाणांसर्वेषांबलानांदक्षपतिर्बभूवआसीत् बलानांमध्येयदतिशयितंबलंतस्याधिपतिर्बभूवेत्यर्थः यमग्निंदक्षिणतः आहवनीयस्यदक्षिणभागेवस्थिताऋत्विजः हविर्भिश्चरुपुरोडाशादिभिः अञ्जन्ति आर्द्रीकुर्वन्तितर्पयन्ति सोग्निरितिपूर्वेणान्वयः ॥ वाश्राः वाश्रृशब्दे स्फायितश्चीत्यादिनारक् । एवैः इण्गतौ इण्शीङ्भ्यांवन् इतिभावेवन्प्रत्ययः ॥ ६ ॥

सप्तमीमृचमाह—

उद्यंयमीतिसवितेवबाहूउभेसिचौयततेभीमऋञ्जन् ।
उच्छुक्रमत्कमजतेसिमस्मान्नवामातृभ्योवसनाजहाति ॥७॥

उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋञ्जन् । उत् । शुक्रम् । अत्कम् । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ ७ ॥

सवितेवसर्वस्यप्रेरकः आदित्योयथाबाहूबाहुस्थानीयान्रश्मीनुद्गमयति तथा अयमौपसोग्निः स्वकीयानितेजांसिउद्यंयमीति भृशं उद्यतानिऊर्ध्वाभिमुखानिकरोति तदनन्तरं भीमः सर्वेषांभयंकरोग्निः उभेसिचौ उभेद्यावापृथिव्यौ ऋञ्जन्प्रसाधयन्स्वतेजसाअलङ्कुर्वन्यततेस्वव्यापारे प्रयतते तदनन्तरंसिमस्मात्सर्वस्मात्भूतजातात् शुक्रंदीप्तंअत्कंसारभूतंरसंउदजतेरश्मिभिरूर्ध्वंमादत्ते अपिच मातृभ्यःस्वमातृस्थानीयेभ्योवृष्ट्युदकेभ्यःसकाशान्नवा नवानिमत्यग्राणिवसनासर्वस्यजगतः आच्छादकानितेजांसिजहातिउद्गमयति॥ यंयमीति यमउपरमे अस्माद्यङ्लुकि नुगतोनुनासिकान्तस्येतिअभ्यासस्यनुगागमः एवञ्चानुस्वारोपलक्षणार्थम्। सिचौ षिचिर्क्षरणे सिञ्चतः फलेनसंयोजयतइतिसिचौद्यावापृथिव्यौ क्विप्चेतिक्विप् ।यततेयतीप्रयत्ने । अत्कम् अत सातत्यगमने इण्भीकापाशल्यतिमर्चिभ्यःकन् इतिकन् नित्त्वादाद्युदात्तत्वम् । सिमस्मात् सिमशब्दःसर्वशब्दपर्यायः । नवा वसना उभयतः शेश्छन्दसिबहुलमितिशेर्लोपः । जहाति ओहाक् त्यागे जौहोत्यादिकः ॥ ७ ॥

अष्टमीमृचमाह—

त्वेषंरूपंकृणुतउत्तरंयत्संपृञ्चानःसदनेगोभिरद्भिः ।
कविर्बुध्नंपरिमर्मृज्यतेधीःसादेवतातासमितिर्बभूव ॥८ ॥

त्वेषम् । रूपम् । कृणुते । उत्ऽतरम् । यत् । सम्ऽपृञ्चानः ।
सदने । गोभिः । अत्ऽभिः । कविः । बुध्नम् । परि । मर्मृज्यते ।
धीः । सा । देवऽताता । सम्ऽइतिः । बभूव ॥८॥

सदनेन्तरिक्षेगोभिर्गन्त्रीभिरद्भिःमेघस्थाभिःसहसंपृञ्चानःवैद्युतरूपेणसंयुक्तःसन् त्वेषंदीप्तंसर्वैर्द्रष्टुमशक्यंउत्तरंउत्कृष्टतररूपंवैद्युतंप्रकाशंयद्यदाकृणुतेकरोति तदानींकविःक्रान्तदर्शीधीः सर्वेषांधारकःसोग्निःबुध्नंसर्वस्योदकस्यमूलभूतमन्तरिक्षंपरिमर्मृज्यतेपरितोमार्ष्टिस्वतेजसाआच्छादयतितस्याग्नेःसादेवताता देवेनदेवनशीलेनाग्निना तताविस्तारितादीप्तिःअस्माभिःसुतासतीसमितिर्बभूव तेजसांसंहतिर्भवति ॥ संपृञ्चानःपृचीसंपर्के रौधादिकःअस्माल्लटःशानच् श्नसोरल्लोपइत्यकारलोपः ।सदने सीदन्त्यस्मिन्गन्धर्वादयइतिसदनमन्तरिक्षं अधिकरणेल्युट्। मर्मृज्यते मृजूशुद्धौ अस्माद्यङि मर्मृज्यतेमर्मृज्यमानासइतिचोपसङ्ख्यानमितिनिपातनादभ्यासस्यरुगाग-

मः । देवताता देवेनततादेवताता तनोतेःकर्मणिनिष्ठा अनुदात्तोपदेशेत्यादिनानुनासिकलोपः व्यत्ययेनात्वम् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

नवमीमृचमाह—

उरुतेज्रयःपर्येतिबुध्नंविरोचमानंमहिषस्यधाम ।
विश्वेभिरग्नेस्वयशोभिरिद्धोदब्धेभिःपायुभिःपाह्यस्मान् ॥९॥

उरु । ते । ज्रयः । परि । एति । बुध्नम् । विऽरोचमानम् । महिषस्य । धाम । विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ ९ ॥

महिषस्यमहतः ते तव ज्रयःराक्षसादीनामभिभावुकंविरोचमानंविशेषेणदीप्यमानं उरुविस्तीर्णधामतेजःबुध्नमपांमूलभूतंअन्तरिक्षंपर्येतिपरितोव्याप्नोति हेअग्ने इद्धः अस्माभिःप्रज्वलितः सन् विश्वेभिःसर्वैःस्वयशोभिःस्वकीयैरात्मीयैस्तेजोभिरस्मान्पाहिरक्ष कीदृशैःअदब्धेभिःराक्षसादिभिरहिंसितैः पायुभिःपालनशक्तैः ॥ ज्रयः जिज्रिअभिभवे असुन् । अदब्धेभिः दम्भुदम्भे निष्ठायां यस्यविभाषेतीट्प्रतिषेधः अनिदितामितिनलोपः झषस्तथोर्धोधइतिधत्वम् नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् बहुलंछन्दसीतिभिसऐसभावः ॥ ९ ॥

दशमीमृचमाह—

धन्वन्त्स्रोतःकृणुतेगातुमूर्मिंशुक्रैरूर्मिभिरभिनक्षतिक्षाम् ।
विश्वासनानिजठरेषुधत्तेन्तर्नवासुचरतिप्रसूषु ॥१०॥

धन्वन् । स्रोतः । कृणुते । गातुम् । ऊर्मिम् । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षाम् । विश्वा । सनानि । जठरेषु । धत्ते । अन्तः । नवासु । चरति । प्रऽसूषु ॥ १० ॥

धन्वन्नभसिगातुंगमनशीलमूर्मिमुदकसंघंअयमग्निःस्रोतःकृणुते स्रोतसामवाहरूपेणयुक्तंकरोति शुक्रैर्निर्मलैरूर्मिभिः तेजःसंघैःक्षांभूमिंअभिनक्षति अभिव्याप्नोति स्वतेजोभिरन्तरिक्षेजलसंघमुत्पाद्यतेनसर्वांभूमिमभिवर्षतीत्यर्थः पश्चात्विश्वासर्वाणिसनानि अन्ननामैतत् सर्वाण्यन्ना-

निजठरेषुधत्ते अवस्थापयति तदर्थंनवासुवृष्ट्यनन्तरमुत्पन्नासु प्रसूपुसर्वेषामन्नानांप्रसवित्रीष्वो-षधीषु पाकार्थमन्तश्चरतिमध्येवर्त्तते अन्तरवस्थितेनभौमाग्निनासर्वाओषधयःपच्यन्ते ॥ धन्व-न् रिविरविधविगत्यर्थाः इदित्त्वान्नुम् कनिन्युवृषीत्यादिनाकनिन् सुपांसुलुगितिसप्तम्यालुक् धन्वान्तरिक्षंधन्वन्त्यस्मादापइतियास्कः । नित्त्वादाद्युदात्तत्वम् । गातुं गाङ्गतौ कमिमनिज-मीत्यादिनातुप्रत्ययः । ऊर्मिम् अर्तेरूच्चेतिमिप्रत्ययः । नक्षति नक्षगतौ ॥ १० ॥

एकादशीमृचमाह—

एवानो॑अग्ने॒स॒मिधा॑वृधा॒नोरे॒वत्पा॑वक॒श्रव॑से॒विभा॑हि ।
तन्नो॑मि॒त्रोवरु॑णोमामहन्ता॒मदि॑तिः॒सिन्धुः॑पृथि॒वीउ॒तद्यौः॥११॥२

ए॒व । नः॒ । अ॒ग्ने॒ । स॒म्ऽइधा॑ । वृ॒धा॒नः । रे॒वत् । पा॒व॒क॒ । श्रव॑से । वि । भा॒हि॒ । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ११ ॥ २ ॥

हेपावक शोधकाग्ने समिधाअस्माभिर्दत्तेनसमिदादिद्रव्येण एव एवमुक्तप्रकारेणवृधानोवर्ध-मानःसन् रेवत रयिमत्तेधनयुक्तायनोस्माकंश्रवसेन्नायविभाहि विशेषेणदीप्यस्वअस्माकंतादृशम-न्नंप्रयच्छेत्यर्थः नोस्माकंतदन्नंमित्रादयोममहन्तांपूजयन्तांरक्षन्त्वित्यर्थः उतशब्दःसमुच्चये पृ-थिवीचद्यौश्चेत्यर्थः॥ एव निपातस्यचेतिसंहितायांदीर्घः। वृधानः वृधेरन्तर्भावितण्यर्थात्ताच्छी-लिकश्चानश् बहुलंछन्दसीतिशपोलुक् चानशःसार्वधातुकत्वेनङित्वाल्लघूपधगुणाभावः लसा-र्वधातुकत्वाभावेनअनुदात्तत्वाभावेचित्स्वरएवशिष्यते । रेवत रयिशब्दान्मतुप् रयेर्मतौबहुल-मितिसम्प्रसारणम् छन्दसीरइतिमतुपोवत्वम् रेशब्दाच्चेतिमतुपउदात्तत्वम् सुपांसुलुगितिचतु-र्थ्यालुक् ॥ ११ ॥

॥ इतिप्रथमस्यसप्तमेद्वितीयोवर्गः ॥ २ ॥

समन्नथेतिनवर्चंतृतीयंसूक्तं कुत्सस्यार्षंत्रैष्टुभं द्रविणोदस्त्वगुणविशिष्टोग्निः शुद्धाग्निर्वादेव-ता तथाचानुक्रान्तम्—सप्रत्नथानवद्रविणोदसइति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेनसहो-

१ नि० ५।५।

कःसूक्तविनियोगः व्यूळ्हस्यदशरात्रस्य षष्ठेहन्याग्निमारुतेइदंसूक्तंजातवेदस्यनिविद्धानं व्यूळ्हश्चेदितिखण्डेसूत्रितम्—सप्रत्नथेत्याग्निमारुतमिति। सप्रत्नथासहसाजायमानइतिजातवेदस्यं समानोदर्कमित्यादिब्राह्मणम्। महापितृयज्ञेस्विष्टकृत्स्थानीयस्यकव्यवाहनस्यसप्रत्नथेत्येपायाज्या दक्षिणाग्निरितिखण्डेसूत्रितम्—सप्रत्नथासहसाजायमानइत्यग्निःस्विष्टकृत्कव्यवाहनइति।

तामेतांसूक्तेप्रथमामृचमाह—

सप्रत्नथासहसाजायमानःसद्यःकाव्यानिबळधत्तविश्वा।
आपश्चमित्रंधिषणाचसाधन्देवाअग्निंधारयन्द्रविणोदाम्॥१॥

सः। प्रत्नऽथा। सहसा। जायमानः। सद्यः। काव्यानि। बट्। अधत्त। विश्वा। आपः। च। मित्रम्। धिषणा। च। साधन्। देवाः। अग्निम्। धारयन्। द्रविणःऽदाम्॥ १॥

सहसाबलेनजायमानोनिर्मथनेनोत्पद्यमानःसोग्निः सद्यस्तदानीं उत्पत्त्यनन्तरमेव प्रत्नथाप्रत्नइव चिरन्तनइवविश्वाविश्वानिसर्वाणिकाव्यानिकवेःक्रान्तदर्शिनःप्रगल्भस्यकर्माणि बट् सत्यं अधत्तअधारयत्, पूर्वविद्यमानइवअग्निरुत्पत्तेःसमकालमेवस्वकीयंहविर्वहनादिकं सर्वंकार्यमकरोदित्यर्थः इममग्निंविद्युत्रूपेणवर्तमानंमेघेष्ववस्थिताआपश्च धिषणाच या माध्यमिकावाक् साच मित्रंसखिभूतंसाधन्साधयन्ति कुर्वन्ति तमिमंद्रविणोदां द्रविणस्यधनस्यदातारमग्निंदेवाऋत्विजोधारयन्गार्हपत्यादिरूपेणधारयन्ति यद्वा देवाएवेन्द्रादयइममग्निं द्रविणोदां हविर्लक्षणस्यधनस्यदातारंकृत्वा दूत्येधारयन् धारयन्ति॥ प्रत्नथा प्रत्नपूर्वविश्वेमात्थाल्छन्दसीतिइवार्थेथाल्प्रत्ययः। काव्यानि कवेःकर्मकाव्यं गुणवचनब्राह्मणादिभ्यइति ष्यञ् ञित्वादाद्युदात्तत्वम्। साधन् षिधुसंराद्धौ णिचि सिध्यतेरपारलौकिकेइत्यात्वम् लेट्यडागमः इतश्चलोपइतीकारलोपः छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिलोपः। द्रविणोदां द्रविणानिददातीतिद्रविणोदाः दुगतौ दुदक्षिभ्यामिनन् छान्दसःपूर्वपदस्यलुक् अन्येष्वपिदृश्यन्तइतिददातेर्विच् सकारान्तंतु असुनिकृतेनिष्पद्यते॥ १॥

१ ऐ० ब्रा० ५. १५.।

द्वितीयामृचमाह—

सपूर्वयानिविदाकव्यतायोरिमाःप्रजाअजनयन्मनूनाम् ।
विवस्वताचक्षसाद्यामपश्चदेवाअग्निंधारयन्द्रविणोदाम् ॥२॥

सः । पूर्वया । निःविदा । कव्यता । आयोः । इमाः । प्रऽजाः ।
अजनयत् । मनूनाम् । विवस्वता । चक्षसा । द्याम् । अपः । च ।
देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥ २ ॥

सोग्निः पूर्वयाप्रथमयाअग्निर्देवेद्धइत्यादिकयानिविदाकव्यता गुणिनिष्ठगुणाभिधानलक्षणास्तुतिःकुर्वताआयोर्मनोः सम्बन्धिनाउक्थेनचस्तूयमानः सोग्निर्मनूनांसम्बन्धिनीरिमाः प्रजाअजनयत् उदपादयत् मनुनास्तुतःसन् मानवीःसर्वाःप्रजाअजनयदित्यर्थः तथाविवस्वताविवासनवताविशेषेणाच्छादयताचक्षसाआत्मीयेनतेजसाद्यांद्युलोकंअपश्चान्तरिक्षंचव्याप्नोतीतिशेषः अन्यत्समानम् ॥ कव्यता कुशब्दे अचोयदितिभावेयत् कव्यंकवनंस्तुतिंकरोति तत्करोतीतिणिच् तदन्तात्क्विप् बहुलमन्यत्रापिसंज्ञाछन्दसोरितिणिलुक् ततस्तुक् धातुस्वरेणान्तोदात्तत्वम् । आयोः इणूगतौ छन्दसीणइत्युणप्रत्ययः ॥ २ ॥

तृतीयामृचमाह—

तमीळतप्रथमंयज्ञसाधंविशआरीराहुतमृञ्जसानम् ।
ऊर्जःपुत्रंभरतंसृप्रदानुंदेवाअग्निंधारयन्द्रविणोदाम् ॥३ ॥

तम् । ईळत । प्रथमम् । यज्ञऽसाधम् । विशः । आरीः । आऽहुतम् ।
ऋञ्जसानम् । ऊर्जः । पुत्रम् । भरतम् । सृप्रऽदानुम् । देवाः ।
अग्निम् । धारयन् । द्रविणःऽदाम् ॥ ३ ॥

हेविशः सर्वेमनुष्याः आरीः आर्तिस्वामिनंगच्छन्त्योयूयंतंअग्निमीळतस्तुध्वम् कीदृशं प्रथमं सर्वेषुदेवेषुमुख्यं यज्ञसाधं यज्ञस्यदर्शपूर्णमासादेःसाधकंनिष्पादकं आहुतंहविर्भिस्तर्पितं

ऋञ्जसानं स्तोत्रैःप्रसाध्यमानं ऊर्जोन्नस्यपुत्रंभुक्तेनान्नेनजाठराग्नेर्वर्धनात्अग्नेरन्नपुत्रत्वम् भरतं हविषोभर्तारं यद्वा प्राणरूपेणसर्वासांप्रजानांभर्तारं श्रूयतेच—स्वदेहवाएषप्राणोभूत्वाप्रजाविभर्तितस्मादेषभरतइति । सृप्रदानुं सर्पणशीलदानयुक्तं अविच्छेदेनधनानिप्रयच्छन्तमित्यर्थः ॥ देवाइत्यादिगतम् । ईळत ईडस्तुतौ लोटिव्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिशपोलुग्भावः । यज्ञसाधं यज्ञंसाधयतीतियज्ञसाध् साधयतेःक्विप् णेरनिटीतिणिलोपः । आरीः ऋगतौ सृचिसृत्यादिनायङ् यङोचिचेतिचशब्देनबहुलग्रहणाद्नैमित्तिकोलुक् प्रत्ययलक्षणेनद्विर्भावेउरदत्वहलादिशेषौ रुग्रिकौचलुकीतिरुक् यङ्लुगन्तादौणादिकःक्विप्रत्ययः यणादेशेरोरीतिरेफलोपः ढ्रलोपेपूर्वस्येतिदीर्घत्वम् कृदिकारादक्तिनइतिङीप् जसि वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् व्यत्ययेनाद्युदात्तत्वम् । ऋञ्जसानं ऋञ्जतिःप्रसाधनकर्मा ऋञ्जिवृधिमन्दिसहिभ्यः किद् इतिकर्मण्यसानच् । भरतं भृञ्भरणे भृमृदृशीत्यादिनाअतच् । सृप्रदानुं सृप्लृगतौ स्फायितञ्चीत्यादिनारक् सृप्रोदानुर्दानंयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ३ ॥

चतुर्थीमृचमाह—

**समा॒त॒रिश्वा॑पुरु॒वार॑पुष्टिर्वि॒दद्गा॒तुंतन॑यायस्व॒र्वित् ।**
**वि॒शांगो॒पाज॑नि॒तारोद॑स्योर्दे॒वाअ॒ग्निंधा॑रयन्द्रविणो॒दाम् ॥४॥**

सः । मा॒त॒रिश्वा॑ । पु॒रु॒वार॑ऽपुष्टिः । वि॒दत् । गा॒तुम् । तन॑याय । स्वः॒ऽवित् । वि॒शाम् । गो॒पाः । ज॒नि॒ता । रोद॑स्योः । दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥ ४ ॥

सोग्निस्तनयायअस्मदीयायपुत्रायगातुंअनुष्ठानमार्गंविदत् लंभयतु कीदृशः मातरिश्वा मातरिसर्वस्यजगतोनिर्मातर्यन्तरिक्षेश्वसन् वर्तमानः पुरुवारपुष्टिः पुरुभिर्बहुभिर्वारावरणीयापुष्टिरभिवृद्धिर्यस्यसतथोक्तः स्वर्वित् स्वः स्वर्गस्ययागद्वारेणलंभयिताविशांसर्वासांप्रजानांगोपागोपायितारक्षिता रोदस्योर्द्यावापृथिव्योर्जनिताजनयिताउत्पादयिता ॥ देवाइत्यादिगतम् । मातरिश्वा श्वन्नुक्षन्नित्यादौमातृशब्दोपपदात् श्वसप्राणनेइत्यस्मात् कनिन्प्रत्ययान्तोनिपात्यते । विदत् विदॢलाभे अस्मादन्तर्भावितण्यर्थात् छान्दसोलुङ् लृदित्वात् च्लेरङादेशः पादादित्वान्निघाताभावः । जनिता जनितामन्त्रेइ निटृचिणिलोपोनिपात्यते ॥ ४ ॥

पञ्चमीमृचमाह–

नक्तोपासावर्णमामेम्यानेधापयेतेशिशुमेकंसमीची ।
द्यावाक्षामारुक्मोअन्तर्विभातिदेवाअग्निंधारयन्द्रविणोदाम् ॥५॥३॥

नक्तोषसा । वर्णम् । आमेम्याने इत्याऽमेम्याने । धापयेते इति ।
शिशुम् । एकम् । समीची इति सम्ऽईची । द्यावाक्षामा । रुक्मः ।
अन्तः । वि । भाति । देवाः । अग्निम् । धारयन् । द्रविणःऽदाम् ॥५॥३॥

नक्तोषसा रात्रिरहश्च वर्णस्वकीयंरूपं आमेम्यानेपरस्परंपुनःपुनर्हिंसन्त्यौ समीची सङ्गते संश्लिष्टे एवम्भूते अहस्त्रियामे एकंशिशुं अह्नःपुत्रमग्निंधापयेते हवींषिपाययेते रुक्मोरोचमानः सोग्निः द्यावाक्षामाद्यावापृथिव्योरन्तर्मध्येविभातिविशेषेणप्रकाशते अन्यत्पूर्ववत् ॥ नक्तोषसा नक्तेतिरात्रिनाम नक्ताउषाश्चनक्तोषसा सुपांसुलुगितिविभक्तेराकारः अन्येषामपीतिसांहितिकमुपधादीर्घत्वम् देवताद्वन्द्वेचेतिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । आमेम्याने मीङ्हिंसायां अस्माद्यङ्लुगन्ताद्व्यत्ययेनशानच् अदादिवच्चेतिवचनाच्छपोलुक् एरनेकाचइतियण् अभ्यस्तानामादिरित्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् । धापयेते धेट्पाने अस्माण्ण्यन्तान्निगरणचलनेतिमात्रस्यपरस्मैपदस्यपादिषुधेटउपसंख्यानमितिवचनात्नपादम्याङ्यमेतिप्रतिषेधः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेणिचएवस्वरःशिष्यते पादादित्वान्निघाताभावः । समीची सम्पूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः समःसमीतिसम्यादेशः अञ्चतेश्चोपसंख्यानमितिङीप् अचइत्यकारलोपः चावितिदीर्घत्वम् उदात्तनिवृत्तिस्वरेणङीपउदात्तत्वम् पदकारस्यत्वयमभिप्रायः उदईदितिविधीयमानमीत्वंसमउत्तरस्याप्यञ्चतेर्व्यत्ययेनभवतीति वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । द्यावाक्षामा दिवोद्यावेतिद्यावादेशः सुपांसुलुगितिषष्ठ्याडादेशः देवताद्वन्द्वेचेतिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेतृतीयोवर्गः ॥ ३ ॥

षष्ठीमृचमाह–

रायोबुध्नःसङ्गमनोवसूनांयज्ञस्यकेतुर्मन्मसाधनोवेः ।
अमृतत्वंरक्षमाणासएनंदेवाअग्निंधारयन्द्रविणोदाम् ॥६॥

रा॒यः । बु॒ध्नः । स॒म्ऽगम॑नः । वसू॑नाम् । य॒ज्ञस्य॑ । के॒तुः । म॒न्म॒ऽसाध॑नः
वेरिति॒वेः । अ॒मृ॒त॒ऽत्वम् । रक्ष॑माणासः । ए॒न॒म् । दे॒वाः । अ॒ग्निम् ।
धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥ ६ ॥

योग्निः रायोधनस्यबुध्नोमूलभूतः आहुतिद्वारासर्वेषांधनानांकारणत्वाद्वसूनांनिवासहेतूनांधनानांसङ्गमनः सङ्गमयितास्तोतॄणांमापयिता यज्ञस्यदर्शपूर्णमासादेःकेतुःकेतयिताज्ञापयिता वेःआत्मानमभिगच्छतःपुरुषस्यमन्मसाधनःमननीयस्याभिलषितस्यसाधयिता अमृतत्वंस्वकीयामरणत्वंरक्षमाणासःपालयन्तोदेवाः एनंधनस्यदातारमग्निंधारयन्ति ॥ रायः ऊडिदमिति विभक्तेरुदात्तत्वम् । सङ्गमनः नन्द्यादिलक्षणोल्युः । वेः वीगत्यादिषु अस्मादौणादिकइमत्ययः टिलोपश्च ॥ ६ ॥

सप्तमीमृचमाह

नू॒चपु॒राच॒सद॑नंरयी॒णांजा॒तस्य॑च॒जाय॑मानस्यच॒क्षाम् ।
स॒तश्च॑गो॒पांभव॑तश्च॒भूरे॑र्दे॒वाअ॒ग्निंधा॑रयन्द्रवि॒णो॒दाम् ॥ ७ ॥

नु । च॒ । पु॒रा । च॒ । सद॑नम् । र॒यी॒णाम् । जा॒तस्य॑ । च॒ ।
जाय॑मानस्य । च॒ । क्षाम् । स॒तः । च॒ । गो॒पाम् । भव॑तः । च॒ । भूरे॑ः ।
दे॒वाः । अ॒ग्निम् । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदाम् ॥ ७ ॥

नूचेतिनिपातसमुदायः अद्येत्यस्यार्थे नूचिदितिनिपातः पुराणनवयोर्नूचेतिचेतियास्कः[1] । नूच अद्यास्मिन्कालेपुराच रयीणांसर्वेषांधनानांसदनमावासस्थानंजातस्योत्पन्नस्यकार्यजातस्यचजायमानस्योत्पद्यमानस्यच क्षां निवासयितारंसतश्चसर्वत्रविद्यमानस्वभावस्यनित्यस्यचाकाशादेर्भवतश्चसद्भावंप्राप्नुवतोभूरेः असंख्यातस्यान्यस्यचभूतजातस्यगोपांगोपायितारंरक्षितारं द्रविणोदां धनप्रदमेवंगुणविशिष्टमग्निंदेवाधारयन् हविर्वोढृत्वेनधारयन्ति ॥ नूच ऋचितुनुघेतिदीर्घः ॥ रयीणां नामन्यतरस्यामितिनामउदात्तत्वम् । क्षां क्षिनिवासगत्योः अस्माण्णिच् वृद्ध्यायादेशौ ण्यन्ताद्विक्प् णेरनिटीतिणिलोपः वेरपृक्तलोपाद्वलिलोपोवलीयानितिपूर्वंलोपोव्योर्वलीतियलोपः नचणिलोपस्यस्थानिवत्त्वम् नपदान्तद्विर्वचनवरेयलोपेतिनिषेधात् यद्वा क्षिजिक्षये अस्मात्क्विप् आदेचइत्यात्वम् । सतः अस्तेश्शतरिअदादित्वाच्छपोलुक् श्नसोरल्लोपइत्यकारलोपः शतुरनुमइतिविभक्तेरुदात्तत्वम् ॥ ७ ॥

---

1 नि० ४. १७. ।

अष्टमीमृचमाह—

द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ।
द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ ८॥

द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् । द्रविणःऽदाः । वीरऽवतीम् । इषम् । नः । द्रविणःऽदाः । रासते । दीर्घम् । आयुः ॥ ८ ॥

द्रविणोदाः द्रविणस्यधनस्यबलस्यवादाताग्निः तुरस्यत्वरमाणस्य चलतोजङ्गमस्यद्रविणसोधनस्यबलस्यवाएकदेशंप्रयंसत् अस्मभ्यंप्रयच्छतु तथाद्रविणोदाः सनरस्यसननीयस्यसंभजनीयस्यस्थावररूपस्यधनस्यैकदेशंप्रयच्छतु अपिचद्रविणोदाः वीरवतींवीरैःपुत्रादिभिर्युक्तांइषमन्नंनोस्मभ्यंप्रयच्छतु तथाद्रविणोदादीर्घमायुः अस्मभ्यंरासतेप्रयच्छतु ॥ तुरस्य तुरत्वरणे इगुपधलक्षणःकः । सनरस्य वनषणसंभक्तौ कृदरादयश्चेत्यरन्प्रत्ययः । यंसत् यमउपरमे लेटच्यडागमः सिब्बहुलंलेटीतिसिप् । रासते रादाने पूर्ववल्लेटिसिप् व्यत्ययेनात्मनेपदम् ॥ ८ ॥

नवमीमृचमाह—

एवानोअग्नेसमिधावृधानोरेवत्पावकश्रवसेविभाहि ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ ९॥४॥

एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ९ ॥ ४ ॥

व्याख्यातेयंपूर्वसूक्ते अक्षरार्थस्तु हेशोधकाग्ने एवमस्माभिर्दत्तेनसमिदादिद्रव्येणवृधानोवर्धमानःसन् नोस्माकंधनयुक्तायान्नायविशेषेणप्रकाशस्व अस्माकंतदन्नंमित्रादयोममहन्तांपूजयन्तां रक्षन्त्वित्यर्थः तथासिन्धुः अब्देवताद्यावापृथिव्यौचममहन्ताम् ॥ ९ ॥

॥ इतिप्रथमस्यसप्तमेचतुर्थोवर्गः ॥ ४ ॥

अपनइत्यष्टर्चंचतुर्थंसूक्तंकुत्सस्यार्षंगायत्रं शुचिगुणकोग्निःशुद्धोग्निर्वादेवता तथाचानुक्रान्तम्—अपनोष्टौशुचयेगायत्रमिति । विनियोगोलैङ्गिकः अत्रेदमाख्यानम्—दीर्घजिह्वीनामराक्षसीसर्वान्यज्ञान्वबाधे तांहन्तुमिन्द्रोऽशक्तःसन्सर्वस्यमित्रभूतंकुत्समब्रवीव् एषात्वयाहन्तव्येति सचावधीव् तंवागभ्यवदव् अनुचितमिदंत्वयाचरितंयत्त्वंसर्वेषांमित्रभूतःसन्क्रूरमकार्षीरिति तस्यपिशोकःप्रामोत्सकृपिरनेनसूक्तेनअग्निंस्तुत्वाशोकमपागमयव् तथाचतांडकम्—दीर्घजिह्वीनामराक्षसीयज्ञानवलिहन्त्यचरव् तामिन्द्रःकयाचमाययाहंतुंनाशंसव् अथहसुमित्रःकुत्सःकल्याणआसतमब्रवीदिति । तस्मादेतत्सूक्तंशुगपनयनायविनियोज्यं अतएवहिसूत्रकारेणभारद्वाजेनदशमेहनिकर्तव्येशान्तिकर्मणियजुर्वेदेपठितमेतत्सूक्तंविनियुज्यते—नवचस्रुवाहुतीरपनःशोशुचदघमिति ।

तत्रप्रथमामृचमाह—

अप॑नः॒ शोशु॑चद॒घमग्ने॑शुशु॒ग्ध्या र॒यिम् । अप॑नः॒ शोशु॑चद॒घम् ॥१॥

अप॑ । नः॒ । शोशु॑चत् । अ॒घम् । अग्ने॑ । शु॒शु॒ग्धि । आ । र॒यिम् ।
अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ १ ॥

हेअग्ने नोस्माकमघंपापमपशोशुचव् अस्मत्तोनिर्गत्य अस्मदीयशत्रुंशोचयतु यद्वा अस्मदीयंपापंशोशुचव् शोकमस्तंसवविनश्यतु अपिचास्माकंरयिंधनं आसमन्ताव् शुशुग्धिप्रकाशय उक्तार्थमपिवाक्यं आदरातिशयद्योतनायपुनःपठ्यते अवश्यमस्माकमघंविनश्यत्विति॥शोशुचव् शुचशोके अस्माद्यङ्लुगन्ताव् लेडचडागमः अदादिवच्चेतिवचनाच्छपोलुक् अभ्यस्तानामादिरित्याद्युदात्तत्वम्। अघं शोशुचच्चरयिंशुशुग्धिचेतिचार्थप्रतीतेश्चादिलोपेविभाषेतिनिघातप्रतिषेधः। शुशुग्धि शुचदीप्तौ लोटि बहुलंछन्दसीतिशपःश्लुः हुझल्भ्योहेर्धिः चोःकुरितिकुत्वम् ॥१॥

द्वितीयामृचमाह—

सु॒क्षे॒त्रि॒या सु॑गातु॒या व॑सू॒या च॑ यजामहे । अप॑नः॒ शोशु॑चद॒घम् ॥२॥

सु॒ऽक्षे॒त्रि॒या । सु॒गा॒तु॒ऽया । व॒सु॒ऽया । च॒ । य॒जा॒म॒हे॒ । अप॑ । नः॒ ।
शोशु॑चत् । अ॒घम् ॥ २ ॥

सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूयाचधनेच्छयानिमित्तभूत-याच यजामहे अग्निंहविर्भिःपूजयामः यद्वा सुक्षेत्रियादेवयजनलक्षणशोभनदेशसम्बन्धिनाहविषा अग्निंयजामहे नोस्माकमघं अपशोशुचत विनश्यतु॥सुक्षेत्रिया शोभनंक्षेत्रंसुक्षेत्रं तद्विषयाइच्छासुक्षेत्रिया सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः व्यत्ययेनेत्वम् क्यजन्तादप्रत्ययादितिभावे अकारप्रत्ययः ततष्टाप् सुपांसुलुगितितृतीयायालुक् एवमुत्तरत्रापि यद्वा शोभनंक्षेत्रमस्यास्तीतिसुक्षेत्रिया इयाडियाजीकाराणामुपसंख्यानमितितृतीयायाडियाजादेशः ॥ २ ॥

तृतीयामृचमाह—

प्रयद्भन्दिष्ठएषांप्रास्माकांसश्चसूरयः । अपनःशोशुचदघम् ॥३॥

प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघम् ॥ ३ ॥

यद्यथा एषांस्तोतॄणांमध्ये अयंकुत्सःप्रभंदिष्ठःप्रकर्षेणस्तोतृतमःएवमस्माकासःआस्माकीनाः सूरयःस्तोतारश्चप्रकर्षेणस्तोतृतमाभवन्ति अन्यत्समानम् ॥ भन्दिष्ठः भन्दतिःस्तुतिकर्मा भदिकल्याणेसुखेचेतिधातुः अस्मात्तृजन्ताचुश्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्विति तृलोपः । अस्माकासः अस्माकंसम्बन्धिनआस्माकाः तस्मिन्नणिचयुष्माकास्माकावितिअस्माकादेशः छान्दसोनक्प्रत्ययस्यलोपः संज्ञापूर्वकस्यविधेरनित्यत्वाद्वृद्ध्यभावः आज्जसेरसुक् स्थानिवदादेशेपिमकारात्परस्याकारस्योदात्तत्वम् यद्वा षष्ठीबहुवचने अस्माकंशब्दस्यमध्योदात्तस्यदृष्टत्वात् सएवाचार्येणातिदिश्यते ॥ ३ ॥

चतुर्थीमृचमाह—

प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयम् । अपनःशोशुचदघम् ॥ ४ ॥

प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम् । अप । नः । शोशुचत् । अघम् ॥ ४ ॥

हेअग्ने यद्यस्मात्तेतवसूरयः स्तोतारः प्रजायन्ते पुत्रपौत्रादिरूपेणबहुविधाभवन्ति ततोवयं च ते तवस्तोतारःसन्तः प्रजायेमहि पुत्रपौत्रादिभिरुपेताभवेम ॥ जायेमहि प्रार्थनायांलिङ् श्यनि ज्ञाजनोर्जेतिजादेशः अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनोनित्त्वादाद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

प्रयद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑ भा॒नवः॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥५॥

प्र । यत् । अ॒ग्नेः । सह॑स्वतः । वि॒श्वतः॑ । यन्ति॑ । भा॒नवः॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ ५ ॥

सहस्वतः सहनवतः शत्रूनभिभवतोग्नेर्भानवोदीप्तयः विश्वतः सर्वतः सर्वस्मादपिप्रदेशात् प्रयन्ति प्रकर्षेणोद्गच्छन्ति यद्यस्मादेवंतस्मात्तेनाग्नितेजसा अस्मदीयं अघंनश्यतु ॥ यन्ति इणोयणितियणादेशः ॥ ५ ॥

षष्ठीमृचमाह—

त्वं हि वि॑श्वतोमुख वि॒श्वतः॑ परि॒भूरसि॑ । अप॑ नः॒ शोशु॑चद॒घम् ॥ ६ ॥

त्वम् । हि । वि॒श्व॒तः॒ऽमु॒ख॒ । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ ६ ॥

हेअग्ने त्वंहि त्वंखलु विश्वतोमुखसर्वतोज्वाल तवमुखस्थानीयानां ज्वालानांनकुत्रापिप्रतिहतिरस्ति अतोहेविश्वतोमुखाग्ने विश्वतःसर्वतः सर्वस्मादपिउपद्रवजातात्परिभूरसिअस्माकंपरिग्रहीतासि परिग्रहीताभव रक्षकोभवेत्यर्थः अन्यत्समानम् ॥ ३ ॥

सप्तमीमृचमाह—

द्विषो॑ नो विश्वतोमुखाति॑ ना॒वेव॑ पारय । अप॑ नः॒ शोशु॑चद॒घम् ॥ ७ ॥

द्विषः॑ । नः॒ । वि॒श्व॒तः॒ऽमु॒ख॒ । अति॑ । ना॒वाऽइ॑व । पा॒र॒य॒ । अप॑ । नः॒ । शोशु॑चत् । अ॒घम् ॥ ७ ॥

हेविश्वतोमुख सर्वतोमुखाग्ने नावेव नावानदीमिव द्विषःशत्रूनोस्मानतिपारय अतिक्रमय्य शत्रुरहितंप्रदेशंप्रापय ॥ नावाइव सावेकाचइतिविभक्तेरुदात्तत्वम्। पारय पारतीरकर्मसमाप्तौ ॥ ७ ॥

अष्टमीमृचमाह—

सनुःसिन्धुमिवनावयातिपर्षाःस्वस्तये। अपनःशोशुचदघम्॥ ८ ॥५॥

सः। नः। सिन्धुम्ऽइव। नावया। अति। पर्ष। स्वस्तये। अप। नः। शोशुचत्। अघम् ॥ ८॥ ५ ॥

पूर्वोक्तएवार्थःपुनरपिदार्ढ्यायप्रार्थ्यते हेअग्ने सत्वंनोस्मान्नावयानावा सिन्धुमिव नदीमिव स्वस्तयेक्षेमार्थं अतिपर्ष शत्रून् अतिक्रमय्यपालय शत्रुरहितं प्रदेशं अस्मान्प्रापयेत्यर्थः त्वत्प्रसादान्नोस्माकंअघंपापंच अपशोशुचत् अस्मत्तोपक्रम्यास्मच्छत्रुःशोकयुक्तोभवतु ॥ नावया आङ्याजयारामुपसंख्यानमितितृतीयायाअयारादेशः उपोत्तमंरितीत्यकारस्योदात्तत्वम्। पर्ष पॄपालनपूरणयोः लोटि बहुलंछन्दसीतिशपःश्लोरभावः सिब्बहुलंलेटीतिबहुलवचनात्सिप् गुणः द्व्यचोतस्तिङइतिदीर्घत्वम् ॥ ८ ॥

इतिप्रथमस्यसप्तमेपञ्चमोवर्गः ॥ ५ ॥

वैश्वानरस्येति तृचंपञ्चमंसूक्तम् कुत्सस्यार्षं त्रैष्टुभं वैश्वानरगुणकोग्निः शुद्धोग्निर्वादेवता तथाचानुक्रान्तम्—वैश्वानरस्यतृचंवैश्वानरीयमिति। व्यूळ्हस्यचतुर्थेहन्याग्निमारुते इदंसूक्तंवैश्वानरीयनिविद्धानम् व्यूळ्हश्चेदितिखण्डेसूत्रितम्—वैश्वानरस्यसुमतौकईव्यक्ताइति।

तत्रप्रथमामृचमाह—

वैश्वानरस्यसुमतौस्यामराजाहिकंभुवनानामभिश्रीः।
इतोजातोविश्वमिदंविचष्टेवैश्वानरोयततेसूर्येण ॥ १ ॥

वैश्वानरस्य। सुऽमतौ। स्याम। राजा। हि। कम्। भुवनानाम्। अभिऽश्रीः। इतः। जातः। विश्वम्। इदम्। वि। चष्टे। वैश्वानरः। यतते। सूर्येण ॥ १ ॥

वैश्वानरस्यविश्वेषांनराणांलोकान्तरनेतृत्वेनस्वामित्वेनवासम्बन्धिनोग्नेः सुमतौशोभनायाम-नुग्रहात्मिकायांबुद्धौस्याम अनुग्राह्यत्वेनवर्तमानाभवेम हिकमित्येतद्धिशब्दार्थे सहिवैश्वानरःअभिश्रीःअभिश्रयणीयः आभिमुख्येनसेवितव्यःसन् भुवनानांसर्वेषांभूतजातानांराजास्वामीभवति योवैश्वानरोग्निः इतोस्मादरणिद्वयाज्जातः जातमात्रएव विश्वंइदंसर्वंजगद्विचष्टे विशेषेणपश्यति प्रातरुद्यतासूर्येणचयततेसंयततेसंगच्छते उद्यन्तंवावादित्यमग्निरनुसमारोहतीतितैत्तिरीयकम् । यद्वा पार्थिवस्याग्नेस्तेजांसिउद्गच्छन्ति सूर्यकिरणाश्चाधोमुखंप्रसरन्ति तयोःसङ्गमनंदृष्ट्वावैश्वानरोयततेसूर्येणेत्यृषिर्ब्रूते तथाचयास्कः—अमुतोमुष्यरश्मयःप्रादुर्भवन्तीतोस्यार्चिषस्तयोर्भासोः संसङ्गंदृष्ट्वैवमवक्ष्यदिति । एवंभूतस्यमहानुभावस्यवैश्वानरस्यसुमतौस्यामेतित्सम्बन्धः ॥ वैश्वानरस्य विश्वेषांनराणांसम्बन्धी नरेसंज्ञायामितिपूर्वपदस्यदीर्घत्वम् तस्येदमित्यण् । सुमती शोभनामतिःसुमतिः तादौचेतिगतेःप्रकृतिस्वरेप्राप्ते मन्क्तिन्नित्यादिनोत्तरपदान्तोदात्तत्वम् ननु तत्रकारकादित्यनुवृत्तेर्गतेरुत्तरस्यक्तिनोनप्राप्नोति एवंतर्हि मतिर्मननं भावेक्तिन् शोभनंमननंयस्यांबुद्धौ सासुमतिः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । चष्टे चक्षिङ्व्यक्तायांवाचि अयंपश्यतिकर्मापि अदादित्वाच्छपोलुक् स्कोःसंयोगाद्योरितिकलोपः । यतते यतीप्रयत्ने ॥ १ ॥

चातुर्मास्यान्यारंप्स्यमाणीयावैश्वानरपार्जन्या तस्यांवैश्वानरस्यहविषःपृष्टोदिवीतियाज्या चातुर्मास्यानीतिखण्डेसूत्रितम्—पृष्टोदिविपृष्टोअग्निःपृथिव्यांपर्जन्यायप्रगायतेति ।

तामेतांद्वितीयामृचमाह—

पृ॒ष्टो दि॒वि पृ॒ष्टो अ॒ग्निः पृ॑थि॒व्यां पृ॒ष्टो विश्वा॒ ओष॑धी॒रा वि॑वेश ।
वै॒श्वा॒न॒रः सह॑सा पृ॒ष्टो अ॒ग्निः स नो॒ दिवा॒ स रि॒षः पा॑तु॒ नक्त॑म् ॥ २ ॥

पृ॒ष्टः । दि॒वि । पृ॒ष्टः । अ॒ग्निः । पृ॒थि॒व्याम् । पृ॒ष्टः । विश्वाः॑ । ओष॑धीः । आ । वि॒वे॒श॒ । वै॒श्वा॒न॒रः । सह॑सा । पृ॒ष्टः । अ॒ग्निः । सः । नः॒ । दिवा॑ । सः । रि॒षः । पा॒तु॒ । नक्त॑म् ॥२॥

---

१ तै० ब्रा० २. १. २. । २ नि० ७. २३. ।

अयंवैश्वानरोऽग्निः दिविद्युलोकेआदित्यात्मनापृष्टः संस्पृष्टः यद्वा निषिक्तोनिहितोवर्तते तथापृथिव्यांभूमौगार्हपत्यादिरूपेणपृष्टः संस्पृष्टोनिहितोवा तथाविश्वाः सर्वाओषधीः पृष्टः संस्पृष्टः सोऽग्निः आविवेश पाकार्थमन्तःप्रविष्टवान् अन्तःप्रविष्टेनपार्थिवाग्निनाहिसर्वाओषधयः पच्यन्ते सहसापरेषामसाधारणेनबलेनपृष्टःसंस्पृष्टः वैश्वानरः नोस्मान् दिवाअह्निरिषोहिंसतःशत्रोः पातुरक्षतु तथासवैश्वानरोनक्तंरात्रावप्यस्मान् हिंसकात्पातु॥ पृष्टः स्पृशसंस्पर्शने छान्दसः सकारलोपः यद्वा पृषुसेचने निष्ठायांयस्यविभाषेतीट्प्रतिषेधः। दिवि ऊडिदमितिविभक्तेरुदात्तत्वम्। पृथिव्याम् उदात्तयणइतिविभक्तिरुदात्ता। रिपः रिपहिंसायां क्विप्चेतिक्विप् सावेकाचइतिपञ्चम्याउदात्तत्वम्॥ २ ॥

तृतीयामृचमाह—

वैश्वानरतवतत्सत्यमस्त्वस्मान्रायोमघवानःसचन्ताम् ॥
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ ३ ॥ ६ ॥

वैश्वानर। तव। तत्। सत्यम्। अस्तु। अस्मान्। रायः।
मघऽवानः। सचन्ताम्। तत्। नः। मित्रः। वरुणः। ममहन्ताम्।
अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥ ३ ॥ ६ ॥

हेवैश्वानर तवतत्वदीयंतत् अस्माभिः क्रियमाणंकर्मसत्यमस्तु अवितथफलंभवतु ततोस्मान्मघवानोधनवन्तोरायोधनवदतिमिमाःपुत्राःसचन्तां सेवन्ताम् एवंयदस्माभिःप्रार्थितंनोस्मदीयंतन्मित्रोहरभिमानीदेवोवरुणोरात्र्यभिमानी अदितिः अदीनादेवमाता सिन्धुःस्यन्दनशीलोदकाभिमानीदेवः उतशब्दःसमुच्चये एतेसर्वेमित्रादयोममहन्तां पूजयन्तांपालयन्त्वामित्यर्थः॥ ३ ॥

॥ इतिप्रथमस्यसप्तमेषष्ठोवर्गः ॥६॥

जातवेदसइत्येकर्चंषष्ठंसूक्तम् मरीचिपुत्रस्यकश्यपस्यार्षंत्रैष्टुभं जातवेदोगुणकोऽग्निःशुद्धोग्निर्वादेवता तथाचानुक्रान्तम्—जातवेदसएकाजातवेदस्यं एतदादीन्येकभूयांसिसूक्तसहस्रमेतनुकश्यपार्षमिति। अहर्गणेषुद्वितीयादिष्वहस्सुआग्निमारुते जातवेदसनिविद्धानात्पूर्वमेषा शंसनीया सूत्रितंच—जातवेदसेसुनवामसोममित्याग्निमारुतेजातवेदस्यानामिति।

तामेतांप्रथमामृचमाह—

**जातवेदसेसुनवामसोमंमरातीयतोनिदहातिवेदः ।**
**सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥ १ ॥ ७ ॥**

जातऽवेदसे । सुनवाम । सोमम् । अरातिऽयतः । नि । दहाति ।
वेदः । सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । नावाऽइव ।
सिन्धुम् । दुःऽइता । अति । अग्निः ॥ १ ॥ ७ ॥

जातवेदसे जातानां उत्पत्तिमतांसर्वेषांवेदित्रे यद्वा जातैःसर्वैःप्राणिभिः ज्ञायमानाय जातधनायजातप्रज्ञायवाग्नये छतारूपं सोमंसुनवामअभिषुणवाम जातवेदोगुणकमग्निमुद्दिश्यसोमाभिषवंकरवामेत्यर्थः सोग्निः अरातीयतः अरातिंशत्रुमिवास्मानाचरतः शत्रोर्वेदोधनंनिदहाति नितरांदहतुभस्मीकरोतु अपिचसोग्निर्नोस्मान् विश्वा विश्वानिसर्वाणिदुर्गाणिदुर्गमनानि भोक्तुमशक्यानिदुःखानिअतिपर्षत् अतिपारयतु अतिक्रमय्यदुःखरहितंसुखंमापयतु तत्रदृष्टान्तः—नावेवसिन्धुं यथाकश्चित्कर्णधारः ग्राहादिभिर्दुष्टसत्त्वैराकुलितांनदींनावातारयति तद्वत् तथादुरितादुरितानि दुःखहेतुभूतानिपापानिअस्मानग्निरतिपारयतु दुःखनिमित्तात्पापादप्यस्मानुत्तारयत्वित्यर्थः । अत्रनिरुक्तम्—जातवेदाःकस्माज्जातानिवेदजातानिवैनंविदुर्जातेजातेविद्यतइतिवाजातवित्तोवाजातधनोजातविद्योवाजातप्रज्ञानोयत्तज्जातःपशूनविन्दतेतितज्जातवेदसोजातवेदस्त्वमितिहिब्राह्मणमित्यादि[1] ॥ जातवेदसे जातानिवेत्तीतिजातवेदाः गतिकारकयोरपिपूर्वपदप्रकृतिस्वरत्वंचेतिवचनात्कारकपूर्वाद्वित्तेरसुन् पूर्वपदप्रकृतिस्वरत्वम् । अरातीयतः नविद्यतेरातिर्दानमस्मिन्नित्यरातिःशत्रुः तमिवास्मानाचरति उपमानादाचारेइत्युपमानभूतात् कर्मणःक्यच् क्यजन्ताल्लटःशतृ शतुरनुमइतिशसउदात्तत्वम् । दहाति दहभस्मीकरणे लेट्याडागमः । वेदः विद्यतेलभ्यतेइतिवेदोधनं विद्लृलाभे औणादिकःकर्मण्यसुन् । पर्षत् पॄपालनपूरणयोः अस्मादन्तर्भावितण्यर्थाल्लेटचडागमः सिब्बहुलंलेटीतिसिप् । दुर्गाणि दुःखेन गम्यतेएष्विति सुदुरोरधिकरणेइतिगमेर्डः ॥ १ ॥

॥ इतिप्रथमस्यसप्तमेसप्तमोवर्गः ॥ ७ ॥

---

१ नि० ७. १९. ।

सयोवृषेत्येकोनविंशत्यृचंसप्तमंसूक्तम् तत्रानुक्रम्यते—सयोवृषैकोनावार्षागिराऋज्राश्वाम्बरीषसहदेवभयमानसुराधसइति । वृषागिरोमहाराजस्यपुत्रभूताः ऋज्राश्वादयःपञ्चराजर्षयः सहेदंसूक्तंददृशुः अतस्तेअस्यसूक्तस्यऋषयः उक्तंचार्षानुक्रमण्याम्—सूक्तंसयोवृषेत्येतत्पञ्चवार्षागिराविदुः । नियुक्तानामधेयैःस्वैरपिचैवत्यदित्यृचीति । अनादेशपरिभाषयात्रिष्टुप् इन्द्रोदेवता दशरात्रस्यपष्ठेहनिमरुत्वतीयेइदंसूक्तम् तथाचसूत्रितम्—यंत्वंरथमिन्द्रसयोवृषेन्द्रमरुत्वइतितिस्रइतिमरुत्वतीयइति ।

तत्रप्रथमामृचमाह—

सयोवृषावृष्ण्येभिःसमोकामहोदिवःपृथिव्याश्चसम्राट् ।
सतीनसत्वाहव्योभरेषुमरुत्वान्नोभवत्विन्द्रऊती ॥ १ ॥

सः । यः । वृषा । वृष्ण्येभिः । सम्ऽओकाः । महः । दिवः ।
पृथिव्याः । च । सम्ऽराट् । सतीनऽसत्वा । हव्यः । भरेषु ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१॥

यइन्द्रोवृषाकामानांवर्षिता वृष्ण्येभिर्वृष्णिभवैर्वीर्यैःसमोकाःसम्यक्समवेतःसङ्गतःमहोमहतोदिवोद्युलोकस्यपृथिव्याःप्रथितायाभूमेश्चसम्राडीश्वरः सतीनसत्वा सतीनमित्युदकनाम उदकस्यसत्वासादयितागमयिता भरेषुसङ्ग्रामेषुहव्यःसर्वैःस्तोतृभिराह्वातव्यःएवंभूतोमरुत्वान् मरुद्भिर्युक्तःसइन्द्रोनोस्माकंऊतीऊतयेरक्षणायभवतु॥ वृष्ण्येभिः वृषन्शब्दात्भवेछन्दसीतियत् अल्लोपोनइत्यकारलोपः येचाभावकर्मणोरितिप्रकृतिभावस्तुव्यत्ययेननभवति। महः महपूजायां क्विप् यद्वा महच्छब्देअच्छब्दलोपः सावेकाचइतिविभक्तेरुदात्तत्वम्। सम्राट् मोराजिसमःक्वाविति राजतेः क्विबन्तेउत्तरपदेसमोमकारस्यमकारादेशः मकारस्यचमकारवचनमनुस्वारबाधनार्थम्। सतीनसत्वा षद्लृविशरणगत्यवसादनेषु मेघेषुनिषीदतीतिसतीनंवृष्ट्युदकं औणादिकईनप्रत्ययसकारान्तादेशश्च यद्वा सतीमाध्यमिकावाक्साइनाईश्वरायस्यतत्सतीनं व्यत्ययेनपुंवद्भावाभावः तत्सत्वा सदेरन्तर्भावितण्यर्थात्षद्दरसद्योस्तुट्चेत्यौणादिकोवनिप्तुडागमश्च मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्। मरुत्वान् झयइतिमतुपोवत्वम्। ऊती ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् सुपांसुलुगितिचतुर्थ्याःपूर्वसवर्णदीर्घः ॥ १ ॥

द्वितीयामृचमाह—

यस्यानाप्तःसूर्यस्येवयामोभरेभरेवृत्रहाशुष्मोअस्ति।
वृषन्तमःसखिभिःस्वेभिरेवैर्मरुत्वान्नोभवत्विन्द्रऊती॥ २ ॥

यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे । वृत्रऽहा । शुष्मः । अस्ति । वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ २ ॥

यस्येन्द्रस्ययामोगतिःअनाप्तःपरैरप्राप्तःसूर्यस्येव यथासूर्यस्यगतिःअन्यैर्नप्राप्तुंशक्यते तद्वत्स्वेभिरात्मीयैरेवैर्गमनशीलैःसखिभिर्मित्रभूतैर्मरुद्भिःसह वृषन्तमःअतिशयेनकामानांवर्षिताभरेभरेसर्वेषुसंग्रामेषुवृत्रहाशत्रूणांहन्ता शुष्मःसर्वेषामसुराणांशोषकः एवंभूतोयइन्द्रोस्तिविद्यतेसमरुत्वानिन्द्रोनोस्माकंरक्षणायभवतु ॥यामः यापापणे आर्तिस्तुस्वित्यादिनाभावेमन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । शुष्मः शुषशोषणे अविपिविशुषिभ्यःकिदितिमन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । अस्ति यद्वृत्तयोगादनिघातः । वृषन्तमः वृषन्शब्दादुत्तरस्यतमपोनाद्घस्येतिनुट् । एवैः इण्गतौ इण्शीङ्भ्यांवन् ॥ २ ॥

तृतीयामृचमाह—

दिवोनयस्यरेतसोदुघानाःपन्थासोयन्तिशवसापरीताः।
तरद्द्वेषाःसासहिःपौंस्येभिर्मरुत्वान्नोभवत्विन्द्रऊती॥ ३ ॥

दिवः । न । यस्य । रेतसः । दुघानाः । पन्थासः । यन्ति । शवसा । अपरिऽइताः । तरत्ऽद्वेषाः । ससहिः । पौंस्येभिः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ३ ॥

यस्येन्द्रस्यपन्थासोरश्मयः रेतसोवृष्ट्युदकानिदुघानाः दुहन्तःप्रयन्तःयन्तिनिर्गच्छन्ति द्युलोकादितस्ततः प्रसरन्ति तत्रदृष्टान्तः—दिवोन यथाद्योतमानस्यसूर्यस्यकिरणावृष्टिंकुर्वन्तोनभःस्थलान्निर्गच्छन्तितद्वत् कीदृशारश्मयः शवसाबलेनसहिताः अपरीताः परैरनभिगताः दुष्प्रापाइत्यर्थः सोयमिन्द्रस्तरद्द्वेषाः द्वेषांसिशत्रूनतरन्जितशत्रुकइत्यर्थः पौंस्येभिर्बलैः सासहिः शत्रूणामभिभविता एवंभूतोमरुत्वानिन्द्रोनोस्माकं रक्षणायभवतु ॥ रेतसः रेतइत्युदकनाम री-

पतेगच्छतीतिरेतः रीगतिरेषणयोः सुरीभ्यांतुट्चेतिअसुन् तुडागमश्च शसोव्यत्ययेनङसादेशः। दुघानाः दुहप्रपूरणे कर्तरिलट् शानच् अदादित्वाच्छपोलुक् व्यत्ययेनघत्वम् वृषादेराकृतिगणत्वादाद्युदात्तत्वम्। पन्थासः पतन्तीतिपन्थानोरश्मयः पतेस्थचेतिइनिप्रत्ययः थकारान्तादेशश्च जसिपथिमथ्यृभुक्षामादितिव्यत्ययेनात्वम् आज्जसेरसुक् यद्वा पन्थानइत्यत्रवर्णव्यापत्त्यानकारस्यसकारः पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम्। सासहिः षहअभिभवे उत्सर्गश्छन्दसीतिवचनात् आदृगमहनइतिकिप्रत्ययः लिड्वद्भावाद्द्विर्वचनम्॥ ३ ॥

चतुर्थीमृचमाह—

सोअङ्गिरोभिरङ्गिरस्तमोभूद्वृषावृषभिःसखिभिःसखासन्।
ऋग्मिभिर्ऋग्मीगातुभिर्ज्येष्ठोमरुत्वान्नोभवत्विन्द्रऊती ॥ ४ ॥

सः। अङ्गिरःऽभिः। अङ्गिरःऽतमः। भूत्। वृषा। वृषऽभिः।
सखिऽभिः। सखा। सन्। ऋग्मिऽभिः। ऋग्मी। गातुऽभिः।
ज्येष्ठः। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती ॥ ४॥

सइन्द्रः अङ्गिरोभिः अङ्गन्तिगच्छन्तीत्यङ्गिरसोगन्तारः तेभ्योप्यङ्गिरस्तमोभूत् अतिशयेनगन्ताभवति वृषभिर्वृषा वर्षितृभ्योप्यतिशयेनवर्षिता सखिभिः समानख्यानेभ्योमित्रभूतेभ्योपिसखाअतिशयेनहितकारी एवंभूतःसन् ऋग्मिभिरर्चनीयेभ्योपिऋग्मी अर्चनीयोभवति गातुभिः गातव्येभ्यः स्तोतव्येभ्योपिज्येष्ठः अतिशयेनस्तोतव्यः एवंगुणविशिष्टोमरुत्वानिन्द्रोरक्षणायभवतु ॥ अङ्गिरोभिः अगिरगिलगिगत्यर्थाः अङ्गिराअप्सराइत्यौणादिकोऽसुन्प्रत्ययोनिपात्यते इदमादिषुसर्वत्रपञ्चम्यर्थेतृतीया। ऋग्मिभिः ऋचस्तुतौ संपदादिलक्षणोभावे क्विप् मत्वर्थीयोमिनिः पदत्वात्कुत्वम् जश्त्वंच। गातुभिः गास्तुतौ कमिमनिजनीत्यादिनाकर्मणितुप्रत्ययः॥ ४ ॥

पञ्चमीमृचमाह—

ससूनुभिर्नरुद्रेभिर्ऋभ्वानृषाह्येसासह्वाँअमित्रान्।
सनीळेभिःश्रवस्यानितूर्वन्मरुत्वान्नोभवत्विन्द्रऊती ॥ ५ ॥ ८ ॥

सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् । सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ५ ॥ ८ ॥

सूनुभिर्न पुत्रैरिव रुद्रेभिः रुद्रपुत्रैर्मरुद्भिर्युक्तः ऋभ्वामहान् एवंभूतः सइन्द्रः नृषाह्ये नृभिः पुरुषैःसोढव्येसङ्ग्रामे अमित्रान् शत्रून्ससह्वानभिभूतवान् अपिच सनीळेभिः समाननिलयैर्मरुद्भिः सह श्रवस्यानिश्रवइत्यन्ननाम तद्धेतुभूतान्युदकानितूर्वन्मेघात्प्रच्यावयन् मरुत्वानिन्द्रोस्माकंरक्षणायभवतु ॥ नृषह्ये षहमर्षणे शकिसहोश्चेतिकर्मणियत् अन्येषामपिदृश्यतइतिसंहितायांधात्वकारस्यदीर्घत्वम् यतोनावइत्याद्युदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् । ससह्वान् षहअभिभवे लिटःक्वसुः अभ्यासदीर्घत्वंछान्दसम् । अमित्रान् मित्राण्येषुनसन्तीत्यमित्राः नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् । समाननीळंयेषान्तेसनीळाः समानस्यच्छन्दसीतिसभावः ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेष्टमोवर्गः ॥ ८ ॥

षष्ठीमृचमाह—

समन्युमीःसमदनस्यकर्तास्माकेभिर्नृभिःसूर्यंसनत् ।
अस्मिन्नहन्त्सत्पतिःपुरुहूतोमरुत्वान्नोभवत्विन्द्रऊती ॥ ६ ॥

सः । मन्युऽमीः । सऽमदनस्य । कर्ता । अस्माकेभिः । नृऽभिः । सूर्यम् । सनत् । अस्मिन् । अहन् । सत्ऽपतिः । पुरुऽहूतः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ६ ॥

शत्रुभिरपहृतासुगोषु तैःसहयुद्धार्थंविनिर्गताऋज्राश्वादयोयेनसूक्तेनेन्द्रमस्तुवन् सइन्द्रः मन्युमीः मन्योःकोपस्यनिर्माता यद्वा अभिमन्यमानस्यशत्रोर्हिंसकः अपिच समदनस्यसङ्ग्रामस्य कर्तासत्पतिः सतांपालयितापुरुहूतः बहुभिर्यजमानैः आहूतः एवंगुणविशिष्टःसःअस्मिन्नहन् अस्मिन्दिवसेअस्माकेभिः अस्माकैः अस्मदीयैः नृभिःपुरुषैः सूर्यंसूर्यप्रकाशंसनत् संभक्तंकरोतु शत्रुपुरुषेस्तुदृष्टिनिरोधकमन्धकारंसंयोजयतु सचमरुत्वानिन्द्रोस्माकंरक्षणायभवतु ॥ मन्युमीः मन्युंमिनातीतिमन्युमीः मीञ्हिंसायां क्विप् । समदनस्य सहमाद्यन्त्यस्मिन्नितिसमदनःसङ्ग्रामः मदीहर्षे अधिकरणेल्युट् सहस्यसःसंज्ञायामितिसभावः । अस्माकेभिः तस्मिन्नणिचयुष्माका-

स्माकावित्यणिअस्मच्छन्दस्यास्माकादेशः संज्ञापूर्वकस्यविधेरनित्यत्वाद्वृध्यभावः बहुलंछन्दसीतिभिसऐसभावः स्वरस्तुमास्माकासश्चसूरयइत्यत्रोक्तः। सनव वनषणसंभक्तौ लेटचडागमः। अहन् सुपांसुलुगितिसप्तम्यालुक्। सत्पतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

तमूतयोरणयञ्छूरसातौतंक्षेमस्यक्षितयःकृण्वतत्राम्।
सविश्वस्यकरुणस्येशएकोमरुत्वान्नोभवत्विन्द्रऊती ॥ ७॥

तम्। ऊतयः। रणयन्। शूरऽसातौ। तम्। क्षेमस्य। क्षितयः। कृण्वत। त्राम्। सः। विश्वस्य। करुणस्य। ईशे। एकः। मरुत्वान्। नः। भवतु। इन्द्रः। ऊती ॥ ७॥

तमिन्द्रंशूरसातौ शूरैर्वीरपुरुषैःसम्भजनीयेसङ्ग्रामे ऊतयोगन्तारोमरुतः रणयन्रमयन्ति यद्वा प्रहरभगवोजहिवीरयस्वेत्येवंरूपंशब्दमिन्द्रमुद्दिश्यकुर्वन्ति अपिच क्षितयोमनुष्याः तमिन्द्रंक्षेमस्यरक्षणीयस्यसर्वस्यधनस्य त्रां त्रातारंकृण्वत कुर्वन्ति देवतान्तरादस्यकोतिशयइतिचेदुच्यते सइन्द्रोविश्वस्यसर्वस्यकरुणस्यअभिमतफलनिष्पादनरूपस्यकर्मणएकोऽसहायएवईशेईष्टेअन्यत्पूर्ववत्॥ ऊतयः अवतेर्गत्यर्थात्क्तत्यल्युटोबहुलमितिकर्तरिक्तिन् तितुत्रेतीट्प्रतिषेधः ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठ् ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् यद्वा कर्तरिक्तिच्। रणयन् रमतेर्हेतुमण्णिजन्ताद्वर्तमानेछान्दसोलङ् अन्त्यविकारश्छान्दसः यद्वा रणशब्दार्थः अस्माण्णिजन्तात्पूर्ववल्लङ्। त्राम् त्रैङ्पालने त्रायतेइतित्रां क्विप्चेतिचशब्देनदृशिग्रहणानुकर्षणान्निरुपपदादपिक्विप्। करुणस्य डुकृञ्करणे कृवृदारिभ्यउनन्नितिभावेउनन् व्यत्ययेनप्रत्ययाद्युदात्तत्वम्। ईशे ईशऐश्वर्ये लोपस्तआत्मनेपदेष्विितिलोपः ॥७॥

अष्टमीमृचमाह—

तमप्सन्तशवसउत्सवेषुनरोनरमवसेतंधनाय।
सोअन्धेचित्तमसिज्योतिर्विदन्मरुत्वान्नोभवत्विन्द्रऊती ॥ ८॥

तम् । अ॒प्स॒न्त॒ । शव॑सः । उ॒त्ऽस॒वेषु॑ । नरः॑ । नर॑म् । अव॑से । तम् ।
धना॑य । सः । अ॒न्धे । चि॒त् । तम॑सि । ज्योतिः॑ । वि॒द॒त् ।
म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥ ८ ॥

नरोनेतारःस्तोतारः शवसोबलस्यसंबन्धिषुउत्सवेषुसङ्ग्रामेषुनरं जयस्यनेतारंतमिन्द्रंअप्सन्त आप्नुवन्ति किमर्थं अवसे अन्नार्थंरक्षणार्थंवा तथाधनायधनार्थंचतमिन्द्रंमाप्नुवन्ति तस्मात्सइन्द्रः तमसिदृष्टिमतिबन्धकेअन्धेचित्आध्यानरहितेचित्तव्यामोहकरेपिसङ्ग्रामे ज्योतिःविजयलक्षणंप्रकाशंविदत् लंभयति तस्मात्तमेवमाप्नुवन्तीत्यर्थः अन्यत्समानम्॥ अप्सन्त आप्लृव्याप्तौ लङिव्यत्ययेनात्मनेपदम् व्यत्ययेनक्सप्रत्ययः व्यत्ययेनधातोर्ह्रस्वत्वम्। विदत् विद्लृलाभे छन्दसिलुङ्लङ्लिटइतिवर्तमानेछान्दसोलुङ् लृदित्वात् च्लेरङादेशः बहुलंछन्दस्यमाङ्योगेपीत्यडभावः ॥८॥

नवमीमृचमाह—

सस॒व्येन॑यमति॒व्राध॑तश्चि॒त्सद॑क्षि॒णेसंगृ॑भीता॒कृता॑नि ।
सकी॒रिणा॑चि॒त्सनि॑ता॒धना॑निम॒रुत्वा॑न्नोभव॒त्विन्द्र॑ऊ॒ती ॥ ९ ॥

सः । स॒व्येन॑ । य॒म॒ति॒ । व्राध॑तः । चि॒त् । सः । द॒क्षि॒णे ।
सम्ऽगृ॑भीता । कृ॒तानि॑ । सः । की॒रिणा॑ । चि॒त् । सनि॑ता । धना॑नि ।
म॒रुत्वा॑न् । नः॒ । भ॒व॒तु॒ । इन्द्रः॑ । ऊ॒ती ॥ ९ ॥

सइन्द्रः सव्येनवामहस्तेनैकहस्तेनव्राधतश्चित्हिंसतोमहतः शत्रूनपियमतिनियमयति तथासइन्द्रः दक्षिणेनदक्षिणपार्श्वस्थेनहस्तेनैकेन यजमानैःकृतानिहवींषिसंगृभीतासंगृहीतासंगृह्णाति अपिचसइन्द्रः कीरिणाचित् कीर्तयित्रास्तोत्राचस्तुतःसन् धनानिसनिता प्रदानशीलोभवति हविःप्रदातॄणामिवस्तोतॄणामपिधनंप्रयच्छतीत्यर्थः शिष्टंस्पष्टम्। यमति यमउपरमे णिचि अमन्तत्वान्मित्वे ह्रस्वइतिह्रस्वत्वम् छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः। व्राधतः वृधुवृद्धौ अस्मादतिप्रत्ययऔणादिकआमागमश्च वृषादित्वादाद्युदात्तत्वम्। संगृभीता ग्रहउपादाने लिङि बहुलंछन्दसीतिविकरणस्यलुक् लिङःसलोपइतिसलोपः ग्रहिज्यादिनासंप्रसारणम् हृग्रहोर्भइतिभत्वम् अचोतस्तिङइतिदीर्घः। सनिता षणुदाने ताच्छीलिकस्तृन्। धनानि नलोकाव्ययेतिषष्ठीप्रतिषेधः॥ ९ ॥

दशमीमृचमाह—

सग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिन्र्वद्य।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ १० ॥ ९ ॥

सः । ग्रामेभिः । सनिता । सः । रथेभिः । विदे । विश्वाभिः ।
कृष्टिऽभिः । नु । अद्य । सः । पौंस्येभिः । अभिऽभूः । अशस्तीः ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १० ॥ ९ ॥

सइन्द्रः ग्रामेभिः मरुत्संघैःसह सनिताफलानांप्रदाताभवति सचाद्यास्मिन्नहनि नुक्षिप्रंविश्वाभिः कृष्टिभिः सर्वैर्मनुष्यैरथेभिरिन्द्रसंबन्धिभीरथैः करणभूतैर्विदेविज्ञायते अपिचसइन्द्रः पौंस्येभिः स्वकीयैर्बलैः अशस्तीः अशंसनीयान् शत्रून् अभिभूः अभिभवन्वर्तते मरुत्वान्सइन्द्रोनोस्माकंरक्षणायभवतु ॥ ग्रामेभिः बहुलंछन्दसीतिभिसऐसभावः ग्रामादीनांचेत्याद्युदात्तत्वम् । विदे विदज्ञाने कर्मणिलट् बहुलंछन्दसीतिविकरणस्यलुक् लोपस्तआत्मनेपदेष्विति तलोपः ॥ १० ॥

॥ इतिप्रथमस्यसप्तमेनवमोवर्गः ॥ ९ ॥

एकादशीमृचमाह—

सजामिभिर्यत्समजातिमीळ्हेजामिभिर्वापुरुहूतएवैः।
अपांतोकस्यतनयस्यजेषेमरुत्वान्नोभवत्विन्द्रऊती ॥ ११ ॥

सः । जामिऽभिः । यत् । सम्ऽअजाति । मीळ्हे । अजामिऽभिः ।
वा । पुरुऽहूतः । एवैः । अपाम् । तोकस्य । तनयस्य । जेषे ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ ११ ॥

पुरुहूतोबहुभिर्यजमानैराहूतःसइन्द्रः मीळ्हेसङ्ग्रामे मीळ्हमितिधननाम सचेगुत्यात्सङ्ग्रामोपिमीळ्हशब्देनोच्यते जामिभिःबन्धुभिः अजामिभिर्वाबान्धवरहितैर्वाएवैर्युद्धार्थंमरुद्भिःसहयद्यदा सम-

भातिसङ्गच्छते तेषामुभयविधानामपांइन्द्रंमामुवतांपुरुषाणांतोकस्यपुत्रस्यतनयस्यतत्पुत्रस्यचजेपे जयमात्मयेसइन्द्रोभवति किमुवक्तव्यंअस्माकंस्तोतृतमानांजयोभवतीति अन्यत्तमानम्॥ समजाति अजगतिक्षेपणयोः लेटचाडागमः। जेषे जिजये औणादिकःसप्रत्ययः चतुर्थ्यर्थेसप्तमी यद्वा-जेषृणेषृमेषृगतौ क्विप्चेतिक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्॥ ११ ॥

द्वादशीमृचमाह—

सर्वज्रभृद्दस्युहाभीमउग्रःसहस्रचेताःशतनीथऋभ्वा ।
चम्रीषोनशवसापाञ्चजन्योमरुत्वान्नोभवत्विन्द्रऊती ॥ १२ ॥

सः । वज्रऽभृत् । दस्युऽहा । भीमः । उग्रः । सहस्रऽचेताः ।
शतऽनीथः । ऋभ्वा । चम्रीषः । न । शवसा । पाञ्चऽजन्यः ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १२ ॥

सइन्द्रोवज्रभृत्अन्यैर्भर्तुमशक्यस्यवज्रस्यभर्ता दस्युहा दस्यूनामुपक्षपयितॄणामसुराणांहन्ता भीमः सर्वेषांभयहेतुः उग्रःउद्गूर्णतेजाः सहस्रचेताःबहुविधज्ञानः सर्वज्ञइत्यर्थः शतनीथः बहुस्तुतिर्बहुविधमापणोवा ऋभ्वाउरुभासमानोमहान्वा चम्रीषोन चम्वांचमसेरसात्मनाअवस्थितः सोमइव शवसाबलेनपाञ्चजन्यःगन्धर्वाअप्सरसोदेवाअसुरारक्षांसिपञ्चजनाः निषादपञ्चमाश्चत्वारोवर्णावा तेपुरक्षकत्वेनभवः एवंभूतः समरुत्वानिन्द्रोनोस्माकंरक्षणायभवतु ॥ दस्युहा बहुलंछन्दसीतिहन्तेःक्विप्। भीमः ञिभीभये भीमादयोपादानेभियःषुग्वेतिमक्। शतनीथः णीञ्प्रापणे हनिकुषिनीरमिकाशिभ्यःक्थन्निति क्थन्प्रत्ययः। चम्रीषः इषगतौ चम्वांइष्यतिगच्छतीतिचम्रीषः इगुपधलक्षणःकः वर्णव्यापत्त्यारेफोदीर्घश्च यद्वा चमेरौणादिकईषन्प्रत्ययः पूर्ववद्रेफः। पाञ्चजन्यः भवार्थे बहिर्देवपञ्चजनेभ्यश्चेतिवक्तव्यमितिञ्यप्रत्ययः ञित्त्वादाद्युदात्तत्वम्॥ १२॥

त्रयोदशीमृचमाह—

तस्यवज्रःक्रन्दतिस्मत्स्वर्षादिवोनत्वेषोरवथःशिमीवान् ।
तंसचन्तेसनयस्तंधनानिमरुत्वान्नोभवत्विन्द्रऊती ॥ १३ ॥

तस्यं । वज्रः । क्रन्दति । स्मत् । स्वःऽसाः । दिवः । न । त्वेषः ।
रवथः । शिमीऽवान् । तम् । सचन्ते । सनयः । तम् । धनानि ।
मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥१३॥

तस्येन्द्रस्यवज्रः कुलिशः स्मत्प्रशंकन्दति शत्रूनाक्रन्दयति रोदयतीत्यर्थः यद्वन्नःस्वर्षाः शोभनस्योदकस्यदाता दिवोन दिवःसम्बन्धीसूर्यइव त्वेषः त्विषदीप्तौ रवथः शब्दस्यगर्जनलक्षणस्यकर्ता शिमीवान् शिमीतिकर्मनाम लोकानुग्राहकेणकर्मणायुक्तस्तमिन्द्रंसनयोधनस्यदानानिसचन्तेसेवन्ते तथातंधनानिचसेवन्ते समरुत्वानिन्द्रोनोस्माकंरक्षणायभवतु ॥ क्रन्दति कदिकदिक्लदिआह्वानेरोदनेच छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः । स्वर्षाः सुपूर्वादर्तेर्विच् सुष्ठुअर्तिगच्छतीतिस्वरुदकं तत्सनोतीतिस्वर्षाः षणुदाने जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् सनोतेरनइतिषत्वम्। त्वेषः त्विषदीप्तौ पचाद्यच् । रवथः रुशब्दे शीङ्शपिरुगमिवचिजीविप्राणिभ्योथइत्यथप्रत्ययः गुणावादेशौ । सनयः सनोतेर्भावेऔणादिकइप्रत्ययः ॥ १३ ॥

चतुर्दशीमृचमाह—

यस्याजस्रंशवसामानमुक्थंपरिभुजद्रोदसीविश्वतःसीम् ।
सपारिषत्क्रतुभिर्मन्दसानोमरुत्वान्नोभवत्विन्द्रऊती ॥ १४ ॥

यस्यं । अजस्रम् । शवसा । मानम् । उक्थम् । परिऽभुजत् ।
रोदसी इति । विश्वतः । सीम् । सः । पारिषत् । क्रतुऽभिः ।
मन्दसानः । मरुत्वान् । नः । भवतु । इन्द्रः । ऊती ॥ १४ ॥

यस्येन्द्रस्यउक्थंप्रशस्यं शवसा मानं बलेनसर्वस्यपरिच्छेदकंसर्वेषांबलस्योपमानभूतंवा रोदसी द्यावापृथिव्यौ विश्वतःसींअजस्रमनवरतं परिभुजत् परितःसर्वतोभुनक्ति पालयति सइन्द्रः क्रतुभिरस्माभिःकृतैर्यागैर्मन्दसानोमोदमानःसन् पारिषत्अस्मान्दुरितात्पारयतु ॥ उक्थं वचपरिभाषणे पातॄतुदिवचीत्यादिनाकर्मणिथक् वचिस्वपीत्यादिनासंप्रसारणम्। परिभुजत् भुजपालनाभ्यवहारयोः लेटयडागमः व्यत्ययेनशः । पारिषत् पारतीरकर्मसमाप्तौ लेटयडागमः सिब्बहुलंलेटीतिसिप् तस्यार्धधातुकत्वादिट् व्यत्ययेनणिलोपः । मन्दसानः मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु ऋञ्जिवृधिमन्दिसहिभ्यःकिदित्यसानच्प्रत्ययः ॥ १४ ॥

पञ्चदशीमृचमाह—

नयस्यंदेवादेवतानमर्ताआपश्चनशवसोअन्तमापुः ।
सप्ररिक्वात्वक्षसाक्ष्मोदिवश्चमरुत्वान्नोभवत्विन्द्रऊती ॥ १५ ॥ १० ॥

न । यस्य॑ । दे॒वाः । दे॒वता॑ । न । मर्ताः॑ । आपः॑ । च॒न । शव॑सः ।
अन्त॑म् । आ॒पुः । सः । प्र॒ऽरिक्वा॑ । त्वक्ष॑सा । क्ष्मः । दि॒वः । च॒ ।
म॒रुत्वा॑न् । न॒ः । भ॒वतु॒ । इन्द्रः॑ । ऊ॒ती ॥ १५ ॥ १० ॥

देवतादेवस्पदानादिगुणयुक्तस्ययस्येन्द्रस्यशवसोबलस्यान्तमवसानं देवाःवस्वाद्यादेवगणाः नापुः नानशिरे तथामर्ताः मनुष्याआपश्चन आपोपिनमापुः सतादृशइन्द्रः त्वक्षसा शत्रूणांतनूकर्त्राआत्मीयेनबलेनक्ष्मः पृथिव्याः दिवश्चस्वर्गस्यच प्ररिक्वाप्रकर्षेणरेचकोभवति लोकद्वयादप्यस्यबलंअतिरिच्यतइत्यर्थः मरुद्भिर्युक्तःसइन्द्रोनोस्माकमूतीऊतयेरक्षणायभवतु ॥ देवता देवएवदेवता देवात्तल्इितिस्वार्थेतल् सुपांसुलुगितिषष्ठ्यालुक् । मर्ताः मृङ्प्राणत्यागे असिहसीत्यादिनातन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । प्ररिक्वा रिचिर्विरेचने अन्येभ्योपिदृश्यन्तइतिक्वनिप् अन्त्यविकारश्छान्दसः । त्वक्षसा तक्षूत्वक्षूतनूकरणे असुन् नित्त्वादाद्युदात्तत्वम् । क्ष्मः क्ष्मेतिपृथिवीनाम आतोधातोरित्यत्रआतइतियोगविभागादिष्टसिद्धिरित्यभिधानात् ङसिभसंज्ञायामाकारलोपः यद्वा क्ष्मायीविधूनने अस्मात् क्विप्चेतिक्विप् वेरपृक्तलोपात्पूर्वंयलोपः अन्यत्समानम् उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यसप्तमेदशमोवर्गः ॥ १० ॥

षोडशीमृचमाह—

रोहिच्छ्यावासुमदंशुर्ललामीर्द्युक्षारायऋज्राश्वस्य ।
वृषण्वन्तंबिभ्रतीधूर्षुरथंमन्द्राचिकेतनाहुषीषुविक्षु ॥ १६ ॥

रोहि॑त् । श्या॒वा । सु॒मत्ऽअं॑शुः । ल॒ला॒मीः । द्यु॒क्षा । रा॒ये ।
ऋ॒ज्रऽअ॑श्वस्य । वृष॑ण्ऽवन्तम् । बिभ्र॑ती । धूःऽसु । रथ॑म् । म॒न्द्रा ।
चि॒के॒त॒ । नाहु॑षीषु । वि॒क्षु ॥ १६ ॥

रोहित् रोहितवर्णाःश्यावाश्यामवर्णाउभयोःपार्श्वयोरुभयविधवर्णयुक्तेत्यर्थः सुमदंशुः सुमवस्वतःभांशुः उक्तंचयास्केन—सुमवस्वयमित्यर्थः अविदीर्घावयवा ललामीःपुंस्त्वेवतीअश्वभूषणयुक्तावा द्युक्षा दिविद्युलोकेकृतनिवासा ऋज्राश्वस्यएतत्संज्ञस्यराजर्षेःरायेधनार्थं वृषण्वन्तं वृष्णासेक्त्रेन्द्रेणयुक्तंरथं धूर्षुयुगसम्बन्धिषुवहनप्रदेशेषुविभ्रतीवहन्ती मन्द्रासर्वेषामाह्लादकरी अश्वपंक्तिः नाहुषीषु नहुषामनुष्याः तत्संबन्धिनीषु विक्षुसेनालक्षणासुप्रजासु चिकेतज्ञायते ईदृश्याश्वपंक्त्यायुक्तः इन्द्रःसंग्रामेषुअनुग्राहकतयाप्रादुर्भवतीत्यर्थः ॥ ललामीः ललामशब्दात् छन्दसीवनिपावितिमत्वर्थीयईकारः अञ्चन्तत्वात्सुलोपाभावः। द्युक्षा क्षिनिवासगत्योः औणादिकोडप्रत्ययः ततटाप्। ऋज्राश्वस्य ऋजगतिस्थानार्जनोपार्जनेषु ऋज्रेन्द्रेत्यादिनारकप्रत्ययान्तोनिपातितः ऋज्राःगतिमन्तोश्वायस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। वृषण्वन्तं अनोनुडिति मतुपोनुट्। चिकेत कितज्ञाने छन्दसिलुङ्लङ्लिटइतिवर्तमानेकर्मणिलिट् व्यत्ययेनतिप् ॥ १६॥

सप्तदशीमृचमाह—

एनस्यत्तंइन्द्रवृष्णंउक्थंवार्षागिराअभिगृणन्तिराधः।
ऋज्राश्वःप्रष्टिभिरम्बरीषःसहदेवोभयमानःसुराधाः ॥ १७ ॥

एतत्। त्यत्। ते। इन्द्र। वृष्णे। उक्थम्। वार्षागिराः। अभि। गृणन्ति। राधः। ऋज्रऽअश्वः। प्रष्टिऽभिः। अम्बरीषः। सहऽदेवः। भयमानः। सुऽराधाः ॥ १७ ॥

हेइन्द्र वृष्णःकामानांवर्षितुस्तेतवत्यत्तदेतत् उक्थंस्तोत्रंराधःसंराधकंत्वामीतिहेतुं वार्षागिराःवृषागिरोराज्ञःपुत्राऋज्राश्वादयः अभिगृणन्ति आभिमुख्येनवदन्ति वार्षागिराइत्येतद्विवृणोति ऋज्राश्वःएतत्संज्ञोराजर्षिःप्रष्टिभिः पार्श्वस्थैरन्यैर्ऋषिभिःसह इन्द्रस्तोत्रं कृते पार्श्वस्थाः अम्बरीषादयश्चत्वारोराजर्षयः ॥ वार्षागिराः तस्यापत्यमित्यण्प्रत्ययः।गृणन्ति गृशब्दे प्वादीनां ह्रस्वइतिह्रस्वत्वम्। राधः राधसाधसंसिद्धौ राध्नोतिसमृद्धोभवत्यनेनेतिराधः करणेअसुन्। ऋज्राश्वः ऋज्राःगतिमन्तोश्वायस्यसतथोक्तः।अम्बरीषःअविशब्दे औणादिकईषन्प्रत्ययः। सहदेवः देवैःसहवर्ततइति वोपसर्जनस्येतिविकल्पनात्सभावाभावः। भयमानः ञिभीभये अस्मादन्त-

१ नि० ६.२२। २ पुंङ्वतीत्यपिपाठः।

भावितण्यर्थाद्व्यत्ययेनशानच् बहुलंछन्दसीतिशपःश्लोरभावः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेधातुस्वरएवशिष्यते । सुराधाः राधइतिधननाम शोभनंराधोयस्य सोमनसीअलोमोपसीइत्युत्तरपदाद्युदात्तत्वम् ॥ १७ ॥

अष्टादशीमृचमाह—

दस्यूञ्छिम्यूँश्चपुरुहूतएवैर्हत्वापृथिव्यांशर्वानिबर्हीत् ।
सनत्क्षेत्रंसखिभिःश्वित्न्येभिःसनत्सूर्यंसनदपःसुवज्रः ॥ १८ ॥

दस्यून् । शिम्यून् । च । पुरुऽहूतः । एवैः । हत्वा । पृथिव्याम् । शर्वा । नि । बर्हीत् । सनत् । क्षेत्रम् । सखिऽभिः । श्वित्न्येभिः । सनत् । सूर्यम् । सनत् । अपः । सुऽवज्रः ॥ १८ ॥

पुरुहूतः बहुभिर्यजमानैराहूतइन्द्रः एवैर्गमनशीलैर्मरुद्भिर्युक्तःसन् पृथिव्यां भूमौवर्तमानान्दस्यूनुपक्षपयितॄन्शत्रून् शिम्यूंश्चशमयितॄन्वधकारिणोराक्षसादींश्चहत्वामहत्य तदनन्तरंशर्वाहिंसकेनवज्रेणनिबर्हीत् अवधीत् निबर्हयतिर्वधकर्मा एवंशत्रून्निरस्यश्वित्न्येभिः श्वेतवर्णैः अलङ्कारेणदीप्ताङ्गैः सखिभिर्मित्रभूतैर्मरुद्भिःसह क्षेत्रंशत्रूणांस्वभूतांभूमिंसनत्समभाक्षीत् तथावृत्रेणतिरोहितंसूर्यंतस्यवृत्रस्यहननेनसमनत् अभजत प्राप्तवानित्यर्थः तथासुवज्रः शोभनवज्रयुक्तइन्द्रः वृत्रेणनिरुद्धाआपोवृष्ट्युदकानिसनत्समभजत् ॥ दस्यून् दसुउपक्षये यजिमनिशुन्धिदसिजनिभ्यो युः वृषादित्वादाद्युदात्तत्वम् । शिम्यून् शमउपशमे शमयति सर्वंतिरस्करोतीतिराक्षसादिःशिम्युः औणादिकोयुन्प्रत्ययः वर्णव्यापत्त्याअकारस्येत्वम् । शर्वा शॄहिंसायाम् अन्येभ्योपिदृश्यन्तइतिवनिप् सुपांसुलुगितितृतीयायाडादेशः । सनत् वनषणसंभक्तौ लङियहुलंछन्दस्यमाङ्योगेपीत्यडभावः । श्वित्न्येभिः श्विताषर्णे औणादिकोनक्प्रत्ययः श्वित्नंशुक्लवर्णमर्हन्तीति श्वित्न्याः छन्दसिचेतियः । सुवज्रः आद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् ॥ १८ ॥

एकोनविंशीमृचमाह—

विश्वाहेन्द्रोअधिवक्तानोअस्त्वपरिह्वृताःसनुयामवाजम् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥ १९ ॥ ११ ॥

विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽहृताः ।
सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः ।
सिन्धुः । पृथिवी । उत । द्यौः ॥ १९ ॥११॥

विश्वाहासर्वकालंनोस्माकमिन्द्रः अधिवक्तास्तु अधिवचनंपक्षपातेनवचनं यथोक्तंब्राह्मणायाधिब्रूयादितिसर्वदास्माकमिन्द्रःपक्षपातवचनयुक्तोभवतु वयंचअपरिहृताःअकुटिलगतयःसंतोवाजं हविर्लक्षणमन्नं सनुयाम संभजामहे यदनेनसूक्तेनास्माभिःप्रार्थितंतन्मित्रादयोममहन्तां पूजितंकुर्वन्तु ॥ विश्वाहा विश्वान्यहानिविश्वाहानि अत्यन्तसंयोगेद्वितीया शेश्छन्दसिबहुलमितिशेर्लोपः उपधादीर्घत्वम् नलोपः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । अपरिहृताः हृकौटिल्ये निष्ठायां अपरिहृताश्चेतिनिपातनाद्बहुभावाभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । सनुयाम षणुदाने लिङ्विनादित्वादुप्रत्ययः वनषणसंभक्तावित्यस्माद्व्यत्ययेनउप्रत्ययः ॥ १९ ॥

॥ इतिप्रथमस्यसप्तमेएकादशोवर्गः ॥ ११ ॥

प्रमन्दिनइतिएकादशर्चंमष्टमंसूक्तम् आङ्गिरसस्यकुत्सस्यार्षंअष्टम्याद्याश्चतस्रस्त्रिष्टुभःशिष्टाःसप्तजगत्यः इन्द्रोदेवता तथाचानुक्रान्तम्—प्रमन्दिनएकादशकुत्सआद्यागर्भस्राविण्युपनिषत् चतुस्त्रिष्टुबन्तमिति । दशरात्रस्यनवमेहनिमरुत्वतीयेएतत्सूक्तं विश्वजितइतिखण्डेसूत्रितम्—प्रमन्दिनइमाउत्वेतिमरुत्वतीयमिति ।

तत्रप्रथमामृचमाह—

प्रमन्दिनेपितुमदर्चतावचोयःकृष्णगर्भानिरहन्नृजिश्वना ।
अवस्यवोवृषणंवज्रदक्षिणंमरुत्वन्तंसख्यायहवामहे ॥ १ ॥

प्र । मन्दिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः ।
निःऽअहन् । ऋजिश्वना । अवस्यवः । वृषणम् । वज्रऽदक्षिणम् ।
मरुत्वन्तम् । सख्याय । हवामहे ॥ १ ॥

हेऋत्विजः मन्दिनेस्तुतिभिर्मोदवतेस्तोतव्यायेन्द्राय पितुमत्हविर्लक्षणेनान्नेनोपेतंवचःस्तुतिलक्षणं वचनं प्रार्चतप्रकर्षेणोच्चारयत यइन्द्रःऋजिश्वनाएतत्संज्ञकेनराज्ञासख्यासहितःसन्कृष्णगर्भाः कृष्णोनामकश्चिदसुरः तेननिषिक्तगर्भाः तदीयाःभार्याःनिरहन्अवधीत् कृष्णमसुरंहत्वापुनस्तासाम-

प्युमुतस्यर्थं गर्भिणीस्तस्य भार्या अपिअवधीदित्यर्थः अवस्यवोरक्षणेच्छवोवयंवृषणंकामानां वर्षितारं वज्रदक्षिणंवज्रयुक्तेनदक्षिणहस्तेनोपेतंतंमरुत्वन्तंइन्द्रं सख्यायसख्युःकर्मणेहवामहेआह्वयामहे॥मन्दिने मदिस्तुतिमोदमदस्वमकान्तिगतिषु औणादिकइनिप्रत्ययः तद्वुक्तंयास्केन—मन्दीमन्दतेःस्तुतिकर्मणइति। पितुमत हस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम्। कृष्णगर्भाः कृष्णेन निषिक्तागर्भायासुतास्तथोक्ताः परादिश्छन्दसिबहुलमितिपूर्वपदान्तोदात्तत्वम्। अवस्यवः अवेरौणादिकोभावेअसुन् अवइच्छन्त्यवस्यति सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः। वृषणं वाषपूर्वस्यनिगमेइतिविकल्पनाद्दीर्घाभावः। सख्याय सख्युःकर्मसख्यं सख्युर्यइतियप्रत्ययः। हवामहे ह्वेञोलटिबहुलंछन्दसीतिसंप्रसारणम्॥ १॥

द्वितीयामृचमाह—

योव्यंसंजाहृषाणेनमन्युनायःशम्बरंयोअहन्पिप्रुमव्रतम्।
इन्द्रोयःशुष्णमशुषन्यावृणङ्मरुत्वन्तंसख्यायहवामहे ॥ २ ॥

यः। विऽअंसम्। जहृषाणेन। मन्युना। यः। शम्बरम्। यः। अहन्। पिप्रुम्। अव्रतम्। इन्द्रः। यः। शुष्णम्। अशुषम्। नि। अवृणक्। मरुत्वन्तम्। सख्याय। हवामहे ॥ २ ॥

यइन्द्रः जहृषाणेन प्रवृद्धेनमन्युना क्रोधेनव्यंसं विगतभुजं वृत्रंअहन्नवधीत् अपिच यइन्द्रः शंबरंएतत्संज्ञमसुरंचावधीत् तथाअव्रतं व्रतस्ययागादेः कर्मणोविरोधिनं पिप्रुं एवत्संज्ञमसुरंयइन्द्रः अवधीत् किञ्च यइन्द्रः अशुषं शोषकरहितं शुष्णंसर्वस्यजगतःशोषकं एतत्संज्ञमसुरं न्यवृणक् न्यवर्जयत् समूलंहतवानित्यर्थः तंमरुत्वन्तंइन्द्रं सख्यायाह्वयामहे॥ व्यंसं विगतोंसोयस्मात् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् यणि उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम्। जहृषाणेन हृषतुष्टौ अत्रवृद्ध्यर्थः छन्दसिलिट् लिटःकानज्वेतितस्यकानजादेशः अन्येषामपिदृश्यतइतिसंहितायामभ्यासस्यदीर्घत्वम् चित्त्वादन्तोदात्तत्वम्। अशुषं शुषशोषणे इगुपधज्ञाप्रीकिरःकः शुषाः शोषकाःनसन्त्यस्येत्यशुषः परादिश्छन्दसिबहुलमितिउत्तरपदाद्युदात्तत्वम्। अवृणक् वृजीवर्जने रौधादिकः॥ २॥

---

१ नि० ४. २४.।

तृतीयामृचमाह—

यस्य॒द्यावा॑पृथि॒वीपौंस्यं॑म॒हद्यस्य॑व्र॒तेवरु॑णो॒यस्य॒सूर्यः॑ ।
यस्येन्द्र॑स्य॒सिन्ध॑व॒:सश्च॑ति व्र॒तंम॒रुत्व॑न्तंस॒ख्याय॑हवामहे ॥ ३ ॥

यस्य॑ । द्यावा॑पृथि॒वी इति॑ । पौंस्य॑म् । म॒हत् । यस्य॑ । व्र॒ते । वरु॑णः ।
यस्य॑ । सूर्यः॑ । यस्य॑ । इन्द्र॑स्य । सिन्ध॑वः । सश्च॑ति । व्र॒तम् ।
म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ३ ॥

यस्येन्द्रस्यमहत् विपुलंपौंस्यंबलं द्यावापृथिवी द्यावापृथिव्यावनुवर्तेते यस्यचेन्द्रस्यव्रतेनियमरूपेकर्मणिवरुणोवर्तते वरुणोपीन्द्रस्यनियमनंनातिक्रामतीत्यर्थः अपिच सूर्योपियस्येन्द्रस्य व्रतेवर्तते तथायस्येन्द्रस्यव्रतंकर्मसिन्धवोनद्यः सश्चति वचनव्यत्ययः गच्छन्ति सश्चतिर्गतिकर्मा । इन्द्रेणानुशिष्टाःप्रवहन्तीत्यर्थः तंमरुत्वन्तमिन्द्रंसख्यायाह्वयामहे ॥ द्यावापृथिवी द्यौश्चपृथिवीचद्यावापृथिव्यौ दिवोद्यावेतिद्यावादेशः सचाद्युदात्तोनिपातितः पृथिवीशब्दोङीष्प्रत्ययान्तोन्तोदात्तः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घः ॥ ३ ॥

चतुर्थीमृचमाह—

यो अश्वा॑नां॒यो गवां॒गोप॑तिर्व॒शी य आ॑रि॒तः कर्म॑णिकर्मणि स्थि॒रः ।
वी॒ळोश्चि॒दिन्द्रो॒यो अस॑न्वतो व॒धो म॒रुत्व॑न्तंस॒ख्याय॑हवामहे ॥ ४ ॥

यः । अश्वा॑नाम् । यः । गवा॑म् । गोऽप॑तिः । व॒शी । यः । आ॒रि॒तः ।
कर्म॑णिऽकर्मणि । स्थि॒रः । वी॒ळोः । चि॒त् । इन्द्रः॑ । यः । अस॑न्वतः ।
व॒धः । म॒रुत्व॑न्तम् । स॒ख्याय॑ । ह॒वा॒म॒हे॒ ॥ ४ ॥

यइन्द्रः अश्वानांपतिरधिपतिः तथायइन्द्रोगोपतिः नकेवलमेकस्यागोः किन्तु सर्वासामित्याह गवामिति सर्वासांगवामधिपतिर्भवति वशी अपराधीनःस्वतन्त्रइत्यर्थः अपिच यइन्द्रःकर्म-

१ नि० ३.९ ।

णिकर्मणिसर्वेषुकर्मसुस्थिरोनैश्चल्येनावतिष्ठमानः आरितः स्तुतिभिः प्रत्यृतः प्राप्तोनभवति आरितःप्रत्यृतःस्तोमानितिनिरुक्तम् । यइन्द्रः असुन्वतः सुन्वतांयागानुष्ठातॄणांविरोधिनोवीळोश्चिद् दृढस्यापिशत्रोःवधःहन्ता तंमरुत्वन्तंइन्द्रं सख्यायाह्वयामहे ॥ गवां नगोश्वन्त्सावर्णेतिविभक्त्युदात्तत्वस्यप्रतिषेधः । गोपतिः पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् । आरितः ऋगतौ अस्माण्ण्यन्तान्निष्ठा आगमानुशासनस्यानित्यत्वात्पुगभावः यद्वा सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामितिविहितस्ययङः यङोचिचेत्यत्रचशब्देनबहुलग्रहणानुकर्षणादनैमित्तिकेलुकिप्रत्ययलक्षणेनसन्यङोरितिऋइत्येतस्यद्विर्वचनेउरदत्वहलादिशेषयोःसतोः रुग्रिकौचलुकीतिरुक् ततोनिष्ठायांछान्दसइडागमः ऋकारस्ययणादेशः रोरीत्यभ्यासरेफलोपः ढ्रलोपेपूर्वस्यदीर्घोणइतिदीर्घः । वधः कृत्यल्युटोबहुलमितिबहुलवचनात् हनश्चवधइतिकर्तर्यप्वधादेशश्च सचादन्तः अतोलोपेउदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

योविश्वस्यजगतःप्राणतस्पतिर्योब्रह्मणेप्रथमोगाअविन्दत् ।
इन्द्रोयोदस्यूँरधराँअवातिरन्मरुत्वन्तंसख्यायहवामहे ॥ ५ ॥

यः । विश्वस्य । जगतः । प्राणतः । पतिः । यः । ब्रह्मणे । प्रथमः । गाः । अविन्दत् । इन्द्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् । मरुत्वन्तम् । सख्याय । हवामहे ॥ ५ ॥

यइन्द्रः विश्वस्यजगतोगच्छतः प्राणतःश्वसतःप्राणिजातस्यपतिः स्वामी यश्चब्रह्मणे ब्राह्मणजातिभ्योङ्गिरोभ्यः प्रथमःअन्येभ्योदेवेभ्यःपूर्वभावीसन्पणिभिरपहृतागाः अविन्दत् अलभत अन्येभ्योदेवेभ्यः पूर्वमेवेतरसुरैर्युद्ध्वागाःस्वयमलभतेत्यर्थः अपिचयइन्द्रोदस्यूनुपक्षपयितॄन् असुरानधरान्निकृष्टान्कृत्वा अवातिरत् अवधीत् अवतिरतिर्वधकर्मा । तंमरुत्वन्तमिन्द्रं सख्यायाह्वयामहे । जगतः गम्लृसृप्लृगतौ वर्तमानेपृषद्बृहन्महज्जगच्छतृवच्चेतिअतिप्रत्ययान्तोनिपात्यते जगच्छब्दआद्युदात्तः । प्राणतः श्वसप्राणने अनच अस्माल्लटःशतृ अदादित्वाच्छपोलुक् शतुरनुमइतिविभक्तेरुदात्तत्वम् पष्ठ्याःपतिपुत्रेतिविसर्जनीयस्यसत्वम् ॥ ५ ॥

१ नि० ५. १५ । २ नि० ३. ९ ।

पष्ठीमृचमाह—

यःशूरेभिर्हव्योयश्चभीरुभिर्योधावद्भिर्हूयतेयश्चजिग्युभिः
इन्द्रंयंविश्वाभुवनाभिसंदधुर्मरुत्वन्तंसख्यायहवामहे ॥६॥१२॥

यः । शूरेभिः । हव्यः । यः । च । भीरुऽभिः । यः । धावत्ऽभिः ।
हूयते । यः । च । जिग्युऽभिः । इन्द्रम् । यम् । विश्वा । भुवना ।
अभि । सम्ऽदधुः । मरुत्वन्तम् । सख्याय । हवामहे ॥ ६ ॥ १२ ॥

यइन्द्रः शूरेभिः शौर्योपेतैःपुरुषैःहव्यःयोद्धुमाह्वातव्यःयश्चभीरुभिः भयशीलैः कातरैःपुरुषैः सहायार्थमाह्वातव्यः अपिच यइन्द्रोधावद्भिः पराजयेनपलायमानैःहूयते रक्षार्थंआहूयते यश्च जिग्युभिःमाप्तजयैराहूयते यंचेन्द्रंविश्वाभुवना सर्वाणिभूतजातानिस्वेषुकार्येषुअभिसन्दधुः आभिमुख्येन स्थापयन्ति तंमरुत्वन्तमिन्द्रंसख्यायाह्वयामहे ॥ शूरेभिः बहुलंछन्दसीतिभिसऐसभावः । हव्यः ह्वयतेरचोयदितियत् ह्वइत्यनुवृत्तौ बहुलंछन्दसीतिसंप्रसारणम् गुणः धातोस्तन्निमित्तस्यैवेत्यवादेशः । भीरुभिः भियःक्रुक्लुकनावितिक्रुप्रत्ययः । धावद्भिः सृगतौ सर्तेर्वेगितायां शपि पाघ्रेत्यादिनाधावादेशः शपःपित्त्वादनुदात्तत्वम् शतुश्चलसार्वधातुकस्वरेणधातुस्वरःशिष्यते । जिग्युभिः जिजये लिटःक्वसुः द्विर्वचने सन्लिटोर्जेरितिअभ्यासादुत्तरस्यजकारस्यकुत्वम् भिसि अयस्मयादित्वेनभत्वात् वसोःसम्प्रसारणमितिसम्प्रसारणम् छान्दसोन्त्यलोपः ॥ ६ ॥

॥ इतिप्रथमस्यसप्तमेद्वादशोवर्गः ॥ १२ ॥

सप्तमीमृचमाह—

रुद्राणामेतिप्रदिशाविचक्षणोरुद्रेभिर्योषातनुतेपृथुज्रयः ।
इन्द्रंमनीषाअभ्यर्चतिश्रुतंमरुत्वन्तंसख्यायहवामहे ॥ ७ ॥

रुद्राणाम् । एति । प्रऽदिशा । विऽचक्षणः । रुद्रेभिः । योषा ।
तनुते । पृथु । ज्रयः । इन्द्रम् । मनीषा । अभि । अर्चति । श्रुतम् ।
मरुत्वन्तम् । सख्याय । हवामहे ॥ ७ ॥

विचक्षणः सूर्यात्मनाप्रकाशमानइन्द्रः रुद्रपुत्राणां अध्यात्मंप्राणरूपेणवर्तमानानांमरुतां यद्वा रोदयितॄणांप्राणानां प्राणाहिशरीरान्निर्गताःसन्तोबन्धुजनान्रोदयन्ति प्रदिशाप्रदेशनेनम-नुष्येभ्यःप्रदानेनसहएत्यन्तरिक्षंगच्छति तथाचाम्नायते—योसौतपन्नुदेति ससर्वेषांभूतानांप्रा-णानादायोदेतीति[1]। अपिच रुद्रेभिः अधिभूतंवर्तमानैरुद्रपुत्रैर्मरुद्भिर्योषामाध्यमिकावाक्पृथुवि-स्तीर्णं ज्रयोवेगंतनुतेविस्तारयति प्रसङ्गादत्रमरुत्वांस्तुतिः तैर्मरुद्भिःसहवर्तमानं श्रुतंप्रख्यातं सू-र्यात्मानमिन्द्रंमनीषास्तुतिलक्षणावाक्अभ्यर्चतिआभिमुख्येनस्तौति तंमरुत्वन्तमिन्द्रंवयंसख्या-याह्वयामहे॥प्रदिशा दिशअतिसर्जने सम्पदादिलक्षणोभावेक्विप्।ज्रयः जिज्रिअभिभवे ज्रीयते अभिभूयतेनेनेतिज्रयोवेगः करणेअसुन्। मनीषा ईषाअक्षादित्वात्प्रकृतिभावः॥ ७॥

अष्टमीमृचमाह—

यद्वा॑मरुत्वः पर॒मे स॒धस्थे॒ यद्वा॑व॒मे वृ॒जने॑ मा॒दया॑से ।
अत॒ आ या॑ह्यध्व॒रं नो॒ अच्छा॑ त्वा॒या ह॒विश्च॑कृमा सत्यराधः ॥ ८ ॥

यत् । वा॒ । म॒रु॒त्वः॒ । प॒र॒मे । स॒धऽस्थे॑ । यत् । वा॒ । अ॒व॒मे । वृ॒जने॑ । मा॒दया॑से । अतः॑ । आ । या॒हि॒ । अ॒ध्व॒रम् । नः॒ । अच्छ॑ । त्वा॒ऽया । ह॒विः । च॒कृ॒म॒ । स॒त्य॒ऽरा॒धः॒ ॥ ८ ॥

हेमरुत्वः मरुद्भिर्युक्तेन्द्र परमेउत्कृष्टेसधस्थेसहस्थानेगृहे यद्वा यदिवा मादयासे तृप्तोव-र्तसे यद्वा यदिवा अवमेअर्वाचीने वृजने वृज्यतेरिक्तीक्रियतेऽस्मिन्धनमितिवृजनंगृहं त-स्मिन्मादयासे अतोस्मादुभयविधावस्थानान्नोस्माकमध्वरंयज्ञमच्छाभिमुख्येनायाहि आगच्छ हेसत्यराधः सत्यधन त्वाया त्वत्कामनया वयं हविश्चकृमकृतवन्तः॥मरुत्वः मतुवसोरुरितिसं-बुद्धौनकारस्यरुत्वम्। सधस्थे सुपिस्थइतिकप्रत्ययः सधमादस्थयोश्छन्दसीतिसहस्यसधा-देशः। मादयासे मदतृप्तियोगे चुरादिरात्मनेपदी लेट्याडागमः। त्वाया त्वामात्मनइच्छति सु-पआत्मनःक्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः व्यत्ययेनदकारस्यात्वम् अप्रत्यया-दितिअकारप्रत्ययः सुपांसुलुगितितृतीयायाडुक्॥ ८॥

---

१ तै० आ० प्रथमप्रपाठके.।

नवमीमृचमाह—

त्वायेन्द्रसोमंसुषुमासुदक्षत्वायाहविश्चकमाब्रह्मवाहः ।
अधानियुत्वःसगणोमरुद्भिरस्मिन्यज्ञेबर्हिपिमादयस्व ॥ ९ ॥

त्वाऽया । इन्द्र । सोमम् । सुसुम । सुऽदक्ष । त्वाऽया । हविः ।
चकृम । ब्रह्मऽवाहः । अर्ध । नियुत्वः । सऽगणः । मरुत्ऽभिः ।
अस्मिन् । यज्ञे । बर्हिपि । मादयस्व ॥ ९ ॥

हेसुदक्ष शोभनबलेन्द्र त्वाया त्वत्कामनयासोमंसुषुम अभिषुतवन्तोवयं हेब्रह्मवाहःब्रह्मणामन्त्ररूपेणस्तोत्रेणोह्यमानप्राप्यमाणइन्द्र त्वायात्वत्कामनया संवनीयेपुरोडाशलक्षणंहविश्चकृतवन्तः हेनियुत्वः नियुतोश्वाः तद्वन्निन्द्र अध अथानन्तरं मरुद्भिःसप्तगणरूपैः एतत्संज्ञैर्देवैः सगणःगणसहितःसन् अस्मिन्वर्तमानेयज्ञेबर्हिपिआस्तीर्णेदर्भेउपविश्यमादयस्व तृप्तोभव ॥ सुषुम पुञ्‌अभिषवे लिटिक्रादिनियमप्राप्तस्येटः अनित्यमागमशासनमितिवचनादभावः ॥ ९ ॥

दशमीमृचमाह—

मादयस्वहरिभिर्येतइन्द्रविष्यस्वशिप्रेविसृजस्वधेने ।
आत्वासुशिप्रहरयोवहन्तूशन्हव्यानिप्रतिनोजुपस्व ॥ १० ॥

मादयस्व । हरिऽभिः । ये । ते । इन्द्र । वि । स्यस्व । शिप्रे इति ।
वि । सृजस्व । धेने इति । आ । त्वा । सुऽशिप्र । हरयः । वहन्तु ।
उशन् । हव्यानि । प्रति । नः । जुषस्व ॥ १० ॥

हेइन्द्र हरिभिरश्वैःसहमादयस्वतृप्तोभव येतेतवस्वभूतास्तदर्थंशिप्रेहनूसंहते विप्यस्व सोमपानार्थंविवृतेकुरु तथाधेनेपानसाधनभूतेजिह्वेपजिह्विकेविसृजस्व सोमपानार्थंविश्लिष्टेकुरु हे सुशिप्र शिप्रेहनूनासिकेवा । शोभनशिप्रेन्द्र त्वात्वां हरयोश्वाआवहन्तु अस्मदीयंयज्ञंप्रापयन्तु त्वंच उशन्अस्मान्कामयमानोनोस्माकंहव्यानिहवींषि प्रतिजुपस्व प्रत्येकंसेवस्व माउदासिष्ठाः॥

---

१ हवनीयेइत्यपिपाठः। २ नि० ६. १७।

विष्यस्व पोन्तकर्मणि व्यत्ययेनात्मनेपदं दिवादित्वाच्श्यन् ओतःश्यनीत्योकारलोपः उपसर्गात्सुनोतीतिषत्वम् ॥ १० ॥

एकादशीमृचमाह—

मुरुत्स्तौत्रस्यवृजनस्यगोपावयमिन्द्रेणसनुयामवाजम् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥११॥१३॥

मुरुत्ऽस्तौत्रस्य । वृजनस्य । गोपाः । वयम् । इन्द्रेण । सनुयाम ।
वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः ।
सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥ १३ ॥

मरुत्स्तोत्रस्य मरुद्भिःसहस्तोत्रंयस्यसमरुत्स्तोत्रः तस्यवृजनस्यशत्रूणांक्षेप्तुरिन्द्रस्यसंबन्धिनोगोपाः गोपायनीयाःरक्षणीयावयं तेनेन्द्रेणवाजमन्नंसनुयाम लभेमहि यदेतदस्माभिःप्रार्थितंनोस्मदीयंतन्मित्रादयोद्यावापृथिव्यौचममहन्तांपूजितंकुर्वन्तु ॥ वृजनस्य वृजीवर्जने कॄपृवृजिमन्दिनिधाञ्भ्यःक्युरितिक्युप्रत्ययः ॥ ११ ॥

॥ इतिप्रथमस्यसप्तमेत्रयोदशोवर्गः ॥ १३ ॥

इमांतइत्येकादशर्चंनवमंसूक्तं कुत्सस्यार्षमैन्द्रं अन्त्यात्रिष्टुप् शिष्टादशजगत्यः तथाचानुक्रान्तम्—इमांतेन्त्यात्रिष्टुबिति विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

इमांतेधियंप्रभरेमहोमहीमस्यस्तोत्रेधिषणायत्तआनजे ।
तमुत्सवेचप्रसवेचसासहिमिन्द्रंदेवासःशवसामदन्ननु ॥ १ ॥

इमाम् । ते । धियम् । प्र । भरे । महः । महीम् । अस्य । स्तोत्रे ।
धिषणा । यत् । ते । आनजे । तम् । उत्ऽसवे । च । प्रऽसवे ।
च । ससहिम् । इन्द्रम् । देवासः । शवसा । अमदन् । अनु ॥ १ ॥

हेइन्द्र महोमहतस्तेतव इमांइदानींक्रियमाणांमहींमहतीं अत्यन्तोत्कृष्टांधियंस्तुतिंप्रभरे प्रकर्षेणसंपादयामि तेतव धिषणात्वदीयाबुद्धिः अस्यममस्तोतुः स्तोत्रैस्तुवौयद्यस्मादानजे असक्तासंश्लिष्टासीव तस्मात्तवप्रियांस्तुतिंकरोमीत्यर्थः उत्तरोर्धर्चःपरोक्षकृतः ससाहिं शत्रूणामभिभवितारंपूर्वोक्तंतमिन्द्रंदेवासः कर्मसुदीव्यन्तऋत्विजः शवसास्तुतिभिःकीर्तनेनबलेन अन्वमदन् अनुक्रमेणहर्षमापयन् किमर्थं उत्सवेच उत्सवार्थंअभिवृद्ध्यर्थं प्रसवेचधनानांवृष्ट्युदकानां वाउत्पत्त्यर्थंच ॥ आनजे अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु अस्मात्कर्मणिलिट् द्विर्वचनहलादिशेषौ अतआदेरित्यभ्यासस्यात्वम् तस्मान्नुड्द्विहलइतिनुट् व्यत्ययेनोपधानकारलोपः । उत्सवे प्रसवे षूप्रेरणे ऋदोरबितिभावेअप् निमित्तात्कर्मयोगेइतिसप्तमी थाथादिनोत्तरपदान्तोदात्तत्वम् । ससाहिं षहअभिभवे आदृगमहनइत्यत्रउत्सर्गश्छन्दसीतिवचनात्किप्रत्ययः लिड्वद्भावाद्द्विर्वचनं अन्येषामपीतिसंहितायामभ्यासस्यदीर्घत्वम् । अमदन् मदीहर्षे हेतुमतिणिच् मदीहर्षग्लेपनयोरितिघटादिषुपाठान्मितांह्रस्वइतिह्रस्वत्वम् छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः ॥ १ ॥

द्वितीयामृचमाह—

अस्यश्रवोनद्यःसप्तबिभ्रतिद्यावाक्षामापृथिवीदर्शतंवपुः ।
अस्मेसूर्याचन्द्रमसाभिचक्षेश्रद्धेकमिन्द्रचरतोवितर्तुरम् ॥ २ ॥

अस्य । श्रवः । नद्यः । सप्त । बिभ्रति । द्यावाक्षामा । पृथिवी ।
दर्शतम् । वपुः । अस्मे इति । सूर्याचन्द्रमसा । अभिऽचक्षे । श्रद्धे ।
कम् । इन्द्र । चरतः । विऽतर्तुरम् ॥ २ ॥

अस्येन्द्रस्य श्रवोयशः कीर्तिं सप्त इमंमेगङ्गेइत्यस्यामृचिप्राधान्येनप्रतिपादितागङ्गाद्याःसप्तसङ्ख्याकानद्योबिभ्रतिधारयन्ति वृत्रहननेनइन्द्रस्ययद्वृष्टेःप्रदातृत्वंतत्प्रभूतजलोपेतानद्यः प्रकटयन्तीत्यर्थः अपिच द्यावाक्षामा द्यावापृथिव्यौ पृथिवीत्यन्तरिक्षनाम अन्तरिक्षंच अस्यसूर्यात्मनावर्तमानस्येन्द्रस्यदर्शतंसर्वैःप्राणिभिर्दर्शनीयंवपुः रूपनामैतत् प्रकाशात्मकंरूपंधारयन्ति किञ्च हेइन्द्र अस्मे अस्माकं अभिचक्षेद्रष्टव्यानांपदार्थानामाभिमुख्येनप्रकाशनार्थंश्रद्धेकंश्रद्धार्थ चक्षुषादृष्टेहिवस्तुनि इदंसत्यमितिश्रद्धोत्पद्यते कमित्येतत्पदपूरणं तदुभयार्थंसूर्याचन्द्रमसौवितर्तुरं परस्परव्यतिहारेणतरणंपुनःपुनर्गमनंयथाभवति तथाचरतोवर्तेते त्वमेवतद्रूपःसन्वर्तसइत्यर्थः ॥ अस्य ऊडिदमितिविभक्तेरुदात्तत्वम् । द्यावाक्षामा द्यौश्चक्षामाच दिवोद्यावेतिद्यावादेशः सुपां-

सुलुगितिविभक्तेर्डादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम्। दशतेर्भृशद्दशीत्यादिना अतच्। सूर्याचन्द्रमसा सूर्यश्चचन्द्रमाश्च देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः सुपांसुलुगितिविभक्तेराकारः चन्द्रमस्शब्दोदासीभारादित्वात् पूर्वपदप्रकृतिस्वरेणमध्योदात्तः अतोदेवताद्वन्द्वेचेतिप्राप्तस्य उभयपदप्रकृतिस्वरस्य नोत्तरपदेनुदात्तादावपृथिवीतिप्रतिषेधः। अभिचक्षे चक्षेःप्रकाशनार्थात्संपदादिलक्षणोभावेक्विप् तादर्थ्येचतुर्थी। श्रद्धे दृशिग्रहणाद्दधातेर्भावेविच् चतुर्थ्येकवचने आतोधातोरित्याकारलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। वितर्तुरं तरतेर्यङ्लुगन्तादौणादिकःकुरच् बहुलंछन्दसीत्युत्वम्॥ २॥

तृतीयामृचमाह—

तंस्मारथंमघवन्प्रावंसातयेजैत्रंयंतेअनुमदामसंगमे।
आजानइन्द्रमनंसापुरुष्टुतत्वायद्भ्योमघवञ्छर्मयच्छनः॥ ३॥

तम्। स्म। रथम्। मघऽवन्। प्र। अव। सातये। जैत्रम्।
यम्। ते। अनुऽमदाम। सम्ऽगमे। आजा। नः। इन्द्र। मनसा।
पुरुऽस्तुत। त्वायत्ऽभ्यः। मघऽवन्। शर्म। यच्छ। नः॥ ३॥

हेमघवन् धनवन्निन्द्र सातये अस्माकंधनलाभायतंस्म तमेवरथंप्राव प्रेरय यंतेरथं नोस्माकंमनसाबुद्ध्यापुरुष्टुत बहुशः स्तुतेन्द्र तेतव स्वभूतंजैत्रंजयशीलंयंरथंसङ्गमे शत्रुभिःसहसङ्गमेआजायुद्धेसतिअनुमदाम वयमनुक्रमेणस्तुमः अपिच हेमघवन् त्वायद्भ्यः त्वांकामयमानेभ्योनोस्मभ्यंशर्मसुखंप्रयच्छदेहि॥ अव अवरक्षणगतिकान्त्यीत्युक्तत्वादवतिरत्रगत्यर्थः। सङ्गमे ग्रहवृदृनिश्चिगमश्चेतिकर्मण्यप् थाथादिनोत्तरपदान्तोदात्तत्वम्। आजा सुपांसुलुगितिसप्तम्याडादेशः त्वायद्भ्यः सुपआत्मनःक्यच् प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वादेशः व्यत्ययेनदकारस्यात्वं क्यजन्ताल्लटःशतृ अदुपदेशाल्लसार्वधातुकानुदात्तत्वेसति क्यचासहैकादेशउदात्तेनेतितस्योदात्तत्वम्॥ ३॥

चतुर्थीमृचमाह—

वयंजयेमत्वयायुजावृतमस्माकमंशमुदवाभरेभरे।
अस्मभ्यमिन्द्रवरिवःसुगंकृधिप्रशत्रूणांमघवन्वृष्ण्यारुज॥ ४॥

वयम् । जयेम । त्वया । युजा । वृतम् । अस्माकम् । अंशम् । उत् । अव । भरेऽभरे । अस्मभ्यम् । इन्द्र । वरिवः । सुऽगम् । कृधि । प्र । शत्रूणाम् । मघऽवन् । वृष्ण्या । रुज ॥ ४ ॥

हेइन्द्र युजा अस्माभिर्युक्तेनसहायभूतेनत्वयावृतंआवृण्वन्तंशत्रुंवयंस्तोतारोजयेम अभिभवेम अपिच भरेभरे सङ्ग्रामेसङ्ग्रामे अस्माकमंशमस्मदीयंभागमुदव शत्रुकृतपीडापरिहारेणोत्कृष्टंरक्ष तथा हेइन्द्र वरिवोधनं अस्मभ्यंसुगंसुगमंसुप्रापंकृधिकुरु तथा हेमघवन् शत्रूणां अस्मदुपद्रवकारिणांवृष्ण्यावृष्ण्यानिवीर्याणि प्ररुजप्रभङ्ग्धि बाधस्वेत्यर्थः॥ वृतं वृञ्वरणे क्विप्चेतिक्विप् तुगागमः। सुगं सुदुरोरधिकरणइतिगमेर्डप्रत्ययः। कृधि श्रुशृणुपृकृवृभ्यइतिहेर्धिः। रुज रुजोभङ्गे तौदादिकः॥ ४ ॥

पञ्चमीमृचमाह—

नानाहित्वाहवमानाजनाइमेधनानांधर्तरवसाविपन्यवः ।
अस्माकंस्मारथमातिष्ठसातयेजैत्रंहीन्द्रनिभृतंमनस्तव॥५॥१४॥

नाना । हि । त्वा । हवमानाः । जनाः । इमे । धनानाम् । धर्तः । अवसा । विपन्यवः । अस्माकम् । स्म । रथम् । आ । तिष्ठ । सातये । जैत्रम् । हि । इन्द्र । निऽभृतम् । मनः । तव ॥ ५ ॥ १४ ॥

हेधनानांधर्तः गोहिरण्यादिरूपाणांद्रव्याणांधारयितःइन्द्र विपन्यवः स्तोतृनामैतत् स्तोतारइमेजनाः अवसारक्षणेनहेतुनात्वाहवमानाःत्वामाह्वयन्तः नानाहि विभिन्नाःखलु तेषांमध्ये अस्माकंस्म अस्माकमेवसातयेधनदानायरथमातिष्ठ आरोह हेइन्द्र निभृतं अव्याकुलंतवमनश्चित्तंजैत्रंहि जयशीलंखलु शत्रूनजित्वाअस्मभ्यंधनंदातुंसमर्थमित्यर्थः॥ सातये षणुदाने क्तिनिजनसनखनांसञ्झलोरित्यात्वम् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेचतुर्थोवर्गः ॥ १४ ॥

षष्ठीमृचमाह—

गोजिताबाहूअमितक्रतुःसिमःकर्मन्कर्मञ्छतमूतिःखजंकरः ।
अकल्पइन्द्रःप्रतिमानमोजसाथाजनाविह्वयन्तेसिषासवः ॥ ६ ॥

गोऽजिता । बाहू इति । अमितऽक्रतुः । सिमः । कर्मन्ऽकर्मन् । शतम्ऽऊतिः । खजम्ऽकरः । अकल्पः । इन्द्रः । प्रतिऽमानम् । ओजसा । अथ । जनाः । वि । ह्वयन्ते । सिसासवः ॥ ६ ॥

हेइन्द्र तवबाहूहस्तौ गोजिता जयेनगवांलम्भयितारौ त्वंच अमितक्रतुः अपरिच्छिन्नज्ञानः सिमःश्रेष्ठः तथाचशाट्यायनकम्—सिमइतिवैश्रेष्ठमाचक्षतइति। यद्वा सिमःशत्रूणांबन्धकः कर्मन्कर्मन् स्तोतॄणां कर्मणिकर्मणि उपस्थिते शतमूतिः बहुविधरक्षणोपेतः खजङ्करः खजतिमथ्नातिपुरुषानितिखजःसङ्ग्रामः तस्यकर्ता अकल्पः कल्पेनान्येनरहितः स्वतन्त्रइत्यर्थः ओजसा सर्वेषांप्राणिनांयदोजोबलमस्ति तेनसर्वेण प्रतिमानं प्रतिनिधित्वेनमीयमानः यस्मादेवंगुणविशिष्टः इन्द्रः अथ अतःकारणात् सिषासवोधनंलब्धुकामाः जनाविह्वयन्ते विविधमाह्वयन्ति ॥ गोजिता गाःजयतइतिगोजितौ सुपांसुलुगितिविभक्तेराकारः। सिमः षिञ्बन्धने अस्मादौणादिकोमक् । खजङ्करः खजमन्थे पचाद्यच् क्षेमप्रियमद्रेण्चेतिचशब्दस्यानुक्तसमुच्चयार्थत्वात्खजशब्दोपपदादपिकरोतेःखच् अरुर्द्विषदजन्तस्येतिमुम् कृदुत्तरपदप्रकृतिस्वरत्वम् । अकल्पः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सिषासवः वनषणसंभक्तौ सनि सनीवन्तर्धेतिविकल्पनादिड्भावः जनसनखनांसञ्झलोरित्यात्वम् द्विर्वचनादि सनाशंसभिक्षउरित्युप्रत्ययः सतिशिष्टत्वात्तस्यैवस्वरःशिष्यते ॥ ६ ॥

सप्तमीमृचमाह—

उत्तेशतान्मघवन्नुच्चभूयसउत्सहस्राद्रिरिचेकृष्टिषुश्रवः ।
अमात्रंत्वाधिषणातित्विषेमह्यधावृत्राणिजिघ्नसेपुरन्दर ॥ ७ ॥

उत् । ते । शतात् । मघऽवन् । उत् । च । भूयसः । उत् । सहस्रात् । रिरिचे । कृष्टिषु । श्रवः । अमात्रम् । त्वा । धिषणा । तित्विषे । मही । अध । वृत्राणि । जिघ्नसे । पुरम्ऽदर ॥ ७ ॥

हेमघवन् धनवन्निन्द्र कृष्टिषु स्तोतृषुमनुष्येषु ते त्वयादीयमानंश्रवोयदन्नमस्ति तत् शतात् शतसंख्याकात् धनात् उद्रिरिचे उद्रिक्तमधिकंभवति अपिच भूयसः शतसङ्ख्याकादपिबहुत-

-राद्दनात् उद्रिरिचे अधिकंभवति किंबहुना सहस्राव सहस्रसङ्ख्याकादप्युद्रिरिचे त्वयादत्तंत-दन्नमक्षयमित्यर्थः अपिच अमात्रं मात्रया इयत्तयारहितं परिगणितुमशक्यैःसर्वैर्गुणैरधिकं त्वा त्वां महीमहतीधिषणा अस्मदीयास्तुतिलक्षणावाक् तित्विषे दीपयति त्वत्संबन्धिनोगुणान्प्रका-शयति हेपुरन्दर शत्रूणांपुरां दारयितरिन्द्र अध स्तुत्यनन्तरं वृत्राणि आवरकान्शत्रून् जिघ्न-से हंसिविनाशयसि ॥ रिरिचे रिचिर्विरेचने कर्मणिलिट् । तित्विषे त्विषदीप्तौ । जिघ्नसे हन्ते-र्लेटि व्यत्ययेनात्मनेपदम् लेटोडाटावित्यडागमः बहुलंछन्दसीतिशपःश्लुः गमहनेत्यादिनोप-धालोपः स्थानिवद्भावाद्द्विर्वचनादि बहुलंछन्दसीत्यभ्यासस्येत्वम् । पुरन्दर पूःसर्वयोर्दारिसहोरितिखच् खचिह्रस्वइतिह्रस्वत्वम् वाचंयमपुरन्दरौचेतिनिपातनादम् ॥ ७ ॥

अष्टमीमृचमाह—

त्रिविष्टिधातुप्रतिमानमोजसस्तिस्रोभूमीर्नृपतेत्रीणिरोचना ।
अतीदंविश्वंभुवनंववक्षिथाशत्रुरिन्द्रजनुषासनादसि ॥ ८ ॥

त्रिविष्टिऽधातु । प्रतिऽमानम् । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना । अति । इदम् । विश्वम् । भुवनम् । ववक्षिथ । अशत्रुः । इन्द्र । जनुषा । सनात् । असि ॥ ८ ॥

हेनृपते नृणांपालयितरिन्द्र त्वं ओजसःसर्वेषांप्राणिनांबलस्यप्रतिमानंप्रतिनिधिरसि की-दृशंप्रतिमानं त्रिविष्टिधातु धातुशब्दोऽत्रभागवचनः यथा त्रिधातुपञ्चधातुवाशुल्बंकरोतीति[1] यथात्रिविष्टिः त्रिगुणितारज्जुर्दृढतरा एवमिन्द्रोपिदृढतरइत्यर्थः किञ्च त्वं तिस्रोभूमीः त्रीन् लोकान्त्रीणिरोचना त्रीणितेजांसि दिव्यादित्याख्यं अन्तरिक्षेवैद्युतरूपंअग्निं पृथिव्यामाहवनी-यादिरूपेणवर्तमानं पार्थिवमग्निं एवंत्रीन्लोकान्त्रीणितेजांसिच अतिववक्षिथ अतिश-येनवोढुमिच्छसि अपिच इदंविश्वंसर्वंभुवनंभूतजातंच अतिवोढुमिच्छसि सर्वस्यजगतःपाल-नेनत्वमेवसर्वेषांनिर्वाहकोभवसीत्यर्थः यस्माद्धेइन्द्र त्वंसनाच्चिरकालादारभ्य जनुषाजन्मना जन्मप्रभृति अशत्रुः शत्रुरहितोसि ॥ त्रिविष्टिधातु त्रिधात्रिप्रकारेणविष्टयामवेशनेनविधीय-

1 बौधायनसूत्रेचयनाध्याये ।

तेक्रियतइतिनिविष्टिधातु त्रिगुणितारत्नुः विशेर्भावेक्विन् धाञः सितनिगमिमसीत्यादिनाकर्मणितुन्प्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम् अत्रदृढरत्नुवाचकःशब्दस्तद्गतंदाढर्यंलक्षयित्वातद्वतिप्रतिमानेवर्तते यथामाणवकेअग्निशब्दः तिसृःश्रासि त्रिचतुरोःस्त्रियामितितिसादेशोन्तोदात्तः अचिरऋतइतिरेफादेशे उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम् ।ववक्षिथ वहप्रापणेइत्यस्मादिच्छासनि ढत्वकत्वषत्वानि सन्यतइतीत्वाभावश्छान्दसः छान्दसेलिटि अमन्त्रेइतिनिषेधादाम्प्रत्ययाभावः। जनुषा जनेरुसिः॥ ८ ॥

नवमीमृचमाह—

त्वांदे॒वेषु॑प्रथ॒मंह॑वामहे॒त्वंब॑भूथ॒पृत॑नासुसास॒हिः ।
सेमन्नः॑का॒रुमु॑पम॒न्युमु॒द्भिद॒मिन्द्रः॑कृणोतुप्रस॒वेरथं॑पु॒रः ॥ ९ ॥

त्वाम् । दे॒वेषु॑ । प्र॒थ॒मम् । ह॒वा॒म॒हे॒ । त्वम् । ब॒भू॒थ॒ । पृत॑नासु । स॒स॒हिः । सः । इ॒मम् । न॒ः । का॒रुम् । उ॒प॒ऽम॒न्युम् । उ॒त्ऽभिद॑म् । इन्द्रः॑ । कृ॒णो॒तु॒ । प्र॒ऽस॒वे । रथ॑म् । पु॒रः ॥ ९ ॥

हेइन्द्र देवेषुप्रथमंश्रेष्ठंत्वांहवामहे यागार्थमाह्वयामहे तथा त्वं पृतनासुसंग्रामेषुसासहिर्बभूथ शत्रूणामभिभवितासि उत्तरार्धःपरोक्षकृतः सइन्द्रोनोस्माकंकारुंस्तुतीनांकर्तारंउपमन्युं उपमन्तारं सर्वस्य उद्भिदंशत्रूणामुद्भेत्तारं इममेवंगुणविशिष्टंपुत्रंकृणोतुकरोतु अपिच प्रसवे युद्धोत्पत्तौ अस्मदीयंरथंपुरः अन्येभ्योरथेभ्यःपुरतोवर्तमानंकरोतु यद्वा कारुमित्यादीनिरथविशेषणानि कारुंयुद्धस्यकर्तारंउपमन्युं उपगतेनमाप्तेनमन्युनाक्रोधेनयुक्तं उद्भिदं मार्गेष्वस्थितानां वृक्षादीनांउद्भेत्तारं अतिशयेनभंक्तारम्॥ बभूथ बभूथाततन्थजगृभ्मववर्थेतिनिगमेइतिनिपातनादिडभावः। सःइमं सोचिलोपेचेत्पादपूरणमितिसुलोपः। प्रसवे षूङ्प्राणिप्रसवे ऋदोरप् थाथादिनोत्तरपदान्तोदात्तत्वम् ॥ ९ ॥

दशमीमृचमाह—

त्वंजि॑गेथ॒नधना॑रुरोधि॒थार्भे॑ष्वा॒जामघवन्म॒हत्सु॑च ।
त्वामु॒ग्रमव॑से॒संशि॑शीम॒स्यथा॑नइन्द्र॒हव॑नेषुचोदय ॥ १० ॥

त्वम् । जिगेथ । न । धना । रुरोधिथ । अर्भेषु । आजा ।
मघऽवन् । महत्ऽसु । च । त्वाम् । उग्रम् । अवसे । सम् ।
शिशीमसि । अथ । नः । इन्द्र । हवनेषु । चोदय ॥ १० ॥

हेइन्द्र त्वंजिगेथ शत्रूनजयसि तथा धनाशत्रुभ्योपहृतानिधनानिनरुरोधिथ नावरुणत्सि स्तोतृभ्यःप्रयच्छसीत्यर्थः हेमघवन् धनवन्निन्द्र अर्भेष्वल्पेषु आजा आजिषुसंग्रामेषुमहत्सुचप्रौढेषुसंग्रामेषुअवसे अस्माकंरक्षणार्थं उग्रं उद्गूर्णं अधिकबलंत्वांसंशिशीमसि स्तोत्रैस्तीक्ष्णीकुर्मः अथानन्तरं हेइन्द्र त्वंहवनेषुयुद्धार्थमाह्वानेषुसत्सु आगत्यनोस्मान्चोदयसंग्रामेषुप्रेरय जयंप्रापयेत्यर्थः ॥ जिगेथ जिजये लिटिथलि क्रादिनियमात्प्राप्तस्येटः अचस्तास्वत्थल्यनिटोनित्यमिति प्रतिषेधः सन्लिटोर्जेरित्यभ्यासादुत्तरस्यजकारस्यकुत्वम् । रुरोधिथ क्रादिनियमादिट् ।आजा सुपांसुलुगितिसप्तमीबहुवचनस्यडादेशः । शिशीमसि शोतनूकरणे बहुलंछन्दसीतिविकरणस्यश्लुः आदेचइत्यात्वम् द्विर्वचनेबहुलंछन्दसीत्यभ्यासस्येत्वम् ईहल्यघोरितीकारान्तादेशः इदन्तोमसिः ॥ १० ॥

एकादशीमृचमाह—

विश्वाहेन्द्रोअधिवक्तानोअस्त्वपरिह्वृताःसनुयामवाजम् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥११॥१५॥

विश्वाहा । इन्द्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः ।
सनुयाम । वाजम् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥ १५ ॥

व्याख्यातेयंरोहिच्छ्यावेतिवर्गे इन्द्रःसर्वेष्वहस्सु अस्माकंपक्षपातेनवक्ताभवतु वयंचाकुटिलगतयःसन्तः इन्द्रेणदत्तमन्नंलभामहे यदस्माभिःप्रार्थितं अस्मदीयंतन्मित्रादयःपूजितंकुर्वन्तु ॥ ११ ॥

॥ इतिप्रथमस्यसप्तमेपञ्चदशोवर्गः ॥ १५ ॥

तत्तइत्यष्टर्चंदशमंसूक्तं कुत्सस्यार्षमैन्द्रंत्रैष्टुभम् तथाचानुक्रान्तम्—तत्तेष्टाविति । तृतीयेछन्दोमेनिष्केवल्ये इदंसूक्तंनिविद्धानं विश्वजितइतिखण्डेसूत्रितम्—तत्तइन्द्रियमितिनिष्केवल्यमिति ।

तत्रप्रथमामृचमाह—

तत्तइन्द्रियंपरमंपराचैरधारयन्तकवयःपुरेदम् ।
क्षमेदमन्यद्दिव्य१न्यदस्यसमीपृच्यतेसमनेवकेतुः ॥ १ ॥

तत् । ते । इन्द्रियम् । परमम् । पराचैः । अधारयन्त । कवयः ।
पुरा । इदम् । क्षमा । इदम् । अन्यत् । दिवि । अन्यत् । अस्य ।
सम् । ईमिति । पृच्यते । समनाऽइव । केतुः ॥ १ ॥

हेइन्द्र ते त्वदीयं परममुत्कृष्टं तत्प्रसिद्धमिदंवर्तमानमिन्द्रियंबलं पुरापूर्वस्मिन्कालेकवयःक्रान्तदर्शिनःस्तोतारः पराचैःपराचीनंपराङ्मुखं यद्वा पराचैःपराञ्चनैः परागमनैर्युक्तंयुद्धाभिमुखमेव अधारयन्तधृतवन्तः अपिचास्येन्द्रस्य अन्यदेकं इदमग्न्याख्यंज्योतिःक्षमाक्षमायांभूमौवर्तते अन्यदेकंसूर्याख्यंदिविद्युलोके ईम् तदिदमुभयविधमिन्द्रस्यज्योतिः संपृच्यते परस्परंसंयुज्यते रात्रावादित्योग्निनासंयुक्तोभवति अग्निंवादित्यःसायंप्रविशति तस्मादग्निर्दूरान्नक्तंददृशेइतिश्रुतेः । अहनित्वग्निःसूर्येणसंगच्छते उद्यन्तंवावादित्यमग्निरनुसमारोहतितस्माद्धूमएवाग्नेर्दिवाददृशेइतिश्रुतेः । अनयोःपरस्परसङ्गमनेदृष्टान्तः—समनेवकेतुः समनशब्दः संग्रामवाची यथासमनेसंग्रामेयुध्यमानयोरुभयोः केतुर्ध्वजोध्वजान्तरेणसंयुज्यतेतद्वत् । इन्द्रियं इन्द्रस्यलिङ्गंबलं इन्द्रियमिन्द्रलिङ्गमितिघच्प्रत्ययान्तोनिपात्यते । पराचैः अव्ययमेतत् उच्चैर्नीचैरितियथा यास्कस्त्वाह—पराचैःपराञ्चनैरिति । क्षमा सुपांसुलुगितिसप्तम्यालुक् ईमोमलोपःसांहितिकश्छान्दसः । समनाइव षष्ठ्यर्थे क्विप् अन्येभ्योपिदृश्यतइतियुच् सुपांसुलुगितिसप्तम्याआकारः इवेन विभक्त्यलोपःपूर्वपदप्रकृतिस्वरत्वंचेतिसमासः ॥ १ ॥

द्वितीयामृचमाह—

सधारयत्पृथिवींपप्रथच्चवज्रेणहत्वानिरपःससर्ज ।
अहन्नहिमभिनद्रौहिणंव्यहन्व्यंसंमघवाशचीभिः ॥ २ ॥

---

१ तै० ब्रा० २. १. २ । २ तै० ब्रा० २. १. २ । ३ नि० ११. २५ ।

सः । धारयत् । पृथिवीम् । पप्रथत् । च । वज्रेण । हत्वा । निः ।
अपः । ससर्ज । अहन् । अहिम् । अभिनत् । रौहिणम् । वि ।
अहन् । विऽअंसम् । मघऽवा । शचीभिः ॥ २ ॥

सइन्द्रः पृथिवीं असुरैःपीडितांभूमिंधारयत धृतवान् पीडाराहित्येनस्थितामकरोदित्यर्थः तदनन्तरं पप्रथच्च तांभूमिंविस्तीर्णामकरोत अपिचवज्रेणायुधेनहन्तव्यान्वृत्रादीन्हत्वा अपोवृष्ट्युदकानि निःससर्जमेघान्निर्गमयामास एतदेवस्पष्टीक्रियते—अहिमन्तरिक्षेवर्तमानंमेघं अहन्वज्रेण वर्षणार्थमताडयत रौहिणंरोहिणोनामकश्चिदसुरःतंव्यभिनवव्यदारयत् अपिच मघवाधनवानिन्द्रः शचीभिःआत्मीयैर्युद्धकर्मभिर्व्यंसंविगतभुजंवृत्रासुरं अहन् अवधीत॥ पप्रथत् पृथुंकरोतिप्रथयति तत्करोतीतिणिच् णाविष्ठवत्प्रातिपदिकस्यकार्यमितिवचनात्रऋतोहलादेर्लघोरितिऋकारस्यरत्वम् टेरितिटिलोपः तस्यस्थानिवद्भावाद्वृद्ध्यभावः प्रथयतेर्लुङि चङि णिलोपः द्विर्वचनं चङ्यन्यतरस्यामितिचङःपूर्वस्योदात्तत्वम् नचणिलोपस्यस्थानिवत्त्वम् नपदान्तेत्यादिनास्वरविधिंप्रतितन्निषेधात् पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः ॥ २ ॥

तृतीयामृचमाह—

सजातूभर्माश्रद्दधानओजःपुरोविभिन्दन्नचरद्विदासीः ।
विद्वान्वज्रिन्दस्यवेहेतिमस्यार्यंसहोवर्धयाद्युम्नमिन्द्र ॥ ३ ॥

सः । जातूऽभर्मा । श्रत्ऽदधानः । ओजः । पुरः । विऽभिन्दन् ।
अचरत् । वि । दासीः । विद्वान् । वज्रिन् । दस्यवे । हेतिम् ।
अस्य । आर्यम् । सहः । वर्धय । द्युम्नम् । इन्द्र । ३ ॥

जातूभर्मा जातूइत्यशनिमाचक्षते भर्मायुधंअशनिरूपमायुधंयस्यसतथोक्तः यद्वा जातानांप्रजानांभर्ता ओजः ओजसाबलेननिष्पाद्यंकार्यंश्रद्दधानः आदरातिशयेनकामयमानः एवंभूतः सइन्द्रः दासीःदस्युसंबन्धीनिपुरः पुराणिविभिन्दन् विनाशयन व्यचरत विविधमगच्छत् हेवज्रिन्वज्रवन्निन्द्र विद्वान्स्तुतीर्विजानंस्त्वं अस्यस्तोतुर्दस्यवे उपक्षयकारिणेशत्रवेहेतिमायुधंविसृजेतिशेषः अपिच हेइन्द्र आर्यंसहःआर्याविद्वांसःस्तोतारस्तदीयंबलंवर्धय अतिवृद्धंकुरु तथाद्युम्नंतदीयंयशश्चप्रवर्धय॥ जातूभर्मा जनीप्रादुर्भावे अन्येष्वपिदृश्यतइतिदृशिग्रहणस्यसर्वोपाधिव्यभिचारार्थ-

त्वात्केवलादपिडप्रत्ययः जांस्तूर्वतीतिजातूः तुर्वीहिंसार्थः क्विपि राल्लोपइतिवलोपः भ्रियतइति भर्म अन्येभ्योपिदृश्यन्तइतिमनिन् जातूर्भर्मयस्य छान्दसोरेफलोपः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् पक्षान्तरेतु जनेर्निष्ठा जनसनखनामित्यात्वम् जातंसर्वभर्मभर्तव्यंयेन बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् वर्णव्यापत्त्याअकारस्यऊकारः ॥ ३ ॥

चतुर्थीमृचमाह—

तदूचुषेमानुषेमायुगानिकीर्तेन्यंमघवानामबिभ्रत् ।
उपप्रयन्दस्युहत्यायवज्रीयद्धसूनुःश्रवसेनामदधे ॥ ४ ॥

तत् । ऊचुषे । मानुषा । इमा । युगानि । कीर्तेन्यम् । मघऽवा । नाम । बिभ्रत् । उपऽप्रयन् । दस्युऽहत्याय । वज्री । यत् । ह । सूनुः । श्रवसे । नाम । दधे ॥ ४ ॥

नाम शत्रूणांनामकं तदिन्द्रस्यबलं ऊचुषे उक्तवतेस्तुवतेयजमानायकीर्तेन्यं कीर्तनीयंस्तुत्यंनामकं तद्बलंबिभ्रत् धारयन्मघवाधनवानिन्द्रः मानुषामनुष्याणांसंबन्धीनि इमाइमानिदृश्यमानानि युगानि अहोरात्रसंघनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मनानिष्पादयतीतिशेषः किंपुनस्तन्नाम दस्युहत्याय दस्यूनांवृत्रादीनांहननाय उपप्रयन् गृहसमीपान्निर्गच्छन्वज्रीवज्रवान् सूनुः शत्रूणांप्रेरयितेन्द्रः यद्ध यत्खलु नाम शत्रूणांनामकंश्रवसेजयलक्षणाययशसेदधेधृतवान् ॥ ऊचुषे ब्रूञ्व्यक्तायांवाचि ब्रुवोवचिः लिटःक्वसुः वचिस्वपीत्यादिनासंप्रसारणं चतुर्थ्येकवचनेभसंज्ञायां वसोःसंप्रसारणमितिसंप्रसारणं शासिवसिघसीनांचेतिषत्वम् क्वसुप्रत्ययाद्युदात्तत्वम्। कीर्तेन्यं कृतसंशब्दने कृत्यार्थेतवैकेनितिकेन्यप्रत्ययः। मघवा मघशब्दात् छन्दसीवनिपावितिमत्वर्थीयोवनिप्। बिभ्रत् डुभृञ्धारणपोषणयोः शतरि जुहोत्यादित्वात् शपःश्लुः भृञामिदित्यभ्यासस्येत्वम् नाभ्यस्ताच्छतुरितिनुमागमप्रतिषेधः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

तदस्येदंपश्यताभूरिपुष्टंश्रदिन्द्रस्यधत्तनवीर्याय ।
सगाअविन्दत्सोअविन्ददश्वान्सओषधीःसोअपःसवनानि॥५॥१६॥

१ जांस्तूर्वतीतिपाठः ।

तत् । अस्य । इदम् । पश्यत । भूरि । पुष्टम् । श्रत् । इन्द्रस्य । धत्तन । वीर्याय । सः । गाः । अविन्दत् । सः । अविन्दत् । अश्वान् । सः । ओषधीः । सः । अपः । सः । वनानि ॥ ५ ॥ १६ ॥

हेऋत्विग्यजमानलक्षणाजनाः अस्येन्द्रस्य तदिदंवीर्यं पुष्टंप्रवृद्धं अतएवभूरिविस्तीर्णंपश्यत आलोकयत तस्मैचवीर्याय श्रद्धत्तन बहुमानंकुरुत किंपुनस्तद्वीर्यमितिचेत् उच्यते—सइन्द्रः पणिभिरपहृतागाः येनवीर्येणाविन्दत् अलभत तथा तैरपहृतानश्वान् सइन्द्रोयेनाविन्दत् अपिच सइन्द्रःओषधीः ओषध्युपलक्षितांसर्वांभूमिंयेनवीर्येणालभत तथा वृत्रेणनिरुद्धाअपोवृष्ट्युदकानिसइन्द्रोयेनालभत तथा वनानिवननीयानिसंभजनीयानिधनानिसइन्द्रोयेनवीर्येणप्रापोत् ॥ धत्तन तप्तनप्तनथनाश्चेतितस्यतनादेशः । अविन्दत् विदॢलाभे शेमुचादीनामितिनुम् ॥ ५॥

॥ इतिप्रथमस्यसप्तमेषोडशोवर्गः ॥ १६ ॥

षष्ठीमृचमाह—

भूरिकर्मणेवृषभायवृष्णेसत्यशुंष्मायसुनवामसोमम् ।
यआदृत्यापरिपन्थीवशूरोयंज्वनोविभजन्नेतिवेदः ॥ ६ ॥

भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुंष्माय । सुनवाम । सोमम् । यः । आऽदृत्य । परिपन्थीऽइव । शूरः । अयंज्वनः । विऽभजन् । एति । वेदः ॥ ६ ॥

भूरिकर्मणे बहुविधेनशत्रुवधादिरूपेणकर्मणायुक्तायवृषभाय वृषभवत् सर्वेषुदेवेषुश्रेष्ठाय वृष्णेसेचनसमर्थाय सत्यशुष्माय अवितथबलायेन्द्रायतदर्थंसोमंसुनवाम होमार्थरसरूपंकरवाम शूरःशौर्योपेतोयइन्द्रः आदृत्य धनविषयमादरंकृत्वा अयज्वनोऽयजमानस्यवेदोधनंविभजन् तस्मादयजमानाद्विभक्तंकुर्वन् अपहरन् एति यजमानेभ्यस्तद्धनंदातुंगच्छति तत्रदृष्टान्तः—परिपन्थीव यथामार्गनिरोधकश्चोरः गच्छतांपुण्यपुरुषाणांधनंबलात्कारेणापहृत्यगच्छतितद्वत् ॥ आदृत्य दृङ्आदरे समासेनञ्पूर्वेक्त्वोल्यप् तस्यस्थानिवद्भावेनकृत्त्वेसति ह्रस्वस्यपितिकृतीतितुक् । परिपन्थीव छन्दसिपरिपन्थिपरिपरिणौपर्यवस्थातरीतीनिमत्ययान्तोनिपात्यते ॥ ६॥

सप्तमीमृचमाह—

तदिन्द्रप्रेवंवीर्यंचकर्थयत्ससन्तंवज्रेणाबोधयोहिम् ।
अनुत्वापत्नीर्हृषितंवयश्चविश्वेदेवासोअमदन्ननुत्वा ॥ ७ ॥

तत् । इन्द्र । प्रऽइव । वीर्यम् । चकर्थ । यत् । ससन्तम् । वज्रेण ।
अबोधयः । अहिम् । अनु । त्वा । पत्नीः । हृषितम् । वयः ।
च । विश्वे । देवासः । अमदन् । अनु । त्वा ॥ ७॥

हेइन्द्र तद्वीर्यंवीरकर्म प्रेवचकर्थ प्रख्यातमिवाकार्षीः किंपुनस्तद्वीर्यं ससन्तंस्वपन्तं मदोन्मत्तमहिंवृत्रंवज्रेणकुलिशेनयद्येनवीर्येणत्वमबोधयः प्रबुद्धःसन्मयासहयुद्धंकरोत्वितिजागरितवानसि हृषितं तादृशस्यवृत्रस्यहननेनप्राप्तहर्षंत्वात्वांअनुपश्चात्पत्नीर्देवपत्न्यः अमदन्हर्षंप्राप्ताः अपिच वयश्चगमनशीलाः मरुतोपि तथाविश्वेदेवासः अन्येचसर्वेदेवाः त्वात्वामनुपश्चादमदन् अमाद्यन् ॥ ससन्तं षसस्वप्ने अदादित्वाच्छपोलुक् । पत्नीः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । अमदन् मदीहर्षे व्यत्ययेनशप् ॥ ७ ॥

अष्टमीमृचमाह—

शुष्णंपिप्रुंकुयवंवृत्रमिन्द्रयदावधीर्विपुरःशंबरस्य ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥८॥१७॥

शुष्णम् । पिप्रुम् । कुयवम् । वृत्रम् । इन्द्र । यदा । अवधीः ।
वि । पुरः । शंबरस्य । तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ८ ॥ १७ ॥

हेइन्द्र त्वंशुष्णादीन्चतुरोसुरान् यदावधीःहतवानसि तदानींशम्बरस्यासुरस्यपुरः नगराणि विदारितवानसि असुराणांमुख्येषुहतेषुअन्यान्यपिअसुरपुराणिविदीर्णान्यासन्नित्यर्थः यदनेनसूक्तेनप्रार्थितंअस्मदीयंतन्मित्रादयोममहन्तां पूजितंकुर्वन्तु ॥ शुष्णं शुषशोषणे अन्तर्भावितण्यर्थात् तृषिशुषिरसिभ्यःकिदित्त्वेननिनप्रत्ययः निदित्यनुवृत्तेराद्युदात्तत्वम् । पिप्रुं पृपालनपूरणयोः पृप्रत्ययेके औणादिकःकुप्रत्ययः छन्दस्युभयथेतितस्यसार्वधातुकत्वेशप् जुहोत्यादित्वाच्छ्लुः

अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् । कुयवं यवोयवनंमिश्रणं कुत्सितंयवनमस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । शम्बरस्य शमयतीतिशम्बःआयुधम् शमेर्वन् ततोमत्वर्थीयोरप्रत्ययः ॥ ८ ॥

॥ इतिप्रथमस्यसप्तमेसप्तदशोवर्गः ॥ १७ ॥

योनिरितिनवर्चमेकादशंसूक्तंकुत्सस्यार्षंत्रैष्टुभमैन्द्रं योनिर्नवेत्यनुक्रान्तम् सूक्तविनियोगो लैङ्गिकः ॥

तत्रप्रथमामृचमाह—

योनिष्टइन्द्रनिपदेंअकारितमानिषीदस्वानोनार्वा ।
विमुच्यावयोवसायाश्वान्दोपावस्तोर्वहीयसःप्रपित्वे ॥ १ ॥

योनिः । ते । इन्द्र । निऽसदे । अकारि । तम् । आ । नि । सीद । स्वानः । न । अर्वा । विऽमुच्य । वयः । अवऽसाय । अश्वान् । दोषा । वस्तोः । वहीयसः । प्रऽपित्वे ॥ १ ॥

हेइन्द्र योनिः वेद्याख्यंस्थानं तेतवनिषदेनिषदनायोपवेशनायअकारिकृतं अस्माभिःप्रकल्पितमभूत् तंयोनिंआनिषीद शीघ्रमागत्यतत्रोपविश शीघ्रागमनेदृष्टान्तः—स्वानोनार्वा अर्वेत्यश्वनाम यथाअश्वः स्वानः हेषाशब्दंकुर्वन्स्वकीयंस्थानंशीघ्रमागच्छति तद्वत् किंकृत्वावयः अश्वबन्धनार्थान्रश्मीन् विमुच्यरथाद्विश्लिष्य तथाअश्वान्रथेयोजितांश्चतुरगानवसायविमुच्य अत्रनिरुक्तम्—अवसायाश्वानितिस्यतिरुपसृष्टोविमोचनेइति । कीदृशानश्वान् प्रपित्वेप्राप्तकालेप्राप्ते प्रपित्वेप्राप्तेभीकेऽसंकइतियास्कः । दोषारात्रौवस्तोरहनिच वहीयसः आदरातिशयेनवोढ्न् ॥ निषदे सदेःसंपदादिलक्षणोभावेक्विप् । स्वानः स्यमुस्वनध्वनशब्दे बहुलवचनात्कर्तरिघञ् कर्षात्वतइत्यन्तोदात्तत्वम् । वयः वियन्ति रथेनसहसंगच्छन्तइतिविशब्देनरश्मयउच्यन्ते वीगत्यादिषु औणादिकःअप्रत्ययः टिलोपश्च द्वितीयार्थेप्रथमा । अवसाय षोन्तकर्मणि आदेचइत्यात्वम् समासेनञ्पूर्वेक्त्वोल्यपितिक्त्वोल्यबादेशः ।वहीयसः वहप्रापणे तृजन्ताद्वोढृशब्दात्तुश्छन्दसीतीयसुन् तुरिष्ठेमेयःस्वितिगुण्योपेकर्त्वन्येढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात्तदाश्रितस्योत्वस्याप्यभावेतृलोपएवक्रियते ॥ १ ॥

१ नि० १. १७. । २ नि० ३. २०. ।

द्वितीयामृचमाह—

ओत्येनरइन्द्रमूतयेगुर्नूचित्तान्त्सद्योअध्वनोजगम्यात् ।
देवासोमन्युंदासस्यश्चम्नन्तेनआवक्षन्त्सुवितायवर्णम् ॥ २ ॥

ओ इति । त्ये । नरः । इन्द्रम् । ऊतये । गुः । नु । चित् । तान् । सद्यः । अध्वनः । जगम्यात् । देवासः । मन्युम् । दासस्य । श्चम्नन् । ते । नः । आ । वक्षन् । सुवितायं । वर्णम् ॥ २ ॥

त्येतेनरोयज्ञस्यनेतारोयजमानाः ऊतयेरक्षणाय इन्द्रं ओ आउइतिनिपातद्वयसमुदायआकारार्थःआगुः आगच्छन्ति सचेन्द्रःआगतांस्तान्नूचिक्षिप्रंसद्यस्तदानीमेवअध्वनोनुष्ठानमार्गात् जगम्यात्गमयतुमापयतु देवासः सर्वेदेवाः दासस्यउपक्षपयितुरसुरस्यमन्युंक्रोधंश्चम्नन भक्षयन्तु हिंसन्त्वित्यर्थः अपिच तेदेवानोस्माकंसुवितायसुष्ठुमाप्तव्यायचज्ञाय वर्णंअनिष्टनिवारकमिन्द्रं आवक्षन्आवहन्तुआनयन्तु ॥ जगम्यात् गमेरन्तर्भावितण्यर्थात् लिङि बहुलंछन्दसीतिशपः श्लुः । श्चम्नन् चमुअदने लेटिव्यत्ययेनश्ना शकारोपजनश्छान्दसः यद्वा श्चम्नातिःप्रकृत्यन्तरंहिंसार्थंद्रष्टव्यम्।वक्षन् वहप्रापणे लेटि सिब्बहुलंलेटीतिसिप् ढत्वकत्वषत्वानि। सुविताय सुपूर्वादेतेः कर्मणिनिष्ठा तन्वादित्वादुवङ् सूपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम् । वर्णम् वृञ्वरणेअस्मादन्तर्भावितण्यर्थात् कॄवृजृसिद्रुपन्यनिस्वपिभ्योनित्वेतिनप्रत्ययः नित्वादाद्युदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

अवत्मनाभरतेकेतवेदाअवत्मनाभरतेफेनमुदन् ।
क्षीरेणस्नातःकुयवस्ययोषेहतेतेस्यातांप्रवणेशिफायाः ॥ ३ ॥

अर्व । त्मना । भरते । केतऽवेदाः । अर्व । त्मना । भरते । फेनम् । उदन् । क्षीरेण । स्नातः । कुयवस्य । योषे इति । हते इति । ते इति । स्याताम् । प्रवणे । शिफायाः ॥ ३ ॥

केतवेदाः केतंज्ञातं वेदःपरेषांधनंयेनसतादृशः कुयवनामासुरः त्मना आत्मना स्वयमेवावभरते ज्ञातंपरेषांधनंचअपहरति अपिचसोसुरः उदन्नुदके अन्तर्वर्तमानःसन् फेनं फेनयुक्तमुदकं त्मना आत्मनास्वयमेवावभरते अपहरति क्षीरेणक्षरणशीलेनतेनापहृतेनोदकेन कुयवस्यासुरस्ययोपेभार्ये स्नातःस्नानंकुर्वाते वे तादृश्यौ स्त्रियौ शिफायाः शिफानामनद्याः तस्याःप्रवणेनिम्नेप्रवेष्टुमशक्येअगाधप्रदेशे हतेनष्टे स्यातां भवेतां हेइन्द्र त्वंपरेषांधनमपहृत्य अन्यैर्दुरवगाहे उदकस्यमध्येवर्तमानंकुयवं सकुटुम्बं अवधीरित्यर्थः ॥ त्मना मन्त्रेष्वाङ्यादेरात्मनइतिआकारलोपः । भरते हृञ्हरणे हग्रहोर्भइतिभत्वम् । केतवेदाः कितज्ञाने कर्मणि घञ् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । उदन् पद्दन्नित्यादिनाउदकशब्दस्यउदन्नादेशः सुपांसुलुगितिसप्तम्यालुक् ॥ ३ ॥

चतुर्थीमृचमाह—

युयोप॒नाभि॒रुप॑रस्या॒योः प्रपूर्वा॑भिस्तिरते॒राष्टि॒शूरः॑ ।
अ॒ञ्ज॒सीकु॑लि॒शीवी॒रप॑त्नी॒पयो॑हिन्वा॒नाउ॒दभि॑र्भरन्ते ॥ ४ ॥

यु॒योप॑ । नाभिः॑ । उप॑रस्य । आ॒योः । प्र । पूर्वा॑भिः । ति॒र॒ते॒ । राष्टि॑ ।
शूरः॑ । अ॒ञ्ज॒सी । कु॒लि॒शी । वी॒रऽप॑त्नी । पयः॑ । हि॒न्वा॒नाः ।
उ॒दऽभिः॑ । भ॒र॒न्ते॒ ॥ ४ ॥

उपरस्य उदकस्यमध्येसुप्तस्यावस्थितस्य आयोः परेषामुपद्रवार्थं इतस्ततोगच्छतः कुयवस्यासुरस्य नाभिः सन्नद्धमावसनस्थानं युयोपगूढमासीत् यथाअन्यैर्नदृश्यतेसोऽसुरस्तथाअकरोदित्यर्थः अपिच पूर्वाभिः पूरयित्रीभिरात्मनाअपहृताभिरद्भिः प्रतिरते सोसुरः प्रवर्धते सचशूरः शौर्योपेतोराष्टि राजतेच आत्मीयेन शौर्येणलोकेप्रख्यातोभवतीत्यर्थः तं इममसुरं अञ्जसीआञ्जस्योपेता कुलिशी कूलं शातयन्ती वीरपत्नी वीरस्य पालयित्री एतत्संज्ञिकास्तिस्रोनद्यः पयः पयसातत्संबन्धिनासारभूतेनोदकेन हिन्वानाः प्रीणयन्त्यः उदभिरात्मीयैरुदकैर्भरन्ते धारयन्ति ॥ युयोप युपविमोहने । नाभिः नहोभश्चेतीञ्प्रत्ययः । राष्टि राजृदीप्तौ बहुलंछन्दसीतिशपोलुक् व्रश्चादिनाषत्वेष्टुत्वम् । पयः सुपांसुलुगितितृतीयायालुक् । हिन्वानाः हिविःप्रीणनार्थः इदित्त्वान्नुम् असाचाच्छीलिकश्चानश् आगमानुशासनस्यानित्यत्वान्नुमभावः चानशोल्सार्वधातुकत्वाभावाचत्स्वराभावेचित्स्वरएवशिष्यते॥४॥

पञ्चमीमृचमाह–

प्रति॒यत्स्या नीथाद॑र्शि॒दस्यो॒रोको॒ नाच्छा॒सद॑नंजान॒तीगा॑त् ।
अध॑स्मानोमघवञ्चर्कृ॒तादिन्मानो॑म॒घेव॑निष्ष॒पीपरा॑दाः ॥ ५॥१८॥

प्रति॑ । यत् । स्या । नीथा॑ । अद॑र्शि । दस्यो॑ः । ओकः॑ । न । अच्छ॑ ।
सद॑नम् । जा॒न॒ती । गा॒त् । अध॑ । स्म॒ । नः॒ । म॒घ॒ऽव॒न् । च॒र्कृ॒तात् ।
इत् । मा । नः॒ । म॒घाऽइ॑व । नि॒ष्ष॒पी । परा॑ । दाः॒ ॥ ५ ॥ १८ ॥

यद्यदानीथानयनहेतुभूता या सापदवीमत्यदर्शि अस्माभिर्दृष्टाभूव साचपदवीदस्योः उपक्षपयितुः कुयवस्यासुरस्यसदनंगृहमच्छाभिमुख्येनगाव्गतामाप्ता तत्रदृष्टान्तः–जानतीस्वकीयंवत्समभिजानतीगौः ओकोन निवासस्थानंस्वकीयंगोष्ठंयथाऋजुमामोति तद्वन्मार्गोपिअसुरगृहंमाप्तइत्यर्थः अधस्म अथानन्तरमेव हेमघवन् धनवन्निन्द्र चर्कृतात् पुनःपुनस्तेनासुरेणकृतादुपद्रवान्नोस्मान्रक्षेतिशेषः इदित्यवधारणे अस्मानरक्षैव नोरमान्मापरादाः मापरित्याक्षीः अस्माभिर्ज्ञातेनमार्गेणगत्वाअस्मदुपद्रवकारिणंअसुरंजहीतितात्पर्यार्थः तत्रव्यतिरेकेदृष्टान्तोभिधीयते–मघेवनिःषपी यथाविनिर्गतपसोविनिर्गतशेपोयथेष्टचारीदासीपतिः मघाइव यथाधनानिअस्थानेपरित्यजतितथाअस्मान्मापरित्याक्षीरित्यर्थः अत्रनिरुक्तम्–निष्षपीस्त्रीकामोभवति विनिर्गतपसाः[1] पसःसपतेःस्पृशतिकर्मणोमानोमघेवनिष्षपीपरादाः सयथाधनानिविभजति मानस्त्वंतथापरादाइति[2] ॥ नीथा णीञ्प्रापणे हनिकुषिनीरमिकाशिभ्यःक्थन्नितिकरणेक्थन्प्रत्ययः । गात् एतेर्लुङि इणोगालुङीतिगादेशः गातिस्थेतिसिचोलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । चर्कृतात् करोतेर्यङ्लुगन्तात् निष्ठेतिक्तप्रत्ययः । मघाइवशेश्छन्दसीतिशेर्लोपः । निष्षपी षपसमवाये सपतिसमवेतियोन्यासङ्गच्छतइतिसपःशेपः पचाद्यच् निर्गतोनित्योद्धृतःसपःशेपोयस्यसस्त्रीव्यसनीनिष्षपः वर्णव्यापत्त्याईकारः । दाः डुदाञ्दाने लुङि गातिस्थेतिसिचोलुक् नमाङ्योगइत्यडभावः ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेष्टादशोवर्गः ॥ १८ ॥

---

१ क्वचित्‌निरुक्तपुस्तके " विनिर्गतसपः , सपःसपतेःस्पृशतिकर्मणः " इतिपाठः ' अयमेवयुक्तइतिभाति ' । निरुक्तवृत्तौतु " विनिर्गतपसाः , स्पशः स्पशतेःस्पृशतिकर्मणः " इत्यपिपाठः । २ नि० ५. १६. ।

षष्ठीमृचमाह—

सत्वंनइन्द्रसूर्येसोअप्स्वनागास्त्वआभंजजीवशंसे ।
मान्तरांभुजमारीरिपोनःश्रद्धितंतेमहतइन्द्रियाय ॥६ ॥

सः । त्वम् । नः । इन्द्र । सूर्यें । सः । अप्ऽसु । अनागाःऽत्वे । आ ।
भज । जीवऽशंसे । मा । अन्तराम् । भुजम् । आ । रिरिषः । नः ।
श्रद्धितम् । ते । महते । इन्द्रियाय ॥ ६ ॥

हेइन्द्र सत्वंनोस्मान्सूर्येसर्वस्यमेरकेआदित्येआभजआभाजय आभिमुख्येनभक्तानसंभक्तान्कुरु तथा सत्वंअप्सुअब्देवतासुअस्मानाभाजय अपिचजीवशंसे जीवैःप्राणिभिःशंसनीयेकामयितव्येअनागास्त्वेअपापःपापराहित्येअस्मानाभाजय अपिचनोस्माकं अन्तरांगर्भरूपेणान्तर्वर्तमानांभुजंपालयित्रींप्रजांआसमन्ताद्मारिरिषः माहिंसीः तेतवमहतेमहतेप्रभूतायइन्द्रियाय बलायश्रद्धितंअस्माभिःश्रद्धानंकृतं त्वदीयंबलंबहुमानपूर्वकंस्तुमइत्यर्थः तस्मात्तादृशबलयुक्तस्त्वंमारिरिषइतिपूर्वेणसंबन्धः ॥ अनागास्त्वे नविद्यतेआगः पापंयस्यसोनागाः तस्यभावस्तत्त्वम् छान्दसउपधादीर्घः। जीवशंसे शंसुस्तुतौ कर्मणिघञ् थाथादिनोत्तरपदान्तोदात्तत्वम्। भुज भुनक्तिपालयतीतिभुक् भजा क्विप्। रिरिषः रिषहिंसायां स्वार्थेण्यन्तात्स्माल्लुङिच्लङिणिलोपेउपधाह्रस्वत्वादीनि छान्दसंपदकालीनमभ्यासह्रस्वत्वम्। श्रद्धितम् श्रच्छब्दस्य कर्यादित्वेनगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

अधामन्येश्रत्तेअस्माअधायिवृषाचोदस्वमहतेधनाय ।
मानोअकृतेपुरुहूतयोनाविन्द्रक्षुध्यंद्भ्योवयआसुतिंदाः ॥ ७ ॥

अध । मन्ये । श्रत् । ते । अस्मै । अधायि । वृषा । चोदस्व ।
महते । धनाय । मा । नः । अकृते । पुरुऽहूत । योनौ । इन्द्र ।
क्षुध्यत्ऽभ्यः । वयः । आऽसुतिम् । दाः ॥ ७ ॥

हेइन्द्र अध अथानन्तरंमन्ये त्वांमनसाजानामि तेतवास्मैबलायश्रदधायि अस्माभिःश्रद्धाकृता त्वदीयबलविषयमादरातिशयेनस्तोत्रंकृतमित्यर्थः वृषा कामानांवर्षिता सत्वंमहतेमीळ्हायधनायचोदयस्व अस्मान्प्रेरय हेपुरुहूत पुरुभिर्बहुभिर्यजमानैराहूतेन्द्र अकृते अनिष्पादितेधनशून्येयोनौ गृहनामैतत् गृहे नोस्मान्माधाः मानिधेहि धनधान्यपूर्णेगृहेस्मान्वासयेत्यर्थः अपिच हेइन्द्र क्षुध्यद्भ्योबुभुक्षितेभ्योन्येभ्योपिस्तोतृभ्यः वयोन्नं आसुतिंपेयंक्षीरादिकंचदाः देहि ॥ अधायि दधातेःकर्मणि लुङि चिण्भावकर्मणोरिति च्लेश्चिण् आतोयुक्चिण्कृतोरितियुक् क्षुध्यद्भ्यः क्षुधबुभुक्षायाम् दिवादित्वाच्छ्यन् नित्त्वादाद्युदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

मानो॑वधीरिन्द्र॒मापरा॑दा॒मान॑ः॒प्रि॒याभोज॑नानि॒प्रमो॑षीः ।
आ॒ण्डामानो॑मघवञ्छक्र॒निर्भे॒न्मान॒ःपात्रा॑भेत्स॒हजा॑नुषाणि ॥ ८ ॥

मा । नः॒ । व॒धीः॒ । इ॒न्द्र॒ । मा । परा॑ । दाः॒ । मा । नः॒ । प्रि॒या । भोज॑नानि । प्र । मो॒षीः॒ । आ॒ण्डा । मा । नः॒ । म॒घ॒ऽव॒न् । श॒क्र॒ । निः । भे॒त् । मा । नः॒ । पात्रा॑ । भे॒त् । स॒हऽजा॑नुषाणि ॥ ८ ॥

हेइन्द्र नोस्मान्मावधीः माहिंसीः सर्वदारक्षेत्यर्थः अपिचमापरादाः मापरित्याक्षीः परादानं परित्यागः अस्मत्कृतांपूजांसदागृहाणेत्यर्थः अपिचनोस्माकं प्रिया प्रियाणिईप्सितानिभोजनानि उपभोग्यानिधनानिमाप्रमोषीः मापहार्षीः अस्मास्वेवधनानियथास्युः तथाकुर्वित्यर्थः तथाहेमघवन् धनवन् शक्र सर्वकार्यशकेन्द्र नोस्माकं आण्डा अण्डरांबन्धीनिगर्भरूपेणनिषिक्तान्यपत्यानिमानिर्भेत् माभिनः गर्भरूपेणावस्थितानस्मत्पुत्रान् रक्षेत्यर्थः मापनः पात्रा पतन्ति गच्छन्तिगमनसमर्थानियानितान्यपत्यानिपात्राणितानिचमाभेत् माभिदः सहजानुषाणि जानुभ्यांयानिभूमिंसनन्तिगच्छन्तीत्यर्थः तानिजानुषाणि तैः सहितानिमाविनीनशः यद्वा नोस्माकंसहजानुषाणि आधानेसहोत्पन्नानि पात्रापात्राणिस्रुवादीनि मानिर्भेत् माभिनः ॥ वधीः हन्तेर्माङ्लुङि लुङिचेतिवधादेशः सचादन्तः सिच् अतोलोपइत्यकारलोपः तस्यस्थानिवद्भावादतोहलादेरितिवृद्ध्यभावः इटईटीतिसिचोलोपः । मोषीः मुषस्तेये लुङि सिचइट् नेटीतिवृद्धिप्रतिषेधः । भेत् भिदिर्विदारणे लुङिसिपि बहुलंछन्दसीतिविकरणस्यलुक् लघूपधगुणः हल्ङ्याब्भ्यइतिसिपोलोपः ॥ ८ ॥

माध्यन्दिनेसवनेर्वाङेहीत्येषापोतुःप्रस्थितयाज्या सूत्रितंच—अर्वाङेहिसोमकामंत्वाहुस्तवायंसोमस्त्वमेह्यर्वाङिति ।

तामेतांसूक्तेनवमीमृचमाह—

अर्वाङेहिसोमकामंत्वाहुरयंसुतस्तस्यपिबामदाय ।
उरुव्यचाजठरआवृषस्वपितेवनःशृणुहिहूयमानः ॥ ९ ॥ १९ ॥

अर्वाङ् । आ । इहि । सोमऽकामम् । त्वा । आहुः । अयम् ।
सुतः । तस्य । पिब । मदाय । उरुऽव्यचाः । जठरे । आ । वृषस्व ।
पिताऽइव । नः । शृणुहि । हूयमानः ॥ ९ ॥ १९ ॥

हेइन्द्र त्वंअर्वाङ् अस्मदभिमुखःसन् एहि आगच्छ किंकारणमितिचेत् यस्मात्त्वांसोमविषयाभिलाषमाहुः पुराविदःकथयन्ति अयमस्मदीयःसोमःसुतःऋत्विग्भिरभिषुतः अतआगच्छेत्यर्थः आगत्यचमदायहर्षार्थंतस्यतमस्मदीयमभिषुतंसोमंपिब एतदेवस्पष्टीक्रियते उरुव्यचाः उरुविस्तीर्णंव्यचोव्यापनंयस्य तादृशोमहावयवोभूत्वाजठरेआत्मीयेउदरेआवृषस्व सोममासिञ्च आसमन्तात्पूरयेत्यर्थः एवंभूतस्त्वंहूयमानः स्तुतिभिराहूयमानःसन् पितेवपुत्राणांवाक्यानिशृणोति तथानोस्माकंवाक्यानिशृणुहिशृणु ॥ सोमकामं सोमविषयःकामोभिलाषोयस्य बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । आहुः ब्रुवःपञ्चानामादितआहोब्रुवइतिझेरुसादेशोधातोराहादेशश्च तस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी । मदाय मदीहर्षे मदोनुपसर्गेइतिभावेअप् । उरुव्यचाः व्यचव्याजीकरणे औणादिकोसिप्रत्ययः व्यचेःकुटादित्वमनसीतिवचनात् ङित्वाभावेनसंप्रसारणाभावः गतादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् यद्वा उरुविचतिव्याप्नोतीति उरुव्यचाः कृदुत्तरपदप्रकृतिस्वरत्वम् । वृषस्व वृषसेचने व्यत्ययेनात्मनेपदशपत्ययौ । शृणुहि श्रुशृणुपृकृवृभ्यइतिहेर्हिः ॥ ९ ॥

॥ इतिप्रथमस्यसप्तमेएकोनविंशोवर्गः ॥ १९॥

१ कर्मणायमभिप्रैति ( पा० १. ४. ३२ ) इतिसूत्रे क्रिययायमभिप्रैतीतिव्याख्यानात् तमित्यस्य संप्रदानत्वं संप्रदानत्वाच्चतुर्थी चतुर्थ्यर्थेषष्ठी तस्य तस्मै तमित्यर्थः ।

चन्द्रमाइत्येकोनविंशत्यृचंसूक्तंद्वादशम् अपांपुत्रस्यत्रितस्यकूपेपतितस्यकुत्सस्यवार्षम् तथाचोभयोःकूपपातआम्नायते त्रितःकूपेवहितः । कार्टेर्निबाळ्हऋषिरह्वदूतयइतिच । त्रितस्यचापांपुत्रत्वंतैत्तिरीयाःस्पष्टमामनन्ति—तंतएकतोजायत सद्वितीयमभ्यपातयत ततोद्वितोजायत सतृतीयमभ्यपातयत् ततस्त्रितोजायत यदद्भ्योजायन्त तदाप्त्यानामाप्त्यत्वमिति । तमेतमाप्त्यंत्रितस्तद्वेदाप्त्यइतितकारोपजनेनवयमधीमहेइति । अन्त्यात्रिष्टुप् संमातपन्तीत्येपायवमध्यामहाबृहती आद्यौद्वावष्टाक्षरौपादौ द्वादशाक्षरस्तृतीयः ततोद्वावष्टाक्षरौसायवमध्या महाबृहतीचत्वारोष्टकाजागतश्चमहाबृहतीत्युक्त्वामध्येचेद्यवमध्येत्युक्तलक्षणोपेतत्वात् शिष्टाःपङ्क्तयः विश्वेदेवादेवता तथाचानुक्रान्तम्—चन्द्रमाएकोनास्त्यस्त्रितोवावैश्वदेवंहिपाङ्क्तमन्त्यात्रिष्टुबष्टमीमहाबृहतीयवमध्येति । हीत्यभिधानादिदमादीनित्रीणिसूक्तानिवैश्वदेवानि विनियोगः अत्रशाट्यायनिनइतिहासमाचक्षते—एकतोद्वितस्त्रितइतिपुरात्रयऋषयोबभूवुः तेकदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासयासन्तप्तगात्राःसन्तः एकंकूपमविन्दन् तत्रत्रिताख्यएकोजलपानायकूपंमाविशत् स्वयंपीत्वाइतरयोश्चकूपादुदकमुद्धृत्यमादात् तौउदकंपीत्वात्रितंकूपेपातयित्वातदीयंधनंसर्वमपहृत्यकूपंचरथचक्रेणपिधायमास्थिपातां ततःकूपेपतितःसत्रितः कूपादुत्तरीतुंअशक्नुवन्सर्वेदेवामामुद्धरन्त्वितिमनसासस्मार ततस्तेषांस्तावकमिदंसूक्तंददर्श तत्ररात्रौकूपस्यान्तश्चन्द्रमसोरश्मीन् पश्यन्परिदेवयते ।

तत्रप्रथमामृचमाह—

चन्द्रमाअप्स्व१न्तरासुपर्णोधावतेदिवि ।
नवोहिरण्यनेमयःपदंविन्दन्तिविद्युतोवित्तंमेअस्यरोदसी ॥१॥

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि ।
न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति । विऽद्युतः । वित्तम् ।
मे । अस्य । रोदसी इति ॥ १ ॥

१ ऋ० सं० १.७.२३. । २ ऋ० सं० १.७.२४. । ३ तै० ब्रा० ३.२.८. ।
४ सर्वानुक्रमपरिभाषायांनवमखण्डे. ।

अप्सुआन्तरिक्ष्यासुउदकमयेमण्डलेअन्तर्मध्येवर्तमानःसुपर्णः शोभनपतनः यद्वा सुपर्णइतिरश्मिनाम सुपुम्नाख्येनसूर्यरश्मिनायुक्तश्चन्द्रमाः दिविद्युलोकेआधावते आङ्मर्यादायां एकेनैवप्रकारेणधावते शीघ्रंगच्छति तादृशस्यचन्द्रमसःसंबन्धिनोहेहिरण्यनेमयः सुवर्णसदृशपर्यन्ताः यद्वा हितरमणीयमान्ताः विद्युतोविद्योतमानारश्मयः वोयुष्माकंपदंपादस्थानीयमग्रं नविन्दन्ति मदीयानीन्द्रियाणिकूपेनावृतत्वान्नलभन्ते अतइदमनुचितम् तस्मात्कूपान्मामुत्तारयतेत्यर्थः अपिच हेरोदसीद्यावापृथिव्यौ मेमदीयं अस्यइदंस्तोत्रंवित्तंजानीतं यद्वा मदीयंकूपपतनरूपंयदिदंदुःखंतदवगच्छतं मदीयंस्तोत्रंश्रुत्वामदीयंदुःखंज्ञात्वावाअस्मात्कूपान्मामुत्तारयतमित्यर्थः ॥ चन्द्रमाः चन्द्रमाह्लादनंसर्वस्यजगतोनिर्मिमीतइतिचन्द्रमाः चन्द्रेमोडिदित्यसुन् दासीभारादिपुपाठात्पूर्वपदप्रकृतिस्वरत्वम् । धावते सृगतौ पाघ्रेत्यादिनावेगितायांधावादेशः व्यत्ययेनात्मनेपदम् । वित्तं विदज्ञाने लोटिअदादित्वाच्छपोलुक् पादादित्वाचिङ्तिङइतिनिघाताभावः । अस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाचतुर्थ्यर्थेषष्ठी ऊडिदमितिविभक्तेरुदात्तत्वम् ॥ १ ॥

द्वितीयामृचमाह–

अर्थमिद्वाउअर्थिनआजायायुवतेपतिम् ।
तुञ्जातेवृष्ण्यंपयःपरिदायरसंदुहेवित्तंमेअस्यरोदसी ॥२॥

अर्थम् । इत् । वै । ऊम् इति । अर्थिनः । आ । जाया । युवते ।
पतिम् । तुञ्जाते इति । वृष्ण्यम् । पयः । परिऽदाय । रसम् । दुहे ।
वित्तम् । मे । अस्य । रोदसी इति ॥ २ ॥

अर्थिनोधनमपेक्षमाणाः पुरुषाः अर्थमिद्वैअपेक्षितं धनंप्राप्नुवन्त्येव नाहंप्राप्नोमि उइत्येतत्पदपूरणम् अपिचजायान्यदीयाभार्यापतिं स्वपतिंआयुवते आभिमुख्येनप्राप्नोति मदीयातुमद्विरहाद्दतासीत् अपिचसंयुक्तौतौजायापती वृष्ण्यं वीर्यरूपंपयउदकं तुञ्जाते प्रजननायान्योन्यसंघट्टनेनप्रेरयतः तदनन्तरं रसंपुरुषस्यसारभूतंवीर्यं परिदायगर्भाशयेनादायगर्भरूपेण धृत्वादुहेदुग्धे पुत्ररूपेणजनयति ममनपुत्रोपिनोत्पद्यते अतइदंमदीयंदुःखं हेद्यावापृथिव्यौ जानीतम् ॥ उ उञइतिशाकल्यस्यमतेनप्रगृह्यत्वात्प्लुतमप्रगृह्याअचीतिप्रकृतिभावः । युवते यु-

मिश्रणे व्यत्ययेनात्मनेपदं शप्लुकिमामेव्यत्ययेनशः। तुञ्जाते तुजिपिजिहिंसावलदाननिकेतनेपु इदित्वान्नुम् व्यत्ययेनश्नम् श्नान्नलोपः। दुहे दुहप्रपूरणे लोपस्तआत्मनेपदेष्वितितलोपः ॥ २ ॥

तृतीयामृचमाह—

मोपुदेवाअदःस्व१रवपादिदिवस्परि।
मासोम्यस्यशंभुवःशूनेभूमकदाचनवित्तंमेअस्यरोदसी ॥३॥

मो इति। सु। देवाः। अदः। स्वः। अव। पादि। दिवः। परि।
मा। सोम्यस्य। शम्ऽभुवः। शूने। भूम। कदा। चन। वित्तम्।
मे। अस्य। रोदसी इति ॥ ३ ॥

हेदेवाः स्वःस्वर्गेवर्तमानंअदः नस्रस्मदीयंपितृपितामहप्रपितामहात्मकंसन्तानं दिवस्परिदिवश्चोपरिवर्तमानं मोपुमैवावपादि अवपन्नंविपन्नंभ्रष्टंमाभूत् ममपुत्राभावात् पुत्रेणलोकाञ्जयति नापुत्रस्यलोकोस्तीतिश्रुतेः। अतोवयंसोम्यस्यसोमपानार्हस्यपितृगणस्यशंभुवः सुखस्यभावयितुः पुत्रस्यशूनेअपगमनेकदाचनकदाचिदपिमाभूम युष्मत्प्रसादात्ममपुत्राजायन्ताम् अतोमामस्मात् दुःखादुत्तारयतेत्यर्थः हेद्यावापृथिव्यौ युवांचमदीयंविज्ञापनंजानीतम् मोमाउइतिनिपातद्वयसमुदायोमैवेत्यस्यार्थे सुइत्येतदवधारणे सुत्रइतिपत्वम्। पादि पदगतौ चणूतेपदइतिकर्तरिलुङि च्लेश्चिणादेशः। दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् पञ्चम्याःपरावध्यर्थेइतिविसर्जनीयस्यसत्वम् सोम्यस्य सोममर्हतियइतियप्रत्ययः। शंभुवः भवतेरन्तर्भावितण्यर्थान्क्विप्। शूने टुओश्विगतिवृद्ध्योः भावेनिष्ठा श्वीदितोनिष्ठायामितीट्प्रतिषेधः वचिस्वपीत्यादिनासंप्रसारणम् ओदितश्चेतिनिष्ठानत्वं व्यत्ययेनाद्युदात्तत्वम् वृषादिर्वाद्रष्टव्यः ॥ ३ ॥

चतुर्थीमृचमाह—

यज्ञंपृच्छाम्यवमंसतद्दूतोविवोचति।
क्वऋतंपूर्व्यंगतंकस्तद्बिभर्तिनूतनोवित्तंमेअस्यरोदसी ॥४॥

---

1 ऐ० ब्रा० ७. १३.

यज्ञम् । पृच्छामि । अवमम् । सः । तत् । दूतः । वि । वोचति ।
क्व । ऋतम् । पूर्व्यम् । गतम् । कः । तत् । बिभर्ति । नूतनः ।
वित्तम् । मे । अस्य । रोदसी इति ॥ ४ ॥

यज्ञंयजनीयंअवमंसर्वेषां देवानामादिभूतं अग्निर्मुखंप्रथमोदेवतानामितिश्रुतेः । अग्निर्वैदेवानामवमइतिब्राह्मणाच्चं । तमग्निंपृच्छामि यन्मयापृष्टंतद्देवानांदूतःसोग्निर्विवोचति विविच्यकथयतु किंपुनस्तत् पृच्छ्यतइति तदुच्यते हेअग्ने त्वदीयंपूर्व्यंपूर्वकालीनंऋतंभद्रंस्तोतृभ्यः ऋतंश्रेयः क्वगतं कुत्रेदानींवर्तते नूतनोनवतरस्त्वत्तोन्यःकःपुरुषः तद्भद्रंविभर्तिधारयति यदित्वय्यवर्तिष्यतममेदृशीदशापिनाभविष्यत् अतस्तत्क्वगतमितिकथय ॥ वोचति वचपरिभाषणे लेटयडागमः वचउमितिव्यत्ययेनधातोरुमागमः । क्व किमोदितिसप्तम्यर्थेअत् क्वातीतिकिमःक्वादेशः तित्स्वरितमितिस्वरितत्वम् परेणसहऋत्यकइतिप्रकृतिभावः ॥ ४ ॥

पञ्चमीमृचमाह—

अमीयेदेवास्थनत्रिष्वारोचनेदिवः ।
कद्वऋतंकदनृतंक्वप्रत्नावआहुतिर्वित्तंमेअस्यरोदसी ॥५॥२०॥

अमी इति । ये । देवाः । स्थन । त्रिषु । आ । रोचने । दिवः ।
कत् । वः । ऋतम् । कत् । अनृतम् । क्व । प्रत्ना । वः । आऽहुतिः ।
वित्तम् । मे । अस्य । रोदसी इति ॥ ५ ॥ २० ॥

हेदेवाः त्रिषुपृथिव्यादिषुत्रिषुस्थानेषु येमीयूयंस्थनवर्तमानाभवथ यानिस्थानानिदिवोद्योतमानस्यसूर्यस्यआरोचनेदीप्तिविषयेवर्तन्ते सूर्यप्रकाश्येषुतेषुस्थानेष्वित्यर्थः तेषांवोयुष्माकं संबन्धिस्तोतृविषयमृतंसत्यंकक्वर्किमन्देशेवर्तते अनृतंदुष्टविषयमसत्यंचकक्वकुत्रगतं अपिचप्रत्नाचिरकालीनावोयुष्माकंसंबन्धिनीआहुतिः मयापूर्वमनुष्ठितोयागः क्वकुत्रासीत् इदृग्भूतदुःखानुभवेनमयापूर्वमनुष्ठितोयागसमूहोयुष्मान् नप्रामोदित्यनुमिमे अन्यत्पूर्ववत् ॥ स्थन तप्तनप्तनथनाश्चेतितशब्दस्यथनादेशः । कत् कशब्दस्यवर्णव्यापत्याकद्भावः ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेविंशोवर्गः ॥ २० ॥

१ ऐ० ब्रा० १. १. । २ तै० ब्रा० १. १. १

षष्ठीमृचमाह—

कद्वऋतस्यधर्णसिकद्वरुणस्यचक्षणम् ।
कदर्यम्णोमहस्पथातिक्रामेमदूढ्योवित्तंमेअस्यरोदसी ॥ ६॥

कत् । वः । ऋतस्य । धर्णसि । कत् । वरुणस्य । चक्षणम् ।
कत् । अर्यम्णः । महः । पथा । अति । क्रामेम । दुःऽध्यः । वित्तम् ।
मे । अस्य । रोदसी इति ॥ ६ ॥

हेदेवाः वोयुष्माकंसंबन्धिनः ऋतस्यसत्यस्याभिमतफलप्रापणस्यधर्णसि धारणंकवकुगतम् वरुणस्यानिष्टनिवारकस्यदेवस्यचक्षणंअनुग्रहदृष्ट्यादर्शनंकवक्कगतम् महोमहतोमहानुभावस्य अर्यम्णःअरीणांनियन्तुरेतत्संज्ञकस्यदेवस्यसंबन्धिना पथाशोभनमार्गेणइष्टदेशप्रापणंकवक्कगतम् एतत्सर्वंयुष्मास्वेववर्तते नकुत्रापिगतम् अतोवयंदूढ्यः दुर्धियः पापबुद्धीन् अस्मदनिष्टाचरणपरान्शत्रून् अतिक्रामेम अतितरेम तैःकृतादस्मात्कूपपातलक्षणाद्दुःखादुत्तीर्णाभवेम हेद्यावापृथिव्यौ मदीयमिदंजानीतम् ॥ धर्णसि धृञ्धारणे सानसिधर्णसिपर्णसीत्यादिनाअसिच्प्रत्ययान्तोनिपात्यते । अर्यम्णः षष्ठ्येकवचने अल्लोपोनइत्यकारलोपः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् ।महः महतोच्छब्दलोपश्छान्दसः यद्वा महपूजायाम् क्विप् उभयथापिसावेकाचइतिविभक्तेरुदात्तत्वम् । दूढ्यः पृषोदरादिः ध्यंचेतितत्रपाठाद्दुरोरेफस्योत्वम् उत्तरपदादेःष्टुत्वंच उदात्तस्वरितयोर्यणइतिस्वरितत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

अहंसोअस्मियःपुरासुतेवदामिकानिचित् ।
तंमाव्यन्त्याध्यो३वृकोनतृष्णजंमृगंवित्तंमेअस्यरोदसी ॥ ७॥

अहम् । सः । अस्मि । यः । पुरा । सुते । वदामि । कानि । चित् ।
तम् । मा । व्यन्ति । आऽध्यः । वृकः । न । तृष्णऽजम् । मृगम् ।
वित्तम् । मे । अस्य । रोदसी इति ॥ ७ ॥

हेदेवाः पुरापूर्वस्मिन्कालेसुते युष्मद्यागार्थं सोमेअभिषुते कानिचित् कतिपयानिस्तोत्राणि योहंवदामिउक्तवानस्मि सएवाहमस्मि नतन्यःकश्चित् तस्मात्किमर्थंमांपरित्यजथ तंतादृशंमामांआध्यः अभिलषितपुत्राद्यप्राप्त्या जनितामानस्योव्यथाः व्यन्तिभक्षयन्ति तत्रदृष्टान्तः—तृष्णजं जाततृष्णं पिपासन्तं उदकंप्रतिगच्छन्तंमृगंवृकोन यथारण्यश्वामध्येमार्गेगच्छन्तं भक्षयति तद्वत् अन्यद्गतम् ॥ व्यन्ति वीगत्यादिषु अदादित्वाच्छपोलुक् तन्वादीनांछन्दसिबहुलमुपसंख्यानमितिबहुलवचनाद्यण् । आध्यः आधीयतेमनसिस्थाप्यतइत्याधिः उपसर्गेघोःकिः आतोलोपइटिचेत्याकारलोपः जसादिषु छन्दसिवावचनमितिजसिचेतिगुणस्यविकल्पनाद्भावेयणादेशः । तृष्णजम् तृषपिपासायाम् स्वपितृषोर्नजिङितिनजिङ् पदकारस्त्वेवंमन्यते अन्येष्वपिदृश्यतइतिदृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपिजनेर्डप्रत्ययः तृष्णाजातायस्य ङ्यापोःसंज्ञाछन्दसोर्बहुलमितिह्रस्वत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

संमा॑तपन्त्य॒भित॑ः स॒पत्नी॑रिव॒पर्श॑वः ।
मूषो॒नशि॒श्नाव्य॑दन्ति॒माध्य॑ःस्तो॒तारं॑तेशतक्रतोवि॒त्तंमे॑अ॒स्यरो॑दसी॥८

सम् । मा॒ । त॒प॒न्ति॒ । अ॒भित॑ः । स॒पत्नी॑ःऽइव । पर्श॑वः । मूष॑ः ।
न । शि॒श्ना । वि । अ॒द॒न्ति॒ । मा॒ । आ॒ऽध्य॑ः । स्तो॒तार॑म् । ते॒ ।
श॒तक्र॒तो॒ इति॑ शतऽक्रतो । वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ ८ ॥

ऐन्द्र्येषा हेइन्द्र पर्शवःपार्श्वास्थीनिअत्रसामर्थ्यात्पर्शुस्थानीयाःकूपभित्तयः मामांअभितः सर्वतः सन्तपन्ति सम्यक्पीडयन्ति तत्रदृष्टान्तः—सपत्नीरिव समानःएकःपतिर्यासांताः सपत्न्योपथाएकं पतिंअभितःपीडयन्ति परस्परंवा पीडयन्ति हेशतक्रतो बहुविधप्रज्ञेन्द्र तेतवस्तोतारंमामांआध्यः असंपाद्यमानैर्यागदानादिभिरुत्पादिताः मानस्यःपीडाःव्यदन्ति विविधंभक्षयन्ति तत्र दृष्टान्तः—मूषोन यथामूषिकाः शिश्नाशिश्नानि कुविन्देनवायितानि अन्नरसेनालिप्तानिसूत्राणिभक्षयन्ति यद्वाशिश्नशब्देनप्रजननमेवोच्यते तच्चोपचारात्पुच्छेवर्तते तथास्वकीयानिपुच्छानिघृततैलादिभाण्डेप्रक्षिप्य ऊर्ध्वमुत्क्षिप्यव्यदन्तिलिहन्तीत्यर्थः एवंमांआधयोभक्षयन्ति नचैतत् हेइन्द्र तवस्तोतुर्न्याय्यम् तस्मात्कूपान्मामुत्तारय अन्यत्समानम् अत्रनिरुक्तम्—सन्तपन्तिमामभितःसपत्न्यः

इवेमाःपर्शवःकूपपर्शवोमूपिकाइवास्नातानिसूत्राणिव्यदन्तिस्वाङ्गाभिधानंवास्याच्छिश्नानिव्यदन्तीतिवेति ॥ सपत्नीः नित्यंसपत्न्यादिष्वितिपतिशब्दस्यनकारान्तादेशः ङीप् वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । मूषः मुषस्तेये क्विपिछान्दसोदीर्घः तथाचयास्कः—मूषोमूषिकाइत्यर्थोमूषिकापुनर्मुष्णातेर्मूषोप्येतस्मादेवेति । शिश्ना ष्णाशौचे वन्नर्थैकविधानमितिकः स्थास्नागापाव्यधिहनियुद्धचर्थमितिकः वर्णव्यापत्त्यासकारस्यशकारः ऋत्रादीनांकेद्वेभवतइतिवक्तव्यमितिद्विर्वचनम् बहुलंछन्दसीत्यभ्यासस्येत्वम् ॥ ८ ॥

नवमीमृचमाह—

अ॒मी ये स॒प्त र॒श्मय॒स्तत्रा॑ मे॒ नाभि॒राऽत॑ता ।
त्रि॒तस्तद्वे॑दा॒प्त्यः स जा॑मि॒त्वाय॑ रेभति वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥९॥

अ॒मी इति॑ । ये । स॒प्त । र॒श्मयः॑ । तत्र॑ । मे॒ । नाभिः॑ । आऽत॑ता ।
त्रि॒तः । तत् । वे॒द॒ । आ॒प्त्यः । सः । जा॒मि॒ऽत्वाय॑ । रे॒भ॒ति॒ ।
वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ ९ ॥

येमीद्युलोकेवर्तमानाः सप्तसंख्याकारश्मयःसूर्यस्यकिरणाःसन्ति तत्रतेषुसूर्यरश्मिषुअध्यात्मंसप्तप्राणरूपेणवर्तमानेषु मेमदीयानाभिरातताबंबद्धा ऋपिरात्मानमेवपरोक्षतयानिर्दिशति त्रितस्तीर्णतमस्तिरस्कृताज्ञानआप्त्यः अपांपुत्रऋपिः तत्पूर्वोक्तंवृत्तान्तंवेद विजानातिनान्यः सजानन्नृपिः जामित्वायकूपान्निर्गन्तुत्वायरेभति तान्रश्मीन्स्तौति अन्यत्समानम् ॥ आतता तनोतेःकर्मणिनिष्ठा अनुदात्तोपदेशेत्यादिनानुनासिकलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जामित्वाय जमतिर्गतिकर्मा । जमतिगच्छतीतिजामिः औणादिकइण्प्रत्ययः तस्यभावस्तत्त्वम् । रेभति रेभृशब्दे भौवादिकः ॥ ९ ॥

दशमीमृचमाह—

अ॒मी ये पञ्चो॒क्षणो॒ मध्ये॑ त॒स्थुर्म॒हो दि॒वः ।
दे॒व॒त्रा नु प्र॒वाच्यं॑ सध्री॒ची॒ना नि वा॑वृतु॒र्वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १० ॥ २१

१ नि० ४.६. । २ नि० ४.५. । ३ नि० ३.९. ।

अमी इति । ये । पञ्च । उक्षणः । मध्ये । तस्थुः । महः ।
दिवः । देवऽत्रा । नु । प्रऽवाच्यम् । सध्रीचीनाः । नि । ववृतुः ।
वित्तम् । मे । अस्य । रोदसी इति ॥ १० ॥ २१ ॥

उक्षणः सेक्तारः कामाभिवर्षकाः पञ्च तत्रेन्द्रस्तद्वरुणस्तदग्निरित्यर्धर्चेनप्रतिपादिताः पञ्चसंख्याकादेवाः यद्वा अग्निर्वायुःसूर्यश्चन्द्रमाविद्युदित्येवंपञ्चसंख्याकाः तथाचशाट्यायनम्—एतान्येवपञ्चज्योतींषियान्येषुलोकेषुदीप्यन्ते अग्निःपृथिव्यां वायुरन्तरिक्षे आदित्योदिवि चन्द्रमानक्षत्रे विद्युदप्स्विति । नक्षत्रेनक्षत्रलोके अप्सुमेघस्थोदकेषु । तैत्तिरीयेप्येवमाम्नातम्—अग्निःपृथिव्यांवायुरन्तरिक्षेसूर्योदिविचन्द्रमादिक्षुनक्षत्राणिस्वर्लोकेइति । येमीपञ्चसंख्याकादेवाः महोदिवोमहतोविस्तीर्णस्यद्युलोकस्यमध्येतस्थुः तिष्ठन्ति आसते देवत्रादेवेषुनुक्षिप्रंप्रवाच्यं प्रशंसनीयंदेवानांयोग्यंमदीयंस्तोत्रंप्रतिसध्रीचीनाः सहाञ्चन्तोयुगपदागच्छन्तस्तेदेवाः मदीयंपरिचरणंस्वीकुर्वन्ति तदनन्तरंनिववृतुः तृप्ताःसन्तोनिवर्तन्तेच अन्यत्समानम् ॥ उक्षणः वापपूर्वस्यनिगमेऽत्युपधादीर्घाभावः । देवत्रा देवमनुष्येत्यादिनासप्तम्यर्थेत्राप्रत्ययः । प्रवाच्यम् वाचयतेरचोयदितियत् णेरनिटीतिणिलोपः यतोनावइत्याद्युदात्तत्वेकृदुत्तरपदप्रकृतिस्वरत्वम् । सध्रीचीनाः सहाञ्चन्तीतिसध्र्यञ्चः तएवसध्रीचीनाः सहपूर्वादञ्चतेऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः सहस्यसध्रिरितिसध्र्यादेशः विभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखप्रत्ययः । ववृतुः वृतुवर्तने छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् व्यत्ययेनपरस्मैपदम् अन्येषामपिदृश्यतइतिसंहितायामभ्यासस्यदीर्घत्वम् ॥ १० ॥

॥ इतिप्रथमस्यसप्तमेएकविंशोवर्गः ॥ २१ ॥

एकादशीमृचमाह—

सुपर्णाएतआसतेमध्यआरोधनेदिवः ।
तेसेधन्तिपथोवृकंतरन्तंयह्वतीरपोवित्तंमेअस्यरोदसी ॥११॥

1 ऋ० सं० १.७.२५ ।

सुऽपर्णाः । एते । आसते । मध्ये । आऽरोधने । दिवः । ते ।
सेधन्ति । पथः । वृकम् । तरन्तम् । यह्वतीः । अपः । वित्तम् ।
मे । अस्य । रोदसी इति ॥ ११ ॥

सुपर्णाः रश्मिनामैतत् शोभनपतना एते सूर्यरश्मयः आरोधने सर्वस्यावरके व्याप्ते दिवोन्तरिक्षस्य मध्ये आसते वर्तन्ते ते सूर्यरश्मयः पथो मार्गाद्वृकमरण्यश्वानं सेधन्ति निषेधन्ति निवारयन्ति कीदृशं यह्वतीर्महतीरपः तरन्तं अतिक्रामन्तं कूपपतनात्पूर्वं त्रितं दृष्ट्वा एनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुराजगाम स च सूर्यरश्मीन्दृष्ट्वा अयमवसरो न भवतीति निववृते अतो रश्मयो वृकं निषेधन्तीत्युच्यते यास्कपक्षे तु आप इत्यन्तरिक्षनाम यह्वतीरपो महदन्तरिक्षं पथः पथा द्वादशरश्म्यात्मना मार्गेण तरन्तं वृकं चन्द्रमसं सूर्यरश्मयो निषेधन्ति अहनि सूर्यरश्मिभिर्निरुद्धश्चन्द्रमा निष्प्रभो दृश्यते अतो निष्प्रभं कुर्वन्तीत्यर्थः ॥ आरोधने आरुध्यते आध्रियते अनेनेत्यारोधनं करणे ल्युट् । सेधन्ति षिधु गत्याम् अयं केवलोपि निपूर्वार्थे द्रष्टव्यः । पथः पञ्चम्येकवचने भस्य टेर्लोपः इति टिलोपः उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् यास्कपक्षे तु तृतीयार्थे व्यत्ययेन पञ्चमी । यह्वतीः यह्व इति महन्नाम अस्मादाचारार्थे सर्वप्रातिपदिकेभ्य इति क्विप् ततो लटः शतृ उगितश्चेति ङीप् आगमानुशासनस्यानित्यत्वान्नुमभावः शतुरनुम इति नदीस्वरो व्यत्ययेन न प्रवर्तते ॥ ११ ॥

द्वादशीमृचमाह—

नव्यं॒ तदु॒क्थ्यं॑ हि॒तं देवा॑सः सुप्रवाच॒नम् ।
ऋ॒तम॑र्षन्ति॒ सिन्ध॑वः स॒त्यं ता॑तान॒ सूर्यो॑ वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १२ ॥

नव्य॑म् । तत् । उ॒क्थ्य॑म् । हि॒तम् । देवा॑सः । सु॒ऽप्र॒वा॒च॒नम् ।
ऋ॒तम् । अ॒र्ष॒न्ति॒ । सिन्ध॑वः । स॒त्यम् । त॒ता॒न॒ । सूर्यः॑ । वि॒त्तम् ।
मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ १२ ॥

हे देवासो देवाः नव्यं नवतरं उक्थ्यं प्रशस्यं स्तुत्यर्हं सुप्रवाचनं सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यं एवंभूतं तद्युष्मदीयं बलं हितं युष्मासु निहितं अतो युष्मदीयेन बलेन सिन्धवः स्यन्दनशीला नद्यः ऋतमुदकं अर्षन्ति आलस्यराहित्येन सर्वदा प्रेरयन्ति अशोष्याः सत्यः प्रवहन्तीत्यर्थः तथा सूर्यः सत्यं सर्वदा विद्यमानं स्वकीयं तेजः ततान आतनोति विस्तारयति अन्यत्समानम् ॥ सुप्रवाचनं प्रव-

परिभाषणे अस्माण्ण्यन्तात् अन्येभ्योपिदृश्यतइतिखल्थेयुच् । अर्थन्ति अर्तेर्लेटिसिब्बहुलंले-
टीतिसिप् गुणः । ततान अन्येषामपिदृश्यतइतिसंहितायामभ्यासस्यदीर्घत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

अग्ने॒तव॒त्यदु॒क्थ्यं॑दे॒वेष्व॒स्त्याप्य॑म् ।
सनः॑स॒त्तोम॑नु॒ष्वदादे॒वान्य॑क्षिवि॒दुष्ट॑रोवि॒त्तंमे॑अ॒स्यरो॑दसी ॥१३॥

अग्ने॑ । तव॑ । त्यत् । उ॒क्थ्य॑म् । दे॒वेषु॑ । अ॒स्ति॒ । आप्य॑म् ।
सः । नः॒ । स॒त्तः । म॒नु॒ष्वत् । आ । दे॒वान् । य॒क्षि॒ । वि॒दुः॒ऽत॑रः ।
वि॒त्तम् । मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ १३ ॥

हेअग्ने तवउक्थ्यंप्रशस्यं त्यत् श्रुतिप्रसिद्धम् आप्यं आपिर्बन्धुः तस्यभावः बांधवम्
देवेषुदानादिगुणयुक्तेष्विन्द्रादिषु अस्तिविद्यते तस्मात्तादृशोविदुष्टरोविद्वत्तरस्त्वं नोस्माकंयज्ञे
सत्तोनिषण्णःसन् देवांस्तानिन्द्रादीन्आयाल्लमर्यादयायक्षि यज हविर्भिःपूजय तत्रदृष्टा-
न्तः—मनुष्वत् यथा मनूनांयज्ञेतद्वत् अन्यत्पूर्ववत् ॥ आप्यं आपृव्याप्तौ अस्माण्ण्यन्तादचइ-
रितिइप्रत्ययः ब्राह्मणादित्वात्ष्यञ् । सत्तः नसत्तनिषत्तेतिनिपातनान्निष्ठानत्वाभावः छान्द-
सोतिशब्दलोपोद्रष्टव्यः । मनुष्वत् मनेरौणादिकउसिप्रत्ययः तत्रतस्येवेतिषष्ठ्यर्थेवतिः नभो-
ङ्गिरोमनुषांवत्युपसंख्यानमितिभत्वेसतिपदत्वाभावादुत्वाद्यभावः । यक्षि बहुलंछन्दसीतिशपोलुक्
व्रश्चेतिषत्वम् कुत्वपत्वे । विदुष्टरः विद्वस्शब्दात्तरपिअयस्मयादित्वेनभत्वाद्वसोःसंप्रसारण
मितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् ॥ १३ ॥

चतुर्दशीमृचमाह—

स॒त्तोहोता॑मनु॒ष्वदादे॒वाँअच्छा॑वि॒दुष्ट॑रः ।
अ॒ग्निर्ह॒व्यासु॑षूदतिदे॒वोदे॒वेषु॒मेधि॑रोवि॒त्तंमे॑अ॒स्यरो॑दसी ॥ १४ ॥

स॒त्तः । होता॑ । म॒नु॒ष्वत् । आ । दे॒वान् । अच्छ॑ । वि॒दुः॒ऽत॑रः ।
अ॒ग्निः । ह॒व्या । सु॒सू॒द॒ति॒ । दे॒वः । दे॒वेषु॑ । मेधि॑रः । वि॒त्तम् ।
मे॒ । अ॒स्य । रो॒द॒सी॒ इति॑ ॥ १४ ॥

मनुष्वत् मनोरिवास्माकंयज्ञेसत्तोनिषण्णोहोतादेवानामाह्वाता विदुष्टरोविद्वत्तरः देवोदानादिगुणयुक्तः. देवेषुसर्वेष्विन्द्रादिषुमध्येमेधिरोमेधावी एवंभूतोग्निः तान्देवान्अच्छाभिमुख्येनहव्या हव्यान्यस्मदीयानिहवींषि मर्यादायामाकारः शास्त्रमर्यादयायथाशास्त्रं सुषूदति प्रेरयतु अन्यत्समानम् ॥ सुषूदति षूदक्षरणे लेटचडागमः बहुलंछन्दसीतिशपःश्लुः । मेधिरः मेधारथाभ्यामिरन्नीरचौवक्तव्याइतिमत्वर्थीयइरन् ॥ १४ ॥

पञ्चदशीमृचमाह—

ब्रह्माकृणोतिवरुणोगातुविदंतमीमहे ।
व्यूर्णोतिहृदामतिंनव्योजायतामृतंवित्तंमेअस्यरोदसी ॥१५॥ २२॥

ब्रह्म । कृणोति । वरुणः । गातुऽविदम् । तम् । ईमहे । वि ।
ऊर्णोति । हृदा । मतिम् । नव्यः । जायताम् । ऋतम् ।
वित्तम् । मे । अस्य । रोदसी इति ॥ १५ ॥ २२ ॥

योवरुणः अनिष्टस्यनिवारयितादेवः ब्रह्मपरिवृढंतद्रक्षणरूपंकर्मकृणोतिकरोति तंतादृशं गातुविदंगातोर्मार्गस्यदुःखान्निवारकस्यलंभयितारंवरुणंईमहे अभिमतफलंयाचामहे ईमहइतियाच्ञाकर्मा तस्मैवरुणायअयमस्मदीयःस्तोता हृदाहृदयेनमतिंमननीयांस्तुतिंव्यूर्णोति विवृणोति प्रकाशयति उच्चारयतीत्यर्थः सोयंनव्यःस्तुत्योवरुणः अस्माकमृतंजायतां सत्यभूतोस्तु ॥ ब्रह्म अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः । गातुविदम् विद्लृलाभे अन्तर्भावितण्यर्थात्क्विप् । ईमहे ईङ्गतौ बहुलंछन्दसीतिविकरणस्यलुक् । हृदा पद्दन्नित्यादिनाहृदयशब्दस्यहृदादेशः ॥ १५ ॥

॥ इतिप्रथमस्यसप्तमेद्वाविंशोवर्गः ॥२२ ॥

षोडशीमृचमाह—

असौयःपन्थाआदित्योदिविप्रवाच्यंकृतः ।
नसदेवाअतिक्रमेतंमर्तासोनपश्यथवित्तंमेअस्यरोदसी ॥ १६ ॥

असौ । यः । पन्थाः । आदित्यः । दिवि । प्रऽवाच्यम् । कृतः ।
न । सः । देवाः । अतिऽक्रमे । तम् । मर्तासः । न । पश्यथ ।
वित्तम् । मे । अस्य । रोदसी इति ॥ १६ ॥

पन्थाः सततगामी यद्वा ब्रह्मलोकंगच्छतामुपासकानांमार्गभूतः सूर्यद्वारेणतेविरजाः प्रयान्तीतिश्रुतेः । एवंभूतोयोसावादित्योदिविद्युलोकेप्रवाच्यं प्रकर्षेणवचनंयथाभवति तथाकृतः निर्मितः यथासर्वैःप्राणिभिर्दृश्यते तथावर्तमानइत्यर्थः हेदेवाः सोयमादित्योयुष्माभिरपिनअतिक्रमे अतिक्रमितुंनशक्यः युष्मज्जीवनस्य तदायत्तत्वात् सतिहिसूर्ये वसन्तादयःकालानिष्पद्यन्ते कालेषुचयागाःक्रियन्ते यागेषुचसत्सुभवतांजीवनं अतोयुष्माभिरपिअसौनातिक्रमितव्यः एवंचसति हेमर्तासः पापकृतोमनुष्याः तंमहानुभावंसूर्यं नपश्यथ सूर्यंनजानीथ एतच्चकूपेपातयित्वानिर्गतावेकतद्वितौ प्रतिनिन्दनंअहमेवमन्त्रद्रष्टा तंसूर्यंजानामि पापकृतौयुवांनजानीथइति ॥ पन्थाः पतॢगतौ पतेस्थचइतिइनिप्रत्ययः पथिमथ्यृभुक्षामादित्यात्वम् इतोत्सर्वनामस्थानेइत्यत्वं इकारस्यलोपः थोन्थः पथिमथोःसर्वनामस्थानेइत्याद्युदात्तत्वम् । प्रवाच्यम् वकेर्ण्यन्तादचोयदितिभावेयत् यतोनावइत्याद्युदात्तत्वम् । अतिक्रमे क्रमुपादविक्षेपे कृत्यार्थेतवैकेनितिकेन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् ॥ १६ ॥

सप्तदशीमृचमाह—

त्रितःकूपेवहितोदेवान्हवतऊतये ।
तच्छुश्रावबृहस्पतिःकृण्वन्नंहूरणादुरुवित्तंमेअस्यरोदसी ॥१७॥

त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये । तत् ।
शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् ।
मे । अस्य । रोदसी इति ॥ १७ ॥

कूपेअवहितः पातितस्त्रितः एतत्संज्ञऋषिः ऊतयेरक्षणाय देवान् हवते स्तुतिभिराकारयति यदेतत् त्रितस्याह्वानं बृहस्पतिर्बृहतांमहतांदेवानां रक्षकएतत्संज्ञकोदेवः तदाह्वानं शुश्रावश्रुतवान् किंकुर्वन् अंहूरणात् अंहसःपापरूपादस्मात् कूपपातादुत्तीर्य उरुविस्तीर्णं शोभनं कृण्वन्कुर्वन् ॥ हवते ह्वयतेर्लटिबहुलंछन्दसीतिसंप्रसारणम् शप्गुणा-

वादेशाः । ऊतये ऊतियूतीत्यादिनाक्तिनउदात्तत्वम् । बृहस्पतिः तद्बृहतोःकरपत्यो-रितिपारस्करादिषुपाठात्सुट्तलोपौ उभेवनस्पत्यादिष्वितिपूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । अंहूरणात् अंहिगतौ इदित्त्वान्नुम् खर्जिपिञ्जादिभ्यऊरोलचाविति भावेऊरप्रत्ययः दुःखप्राप्तिहेतुभावागतिरस्यास्तीतिपामादिलक्षणोमत्वर्थीयोनः आङ्पूर्वाद्धन्तेर्वारूपमुन्नेयम् ॥ १७ ॥

अष्टादशीमृचमाह—

अरुणोमासकृद्वृकःपथायन्तंददर्शहि ।
उज्जिहीतेनिचाय्यातष्टेवपृष्ठ्यामयीवित्तंमेअस्यरोदसी ॥ १८ ॥

अरुणः । मा । सकृत् । वृकः । पथा । यन्तम् । ददर्श । हि ।
उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी ।
वित्तम् । मे । अस्य । रोदसी इति ॥ १८ ॥

अरुणः अरुणवर्णोलोहितवर्णः वृकोरण्यःश्वा सकृदेकवारंपथायन्तंमार्गेणगच्छन्तंमामांददर्शहि दृष्टवान् हिःपादपूरणः निचाय्यदृष्ट्वाच मांजिघृक्षुःसन् उज्जिहीते उद्गच्छतिस्म तत्रदृष्टान्तः—तष्टेवपृष्ठ्यामयी यथातक्षणजनितपृष्ठक्लेशः तष्टावर्धकिः तदपनोदनायऊर्ध्वाभिमुखोभवतितद्वत् हेद्यावापृथिव्यौ मदीयंदुःखंवित्तंजानीतम् यद्वा वृकइतिविवृतज्योतिष्कश्चन्द्रमाउच्यते अरुणःआरोचमानः कृत्स्नस्यजगतःप्रकाशकः मासकृत्मासार्धमासर्त्वयनसंवत्सरादीनकालविशेषान्कुर्वन् तिथिविभागज्ञानस्यचन्द्रगत्यधीनत्वात्सचन्द्रमाआकाशमार्गेयन्तंगच्छन्तंनक्षत्रगणं ददर्श हिरवधारणे नक्षत्रगणमेवददर्श नकूपपतितंमामित्यनादरोभिव्यज्यते यदिमांपश्येत्उद्धरेत्कूपात् निचाय्य नक्षत्रगणंदृष्ट्वाचउज्जिहीते येननक्षत्रेणसंयुज्यते तेनसहोद्गच्छति नमामभिगच्छतीत्यर्थः अन्यत्पूर्ववत् अत्रमासकृदितियास्कः एकंपदंमन्यते शाकल्यस्तुपदद्वयं तस्मिन्पक्षेअयमर्थः—दक्षप्रजापतेर्दुहितृभूताःस्वभार्याअश्विन्याद्यास्तारकाःपुनःपुनर्ददर्शमांसकृदेवपश्यतीति सकृद्दृष्ट्वाचउज्जिहीते ताराभिःसहऊर्ध्वमेवगच्छति नमांकूपादुत्तारयति अतइदमनुचितम् हेद्यावापृथिव्यौ मदीयमिमंवृत्तान्तंजानीतम् अत्रनिरुक्तम्[1]—वृकश्चन्द्रमाभवतिविवृतज्योतिष्कोवाविकृतज्योतिष्कोवाविक्रान्तज्योतिष्कोवा अरुणआरोचनोमासकृन्मासानांचार्धमासानांचकर्ताभवतिचन्द्रमावृकःपथायन्तंददर्शनक्षत्रगणमभिजिहीतेनिचाय्ययेनयेनयोदयमाणोभवतिचन्द्रमा-

---

१ नि० ५. २०.

स्तक्ष्णुवन्निवपृष्ठरोगीति[1] । सकृद् एकस्यसकृच्चेतिक्रियाभ्यावृत्तिगणनेनिपातितः । वृकः वृञ्वरणे सृवृभूशुषिमुषिभ्यःकिदितिकप्रत्ययः । जिहीते ओहाङ्गतौ जौहोत्यादिकः भ्रत्रामिदित्यभ्यासस्येत्वम्। निचाय्य चायृपूजानिशामनयोः अत्रदर्शनार्थः धातूनामनेकार्थत्वात्समासेनञ्पूर्वेक्त्वोल्यप् । पृष्ट्यामयी स्पृशसंस्पर्शने पृष्टिःपृष्ठं स्पृश्यतेअनेनेतिपृष्टिः छान्दसोवर्णलोपः पृष्टौआमयः पृष्ट्यामयः तद्वान्पृष्ट्यामयी ॥ १८ ॥

एकोनविंशीमृचमाह—

एनाङ्गूषेणवयमिन्द्रवन्तोभिष्यामवृजनेसर्ववीराः ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥१९॥२३॥

एना । आङ्गूषेणं । वयम् । इन्द्रंऽवन्तः । अभि । स्याम । वृजने । सर्वंऽवीराः । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ १९ ॥ २३ ॥

एनाअनेनाङ्गूषेणआघोषणयोग्येनस्तोत्रेणहेतुभूतेन इन्द्रवन्तः अनुग्राहकेणेन्द्रेणयुक्ताः सर्ववीराः सर्वैर्वीरैः पुत्रैःपौत्रादिभिश्चोपेताःसन्तोवयं वृजनेसंग्रामेअभिष्याम शत्रूनभिभवेम तदिदमस्मदीयंवचनम् मित्रादयोममहन्तां पूजयन्तु पालयन्त्वित्यर्थः उतशब्दोदेवतासमुच्चये अत्रयास्कः—आङ्गूषस्तोमआघोषः अनेनस्तोमेनवयमिन्द्रवन्तइति । एना द्वितीयाटौस्स्वेनइतितृतीयायाइदमएनादेशः सुपांसुलुगितिविभक्तेराजादेशः चित्स्वरेणान्तोदात्तत्वम् । आङ्गूषेण आङ्पूर्वाद्घुषेःकर्मणिघञ् आङोङकारस्यलोपाभावश्छान्दसः घोषशब्दस्यगूषभावश्चपृषोदरादित्वात् थाथादिनोत्तरपदान्तोदात्तत्वम्।स्याम अस्तेःप्रार्थनायांलिङि श्नसोरल्लोपइत्यकारलोपः उपसर्गप्रादुर्भ्यामस्तिर्यच्परइतिषत्वम् ॥ १९ ॥

॥ इतिप्रथमस्यसप्तमेत्रयोविंशोवर्गः ॥ २३ ॥

॥ इतिप्रथमेमण्डलेपञ्चदशोनुवाकः ॥ १५॥

१ नि० ५. २०. । २ नि० ५. ११. ।

षोडशेनुवाकेदशसूक्तानि तत्रेन्द्रमितिसप्तर्चंप्रथमंसूक्तम् अत्रानुक्रम्यते इन्द्रंमित्रंसप्तत्रिष्टुबन्तमिति अनुवर्तमानत्वात्कुत्सऋषिः त्रितस्तुवाविशिष्टत्वात् तत्रैवविकल्पितोनानुवर्तते अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः विश्वेदेवादेवतेत्युक्तम् विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

इन्द्रंमि॒त्रंवरु॑णम॒ग्निमू॒तये॒मारु॑तं॒शर्धो॒अदि॑तिंहवामहे ।
रथं॒नदु॒र्गाद्व॑सवःसुदानवो॒विश्वं॑स्मान्नो॒अंह॑सो॒निष्पि॑पर्तन ॥ १ ॥

इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । अ॒ग्निम् । ऊ॒तये॑ । मारु॑तम् । शर्धः॑ ।
अदि॑तिम् । ह॒वा॒म॒हे॒ । रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ । सु॒ऽदा॒न॒वः॒ ।
विश्वं॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥ १ ॥

ऊतये रक्षणाय वयमिन्द्रादीन्मारुतंशर्धोमरुत्समूहरूपंबलंचहवामहे आह्वयामहे वसवोनिवासयितारः सुदानवः शोभनदानाइन्द्रादयः विश्वस्मात्सर्वस्मादंहसः पापान्नोस्मान्निष्पिपर्तन निर्गमय्यपालयत तत्रदृष्टान्तः—रथंनदुर्गात् गन्तुमशक्यात् निम्नोन्नतात् स्थानात् सारथयोयथारथंपालयन्तितद्वत् ॥ पिपर्तन पृइत्येके लोटि तप्तनप्तनथनाश्चेतितस्यतनबादेशः पित्त्वेनङित्वाभावाद्गुणः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् ॥ १ ॥

द्वितीयामृचमाह—

तआ॑दि॒त्याआग॑तास॒र्वता॑तये॒भूतदे॑वावृत्र॒तूर्ये॑षुश॒म्भुवः॑ ।
रथं॒नदु॒र्गाद्व॑सवःसुदानवो॒विश्वं॑स्मान्नो॒अंह॑सो॒निष्पि॑पर्तन ॥ २ ॥

ते । आ॒दि॒त्याः । आ । ग॒त॒ । स॒र्वऽता॑तये । भू॒त । दे॒वाः॒ ।
वृ॒त्र॒ऽतूर्ये॑षु । श॒म्ऽभुवः॑ । रथ॑म् । न । दुः॒ऽगात् । व॒स॒वः॒ ।
सु॒ऽदा॒न॒वः॒ । विश्वं॑स्मात् । नः॒ । अंह॑सः । निः । पि॒प॒र्त॒न॒ ॥ २ ॥

हेआदित्याःअदितेःपुत्रादेवाः तेयूयंसर्वतातये सर्वैर्वीरपुरुषैस्तताय विस्तारिताययुद्धाययुद्धेअस्माकंसाहाय्यंकर्तुमित्यर्थः आगतआगच्छत अपिचवृत्रतूर्येषु संग्रामनामैतत् संग्रामेषुशंभुवः सुखस्यभावयितारोभूतभवत ॥ गत गमेर्लोटिबहुलंछन्दसीतिशपोलुक् ॥ २ ॥

तृतीयामृचमाह—

अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ३ ॥

अवन्तु । नः । पितरः । सुऽप्रवाचनाः । उत । देवी इति ।
देवपुत्रे इति देवऽपुत्रे । ऋतऽवृधा । रथम् । न । दुःऽगात् ।
वसवः । सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन॥३॥

नोस्मान् पितरोग्निष्वात्तादयोवन्तुरक्षन्तु कीदृशाः सुप्रवाचनाः सुखेनप्रवक्तुंस्तोतुंशक्याः उतअपिचदेवपुत्रे देवाःसर्वेपुत्रस्थानीयाययोस्ते ऋतावृधा ऋतस्यसत्यस्ययज्ञस्यवावर्धयित्र्यौदेवी देवनादिगुणयुक्तेद्यावापृथिव्यौ अस्मान्रक्षताम् अन्यत्समानम् ॥ देवी वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । ऋतावृधा वृधेरन्तर्भावितण्यर्थात्क्विप् सुपांसुलुगितिविभक्तेराकारः॥३॥

चतुर्थीमृचमाह—

नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ४ ॥

नराशंसम् । वाजिनम् । वाजयन् । इह । क्षयत्ऽवीरम् । पूषणम् ।
सुम्नैः । ईमहे । रथम् । न । दुःऽगात् । वसवः । सुऽदानवः ।
विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ४ ॥

नराशंसं नरैःशंसनीयं वाजिनंअन्नवन्तमग्निं वाजयन् उपह्वयन्प्रज्वलयन्निहास्मिन्कालेस्तोमीतिशेषः तथा क्षयद्वीरम् अतिबलिनम् यस्मिन्सर्वेवीराःक्षीयन्ते एवंरूपंपूषणंपोषकंदेवंसुम्नैः सुखकरैःस्तोत्रैर्हेतुभूतैःईमहेयाचामहे अभीष्टंप्रार्थयामहे ॥ नराशंसं उभेवनस्पत्यादिष्वितियुगपदुभयपदप्रकृतिस्वरत्वम् नरशब्दःऋदोरबित्यबन्तआद्युदात्तः निपातनाद्दीर्घः शंसशब्दोघञन्तआद्युदात्तः । वाजयन् वजव्रजगतौ अस्माण्णिच् । क्षयद्वीरम् क्षिक्षये लटःशतृ शपिप्राप्तेव्यत्ययेनशः तस्य छन्दस्युभयथेत्यार्धधातुकत्वेनङित्त्वाभावाद्गुणावादेशौ अदुपदेशाल्लसार्वधातु-

कानुदात्तत्वे विकरणस्वरः अतोगुणेइतिपरपूर्वरूपत्वेएकादेशउदात्तेनेतिएकादेशउदात्तः। क्षयन्तोवीरायस्मिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

पञ्चमीमृचमाह—

बृहस्पतेसदमिन्नःसुगंकृधिशंयोर्यत्तेमनुर्हितंतदीमहे ।
रथंनदुर्गाद्वसवःसुदानवोविश्वस्मान्नोअंहसोनिष्पिपर्तन ॥ ५ ॥

बृहस्पते । सदम् । इत् । नः । सुऽगम् । कृधि । शम् । योः ।
यत् । ते । मनुःऽहितम् । तत् । ईमहे । रथम् । न । दुःऽगात् । वसवः ।
सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ५ ॥

बृहस्पते सदमित् सदैवनोस्माकं सुगं सुखनमितव्य सुखंकृधिकुरु अपिच तेतवस्वभूतं शं शमनीयानांरोगाणांउपशमनं योः पृथक्कर्तव्यानांभयानांयावनं पृथक्करणं मनुर्हितंमनुनाब्रह्मणाहितंव्यवस्थापितम् यद्वा मनुष्याणामनुकूलं एवंविधशमनंयावनंचयदस्तितदीमहे याचामहे ॥ सुगं सुष्ठुगम्यतेस्मिन्निति सुगम् सुदुरोरधिकरणेइतिगमेर्डः। शंयोरित्येतत्पदद्वयंयास्केनैवं व्याख्यातम्—शमनंचरोगाणांयावनंचभयानामिति[1] । मनुर्हितम् मनेरौणादिकउसिन्प्रत्ययः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् ॥ ५ ॥

षष्ठीमृचमाह—

इन्द्रंकुत्सोवृत्रहणंशचीपतिंकाटेनिबाळ्हऋषिरह्वदूतये ।
रथंनदुर्गाद्वसवःसुदानवोविश्वस्मान्नोअंहसोनिष्पिपर्तन ॥ ६ ॥

इन्द्रम् । कुत्सः । वृत्रऽहनम् । शचीऽपतिम् । काटे । निऽबाळ्हः ।
ऋषिः । अह्वत् । ऊतये । रथम् । न । दुःऽगात् । वसवः ।
सुऽदानवः । विश्वस्मात् । नः । अंहसः । निः । पिपर्तन ॥ ६ ॥

काटइतिकूपनाम तस्मिन्निबाळ्होनिपतितः कुत्सऋषिः ऊतयेरक्षणायइन्द्रंअह्वत् आह्वयनिस्म कीदृशं वृत्रहणं वृत्राणांशत्रूणांहन्तारं शचीपतिम् शचीतिकर्मनाम सर्वेषांकर्मणांपालयि-

1 नि० ४. २१.

तारम् यद्वा शच्यादेव्याभर्तारम् ॥ शचीपतिम् वनस्पत्यादिषुपाठादुभयपदप्रकृतिस्वरत्वम् श-चीशब्दः शार्ङ्गरवादिङीनन्तआद्युदात्तः । निबाह्वः वाहप्रयत्ने नीत्युपसर्गवशात्पतनेवर्तते नि-द्रायामनित्यमागमशासनमितीडभावः ढत्वधत्वादीनि यद्वा क्षुब्धस्वान्तेत्यादौभृशार्थेइडभावोनि-पात्यते अत्रचवाढशब्दोभृशत्वोपेतेपतनेसामर्थ्याद्वर्तते गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अ-ह्वत् लिपिसिचिह्वश्चेतिलुङिच्लेरङादेशः आतोलोपइटिचेत्याकारलोपः ॥ ६ ॥

सप्तमीमृचमाह

देवैर्नोदेव्यदितिर्निपातुदेवस्त्रातात्रायतामप्रयुच्छन् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥७॥२४॥

देवैः । नः । देवी । अदितिः । नि । पातु । देवः । त्राता । त्रायताम् । अप्रऽयुच्छन् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ७ ॥ २४ ॥

देवीदानादिगुणयुक्तादितिरखण्डनीया अदीनावादेवमाता देवैर्दानादिगुणयुक्तैःस्वकी-यैःपुत्रैःसह नोस्मान्निपातुनितरांरक्षतु देवोदीप्यमानस्त्रातासर्वेषांरक्षकः सविता अप्रयुच्छन् अप्र-माद्यन् अस्मद्रक्षणेजागरूकःसन्त्रायतामस्मान्पालयतु यदनेनसूक्तेनास्माभिःप्रार्थितंनोस्मदीयंत-न्मित्रादयःषड्देवताःममहन्तां पूजयन्तु ॥ त्रायतां त्रैङ्पालने भौवादिकः । अप्रयुच्छन् युच्छप्र-मादे अस्माल्लटःशतृ नञ्समासेव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

॥ इतिप्रथमस्यसप्तमेचतुर्विंशोवर्गः ॥ २४ ॥

यज्ञोदेवानामितिएकादशर्चंद्वितीयंसूक्तंकुत्सस्यार्षंत्रैष्टुभंवैश्वदेवं यज्ञएकेत्यनुक्रान्तम् विनि-योगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

यज्ञोदेवानांप्रत्येतिसुम्नमादित्यासोभवतामृळयन्तः ।
आवोर्वाचीसुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्तरासत् ॥ १ ॥

यज्ञः । देवानाम् । प्रति । एति । सुम्नम् । आदित्यासः । भवत । मृळयन्तः । आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा । असत् ॥ १ ॥

अस्मदायोयज्ञोदेवानामिन्द्रादीनां सुम्नंसुखंप्रत्येतिप्राप्नोतु अपिच हेआदित्यासः आदित्याःमृडयन्तोस्मान्सुखयन्तोभवत तथावोयुष्माकंसुमतिः शोभनामतिःभक्तानुग्रहपराबुद्धिःअर्वाची अस्मदभिमुखीआववृत्याव आवर्ततां यामतिःअंहोश्चित् दारिद्र्यंप्राप्तस्यापिपुरुषस्यवरिवोवित्तरा वरिवइतिधननाम अतिशयेनधनस्यलंभयित्रीअसत्भवेत् सैपामतिरस्मान्रक्षितुंवर्ततामित्यर्थः ॥ भवत आमन्त्रितंपूर्वमविद्यमानवदितिआदित्यासइतिपादादौवर्तमानस्यामन्त्रितस्याविद्यमानवत्त्वेनअस्यपादादित्वादपादादावितिपर्युदासान्निघाताभावः । मृळयन्तः मृडसुखने ण्यन्ताल्लटःशतृ छन्दस्युभयथेतिशतुरार्धधातुकत्वेनादुपदेशाल्लसार्वधातुकानुदात्तत्वाभावेशतुःस्वरःशिष्यते । ववृत्यात् वृतुवर्तने लिङ्व्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिशपःश्लुः । अंहोः अहिगतौ इदित्त्वान्नुम् औणादिकउप्रत्ययः । वरिवोवित्तरा विद्लृलाभे अस्मादन्तर्भावितण्यर्थात्क्विप् ततआतिशायनिकस्तरप् । असत् अस्भुवि लेटचडागमः ॥१॥

द्वितीयामृचमाह—

उपनोदेवाअवसागमन्त्वङ्गिरसांसामभिःस्तूयमानाः ।
इन्द्रइन्द्रियैर्मरुतोमरुद्भिरादित्यैर्नोअदितिःशर्मयंसत् ॥ २ ॥

उप । नः । देवाः । अवसा । आ । गमन्तु । अङ्गिरसाम् । सामऽभिः स्तूयमानाः । इन्द्रः । इन्द्रियैः । मरुतः । मरुत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ २ ॥

देवादानादिगुणयुक्ताःसर्वेदेवाः अवसारक्षणेनअस्मभ्यंदातव्येनान्नेनवायुक्ताः नोस्मान् स्तोतॄन् उपागमन्तु उपागच्छन्तुप्राप्नुवन्तु कथंभूताः अंगिरसांएतत्संज्ञकानामृषीणांसंबन्धिभिः सामभिः प्रगीतैर्मन्त्रैः स्तूयमानाः अपिचेन्द्रः इन्द्रियैः धननामैतत् स्वसंबन्धिभिरस्मभ्यंदातव्यैर्धनैःसहास्मानागच्छतु तथामरुतःसप्तगणरूपाएकोनपञ्चाशत्संख्याकाःईदृङ्चान्यादृङ्चेत्येवमादिनामानोदेवाः मरुद्भिः स्वावयवभूतैःप्राणापानादिरूपेणवर्तमानैर्वायुभिःसह अस्मानागच्छन्तु अथादितिः अखण्डनीयाअदीनावादेवमाता आदित्यैःस्वकीयैःपुत्रैःसह नोस्म-

स्यं शर्मसुखंयंसत् यच्छतु ॥ गमन्तु लोटि बहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेतिङ्गेरार्धधातुकत्वेनङित्त्वाभावाद्गमहनेत्यादिनाउपधालोपाभावः । यंसत् यमउपरमे लेटयडागमः सिब्बहुलंलेटीतिसिप् ॥ २ ॥

तृतीयामृचमाह—

तन्नइन्द्रस्तद्वरुणस्तदग्निस्तदर्यमातत्सविताचनोधात् ।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥३॥२५॥

तत् । नः । इन्द्रः । तत् । वरुणः । तत् । अग्निः । तत् । अर्यमा । तत् । सविता । चनः । धात् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ३ ॥ २५ ॥

यदस्माभिःप्रार्थ्यमानमन्नमस्ति चनइत्यन्नामैतत् तादृशंचनोन्नं नः अस्मभ्यं इन्द्रोधात् दधातुददातु एवंतद्वरुणइत्यादावपियोज्यम् तदिदमिन्द्रादिभिर्दत्तमस्मदीयमन्नं मित्रादयोममहन्तां पूजयन्तु पालयन्त्वित्यर्थः॥चनः चायृपूजानिशामनयोः चायतेरन्नेह्रस्वश्चेत्यसुन् नुडागमश्च धातोर्ह्रस्वत्वंच यलोपः नित्त्वादाद्युदात्तत्वम् । धात् छन्दसिलुङ्लङ्लिटइतिप्रार्थनायांलुङ् गातिस्थेतिसिचोलुक् ॥ ६ ॥

॥ इतिप्रथमस्यसप्तमेपञ्चविंशोवर्गः ॥ २५ ॥

यइन्द्राग्नीइतित्रयोदशर्चंतृतीयंसूक्तम् कुत्सस्यार्षंत्रैष्टुभमैन्द्राग्नम् तथाचानुक्रान्तम्—यइन्द्राग्नीसप्तोनैन्द्राग्नंत्विति विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

यइन्द्राग्नीचित्रतमोरथोवामभिविश्वानिभुवनानिचष्टे ।
तेनायातंसरथंतस्थिवांसाथासोमस्यपिबतंसुतस्य ॥ १ ॥

यः । इन्द्राग्नी इति । चित्रऽतमः । रथः । वाम् । अभि । विश्वानि । भुवनानि । चष्टे । तेन । आ । यातम् । सऽरथम् । तस्थिऽवांसा । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १ ॥

हेइन्द्राग्नी चित्रतमः अतिशयेन चायनीयः वांयुवयोःसंबन्धीयोरथः विश्वानिभुवना-निभूतजातानि अभिचष्टे आभिमुख्येनपश्यति सुवर्णमयत्वात् रत्नखचितत्वाच्चस्वप्रभाभिःकृत्स्नंजगद्भासयतीत्यर्थः तेनरथेनायातमस्मद्यज्ञमागच्छतम् वर्किं पर्यायेणनेत्याह सरथं समानमेकंरथंतस्थिवांसा युगपदेवास्थितवन्तौयुवामागच्छतं नपर्यायेणेत्यर्थः अथागमनानन्तरं सुतस्य ऋत्विग्भिरभिषुतं सोमस्य सोमंस्वांशलक्षणंतदेकदेशंवापिबतम् ॥ वां युष्मदस्मदोः-षष्ठीचतुर्थीद्वितीयास्थयोरित्यादिनाद्विवचनस्यवामादेशः सर्वानुदात्तत्वम् । चष्टे चक्षिङ्व्य-क्तायांवाचि अत्रप्रकाशनार्थः अदादित्वाच्छपोलुक् स्कोःसंयोगाद्योरितिकलोपः तास्यनुदात्ते-दितिलसार्वधातुकानुदात्तत्वेधातुस्वरःशिष्यते यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । सरथ-म् समानश्चासौरथश्चसरथः समानस्यच्छन्दसीतिसभावः परादिश्छन्दसिबहुलमित्युत्तरपदा-द्युदात्तत्वम् । तस्थिवांसा ष्ठागतिनिवृत्तौ लिटःक्वसुः द्विर्वचनम् शर्पूर्वाःखयः वस्वेकाजाद्घसा-मितीडागमः आतोलोपइटिचेत्याकारलोपः सुपांसुलुगित्याकारः । सोमस्य क्रियाग्रहणंकर्त-व्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी ॥ १ ॥

द्वितीयामृचमाह—

यावदिदंभुवनंविश्वमस्त्युरुव्यचावरिमतागभीरम् ।
तावाँअयंपातवेसोमोअस्त्वरमिन्द्राग्नीमनसेयुवभ्याम् ॥ २ ॥

यावत् । इदम् । भुवनम् । विश्वम् । अस्ति । उरुऽव्यचा । वरिमता ।
गभीरम् । तावान् । अयम् । पातवे । सोमः । अस्तु । अरम् ।
इन्द्राग्नी इति । मनसे । युवऽभ्याम् ॥ २ ॥

विश्वंसर्वमिदंभुवनंजगत् यावदस्ति यावत्प्रमाणंभवति कीदृशं उरुव्यचा विस्तीर्णव्याप-नं सर्वव्यापकमित्यर्थः तथावरिमता वरिम्णाउरुत्वेनआत्मीयेनगौरवेणगभीरं गांभीर्योपेतं हेइ-न्द्राग्नी पातवेयुवाभ्यांपातुं अयंसोमस्तावानस्तु तावत्प्रमाणोभवतु तथा मनसेयुवयोरन्तःकरणा-यअरं सोमः पर्याप्तोभवतु ॥ उरुव्यचा व्यचव्याजीकरणे असुन् व्यचेःकुटादित्वमनसीतिवच-नाद्ङित्त्वाभावेनसंप्रसारणाभावः स्वमोर्नपुंसकादितिसोर्लुकिप्राप्तेसुपांसुलुगितिव्यत्ययेनडादे-शः । वरिमता पृथ्वादिभ्यइमनिज्वेतिउरुशब्दात्तस्यभावइत्यर्थेइमनिच् प्रियस्थिरेत्यादिनाउरु-शब्दस्यवरादेशः पुनरपिभावप्रत्ययोत्पत्तिश्छान्दसी सुपांसुलुगितितृतीयायालुक् यद्वा तृतीया-

याश्छान्दसस्तुडागमः । तावान् तत्परिमाणस्ययत्तदेतेभ्यःपरिमाणेवतुप् आसर्वनाम्नइत्यात्वम् । पातवे पापाने तुमर्थेसेसेनितितवेन्प्रत्ययः नित्त्वादाद्युदात्तत्वम् । अरं वालमूललघ्वलमंगुलीनांवा-लोरत्वमापद्यतइतिवक्तव्यमितिलत्वविकल्पः । युवभ्याम् व्यत्ययेनात्वाभावेशेपेलोपइतिदकार-लोपः ॥ २ ॥

तृतीयामृचमाह—

चक्राथेहिसध्र्य१ङ्नामंभद्रंसंध्रीचीनावृत्रहणाउतस्थः ।
तावन्द्राग्नीसध्र्यंञ्चानिषद्यावृष्णःसोमस्यवृषणावृषेथाम् ॥ ३ ॥

चक्राथे इति । हि । सध्र्यक् । नाम । भद्रम् । सध्रीचीना ।
वृत्रऽहनौ । उत । स्थः । तौ । इन्द्राग्नी इति । सध्र्यंञ्चा । निऽसद्यं ।
वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ॥ ३ ॥

हेइन्द्राग्नी भद्रंकल्याणंनामस्वकीयंनामधेयंसध्र्यक्सहगतंइन्द्राग्नीइत्येवंसंयुक्तंचक्राथे हि युवांकृतवन्तौ उतअपिच हेवृत्रहणौ वृत्रस्यासुरस्यहन्तारौविन्द्राग्नी सध्रीचीनासहाञ्चन्तौवृ-त्रवधार्थंसङ्गतौस्थोभवथः हियस्मादेवंतस्मात् हेवृषणाकामानांवर्षितारावन्द्राग्नी तौयुवांसध्र्य-ञ्चासहितावेवसन्तौ निषद्यवेद्यामुपविश्य वृष्णःसेक्तुःसोमस्यआत्मीयंभागंआवृषेथां स्वकीयेउदरे आसिञ्चेथाम् ॥ सध्र्यक् सहशब्दोपपदादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः सहस्यसध्रिः अद्रिसध्र्योरन्तोदात्तनिपातनंकृत्स्वरनिवृत्त्यर्थमितिवचनात्सध्र्यादेशोन्तोदात्तः यणादेशेउदात्तस्वरितयोर्यणइतिस्वरितत्वम् । सध्रीचीना विभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखः सुपांसुलुगितिविभक्तेराजादेशः । वृत्रहणौ संहितायामावादेशे लोपःशाकल्यस्येतिवलोपः । वृषेथाम् वृषसेचने व्यत्ययेनशः आत्मनेपदंच ॥ ३ ॥

चतुर्थीमृचमाह—

समिद्धेष्वग्निष्वांनजानायतस्रुचाबर्हिरुतिस्तिराणा ।
तीव्रैःसोमैःपरिषिक्तेभिरर्वागेन्द्राग्नीसौमनसायंयातम् ॥ ४ ॥

समऽइंद्धेषु । अग्निषु । आनजाना । यतऽस्रुंचा । बर्हिः ।
ऊम् इति । तिस्तिराणा । तीव्रैः । सोमैः । परिऽसिक्तेभिः ।
अर्वाक् । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ॥ ४ ॥

अग्निषुगार्हपत्यादिषु अन्वाधानादिनासमिद्धेषुसम्यगिन्द्धेषुदीप्तेषुसत्सु आनजाना हवींषि आज्येनाञ्जन्तौ यतस्रुचा तदनन्तरंयागार्थंगृहीतस्रुचौ बर्हिःउ वेद्यांबर्हिरपितिस्तिराणाआस्तीर्णंकृतवन्तौ अध्वर्युंरमतिप्रस्थातारौएवंभूतावभूताम् तथासति हेइन्द्राग्नी तीव्रैःक्षिप्रंमदकरैः परिषिक्तेभिःपरितःसर्वेग्रहचमसादिषुआसक्तैःसोमैःहेतुभूतैः अर्वाक् अस्मदभिमुखमायातमागच्छतम् किमर्थं सौमनसाय सौमनस्यायअस्माकमनुग्रहायेत्यर्थः॥आनजाना अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु लिटःकानच् अनिदितामितिनलोपः द्विर्भावेअतआदेरित्यभ्यासस्यदीर्घः तस्मान्नुड्द्विहलइति अद्विहलोपिव्यत्ययेननुट् । तिस्तिराणा स्तॄञ्आच्छादने पूर्ववत्कानच् ऋतइद्धातोरितीत्वम् द्विर्वचनेशर्पूर्वाःखयः सुपांसुलुगितिसर्वत्रविभक्तेराकारः चित्त्वादन्तोदात्तत्वम्॥ ४ ॥

पञ्चमीमृचमाह—

यानीन्द्राग्नीचक्रथुर्वीर्याणियानिरूपाण्युतवृष्ण्यानि ।
यावांप्रत्नानिसख्याशिवानितेभिःसोमस्यपिबतंसुतस्य ॥५॥२६॥

यानि । इन्द्राग्नी इति । चक्रथुः । वीर्याणि । यानि । रूपाणि ।
उत । वृष्ण्यानि । या । वाम् । प्रत्नानि । सख्या । शिवानि ।
तेभिः । सोमस्य । पिबतम् । सुतस्य ॥ ५ ॥ २६ ॥

हेइन्द्राग्नी यानिवीर्याणिवृत्रवधादिरूपाणिचक्रथुः कृतवन्तौ युवांयानिचरूपाणिनिरूप्यमाणानिगवाश्वादीनिभूतजातानिकृतवन्तौ इन्द्राग्निभ्यांहिसर्वंजगत्सृज्यते इन्द्रःसूर्यात्मनावृष्टिंसृजति धाराद्वारावृष्ट्युत्पादकः वृष्टेःसकाशात्सर्वेप्राणिनउत्पद्यन्ते उतअपिच यानिवृष्ण्यानि वृष्णिभवानि वृष्टिप्रदानादिरूपाणिकर्माणिकृतवन्तौ तथा वांयुवयोःसंबन्धीनि प्रत्नानिचिरन्तनानि शिवानिशोभनानि यायानिसख्यासखित्वानिसन्ति तेभिःतैःसर्वैःसहितौयुवांसुतस्यसोमस्याभिषुतंसोमंपिबतम् ॥ सख्या सख्युर्भावःसख्यम् सख्युर्यइतियप्रत्ययः शेश्छन्दसिबहुलमितिशेर्लोपः । तेभिः बहुलंछन्दसीतिभिसऐसभावः सावेकाचइतिप्राप्तस्यविभक्त्युदात्तस्य नगोश्वन्त्सावर्णेतिप्रतिषेधः ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेषड्विंशोवर्गः ॥ २६ ॥

षष्ठीमृचमाह—

यदब्रवंप्रथमंवांवृणानो३ऽयंसोमोअसुरैर्नोविहव्यः ।
तांसत्यांश्रद्धामभ्याहियातमथासोमस्यपिबतंसुतस्य ॥ ६ ॥

यत् । अब्रवम् । प्रथमम् । वाम् । वृणानः । अयम् । सोमः । असुरैः ।
नः । विऽहव्यः । ताम् । सत्याम् । श्रद्धाम् । अभि । आ । हि ।
यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ६ ॥

हेइन्द्राग्नी प्रथमंकर्मोपक्रमएववांयुवांवृणानः संभजमानः यदब्रवं सोमेनप्रीणयिष्यामी-तियदवोचं सत्यांयथार्थांतांश्रद्धां श्रद्धयाआदरातिशयेनकृतामुक्तिंअभिअभिलक्ष्य आहि यातं आगच्छतमेव नोदासाथाम् अथागमनान्तरंअभिषुतंसोमंपिबतम्. तथासति असुरैःह-विषांप्रक्षेपकैर्ऋत्विग्भिरयंनोस्माकंसोमोविहव्योविशेषेणहोतव्योभवति इतरथाव्यर्थःस्यात् त-स्मादिन्द्राग्नीआगच्छतमित्यर्थः ॥ वृणानः वृङ्संभक्तौ लटःशानच् श्नाभ्यस्तयोरातइत्याकार-लोपः । असुरैः असुक्षेपणे असेरुरन्नित्युरन्प्रत्ययः । विहव्यः हुदानादनयोः अचोयत् गुणः धातोस्तन्निमित्तस्यैवेत्यवादेशः यतोनावइत्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

सप्तमीमृचमाह—

यदिन्द्राग्नीमदथःस्वेदुरोणेयद्ब्रह्मणिराजनिवायजत्रा ।
अतःपरिवृषणावाहियातमथासोमस्यपिबतंसुतस्य ॥ ७ ॥

यत् । इन्द्राग्नी इति । मदथः । स्वे । दुरोणे । यत् । ब्रह्मणि ।
राजनि । वा । यजत्रा । अतः । परि । वृषणौ । आ । हि ।
यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ७ ॥

यजत्रायष्टव्यौ हेइन्द्राग्नी स्वेदुरोणेस्वकीयेगृहेनिवासस्थानेयद्वयदिमदथःहृष्यथः यद्य-द्विब्रह्मणिब्राह्मणेअन्यस्मिन् यजमाने हविःस्वीकरणायआगत्यहृष्यथः यद्विवाराजनिक्षत्रिये युद्धेसाहाय्यंकर्तुंआगत्यहृष्यथः अतःपरि परितोस्मात्सर्वस्मात् स्थानात् हेवृषणौ कामानांव-

पिंताराविन्द्राग्नीआयातंहि आगच्छतमेव औदासीन्यंमाकार्ष्ट अन्यत्पूर्ववत् ॥ मदथः मदीहर्षे व्यत्ययेनशप् । यजत्रा अमिनक्षीत्यादिनायजतेःकर्मण्यत्रन् सुपांसुलुगितिविभक्तेराकारः ॥७॥

अष्टमीमृचमाह—

यदिन्द्राग्नीयदुंषुतुर्वशेंषुयद्द्रुह्युष्वनुंषुपूरुषुस्थः ।
अतःपरिंवृषणावाहियातमथासोमंस्यपिबतंसुतस्यं ॥ ८ ॥

यत् । इन्द्राग्नी इतिं । यदुंषु । तुर्वशेंषु । यत् । द्रुह्युषुं ।
अनुंषु । पूरुषुं । स्थः । अतंः । परिं । वृषणौ । आ । हि ।
यातम् । अर्थ । सोमंस्य । पिबतम् । सुतस्यं ॥ ८ ॥

अत्रयदुष्वित्यादीनिपञ्चमनुष्यनामानि हेइन्द्राग्नी यद्यदियदुषुनियतेषुपरेषामहिंसकेषु मनुष्येषुस्थोभवथोवर्तेथे यदिवा तुर्वशेषुहिंसकेषुमनुष्येषुवर्तेथे यद्यदिवाद्रुह्युषुद्रोहंपरेषामुपद्रव-मिच्छत्सुमनुष्येषुवर्तेथे यदिवाअनुषुप्राणत्सुसफलैःप्राणैर्युक्तेषुज्ञातृष्वनुष्ठातृषुमनुष्येषु अन्येषांहिप्राणानिष्फलाः ज्ञानहीनत्वात् अनुष्ठानाभावाच्च तेषुयद्भिवथः तथापूरुषुकामैःपूरयितव्ये-ष्वन्येषुस्तोतृजनेषुयद्भिवथः अतःसर्वस्मात्स्थानाद्धेकामाभिवर्षकाविन्द्राग्नी आगच्छतम् अनन्तरमभिषुतंसोमंपिबतम् ॥ यदुषु यमउपरमे नियम्यन्तेइन्द्रियाण्येभिरितियदवः यमेर्दुक्-चेतिकुप्रत्ययोदुगागमश्च अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । तुर्वशेषु तुर्वीहिंसार्थः औ-णादिकःअशप्रत्ययः । द्रुह्युषु द्रुहजिघांसायां संपदादिलक्षणोभावेक्विप् द्रुहंपरेषामिच्छन्ति छ-न्दसिपरेच्छायामपीतिक्यच् क्याच्छन्दसीत्युप्रत्ययः ।अनुषु अनप्राणने अनश्चेतिविधीयमानउप्र-त्ययोबहुलवचनादस्मादपिभवति निदित्यनुवृत्तेराद्युदात्तत्वम् । पूरुषु पूरीआप्यायने पूर्यन्तइ-तिपूरवः औणादिकउप्रत्ययः ॥ ८ ॥

नवमीमृचमाह—

यदिन्द्राग्नीअवमस्यांपृथिव्यांमध्यमस्यांपरमस्यामुतस्थः ।
अतःपरिंवृषणावाहियातमथासोमंस्यपिबतंसुतस्यं ॥ ९ ॥

यत् । इन्द्राग्नी इति । अवमस्याम् । पृथिव्याम् । मध्यमस्याम् ।
परमस्याम् । उत । स्थः । अतः । परि । वृषणौ । आ । हि । यातम् ।
अथ । सोमस्य । पिबतम् । सुतस्य ॥ ९ ॥

हेइन्द्राग्नी अवमस्यांपृथिव्यां सन्निकृष्टायामस्यां भूम्यां यद्यदिस्थोवर्तमानौभवथः यद्विवामध्यमस्यांपृथिव्यां अन्तरिक्षलोके अत्रपृथिवीशब्दस्त्रिष्वपिलोकेषुवर्तते यथा योद्वितीयस्यांतृतीयस्यांपृथिव्यामस्यायुषानाग्नेति[1] उतअपिच परमस्यांउत्कृष्टायांदूरेवर्तमानायांपृथिव्यांद्युलोकेयदिवावर्तेथे अतःसर्वस्मात्स्थानात् हेवृषणावागच्छतं आगमनानन्तरंसुतंसोमंपिबतम्। अवमस्यां अवमशब्दादुत्तरस्यङेर्व्यत्ययेनस्याडागमः एवमुत्तरत्रापि॥ ९ ॥

दशमीमृचमाह—

यदिन्द्राग्नीपरमस्यांपृथिव्यांमध्यमस्यामवमस्यामुतस्थः ।
अतःपरिवृषणावाहियातमथासोमस्यपिबतंसुतस्य ॥ १० ॥

यत् । इन्द्राग्नी इति । परमस्याम् । पृथिव्याम् । मध्यमस्याम् ।
अवमस्याम् । उत । स्थः । अतः । परि । वृषणौ । आ । हि ।
यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ १० ॥

पूर्ववद्व्याख्येयं एतावांस्तुविशेषः पूर्वंभूम्यादिषुत्रिषुलोकेषुयाविन्द्राग्नीतावागच्छतमित्युक्तम् इदानींतुद्युप्रभृतिषुअवरोहक्रमेणवर्तमानेषुत्रिषुलोकेषुयाविन्द्राग्नीवर्तेते तावागच्छतमितिप्रार्थ्यते॥१०॥

एकादशीमृचमाह—

यदिन्द्राग्नीदिविष्ठोयत्पृथिव्यांयत्पर्वतेष्वोषधीष्वप्सु ।
अतःपरिवृषणावाहियातमथासोमस्यपिबतंसुतस्य ॥ ११ ॥

यत् । इन्द्राग्नी इति । दिवि । स्थः । यत् । पृथिव्याम् । यत् ।
पर्वतेषु । ओषधीषु । अप्ऽसु । अतः । परि । वृषणौ ।
आ । हि । यातम् । अथ । सोमस्य । पिबतम् । सुतस्य ॥ ११ ॥

---

१ तै० सं० १. २. १२.

हेइन्द्राग्नी दिविद्युलोकेयद्दिस्थोभवथः यद्विवापृथिव्यांभूलोके यद्विवापर्वतेपुमेघेपुवा तथा ओपधीपु तिलमापवीह्यादिपु अप्सुउदकेपुचअनुग्राहकतयायद्विवास्थः हेकामाभिवर्षकौ युवां अतःसर्वस्मात्स्थानादागच्छतम् आगत्यचाभिपुतंसोमंपिवतम् ॥ पृथिव्याम् उदात्तयणइतिविभक्तेरुदात्तत्वम् । ओपधीपु ओपःपाकः आसुधीयतइतिओपधयः कर्मण्यधिकरणेचेतिकिप्रत्ययः दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् तच्चवअन्तमाद्युदात्तम् ओपधेश्चविभक्तावप्रथमायामितिदीर्घः ॥ ११ ॥

द्वादशीमृचमाह—

यदि॑न्द्राग्नी॒उदि॑ता॒सूर्य॑स्य॒मध्ये॑दि॒वःस्व॒धया॑मा॒दये॑थे ।
अत॒:परि॑तूपणा॒वाहि॒याा॒तमथा॒सोम॑स्यपिबतं॒सु॒तस्य॑ ॥ १२ ॥

यत् । इ॒न्द्रा॒ग्नी॒ इति॑ । उत्ऽई॑ता । सूर्य॑स्य । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दये॑थे॒ इति॑ । अत॑: । परि॑ । तू॒प॒णौ॒ । आ । हि । या॒तम् । अथ॑ । सोम॑स्य । पि॒ब॒तम् । सु॒तस्य॑ ॥ १२ ॥

हेइन्द्राग्नी उदिता उदितस्यउदयंप्राप्तस्यसूर्यस्यादित्यस्यसंबन्धिनोदिवोद्योतमानस्यान्तरिक्षस्यमध्येमध्यभागे स्वधया आत्मीयेनतेजसाहविर्लक्षणेनान्नेनवा यद्यस्मात्कारणात् मादयेथे तृप्तौभवथः तस्मात्कारणादतःसर्वस्मादन्तरिक्षभागात् हेकामाभिवर्षकाविन्द्राग्नी आच्छतम् आगमनानन्तरमभिपुतंसोमंपिवतम् ॥ उदिता सुपांसुलुगितिपष्ठ्याडादेशः । दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् । मादयेथे मदतृप्तियोगे चुरादिरात्मनेपदी ॥ १२ ॥

त्रयोदशीमृचमाह—

ए॒वेन्द्रा॑ग्नीपपि॒वांसा॑सु॒तस्य॒विश्वा॒स्मभ्यं॒संजयत॒ंधना॑नि ।
तन्नो॑मि॒त्रोवरु॑णोमामहन्ता॒मदि॑ति॒:सिन्धु॑:पृथि॒वीउ॒त द्यौः ॥ १३ ॥ २७ ॥

ए॒व । इ॒न्द्रा॒ग्नी॒ इति॑ । प॒पि॒ऽवांसा॑ । सु॒तस्य॑ । विश्वा॑ । अ॒स्मभ्य॑म् । सम् । ज॒य॒त॒म् । धना॑नि । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् । अदि॑तिः । सिन्धु॑ः । पृ॒थि॒वी । उ॒त । द्यौः ॥ १३ ॥ २७ ॥

हेइन्द्राग्नी सुतस्याभिषुतंसोमंएवएवंपपिवांसापीतवन्तौयुवांअस्मभ्यं विश्वासर्वाणिधनानि संजयतंप्रयच्छतम् यदनेनसूक्तेनप्रार्थितं तन्मित्रादयोममहन्तां पूजयन्तु ॥ पपिवांसा पापाने लिटःक्कसुः वस्वेकाजाद्धसामितीडागमः ॥ १३ ॥

इतिप्रथमस्यसप्तमेसप्तविंशोवर्गः ॥ २७ ॥

विह्नीत्यष्टर्चंचतुर्थंसूक्तम् अनुक्रान्तञ्च—विह्यष्टाविति । ऋष्याद्याःपूर्ववत् सूक्तविनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

विह्यख्यंमनंसावस्यंइच्छन्निन्द्राग्नीज्ञासउतवांसजातान् ।
नान्यायुवत्प्रमंतिरस्तिमह्यंसवांधियंवाजयन्तींमतक्षम् ॥ १ ॥

वि । हि । अख्यम् । मनसा । वस्यः । इच्छन् । इन्द्राग्नी इति ।
ज्ञासः । उत । वा । सऽजातान् । न । अन्या । युवत् । प्रऽमंतिः ।
अस्ति । मह्यम् । सः । वाम् । धियम् । वाजऽयन्तीम् । अतक्षम् ॥१॥

हेइन्द्राग्नी वस्यः प्रशस्तंधनंइच्छन्कामयमानोहं ज्ञासोज्ञातीन् उतवाअपिवा सजातान् समानजन्मानोज्ञातिव्यतिरिक्तान्बान्धवांस्तांश्च मनसाबुध्याविख्यं युवामेवज्ञातिरूपेणबन्धुरूपेण चव्यज्ञासिषम् तेहिधनस्यदातारोभवन्ति अपिच युवत्युवाभ्यां अन्याअन्येनकेनचित् मह्यं दत्तामम्तिःप्रकृष्टाबुद्धिर्नास्ति मदीययेपाप्रकृष्टाबुद्धिः सायुवाभ्यामेवदत्ता सतादृश्याबुध्यायुक्तोहं वांयुवयोः संबन्धिनींवाजयन्तींअन्नमस्मभ्यमिच्छन्तींधियं ध्यानेननिष्पन्नांस्तुतिं अतक्षं अकार्षम् ॥ अख्यम् लुङि अस्यतिवक्तिख्यातिभ्योङितिच्लेरङादेशः । वस्यः वसुशब्दादीयसुन् टेरितिटिलोपः छान्दसईकारलोपः । ज्ञासः सुखदुःखादिकंसाम्येनजानन्तीति ज्ञासोज्ञातयः ज्ञाअवबोधने औणादिकःअसुन् व्यत्ययेनविभक्तेरुदात्तत्वम् । युवत् सुपांसुलुगितिविभक्तेर्लुक् अर्थाभिधायकत्वात् युवावौद्विवचनइतियुष्मदस्मदोर्मपर्यन्तस्ययुवादेशः ॥ १ ॥

द्वितीयामृचमाह—

अश्रवंहिभूरिदावत्तरावांविजामातुरुतवांघास्यालात् ।
अथासोमस्यप्रयंतीयुवभ्यामिन्द्राग्नीस्तोमंजनयामिनव्यम् ॥२॥

अश्र॑वम् । हि । भूरि॑दावत्ऽतरा । वा॒म् । विऽजा॑मातुः । उ॒त । वा॒ । घ॒ । स्या॒लात् । अथ॑ । सोम॑स्य । प्रऽय॑ती । यु॒वऽभ्या॑म् । इन्द्रा॑ग्नी॒ इति॑ । स्तोम॑म् । ज॒न॒या॒मि॒ । नव्य॑म् ॥ २ ॥

हेइन्द्राग्नी वांयुवांभूरिदावत्तरा अतिशयेनबहुधनस्यदातारावित्यश्रवंहि अश्रौषंखलु कस्मात्पुरुषात् विजामातुः श्रुताभिरूप्यादिभिर्गुणैर्विहीनोजामातायथाकन्यावतेबहुधनंप्रयच्छति कन्यालाभार्थंततोप्यतिशयेनदातारावित्न्द्राग्नीइत्यर्थः उतवाअपिच स्यालात् स्यंशूर्पं तस्माल्लाजानावपतिविवाहकालइतिस्यालःकन्याभ्राता सयथाभगिनीमीत्यर्थंबहुधनंप्रयच्छति ततोप्यतिशयेनदातारावित्न्द्राग्नी घेतिपदपूरणः तथाचसति अथानन्तरंहेइन्द्राग्नी युवभ्यां युवाभ्यां सोमस्यप्रयती अभिषुतस्यसोमस्यप्रदानेनसहनव्यंनवतरंमत्यग्रंस्तोमंस्तोत्रंजनयामि निष्पादयामि अत्रनिरुक्तम्—अश्रौषंहिबहुदातृतरौवांविजामातुरसुसमाप्ताज्जामातुर्विजामातेतिशश्वद्दाक्षिणाजाःक्रीतापतिमाचक्षतेऽसुसमाप्तइववरोऽभिप्रेतोजामाताजाअपत्यंतन्निर्मातातवाघास्यालादपिचस्यालात्स्यालआसन्नःसंयोगेनेतिनैदानाःस्याल्लाजानावपतीतिवालाजाल्लाजतेःस्यंशूर्पंस्यतेःशूर्पमशनपवनंशृणातेःशम्नातेर्वाऽथसोमस्यप्रदानेनयुवाभ्यामिन्द्राग्नीस्तोमंजनयामिनव्यं नवतरमिति ॥ अश्रवं श्रुश्रवणे लङिउत्तमपुरुषैकवचनेबहुलंछन्दसीतिविकरणस्यलुक् । भूरिदावत्तरा डुदाञ्दानेआतोमनिन्क्वनिब्वनिपः अतिशयेनभूरिदावाभूरिदावत्तरः भूरिदाव्नस्तुड्वक्तव्यइतितरपस्तुट् पदसंज्ञायांनलोपः सुपांसुलुगितिविभक्तेराकारः । घ ऋचितुनुघेत्यादिनासंहितायां दीर्घत्वम् । अथ निपातस्यचेति । प्रयती यमउपरमे क्तिनिअनुदात्तोपदेशेत्यादिनानुनासिकलोपः तादौचेतिगतेःप्रकृतिस्वरत्वम् । युवभ्याम् सर्वेविधयश्छन्दसिविकल्प्यन्तइतियुष्मदस्मदोरनादेशेइत्यात्वाभावेशेपेलोपइतिदकारस्यलोपः ॥ २ ॥

तृतीयामृचमाह—

मा च्छे॑द्म र॒श्मीँरिति॒ नाध॑माना: पि॒तॄ॒णां श॒क्तीर॑नु॒यच्छ॑माना: ।
इ॒न्द्रा॒ग्निभ्यां॒ कं वृष॑णो मदन्ति॒ ता ह्यद्री॑ धि॒षणा॑या उ॒पस्थे॑ ॥ ३ ॥

---

१ नि० ६. ९.।

मा । छेद्म । रश्मीन् । इति । नाधमानाः । पितृणाम् । शक्तीः ।
अनुऽयच्छमानाः । इन्द्राग्निऽभ्याम् । कम् । वृषणः । मदन्ति ।
ता । हि । अद्री इति । धिषणायाः । उपऽस्थे ॥ ३ ॥

रश्मीन् रश्मिशब्दोरज्जुवाची यथारश्मयोदीर्घाअविच्छिन्नाभवन्ति एवमविच्छिन्नान्पुत्रपौत्रादीन्माच्छेद्म माविच्छिन्नान्कुर्मः इतिबुद्ध्या नाधमानाःइन्द्राग्न्योःसकाशात्तथाविधान् पुत्रादीन्याचमानाः तदनन्तरंपितृणांशक्तीः शक्त्युत्पादकान्वीर्योत्पादकांस्तान्पुत्रादीनअनुयच्छमानाः अनुक्रमेणनियतान्कुर्वन्तः वृषणःसेक्तारःपुत्रोत्पादनसमर्थाः सपत्नीकाइत्यर्थः एवंभूतायजमानाःइन्द्राग्निभ्यांकंसुखंयथाभवतितथामदन्तिस्तुवन्ति हियस्मात् अद्रीशत्रूनावृणन्तौहिंसन्तौविदारयन्तौताविन्द्राग्नी धिषणायाःस्तुत्याउपस्थेउपस्थानेसमीपेभवतः तस्मात्ताभ्यांस्वपत्यायस्तुवन्तीतिभावः यद्वा निपातानामनेकार्थत्वात्हिशब्दोयदेत्यर्थे यदाताविन्द्राग्नीउद्दिश्यअद्रीअभिषवसाधनभूताग्रावाणः धिषणायाउपस्थे धिषणाअधिषवणचर्म तस्योपरिष्टात् इन्द्राग्न्यर्थंसोममभिषुण्वन्ति तदातदायजमानाः स्तुवन्तीतियोजनीयम्॥ छेद्म छिदिर्द्वैधीकरणे लङिबहुलंछन्दसीतिविकरणस्यलुक् छन्दस्युभयथेत्यार्धधातुकत्वेनङित्त्वाभावाल्लघूपधगुणः नमाङ्योगइत्यडभावः। रश्मीन् दीर्घादटिसमानपादइतिसंहितायांनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेतिईकारःसानुनासिकः। नाधमानाः नाधृयाच्ञायाम्। पितृणाम् नामन्यतरस्यामितिनामउदात्तत्वम्। मदन्ति मदिस्तुतौ आगमानुशासनस्यानित्यत्वान्नुमभावः व्यत्ययेनपरस्मैपदम्॥ ३ ॥

चतुर्थीमृचमाह—

युवाभ्यांदेवीधिषणामदायेन्द्राग्नीसोममुशतीसुनोति ।
तावश्विनाभद्रहस्तासुपाणीआधावतंमधुनापृङ्क्तमप्सु ॥ ४ ॥

युवाभ्याम् । देवी । धिषणा । मदाय । इन्द्राग्नी इति । सोमम् ।
उशती । सुनोति । तौ । अश्विना । भद्रहस्ता । सुपाणी इति सुऽपाणी । आ । धावतम् । मधुना । पृङ्क्तम् । अप्ऽसु ॥ ४ ॥

हेइन्द्राग्नी युवाभ्यांमदाययुवयोःहर्षाय देवीद्योतमानाउशतीयुवांकामयमानाधिषणा मन्त्ररूपावाक्सोमंसुनोतिअभिषुणोति यद्वा धिषणाअधिषवणचर्म द्योतमानं तद्युवयोर्मदंका-

मयमानंसवसोमंअभिषुणोति ग्रावभिःस्वस्मिन्नभिषवात्तस्याभिषवकर्तृत्वम् अश्विनाअश्ववन्तौभद्रहस्ताशोभनदोर्दण्डौ सुपाणीमणिबन्धादूर्ध्वभागःपाणिःशोभनपाणी एवंभूतौहेइन्द्राग्नी तौयुवांआधावतंशीघ्रमागच्छतम् आगत्यचअप्सुउदकेषुवर्तमानेनमधुना माधुर्येपेतेनसारांशेनपृक्तंअस्मदीयंसोमंसंयोजयतम् यद्वाअप्सुवसतीवरीषुमधुनामाधुर्यंसंयोजयतम् विभक्तिव्यत्ययः॥ युवाभ्याम् षष्ठ्यर्थेचतुर्थी । उशती वशकान्तौ अदादित्वाच्छपोलुक् ग्रहिज्यादिनासंप्रसारणम् उगितश्चेतिङीप् शतुरनुमइतिनद्याउदात्तत्वम् । पृक्तम् पृचीसंपर्के रौधादिकः लोटिथसस्तम् श्नसोरल्लोपः अनुस्वारपरसवर्णौ नवाअचःपरस्मिन्नित्यल्लोपस्यस्थानिवत्त्वम् नपदान्तेत्यादिनानिषेधात् ॥ ४ ॥

पञ्चमीमृचमाह—

युवामिन्द्राग्नीवसुनोविभागेतवस्तमाशुश्रवद्वृत्रहत्ये ।
तावासद्याबर्हिषियज्ञेअस्मिन्प्रचर्षणीमादयेथांसुतस्य ॥५॥२८॥

युवाम् । इन्द्राग्नी इति । वसुनः । विऽभागे । तवःऽतमा ।
शुश्रव । वृत्रऽहत्ये । तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् ।
प्र । चर्षणी इति । मादयेथाम् । सुतस्य ॥ ५ ॥ २८ ॥

हेइन्द्राग्नी वसुनोधनस्यविभागेस्तोतृभ्योदातुंविभजनेतात्पर्येणवर्तमानौयुवां वृत्रहत्येवृत्रस्यासुरस्यहननेतवस्तमा अतिशयेनबलिनौप्रवृद्धतमौवांशुश्रव अश्रौषम् हेचर्षणी सर्वस्यद्रष्टाराविन्द्राग्नी तौयुवामस्मदीयेस्मिन्यज्ञेबर्हिषि वेद्यामास्तीर्णेदर्भे आसद्योपविश्य सुतस्याभिषुतस्यसोमस्यपानेनप्रमादयेथां प्रकर्षेणतृप्तौभवतम् । विभागे भजसेवायाम् भावेघञ् चजोःकुघिण्ण्यतोरितिकुत्वम् थाथादिनोत्तरपदान्तोदात्तत्वम् । तवस्तमा तवइतिबलनाम लुप्तमत्वर्थीयादेतस्मादातिशायनिकस्तमप् यद्वा तवतिर्वृद्ध्यर्थःसौत्रोधातुः तस्मादौणादिकःकर्तरिअसिप्रत्ययः सुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घत्वम् । वृत्रहत्ये हनस्तचेतिहन्तेर्भावेक्यप् तत्सन्नियोगेनतकारान्तादेशश्च कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेष्टाविंशोवर्गः ॥ २८ ॥

ऐन्द्राग्नस्यपशोर्हविषःप्रचर्षणिभ्यइत्येषायाज्या मदानामितिखण्डेसूत्रितम्—प्रचर्षणिभ्यःपृतनाहवेष्वादेवोयातुसविताशुरत्नइति ।

तामेतांसूक्तेषष्ठीमृचमाह—

प्रचर्षणिभ्यःपृतनाहवेषुप्रपृथिव्यारिरिचाथेदिवश्च ।
प्रसिन्धुभ्यःप्रगिरिभ्योमहित्वाप्रेन्द्राग्नीविश्वाभुवनात्यन्या ॥ ६ ॥

प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथे इति । दिवः । च । प्र । सिन्धुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इन्द्राग्नी इति । विश्वा । भुवना । अति । अन्या ॥ ६ ॥

पृतनाहवेषु पृतनासुसङ्ग्रामेषुरक्षणार्थंआह्वानेषुसत्सु हेइन्द्राग्नीआगतवन्तौयुवांचर्षणिभ्यः सर्वेभ्योपिमनुष्येभ्यः महित्वामहत्त्वेनप्ररिरिचाथे अतिरिच्येथे सर्वाधिकौभवथइत्यर्थः अत्रोपसर्गवशाद्धातुःस्वाभिधेयविपरीतमर्थमाचष्टे यथाप्रस्मरणंप्रस्थानमिति तथापृथिव्याःसर्वस्याभूमेश्चप्ररिरिचाथे एवंदिवः द्युप्रभृतिभ्योपिसिन्धवःस्यन्दनशीलाःआपः गिरयःपर्वताः अपिच हेइन्द्राग्नी विश्वाभुवना सर्वाणिभूतजातानिअन्याउक्तव्यतिरिक्तानियानिसन्ति तान्यतीत्यप्ररिरिचाथे अधिकौभवथः ॥ पृतनाहवेषु पृतनासुहवः पृतनाहवः ह्वःोभावेनुपसर्गस्येत्यप् संप्रसारणंच व्यत्ययेनथाथादिस्वराभावेकृदुत्तरपदप्रकृतिस्वरत्वम् । रिरिचाथे रिचिर्विरेचने छन्दसिलुङ्लङ्लिटइतिवर्तमानेलिट् यद्वा लटचेवबहुलंछन्दसीतिविकरणस्यश्लुः । महित्वा महपूजायाम् औणादिकइन्प्रत्ययः तस्यभावोमहित्वम् सुपांसुलुगितितृतीयायाडादेशः ॥ ६ ॥

पूर्वोक्तेएवपशौआभरतमित्येषापुरोडाशस्यानुवाक्या सूत्रितंच—आभरतंशिक्षतंवज्रबाहूउभावामिन्द्राग्नीआहुवध्याइतीति ।

तामेतांसप्तमीमृचमाह—

आभरतंशिक्षतंवज्रबाहूअस्माँइन्द्राग्नीअवतंशचीभिः ।
इमेनुतेरश्मयःसूर्यस्ययेभिःसपित्वंपितरोनआसन् ॥ ७ ॥

आ । भरतम् । शिक्षतम् । वज्रबाहू इति वज्रऽबाहू । अस्मान् । इन्द्राग्नी इति । अवतम् । शचीभिः । इमे । नु । ते । रश्मयः । सूर्यस्य । येभिः । सऽपित्वम् । पितरः । नः । आसन् ॥ ७ ॥

हेवज्रबाहू वज्रहस्ताविन्द्राग्नी आभरतं अस्मदर्थं धनमाहरतम् आहृत्यचशिक्षतं अस्मभ्यंदत्तं शिक्षतिर्दानकर्मा अपिचास्माननुष्ठातॄन् शचीभिः कर्मनामैतत् आत्मीयैः कर्मभिरवतं रक्षतं किञ्चसूर्यात्मनइन्द्रस्य येभिरश्मिभिः यैरर्चिभिर्नोस्माकंपितरःपूर्वपुरुषाः सपित्वंसहप्राप्तव्यंस्थानं आसन् ब्रह्मलोकमगच्छन् आर्चिरादिमार्गेणहिब्रह्मलोकमुपासकागच्छन्ति तथाचश्रूयते—तेर्चिषमभिसंभवन्त्यर्चिषोहरिति । यद्वा येभीरश्मिभिः सपित्वंसमवेतत्वमध्यगच्छन् तेरश्मयः इमेनुइदानीमस्माभिर्दृश्यमानातएवखलु सूर्यस्य सूर्यात्मनइन्द्रस्य येरश्मयस्तएवाग्नेरपि तथाचश्रूयते—अग्निंवावादित्यःसायंप्रविशतितस्मादग्निर्दूरान्नक्तंददृशे-इति । तस्मात्सूर्यरश्मीनां स्तवनेन इन्द्राग्न्योरुभयोरपिस्तुतिःसिद्धा ॥ भरतम् हृग्रहोर्भइतिभत्वम् । शिक्षतम् शिक्षविद्योपादाने अनुपदेशात्सार्वधातुकानुदात्तत्वेशपःपित्वादनुदात्तत्वम् धातुस्वरःशिष्यते तिङःपरत्वान्निघाताभावः । सपित्वम् आप्लृव्याप्तौ अस्मात्सशब्दोपपदात् कृत्यार्थे तवैकेनितित्वन्प्रत्ययः पृषोदरादित्वाद्धातोःपिभावः यद्वा षपसमवाये इन्सर्वधातुभ्यइतीन् सपेर्भावःसपित्वम् । आसन् असगतिदीप्त्यादानेषु लङि आडागमउदात्तः यद्वृत्तान्नित्यमितिनिघाताभावः ॥ ७ ॥

अष्टमीमृचमाह—

पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८ ॥ २९ ॥

पुरम्ऽदरा । शिक्षतम् । वज्रऽहस्ता । अस्मान् । इन्द्राग्नी इति । अवतम् । भरेषु । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ८ ॥ २९ ॥

हेवज्रहस्ता हस्तेनगृहीतवज्रौ पुरन्दरा असुरपुराणांदारयिताराविन्द्राग्नी शिक्षतम् अस्मदपेक्षितंधनं प्रयच्छतं अपिच भरेषुसंग्रामेषु अस्मानवतंरक्षतं यदनेनसूक्तेन प्रार्थितं तदस्मदीयंमित्रादयोममहन्तां पूजयन्तु ॥ पुरन्दरा पूःसर्वयोर्दारिसहोरितिखच् वाचंयमपुरंदरौचेतिनिपातनादम् सुपांसुलुगितिविभक्तेराकारः ॥ ८ ॥

॥ इतिप्रथमस्यसप्तमेएकोनत्रिंशोवर्गः ॥ २९ ॥

१ छांदोग्योपनिषदि. । २ तै० ब्रा० २. १. २. ।

ततंमइतिनवर्चंपञ्चमंसूक्तम् कुत्सस्यार्षंऋभुदेवताकम् पञ्चमीनवम्यौत्रिष्टुभौ शिष्टाःसप्त-जगत्यः तथाचानुक्रान्तम्—ततंनवार्भवन्तुपञ्चम्यन्त्येत्रिष्टुभौइति । अभिप्लवषळहस्यचतुर्थेह-नि वैश्वदेवशस्त्रेइदमार्भवनिविद्धानम् सूत्रितंचतृतीयस्येतिखण्डे—ततंमेअपइतिवैश्वदेवमिति ।

तत्रप्रथमामृचमाह—

ततंमेअपस्तदुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते ।
अयंसमुद्रइहविश्वदेव्यःस्वाहाकृतस्यसमुतृप्णुतऋभवः ॥ १ ॥

ततम् । मे । अपः । तत् । ऊम् इति । तायते । पुनरिति । स्वादिष्ठा । धीतिः । उचथाय । शस्यते । अयम् । समुद्रः । इह । विश्वऽदेव्यः । स्वाहाऽकृतस्य । सम् । ऊम् इति । तृप्णुत । ऋभवः ॥ १ ॥

हेऋभवः मेमयाअपः अग्निष्टोमादिरूपंकर्म ततंविस्तारितं बहुशःपूर्वमनुष्ठितम् तदुतदेव पुनस्तायते विस्तार्यते अनुष्ठीयतइत्यर्थः तत्रस्वादिष्ठास्वादुतमा अतिशयेनप्रीतिकरीधीतिः स्तुतिश्च उचथायस्तुत्याय शस्यतेपठ्यते अपिचइहास्मिन्यागेसमुद्रः समुन्दनशीलोयंसोमरसः विश्वदेव्यः सर्वेभ्योदेवेभ्यःपर्याप्तोयथाभवतितथासंपादितः तस्यस्वाहाकृतस्यस्वाहाकारेणाग्नौप्रक्षिप्तस्यसोमस्यपानेनसमुतृप्णुत सम्यगेवतृप्ताभवत ॥ ततम् तनुविस्तारे निष्ठायांयस्यविभाषेतीट्प्रतिषेधः अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अपः आप्नोतेर्व्याप्तौ आपःकर्माख्यायांह्रस्वोनुट्चवाइत्यसुन् धातोर्ह्रस्वश्च । तायते तनोतेर्यकीत्यात्वम् । स्वादिष्ठा स्वादुशब्दादातिशायनिकइष्ठन् टेरितिटिलोपः । उचथाय वचपरिभाषणे औणादिकः अथक्प्रत्ययः वचिस्वपीत्यादिनासंप्रसारणम् । समुद्रः उन्दीक्लेदने स्फायितञ्चीत्यादिनारक् अनिदितामितिनलोपः । विश्वदेव्यः देवार्होभागोदेव्यः छन्दसिचेतियः विश्वेसर्वेदेव्यायस्मिन्सोमे बहुव्रीहौविश्वंसंज्ञायामितिव्यत्ययेनासंज्ञायामपिपूर्वपदान्तोदात्तत्वम् । स्वाहाकृतस्य स्वाहाशब्दस्यऊर्यादित्वेनगतित्वाद्गतिरनन्तरइतिपूर्वपदप्रकृतिस्वरत्वम् । तृप्णुत तृपप्रीणने स्वादिभ्यःश्नुः ऋभवइत्यनेनसंहितायामृत्यकइतिप्रकृतिभावः ॥ १ ॥

द्वितीयामृचमाह—

आभोगयंप्रयदिच्छन्तऐतनापाकाःप्राञ्चोममकेचिदापयः ।
सौधन्वनासश्चरितस्यभूमनागच्छतसवितुर्दाशुषोगृहम् ॥ २ ॥

आऽभोगयम् । प्र । यत् । इच्छन्तः । ऐतन । अपाकाः । प्राञ्चः । मम । के । चित् । आपयः । सौधन्वनासः । चरितस्य । भूमना । अगच्छत । सवितुः । दाशुषः । गृहम् ॥ २ ॥

हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीना मम आपयः प्रापयितारो मदीया ज्ञातयः केचित् एवंभूता ये केचन यूयं आभोगयं उपभोग्यं सोमं इच्छन्तः यद्यदा ऐतन तपश्चरितुमरण्यं गतवन्तः ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः तदुक्तं यास्केन—ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुरिति[1] । कुत्सोऽप्याङ्गिरसः अतस्तेन मदीया ज्ञातय इत्युक्तम् हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य संबन्धि यज्ञगृहमगच्छत तपसा लब्धसोमाः सन्तः कृतपाना यूयं गतवन्तः यद्वा दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्य ऋभुभ्यः सोमपानं दत्तवतः सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यं अगच्छत प्राप्ताः एतत्सर्वं मा भैर्वशंसंतीत्यादौ विस्पष्टमाम्नातम्[2] ॥ आभोगयम् आसमन्ताद् भोग आभोगः तदर्हं आभोगयः छन्दसि चेति यः यस्येति लोपाभावश्छान्दसः व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् यद्वा आङ्पूर्वाद्भुजेरौणादिकः कर्मणि इप्रत्ययः कुत्वं च अमिव्यत्ययेन गुणः । ऐतन इण् गतौ लङि मध्यमबहुवचनस्य थस्य तादेशः तप्तनप्तनथनाश्चेति तस्य तनबादेशः आडागमो वृद्धिश्च । आपयः आप्नोतेरौणादिक इप्रत्ययः । भूमना बहुशब्दात् पृथ्वादिलक्षण इमनिच् बहोरितीकारलोपो बहोर्भूभावश्च संज्ञापूर्वकस्य विधेरनित्यत्वादल्लोपाभावः ॥ २ ॥

तृतीयामृचमाह—

तत्स॑वि॒ता वो॑ऽमृत॒त्वमासु॑व॒दगो॑ह्यं॒ यच्छ्र॒वय॑न्त॒ ऐत॑न ।
त्यं चि॑च्चम॒सम॑सु॑रस्य॒ भक्ष॑ण॒मेकं॒ सन्त॑मकृणुता॒ चतु॑र्वयम् ॥ ३ ॥

तत् । स॒वि॒ता । व॒ः । अ॒मृ॒त॒ऽत्वम् । आ । अ॒सु॒व॒त् । अगो॑ह्यम् । यत् । श्र॒वय॑न्तः । ऐत॑न । त्यम् । चि॒त् । च॒म॒सम् । असु॑रस्य । भक्ष॑णम् । एक॑म् । सन्त॑म् । अ॒कृ॒णु॒त॒ । चतुः॑ऽवयम् ॥ ३ ॥

१ नि० ११. १६. ।　　२ ऐ० ब्रा० ३. ३०. ।

हेऋभवः तवइदानींसवितासर्वस्यप्रेरकोदेवोवोयुष्माकंअमृतत्वंदेवत्वंआसुवत् आभिमुख्येनप्रेरितवान् दत्तवानित्यर्थः यद्यदायूयंअगोह्यंगूहितुमशक्यं सर्वैर्दृश्यमानंसवितारंश्रवयन्तः अपेक्षितंसोमपानंविज्ञापयन्तःसन्तः ऐतनआगच्छत इदानीमितिपूर्वेणान्वयः यस्माद्यूयंदेवैराज्ञापिताःसन्तः असुरस्यत्वष्टुः संबन्धिनंतेननिर्मितमित्यर्थःभक्षणंसोमपानसाधनं त्यंतंचमसंएकं चित्असहायमेवसन्तंचतुर्वयंचतुर्व्यूहंअकृणुतकृतवन्तः सृष्ट्यादौत्वष्टाकृतंचमसंहोतृचमसादिमुख्यचमसचतुष्टयरूपेणऋभवःकृतवन्तइत्यर्थः ॥ असुवत् षूप्रेरणे तौदादिकः। श्रवयन्तः श्रुश्रवणे छान्दसोवृद्ध्यभावः। ऐतन लङिमध्यमबहुवचनस्यतादेशेतप्तनप्तनथनाश्चेतितनबादेशः भक्षणम् करणेल्युट्। अकृणुत कृविहिंसाकरणयोश्च लङिमध्यमबहुवचने धिन्विकृण्व्योरचेत्युप्रत्ययः। चतुर्वयम् वयाअवयवाः चत्वारःअवयवायस्यसतथोक्तः ॥ ३ ॥

चतुर्थीमृचमाह—

विष्ट्वीशमीतरणित्वेनवाघतोमर्तासःसन्तोअमृतत्वमानशुः।
सौधन्वनाऋभवःसूरचक्षसःसंवत्सरेसमपृच्यन्तधीतिभिः ॥ ४ ॥

विष्ट्वी। शमी। तरणिऽत्वेन। वाघतः। मर्तासः। सन्तः। अमृतऽत्वम्। आनशुः। सौधन्वनाः। ऋभवः। सूरऽचक्षसः। संवत्सरे। सम्। अपृच्यन्त। धीतिऽभिः ॥ ४ ॥

वाघतः ऋत्विङ्नामैतत् अत्रचसामर्थ्याद्बन्वोलक्ष्यन्ते ऋत्विग्भिरुपेताऋभवः शमी कर्मनामैतत् यागदानादीनिकर्माणि अन्यान्यपि एकंचमसंचतुरःकृणोतनेत्यादिनोक्तैर्देवैरुक्तानिकर्माणितरणित्वेन तरणिरितिक्षिप्रनाम क्षिप्रत्वेनशैघ्र्येण विष्ट्वीयद्यप्येतत्कर्मनाम तथाप्यत्रक्रियापरं व्याप्यकृत्वेत्यर्थः एवंकर्माणिकृत्वामर्तासोमनुष्याअपिसन्तः अमृतत्वंदेवत्वंआनशुः आनशिरे कृतैःकर्मभिर्लेभिरे देवत्वंप्राप्यचसौधन्वनाः सुधन्वनःपुत्राः सूरचक्षसःसूर्यसमानप्रकाशाः सूर्यसदृशज्ञानावा तेऋभवः संवत्सरेसंवत्सरावयवभूतेवसन्तादिकाले अनुष्ठेयैर्धीतिभिरग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ताअभवन् हविर्भागार्हाबभूवुरित्यर्थः अत्रनिरुक्तम्—कृत्वाकर्माणिक्षिप्रत्वेनवोढारोमेधाविनोवामर्तासःसन्तोअमृतत्वमानशिरेसौधन्वनाऋभवःसूरख्यानावासूरप्रज्ञावासंवत्सरेसमपृच्यन्तधीतिभिःकर्मभिर्ऋभुर्विभ्वावाजइतिसुधन्वनआङ्गिरसस्यत्रयःपुत्राबभूवुरि-

१ ऋ० सं० २. ३. ४.।

ति[1] ॥ विष्ट्वी विपृव्याप्तौ स्नात्व्यादयश्चेतिक्त्वाप्रत्ययस्यईकारान्तादेशः । शमी सुपांसुलुगि-
तिशसोलुक् । आनशुः अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् अश्नोतेश्चेत्यभ्यासादुत्तरपदस्यनुडागमः।
अपृच्यन्त पृचीसंपर्के कर्मणिलङ् ॥ ४ ॥

पञ्चमीमृचमाह—

क्षेत्रंमिवविमंमुस्तेजनेनँएकंपात्रंमृभवोजेहंमानम् ।
उपंस्तुताउपमंनाधंमानाअमंर्त्येषुश्रवंइच्छमांनाः ॥ ५ ॥ ३० ॥

क्षेत्रंम् । इव । वि । ममुः । तेजंनेन । एकंम् । पात्रंम् । ऋभवंः । जेहंमानम् ।
उपंऽस्तुताः । उपऽमम् । नाधंमानाः । अमंर्त्येषु । श्रवंः ।
इच्छमांनाः ॥ ५ ॥ ३० ॥

उपस्तुताःसमीपस्थैर्ऋषिभिःस्तुताःऋभवः जेहमानंहोमक्रियांप्रतिप्रयतमानंएकमसहायं
पात्रंपानसाधनंत्वष्ट्रानिर्मितंचमसं मानदण्डेनक्षेत्रमिवभूमिमिवतेजनेनतीक्ष्णेनशस्त्रेणचमसच-
तुष्टयरूपेणकर्तुंविममुः विशेषेणमानंकृतवन्तः किमिच्छन्तम् उपमंसर्वेषामुपमानभूतं प्रशस्तंसोम-
लक्षणमन्नं नाधमानाः याचमानाः एतदेवविवृणोति अमर्त्येषुमरणरहितेषुदेवेषुमध्ये श्रवो-
हविर्लक्षणमन्नंइच्छमानाः इच्छन्तोदेवैःसहसोमपानंकामयमानाः तद्लाभायचतुरश्चमसान्अका-
र्षुरित्यर्थः ॥ ममुः माङ्माने शब्देच व्यत्ययेनपरस्मैपदम् । तेजनेन अणोप्रगृह्यस्यानुनासिक-
इत्यनवसानेप्यत्ययेनाकारस्यानुनासिक्यम ईषाअक्षादित्वात्प्रकृतिभावः । जेहमानम् वेहजेह-
वाहप्रयत्ने भौवादिकः अनुदात्तेत्त्वादात्मनेपदम् । उपस्तुताः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्
उपमम् माङ्माने आतश्चोपसर्गइतिकप्रत्ययः । इच्छमानाः व्यत्ययेनात्मनेपदम् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेत्रिंशोवर्गः ॥ ३० ॥

षष्ठीमृचमाह—

आमंनीषामन्तरिंक्षस्यनृभ्यंःस्रुचेवंघृतंजुंहवामविद्मनां ।
तरणित्वायेपितुरंस्यसश्चिरऋभवोवाजंमरुहन्दिवोरजंः ॥ ६ ॥

१ नि० ११. १६. १

आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् ।
जुहवाम । विद्मना । तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे ।
ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥ ६ ॥

अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यो नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः ऋभवो हि यज्ञस्य नेतारः तेन हि देवत्वं प्राप्ताः यद्वा अन्तरिक्षस्य लोकस्य नेतृभ्यः मध्यमे स्थाने ह्येते पठ्यन्ते तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आजुहवाम मर्यादायामाकारः यथाशास्त्रं प्रयच्छाम एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्म इति शेषः अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्यास्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः तदुक्तम्—आदित्यरश्मयोऽप्यृभव उच्यन्त इति । ते ऋभवः दिवो रजः रजःशब्दो लोकवाची द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबन्धिनं वाजं सोमलक्षणमन्नं अरुहन् यागदानादिभिः कर्मभिः अन्यैश्च वेदोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन् ॥ स्रुचाइव सावेकाच इति विभक्तेरुदात्तत्वम् । जुहवाम हु दानादनयोः लोटि आडुत्तमस्य पिच्चेति आडागमः । विद्मना विद ज्ञाने औणादिको मनिः नसंयोगाद्वमन्तादिति अल्लोपाभावः । तरणित्वा तॄ प्लवनतरणयोः अर्तिसृधृधम्यश्यवितृभ्योऽनिरिति कर्तरि अनिप्रत्ययः तस्य भावस्तरणित्वम् शेश्छन्दसि बहुलमिति शेर्लोपः । सश्चिरे सश्च गतौ षस्ज गतावित्यत्र सश्चिमप्येके पठन्ति व्यत्ययेनात्मनेपदम् द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति वचनात् द्विर्वचनाभावः इरेचश्चित्वादन्तोदात्तत्वम् यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । अरुहन् रुह बीजजन्मनि प्रादुर्भावे च लुङि कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः । दिवः ऊडिदमित्यादिना विभक्तेरुदात्तत्वम् । रजः रञ्ज रागे रजन्त्यस्मिन्निति रजो लोकः तदुक्तम्—लोका रजांस्युच्यन्त इति । औणादिकोऽधिकरणे असुन् रजकरजनरजस्सूपसंख्यानमिति नलोपः सुपां सुलुगिति षष्ठ्या लुक् ॥ ६ ॥

सप्तमीमृचमाह—

ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः ।
युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ॥ ७ ॥

---

१ नि० ११. १६. । २ नि० ४. १९. ।

ऋभुः । नः । इन्द्रः । शवसा । नवीयान् । ऋभुः । वाजेभिः । वसुऽभिः । वसुः । दुदिः । युष्माकम् । देवाः । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुतीः । असुन्वताम् ॥ ७ ॥

ऋभुर्विभ्वावाजइतित्रयःसुधन्वनःपुत्राः तत्रशवसाबलेननवीयान्नवतरः प्रशस्ततरःऋभुर्नोस्माकंइन्द्रःपरमेश्वरः अस्माकंरक्षकइत्यर्थः यद्वेन्द्रएवप्रसङ्गादुरुभातीति[1] नैरुक्तव्युत्पत्त्याऋभुरितिसूयते अपिच वाजेभिः वाजैःअस्मभ्यंदातव्यैरन्नैःवसुभिःनिवासहेतुभिः धनैश्चऋभुर्वसुरस्माकंनिवासयिता अतएवददिःतेषामन्नानांधनानांचदाताभवतु परोर्धर्चःप्रत्यक्षकृतः हेदेवाः दानादिगुणयुक्ताःऋभुप्रभृतयः युष्माकंसंबन्धिनाअवसारक्षणेनयुक्तेप्रियेअस्माकमनुकूलेअहनिदिवसेवर्तमानावयं असुन्वतांसुन्वद्यजमानविरोधिनांशत्रूणांपृत्सुतीःसेनाःअभितिष्ठेम॥ नवीयान् नवशब्दादातिशायनिकईयसुन् । वाजेभिः बहुलंछन्दसीतिभिसऐसभावः। वसु वसनिवासे अस्मादन्तर्भावितण्यर्थात्शृस्वृस्निहीत्यादिनाउप्रत्ययः निवित्यनुवृत्तेराद्युदात्तत्वम्। ददिः डुदाञ्दाने आदृगमहनइतिकिप्रत्ययः लिड्वद्भावाद्द्विर्भावादि आतोलोपइटिचेत्याकारलोपः॥ ७ ॥

अष्टमीमृचमाह—

निश्चर्मणऋभवोगामपिंशतसंवत्सेनासृजतामातरंपुनः ।
सौधन्वनासःस्वपस्ययानरोजिव्रीयुवानापितराकृणोतन ॥ ८ ॥

निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनः । इति । सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥ ८ ॥

पुराकस्यचिदृषेर्धेनुर्मृता सऋषिस्तस्याधेनोर्वत्संदृष्ट्वाऋभूनस्तुष्टाव ऋभवस्ततसदृशीमन्यांधेनुंकृत्वा तदीयेनचर्मणासंवीय तेनवत्सेनसमयोजयन्निति अयमर्थःपूर्वार्धेनप्रतिपाद्यते हेऋभवः यूयं चर्मणःचर्मणात्वचा तृतीयार्थेषष्ठी गांधेनुंनिरपिंशत निःशेषेणाश्लिष्टांसंयुक्तामकुरुत तदनन्तरंमातरंतांगांपुनर्वत्सेनसमसृजत संश्लिष्टामकुरुत समगमयतेतियावत् अपिच हेसौधन्वनासः सुधन्वनःआङ्गिरसस्यपुत्राः नरोयज्ञस्यनेतारऋभवः स्वपस्ययाशोभनकर्मेच्छया यागदानाद्य-

[1] नि० ११. १५ ।

चरणेनेतियावत् जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवानापुनर्यौवनोपेतौ अकृणोतन यूयम-कुरुम् ॥ अपिंशत पिशअवयवे तौदादिकः शेमुचादीनामितिनुम् । सौधन्वनासः सुधन्वनः पुत्राः सौधन्वनाः अन्निति प्रकृतिभावः आज्जसेरसुक् आमन्त्रितस्यचेत्याद्युदात्तत्वम् । स्वपस्यया शोभनमपःस्वपः तदिच्छास्वपस्या सुपआत्मनःक्यच् अप्रत्ययादितिभावेअकारप्रत्ययः । जिव्री जॄपूर्वयोर्हानौ जॄशॄस्तृजागृभ्यःक्विन् ऋतइद्धातोरितीत्वम् रेफवकारयोःस्थानविपर्ययः बहुलवचनाद्धलिचेतिदीर्घाभावः नित्त्वादाद्युदात्तत्वम् । युवाना सुपांसुलुगितिविभक्तेराकारः । पितरा पिताचमाताचपितरौ पितामात्रेतिपिताशिष्यते पूर्ववद्विभक्तेराकारः । अकृणोतन कृविहिंसाकरणयोश्च इदित्त्वान्नुम् धिन्विकृण्व्योरचेत्युप्रत्ययः तत्सन्नियोगेनवकारस्यचाकारः अतोलोपेत्ततितस्यस्थानिवद्भावाल्लघूपधगुणाभावः लङ्मध्यमबहुवचनस्यतशब्दस्यतप्तनप्तनथनाश्चेतितनबादेशः तस्यपित्त्वेनङित्त्वाभावाद्गुणः ॥ ८ ॥

नवमीमृचमाह—

वाजे॑भिर्नो॒ वाज॑सातावविड्ढ्यृभु॒माँ इ॑न्द्र चि॒त्रमा द॑र्षि॒ राधः॑ ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ९ ॥ ३१ ॥

वाजे॑भिः । नः॒ । वाज॑ऽसातौ । अ॒वि॒ड्ढि॒ । ऋ॒भु॒ऽमान् । इ॒न्द्र॒ । चि॒त्रम् ।
आ । द॒र्षि॒ । राधः॑ । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् ।
अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ९ ॥ ३१ ॥

हेइन्द्र ऋभुमानृभुभिर्विभ्वावाजइतित्रयोप्यृभुशब्देनोपचारादुच्यन्ते तैर्युक्तस्त्वं वाजसातौ वाजस्यान्नस्यसंभजनेनिमित्तभूतेसति वाजेभिरन्नैरविड्ढि अस्मान्प्राप्नुहि यद्वा वाजसातावितिसङ्ग्रामनाम वाजसातौसंग्रामे वाजेभिर्वेजनयुक्तैरश्वैः अविड्ढिअस्मानरक्ष अपिच चित्रंचायनीयंराधोधनमादर्षि अस्मभ्यंदातुमाद्रियस्व तृतीयसवनेऋभुभिःसहेन्द्रस्यावस्थानात् मत्सद्वादत्रेन्द्रस्तुतिः यदेतदस्माभिःप्रार्थितं अस्मदीयंतन्मित्रादयोममहन्तांपूजयन्तु ॥ वाजसातौ षनषणसंभक्तौ भावेक्तिन् जनसनखनांसञ्झलोरित्यात्वम् वाजानां सातिर्यस्मिन् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अविड्ढि विष्लृव्याप्तौ लोटोहिः बहुलंछन्दसीतिशपोलुक् ढुश्छलूर्योहेर्धिः

ष्टुलजश्चे छन्दस्यपिदृश्यतइतिदृशिग्रहणात् लेटचडागमः यद्वा अववेलेटि सिब्बहुलंलेटीति-बहुलवचनाद्विकरणःसिप् तस्यार्धधातुकत्वादिट् आदेशप्रत्यययोरितिषत्वम् धित्वादिपूर्ववत्। ऋभुमान् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम्। दर्षि दृङ्आदरे लोटि व्यत्ययेनपरस्मैपदम् ब-हुलंछन्दसीतिविकरणस्यलुक् ॥ ९ ॥

॥ इतिप्रथमस्यसप्तमेएकत्रिंशोवर्गः ॥ ३१ ॥

तक्षन्नितिपञ्चर्चंषष्ठंसूक्तम् कुत्सस्यार्षमार्भवम् पञ्चमीत्रिष्टुप् शिष्टाश्चतस्रोजगत्यः त-थाचानुक्रान्तम्–तक्षन्पञ्चान्त्यात्रिष्टुप्। अग्निष्टोमेवैश्वदेवशस्त्रेइदंसूक्तमार्भवंनिविद्धानम् सू-त्रितंच–तक्षन्रथमयंवेनश्चोदयत्पृश्निगर्भाइति।

तत्रप्रथमामृचमाह–

तक्ष॒न्रथं॑सु॒वृतं॑विद्म॒नाप॑स॒स्तक्ष॒न्हरी॑इन्द्र॒वाहा॒वृष॑ण्वसू।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑मा॒तरं॑सचा॒भुव॑म् ॥ १ ॥

तक्ष॑न्। रथ॑म्। सु॒ऽवृत॑म्। वि॒द्म॒नाऽअ॑पसः। तक्ष॑न्। हरी॒ इति॑।
इ॒न्द्र॒ऽवाहा॑। वृष॑ण्वसू॒ इति॒ वृष॑ण्ऽवसू। तक्ष॑न्। पि॒तृऽभ्या॑म्।
ऋ॒भव॑ः। युव॑त्। वय॑ः। तक्ष॑न्। व॒त्साय॑। मा॒तर॑म्। स॒चा॒ऽभुव॑म् ॥१॥

विद्मनापसः उत्कृष्टेनज्ञानेननिष्पाद्यकर्माणोव्याप्तकर्माणोवाऋभवः रथंअश्विनोरारो-हणार्थं सुवृतं शोभनवर्तनं सुचक्रंवातक्षन्अकुर्वन् तथाइन्द्रवाहाइन्द्रस्य वाहनभूतौ हरीहरण-शीलौ एतत्संज्ञकावश्वौ तक्षन्कृतवन्तः कीदृशौ वृषण्वसू सेचनसमर्थेनदृढतरेणधनेनबलेनवायु-क्तौ अपिचपितृभ्यां स्वकीयाभ्यां मातापितृभ्यांवृद्धाभ्यांयुवद्यौवनोपेतंवयः आयुः ऋभवस्तक्षन् कृतवन्तः तथावत्सायमातरंगां सचाभुवंसहभुवंसहवर्तमानातक्षन्नकुर्वन् ॥ तक्षन् तक्षूत्वक्षूतनूक-रणे लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। सुवृतं शोभनंवर्ततइतिसुवृत् वृतुवर्तने क्विप्चेति क्विप्। विद्मनापसः विदज्ञाने अन्येभ्योपिदृश्यन्तइतिदृशिग्रहणात् भावेमनिन् संज्ञापूर्वकस्यविधे-रनित्यत्वाद्गुणाभावः बहुलवचनाद्विभक्त्यलुक् परादिश्छन्दसीतिस्वरः यद्वा विद्लृलाभे औणा-दिकोभावेमक् ततः पामादिलक्षणोनप्रत्ययः विद्मनं व्याप्तवदपःकर्मयेषाम् बहुव्रीहौपूर्वपदप्रकृ-तिस्वरत्वम् छान्दसंपूर्वसवर्णदीर्घत्वम्। इन्द्रवाहा इन्द्रं वहतइतीन्द्रवाहौ वहश्चेतिण्विप्रत्ययः

अतउपधायाइतिवृद्धिः सुपांसुलुगितिविभक्तेराकारः। वृषण्वसु वृषसेचने कनिन्युवृषितक्षी-त्यादिनाकनिन् नित्त्वादाद्युदात्तत्वम् वृषण्वस्वश्वयोरुपसंख्यानमितिवसुशब्देउत्तरपदेवृषण्-भावः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्। युवत् अत्रयुवन्शब्दः सामर्थ्यात्प्रवृत्तिनिमित्तंयुवत्वमात्र-माचष्टे तदस्मिन्नस्तीतियुवत् छान्दसोवर्णलोपः॥ १ ॥

द्वितीयामृचमाह—

आनो॑य॒ज्ञाय॑तक्षतऋ॒भुम॒द्वयः॒क्रत्वे॒दक्षा॑यसु॒प्र॒जाव॑ती॒मिष॑म् ।
यथा॒क्षया॑म॒सर्व॑वीरया॒वि॒शात॒न्नः॒शर्धा॑यधासथा॒स्वि॑न्द्रि॒यम् ॥ २ ॥

आ। नः॒। य॒ज्ञाय॑। त॒क्ष॒त॒। ऋ॒भु॒ऽमत्। वयः॑। क्रत्वे॑। दक्षा॑य।
सु॒ऽप्र॒जाव॑तीम्। इष॑म्। यथा॑। क्षया॑म। सर्व॑ऽवीरया। वि॒शा। तत्।
नः॒। शर्धा॑य। धा॒स॒थ॒। सु। इ॒न्द्रि॒यम् ॥ २ ॥

हेऋभवः नोस्माकंयज्ञाययज्ञार्थंऋभुमदुरुभासमानयुक्तंवयोहविर्लक्षणमन्नंआतक्षत आ-समन्तादुत्पादयत एतदेवविव्रियते—क्रत्वेक्रतवे अस्मदीयायकर्मणे दक्षायबलायच तादर्थ्येचतुर्थी एतदुभयार्थंसुप्रजावतीं शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्तामिषंअन्नंआतक्षतेति-शेषः अपिचसर्ववीरयासर्वैर्वीरैः पुत्रादिभिरुपेतयाविशाप्रजयासह यथायेनप्रकारेणक्षयाम सु-खेननिवसाम तत्तादृशमिन्द्रियं धननामैतत् धनंनोस्मभ्यंशर्धायबलार्थंसुधासथ सुष्ठुधत्तप्रयच्छ-तेत्यर्थः॥ ऋभुमत् उरुभातीतिनैरुक्तव्युत्पत्त्याऋभुशब्दःप्रकाशमानवाची ह्रस्वनुड्भ्यांमतु-बितिमतुपउदात्तत्वम्। क्रत्वे जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगुणाभावेयणादेशः। क्षयाम क्षिनिवासगत्योः व्यत्ययेनशप्। धासथ धाञोलेट्यडागमः सिब्बहुलंलेटीतिसिप् अन्येषा-मपिदृश्यतइतिसंहितायांदीर्घत्वम्॥ २ ॥

तृतीयामृचमाह—

आत॑क्षतसा॒तिम॒स्मभ्य॑मृभवःसा॒तिंरथा॑यसा॒तिमर्व॑तेनरः ।
सा॒तिंनो॒जैत्रीं॒संम॑हेतवि॒श्वहा॑जा॒मिमजा॑मि॒पृत॑नासुस॒क्षणि॑म् ॥ ३ ॥

आ। तक्षत। सातिम्। अस्मभ्यम्। ऋभवः। सातिम्। रथाय। सातिम्। अर्वते। नरः। सातिम्। नः। जैत्रीम्। सम्। महेत। विश्वहा। जामिम्। अजामिम्। पृतनासु। सक्षणिम्॥ ३॥

हेनरोयज्ञस्यनेतारऋभवः अस्मभ्यमनुष्ठातृभ्यः सातिंसंभजनीयंधनंआतक्षत आसमन्तात्कुरुत तथा अस्मदीयायरथायरंहणशीलायपुत्रादयेरथायैवसातिं संभजनीयंधनंआतक्षत तथा अर्वतेअश्वायसातिंसंभजनीयमन्नंधनंवाअश्वयोग्यंआतक्षतेत्येव किञ्च विश्वहासर्वेष्वहस्सुनोस्माकं जैत्रींजयशीलांअपरिमितत्वेनसर्वाधिकांसातिंसंभजनीयंधनंसंमहेत सर्वोजनः सम्यक्पूजयतु वयंच पृतनासुसंग्रामेषु जामिंसहजातंअजामिंसहाजातंसहानुत्पन्नमशत्रुंवासक्षणिंअस्मानभिभवन्तंयुष्मत्प्रसादादभिभवेमेतिशेषः॥ सातिं ऊतियूतिजूतिसातीत्यादिनाक्तिनउदात्तत्वम्। महेत महपूजायाम्। सक्षणिं सहअभिभवे औणादिकःसनिप्रत्ययः द्वित्वकत्वषत्वानि॥ ३॥

चतुर्थीमृचमाह—

ऋभुक्षणमिन्द्रमाहुवऊतयऋभून्वाजान्मरुतःसोमपीतये। उभामित्रावरुणानूनमश्विनातेनोहिन्वन्तुसातयेधियेजिषे॥ ४॥

ऋभुक्षणम्। इन्द्रम्। आ। हुवे। ऊतये। ऋभून्। वाजान्। मरुतः। सोमऽपीतये। उभा। मित्रावरुणा। नूनम्। अश्विना। ते। नः। हिन्वन्तु। सातये। धिये। जिषे॥ ४॥

ऋभुक्षणं महन्नामैतत् महांतमिन्द्रमाहुवे आह्वयामि किमर्थम् ऊतयेरक्षणार्थम् तथाऋभून् वाजान् ऋभुर्विभ्वावाजइतित्रयःसुधन्वनःपुत्राः तत्रप्रथमोत्तमवाचकशब्दाभ्यांमध्यमोपिलक्ष्यते ततः शब्दद्वयेनत्रयोप्युच्यन्ते तदुक्तंयास्केन—प्रथमोत्तमाभ्यांबहुवन्निगमाभवन्तिनमध्यमेनेति[2]। एवंविधानृभून्मरुतश्च सोमपीतयेसोमपानायआह्वयामि तथाउभायुगलरूपेणसंहत्यवर्तमानौद्वौमित्रावरुणौअश्विनौचनूनमवश्यंसोमपानायाह्वयामीतिशेषः अपिच आहूतास्तेइन्द्रादयोनोस्मान् हिन्वन्तु प्रेरयन्तु गमयन्त्वित्यर्थः किमर्थंसातयेसंभजनीयायधनाय धियेधनसाध्यायकर्मणेजिषे

1 यजुर्वेदेप्यपिपाठः  2 नि० ११. १६.।

जेतुंशत्रूणांजयार्थंच ॥ ऋभुक्षणम् उरुभासमानेस्थानेक्षियतिनिवसतीत्यृभुक्षाः उरुपूर्वात् भाते-र्मृगय्वादयश्चेतिकुप्रत्ययः आतोलोपइटिचेत्याकारलोपः पूर्वपदस्यऋभावश्च ऋभुशब्दोपपदात् क्षिनिवासगत्योरित्यस्मात् पचेस्यचेतिविधीयमानइनिप्रत्ययोबहुलवचनाद्भवति टिलोपः इ-तोत्सर्वनामस्थानेइत्यत्वमिकारस्य वापपूर्वस्यनिगमेइतिविकल्पनादुपधादीर्घाभावः यद्वा अर्तेर्भुक्षिनक् किच्चाद्गुणाभावः अतएवनावगृह्यते ।सोमपीतये पापाने स्थागापापचोभावइतिभावेक्तिन् घुमास्थेतीत्वम् दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । हिन्वन्तु हिगतौवृद्धौच अस्माद-न्तर्भावितण्यर्थात् लोटिस्वादित्वात्श्नुः । जिषे जिजये तुमर्थेसेसेनितिक्सेप्रत्ययः ॥ ४ ॥

पञ्चमीमृचमाह—

ऋ॒भुर्भरा॑य॒ संशि॑शातु सा॒तिं स॑मर्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥५॥३२॥

ऋ॒भुः । भरा॑य । सम् । शि॒शा॒तु॒ । सा॒तिम् । स॒म॒र्य॒ऽजित् । वाजः॑ ।
अ॒स्मान् । अ॒वि॒ष्टु॒ । तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्ता॒म् ।
अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ५ ॥ ३२ ॥

ऋभुः प्रथमोस्माकंसातिंसंभजनीयंधनंभरायसङ्ग्रामार्थंसंशिशातु सम्यक् तीक्ष्णीकरोतु सङ्ग्रामोचितंधनमस्मभ्यंप्रयच्छत्वित्यर्थः तथासमर्यजित् मर्यामनुष्यास्तैःसहवर्ततइतिसमर्यः सङ्ग्रामः तत्रशत्रूणांजेता वाजः एतत्संज्ञस्तृतीयश्च अस्मान् स्तोतॄन्अविष्टुअवतु। सङ्ग्रामादक्षत्वित्य-र्थः यदनेनसूक्तेनप्रार्थितं अस्मदीयंतन्मित्रादयोममहन्तांपूजयन्तु ॥ शिशातु शोतनूकरणे ब-हुलंछन्दसीतिविकरणस्यश्लुः आदेचइत्यात्वम् द्विर्भावः ह्रस्वत्वेनबहुलंछन्दसीत्यभ्यासस्येत्व-म् । अविष्टु अवतेर्लोटि सिब्बहुलंलेटीतिबहुलग्रहणात्सिप् इडागमः पत्वष्टुत्वे ॥ ५॥

॥ इतिप्रथमस्यसप्तमेद्वात्रिंशोवर्गः ॥ ३२ ॥

ईळेइतिपञ्चविंशत्यृचंसप्तमंसूक्तम्आंगिरसस्यकुत्सस्यार्षम् चतुर्विंशीपञ्चविंश्यौत्रिष्टुभौ शिष्टास्त्रयोविंशतिर्जगत्यः आद्यःपादोद्यावापृथिव्यः द्वितीयआग्नेयः शिष्टंसूक्तमाश्विनम् त-थाचानुक्रान्तम्—ईळेपञ्चाधिकाश्विनमाद्योपादोद्यावापृथिव्योग्नेर्द्वितीयोन्त्येत्रिष्टुभाविति । प्रवर्ग्येशिष्ट-वेप्येतत्सूक्तम् सूत्रितंच—प्रावाणेवेळेद्यावापृथिवीइतीति।प्रातरनुवाकेचाश्विनेक्रतौजागतेछन्दस्ये-

तत्सूक्तं सूत्रितं च—अगन्मयहातारिष्मेळेद्यावापृथिवीइतिजागतमिति । आश्विनशस्त्रेप्येतत् प्रातरनुवाकन्यायेनेत्यतिदेशात् । तथाप्तोर्यामेसन्तिचत्वार्यतिरिक्तोक्थ्यानि तत्राच्छावाकातिरिक्तोक्थे एतत्सूक्तं यस्यपशवइतिखण्डेसूत्रितम्—ईळेद्यावापृथिवीउभाउनूनमिति ।

तत्रप्रथमामृचमाह—

ई॒ळे द्यावा॑पृथि॒वी पू॒र्वचि॑त्तये॒ऽग्निं घ॒र्मं सु॒रुचं॒ याम॑न्नि॒ष्टये॑ ।
याभि॒र्भरे॑ का॒रमंशा॑य॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ गत॑म् ॥ १ ॥

ई॒ळे । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽचि॑त्तये । अ॒ग्निम् । घ॒र्मम् । सु॒ऽरुच॑म् । याम॑न् । इ॒ष्टये॑ । याभिः॑ । भरे॑ । का॒रम् । अंशा॑य । जिन्व॑थः । ताभिः॑ । ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥ १ ॥

हेद्यावापृथिवीद्यावापृथिव्यौ ईळेस्तौमि किमर्थंपूर्वचित्तये पूर्वमेवाश्विनोःप्रज्ञापनाय तदर्श्विनोःप्रत्यासन्ने यद्वा द्यावापृथिवीअश्विनौस्तौमि पूर्वचित्तयेअन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्यस्तोत्रस्यप्रबोधनाय तथाचोक्तम्—तत्कावश्विनौद्यावापृथिव्यावित्येकइति । अपिच यामन्यामनिअश्विनोरागमनेसति इष्टयेतदीययागार्थं आहवनीयरूपेणस्थापितमग्निंस्तौमीतिशेषः कीदृशमग्निं घर्मंप्रवृञ्जनेनदीप्तं सुरुचंअतएवशोभनकान्तियुक्तम् हेअश्विनाअश्विनौभरे संग्रामनामैतत् संग्रामेअंशायप्रुष्मदीयभागायजयप्राप्त्यर्थंयाभिरूतिभिः पालनैःसहागत्य कारं कारशब्दः शंखवाची तेनह्यभियुक्ताः संगिरन्ते कारंशब्दकारिणंशंखंजिन्वथः मुखेनापूरयथः ताभिःतादृशैःऊतिभिः पालनैःसह उइतिसमुच्चये अस्मानपिसुष्टुआगतमागच्छतम् ॥ ईळे ईडस्तुतौ उत्तमैकवचनमिट् अदादित्वाच्छपोलुक् अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । द्यावापृथिवी द्यौश्चपृथिवीच दिवोद्यावेतिद्यावादेशआद्युदात्तोनिपातितः पृथिवीशब्दोङीषन्तोन्तोदात्तः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् अपृथिवीतिपर्युदासात् नोत्तरपदेनुदात्तादावितिनिषेधाभावः वाछन्दसीतिपूर्वसवर्णदीर्घत्वम् । पूर्वचित्तये चितीसंज्ञाने अस्मादन्तर्भावितण्यर्थात्भावेक्तिन् मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । सुरुचम् रुचदीप्तावभिप्रीतौच संपदादिलक्षणोभावेक्विप् शोभनारुक् यस्य नञ्सुभ्यामितिपुनरपदान्तोदात्तत्वम् । यामन् यापापणे आतोमनिन्निति मनिन्प्रत्ययः सुपांसुलुगितिसप्तम्याः लुक् ...

दात्तत्वम् । जिन्वथः जिविप्रीणनार्थः अत्रप्रीणनहेतुभूतमापूरणंलक्ष्यते धनेनापूरितोहिपुरुषः प्रीतोभवति इदित्त्वान्नुम औवादिकः शपःपित्त्वादनुदात्तत्वम् तिङोङुपदेशाल्लसार्वधातुकस्वरेणधातुस्वरःशिष्यते यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः तत्रहिव्यवहितेपिकार्यमिष्यतइत्युक्तम् । ऊषु इकःसुञीतिदीर्घत्वम् सुञइतिषत्वम् ईषाअक्षादित्वात्सुञउकारस्यप्रकृतिभावः । ऊतिभिः अवतेर्भावेक्तिन् ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठ् ऊतियूतीत्यादिनानिपातनात्क्तिनउदात्तत्वम् । गतं गमेर्लोटि बहुलंछन्दसीतिविकरणस्यलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ १ ॥

द्वितीयामृचमाह—

युवोर्दानायसुभराअसश्चतोरथमातस्थुर्वचसंनमन्तवे ।
याभिर्धियोवथःकर्मन्निष्टयेताभिरूषुऊतिभिरश्विनागतम् ॥ २॥

युवोः । दानाय । सुऽभराः । असश्चतः । रथम् । आ । तस्थुः ।
वचसम् । न । मन्तवे । याभिः । धियः । अवथः । कर्मन् । इष्टये ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २ ॥

सुभराः शोभनस्तोमभरणाः असश्चतः अन्यत्रानासक्ताः स्तोतारःहेअश्विनौ युवोर्युवयोः रथमातस्थुः आतिष्ठन्ति प्राप्नुवन्ति किमर्थं दानाय युष्मत्कर्तृकदानार्थंधनलाभायेत्यर्थः तत्रदृष्टान्तः—वचसंन यथान्यायोपेतेनवचसावाक्येनयुक्तंविपश्चितं मन्तवेबुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्तितद्वत् अपिच कर्मन्कर्मणिइष्टयेयागार्थंप्रवृत्तान् धियःध्यातॄन्विशिष्टज्ञानोपेतान् याभिरूतिभिः पालनैः अवथः युवांरक्षथः ताभिरित्यादिपूर्ववत् ॥ वचसं अर्शआदित्वादच्मत्वर्थीयोच् । मन्तवे मनज्ञाने कमिमनिजनीत्यादिनातुप्रत्ययः । धियः ध्यायन्तीतिधियःस्तोतारः ध्यैचिन्तायाम् क्विप्चेतिक्विप् चशब्देनदृशिग्रहणानुकर्षणात्संप्रसारणम् । कर्मन् सुपांसुलुगितिसप्तम्यालुक् नङिसंबुध्द्योरितिनलोपप्रतिषेधः ॥ २ ॥

तृतीयामृचमाह—

युवंतासांदिव्यस्यप्रशासनेविशांक्षयथोअमृतस्यमज्मना । याभिर्धेनुमस्वं१पिन्वथोनराताभिरूषुऊतिभिरश्विनागतम् ॥ ३ ॥

युवम् । तासांम् । दिव्यस्यं । प्रऽशासंने । विशाम् । क्षयथः । अमृतंस्य । मज्मना । याभिः । धेनुम् । अस्वम् । पिन्वंथः । नरा । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ३ ॥

हेनरानेतारावश्विनौ दिव्यस्यदिविभवस्यस्वर्गसमुत्पन्नस्यअमृतस्यसोमस्यपानेनोत्पन्नेन मज्मनाबलेनयुक्तौयुवंयुवां तासांयास्त्रिपुलोकेपुवर्तन्ते तासांसर्वासांविशां प्रजानांप्रशासनेप्रकृष्टानुशासनेशिक्षणेक्षयथः ऐश्वर्यकर्मायम् ईशाथेसमर्थौभवथः यद्वा मज्मना अन्येपामसाधारणेनबलेनविशांप्रजानांदिविभवस्यअमृतस्यवृष्ट्युदकस्यप्रशासनेप्रदानेनक्षयथः ईश्वरौभवथः अपिच याभिरूतिभीरक्षाभिः अस्वंप्रसवासमर्थां धेनुं गां शंयुनाम्ने ऋषयेपिन्वथःसिञ्चथः पयसा पूरितवन्तावित्यर्थः ताभिरूतिभिरित्यादिपूर्ववत् ॥ अस्वम् पूङ्प्राणिगर्भविमोचने सवनंसूः संपदादिलक्षणोभावेक्विप् नास्तिसूःअस्यामित्यसूः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अमि ओःसुपीतियणादेशः उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । पिन्वथः पिविसेचने भौवादिकः इदित्वान्नुम् ॥ ३ ॥

चतुर्थीमृचमाह—

याभिःपरिज्मातनयस्यमज्मनाद्विमातातूर्पुतरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरूपुऊतिभिरश्विनागतम् ॥४॥

याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति । याभिः । त्रिऽमन्तुः । अभवत् । विऽचक्षणः । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ४ ॥

परिज्मा परितोगन्तावायुः तनयस्यआत्मीयस्यपुत्रस्याग्नेः अग्निर्हिव्यानवृत्त्यात्मनावर्तमानेन वायुनामथ्यमानःसन् जायते तथाचश्रूयते—अथयःप्राणापानयोःसन्धिःसव्यानः । अतोपान्यन्यानिवीर्यवन्तिकर्माणि यथाग्नेर्मन्थनमाजेःसरणं दृढस्यधनुषआयमनमप्राणन्ननपानंस्तानिकरोतीति । यद्वा सृष्ट्यादौवायुसकाशादुत्पन्नत्वादग्नेर्वायुपुत्रत्वम् आम्नायतेच—

वायोरग्निरिति । एवंस्वपुत्रस्याग्नेर्मन्थनाबलेनयुक्तःसन् द्विमाता द्वयोर्लोकयोर्निर्माताग्निः पृथिवीस्थानवायुरन्तरिक्षस्थानउभयोर्मिलितयोरुभयनिर्मातृत्वमुपपन्नम् यद्वा द्विमातेतितनयस्य विशेषणम् सुपांसुलुगितिषष्ठ्याःसुः द्विमातृकस्यद्वाभ्यामरणिभ्यांजातस्यएवंभूतोवायुः हेअश्विनौ याभिःऊतिभिर्हेतुभूतैःपालनैः तूर्षुतरीतृषुधावत्सुमध्येतरणिः अतिशयेनतरीता शीघ्रगामीविभूषतिविभवतिव्याप्तोभवति यद्वा विशेषेणसर्वमलंकरोति अपिचत्रिमन्तुः त्रयाणांमन्तात्रिविधेषुपाकयज्ञहविर्यज्ञसोमयज्ञेषुआसादितज्ञानः कक्षीवान्याभिर्युष्मदीयाभिरूतिभिर्विचक्षणः विशिष्टज्ञानयुक्तोभवत् ताभिःसर्वाभिरूतिभिः अस्मानागच्छतम् ॥ परिज्मा परिपूर्वादजगतिक्षेपणयोरित्यस्मात् श्वन्नुक्षन्नित्यादौनिपात्यते । तूर्षु तृप्लवनतरणयोः बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः यद्वा त्वरतेः क्विप् ज्वरत्वरेत्यादिनावकारोपधयोरूठ् सावेकाचइतिविभक्तेरुदात्तत्वम् । विभूषति भवतेर्लेटचडागमः सिब्बहुलंलेटीतिसिप् यद्वा भूषअलंकारे भौवादिकः । विचक्षणः अनुदात्तेतश्चहलादेरितियुच् ॥ ४ ॥

पञ्चमीमृचमाह—

**याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।**
**याभिः कण्वं प्रसिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥५॥२३॥**

याभिः । रेभम् । निऽवृतम् । सितम् । अत्ऽभ्यः । उत् । वन्दनम् । ऐरयतम् । स्वः । दृशे । याभिः । कण्वम् । प्र । सिसासन्तम् । आवतम् । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ५ ॥ २३ ॥

हेअश्विनौ याभिरूतिभिः रेभंएतत्संज्ञंऋषिं निवृतं असुरैः कूपेष्वनिवारितं सितंदीर्घैःपाशैर्बद्धम् एवंभूतमृषिंअद्भ्यःसकाशात्उदैरयतं उद्गमयतम् तथावन्दनंएतत्संज्ञमृषिंचतथाभूतमुदैरयतम् किमर्थं स्वः स्वरादित्यंदृशेद्रष्टुं अपिच कण्वंअसुरैरन्धकारेमक्षिप्तंसिषासन्तंआलोकं संभक्तुमालोकमिच्छन्तंयाभिरूतिभिः प्रावतं प्रकर्षेणरक्षतम् ताभिरित्यादिसमानम् ॥

---

१ ते० आ० अष्टमप्रपाठके. ।

रेभम् रेभृशब्दे रेभतेस्तौतीतिरेभः पचाद्यच् । निवृतं वृञ्वरणे अस्मादन्तर्भावितण्यर्थाद्कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । सितम् षिञ्बन्धने । अञ्चः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । वन्दनं वदिअभिवादनस्तुत्योः वन्दतेस्तौतीतिवन्दनः नन्द्यादिलक्षणोल्युः लित्स्वरेणप्रत्ययात्पूर्वस्योदात्तत्वम् । स्वरित्येतद्दिवश्चादित्यस्यचसाधारणनामधेयम् तदुक्तंयास्केन—स्वरादित्योभवतिसुअरणःसुईरणइति । स्वरादिनिपातमित्यव्ययत्वात्सुपोलुक् । दृशे दृशेविख्येचेतिदृशिस्तुमर्थेकेप्रत्ययान्तोनिपात्यते । सिषासन्तम् वनषणसंभक्तौ सनि सनीवन्तर्धेत्यादिनाविकल्पनादिड्भावः जनसनखनांसञ्झलोरित्यात्वम् द्विर्भावेभ्यासस्यह्रस्वत्वम् सन्यतइतीत्वम् ॥ ५ ॥

॥ इतिप्रथमस्यसप्तमेत्रयस्त्रिंशोवर्गः ॥ ३३ ॥

षष्ठीमृचमाह—

याभि॒रन्त॑कं॒ जस॑मान॒मार॑णे भु॒ज्युं याभि॑रव्य॒थिभि॑र्जिजि॒न्वथुः॑ ।
याभिः॑ क॒र्कन्धुं॑ व॒य्यं॑ च॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥६॥

याभिः॑ । अन्त॑कम् । जस॑मानम् । आ॒ऽअर॑णे । भु॒ज्युम् । याभिः॑ । अ॒व्य॒थिऽभिः॑ । जि॒जि॒न्वथुः॑ । याभिः॑ । क॒र्कन्धु॑म् । व॒य्य॑म् । च॒ । जिन्व॑थः । ताभिः॑ । ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना । आ । ग॒त॒म् ॥६॥

आरणमगाधंकूपादि तत्रासुरैःप्रक्षिप्तंजसमानंतैर्हिंस्यमानंअन्तकंशत्रूणामन्तकरंएतत्संज्ञंराजर्षिं हेअश्विनौ याभिरूतिभिःअवथोरक्षथः तथा भुज्युंसर्वस्यपालकमेतत्संज्ञंसमुद्रमध्येनिमग्नं तुग्र्यंतुग्रस्यपुत्रंराजर्षिं याभिरूतिभीरक्षणहेतुभूताभिः अव्यथिभिः व्यथारहिताभिः नौभिः जिजिन्वथुः सुखमतर्पयतम् एतच्चमन्त्रान्तरे—तुग्रोहभुज्युमश्विनोदमेघइत्यादिकेविस्पष्टयिष्यते अपिच कर्कन्धुं वय्यं चएतत्संज्ञकौचासुरैः पीड्यमानौयाभिरूतिभिः जिन्वथःप्रीणयथः गमयथः गमन्यत् ॥ जसमानम् जसिर्हिंसायाम् यकिप्राप्तेव्यत्ययेनशप् । आरणे आङ्पूर्वादर्तेर्ल्युट् । जिजिन्वथुः जिविप्रीणनार्थः लिट्युसिरूपम् ॥ ६ ॥

१ नि० ५. १४. । २ ऋ० १. ८८. ।

सप्तमीमृचमाह—

याभिः॑ शु॒चन्तिं॑ धन॒सां सु॑षं॒सदं॑ त॒प्तं घ॒र्मम्॑ ओ॒म्याव॑न्तम्॒ अत्र॑ये ।
याभिः॒ पृश्नि॑गुं पुरु॒कुत्स॒म् आव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ ७ ॥

याभिः॑ । शु॒चन्ति॑म् । ध॒न॒ऽसाम् । सु॒ऽसं॒सद॑म् । त॒प्तम् । घ॒र्मम् ।
ओ॒म्याऽव॑न्तम् । अत्र॑ये । याभिः॑ । पृश्नि॑ऽगुम् । पु॒रु॒ऽकुत्स॑म् ।
आव॑तम् । ताभिः॑ । ऊँ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना । आ ।
ग॒त॒म् ॥ ७ ॥

हेअश्विनौ धनसां धनस्यसंभक्तारम् शुचन्तिंएतन्नामानंसुषंसदं सीदत्यस्मिन्निति संसद्गृहम् शोभनसंसदंयाभिरूतिभिरकुरुतम् तथाअत्रयेयाभिश्चोतिभिस्तप्तंप्रवृञ्जनेनसंतप्तंघर्मम् महावीरम् ओम्यावन्तम् सुखयुक्तम् सुखेनस्पर्शुंशक्यंअकुरुतम् यद्वा शतद्वारेयन्त्रगृहे असुरैःपीड्यमाना-यघर्मंदीप्तंपीडासाधनमग्निंतसंतापकारिणं ओम्यावन्तंसुखवन्तमकुरुतम् यथास्मैसुखंभवति तथा-हिमेनोदकेनतमग्निमवारयेथाम् यास्कपक्षेतु अत्रयेहविपामन्नेअन्नयेहविरूपस्यर्थंस्तूर्यंकिरणसंतप्तंघर्मंनैदाघमहः ओम्यावन्तंवृष्टिहेतुभूतेनोदकोपेतंकृतवन्ताविति योज्यम् अपिच याभिरूतिभिः पृश्निगुंपुरुकुत्संचआवतमरक्षतम् ताभिःसर्वाभिरूतिभिः अस्मानागच्छतम् ॥ शुचन्तिम् शुचदीप्तौ औणादिकोऽन्तिच् । धनसाम् जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् ।सुषंसदम् शोभनंसंसदस्य नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । ओम्यावन्तम् अवतेरन्येभ्योपिदृश्यन्तइतिमनिन् ज्वरत्वरेत्यादिनावकारस्योपधायाश्चऊठ् गुणः छन्दसीवनिपावितिमत्वर्थीयमत्ययः न-स्तद्धितइतिटिलोपः येचाभावकर्मणोरितिप्रकृतिभावस्तुव्यत्ययेननप्रवर्तते । पृश्निगुम् पृश्नयोनानावर्णागावोयस्यसतथोक्तः गोस्त्रियोरुपसर्जनस्येतिगोशब्दस्यह्रस्वत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

याभिः॒ शची॑भिर्वृषणा परा॒वृजं॒ प्रान्धं॑ श्रो॒णं चक्ष॑स॒ एत॑वे कृ॒थः ।
याभि॒र्वर्ति॑कां ग्रसि॒ताम् अमु॑ञ्चतं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥८॥

याभिः । शचीभिः । वृषणा । पराऽवृजम् । प्र । अन्धम् । श्रोणम् । चक्षसे । एतवे । कृथः । याभिः । वर्तिकाम् । ग्रसिताम् । अमुञ्चतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ८ ॥

हेवृषणाकामानांवर्षितारावश्विनौ याभिःशचीभिःकर्मभिः प्रज्ञाभिर्वा परावृजं एतन्नामकमृषिंपङ्गुंसन्तमपङ्गुमकुरुतम् तथाअन्धंदृष्टिरहितंसन्तमृज्राश्वमृषिंचक्षसेप्रकाशायसम्यक्चक्षुपादर्शनाय याभिरूतिभिःप्रकृथःप्रकर्षेणकुरुथः याभिश्चश्रोणंविगुणजानुकमेवसन्तमृषिंएतवेगन्तुंप्रकृथः प्रकर्षेणकृतवन्तौ अपिच याभिरूतिभिः वर्तिकांचटकसदृशस्यपक्षिणःस्त्रियंग्रसितां वृकेणग्रस्तांअमुंचतं वृकास्यान्निर्मुक्तामकुरुतम् यास्कपक्षेतु वृकेणविवृतज्योतिष्केणसूर्येणयाभिर्ग्रस्तां वर्तिकांप्रत्यहमावर्तमानामुषसंतस्मादमोचयतमितियोज्यम् ताभिःसर्वाभिरूतिभिरस्मानप्यागच्छतम् ॥ वृषणा वृषसेचने कनिन्युवृषीत्यादिनाकनिन् । परावृजम् वृजीवर्जने परावृणक्तिपसापापंविनाशयतीतिपरावृक् क्विप्चेतिक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । एतवे तुमर्थेसेसेनितिएतेस्तवेन्प्रत्ययः । कृथः डुकृञ्करणे बहुलंछन्दसीतिविकरणस्यलुक् ॥ ८ ॥

नवमीमृचमाह—

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ९ ॥

याभिः । सिन्धुम् । मधुऽमन्तम् । असश्चतम् । वसिष्ठम् । याभिः । अजरौ । अजिन्वतम् । याभिः । कुत्सम् । श्रुतर्यम् । नर्यम् । आवतम् । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ ९ ॥

१ नि० ५. २०. ।

हेअश्विनौ सिन्धुंस्यन्दनशीलांनदीं मधुमन्तंमधुसदृशेनोदकेनपूर्णां याभिरूतिभिः असश्चतं अगमयतं प्रवाहयतमित्यर्थः हेअजरौजरारहितावश्विनौ वसिष्ठमृषिं याभिरूतिभिः अजिन्वतं अप्रीणयतम् याभिश्चकुत्सादींस्त्रीनृषीनावतमरक्षतं ताभिःसर्वाभिरूतिभिः अस्मानपिसुष्ठुआगच्छतम् ॥ मधुमन्तम् मधुशब्दात्वभूम्निमतुप् लिङ्गव्यत्ययः । असश्चतम् सश्चतिर्गतिकर्मा अस्मादन्तर्भावितण्यर्थाल्लुङ् ॥ ९ ॥

दशमीमृचमाह–

याभिःविश्पलांधनसामथर्व्यंसहस्रमीळ्हआजावजिन्वतम् ।
याभिर्वशमश्व्यंप्रेणिमावतंताभिरूपुऊतिभिरश्विनागतम् ॥१०॥३४॥

याभिः । विश्पलाम् । धनऽसाम् । अथर्व्यम् । सहस्रऽमीळ्हे । आजौ । अजिन्वतम् । याभिः । वशम् । अश्व्यम् । प्रेणिम् । आवतम् । ताभिः । ऊम् इति । सु । ऊतिऽभिः अश्विना । आ । गतम् ॥ १० ॥ ३४ ॥

हेअश्विनौ धनसां धनंसंभजमानां अथर्व्यं अगच्छन्तींछिन्नजङ्घात्वेनगन्तुमसमर्थां थर्वतिर्गतिकर्मा विश्पलामेतत्संज्ञामगस्त्यपुरोहितस्यखेलस्यसंबन्धिनींसहस्रमीळ्हे मीळ्हमितिधननाम बहुधनोपेतेआजौसङ्ग्रामे याभिरूतिभिः अजिन्वतं गन्तुं समर्थामकुरुतम् एतद् चरित्रं हिवेरिवाच्छेदिपर्णमित्यत्रविस्पष्टयिष्यते याभिश्चअश्व्यंअश्वाख्यस्यपुत्रं प्रेणिं स्तुतेःप्रेरयितारं वशंएतत्संज्ञमृषिंआवतमरक्षतम् ताभिःसर्वाभिरूतिभिः सहास्मानप्यागच्छतम् ॥ प्रेणिम् प्रेणृगतिप्रेरणश्लेषणेषु औणादिकइप्रत्ययः ॥ १० ॥

॥ इतिप्रथमस्यसप्तमेचतुस्त्रिंशोवर्गः ॥ ३४ ॥

एकादशीमृचमाह–

याभिःसुदानूऔशिजायवणिजेदीर्घश्रवसेमधुकोशोअक्षरत् ।
कक्षीवन्तंस्तोतारंयाभिरावतंताभिरूपुऊतिभिरश्विनागतम् ॥११॥

१ ऋ० सं० १.८.१०.।

याभिः । सुदानू इति सुऽदानू । औशिजाय । वणिजे । दीर्घऽश्रवसे ।
मधु । कोशः । अक्षरत् । कक्षीवन्तम् । स्तोतारम् । याभिः । आवतम् ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥११॥

उशिक्संज्ञादीर्घतमसःपत्नी तस्याः पुत्रोदीर्घश्रवानामकश्चिदृषिः अनावृष्ट्यां जीवनार्थमकरोद्वाणिज्यम सचवर्षणार्थअश्विनौतुष्टाव तौचाश्विनौमेघंप्रेरितवन्तौ अयमर्थःपूर्वार्धे प्रतिपाद्यते हेसुदानूशोभनदानावश्विनौ औशिजायउशिक्पुत्रायवणिजे वाणिज्यंकुर्वते दीर्घश्रवसे एतत्संज्ञायऋषयेयाभिर्युष्मदीयाभिरूतिभिः हेतुभूताभिः कोशोमेघोमधुमाधुर्योपेतं वृष्टिजलंअक्षरत् असिञ्चत् युष्मत्प्रसादादपेक्षितावृष्टिर्जातेत्यर्थः अपिचउशिजः पुत्रं स्तोतारं कक्षीवन्तंएतत्संज्ञमृर्षिंयाभिरूतिभिरावतमरक्षतम ताभिःसर्वाभिरूतिभिःसहास्मानप्यागच्छतम् ॥ कक्षीवन्तम् कक्ष्यारज्जुरश्वस्य तयायुक्तः कक्षीवान् आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वदितिनिपातनान्मतुपोवत्वम् संप्रसारणम ॥ ११ ॥

द्वादशीमृचमाह—

याभी॑ र॒सां क्षोद॑सो॒द्नः पि॑पि॒न्वथु॑रन॒श्वं याभी॒ रथ॒माव॑तं जि॒षे ।
याभि॑स्त्रि॒शोक॑ उ॒स्रिया॑ उ॒दाज॑त॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना ग॑तम् ॥१२॥

याभिः । रसाम् । क्षोदसा । उद्नः । पिपिन्वथुः । अनश्वम् । याभिः ।
रथम् । आवतम् । जिषे । याभिः । त्रिऽशोकः । उस्रियाः । उत्ऽआजत ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥१२॥

रसानदीभवतिरसतेःशब्दकर्मणइतियास्कः[1] । हेअश्विनौ याभिरूतिभिःहेतुभूताभिःरसांनदीं अनावृष्ट्यागतरहितांक्षोदसाकूलानिसंपिषताउद्नः उदकेनपिपिन्वथुः पूर्णांपूरितवन्तौ तथाअनश्वं अश्वैर्विमुक्तंआत्मीयंरथंजिषेजेतुंयाभिरूतिभिरावतमवगमयतम् अपिच याभिरूतिभिःकण्वपु-

1 नि० ११.२५ ।

त्रिशोकऋषिः उस्रियाः अपहृतागाः उदाजतउदगमयत् असुरसकाशाद्देभे ताभिः सर्वाभिरूतिभिःसहास्मानभ्यागच्छतम् ॥ क्षोदसा क्षुदिर्संपेषणे औणादिकोसुन्। उद्नः तृतीयैकवचनस्यसुपांसुपोभवन्तीतिशसादेशः पद्न्नित्यादिनाउदकशब्दस्योदन्भावः भसंज्ञायां अल्लोपोनइत्यकारलोपः। पिपिन्वथुः पिविसेचने इदित्त्वान्नुम्। जिषे जिजये तुमर्थेसेसेनितिक्सेप्रत्ययः। उदाजत अजगतिक्षेपणयोः ॥ १२ ॥

त्रयोदशीमृचमाह—

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १३ ॥

याभिः । सूर्यम् । परिऽयाथः । पराऽवति । मन्धातारम् । क्षैत्रऽपत्येषु । आवतम् । याभिः । विप्रम् । प्र । भरत्ऽवाजम् । आवतम् ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १३ ॥

हेअश्विनौ परावतिदूरदेशेस्थितंसूर्यंतमोरूपेणस्वर्भानुनावृतमादित्यं तस्मात्तमसोमोचयितुं याभिरूतिभिः परियाथःपुर्वांपरितोगच्छथः तथामन्धातारमृषिं क्षैत्रपत्येषुक्षेत्राणांपतिः अधिपतिः क्षेत्रपतिःतत्संबन्धिषुकर्मसुआवतमरक्षतम् अपिचयाभिरूतिभिर्विप्रंमेधाविनंभरद्वाजमृषिंअन्नप्रदानेनप्रावतंप्रकर्षेणरक्षतम् ताभिःसर्वाभिरूतिभिःसहरक्षणार्थमस्मानभ्यागच्छतम् ॥ क्षैत्रपत्येषु ब्राह्मणादेराकृतिगणत्वात्कर्मण्यर्थेष्यञ् ॥ १३ ॥

चतुर्दशीमृचमाह—

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १४ ॥

याभिः । महाम् । अतिथिऽग्वम् । कशःऽजुवम् । दिवःऽदासम् ।
शम्बरऽहत्ये । आवतम् । याभिः । पूःऽभिद्ये । त्रसदस्युम् । आवतम् ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ १४ ॥

हेअश्विनौ महांमहान्तंअतिथिग्वंअथिभिर्गन्तव्यंकशोजुवंअसुरभीत्याउदकंप्रवेष्टुंगन्तारम् एवंभूतंदिवोदासंएतत्संज्ञकंराजर्षिंशंबरहत्येशंबरआयुधंतद्युक्तःशंबरोसुरः तस्यहननेविषयभूतेसति याभिरूतिभिरावतमरक्षतम् अपिच याभिरूतिभिः पूर्भिद्ये पुराणिनगराणिभिद्यन्तेस्मिन्नितिपूर्भिद्यःसङ्ग्रामः तस्मिन्त्रसदस्युंएतत्संज्ञकमृषिंपुरुकुत्सपुत्रंआवतमरक्षतं ताभिरित्यादिपूर्ववत् ॥ महां महान्तमित्यस्यछान्दसोवर्णलोपः । कशोजुवम् कशइत्युदकनाम कशगतिशासनयोः असुन् कशांस्युदकानिजवतइतिकशोजूः जुइतिसौत्रोधातुर्गत्यर्थः क्विबचीत्यादिनाक्विप्दीर्घौ । दिवोदासम् दिवश्चदासे षष्ठ्याअलुग्वक्तव्यइत्यलुक् दिवोदासादीनांछन्दस्युपसंख्यानमितिपूर्वपदाद्युदात्तत्वम् । शंबरहत्ये हनस्तचेतिहन्तेर्भावेक्यप् तत्सन्नियोगेनतकारान्तादेशश्च कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १४ ॥

पञ्चदशीमृचमाह—

याभि॑र्व॒म्रं वि॑पिपा॒नमु॑पस्तु॒तं क॒लिं याभि॑र्वि॒त्तजा॑निं दुव॒स्यथः॑ । याभि॒र्व्य॑श्वमु॒त पृथि॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ गत॑म् ॥ १५ ॥ ३५ ॥

याभिः॑ । व॒म्रम् । वि॒ऽवि॒पा॒नम् । उ॒प॒ऽस्तु॒तम् । क॒लिम् । याभिः॑ । वि॒त्तऽजा॑निम् । दु॒व॒स्यथः॑ । याभिः॑ । विऽअ॑श्वम् । उ॒त । पृथि॑म् । आव॑तम् । ताभिः॑ । ऊं॒ इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥ १५ ॥ ३५ ॥

हेअश्विनौ वम्रंविखनसःपुत्रंएतत्संज्ञमृषिं विपिपानंविशेषेणपार्थिवंरसंपिबन्तम् याभिरूतिभिररक्षतम् कीदृशंउपस्तुतंसमीपस्थैः सम्यक्स्तुतमितिस्तूयमानं तथा वित्तजानिंलब्धभार्यं कलिंएतत्संज्ञकमृषिंयाभिरूतिभिः दुवस्यथःरक्षथः उतअपिच व्यश्व्यं विगताश्वंपृथिंएतत्संज्ञंवैन्यंराजर्षिंयाभिरूतिभिरावतमरक्षतम् अन्यत्पूर्ववत् ॥ विपिपानम् पापाने वाच्छीलिकश्चानश् बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्यभ्यासस्येत्वम् । उपस्तुतम् स्तौतेःकर्मणिनिष्ठा मृथादित्वादुत्तरपदान्तोदात्तत्वम् । वित्तजानिम् वित्तालब्धाजायायेनसतथोक्तः जायायानिङ् इतिसमासान्तोनिङादेशः लोपोव्योर्वलीतियलोपः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । व्यश्वम् विग-

तोश्वीयस्मात्सतथोक्तः बहुव्रीहिस्वरेणपूर्वपदस्योदात्तत्वेउदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् ॥ १५ ॥

॥ इतिप्रथमस्यसप्तमेपञ्चत्रिंशोवर्गः ॥ ३५ ॥

षोडशीमृचमाह—

याभि॒र्नरा॑ श॒यवे॒ याभि॒रत्र॑ये॒ याभिः॑ पु॒रा मन॑वे गा॒तुमी॒षथुः॑ ।
याभिः॒ शारी॒राज॑तं॒ स्यूम॑रश्मये॒ ताभि॒रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ १६ ॥

याभिः॑ । न॒रा॒ । श॒यवे॑ । याभिः॑ । अत्र॑ये । याभिः॑ । पु॒रा । मन॑वे ।
गा॒तुम् । ई॒षथुः॑ । याभिः॑ । शारीः॑ । आज॑तम् । स्यूम॑ऽरश्मये ।
ताभिः॑ । ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ । अ॒श्वि॒ना॒ । आ । ग॒तम् । १६ ।

हेनरानेतारावश्विनौ पुरापूर्वस्मिन्काले शयवे एतत्संज्ञकायऋषये गातुंदुःखान्निर्गमनलक्षणं मार्गंयाभिरूतिभिःईषथुः युवांवाञ्छितवन्तौ कृतवन्तावित्यर्थः किंतत्सामर्थ्याद् शयवेचिन्नास-त्याशचीभिरित्यस्यामृचिप्रतिपादितम् तथाअत्रयेऋषयेशतद्वारेयन्त्रगृहे असुरैःपीड्यमानायसन्तापकारिणोग्नेः शीतेनोदकेनशीतकरणलक्षणंगातुंदुःखनिर्गमनहेतुभूतंमार्गंयाभिरूतिभिः युवामिष्टवन्तौ एतच्च हिमेनाग्निंघ्रंसमवारयेथामित्यादौप्रसिद्धम् । तथामनवे एतन्नाम्नेराजर्षयेयाभिरूतिभिर्यवादिधान्यवापनादिरूपंगातुंदारिद्र्यनिर्गमनहेतुभूतंमार्गंयुवांकृतवन्तौ तथाचमन्त्रान्तरम्—यवंवृकेणाश्विनावपन्तेति । अपिचस्यूमरश्मये स्यूतःसंबद्धोरश्मिर्दीप्तिर्यस्यतस्मैतत्संज्ञकायऋषये याभिरूतिभिःशारीः शरोनामवेणुविशेषः तद्विकारभूताइषूः आजतं शत्रून्प्रतिप्रेरयतम् ताभिरूतिभिरित्यादिसमानम् ॥ नरा नृनये ऋदोरप् सुपांसुलुगितिविभक्तेराकारः । शयवे शीङ्स्वप्ने भृमृदृशीङ्चरीत्यादिनाउप्रत्ययः । ईषथुः इषइच्छायाम् लिट्यथुसि असवर्णेइतिपर्युदासादभ्यासस्येयङादेशाभावेसवर्णदीर्घः । शारीः विकारार्थेशरशब्दादनुदात्तादेश्चेत्यञ् टिड्ढाणञितिङीप् । स्यूमरश्मये षिवुतन्तुसन्ताने सिवेरौणादिकोमन्प्रत्ययः छ्वोःशूडित्यूठ् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् ॥ १६ ॥

---

१ ऋ० सं० १.८.१२. । २ ऋ० सं० १.८.९. । ३ ऋ० सं० १.८.१७. ।

सप्तदशीमृचमाह—

याभिः॒पठ॑र्वा॒जठ॑रस्यम॒ज्मना॒ग्निर्नादी॑दे॒च्चित॒इ॒द्धोअज्म॒न्ना ।
याभि॒ःशर्या॑त॒मव॑थोमहाध॒नेताभि॑रू॒षुऊ॒तिभि॑रश्वि॒नाग॑तम् ॥१७॥

याभि॑ः । पठ॑र्वा । जठ॑रस्य । म॒ज्मना॑ । अ॒ग्निः । न । अदी॑देत् ।
चि॒तः । इ॒द्धः । अज्म॑न् । आ । याभि॑ः । शर्या॑तम् । अव॑थः ।
म॒हा॒ऽध॒ने । ताभि॑ः । ऊ॒म् इति॑ । सु । ऊ॒तिऽभि॑ः । अ॒श्वि॒ना॒ ।
आ । ग॒त॒म् ॥ १७ ॥

हेअश्विनौ जठरस्य जठरंभवविजग्धमस्मिन्ध्रियतइतियास्कः । जठरोपलक्षितस्यशरीरस्यमज्मनाबलेनयुक्तःसन् पठर्वाएतत्संज्ञोराजर्षिः अज्मना संग्रामनामैतत् अज्मनिसंग्रामेयुष्मदीयाभिरूतिभिरासमन्तात्अदीदेत् अदीप्यत तत्रदृष्टान्तः—चितःकाष्ठैरभिचितइद्धः यज्ञगृहेऋत्विग्भिःप्रज्वालितः अग्निर्न यथाग्निःप्रकाशतेतद्वदित्यर्थः अपिच शर्यातंमानवंइन्द्रेणसहस्पर्धमानंमहाधने संग्रामनामैतत् महताधनेनोपेतेसंग्रामेयाभिरूतिभिरवथोरक्षथः ताभिरित्यादिगतम् ॥ अदीदेत् दीदेतिश्छान्दसोदीप्तिकर्मा । अज्मन् अजगतिक्षेपणयोः अजन्तिक्षिपन्त्यस्मिन्बाणानिति अधिकरणेऔणादिकोमनिन् वलादावार्धधातुकेविकल्पयिष्यतइतिवचनाद्वीभावाभावः सुपांसुलुगितिसप्तम्यालुक् । महाधने आन्महतइत्यात्वम् ॥१७॥

अष्टादशीमृचमाह—

याभि॑रङ्गि॒रो॒मन॑सानिर॒ण्यथोग्रं॒गच्छ॑थोविव॒रेगोअ॑र्णसः ।
याभि॒र्मनुं॒शूर॑मि॒पास॒माव॑तं॒ताभि॑रू॒षुऊ॒तिभि॑रश्वि॒नाग॑तम्॥१८॥

याभि॑ः । अ॒ङ्गि॒रः॒ । मन॑सा । नि॒ऽर॒ण्यथ॑ः । अग्र॑म् । गच्छ॑थः ।
वि॒ऽव॒रे । गोऽअ॑र्णसः । याभि॑ः । मनु॑म् । शूर॑म् । इ॒षा । स॒म्ऽआव॑तम् ।
ताभि॑ः । ऊ॒म् इति॑ । सु । ऊ॒तिऽभि॑ः । अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥१८॥

१ नि० ४.७.।

अङ्गिरइत्येतदामन्त्रितवाक्याद्बहिर्भूतं तेनचात्मानंसंबोध्यस्तुतावृषिप्रेरयति हेअङ्गिरःअङ्गिरसांगोत्रज त्वमश्विनौ स्तुहि हेअश्विनामनसामननीयेनस्तोत्रेणप्रीतौसन्तौ युवांयाभिरूतिभिः निरण्यथःस्तोतॄन्नितरांरमयथः यद्वा मनसैवकरणभूतेनरमयथः तथागोअर्णसोगोरूपस्य अरणीयस्यधनस्यपणिभिर्गुहायांनिहितस्यविवरेविवरणेगुहाद्वारस्योद्घाटनेनप्रकाशनेनप्रकाशने विषयभूतेसति याभिरूतिभिःसहयुवामग्रंसर्वेभ्योदेवेभ्यःपुरस्ताद्गच्छथः अपिचशूरंवीर्यवन्तं मनुंइषापृथिव्यामुप्तेनयवादिधान्यरूपेणान्नेनयाभिरूतिभिः समावतंसम्यगरक्षतम् ताभिः सर्वाभिरूतिभिःसहास्मानप्यागच्छतम् ॥ निरण्यथः निरमयथइत्यस्यवर्णव्यापत्त्याएतद्रूपम् । विवरे ग्रहवृदनिश्चिगमश्चेतिभावेअप् थाथादिनोत्तरपदान्तोदात्तत्वम् ॥ १८ ॥

एकोनविंशीमृचमाह—

याभिः॒ पत्नी॑र्विम॒दाय॑ न्यू॒हथु॒राघ॑ वा॒ याभि॑ररु॒णीरशि॑क्षतम् ।
याभिः॑ सु॒दास॑ ऊ॒हथुः॑ सुदे॒व्यं१ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ १९ ॥

याभिः॑ । पत्नीः॑ । वि॒ऽम॒दाय॑ । नि॒ऽऊ॒हथुः॑ । आ । घ॒ । वा॒ । याभिः॑ । अ॒रु॒णीः । अशि॑क्षतम् । याभिः॑ । सु॒ऽदासे॑ । ऊ॒हथुः॑ । सु॒ऽदे॒व्य॑म् । ताभिः॑ । ऊ॒म् इति॑ । सु । ऊ॒तिऽभिः॑ अ॒श्वि॒ना॒ । आ । ग॒त॒म् ॥ १९ ॥

हेअश्विनौ विमदायएतन्नाम्नेऋषये याभिर्युष्मदीयाभिरूतिभिःपत्नीःभार्याःपुरुमित्रस्यदुहितरंन्यूहथुः नितरांवावांयुवांप्रापितवन्तौ घेतिपदपूरणः तथायाभिरूतिभिररुणीःअरुणवर्णाआरोचमानाः गाःआभिमुख्येनाशिक्षतंअदत्तम् तथा पिजवनपुत्रायसुदासेकल्याणदानायराज्ञेसुदेव्यंप्रशस्तंधनंयाभिरूतिभिरूहथुःप्रापितवन्तौ ताभिरित्यादिगतम् ॥ पत्नीः अमोव्यत्ययेनशसादेशः। न्यूहथुः वहप्रापणे अथुसि यजादित्वात्संप्रसारणम् द्विर्वचनादि। सुदासे शोभनंददातीतिसुदाः असुन्। सुदेव्यम् दिगादित्वाद्यत् तित्स्वरितमितिस्वरितत्वम् ॥ १९ ॥

विंशीमृचमाह—

याभिः॒ शन्ता॑ती॒ भव॑थो ददा॒शुषे॑ भु॒ज्युं याभि॒रव॑थो॒ याभि॒रध्रि॑गुम् ।
ओ॒म्याव॑तीं सु॒भरा॑मृत॒स्तुभं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ २० ॥ ३६ ॥

याभिः । शन्ताती इति शम्ऽताती । भवथः । ददाशुषे । भुज्युम् । याभिः । अवथः । याभिः । अध्रिऽगुम् । ओम्याऽवतीम् । सुऽभराम् । ऋतऽस्तुभम् । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २० ॥ ३६ ॥

हेअश्विनौ ददाशुषेहवींषिदत्तवतेयजमानाययाभिरूतिभिः शंताती सुखस्यकर्तारौभवथः याभिश्चोतिभिःभुज्युंतुग्रस्यपुत्रमवथः याभिश्चाध्रिगुं अध्रिगुर्देवानांशमिता अध्रिगुश्चापश्च उभौदेवानांशमितारावितिश्रुतेः । अपिच ऋतस्तुभं ऋतंसत्यंस्तोभत्युच्चारयतीत्यृतस्तुप् एतत्संज्ञमृषिंओम्यावतीं ओम्येतिसुखनाम तद्युक्तांसुभरांसुखेनभरणीयामिषं याभिरूतिभिः प्रापयथः ताभिःसर्वाभिरूतिभिःसहास्मानप्यागच्छतम् ॥ शंताती शिवशमरिष्टस्यकरेइतितातिल्प्रत्ययः लितीतिप्रत्ययात्पूर्वस्योदात्तत्वम् । ददाशुषे दाश्दाने लिटःक्वसुः वसोःसंप्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् ॥ २० ॥

॥ इतिप्रथमस्यसप्तमेषट्त्रिंशोवर्गः ॥ ३६ ॥

एकविंशीमृचमाह—

याभिःकृशानुमसनेदुवस्यथोजवेयाभिर्यूनोअर्वन्तमावतम् ।
मधुप्रियंभरथोयत्सरड्भ्यस्ताभिरूषुऊतिभिरश्विनागतम् ॥२१॥

याभिः । कृशानुम् । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वन्तम् । आवतम् । मधु । प्रियम् । भरथः । यत् । सरट्ऽभ्यः । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२१॥

स्वानादिषुसोमपालेषुमध्येकृशानुरेकःसोमपालः तथाचैतरेयकम्—ह्स्तसुहस्तकृशानवेतेवःसोमक्रयणाइति[1] । तंकृशानुं असने इषवःअस्यन्तेस्मिन्निति असनःसंग्रामः तस्मिनसंग्रामे हेअश्विनौ याभिरूतिभिर्दुवस्यथोरक्षथःतथायाभिश्चजवेवेगेप्रवृत्तंयूनस्तरुणस्यपुरुकुत्सस्यअ-

१ ऐ० ब्रा० २. ७. । २ तै० सं० १. २. ७. ।

वंतमश्वंआवतमरक्षतम् अपिचयन्मधुक्षौद्रंमियंसर्वेषामनुकूलवेद्यं तत्सरड्भ्यःमधुमक्षिकाभ्यःयाभिश्चोतिभिर्भरथः संपादयथः ताभिःसर्वाभिरूतिभिःसहास्मानभ्यागच्छतम् ॥ असने असुक्षेपणे करणाधिकरणयोश्चेत्यधिकरणेल्युट् । सरड्भ्यः सृगतौ सर्वेरटिः ॥ २१ ॥

द्वाविंशीमृचमाह—

याभिर्नरंगोषुयुधंनृषाह्येक्षेत्रस्यसातातनयस्यजिन्वथः ।
याभीरथाँअवथोयाभिरर्वतस्ताभिरूषुऊतिभिरश्विनागतम् ॥ २२ ॥

याभिः । नरम् । गोसुऽयुधम् । नृऽसह्ये । क्षेत्रस्य । साता ।
तनयस्य । जिन्वथः । याभिः । रथान् । अवथः । याभिः । अर्वतः ।
ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥२२॥

हेअश्विनौ गोषुयुधंगोविषयं युद्धं कुर्वन्तंनरंयज्ञस्यनेतारं यजमानंयाभिरूतिभिः नृषाह्ये नृभिः सोढव्येसंग्रामे जिन्वथः प्रीणयथोरक्षथइत्यर्थः तथा क्षेत्रस्यगृहादिरूपस्य तनयशब्दोधनवाची तनयस्यधनस्यचसाता सातयेसंभजनार्थं याभिरूतिभिर्यजमानंरक्षथः याभिश्चयजमानानांरथानरक्षथः तदीयानर्वतोश्वांश्च याभिरवथस्ताभिःसर्वाभिरूतिभिःसहास्मानभ्यागच्छतम् ॥ गोषुयुधम् युधसंप्रहारे गोषुयुध्यतइतिगोषुयुध् तत्पुरुषेकृतिबहुलमित्यलुक् । नृषाह्ये षहमर्षणे शकिसहोश्चेतियत् अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः कृदुत्तरपदप्रकृतिस्वरत्वम् । साता षनषणसंभक्तौ भावेक्तिन् जनसनखनांसञ्झलोरित्यात्वम् ऊतियूतीत्यादिना क्तिन्उदात्तत्वंनिपातितम् सुपांसुलुगितिचतुर्थ्याडादेशः । जिन्वथः जिविप्रीणनार्थः औपादिकः इदित्वान्नुम् । रथान् दीर्घादटिसमानपादेइतिनकारस्यरुत्वम् आतोटिनित्यमितिसानुनासिकआकारः ॥ २२ ॥

त्रयोविंशीमृचमाह—

याभिःकुत्समार्जुनेयंशतक्रतूप्रतुर्वीतिंप्रचदभीतिमावतम् ।
याभिर्ध्वसन्तिंपुरुषन्तिमावतंताभिरूषुऊतिभिरश्विनागतम् ॥२३॥

याभिः । कुत्सम् । आर्जुनेयम् । शतक्रतू इति शतऽक्रतू । प्र । तुर्वीतिम् । प्र । च । दभीतिम् । आवतम् । याभिः । ध्वसन्तिम् । पुरुऽसन्तिम् । आवतम् । ताभिः । ऊम् इति । सु । ऊतिऽभिः । अश्विना । आ । गतम् ॥ २३ ॥

हेशतक्रतूबहुविधकर्माणौअश्विनौ आर्जुनेयं अर्जुनइतीन्द्रस्यनाम तथाचवाजसनेयकम्—एतद्वाइन्द्रस्यगुह्यंनामयदर्जुनइति । तस्यपुत्रंकुत्संयाभिरूतिभिः प्रावतंमकर्षेणारक्षतम् तथातुर्वीतिंदभीतिंचयाभिरूतिभिः प्रावतम् अपिचयाभिर्ध्वसन्तिंएतत्संज्ञंपुरुषन्तिंएतन्नामानंचऋषिंआवतंअरक्षतम् ताभिःसर्वाभिरूतिभिःसहास्मानपिसुष्ठुआगच्छतम्॥आर्जुनेयम् शुभ्रादिभ्यश्चेतिचशब्दोनुक्तसमुच्चयार्थइत्युक्त्वाढक् ।तुर्वीतिं तुर्वीहिंसार्थः शत्रूंस्तुर्वतीतितुर्वीतिः औणादिकईतिप्रत्ययः । दभीतिम् दंभुदंभे औणादिकःकीतिप्रत्ययः।ध्वसंतिम् ध्वंसुगतौच औणादिकोझिच्प्रत्ययः अनिदितामितिनलोपःझोन्तः । पुरुषन्तिम् पुरुसनोतिददातीतिपुरुषन्तिः किच्कौचसंज्ञायामितिकिच् नक्तिचिदीर्घश्चेतिअनुनासिकलोपोपधादीर्घयोर्निषेधः ॥ २३ ॥

चतुर्विंशीमृचमाह—

अमस्वतीमश्विनावाचमस्मेकृतंनोदस्रावृषणामनीषाम् ।
अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ २४ ॥

अमस्वतीम् । अश्विना । वाचम् । अस्मे इति । कृतम् । नः । दस्रा । वृषणा । मनीषाम् । अद्यूत्ये । अवसे । नि । ह्वये । वाम् । वृधे । च । नः । भवतम् । वाजऽसातौ ॥ २४ ॥

हेअश्विनौ अस्मेअस्माकंवाचंअमस्वतीम् अमइतिकर्मनाम विहितैःकर्मभिःसंयुक्तांत्वं कुरुतम् तथानोस्माकंमनीषांबुद्धिंहेवृषणाकामानांवर्षकौ दस्राशत्रूणामुपक्षपयितारावश्विनौ वेदार्थज्ञानसमर्थांकुरुतम् अपिच यस्माद्युवामेवंगुणविशिष्टौ तस्माद्वांयुवांअवसेरक्षणायनिह्वये निवरामाह्वये कदा अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेःपश्चिमेयामे तस्मिन्काले

हिमातरनुवाकाश्विनशस्त्रयोरिदंसूक्तंपठ्यते आहूवोचयुवांवाजसातौवाजस्यान्नस्यसंभजने यद्वा सङ्ग्रामनामैतत् सङ्ग्रामेनोस्माकंवृधेवर्धनायभवतम्॥ अमस्वतीम् आपःकर्माख्यायांह्रस्वोनुट्च वेतिअसुन्नुडागमश्च तदस्यास्तीतिमतुप् मादुपधायाइतिमतुपोवत्वम् तसौमत्वर्थेइतिभत्वे- नपदत्वाभावात् रुत्वाद्यभावः। अस्मे सुपांसुलुगितिषष्ठ्याःशेआदेशः। कृतम् करोतेर्लोटिबहुलं छन्दसीतिविकरणस्यलुक्। अद्यूत्ये द्युतदीप्तौ ऋहलोर्ण्यदितिभावेण्यत् वर्णव्यापत्त्याऊकारः द्यूत्यंप्रकाशनमस्मिन्नास्तीतिबहुव्रीहौव्यत्ययेनान्तस्वरितत्वम्। निह्वये निसमुपविभ्योह्वइत्या- त्मनेपदम्। वृधम् वृधुवृद्धौ संपदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वम्॥ २४॥

पञ्चविंशीमृचमाह—

द्युभि॑र॒क्तुभि॒ः परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥२५॥३७॥

द्युऽभिः॑। अ॒क्तुऽभिः॑। परि॑। पा॒त॒म्। अ॒स्मान्। अरि॑ष्टेभिः।
अ॒श्वि॒ना॒। सौभ॑गेभिः। तत्। नः॒। मि॒त्रः। वरु॑णः। म॒म॒ह॒न्ता॒म्।
अदि॑तिः। सिन्धुः॑। पृ॒थि॒वी। उ॒त। द्यौः॥ २५॥ ३७॥

हेअश्विनौ द्युभिर्दिवसैः अक्तुभीरात्रिभिश्चअस्मान्स्तोतॄन्परिपातम् परितोरक्षतम् सर्व- दास्मान्रक्षतमित्यर्थः तथाअरिष्टेभिः अहिंसितैःसौभगेभिःसुभगत्वैः सुभगत्वापादकैः धनै- रस्मान्रक्षतम यदस्माभिःप्रार्थितंनोस्मदीयंतन्मित्रादयःषड्देवतामामहन्तांपूजयन्तु उतश- ब्दःसमुच्चये ॥ द्युभिः दिवउदित्युत्वम् दिवोझल्इतिसावेकाचइतिप्राप्तस्यविभक्त्युदात्तत्वस्य प्रतिषेधः। अरिष्टेभिः रिषहिंसायाम् निष्ठेतिक्तः नञ्समासेव्ययपूर्वपदप्रकृतिस्वरत्वम् बहुलं- छन्दसीतिभिसऐसभावः। अश्विना सुपांसुलुगितिविभक्तेराकारः आमन्त्रितस्यचेतिसर्वानुदात्त- त्वम्। सौभगेभिः शोभनोभगःश्रीर्यस्यासौसुभगः तस्यभावःसौभगम् सुभगान्मन्त्रइत्युद्गा- त्रादिपाठादञ्प्रत्ययः हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेतिउभयपदवृद्धिर्नभवति तस्यसर्वविधयश्छ- न्दसिविकल्प्यन्तइतिविकल्पितत्वात् पूर्ववदैसभावः ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वम्॥ २५॥

॥ इतिप्रथमस्यसप्तमेसप्तत्रिंशोवर्गः॥ ३७॥

# ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

इत्थंसप्तममध्यायंव्याख्यायअष्टमाध्यायोव्याख्यातुमारभ्यते । प्रथमेमण्डलेषोडशेनुवाकेसप्तसूक्तानिगतानि इदमितिविंशत्यृचमष्टमंसूक्तम् अत्रानुक्रम्यते—इदंविंशतिरुषस्यंद्वितीयोर्धर्चोरात्रेश्चेति । ऋषिश्चान्यस्मादितिपरिभाषयानुवृत्तेराङ्गिरसःकुत्सऋषिः अनादेशपरिभाषया त्रिष्टुप्छंदः उषोदेवता द्वितीयार्धर्चस्यरात्रिरपि प्रातरनुवाकेउषस्येक्रतौत्रैष्टुभेछन्दस्येतत्सूक्तम् सूत्रितंच—इदंश्रेष्ठंपृथूरथइतिसूक्तेइति आश्विनशस्त्रेचेदंसूक्तं प्रातरनुवाकातिदेशात् ।

तत्रप्रथमामृचमाह—

ओम् इदंश्रेष्ठंज्योतिषांज्योतिरागाच्चित्रःप्रकेतोअजनिष्टविभ्वा।
यथाप्रसूतासवितुःसवायँ एवारात्र्युषसेयोनिमारैक् ॥ १ ॥

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । आ । अगात् । चित्रः ।
प्रऽकेतः । अजनिष्ट । विऽभ्वा । यथा । प्रऽसूता । सवितुः ।
सवाय । एव । रात्री । उषसे । योनिम् । अरैक् ॥ १ ॥

ज्योतिषांग्रहनक्षत्रादीनांद्योतमानानांमध्येइदंउषआख्यंज्योतिःश्रेष्ठंप्रशस्यतमं अस्यकोतिशयइतिचेत् उच्यते—नक्षत्रादिकंज्योतिःस्वात्मानमेवप्रकाशयतिनान्यत् चन्द्रस्तुयद्यप्यन्यत्प्रकाशयति तथापि अविस्पष्टप्रकाशः औषसंतुज्योतिर्युगपदेवसर्वस्यजगतोन्धकारनिराकरणेनविशेषेणप्रकाशकम् अतःप्रशस्यतममित्यर्थः तादृशंज्योतिःआगात् पूर्वस्यांदिश्यागमत् आगतेचतस्मिन् चित्रश्चायनीयः प्रकेतःअन्धकारावृतस्यसर्वस्यपदार्थस्यविज्ञापकस्तदीयोरश्मिः विभ्वाविभुर्व्याप्तःसन्नजनिष्ट प्रादुरभूत् किञ्च यथारात्रीरात्रिःस्वयंसवितुःसूर्यसकाशात् प्रसूता उत्पन्ना सूर्योह्यस्तंगच्छन्रात्रिंजनयति तस्मिन्नस्तमितेरात्रेरुत्पत्त्यवगमात् एवमेवरात्रिरपिउष-

सेसवायउपसउत्पत्तयेतदर्थंयोनिंस्थानंस्वकीयापरभागलक्षणंअरैक्आरेचितवती कल्पितवतीत्यर्थः यद्वाप्रसूतारात्रिसकाशादुत्पन्नाउषाः सवितुःसूर्यस्यसवायप्रसवायजन्मनियथाभवति एवं रात्रिरपिउषसेउषसोयज्जन्मतदर्थंयोनिंस्वापरभागलक्षणंस्थानंकृतवती । अत्रनिरुक्तम्—इदंश्रेष्ठंज्योतिषांज्योतिरागमच्चित्रंप्रकेतनंप्रज्ञाततममजनिष्टविभूततमंयथाप्रसूतासवितुःप्रसवायरात्रिरादित्यस्यैवंरात्र्युषसेयोनिमरिचत्स्थानमिति[1] ॥ श्रेष्ठं प्रशस्यशब्दादातिशायनिकइष्ठन् प्रशस्यस्यश्रइतिश्रादेशः प्रकृत्यैकाजितिप्रकृतिभावाट्टिलोपाभावः । अगात् एतेर्लुङिइणोगालुङीति गादेशः गातिस्थेतिसिचोलुक् । प्रकेतः कितज्ञाने अन्तर्भावितण्यर्थात् कर्मणिघञ् थाथादिनोत्तरपदान्तोदात्तत्वम् । अजनिष्ट जनीप्रादुर्भावे लुङिसिचइडागमः । विभ्वा विप्रसंभ्योड्वसंज्ञायामितिभवतेर्डुप्रत्ययः सुपांसुलुगित्यादिनासोराकारादेशः ओःसुपीतियणादेशस्यनभूसुधियोरितिप्रतिषेधप्राप्तेछन्दस्युभयथेतियणादेशः व्यत्ययेनाद्युदात्तत्वम् यद्वा विपूर्वाद्भवतेरौणादिकोडुनप्रत्ययः नित्त्वादाद्युदात्तत्वम् । प्रसूता पूङ्प्राणिप्रसवे कर्मणिनिष्ठा गतिरनन्तरइतिगतेः प्रकृतिस्वरत्वम् ।सवाय छन्दसिजवसवौवक्तव्याविति निपातनादप् चित्त्वादन्तोदात्तत्वम् अणोप्रगृह्यस्यानुनासिकइतिसंहितायामकारःसानुनासिकः।एव निपातस्यचेतिसंहितायांदीर्घः।रात्रिः रात्रेश्चाजसाविति ङीप् यस्येतिचेतीकारलोपः । अरैक् रिचिर्विरेचने लङिबहुलंछन्दसीतिविकरणस्यलुक् लघूपधगुणेहल्ङ्याब्भ्यइतितिलोपः वर्णव्यापत्त्याव्यत्ययेनएकारस्यऐकारः॥१॥

द्वितीयामृचमाह—

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥

रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊं इति । कृष्णा । सदनानि । अस्याः । समानबन्धू इति समानऽबन्धू । अमृते इति । अनूची इति । द्यावा । वर्णम् । चरतः । आमिनाने इत्याऽमिनाने ॥ २ ॥

---

१ नि० २. १९. ।

श्वेत्येत्युपसोनामधेयं रुशतीदीप्ताश्वेत्याश्वेतवर्णोपाः रुशद्वत्सा रुशद्दीप्तःसूर्योवत्सो-यस्याःसातथोक्ता यथामातुःसमीपेवत्सःसञ्चरति एवंउपसःसमीपेसूर्यस्यनित्यमवस्थानात्तद्व-त्सत्वम् अथवा यथावत्सोमातुःस्तन्यंरसंपिवन्हरति एवमुपसोवश्यायारव्यंरसंपिवन्वत्सइत्युच्य-ते तादृशीसतीआगात् आगतवती आगतायाअस्याउपसः कृष्णाकृष्णवर्णारात्रिः सदनानि स्थानानिस्वकीयान्यार्यैयामलक्षणानिआरैक् आरेचितवती कल्पितवती दत्तवतीत्यर्थः उइत्ये-तत्पूरणम् अपिचैतेरात्र्युपसौसमानबन्धूसमानेनएकेनसूर्याख्येनबन्धुनासख्यायुक्ते यद्वा सूर्ये-णसहसंबद्धे यथाउपाउदेष्यतासूर्येणसंबद्धा एवंरात्रिरपिअस्तंयतासूर्येणसंबद्धा अमृतेमरणर-हिते कालात्मकतयानित्यत्वात् अनूचीअन्वञ्चन्त्यौ प्रथमंरात्रिःपश्चादुपाइत्यनेनक्रमेणगच्छन्त्यौ यद्वा सूर्यगत्यनुसारेणगच्छन्त्यौ एवंभूतेवर्णंसर्वेषांप्राणिनांरूपंआमिनानेजरयन्त्यौ यद्वा स्व-कीयंरूपंहिंसन्त्यौ उपसानैशंतमोनिवर्त्यते प्रकाशात्मकमुषसोरूपंरात्र्याएवंविधेसत्यौद्यावाद्यो-तमानेचरतः प्रतिदिवसमावर्तेते यद्वा द्यावानभसांतरिक्षमार्गेणचरतःप्रतिदिवसंगच्छतः अत्रनि-रुक्तम्—रुशद्वत्सासूर्यवत्सारुशदितिवर्णनामरोचतेर्ज्वलतिकर्मणःसूर्यमस्यावत्समाहसाहचर्याद्रस-हरणाद्वारुशतीश्वेत्यागात्श्वेत्याश्वेतवतेरारिचत्कृष्णासदनान्यस्याःकृष्णवर्णारात्रिःकृष्णंकृष्यतेर्नि-कृष्टोवर्णोथैनेसंस्तौतिसमानबन्धूसमानबन्धनेअमृतेअमरणधर्माणावनूचीअनूच्याविनीतरेतरम-भिप्रेत्यद्यावावर्णंचरतस्तेएवद्यावौद्योतनादपिवाद्यावाचरतस्तयासहचरतइतिस्यादामिनानेआमि-नानेअन्योन्यस्याध्यात्मंकुर्वाणेइति॥ श्वेत्या श्विताॢवर्णे अस्मात् ण्यन्तादचोयदितिभावेयत् णि-लोपः अर्शआदित्वान्मत्वर्थीयोच् । अमृते मृतंमरणमनयोर्नास्तीतिबहुव्रीहौनञोजरमरमित्रमृ-ताइत्युत्तरपदाद्युदात्तत्वम् । अनूची अनुपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् अनिदितामितिनलोपः अञ्चतेश्चोपसङ्ख्यानमितिङीप् अचइत्यकारलोपेचाविति दीर्घत्वम् अनुदात्तस्यचयत्रोदात्तलो-पइतिङीपउदात्तत्वम् सुपांसुलुगितिविभक्तेर्लुक् । आमिनाने मीङ्हिंसायाम् क्रैयादिकः शान-चि मीनातेर्निगमेइतिह्रस्वत्वम् ॥ २ ॥

तृतीयामृचमाह—

स॒मा॒नो अ॒ध्वा स्वस्रो॑र॒नन्त॒स्तम॒न्या॒न्या॑ चरतो दे॒वशि॑ष्टे ।
न मे॑थेते॒ न त॑स्थतुः सु॒मेके॒ नक्तो॒षासा॒ सम॑नसा॒ विरू॑पे ॥ ३ ॥

---

१ नि० ६. १३.

समानः । अध्वा । स्वस्रोः । अनन्तः । तम् । अन्याऽअन्या । चरतः । देवशिष्टे इति देवऽशिष्टे । न । मेथेते इति । न । तस्थतुः । सुमेके इति सुऽमेके । नक्तोषसा । सऽमनसा । विरूपे इति विऽरूपे ॥ ३ ॥

स्वस्रोर्भगिन्योः रात्र्युषसोः अध्वासञ्चरणसाधनभूतोमार्गः समानएकएव येनैवाकाशमार्गेणउषानिर्गच्छति तेनैवरात्रिरपि सचमार्गोनन्तः अवसानरहितः तंमार्गंदेवशिष्टेदेवेनद्योतमानेनसूर्येणानुशिष्टेशिक्षितेसत्यौ अन्याअन्याएकैकाचरतः क्रमेणागच्छतः अपिच सुमेकेशोभनमेहनेसर्वेषामुत्पादकत्वात्शोभनमजनने नक्तोषसारात्रिरुषाश्चविरूपे तमःप्रकाशलक्षणाभ्यांविरुद्धरूपाभ्यांयुक्तेअपि समनसासमानमनस्के ऐकमत्यंप्राप्तेसत्यौनमेथेते परस्परंनहिंस्तःतथा नतस्थतुः क्वचिदपिनतिष्ठतः सर्वदालोकानुग्रहार्थंगच्छथइत्यर्थः॥ अन्याअन्या कर्मव्यतिहारेसर्वनाम्नोद्वेभवतइतिवक्तव्यम्. समासवच्चबहुलमित्यन्याशब्दस्यद्विर्भावः तस्यपरमाम्रेडितमित्याम्रेडितसंज्ञायां अनुदात्तंचेत्याम्रेडितानुदात्तत्वम्। देवशिष्टे शासुअनुशिष्टौ अस्मात्कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः शासइदङ्हलोरित्युपधायाइत्वम्. शासिवसिघसीनांचेतिषत्वम्.तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । मेथेते मेथृमेधृमेथेहिंसनयोः भौवादिकः अनुदात्तेत् । सुमेके मिहसेचने भावेघञ् शोभनोमेहोययोस्ते व्यत्ययेनककारः उत्तरपदस्यञित्स्वरेणाद्युदात्तत्वादाद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम् । नक्तोषसा सुपांसुलुगितिविभक्तेराकारः अन्येषामपिदृश्यतइतिसंहितायामुपधायादीर्घः ॥ ३ ॥

अथचतुर्थी—

भास्वतीनेत्रीसूनृतानामचेतिचित्राविदुरोनआवः ।
प्रार्प्याजगद्व्युनोरायोअख्यदुषाअजीगर्भुवनानिविश्वा ॥ ४ ॥

भास्वती । नेत्री । सूनृतानाम् । अचेति । चित्रा । वि । दुरः । नः । आवरित्यावः । प्रऽअर्प्य । जगत् । वि । ऊं इति । नः । रायः । अख्यत् । उषाः । अजीगरिति । भुवनानि । विश्वा ॥ ४ ॥

भास्वतीविशिष्टप्रकाशनयुक्ता सनृतेतिवाङ्नाम सूनृतानांवाचांनेत्रीउत्पादयित्रीउषसःप्रादुर्भावानन्तरंहिपशुपक्षिमृगादयःसर्वेशब्दंकुर्वन्ति एवंभूताउषाः अचेति अस्माभिरज्ञायि चित्रा-

चायनीया ज्ञातासानोऽस्माकं दुरोद्वाराणि तमसाविरोहितानिव्यावः व्यवृणोत् यथास्माभिर्दृश्यन्ते तथातमोनिवार्य प्रकाशयन्तीत्यर्थः अपिचजगत्सर्वंभुवनंमाघ्र्यंप्रकाशंगमयित्वा नोऽस्माकंरायोधनानिव्यख्यत् विशिष्टप्रकाशानयुक्तान्यकरोत् उइत्येतत्पदपूरणम् सैषोषाः विश्वाभुवनानि सर्वाणिभुवनानितमसातिरोहितत्वेनाविद्यमानकल्पानिअजीगः उद्गिरति स्वमुखान्निर्गमयति स्वकीयेनप्रकाशेनतमोनिःसार्यपुनरुत्पन्नानीवकरोतीत्यर्थः ॥ नेत्री णीञ्प्रापणे तृच् ऋन्नेभ्योङीप् उदात्तयणोहल्पूर्वादितिङीपउदात्तत्वम्। अचेति चितीसंज्ञाने। दुरः द्वारशब्दस्यरयेमतौबहुलमितिबहुलवचनात्संप्रसारणम् । आवः वृञ्वरणे लुङि मन्त्रेघसेतिच्लेर्लुक् गुणः हल्ङ्याब्भ्यइतिलोपः छन्दस्यपिदृश्यतइत्याडागमः। माघ्र्यं ऋगतौ णौ अर्तिह्रीत्यादिनापुक् समासेनञ्पूर्वेक्त्वोल्यप्। अख्यत् ख्याप्रकथने लुङि अस्यतिवक्तीत्यादिनाच्लेरङादेशः। अजीगः गॄनिगरणे लङि तिपि बहुलंछन्दसीतिविकरणस्यश्लुः द्विर्वचनोरदत्वहलादिशेषाः अर्तिपिपर्त्योश्च बहुलंछन्दसीत्यभ्यासस्येत्वम् छान्दसईकारः यद्वा अस्माण्ण्यन्तात् लुङि चङि द्विर्भावसन्वद्भावेत्वदीर्घाः छान्दसश्चङोलोपः ॥ ४ ॥

पञ्चमीमृचमाह—

जि॒ह्म॒श्ये॒३॑ चरि॑तवे म॒घोन्या॑भो॒गय॑ इ॒ष्टये॑ रा॒य उ॑ त्वम्।
द॒भ्रं पश्य॑द्भ्य उर्वि॒या वि॒चक्ष॑ उ॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑ ॥ ५ ॥१॥

जि॒ह्म॒ऽश्ये॑। चरि॑तवे। म॒घोनी॑। आ॒ऽभो॒गये॑। इ॒ष्टये॑। रा॒ये।
ऊ॒म् इति॑। त्वम्। द॒भ्रम्। पश्य॑त्ऽभ्यः। उ॒र्वि॒या। वि॒ऽचक्षे॑। उ॒षाः।
अ॒जी॒ग॒रिति॑। भुव॑नानि। विश्वा॑ ॥ ५ ॥ १ ॥

मघोनीत्युषसोनामधेयं मघोनीधनवतीउषाः जिह्मश्ये जिह्मंवक्रंशयनायपुरुषायचरितवेचरितुंशयनादुत्थायस्यापेक्षितंप्रतिगन्तुंव्युच्छन्तीभवति त्वम् अयंएकशब्दपर्यायःसर्वनामशब्दः यदाह—त्वइतिविनिग्रहार्थीयंसर्वंमानुदात्तमिति[1]। त्वमेकंप्रतिआभोगयेआभोगायपशब्दादिविषयार्थंतथाअपरंप्रतिइष्टयेयागार्थं तथाअन्यंप्रतिरायेधनार्थंचव्युच्छन्तीतिशेषः उशब्दश्चार्थे अपिचदभ्रंअल्पंपश्यद्भ्यःअन्धकारावृतत्वेनईषद्दृष्टृभ्योमनुष्येभ्यः विचक्षेविशिष्टप्रकाशा

---

१ नि० १.७.।

यव्युच्छन्ती उर्विया उर्वी विस्तीर्णा उषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेनोद्गीर्णानीवकरोति ॥ जिह्मश्ये शीङ् स्वप्ने जिह्मंश्येते इति जिह्मशीः क्विप् चेति क्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् एरनेकाच इतियण् उदात्तस्वरितयोर्यण इति विभक्तेः स्वरितत्वम् । आभोगये आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः यद्वा आङ्पूर्वाद्भुजेर्बहुलवचनादौणादिकः किप्रत्ययः कुत्वं च । उर्विया इयाडियाजीकाराणामुपसंख्यानमिति उर्वीशब्दादुत्तरस्य सोर्डियाजादेशः । विचक्षे चक्षिङ् व्यक्तायां वाचि विपूर्वादस्मात्संपदादिलक्षणो भावे क्विप् ॥ ५ ॥

॥ इति प्रथमस्याष्टमे प्रथमो वर्गः ॥ १ ॥

षष्ठीमृचमाह—

क्षत्रायत्वंश्रवसेत्वंमहीयाइष्टयेत्वमर्थमिवत्वमित्यै ।
विसदृशाजीविताभिप्रचक्षंउषाअजीगर्भुवनानिविश्वा ॥ ६ ॥

क्षत्राय । त्वम् । श्रवसे । त्वम् । महीयै । इष्टये । त्वम् । अर्थम्ऽइव । त्वम् । इत्यै । विऽसदृशा । जीविता । अभिऽप्रचक्षे । उषाः । अजीगरिति । भुवनानि । विश्वा ॥ ६ ॥

क्षत्राय धननामैतत् धनार्थं त्वमेकं प्रति उषा व्युच्छन्तीति शेषः तथा श्रवसे अन्नार्थं त्वमेकं प्रति व्युच्छन्ती तथा त्वमेकं प्रति महीयै महत्यै इष्टये अग्निष्टोमादिमहायज्ञार्थं त्वमेकं प्रति व्युच्छन्ती तथार्थमिव अपेक्षितमर्थं प्रति इत्यै गमनार्थं व्युच्छन्ती अपि च विसदृशा विलक्षणानि नानारूपाणि जीविता जीवितानि जीवनोपायभूतानि कृषिवाणिज्यादीनि अभिप्रचक्षे आभिमुख्येन प्रकाशयितुं व्युच्छन्ती उषाः सर्वाणि भूतजातानि तमसा निगीर्णान्यजीगः प्रकाशनेन उद्गीर्णानीवाकरोत् ॥ त्वम् त्वसमसिमनेमेत्यनुच्चानीति सर्वानुदात्तत्वम् । महीयै महो महेरिन्सर्वधातुभ्य इतीन्प्रत्ययः कृदिकारादक्तिन इति ङीष् उदात्तयण इति विभक्तेरुदात्तत्वम् छान्दसईकारोपजनः यद्वा महीशब्दादुत्तरस्य चतुर्थ्येकवचनस्य याडापइति व्यत्ययेन याडागमः छान्दसमन्तोदात्तत्वम् । विसदृशा त्यदादिषु दृशोनालोचने कञ्चेत्यत्र समानान्ययोश्चेति वचनाद्दृशेः कञ् समानस्य छन्दसीति सभावः विगतसादृश्यानि विसदृशानि शेश्छन्दसि बहुलमिति शेर्लोपः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अभिप्रचक्षे चक्षेस्तुमर्थे सेसेनिति सेनप्रत्ययः स्कोःसंयोगाद्योरिति कलोपः कत्वपत्वे ॥ ३ ॥

सप्तमीमृचमाह—

एषादिवोदुहितापत्यदर्शिव्युच्छन्तीयुवतिःशुक्रवासाः।
विश्वस्येशानापार्थिवस्यवस्वउषोअद्येहसुभगेव्युच्छ ॥ ७ ॥

एषा । दिवः । दुहिता । प्रति । अदर्शि । विऽउच्छन्ती । युवतिः । शुक्रऽवासाः । विश्वस्य । ईशाना । पार्थिवस्य । वस्वः । उषः । अद्य । इह । सुऽभगे । वि । उच्छ ॥ ७ ॥

दिवोदुहिताव्योम्नोदुहितृस्थानीया तस्यहिपूर्वार्धउषाउत्पद्यते सैषाव्युच्छन्तीतमोवर्जयन्ती प्रत्यदर्शि सर्वैःप्राणिभिर्दृष्टाभूत् कीदृशीसायुवतिः यावयित्रीफलानांपुरुषैःप्रापयित्री नित्ययौवनोपेतावाशुक्रवासाः श्वेतवसनानिर्मलदीप्तिर्वा तथा विश्वस्यसर्वस्यपार्थिवस्यपृथिव्याःसंबन्धिनोवस्वोधनस्यईशानाईश्वरी हेसुभगेशोभनधनेउषः तादृशीत्वम् अद्यास्मिन्कालेइहअस्मिन्देवयजनदेशेव्युच्छ तमांसिविवासय वर्जयेत्यर्थः ॥ दिवः ऊडिदमितिविभक्तेरुदात्तत्वम् । व्युच्छन्ती उच्छीविवासे विवासोवर्जनम् तौदादिकः । युवतिः यूनस्तिः । शुक्रवासाः वसआच्छादने वस्तेसर्वमाच्छादयतीतिप्रकाशोवासः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । ईशाना ईशऐश्वर्ये अदादित्वाच्छपोलुक् अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेधातुस्वरः । पार्थिवस्य पृथिव्याञाञावितिप्राग्दीव्यतीयोञ्प्रत्ययः । वस्वः लिङ्गव्यत्ययः घेर्ङितीतिगुणस्य जसादिषुछन्दसिवावचनमितिविकल्पितत्वादभावेयणादेशः ॥ ७ ॥

अष्टमीमृचमाह—

परायतीनामन्वेतिपाथआयतीनांप्रथमाशश्वतीनाम् ।
व्युच्छन्तीजीवमुदीरयन्त्युषामृतंकंचनबोधयन्ती ॥ ८ ॥

पराऽयतीनाम् । अनु । एति । पाथः । आऽयतीनाम् । प्रथमा । शश्वतीनाम् । विऽउच्छन्ती । जीवम् । उत्ऽईरयन्ती । उषाः । मृतम् । कम् । चन । बोधयन्ती ॥ ८ ॥

परायतीनांपरागच्छन्तीनामतीतानामुपसांसंबन्धिपाथः अन्तरिक्षैकदेशलक्षणंस्थानं पाथोन्तरिक्षंपथाव्याख्यातमितियास्कः । अद्यतनीउषाः अन्वेत्यनुगच्छति अतीताउषसोयथाव्युष्टा एवमेवैषापिव्युच्छतीत्यर्थः तथाआयतीनामागच्छन्तीनां शश्वतीनां बह्वीनामुषसांआद्याप्रथमाभवति एषायथावर्तते एवमेवागामिन्योव्युषसइत्यर्थः तादृशीव्युच्छन्तीतमोवर्जयन्तीजीवंप्राणिनांजीवात्मानंउदीरयन्ती शयनादूर्ध्वंप्रेरयन्तीउषाः मृतंस्वापसमयेप्रलीनेन्द्रियत्वान्मृतमिवसन्तंकंचनकमपिपुरुषंबोधयन्तीपुनरिन्द्रियप्रवेशेनचेतनंकुर्वन्तीमवर्ततइतिशेषः ॥ परायतीनां इण्गतौ लटःशतृ इणोयण् उगितश्चेतिङीप् ङ्याश्छन्दसिबहुलमितिनामउदात्तत्वम् ॥ ८ ॥

नवमीमृचमाह—

उषो यद॒ग्निं स॒मिधे॑ च॒कर्थ॒ वि यदाव॒श्चक्ष॑सा॒ सूर्य॑स्य ।
यन्मानु॑षान्य॒क्ष्यमा॑णाँ॒ अजी॑ग॒स्तद्दे॒वेषु॑ चकृषे भ॒द्रमप्नः॑ ॥ ९ ॥

उषः॑ । यत् । अ॒ग्निम् । स॒म्ऽइधे॑ । च॒कर्थ॑ । वि । यत् । आवः॑ ।
चक्ष॑सा । सूर्य॑स्य । यत् । मानु॑षान् । य॒क्ष्यमा॑णान् । अजी॑ग॒रिति॑ ।
तत् । दे॒वेषु॑ । च॒कृ॒षे । भ॒द्रम् । अप्नः॑ ॥ ९ ॥

हेउषः त्वंअग्निंगार्हपत्यादिरूपंसमिधेसमिन्धनायप्रज्वलनार्थंयच्चकर्थकृतवती उषःकाले-ह्यग्नयोहोमार्थंउपसमिध्यन्ते अपिचतमसातिरोहितं जगत्सूर्यस्यचक्षसाप्रकाशेनयद्व्यावः व्यवृणोः तमसाविश्लिष्टमकरोः तथामानुषानुपान् मनोःपुत्रान्मनुष्यान्यक्ष्यमाणान्यागंकरिष्यतः यच्चत्वंअजीगः पूर्वंतमसाग्रस्तान्प्रकाशनेनोद्गीर्णानिवाकरोः हेउषः देवेषुमध्येत्वमेवभद्रंभजनीयं यदेतत्त्रिविधमप्नः कर्मचकृषेकृतवती ॥ आवः वृञ्वरणे मन्त्रेघसेतिच्लेर्लुक् गुणे हल्ङ्याब्भ्यइतिसिलोपः छन्दस्यपिदृश्यतेइत्याडागमः । मानुषान् मनोर्जातावञ्यतोषुक्चेतिअञ्षुगागमश्च ॥ ९ ॥

१ नि० ६. ७. ।

दशमीमृचमाह—

कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ १० ॥ २ ॥

कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः ।
च । नूनम् । विऽउच्छान् । अनु । पूर्वाः । कृपते । वावशाना ।
प्रऽदीध्याना । जोषम् । अन्याभिः । एति ॥ १० ॥ २ ॥

समयेत्यव्ययं समीपवचनम् उषाः समया भवाति समीपस्था भवति इति यदेतत् तत्कियति काले प्रवृत्तं परिसमाप्तं चेत्याकारः प्रश्नार्थः एतदुक्तं भवति उषा येन कालेन संयुक्ता स कालः कियान् तस्य कालस्य किं परिमाणमिति अनेनोषसोनन्तत्वमुक्तम् तदेव स्पष्टीकरोति पुरा या उषसो व्यूषुः व्युष्टाः सञ्जाताः नूनं च अवश्यं इतःपरं याश्चोषसो व्युच्छान् व्युच्छन्ति व्युष्टा भविष्यन्ति तत्र पूर्वाः व्युष्टा अतीता उषसः वावशानाः कामयमाना इदानीं वर्तमानोषाः अनुकृपते अनुकल्पते समर्था भवति अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः तथा प्रदीध्याना प्रकर्षेण दीप्यमानोषाः अन्याभिरागामिनीभिरुषोभिर्जोषं सह एति संगच्छते आगामिन्योप्येतदीयं प्रकाशं अनुकुर्वन्तीत्यर्थः ॥ कियति किंपरिमाणमस्य किमिदंभ्यां वो घ इति वत्वविधानसामर्थ्यात्किम्शब्दादपि परिमाणार्थे वतुप् वकारस्य घत्वम् इदंकिमोरीश्की इति किमः की आदेशः घस्येयादेशे यस्येति लोपः प्रत्ययाद्युदात्तत्वम् छान्दसः सांहितिको दीर्घः । भवाति लेटयाडागमः । व्यूषुः विपूर्वो वसतिः व्युच्छने वर्तते लिट्युसि किन्त्वे यजादित्वात्संप्रसारणम् द्विर्वचनादि । व्युच्छान् उच्छी विवासे विवासो वर्जनम् लेटयाडागमः संयोगान्तस्य लोपः । कृपते कृपू सामर्थ्ये व्यत्ययेन शः । वावशाना वश कान्तौ अस्माद्यङ्लुगन्तात्ताच्छीलिकश्चानश् । प्रदीध्याना दीधीङ् दीप्तिदेवनयोः लटः शानच् अदादित्वाच्छपो लुक् जक्षित्यादयः षडित्यभ्यस्तसंज्ञायां अभ्यस्तानामादिरित्याद्युदात्तत्वम् गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १० ॥

॥ इति प्रथमस्याष्टमे द्वितीयो वर्गः ॥ २ ॥

एकादशीमृचमाह—

ईयुष्टेयेपूर्वतरामपश्यन्व्युच्छन्तीमुपसंमर्त्यासः ।
अस्माभिरूनुप्रतिचक्ष्याभूदोतेयन्तियेअपरीषुपश्यान् ॥ ११ ॥

ईयुः । ते । ये । पूर्वऽतराम् । अपश्यन् । विऽउच्छन्तीम् । उपसम् ।
मर्त्यासः । अस्माभिः । ऊम् इति । नु । प्रतिऽचक्ष्या । अभूत् ।
ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥ ११ ॥

येमर्त्यासोमरणधर्माणोमनुष्याव्युच्छन्तीं विवासयन्तींपूर्वतरांअतिशयेनपूर्वांविप्रकृष्टांउपसंअपश्यन्दृष्टवन्तः तेमनुष्याईयुर्गताः तथाअस्माभिरपिनुइदानींप्रतिचक्ष्याप्रकर्षेणद्रष्टव्याअभूवजाता तथाअपरीषुभाविनीपुरात्रिपुयेमनुष्याएनामुपसंपश्यान्पश्यन्ति ते आउइतिनिपातद्वयसमुदायः तत्रउदित्येतदवधारणे एवयन्तिआगच्छन्त्येव कालत्रयेप्ष्येपाव्याप्यवर्ततइत्यर्थः॥ईयुः इणूगतौ लिट्चुसिइणोयणितियणादेशः द्विर्वचनेचीतितस्यस्थानिवद्भावाद्द्विर्भावे दीर्घइणः कितीतिअभ्यासस्यदीर्घत्वम्। ते युष्मत्ततक्षुष्विति सकारस्यपत्वंप्लुतंच। मर्त्यासः आज्जसेरसुक् ॥ ११ ॥

द्वादशीमृचमाह—

यावयद्द्वेषाऋतपाऋतेजाःसुम्नावरीसूनृताईरयन्ती।
सुमङ्गलीर्बिभ्रतीदेववीतिमिहाद्योपःश्रेष्ठतमाव्युच्छ ॥ १२ ॥

यवयत्ऽद्वेषाः । ऋतऽपाः । ऋतेऽजाः । सुम्नऽवरी । सूनृताः ।
ईरयन्ती । सुऽमङ्गलीः । बिभ्रती । देवऽवीतिम् । इह । अद्य । उषः ।
श्रेष्ठऽतमा । वि । उच्छ ॥ १२ ॥

यावयद्द्वेषाःयावयन्तिअस्मत्तः पृथक्कुर्तानिद्वेषांसिद्वेष्टॄणिराक्षसादीनिययासातथोक्ता तद्युपसिजातायांराक्षसादयोवतिष्ठन्ते यतस्तेनिशाचराः ऋतपाःऋतस्यसत्यस्ययज्ञस्यवापालयित्रीऋतेजाःयज्ञार्थमाविर्भूतासत्याभुपसिअहनियागाअनुष्ठीयन्तेअतोयज्ञार्थजातेत्युच्यते सुम्नावरी सुम्नमितिसुखनाम तद्वती सूनृता वाङ्नामैतत् पशुपक्षिमृगादीनांवचांसिईरयन्तीमेरयन्तीउत्पादयन्ती सुमङ्गलीःसौमङ्गल्योपेता पत्याकदाचिदपिनवियुक्तेत्यर्थः देववीतिं देवैःकाम्यमानंयज्ञंबिभ्रती

धारयन्ती हेउषः श्रेष्ठतमाउक्तेनमकारेणअतिप्रशस्तात्वं इहअस्मिन्देवयजनदेशे अद्यअस्मिन्यागसमये व्युच्छ विवासय ॥ यावयद्द्वेषाः युमिश्रणामिश्रणयोः अस्माण्यन्ताच्छटःशतृ तस्य छन्दस्युभयथेत्यार्धधातुकत्वात् अदुपदेशाल्लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययस्वर एवशिष्यते पुनर्बहुव्रीहौसएवस्वरः छान्दसःपदकालीनोह्रस्वः । ऋतपाः ऋतंपातिरक्षतीत्यृतपाः पारक्षणे विच् । ऋतेजाः ऋतेनिमित्तभूतेजायतइत्यृतेजाः जनीप्रादुर्भावे जनसनखनक्रमगमोविट् विड्वनोरनुनासिकस्यादित्यात्वम् तत्पुरुषेकृतिबहुलमितिसप्तम्याअलुक् । सुम्नावरी छन्दसीवनिपाविविमत्वर्थीयोवनिप् वनोरचेतिङीप् नकारस्यरेफादेशश्च अन्येषामपिदृश्यतइतिदीर्घः व्यत्ययेनप्रत्ययस्याद्युदात्तत्वम् । सुमंगलीः सुमंगलावसंज्ञायामितिगौरादिषुपाठाद्ङीप् सर्वेविधयश्छन्दसिविकल्प्यन्तइतिहल्ङ्याब्भ्यइतिसुलोपस्यविकल्पितत्वाद्भावेरुत्वविसर्गौ । देववीतिं वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु देवैर्वीयतेकाम्यतइतिदेववीतिर्यज्ञः कर्मणिक्तिन् दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

शश्वत्पुरोषाव्युवासदेव्यथोअद्येदंव्यावोमघोनी ।
अथोव्युच्छादुत्तराँअनुद्यूनजरामृताचरतिस्वधाभिः ॥ १३ ॥

शश्वत् । पुरा । उषाः । वि । उवास । देवी । अथो इति । अद्य ।
इदम् । वि । आवः । मघोनी । अथो इति । वि । उच्छात् ।
उत्ऽतरान् । अनु । द्यून् । अजरा । अमृता । चरति । स्वधाभिः ॥ १३

देवीदेवनशीलोषाः पुरापूर्वस्मिन्कालेशश्वत् नित्यंसततंव्युवास व्यौच्छत् अथोअनन्तरं अथास्मिन्कालेमघोनीधनवतीउषाः तमसातिरोहितमिदंसर्वंजगद्व्यावः विवासितंप्रकाशनेनतमसावियुक्तमकरोत् अथोअनन्तरंउत्तरानूर्ध्वतरान् भाविनः द्यून्दिवसान् अनुलक्ष्यआगामिष्वपिदिवसेषुव्युच्छात् व्युच्छति विवासति अतःकालत्रयव्यापिनीसोषाः अजराजरारहितासर्वदैकरूपाअमृतामरणरहिताचसती स्वधाभिः आत्मीयैस्तेजोभिःसहचरतिवर्तते ॥ उवास वसनिवासे लिटचभ्यासस्योभयेषामित्यभ्यासस्यसंप्रसारणम् । आवः वसप्रादेवधातोर्लङ्बहुलंछन्दसीति विकरणस्यलुक् हल्ङ्याब्भ्यइतितिलोपः छन्दस्यपिदृश्यतइत्याडागमः । उच्छात् लेटचाडागमः । उत्तरान् दीर्घादटिसमानपादेइतिनकारस्यरुत्वम् आतोऽटिनित्यमितिसानुनासिकआकारः ।

अनु अनुर्लक्षणेइतिअनोःकर्मप्रवचनीयत्वम् । अजरा अमृता नञोबहुव्रीहौनञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वम् ॥१३ ॥

चतुर्दशीमृचमाह—

व्यं१ञ्जिभिर्दिवआतास्वद्यौदपंकृष्णांनिर्णिजंदेव्यावः ।
प्रबोधयन्त्यरुणेभिरश्वैरोपायातिसुयुजारथेन ॥ १४ ॥

वि । अञ्जिऽभिः । दिवः । आतासु । अद्यौत् । अप । कृष्णाम् । निःऽनिजम् । देवी । आवरित्यावः । प्रऽबोधयन्ती । अरुणेभिः । अश्वैः । आ । उषाः । याति । सुऽयुजा । रथेन ॥ १४ ॥

दिवोनभसः संबन्धिनीषुआतासु दिङ्नामैतत् आततासुविस्तीर्णासुदिक्षु उषाः अञ्जिभिः व्यञ्जकैः प्रकाशकैस्तेजोभिः व्यद्योत विद्योतते प्रकाशते सोषादेवीदेवनशीलाकृष्णांनिर्णिजम् निर्णिगितिरूपनाम रात्रिकृतंकृष्णंरूपं अपावःअपावृणोत प्रकाशेनतिरस्कृतवती अपिच अरुणेभिः अरुणैर्लोहितवर्णैः अश्वैर्व्यापनशीलैःस्वकीयैःकिरणैः तुरगैर्वा सुयुजासम्यक्युक्तेनरथेन उपायाति आगच्छति किंकुर्वती प्रबोधयन्ती सुप्तान्प्राणिनःप्रबुद्धान् कुर्वती ॥ अद्यौत् द्युतदीप्तौ लुङ् द्युद्भ्योलुङीतिपरस्मैपदम् व्यत्ययेनच्लेर्लुक् गुणेप्राप्तेवृद्धिश्छान्दसी यद्वा द्युअभिगमने आदादिकः उतोवृद्धिर्लुकिहलीतिवृद्धिः ॥ १४ ॥

देवीनांहविष्पुआवहन्त्येपोषसोयाज्या सवितंच—आद्यांतनोपरिश्मिभिरावहन्तीपोष्यावार्याणिनताअर्वारेणुककाटोअश्नुतइति ।

पञ्चदशीमृचमाह—

आवहन्तीपोष्यावार्याणिचित्रंकेतुंकृणुतेचेकिताना ।
ईयुषीणामुपमाशश्वतीनांविभातीनांप्रथमोषाव्यश्वैत् ॥१५॥३॥

आऽवहन्ती । पोष्या । वार्याणि । चित्रम् । केतुम् । कृणुते । चेकिताना । ईयुषीणाम् । उपऽमा । शश्वतीनाम् । विऽभातीनाम् । प्रथमा । उषाः । वि । अश्वैत् ॥ १५ ॥ ३ ॥

पोष्यायावज्जीवपोषणसमर्थानि वार्याणिवरणीयानिधनानि आवहन्ती अस्मभ्यंआनयन्ती चेकितानासर्वंजनंप्रज्ञापयन्तीउषाःचित्रंविचित्रंआश्चर्यभूतंचायनीयंवाकेतुंप्रज्ञापकंरश्मिं कृत्स्नंजगत्प्रकाशनसमर्थंकृणुते स्वात्मनःप्रकाशात्कुरुते सैषाईयुषीणांगमनवतीनांपूर्वंनिष्पन्नानां शश्वतीनांबह्वीनांउषसांउपमाउपसमीपेनिर्मिताउपमानभूतावा विभातीनांविशेषेणप्रकाशमानानांआगामिनीनांउषसांप्रथमाआद्या एवंभूतोषाःव्यश्वैत् वेजसाप्रवृद्धासीत् ॥ पोष्या पुषपुष्टौ पोषणंपोषःभावेघञ् तत्रभवानि भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वं शेश्छन्दसि बहुलमितिशेर्लोपः। वार्याणि वृङ्संभक्तौ ऋहलोर्ण्यत् ईडवन्दवृशंसदुहांण्यतइत्याद्युदात्तत्वम्। चेकिताना कितज्ञाने अस्माद्यङन्ताल्लटःशानच् छन्दस्युभयथेतितस्यार्धधातुकत्वादतोलोपयलोपौ अभ्यस्तानामादिरित्याद्युदात्तत्वम्। ईयुषीणाम् इण्गतौ लिटःक्वसुः द्विर्भावादि उगितश्चेतिङीप् वसोःसंप्रसारणम् इणोयणितियणादेशः दीर्घइणःकितीत्यभ्यासस्यदीर्घत्वम् शासिवसिघसीनांचेतिषत्वम् ङीप्सुपौपित्त्वादनुदात्तौ। विभातीनाम् भादीप्तौ अस्माच्छत्रन्तात्पूर्ववङ्ङीप् ङ्याश्छन्दसिबहुलमितिनामउदात्तत्वम्। अश्वैत् टुओश्विगतिवृद्ध्योः लङि बहुलंछन्दसीतिविकरणस्यलुक् गुणेकृतेव्यत्ययेनैत्वम् ॥ १५ ॥

॥ इतिप्रथमस्याष्टमेतृतीयोवर्गः ॥ ३ ॥

षोडशीमृचमाह—

उदीर्ध्वंजीवोअसुर्नआगादपप्रागात्तमआज्योतिरेति ।
आरैक्पन्थांयातवेसूर्यायागन्मयत्रप्रतिरन्तआयुः ॥ १६ ॥

उत् । ईर्ध्वम् । जीवः । असुः । नः । आ । अगात् । अप । प्र ।
अगात् । तमः । आ । ज्योतिः । एति । अरैक् । पन्थाम् । यातवे ।
सूर्याय । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ १६ ॥

हेमनुष्याः उदीर्ध्वंशयनंपरित्यज्यउद्गच्छत नोस्माकंअसुःशरीरस्यप्रेरयिताजीवोजीवात्माआगात्आगतवान् तमःअपप्रागात्अपक्रान्तं उषसःप्रकाशेसतिसर्वंजीवव्यापारयोगः तस्मात्परमात्मरूपत्वपातचजीवस्तद्देवज्योतिरितिआगच्छति सूर्यांप्रसर्पस्यपन्थांमार्गंआरैक्विविक्तीकरोति यातवेगमनायतस्मिन्देशेगच्छामः अत्रयस्मिन्देशेआयुः अन्ननामैतत् अन्नंप्रतिरन्ते प्रपूर्वंस्तिरतिर्वर्धनार्थः उष्टाराःदानेनप्रवर्धयन्ति ॥ ईर्ध्वम् ईरगतौ आदादिकोनुदात्तेत्। आरैक्

१ सर्वजनानव्यापारयोगःइतिपाठः।

रिचिर्विरेचने लङि बहुलंछन्दसीतिविकरणस्यलुक् गुणेव्यत्ययेनैत्वम् । पन्थाम् द्वितीयायामपिपथिमथ्यृभुक्षामात्इतिव्यत्ययेनात्वम् ।अगन्म गमेर्लङिबहुलंछन्दसीतिविकरणस्यलुक् म्वोश्चेतिमकारस्यनकारः ॥ १६ ॥

सप्तदशीमृचमाह—

स्यूमनावाचउदियर्तिवह्निस्तवानोरेभउषसोविभातीः ।
अद्यातदुच्छगृणतेमघोन्यस्मेआयुर्निदिदीहिप्रजावत् ॥ १७ ॥

स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः । अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मे इति । आयुः । नि । दिदीहि । प्रजाऽवत् ॥ १७ ॥

वह्निः स्तोत्राणांवोढा रेभः स्तोतृनामैतत् स्तोताउषसोविभातीः तमसोपनोदनेनप्रकाशमानाउषोदेवतास्तवानःस्तुवन् वाचोवेदरूपायाःसंबन्धीनिस्यूमनास्यूमानिअनुस्यूतानिसंतान्युक्थानिउदियर्तिउद्गमयतिउच्चारयति अतोहेमघोनिमघवत्युषः अद्यास्मिन्समये गृणते स्तुवते तस्मैपुरुषायतदुच्छ वृष्टिनिरोधकतयाप्रसिद्धंनैशंतमोविवासय वर्जय अस्मेअस्मभ्यंचप्रजावत्प्रजाभिःपुत्रपौत्रादिभिर्युक्तंआयुरन्नंनिदिदीहि नितरांप्रकाशय दीदेतिश्छान्दसोदीप्तिकर्मा प्रयच्छेत्यर्थः ॥ स्यूमना षिवुतन्तुसन्ताने अन्येभ्योपिदृश्यन्तइतिदृशिग्रहणस्यसर्वोपाधिव्यभिचारार्थत्वात्कर्मणिमनिन् छ्वोःशूडितिऊठ् आङ्याजयारांचोपसंख्यानमितिविभक्तेराङादेशः यद्वा औणादिकोभावेमक् पामादिलक्षणोमत्वर्थीयोनः बन्धनयुक्तानीत्यर्थः शेश्छन्दसिबहुलमितिशेर्लोपः व्यत्ययेनाद्युदात्तत्वम् । वाचः सावेकाचइतिङसउदात्तत्वम् । इयर्ति ऋगतौ जौहोत्यादिकः श्लुः अर्तिपिपर्त्योश्चेतिअभ्यासस्येत्वम् । स्तवानः ष्टुञ्स्तुतौ शानचिअदादित्वाच्छपोलुक् तस्य छन्दस्युभयथेत्यार्धधातुकत्वेनङित्त्वाभावाद्गुणावादेशौ व्यत्ययेनाद्युदात्तत्वम्। विभातीः शतुरनुमोनद्यजादीइतिङीपउदात्तत्वम् । गृणते गृशब्दे क्र्यादिकः प्वादीनांह्रस्वः पूर्वेकिनसूत्रेणविभक्तेरुदात्तत्वम् । अस्मे सुपांसुलुगितिचतुर्थ्याःशेआदेशः ॥ १७ ॥

अष्टादशीमृचमाह—

यागोमतीरुषसःसर्ववीराव्युच्छन्तिदाशुषेमर्त्याय ।
वायोरिवसूनृतानामुदर्केताअश्वदाअश्नवत्सोमसुत्वा ॥ १८ ॥

याः । गोऽमतीः । उषसः । सर्वऽवीराः । विऽउच्छन्ति । दाशुषे । मर्त्याय । वायोःऽइव । सूनृतानाम् । उत्ऽअर्के । ताः । अश्वऽदाः । अश्नवत् । सोमऽसुत्वा ॥ १८ ॥

दाशुषेहवींषिदत्तवते मर्त्यायमनुष्याययजमानाय गोमतीः गोमत्योबहुभिर्गोभिर्युक्ताः सर्ववीराः सर्वैःशरणसमर्थैःवीरैः शूरैर्युक्ताः याउषसोव्युच्छन्तितमोवर्जयन्ति वायोरिव वायुवच्छीघ्रंवर्तमानानां सूनृतानां स्तुतिरूपाणां वाचां उदर्के समाप्तौ अश्वदाअश्वानां दात्रीस्ताउषसः सोमसुत्वासोमानामभिषोता यजमानः अश्नवद्व्याप्नोतु ॥ दाशुषे दाशृदाने दाश्वान्साह्वानिति क्वसुप्रत्ययान्तोनिपात्यते चतुर्थ्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् । अश्नवत् अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् लेटयडागमः इतश्चलोपइतीकारलोपः । सोमसुत्वा षुञ्अभिषवे अन्येभ्योपिदृश्यन्तइतिक्वनिप् ह्रस्वस्यपितीतितुक् ॥ १८ ॥

एकोनविंशीमृचमाह—

मातादेवानामदितेरनीकंयज्ञस्यकेतुर्बृहतीविभाहि ।
प्रशस्तिकृद्ब्रह्मणेनोव्यु१च्छानोजनेजनयविश्ववारे ॥ १९ ॥

माता । देवानाम् । अदितेः । अनीकम् । यज्ञस्य । केतुः । बृहती । वि । भाहि । प्रशस्तिऽकृत् । ब्रह्मणे । नः । वि । उच्छ । आ । नः । जने । जनय । विश्वऽवारे ॥ १९ ॥

हेउषः त्वंदेवानांमाताजननी उषसिसर्वेदेवाःस्तुत्याप्रबोध्यन्ते अतःसातज्जननवतीत्युच्यते अतएवअदितेर्देवानांमातुरनीकंप्रत्यनीकंप्रतिस्पर्धिनीत्वमित्यर्थः यद्वा दीव्यन्तीतिदेवारश्मयः तेषांनिर्मात्रीअदितेरखण्डनीयायाभूमेरनीकंमुखं यथाइन्द्रियाश्रयत्वान्मुखं प्रकाशकं एवमुषाः भूमेः प्रकाशयित्रीत्यर्थः यज्ञस्यकेतुः यज्ञस्यकेतयित्री ज्ञापयित्रीबृहतीमहतीसतीविभाहि प्रकाशस्व अपिचप्रशस्तिकृत् सम्यक्स्तुतमितिप्रशंसनंकुर्वतीनोस्मदीयाय ब्रह्मणेमन्त्ररूपायस्तोत्रायव्युच्छविवासय तदनन्तरं हेविश्ववारेसर्वैर्वरणीयेउषः नोस्मान्जनेजनपदेआजनय आभिमुख्येन प्रादुर्भावय अवस्थापयेत्यर्थः ॥ बृहती बृहन्महतोरुपसंख्यानमितिङीपउदात्तत्वम् । प्रशस्तिकृत् शंसुस्तुतौ भावेक्तिन् तितुत्रेतीट्प्रतिषेधः अनिदितामितिनलोपः तस्मिन्नुपपदेकरोतेःक्विप्चेति-

क्विप्। जनय जनीमादुर्भावे णिच्युपधावृद्धिः जनीजॄक्नुरञ्जोऽमन्ताश्चेतिमित्त्वे मितांह्रस्वइति ह्रस्वत्वम् ॥ १९ ॥

विंशीमृचमाह--

यच्चित्रमप्नउपसोवहन्तीजानायशशमानायभद्रम्।
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥२०॥४॥

यत्। चित्रम्। अप्नः। उपसः। वहन्ति। ईजानाय। शशमानाय। भद्रम्। तत्। नः। मित्रः। वरुणः। ममहन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः॥ २० ॥ ४ ॥

चित्रंचायनीयंअप्नः आप्तव्यंयद्धनंउपसोवहन्तिआनयन्ति ततईजानायहविर्भिरिष्टवते शशमानायस्तुतिभिःसंभजमानायपुरुषायभद्रं भजनीयंतद्भवतीतिशेषः यद्नेनसूक्तेनास्माभिः प्रार्थितंतन्मित्रादयःषड्देवताममहन्तां पूजितंकुर्वन्तु ॥ अप्नः आप्लृव्याप्तौ आपःकर्माख्यायांह्रस्वोनुट्चवेतिबहुलग्रहणादकर्माख्यायामपिअसुन् धातोर्ह्रस्वोनुडागमश्च। ईजानाय यजतेश्छन्दसिलिट् लिटःकानज्वा वचिस्वपीत्यादिनासंप्रसारणद्विर्वचनादि। शशमानाय शशप्लुतगतौ ताच्छीलिकश्चानश् तस्यलसार्वधातुकत्वाभावादनुपदेशाल्लसार्वधातुकस्वराभावेचित्स्वरएवशिष्यते ॥ २० ॥

॥ इतिप्रथमस्याष्टमेचतुर्थोवर्गः ॥ ४ ॥

इमारुद्रायेत्येकादशर्चनवमंसूक्तम् कुत्सस्यार्षं दशम्येकादश्यौत्रिष्टुभौ शिष्टानवजगत्यः रुद्रोदेवता तथाचानुक्रान्तम्--इमाएकादशरौद्रंद्वित्रिष्टुबन्तमिति। शूलगवादिपुरुद्रदेवत्येपुकर्मसुअनेनसूक्तेनदिगुपस्थेया तथाचसूत्रितम्--कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वनइति सर्वेपुरुद्रयज्ञेपुदिशामुपस्थानमिति।

तत्रप्रथमामृचमाह--

इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः।
यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरम् ॥ १ ॥

इमाः । रुद्राय॑ । त॒वसे॑ । क॒प॒र्दिने॑ । क्ष॒यत्ऽवी॑राय । प्र । भ॒रा॒म॒हे॒ । म॒तीः । यथा॑ । शम् । अस॑त् । द्वि॒ऽपदे॑ । चतुः॑ऽपदे । विश्व॑म् । पु॒ष्टम् । ग्रामे॑ । अ॒स्मिन् । अ॒ना॒तु॒रम् ॥ १ ॥

रुद्राय रोदयतिसर्वमन्तकालेइतिरुद्रः यद्वा रुत्संसाराख्यंदुःखंतद्द्रावयति अपगमयति विनाशयतीतिरुद्रः यद्वा रुतः शब्दरूपाउपनिषदः ताभिर्द्रूयतेगम्यतेप्रतिपाद्यतइतिरुद्रः यद्वा रुत्शब्दात्मिकावाणीतत्प्रतिपाद्यात्मविद्यावा तामुपासकेभ्योरातिददातीतिरुद्रः यद्वा रुणद्धिआवृणोतीतिरुत् अन्धकारादि तंद्दणातिविदारयतीतिरुद्रः यद्वा कदाचिद्देवासुरसंग्रामे अग्न्यात्मकोरुद्रःदेवैर्निक्षिप्तंधनमपहृत्यनिरगात् असुरान्जित्वादेवाएनमन्विष्यदृष्ट्वाधनमहरन् तदानीमरुदत् तस्माद्रुद्रइत्याख्यायते तथाचतैत्तिरीयकम्—सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमिति[1] । तस्मैरुद्रायमतीः मननीयाइमाःस्तुतीःप्रभरामहे प्रकर्षेणनिष्पादयामःकीदृशाय तवसेप्रवृद्धाय कपर्दिनेजटिलाय क्षयद्वीरायक्षयन्तोविनश्यन्तोवीरायस्मिन्तादृशाय यद्वा क्षयतिरैश्वर्यकर्मा क्षयन्तः प्राप्तैश्वर्यावीरामरुद्गणाःपुत्रायस्य तस्मै यथायेनप्रकारेण शंशमनीयानांरोगाणांउपशमनं द्विपदे अस्मदीयायमनुष्याय चतुष्पदेगवाश्वप्रभृतयेचअसत्भवेत् तेनप्रकारेणस्तुतीःकुर्मइत्यर्थः अतोस्मिन्नस्मदीयेग्रामेवर्तमानंविश्वंसर्वंप्राणिजातंअनातुरंआतुराःरुग्णाः तैरहितंसत् पुष्टंप्रवृद्धंभवतु ॥ रुद्राय रोदेर्णिलुक्चेतिरक् । तवसे तवतिर्वृद्धयर्थःसौत्रोधातुः औणादिकोऽसिप्रत्ययः । क्षयद्वीराय क्षिक्षये लटःशतृ छन्दस्युभयथेतिशतुरार्धधातुकत्वेनअदुपदेशाल्लसार्वधातुकानुदात्तत्वात्तस्यैवस्वरःशिष्यते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । असत् असभुवि लेटयडागमः इतश्चलोपइतीकारलोपः । द्विपदे द्वौपादावस्य संख्यासुपूर्वस्येतिपादशब्दस्यान्त्यलोपःसमासान्तः चतुर्थ्येकवचनेभसंज्ञायांपादःपदितिपद्भावः एकदेशविकृतस्यानन्यत्वात्द्वित्रिभ्यांपाद्दन्मूर्धसुबहुव्रीहावित्युत्तरपदाद्युदात्तत्वम् । चतुष्पदे स्वरवर्जंपूर्ववत् बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् पूर्वपदंच त्रःसंख्यायाइत्याद्युदात्तम् ॥ १ ॥

रुद्रदेवत्येपशौवपापुरोडाशयोर्मृळानोरुद्रेत्यादिकेद्वेअनुवाक्ये तथाचसूत्रितम्—मृळानोरुद्रोतनोमयस्कृधीतिद्वेआतेपितर्मरुतांसुम्नमेत्विति ।

---

१ तै० सं० १.५ १.।

तयोराद्यांसूक्तेद्वितीयामृचमाह—

मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ।
यच्छंचयोश्चमनुरायेजेपितानदश्यामतवरुद्रप्रणीतिषु ॥ २ ॥

मृळ । नः । रुद्र । उत । नः । मयः । कृधि । क्षयत्ऽवीराय । नमसा । विधेम । ते । यत् । शम् । च । योः । च । मनुः । आऽयेजे । पिता । तत् । अश्याम । तव । रुद्र । प्रऽनीतिषु ॥ २ ॥

हेरुद्र नोस्मभ्यंअस्मदर्थंमृळ त्वंसुखयिताभव उतअपिचतदनन्तरंनोस्माकंमयःसुखंकृधि कुरु वयंचक्षयद्वीरायक्षयितसर्ववीरंमोक्षैश्वर्यैर्मरुद्भिर्युक्तंवा तेत्वांनमसाहविर्लक्षणेनान्नेननमस्कारेणवाविधेम परिचरेम विधतिःपरिचरणकर्मा अपिच पितोत्पादकोमनुः स्वकीयाभ्यःप्रजाभ्यः शंरोगाणांशमनंयोश्चभयानांयावनञ्च यदेतद्द्वयंआयेजे देवेभ्यःसकाशात्प्राप्यदत्तवान् हेरुद्र तवप्रणीतिषुप्रकृष्टनयनेषुसत्सुतद्द्वयंअश्यामव्याप्नुयाम ॥ मृळ मृडसुखने तौदादिकः द्व्यचोतस्तिङ इतिसंहितायांदीर्घः । कृधि करोतेर्लोटिबहुलंछन्दसीतिविकरणस्यलुक् श्रुशृणुपॄकृवृभ्यश्छन्दसीतिहेर्धिः अतःकृकमीतिमयसोविसर्जनीयस्यसत्वम् । क्षयद्वीराय क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थी । विधेम विधविधाने तौदादिकः । आयेजे यजदेवपूजासंगतिकरणदानेषु लिटिसंज्ञापूर्वकस्यविधेरनित्यत्वात्संप्रसारणाभावेएत्वाभ्यासलोपौ । अश्याम अशूव्याप्तौ व्यत्ययेनपरस्मैपदम् बहुलंछन्दसीतिविकरणस्यलुक् ॥ २ ॥

तृतीयामृचमाह—

अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ।
सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ ३ ॥

अश्याम । ते । सुऽमतिम् । देवऽयज्यया । क्षयत्ऽवीरस्य । तव । रुद्र । मीढ्वः । सुम्नऽयन् । इत् । विशः । अस्माकम् । आ । चर । अरिष्टऽवीराः । जुहवाम । ते । हविः ॥ ३ ॥

हेमीढ्वः सेक्तः कामाभिवर्षकनित्यतरुणवारुद्र क्षयद्वीरस्यक्षयितप्रतिपक्षस्यमरुद्भिर्युक्तस्यवा तवसुमतिंशोभनांकल्याणींअनुग्रहात्मिकांबुद्धिं तेत्वत्संबन्धिनोवयंदेवयज्ययादेवयागेन त्वद्देवत्येनयज्ञेनअश्यामव्याप्नवाम त्वंचास्माकंविशःप्रजाअभिलक्ष्यआचरआगच्छ किंकुर्वन् सुम्नायन्निव् सुम्नमितिसुखनाम तासांप्रजानांसुखमिच्छन्नेवसुखप्रदएवभवेत्यर्थः ततोवयंअरिष्टवीरा वीर्याज्जायन्तइतिवीराःप्रजाः अरिष्टाअहिंसितावीरायेषांतथाभूताःसन्तः तेतुभ्यंहविः चरुपुरोडाशादिकंजुहवाम चोदितेआधारेप्रक्षिपाम ॥ सुमतिं मतिर्मननं शोभनंमननंयस्यां बुद्धौसासुमतिः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । देवयज्यया छन्दसिनिष्टर्क्येत्यादौयजेर्यप्रत्ययोनिपात्यते स्त्रीलिङ्गत्वाच । मीढ्वः मिहसेचने दाश्वान्साह्वान्मीढ्वानितिक्वसुप्रत्ययान्तोनिपातितः संबुद्धौमतुवसोरुरितिरुत्वम् । सुम्नायन् सुम्नंपरेषामिच्छति छन्दसिपरेच्छायामपीतिक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः देवसुम्नयोर्यजुषिकाठकेइतिविधीयमानमात्वंव्यत्ययेनात्रापिद्रष्टव्यम् ॥ ३ ॥

चतुर्थीमृचमाह–

त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे।
आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ ४ ॥

त्वेषम् । वयम् । रुद्रम् । यज्ञऽसाधम् । वंकुम् । कविम् । अवसे ।
नि । ह्वयामहे । आरे । अस्मत् । दैव्यम् । हेळः । अस्यतु ।
सुऽमतिम् । इत् । वयम् । अस्य । आ । वृणीमहे ॥ ४ ॥

अवसेरक्षणाय रुद्रंमहादेवंनिह्वयामहे नितरामाह्वयामः कीदृशंत्वेषंदीप्तम् यज्ञसाधंयज्ञस्यसाधयितारं एषहियज्ञंस्विष्टंकरोति तथाचतैत्तिरीयकेदेवावैयज्ञाद्रुद्रमन्तरायन्नित्युपक्रम्याम्नातम्–स्विष्टंवैनइदंभविष्यतियदिमंराधयिष्यामइतितत्स्विष्टकृतःस्विष्टकृत्त्वमिति[1] । वंकुंकुटिलगन्तारं कविंक्रान्तदर्शिनम् सचरुद्रः दैव्यंदेवस्यद्योतमानस्य संबन्धिनंहेळः क्रोधं अस्मदारेअस्मत्तोदूरदेशेअस्यतुक्षिपतु अस्यमहादेवस्यसुमतिमित्शोभनामनुग्रहरूपांबुद्धिमेववयमावृणीमहे आभिमुख्येनसंभजामहे ॥ यज्ञसाधं यज्ञंसाधयतीतियज्ञसाध् षिधुसंराद्धौ सिध्यतेरपारलौकिकेइत्यात्वम् यद्वा राधसाधसंसिद्धौ अस्माण्ण्यन्ताद्विक्प् । वंकुं वकि-

[1] तै० सं० २. ६. ८. ।

कौटिल्ये औणादिकउमत्ययः । निह्वयामहे निसमुपविभ्योह्वइत्यात्मनेपदम् । दैव्यं देवाद्य-
ञ्ञाविति प्राग्दीव्यतीयोयञ् । अस्यतु असुक्षेपणे दैवादिकः । वृणीमहे वृङ्संभक्तौ क्र्यादि-
कः ॥ ४ ॥

पञ्चमीमृचमाह—

दि॒वो व॑रा॒हम॑रु॒षं क॑प॒र्दिनं॑ त्वे॒षं रू॒पं नम॑सा॒ नि ह्व॑यामहे ।
हस्ते॒ बिभ्र॑द्भेष॒जा वार्या॑णि॒ शर्म॒ वर्म॑ च्छ॒र्दिर॒स्मभ्यं॑ यंसत् ॥५॥५॥

दि॒वः । व॒रा॒हम् । अ॒रु॒षम् । क॒प॒र्दिन॑म् । त्वे॒षम् । रू॒पम् । नम॑सा ।
नि । ह्व॒या॒म॒हे॒ । हस्ते॑ । बिभ्र॑त् । भे॒ष॒जा । वार्या॑णि । शर्म॑ । वर्म॑ ।
छ॒र्दिः ।अ॒स्मभ्य॑म् । य॒ंस॒त् ॥ ५ ॥ ५ ॥

वराहं वराहारमुत्कृष्टभोजनं यद्वा वराहवद्दृढाङ्गं अरुषमारोचमानं कपर्दिनंजटा-
भिर्युक्तं त्वेषं तेजसादीप्यमानं रूपं निरूपणीयं वेदान्तैरधिगम्यं एवंभूतं रुद्रंनमसा हविर्ल-
क्षणेनान्नेन नमस्कारेणवा दिवोद्युलोकसकाशान्निह्वयामहे नितरामाह्वयामः सआहूतोरुद्रः
हस्तेस्वकीये बाहौवीर्याणिसर्वैर्वरणीयानि भेषजा भैषज्यानिरोगशमनहेतुभूतानिबिभ्रत् धारय-
न्नस्मभ्यंस्तोतृभ्यः शर्म आरोग्यलक्षणंसुखं वर्मआयुधानांनिवारकंकवचं छर्दिः गृहनामैतत्
गृहंसवप्रयच्छतु ॥ बिभ्रत् डुभृञ्धारणपोषणयोः जौहोत्यादिकः श्लुः शतृ भृञामिदित्यभ्यास-
स्येत्वम् । भेषजा भिषजचिकित्सायाम् कण्ड्वादिः पचाद्यच् अतोलोपयलोपौ सुमङ्गलभेषजाच्चे-
तिनिपातनाद्रूपसिद्धिः शेश्छन्दसिबहुलमितिशेर्लोपः । वार्याणि वृङ्संभक्तौ ऋहलोर्ण्यत् ईडव-
न्द्येत्याद्युदात्तत्वम् । छर्दिः उछृदिर्दीप्तिदेवनयोः छृद्यतेदीप्यतेसुवर्णादिभिर्धनैःप्रकाश्यते इतिछ-
र्दिर्गृहं अर्चिशुचिहुसृपिछादिछर्दिभ्यइस् । यंसत् यमउपरमे लेटचडागमः सिब्बहुलंलेटीतिसिप्
इतश्चलोपइतीकारलोपः ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेपञ्चमोवर्गः ॥ ५ ॥

षष्ठीमृचमाह—

इ॒दं पि॒त्रे म॒रुता॑मुच्यते॒ वचः॑ स्वा॒दोः स्वादी॑यो रु॒द्राय॒ वर्ध॑नम् ।
रास्वा॑ च नो अमृत मर्त॒भोज॑नं॒ त्मने॑ तो॒काय॒ तन॑याय मृळ ॥ ६ ॥

इदम् । पित्रे । मरुताम् । उच्यते । वचः । स्वादोः । स्वादीयः । रुद्राय । वर्धनम् । रास्व । च । नः । अमृत । मर्तऽभोजनम् । त्मने । तोकाय । तनयाय । मृळ ॥ ६ ॥

इदंस्तुतिलक्षणंवचः मरुतां एकोनपञ्चाशत्संख्यानां देवविशेषाणां पित्रे जनकायरुद्रायेश्वरायउच्यते उच्चारयति कीदृशं स्वादोः स्वादीयः रसवतोमधुघृतादेरपिस्वादुतरं अतिशयेनहर्षजनकमित्यर्थः वर्धनंस्तुत्यस्यप्रवर्धकं स्तोत्रेणहिदेवताहृष्टासतीवर्धते रुद्रस्यचमरुतां पितृत्वमेवमाम्नायते—पुराकदाचिदिन्द्रोअसुरानजिगाय तदानींदितिरसुरमाता इन्द्रहननसमर्थंपुत्रंकामयमाना तपसाभर्तुःसकाशाद्गर्भंलेभे इमंवृत्तान्तमवगच्छन्इन्द्रोवज्रहस्तःसन् सूक्ष्मरूपोभूत्वातस्याउदरंप्रविश्यतंगर्भंसप्तधाबिभेद पुनरप्येकैकंसप्तखण्डमकरोत् तेसर्वेगर्भैकदेशाः योनेर्निर्गत्यारुदन् एतस्मिन्नवसरेलीलार्थंगच्छन्तौ पार्वतीपरमेश्वरौ इमानद्राक्षतुः महेशंप्रति पार्वत्येवमवोचत् इमेमांसखण्डाः यथाप्रत्येकंपुत्राःसंपद्यन्तां एवंत्वयाकार्यंमयिचेत्प्रीतिरस्तीति सचमहेश्वरस्तान् समानरूपान् समानवयसः समानालङ्कारान् पुत्रान्कृत्वागौर्यैप्रददौ तवेमेपुत्राः सन्त्विति अतःसर्वेषुमारुतेषुसूक्तेषुमरुतोरुद्रपुत्राइतिस्तूयन्ते रौद्रेपुचमरुतांपितारुद्रइति अपिच हे अमृतमरणरहितरुद्र मर्तभोजनंमर्तानांमनुष्याणां भोगपर्याप्तमन्नंनोस्मभ्यंरास्व प्रयच्छ तथात्मने आत्मने द्वितीयार्थेचतुर्थी मां तोकायतोकं पुत्रं तनयं तत्पुत्रंचमृळ सुखय ॥ पित्रे उदात्तयणइतिविभक्तेरुदात्तत्वम् । रास्व रादाने व्यत्ययेनात्मनेपदम् । त्मने मन्त्रेष्वाङ्यादेरात्मनइत्यत्राङोन्यत्रापिच्छन्दसिदृश्यतइतिवचनाद्दात्मनआकारलोपः ॥ ६ ॥

सप्तमीमृचमाह—

मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमानउक्षितम् ।
मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिपः ॥ ७ ॥

मा । नः । महान्तम् । उत । मा । नः । अर्भकम् । मा । नः । उक्षन्तम् । उत । मा । नः । उक्षितम् । मा । नः । वधीः । पितरम् । मा । उत । मातरम् । मा । नः । प्रियाः । तन्वः । रुद्र । रिरिषः ॥ ७॥

हेरुद्र नोस्माकंमध्येमहान्तंवृद्धंमावधीः माहिंसीः उतअपिच नोस्माकंअर्भकंबालंमाहिंसीः तथानोस्माकंमध्येउक्षन्तंसेक्तारंमध्यवयस्कंयुवानंमावधीः उतअपिचनोस्माकमुक्षितंगर्भरूपेणस्थितंपुनिषिक्तमपत्यंमावधीः तथानोस्माकंपितरंजनकंमावधीः उतअपिचमातरंजननींमावधीः तथानोस्माकंप्रियाःस्नेहविषयास्तन्वः शरीराणि तनूप्रभवाःप्रजावा हेरुद्र मारीरिषःमाहिंसीः ॥ वधीः हन्तेर्माङि लुङिचेतिवधादेशः सचादन्तः सिचइट् अतोलोपस्यस्थानिवद्भावादवृद्ध्यभावः। रीरिषः रिषहिंसायाम् ण्यन्ताल्लुङिचङिणिलोपोपधाह्रस्वत्वादीनि छान्दसःपदकालीनोभ्यासह्रस्वः ॥ ७ ॥

अष्टमीमृचमाह—

मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः।
वीरान्मानोरुद्रभामितोवधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ ८ ॥

मा। नः। तोके। तनये। मा। नः। आयौ। मा। नः। गोषु। मा। नः। अश्वेषु। रिरिषः। वीरान्। मा। नः। रुद्र। भामितः। वधीः। हविष्मन्तः। सदम्। इत्। त्वा। हवामहे ॥ ८ ॥

हेरुद्र नोस्माकंतोकादिविषयेमारीरिषः माहिंसीः तोकशब्दःपुत्रवाची तनयस्तत्पुत्रः आयुरित्यन्तोदात्तंमनुष्यनाम पुत्रपौत्रव्यतिरिक्तोयोस्मदीयोमनुष्यस्तस्मिन्नहिंसांमाकृथाः तथा हेरुद्र वीरान्विक्रान्तानशौर्योपेतानस्मदीयान्भामितःक्रुद्धःसन्मावधीः माहिंसीः वयंचहविष्मन्तोहविर्भिर्युक्ताःसन्तःसदमित्सर्वदैव त्वांहवामहेआह्वयामहे ॥ आयौ इण्गतौ छन्दसीणइत्युण्प्रत्ययः। भामितः भामक्रोधे क्तोविकरणेचेतिकर्तरिक्तः। हवामहे ह्वेञोलटिबहुलंछन्दसीतिसंप्रसारणम्॥ ८ ॥

देवहृवांहविष्पुरुद्रस्यपशुपतेर्यागेउपतेस्तोमानित्याद्विकेयाज्यानुवाक्ये सूत्रितंच—उपतेस्तोमान्पशुपाइवाकरमितिद्वेइति।

तयोराद्यांसूक्तेनवमीमृचमाह—

उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे।
भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे ॥ ९ ॥

उप॑ । ते॒ । स्तोमा॑न् । प॒शु॒पाःऽइ॑व । आ । अ॒क॒र॒म् । रास्व॑ । पि॒तः ।
म॒रु॒ता॒म् । सु॒म्नम् । अ॒स्मे इति॑ । भ॒द्रा । हि । ते॒ । सु॒ऽम॒तिः ।
मृ॒ळ॒यत्ऽत॑मा । अथ॑ । व॒यम् । अवः॑ । इत् । ते॒ । वृ॒णी॒म॒हे॒ ॥९॥

हेरुद्र स्तोमान्स्तुतिरूपानमन्त्रान्तेतुभ्यंउपाकरम् उपकरोमिसमर्पयामि तत्रदृष्टान्तः— यथा पशूनांपालयितागोपः प्रातःकालेस्वस्मैसमर्पितान्पशून्सायंकालेस्वामिभ्यःप्रत्यर्पयति एवंत्वत्सकाशाल्लब्धान्स्तुतिरूपान्मंत्रान्स्तुतिसाधनतयातुभ्यंप्रत्यर्पयामीत्यर्थः हेमरुतांपितः मरुत्संज्ञानांदेवानामुत्पादकरुद्र नोस्मभ्यंसुम्नंसुखंरास्वदेहि अपिच तेत्वदीयासुमतिःकल्याणी बुद्धिः मृळयत्तमाअतिशयेनसुखयितृतमा अतएवभद्राभजनीया हियस्मादेवंतस्मात् अथानन्तरंवयंतेत्वदीयमवोरक्षणंवृणीमहेसंभजामहे ॥ अकरं छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङ् कृमृदृरुहिभ्यइतिच्लेरङादेशः ऋदृशोऽङिगुणः । पितर्मरुतां परमपिछन्दसीतिपरस्याःषष्ठ्याःपूर्वामन्त्रितानुप्रवेशेसत्यामन्त्रितस्यचेतिपदद्वयमनुदात्तम् । अस्मे सुपांसुलुगितिचतुर्थी बहुवचनस्यशेआदेशः । मृळयत्तमा मृडसुखने अस्माण्ण्यन्ताल्लटःशतृ तस्य छन्दस्युभयथेत्यार्धधातुकत्वाल्लसार्वधातुकानुदात्तत्वाभावेप्रत्ययस्वरःशिष्यते॥ ९ ॥

दशमीमृचमाह—

आ॒रे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु ।
मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि देवाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हाः॑ ॥ १० ॥

आ॒रे । ते॒ । गो॒ऽघ्नम् । उ॒त । पु॒रु॒ष॒ऽघ्नम् । क्षय॑त्ऽवीर । सु॒म्नम् ।
अ॒स्मे इति॑ । ते॒ । अ॒स्तु॒ । मृ॒ळ । च॒ । नः॒ । अधि॑ । च॒ । ब्रू॒हि॒ । दे॒व॒ ।
अध॑ । च॒ । नः॒ । शर्म॑ । य॒च्छ॒ । द्वि॒ऽबर्हाः॑ ॥ १० ॥

हेक्षयद्वीर क्षयितसर्वशत्रुजनरुद्र तेत्वदीयं गोघ्नंपश्वोहननं यद्वा गोहननसाधनमायुधं उतअपिच पुरुषघ्नं पुरुषहननं तत्साधनमायुधंवातदुभयं आरेदूरेअस्मत्तोविप्रकृष्टदेशेभवतु अस्मेअस्मासुतेत्वदीयंसुम्नं सुखंअस्तुभवतु अपिचनोस्माकंमृळसुखसिध्यर्थंप्रसन्नोभव हे देवद्योतमानरुद्र नोस्मान् अधिब्रूहिच अधिवचनंपक्षपातेनवचनं ब्राह्मणायाधिब्रूयादितियथा अधच अथानन्तरञ्च द्विबर्हाः द्वयोःस्थानयोःपृथिव्यामन्तरिक्षेचपरिवृढः यद्वा द्वयोर्दक्षिणोचर-

मार्गयोर्ज्ञानकर्मणोर्वापरिवृढःस्वामी सतंनोस्मभ्यंशर्मसुखंयच्छदेहि ॥ गोध्रं हनहिंसागत्योः अस्माद्घञर्थेकविधानमितिभावेकरणेवाकप्रत्ययः गमहनेत्युपधालोपः होहन्तेरितिघत्वम् । द्विबर्हाः दृहिवृहिवृद्धौ द्वयोःस्थानयोःबर्हतेप्रवर्धतेइतिद्विबर्हाः असुन् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १० ॥

एकादशीमृचमाह--

**अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः॥११॥६॥**

**अवोचाम । नमः । अस्मै । अवस्यवः । शृणोतु । नः । हवम् । रुद्रः । मरुत्वान् । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ११ ॥ ६ ॥**

अवस्यवःअवोन्नंरक्षणंवाइच्छन्तोवयंअवोचाम एतत्सूक्तरूपंस्तोत्रंअवादिष्म अस्मैरुद्रायनमोनमस्कारोस्तु मरुत्वान्मरुद्भिःस्वकीयैःपुत्रैर्युक्तोरुद्रश्चनोस्माकंहवमाह्वानंशृणोतुस्वीकरोतु यदस्माभिरुक्तंनोस्मदीयंतत्सर्वंमित्रादयःषड्देवताःममहन्तांपूजयन्तु उतशब्दोप्यर्थे ॥ अवोचाम ब्रूञ्व्यक्तायांवाचि लुङि ब्रुवोवचिः अस्यतिवक्तिख्यातीत्यादिनाच्लेरङादेशः वचउमित्युमागमः । अवस्यवः अवरक्षणे भावेअसुन् सुपआत्मनःक्यच् क्याच्छन्दसीत्युप्रत्ययः । हवम् भावेनुपसर्गस्येत्यप्संप्रसारणंच । मरुत्वान् झयइतिमतुपोवत्वं तसौमत्वर्थेइतिभत्वेनपदत्वाभावाज्जश्त्वाभावः ॥ ११ ॥

॥ इतिप्रथमस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

चित्रमितिषड्चंसूक्तं कुत्सस्यार्षंत्रैष्टुभंसूर्यदेवताकं तथाचानुक्रान्तं—चित्रंषट्सौर्यमिति आश्विनशस्त्रेसूर्योदयादूर्ध्वंसौर्याणिसूक्तानिशंसनीयानि तत्रेदंसूक्तंशंसनीयं सूत्रितंच—चित्रंदेवानांनमोमित्रस्येति । आदितस्तिस्रऋचः सौर्यस्यपशोर्वपापुरोडाशहविषांक्रमेणानुवाक्याः ततोद्वेवपापुरोडाशयोर्याज्ये तथाचसूत्रितं—चित्रंदेवानामुद्गादनीकमितिपश्चशंनोभवचक्षसाशंनोअह्नेति । अतिमूर्तिनाम्न्येकाहेशुनासीर्यपर्वणिचसूर्यस्यहविषश्चित्रंदेवानामित्येषायाज्या सूत्रितंच—तरणिर्विश्वदर्शतश्चित्रंदेवानामुद्गादनीकमितियाज्यानुवाक्या ।

तामेतांप्रथमामृचमाह—

चि॒त्रंदे॒वाना॒मुद॑गा॒दनी॑कं॒चक्षु॑र्मि॒त्रस्य॒वरु॑णस्या॒ग्नेः ।
आप्रा॒द्यावा॑पृथि॒वीअ॒न्तरि॑क्षं॒सूर्य॑आ॒त्माजग॑तस्त॒स्थुष॑श्च॥१॥

चि॒त्रम् । दे॒वाना॑म् । उत् । अ॒गा॒त् । अनी॑कम् । चक्षुः॑ । मि॒त्रस्य॑ ।
वरु॑णस्य । अ॒ग्नेः । आ । अ॒प्राः॒ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तरि॑क्षम् ।
सूर्यः॑ । आ॒त्मा । जग॑तः । त॒स्थुषः॑ । च॒ ॥ १ ॥

देवानां दीव्यन्तीतिदेवारश्मयः तेषांदेवजनानामेववा अनीकंतेजःसमूहरूपं चित्रंआश्चर्यकरं सूर्यमण्डलंउदगात्उदयाचलंप्राप्तमासीत् कीदृशं मित्रस्यवरुणस्याग्नेश्चउपलक्षणमेतत् एतदुपलक्षितानांजगतांचक्षुःप्रकाशकं चक्षुरिन्द्रियस्थानीयंचउदयंप्राप्यचद्यावापृथिवी दिवंपृथिवींअन्तरिक्षंचआप्राः स्वकीयेनतेजसाआसमन्तादपूरयत् ईदृग्भूतमण्डलान्तर्वर्तीसूर्यःअन्तर्यामितयासर्वस्यप्रेरकःपरमात्मा जगतोजङ्गमस्यतस्थुषःस्थावरस्यचआत्मास्वरूपभूतः सहिसर्वस्य स्थावरजङ्गमात्मकस्यकार्यवर्गस्यकारणं कारणाच्चकार्यंनातिरिच्यते तथाचपारमर्षंसूत्रम्—तदनन्यत्वमारंभणशब्दादिभ्यइति यद्वा स्थावरजङ्गमात्मकस्यसर्वस्यप्राणिजातस्यजीवात्मा उदितेहिसूर्येमृतमायंसर्वंजगत्पुनश्चेतनयुक्तंसदुपलभ्यते तथाचश्रूयते—योसौतपन्नुदेतिससर्वेषांभूतानांप्राणानादायोदेतीति ॥ आप्राः प्रापूरणे लङिपुरुषव्यत्ययः अदादित्वाच्छपोलुक् । जगतः गमेर्द्वेचेतिक्विप् द्विर्वचनम् गमःक्कावित्यनुनासिकलोपः । तस्थुषः तिष्ठतेर्लिटःक्वसुः द्विर्वचनेशर्पूर्वाःखयः षष्ठ्येकवचने वसोःसंप्रसारणमितिसंप्रसारणं आतोलोपइटिचेत्याकारलोपः शासिवसिघसीनांचेतिषत्वम् ॥ १ ॥

द्वितीयामृचमाह—

सूर्यो॑दे॒वीमु॒षसं॒रोच॑माना॒म्मर्यो॒नयोषा॑म॒भ्ये॑ति॒प॒श्चात् ।
यत्रा॒नरो॑देव॒यन्तो॑यु॒गानि॑वितन्व॒तेप्रति॑भ॒द्राय॑भ॒द्रम् ॥ २ ॥

---

१ तै० आ० प्रथमाध्याये.

सूर्यः । देवीम् । उषसम् । रोचमानाम् । मर्यः । न । योषाम् ।
अभि । एति । पश्चात् । यत्र । नरः । देवऽयन्तः । युगानि ।
विऽतन्वते । प्रति । भद्राय । भद्रम् ॥ २ ॥

सूर्योदेवींदानादिगुणयुक्तांरोचमानांदीप्यमानामुपसंपश्चादभ्येति उपसःप्रादुर्भावानन्तरं तांअभिलक्ष्यगच्छति तत्रदृष्टान्तः—मर्योनयोषां यथाकश्चिन्मनुष्यःशोभनावयवांगच्छन्तींयुवतिंस्त्रियंसततंअनुगच्छति तद्वत् यत्रयस्यांउपसिजातायांदेवयन्तोदेवंद्योतमानंसूर्यंयष्टुमिच्छन्तोनरोयज्ञस्यनेतारोयजमानाः युगानि युगशब्दःकालवाची तेनचतत्रकर्तव्यानिकर्माणिलक्ष्यन्ते यथादर्शपूर्णमासाविति । अग्निहोत्रादीनिकर्माणिवितन्वतेविस्तारयन्ति यद्वा देवयन्तोदेवयागार्थंधनमात्मनइच्छन्तोयजमानपुरुषाः युगानिहलावयवभूतानिकर्षणायवितन्वतेप्रसारयन्ति तामुषसंअनुगच्छन्तीत्यर्थः एवंविधंभद्रंकल्याणंसूर्यंप्रति भद्रायकल्याणरूपायकर्मफलायस्तुमइतिशेषः यद्वा देवकामायजमानाः युगानियुग्मानिभूत्वापत्नीभिःसहिताःसन्तोभद्रंकल्याणं अग्निहोत्रादिकंकर्मभद्रायतत्फलार्थंप्रतिप्रत्येकंयस्यांउपसिप्रवृत्तायांवितन्वतेविस्तारयन्ति ॥ मर्यः मृङ्प्राणत्यागे छन्दसिनिष्टक्र्यदेवेत्यादौयत्प्रत्ययान्तोनिपात्यते यतोनावइत्याद्युदात्तत्वम् । युगानि युजेःकर्मणिघञ् युगशब्दःकालविशेषेरथाद्युपकरणेचेत्युञ्छादिषुपाठात् गुणाभावोन्तोदात्तत्वं च । वितन्वते तनुविस्तारे तनादिकृञ्भ्यउः सहेतियोगविभागात्तिङोपसर्गस्यसमासेसति समासस्येत्यन्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ।
नमस्यन्तोदिवआपृष्ठमस्थुःपरिद्यावापृथिवीयन्तिसद्यः ॥ ३ ॥

भद्राः । अश्वाः । हरितः । सूर्यस्य । चित्राः । एतऽग्वाः ।
अनुऽमाद्यासः । नमस्यन्तः । दिवः । आ । पृष्ठम् । अस्थुः । परि ।
द्यावापृथिवी इति । यन्ति । सद्यः ॥३॥

भद्राः कल्याणाअश्वाएतग्वाइत्येतदुभयमश्वनाम तत्रैकंक्रियापरंयोजनीयं अश्वाः तुरगाः व्यापनशीलावाहरितोहर्तारः चित्राविचित्रावयवाः अनुमाद्यासः अनुक्रमेणसर्वैस्तुत्यामादनीयाःएवंभूताः सूर्यस्यएतग्वाअश्वाः यद्वा एतंएतव्यंगन्तव्यंमार्गंगन्तारोश्वाः एतंशबलवर्णनी-

त्वर्णंवाप्राप्नुवन्तोऽश्वाः नमस्यन्तः अस्माभिर्नमस्यमानाःसन्तः दिवोन्तरिक्षस्यपृष्ठंउपरिप्रदेशं पूर्वभागलक्षणंआअस्थुः आतिष्ठन्ति प्राप्नुवन्ति यद्वा हरितोरसहरणशीलारश्मयःभद्रादिविशेषणविशिष्टाःदिवः पृष्ठंनभस्तलंआतिष्ठन्ति आस्थायच द्यावापृथिवीद्यावापृथिव्यौसद्यस्तदानीमेवएकेनाह्नापरियन्तिपरितोगच्छन्ति व्याप्नुवन्तीत्यर्थः ॥ अश्वाः अशूव्याप्तौ अशूप्रुषीत्यादिना क्वन् । एतग्वाः इण्गतौ असिहसीत्यादिनाकर्मणितन्प्रत्ययः गमेरौणादिकोभावेड्वप्रत्ययः एतव्यंप्रति ग्वोगमनंयेषांतेतथोक्ताः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अनुमाद्यासः मदिस्तुतौ अस्माण्ण्यन्ताद्चोयत् यतोनावइत्याद्युदात्तत्वम् । नमस्यन्तः नमोवरिवइतिपूजार्थेक्यच् व्यत्ययेनकर्मणिकर्तृप्रत्ययः । अस्थुः तिष्ठतेश्छान्दसोवर्तमानेलुङ् गातिस्थेतिसिचोलुक् आतइतिझेर्जुस् ॥ ३ ॥

चतुर्थीमृचमाह—

तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार ।
यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ ४ ॥

तत् । सूर्यस्य । देवऽत्वम् । तत् । महिऽत्वम् । मध्या । कर्तोः ।
विऽततम् । सम् । जभार । यदा । इत् । अयुक्त । हरितः ।
सधऽस्थात् ।आत् । रात्री । वासः । तनुते । सिमस्मै ॥ ४ ॥

सूर्यस्यसर्वप्रेरकादित्यस्य तद्देवत्वमीश्वरत्वम् स्वातंत्र्यमितियावत् महित्वं महत्वम् माहात्म्यंचतदेव तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यत्कर्तोः कर्मनामैतत् प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्यकर्मणोमध्यामध्येअपरिसमाप्तएवतस्मिन्कर्मणिविततंविस्तीर्णंस्वकीयंरश्मिजालंअस्तंगच्छन्सूर्यः संजभार अस्माल्लोकात्स्वात्मनि उपसंहरति कर्मकरश्चप्रवृत्तं अपरिसमाप्तमेवविसृजति अस्तंयन्तंसूर्यं दृष्ट्वा ईदृशं स्वातंत्र्यंमहिमाचसूर्यव्यतिरिक्तस्यकस्यास्ति नकस्यापि सूर्यएवेदृशंस्वातंत्र्यंमहिमानंचावगाहते अपिच इदित्यवधारणे यदेत् यस्मिन्नेवकाले हरितोरसहरणशीलान् स्वरश्मीन् हरितवर्णानश्वान्वासधस्थात्सहस्थानादस्मात्पार्थिवाल्लोकादादायअयुक्तअन्यत्र संयुक्तान्करोति यद्वा युजिःकेवलोपिविपूर्वोद्रष्टव्यः यदैवासौस्वरश्मीन् अश्वान्वा सधस्थात् सहतिष्ठत्यस्मिन्निति सधस्थोरथः तस्माद्युक्त अमुञ्चत् आत्अनन्तरमेवरात्रीनिशा वासः आच्छादयितृ तमः सिमस्मै सिमशब्दःसर्वशब्दपर्यायः सप्तम्यर्थेचतुर्थी सर्वस्मिन्लोकेतनुतेविस्तारयति यद्वा वासोवासरमहस्तत्सर्वस्मादस्माल्लोकादानीयरात्री

तमस्तनुते अत्रनिरुक्तम्—तत्सूर्यस्यदेवत्वंतन्महित्वंमध्येयत्कर्मणांक्रियमाणानांविततंसंह्रियते-यदासावयुक्तहरणानादित्यरश्मीनहरितोश्वानितिवाथरात्रीवासस्तनुतेसिमस्मैवेसरमहरवयुवती-सर्वस्मादिति[1] ॥ महित्वम् महपूजायाम् औणादिकइनप्रत्ययः तस्यभावस्त्वतलौ । मध्या मध्यशब्दात्सप्तम्येकवचनस्यसुपांसुलुगितिडादेशः । कर्तोः करोतेरौणादिकस्तोसुन्प्रत्ययः । विततं विपूर्वात्तनोतेःकर्मणिनिष्ठा उदित्त्वेन क्त्वाप्रत्ययेइटोविकल्पनात् यस्यविभाषेतीट्प्रतिषेधः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जभार हृग्रहोर्भश्छन्दसीतिभत्वम् । अयुक्त युजेर्लुङि झलोझलीतिसिचोलोपः । सधस्थात् घञर्थेकविधानमितिअधिकरणेकप्रत्ययः सधमादस्थयोश्छन्दसीतिसधादेशः दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । रात्री रात्रेश्चाजसाविति ङीप् ॥ ४ ॥

पञ्चमीमृचमाह—

तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒पं कृ॑णुते॒ द्योरु॒पस्थे॑ ॥
अ॒न॒न्तम॒न्यद्रुश॑दस्य॒ पाजः॑ कृ॒ष्णम॒न्यद्ध॒रितः॒ सं भ॑रन्ति ॥ ५ ॥

तत् । मि॒त्रस्य॑ । वरु॑णस्य । अ॒भि॒ऽचक्षे॑ । सूर्यः॑ । रू॒पम् । कृ॒णु॒ते॒ । द्योः । उ॒पऽस्थे॑ । अ॒न॒न्तम् । अ॒न्यत् । रुश॑त् । अ॒स्य॒ । पाजः॑ । कृ॒ष्णम् । अ॒न्यत् । ह॒रितः॑ । सम् । भ॒र॒न्ति॒ ॥ ५ ॥

तत्तदानींइदमसमये मित्रस्य वरुणस्य एतदुभयोपलक्षितस्य सर्वस्यजगतः अभिचक्षे आभिमुख्येन द्योर्नभसउपस्थे उपस्थानेमध्ये सूर्यःसर्वस्यप्रेरकः सवितारूपं सर्वस्यनिरूपकंप्रकाशकं तेजः कृणुतेकरोति अपिचास्यसूर्यस्य हरितोरसहरणशीलारश्मयः हरिद्वर्णाअश्वावा अनन्तं अवसानरहितं रुशत्सस्य जगतोव्यापकं रुशद्दीप्यमानंश्वेतवर्णम् पाजः बलनामैतत् अतिबलस्यापिनैशस्यतमसोनिवारणेसमर्थं अन्यत्तमसोविचक्षणंतेजःसंभरन्ति अहनि स्वकीयगमनेननिष्पादयन्ति तथाकृष्णं कृष्णवर्णं अन्यत्तमः स्वकीयापगमनेन रात्रौअस्यरश्मयोऽप्येवंकुर्वन्ति किमुवक्तव्यं तस्यमाहात्म्यमितिसूर्यस्यस्तुतिः ॥ अभिचक्षे संपदादिलक्षणोभावेक्विप् कृदुत्तरपदप्रकृतिस्वरत्वम् । द्योः ङसिङसोश्चेतिपूर्वरूपता । उपस्थे घञर्थेकविधानमितिकप्रत्ययः

1 नि० ४. ११. ।

मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्। पाजः पातिरक्षतीतिपाजोबलम् पातेर्बलेजुट्चेत्यसुन् जुडागमश्च छान्दसोमत्वर्थीयस्यविनोलोपः ॥ ५ ॥

षष्ठीमृचमाह—

अ॒द्या दे॑वा॒ उदि॑ता॒ सूर्य॑स्य॒ निरंह॑सः पिपृ॒ता निर॑व॒द्यात्।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ६ ॥ ७ ॥

अ॒द्य। दे॒वाः। उत्ऽइ॑ता। सूर्य॑स्य। निः। अंह॑सः। पि॒पृ॒त। निः। अ॒व॒द्यात्। तत्। नः॒। मि॒त्रः। वरु॑णः। म॒म॒ह॒न्ता॒म्। अदि॑तिः। सिन्धुः॑। पृ॒थि॒वी। उ॒त। द्यौः ॥ ६ ॥ ७ ॥

हेदेवाः द्योतमानाःसूर्यरश्मयः अद्यास्मिन्काले सूर्यस्यआदित्यस्यउदिताउदितौउदये सतिइतस्ततःप्रसरन्तोयूयंअस्मान्‌अंहसःपापान्निष्पिपृत निष्कृष्यपालयत यदिदमस्माभिरुक्तंनोऽस्मदीयंतन्मित्रादयःषड्देवताःममहन्तांपूजयन्तु अनुमन्यन्तां रक्षन्त्वितियावत् मित्रःप्रमीतेस्त्रायकःअहरभिमानीदेवः वरुणोनिष्टानांनिवारयितारात्र्यभिमानी अदितिरखण्डनीयाअदीनावादेवमाता सिन्धुःस्यन्दनशीलोदकाभिमानिनीदेवता पृथिवीभूलोकस्याधिष्ठात्री द्यौःद्युलोकस्य उतशब्दःसमुच्चये ॥ अद्य निपातस्यचेतिसंहितायांदीर्घत्वम्। उदिता उत्पूर्वादेतेर्भावे क्तिन् सुपांसुलुगितिडादेशः तादौचेतिगतेःप्रकृतिस्वरत्वम्। पिपृत पृपालनपूरणयोः पृइत्येके लोटिजुहोत्यादित्वाच्छपःश्लुः द्विर्वचनोरदत्वहलादिशेषाः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् सार्वधातुकमपिदितितशब्दस्यङित्त्वेसतिऋचितुनुघेत्यादिनासंहितायांदीर्घः ॥ ६ ॥

॥ इतिप्रथमस्याष्टमेसप्तमोवर्गः ॥ ७ ॥

॥ इतिप्रथमेमण्डलेषोडशोनुवाकः ॥ १६ ॥

सप्तदशेनुवाकेपञ्चसूक्तानि तत्रनासत्याभ्यामितिपञ्चविंशत्यृचंप्रथमंसूक्तम् उशिक्संज्ञायामङ्गराजस्यमहिष्यांदास्यांदीर्घतमसाउत्पादितःकक्षीवानस्यसूक्तस्यऋषिः त्रिष्टुप्छन्दः अश्विनौदेवता तथाचानुक्रान्तम्—नासत्याभ्यांपञ्चाधिकाकक्षीवान्दैर्घतमसउशिक्प्रसूतआश्विनं वाइति । तुह्यादिपरिभाषया इदमादीनिपञ्चसूक्तानिअश्विदेवत्यानि प्रातरनुवाकस्याश्विनेक्रतौत्रैष्टुभेछन्दसिइदमादीनित्रीणिसूक्तानि अथाश्विनइतिखण्डेसूत्रितम्—ग्रावाणेवनासत्याभ्यामितित्रीणीति । आश्विनशस्त्रेचैतानि प्रातरनुवाकन्यायेनैत्यतिदिष्टत्वात्।

तत्रप्रथमामृचमाह—

नासत्याभ्यांबर्हिरिवप्रवृंजेस्तोमाँइयर्म्यभ्रियेववातः ।
यावर्भगायविमदायंजायांसेनाजुवान्यूहतूरथेन ॥ १ ॥

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृञ्जे । स्तोमान् । इयर्मि । अभ्रियाऽइव । वातः । यौ । अर्भगाय । विऽमदाय । जायाम् । सेनाऽजुवा । निःऊहतुः । रथेन ॥ १ ॥

बर्हिरिव यथाकश्चिद्यजमानोयागार्थं बर्हिःप्रवृञ्जेप्रकर्षेणअन्यूनातिरिक्तंयागायपर्याप्तंदर्भं वृंकेछिनत्ति संपादयतीतियावत् एवमहंनासत्याभ्यां अश्विभ्यांस्तोमान्स्तुतीः इयर्मिसंपादयामि एतदेवविशदीक्रियते अभ्रियेव यथाअभ्रियाणिअभ्रेषुमेघेषुअवस्थितानि उदकानिवातोवायुर्वर्षणार्थंबहुशःप्रेरयति एवमहंअश्विभ्यांस्तोत्राणिइयर्मि बहुशःप्रेरयामि कीदृशावश्विनौ अर्भगायबालायस्वयंवरलब्धभार्यायविमदायएतत्संज्ञायराजर्षये मध्येमार्गेस्वयंवरार्थमागतैस्तामलभमानैरन्यैर्नृपैः सहयोद्धुमशक्नुवतेपितस्मैसेनाजुवाशत्रुसेनायाःप्रेरकेणशत्रुभिर्दुष्प्रापेणरथेनयावश्विनौजायांभार्यांपरैरनाक्रान्तांन्यूहतुः शत्रून्निहत्यतदीयंगृहंप्रापयामासतुः ताभ्यामित्यर्थः ॥ नासत्याभ्यां सत्सुभवौसत्यौनसत्यौअसत्यौनअसत्यौनासत्यौ नभ्राण्नपादित्यादिनानञःप्रकृतिभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । वृञ्जे वृजीवर्जने आदादिकः इदित्वान्नुम् लोपस्तआत्मनेपदेष्वितितलोपः । इयर्मि ऋगतौ जौहोत्यादिकः अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम् अभ्यासस्यासवर्णेइतीयङ् । अभ्रियाइव समुद्राभ्राद्घइतिभवार्थेघः घस्येयादेशः छन्दसिबहुलमितिशेर्लोपः । अर्भगाय अर्तिगृभ्यांभन्इत्यर्तेर्भन् अर्भएवार्भकः संज्ञायांकन् छान्दसोगकारः अपरआह अर्भमल्पंगायतीत्यर्भकः कैगैशब्दे गापोष्टक् आतोलोपइटिचेत्याकारलोपः तदेतत्पदकृतःशाकल्यस्याभिमतम् । सेनाजुवा जुइतिसौत्रोधातुर्गत्यर्थः अस्मादन्तर्भावितण्यर्थात् क्विब्वचिप्रच्छीत्यादिनाक्विप्दीर्घौ तन्वादित्वादुवङ् । न्यूहतुः वहप्रापणे लिट्यतसिपजादित्वात्संप्रसारणम् यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः ॥ १ ॥

द्वितीयामृचमाह—

वीळुपत्मभिराशुहेमभिर्वादेवानांवाजूतिभिःशाशदाना ।
तद्रासभोनासत्यासहस्रमाजायमस्यप्रधनेजिगाय ॥ २ ॥

वीळुपत्मऽभिः । आशुहेमऽभिः । वा । देवानाम् । वा । जूतिऽभिः । शाशदाना । तत् । रासभः । नासत्या । सहस्रम् । आजा । यमस्य । प्रऽधने । जिगाय ॥ २ ॥

वीळुपत्मभिः वीळुइतिबलनाम बलवदुत्पतनैः आशुहेमभिः शीघ्रगमनैः वाशब्दःसमुच्चये हेनासत्याअश्विनौ एवंभूतैरश्वैश्चदेवानांइन्द्रादीनांजूतिभिः प्रेरणैश्च शाशदानाशाशद्यमानयोः अत्यर्थंप्रेर्यमाणयोर्युवयोः वाहनभूतोयोरासभःप्रजापतिनादत्तः सयमस्यवैवस्वतस्यप्रीतिकरेप्रधने प्रकीर्णधनोपेते आजा आजौसंग्रामेतत्शत्रूणांसहस्रंजिगायजितवान् वैवस्वतोहिबहूनांमरणहेतुनासंग्रामेणतुष्टोभवति यद्वा जेतव्यत्वेनप्रजापतिनानिहितमृक्सहस्रंशीघ्रगमनयुक्तोरासभः जिगायजयेनालभत अन्येभ्योदेवेभ्यःपूर्वमेवाजिंप्राप्ययुवांजयंप्रापयामास तथाचास्मिन्नर्थेप्रजापतिर्वैसोमायराज्ञेदुहितरंप्रायच्छदित्यादिकंब्राह्मणमनुसन्धेयम्[1] ॥ वीळुपत्मभिः वीळुबलवत्पतन्तीतिवीळुपत्मानः । आशुहेमभिः आशुशीघ्रंहिन्वन्तिगच्छन्तीत्याशुहेमानस्तैः हिगतौवृद्धौच अन्येभ्योपिदृश्यन्तइतिमनिन् कृदुत्तरपदप्रकृतिस्वरत्वम् । जूतिभिः ऊतियूतिजूतीत्यादिनाक्तिनउदात्तत्वम् । शाशदाना शद्लृशातने अत्रगत्यर्थः धातूनामनेकार्थत्वात् अस्माद्यङन्ताल्लटःशानच् तस्यछन्दस्युभयथेत्यार्धधातुकत्वाच्छ्यनभावः अतोलोपयलोपौ अभ्यस्तानामादिरित्याद्युदात्तत्वम् सुपांसुलुगितिषष्ठ्याःपूर्वसवर्णदीर्घः । आजा वेञ्नैवसूत्रेणडादेशः । जिगाय जिजये सन्लिटोर्जेरित्यभ्यासादुत्तरस्यकुत्वं गकारः ॥ २ ॥

तृतीयामृचमाह—

तुग्रो॑ह भु॒ज्युम॑श्विनोदमे॒घेर॒यिंनकश्चि॑न्ममृ॒वाँअवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिरन्तरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥ ३ ॥

तुग्रः । ह॒ । भु॒ज्युम् । अ॒श्वि॒ना॒ । उ॒द॒ऽमे॒घे । र॒यिम् । न । कः । चि॒त् । म॒मृ॒ऽवान् । अव॑ । अ॒हाः । तम् । ऊ॒ह॒थुः । नौ॒भिः । आ॒त्म॒न्ऽवती॑भिः । अ॒न्त॒रि॒क्ष॒प्रुत्ऽभिः । अप॑ऽउदकाभिः ॥ ३ ॥

अत्रेयमाख्यायिका तुग्रोनामअश्विनोःप्रियःकश्चिद्राजर्षिः सचद्वीपान्तरवर्तिभिःशत्रुभिरत्यन्तमुपद्रुतःसन्तेषांजयायस्वपुत्रंभुज्युंसेनयासहनावाप्राहैषीत् साचनौर्मध्येसमुद्रमतिदू-

---

[1] ऐ० ब्रा० ४. ७. ।

रंगतावायुवशेनभिन्नासीत् तदानींसभुज्युः शीघ्रमश्विनौतुष्टाव स्तुतौचतौसेनयासहितंआत्मीयासुनौषुआरोप्यपितुस्तुग्रस्यसमीपंत्रिभिरहोरात्रैःप्रापयामासतुरिति । अयमर्थइदमादिकेनतृचेनप्रतिपाद्यते हशब्दःप्रसिद्धौ तुग्रःखलुपूर्वंशत्रुभिःपीडितःसन्तज्जयार्थंउदमेघे उदकैर्मिह्यतेसिच्यतइत्युदमेघःसमुद्रः तस्मिन् भुज्युंएतत्संज्ञंमियंपुत्रंअवाहाः नावागन्तुंपर्यत्याक्षीत् तत्रदृष्टान्तः—मृत्वान्त्रियमाणःसन्धनलोभीकश्चिन्मनुष्यः रयिंन यथाधनंपरित्यजतितद्वत् हेअश्विनौ तंचभुज्युंमध्येसमुद्रंनिमग्नंनौभिःपितृसमीपंऊहथुः युवांप्रापितवन्तौ कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः युवयोःस्वभूताभिरित्यर्थः यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः अन्तरिक्षमुद्भिः अतिस्वच्छत्वात्अन्तरिक्षेजलस्योपरिष्टादेवगच्छन्तीभिःअपोदकाभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः ॥ उदमेघे मिहसेचने कर्मणिघञ् न्यंक्वादीनांचेतिकुत्वम् उदकस्योदः संज्ञायाम् थाथादिनोत्तरपदान्तोदात्तत्वम्। ममृवान् मृङ्प्राणत्यागे लिटःक्वसुः क्रादिनियमात्प्राप्तस्येटोवस्वेकाजाद्घसामितिनियमादभावः । अहाः ओहाक्त्यागे लुङितिपि च्लेःसिच् आगमानुशासनस्यानित्यत्वात्सगिटौनक्रियेते बहुलंछन्दसीतीडभावः हल्ङ्याब्भ्यइतितिलोपः रुत्वविसर्गौ यद्वा मन्त्रेघसेतिच्लेर्लुक् च्लेर्लुप्तत्वादिण्नक्रियते । नौभिः सावेकाचइति विभक्तेरुदात्तत्वम्। आत्मन्वतीभिः आत्मनोमतुप् मादुपधायाइतिवत्वम् अनोनुडितिनुट् नलोपः ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम्। अन्तरिक्षमुद्भिः मुद्ङ्गतौ क्विप्चेतिक्विप् ॥ ३ ॥

चतुर्थीमृचमाह—

ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथैः॑ श॒तप॑द्भिः॒ षळ॑श्वैः ॥ ४ ॥

ति॒स्रः । क्षपः॑ । त्रिः । अहा॑ । अ॒ति॒व्रज॑त्ऽभिः । नास॑त्या । भु॒ज्युम् । ऊ॒ह॒थुः॒ । प॒त॒ङ्गैः । स॒मु॒द्रस्य॑ । धन्व॑न् । आ॒र्द्रस्य॑ । पा॒रे । त्रि॒ऽभिः । रथैः॑ । श॒तप॑त्ऽभिः । षट्ऽअ॑श्वैः ॥ ४ ॥

हेनासत्यानासत्यौ सेनयासहोदकेनिमग्नंभुज्युंतिस्रःक्षपःत्रिसंख्याकारात्रीःत्रिरहानिवारमावृत्तान्यहानिच अतिव्रजद्भिः अतिक्रम्यगच्छद्भिः एतावन्तंकालंअतिव्याप्यवर्तमानैःपतङ्गैः पतद्भिःत्रिभिःत्रिसंख्याकैःरथैःऊहथुः युवांऊढवन्तौ क्वेतिचेदुच्यते समुद्रस्य अंबुराशेर्मध्येधन्वन् धन्वनिजलवर्जितप्रदेशे आर्द्रस्यउदकेनआर्द्रीभूतस्यसमुद्रस्यपारेतीरदेशेच कथंभूतैःरथैःशतपद्भिः

शतसंख्याकैश्वक्रलक्षणैःपादैरुपेतैः षडश्वैःषड्भिरश्वैर्युक्तैः॥त्रिसः त्रिचतुरोः स्त्रियामितित्रिशब्दस्य तिसृआदेशः सचान्तोदात्तः अचिरऋतइतिरेफादेशेउदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम्। क्षपः विभजयन्तस्यछान्दसंह्रस्वत्वं यद्वा शसिआवइतियोगविभागादधातोरप्याकारलोपः। अहा शेश्छन्दसिबहुलमितिशेर्लोपः। पतंगैः पतनगवो पतेरंगच्। धन्वन् धविर्गत्यर्थः इदित्त्वान्नुम् क- निन्युवृषीत्यादिनाकनिन् सुपांसुलुगितिसप्तम्यालुक्। शतपद्भिः शतंपादायेषांति संख्यासुपूर्वस्ये- तिपादशब्दस्यान्त्यलोपःसमासान्तः अयस्मयादित्वेनभत्वात् पादःपदितिपद्भावः यद्वा पादसमा- नार्थःपच्छब्दःप्रकृत्यन्तरंद्रष्टव्यम्॥ ४ ॥

पञ्चमीमृचमाह—

अ॒ना॒र॒म्भ॒णे तद॑वीरयेथामनास्था॒ने अ॑ग्रभ॒णे स॑मु॒द्रे।
यद॑श्विना ऊ॒हथु॑र्भु॒ज्युमस्तं॑ श॒तारि॑त्रां ना॒वमा॑तस्थि॒वांस॑म्॥५॥८॥

अ॒ना॒र॒म्भ॒णे। तत्। अ॒वी॒र॒ये॒था॒म्। अ॒ना॒स्था॒ने।
अ॒ग्र॒भ॒णे। स॒मु॒द्रे। यत्। अ॒श्वि॒नौ॒। ऊ॒हथुः॑। भु॒ज्युम्। अस्त॑म्।
श॒तऽअ॑रित्राम्। ना॒वम्। आ॒त॒स्थि॒ऽवांस॑म्॥ ५ ॥ ८ ॥

हेअश्विना अश्विनौ अनारंभणेआलंबनरहितेसमुद्रेतत्कर्मअवीरयेथां विक्रान्तंकृतव- न्तौयुवां अनारंभणत्वमेवस्पष्टीकरोति अनास्थानेआस्थीयतेस्मिन्निति आस्थानोभूप्रदेशः तद्रहितेस्थातुमशक्येजलेइत्यर्थः अग्रभणे अग्रहणे हस्तेनग्राह्यंशाखादिकमपियत्रनास्तितस्मि- न्नित्यर्थः किंपुनस्तत्कर्म भुज्युंसमुद्रेमग्नंशतारित्रांबहुरित्रांयैःकाष्ठैःपार्श्वतोबद्धैःजलालोडनेस- तिनौःशीघ्रंगच्छति तान्यरित्राणि ईदृशांनावंआतस्थिवांसंआस्थितवन्तंआरूढवन्तंकृत्वा अस्तं गृहनामैतत् पितुस्तुग्रस्यगृहंप्रतियदूहथुः तत्प्रापणमन्यैर्दुःशक्यं युवां समुद्रमध्येकृतवन्ता- वित्यर्थः॥अनारंभणे आरभ्यतइत्यारंभणम् कृत्यल्युटोबहुलमितिकर्मणिल्युट् नञ्सुभ्यामित्यु- त्तरपदान्तोदात्तत्वम्। अवीरयेथां शूरवीरविक्रान्तौ चुरादिरात्मनेपदी। अनास्थानाग्रभणयोः पूर्ववल्ल्युट्स्वरौ अयंतुविशेषः हग्रहोर्भइतिभत्वम्। अस्तं अस्यतेअस्मिन्सर्वमित्यस्तंगृहम् असिहसीत्यादिनातन्प्रत्ययः। शतारित्रां ऋगतौ अर्तिलूधूसूखनसहचरइत्रितिकरणेइत्रप्रत्ययः बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम्॥ ५ ॥

॥ इतिप्रथमस्याष्टमेष्टमोवर्गः ॥ ८ ॥

षष्ठीमृचमाह—

यम॑श्विनाद॒दथुः॑श्वे॒तमश्व॑म॒घाश्वा॑य॒शश्व॒दित्स्व॒स्ति।
तद्वां॑दा॒त्रंमहि॑की॒र्तेन्यं॑भूत्पै॒द्वोवा॒जीसद॒मिद्धव्यो॑अ॒र्यः॥ ६॥

यम्। अ॒श्वि॒ना॒। द॒दथुः॑। श्वे॒तम्। अश्व॑म्। अ॒घऽअ॑श्वाय। शश्व॑त्।
इत्। स्व॒स्ति। तत्। वा॒म्। दा॒त्रम्। महि॑। की॒र्तेन्य॑म्। भू॒त्।
पै॒द्वः। वा॒जी। सद॑म्। इत्। हव्यः॑। अ॒र्यः॥ ६॥

अत्रेदमाख्यायते—पेदुर्नामकश्चित् सचाश्विनौतुष्टाव तस्मैप्रीतौकंचित्श्वेतवर्णं अश्वं दत्तवन्तौ सचाश्वः प्रौढंजयंचकारेति एतदत्रप्रतिपाद्यते—हेअश्विनाअश्विनौ युवां अघाश्वायअहन्तव्याश्वायपेदुनाम्ने राजर्षये यंश्वेतवर्णंअश्वंददथुः दत्तवन्तौ सोश्वः तस्मैस्वस्तिजयलक्षणं मङ्गलं शश्वदित् नित्यमेवचकार वांयुवयोस्तद्दात्रंदानं महिमहत् अतिगभीरं अतएवकीर्तेन्यं सर्वैःकीर्तनीयंप्रशस्यं भूत्अभूत् तस्मात् पैद्वः पेदोःसंबन्धीपतनशीलः शीघ्रगामीवा अर्यः शत्रूणांप्रेरयितायुद्धेपुप्रेरयितव्योवा वाजीवेजनवान्सोश्वः सदमिव सदैवहव्यः अस्माभिराह्वातव्यः॥ दात्रं ददातेर्भावेऔणादिकस्त्रप्रत्ययः। महि महपूजायाम् इन्सर्वधातुभ्यइतीन्। कीर्तेन्यम् कृतसंशब्दने कृत्यार्थेतवैकेन्केन्यत्वनइतिकेन्यप्रत्ययः ऋतइद्धातोरितीत्वम्। भूत् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। पैद्वः पेदोःसंबन्धी तस्येदमित्यण्प्रत्ययः छान्दसोवर्णलोपः। हव्यः ह्वयतेरचोयदितियत् बहुलंछन्दसीतिसंप्रसारणम् गुणःधातोस्तन्निमित्तस्यैवेत्यवादेशः। अर्यः ऋगतौ अर्यादयश्चेत्यौणादिकोयत् व्यत्ययेनान्तोदात्तत्वम्॥ ६॥

सप्तमीमृचमाह—

यु॒वंन॑रास्तुव॒तेप॑ज्रि॒याय॑क॒क्षीव॑तेअरदतं॒पुरं॑धिम्।
का॒रो॒त॒राच्छ॒फादश्व॑स्य॒वृष्णः॑श॒तंकु॒म्भाँअ॑सिञ्चतं॒सुरा॑याः॥ ७॥

यु॒वम्। न॒रा॒। स्तु॒व॒ते। प॒ज्रि॒याय॑। क॒क्षीव॑ते। अ॒र॒द॒त॒म्। पुर॑म्ऽधिम्।
का॒रो॒त॒रात्। श॒फात्। अश्व॑स्य। वृष्णः॑। श॒तम्। कु॒म्भान्।
अ॒सि॒ञ्च॒त॒म्। सुरा॑याः॥ ७॥

अत्रेयमाख्यायिका—कक्षीवानृषिः पुरातमसाविरोहितज्ञानःसन् ज्ञानार्थमश्विनौतुष्टाव तस्मैअश्विनौप्रभूतांधियंदत्तवन्ताविति तदाह—हेनरा नेताराबश्विनौ युवं युवांपज्रियाय पज्राइत्यङ्गिरसामाख्या पज्रावाअङ्गिरसइत्याम्नातत्वात् । तेषांकुलेजातायकक्षीवते कक्ष्यारज्जुरश्वस्य तद्वतेतत्संज्ञायस्तुवतेयुवयोःस्तुतिंकुर्वतेमह्यंपुरन्धिंप्रभूतांधियंबुद्धिंअरदतंव्यलिखतम् यथासर्वार्थगोचराभवति तथाकृतवन्तावित्यर्थः अपिचकारोतरात् कारोतरोनामवेदलश्चर्मवेष्टितोभाजनविशेषः यस्मिन्सुरायाःस्रावणंक्रियते लुप्तोपममेतत् कारोतरात् यथासुरायाःसंपादकाः तांस्रावयन्ति एवमेवयुवांवृष्णःसेचनसमर्थस्ययुष्मदीयस्याश्वस्यशफात् खुरात्सुरायाः शतंकुम्भान् असंख्यातान् सुराघटान्असिञ्चतम् अक्षारयतम् यद्वा सिञ्चतिःपूरणार्थः कारोतरस्थानीयात् युष्मदीयाश्वखुराद्यासुराप्रवहतितयाअसंख्यातान् घटान्असिञ्चतंअपूरयतम् येजनाः सौत्रामण्यादिकर्मणियुष्मद्यागायसुरांयाचन्तेतेषामित्यर्थः ॥ स्तुवते स्तौतेर्लटःशतृ अदादित्वाच्छपोलुक् शतुरनुमइतिविभक्तेरुदात्तत्वम् । पज्रियाय पज्रशब्दात् शैषिकोघच् । कक्षीवते आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवदितिनिपातनात्कक्ष्यशब्दस्यसंप्रसारणंवत्वंच । अरदतम् रदविलेखने । पुरन्धिम् पुरन्धिर्बहुधीरितियास्कः । पृषोदरादित्वात्पुरन्धिभावः यद्वा पुरंपूरयितव्यं सर्वंविषयजातमस्यांधीयतेअवस्थाप्यतइतिपुरन्धिर्बुद्धिः कर्मण्यधिकरणेचेतिदधातेःकिःप्रत्ययः ततुरुपेक्तिबहुलमितिवचनादलुक् इदंतुव्युत्पत्तिमात्रम वस्तुतःपृषोदरादिरेव । असिञ्चतम् षिचिर्क्षरणे तौदादिकः शेमुचादीनामितिनुम् ॥ ७ ॥

अष्टमीमृचमाह—

हिमेनाग्निंघ्रंसमवारयेथांपितुमतीमूर्जमस्माअधत्तम् ।
ऋबीसेअत्रिमश्विनावनीतमुन्निन्यथुःसर्वगणंस्वस्ति ॥ ८ ॥

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् । ऊर्जम् ।
अस्मै । अधत्तम् । ऋबीसे । अत्रिम् । अश्विना । अवऽनीतम् ।
उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥ ८ ॥

---

१ नि० ६. १३. ।

अत्रेदमाख्यानम्—अत्रिऋषिमसुराः शतद्वारेपीडायन्त्रगृहेमवेश्यतुषाग्निनाअचाधिषत तदानींतेनऋषिणास्तुतौअश्विनौअग्निमुदकेनोपशमय्यतस्मात्पीडागृहादविकलेन्द्रियवर्गसन्तंनिरगमयतामिति तदेतत्प्रतिपाद्यते—अश्विनाहेअश्विनौ हिमेनहिमवच्छीतोदकेनघ्रंसंदीप्यमानंअत्रेर्बाधनार्थंअसुरैःप्रक्षिप्तंतुषाग्निंअवारयेथांयुवांनिवारितवन्तौ शीतीकृतवन्तावित्यर्थः अपिचास्मैअसुरपीडयाकार्श्यंप्राप्तायात्रये पितुमतीं पितुरित्यन्ननाम अन्नयुक्तंऊर्जंबलप्रदंरसात्मकंक्षीरादिकंअधत्तंपुष्ट्यर्थंप्रायच्छतम् ऋबीसे अपगतप्रकाशेपीडायन्त्रगृहेअवनीतंअवाङ्मुखतयाअसुरैःप्रापितंअत्रिंसर्वगणं गणःसमूहः सर्वेषांइन्द्रियाणांपुत्रादीनांवागणेनोपेतं स्वस्तिअविनाशोयथाभवतितथाउन्निन्यथुः तस्माद्गृहादुद्गमय्ययुवांस्वगृहंप्रापितवन्तौ यद्वा हिमेनशीतेनवृष्टयुदकेन अग्निंअग्निवत्तीक्ष्णं घ्रंसंअहर्नामैतत् सामर्थ्याद्निदाघकालीनंअहः अवारयेथां तस्याह्नस्तैक्ष्ण्यंनिवारितवन्तौ अपिचास्मैअग्नयेपितुमतींचरुपुरोडाशादिलक्षणान्नोपेतंऊर्जंबलकरं रसात्मकंउपस्तरणाभिघारणात्मकंघृतंअधत्तम् वृष्ट्युत्पादनेनाग्नेर्यागार्थंहवींषिनिष्पादितवन्तावित्यर्थः ऋबीसे अपगततेजस्केपृथिवीद्रव्येअवनीतंओषधीनांउत्पादनायअवस्तान्नीतंपार्थिवाग्निनापरिपक्काउदकेनक्लिन्नात्योषधिवनस्पतयोविरोहन्ति अत्रिंहविषांअत्तारंओषधिवनस्पत्यादीनांवाएवंविधं अग्निंसर्वगणंव्रीह्याद्योषधिगणोपेतं हेअश्विनौयुवांस्वस्तिअविनाशोयथाभवतितथाउन्निन्यथुः व्रीह्याद्योषधिवनस्पतिरूपेणभूमेरुपरिष्टान्नीतवन्तौ कारणात्मनापार्थिवाग्नौवर्तमानंसर्वंमोषधिवनस्पत्यादिकंअश्विनौप्रवर्षणेनव्यक्तीकृतवन्तावित्यर्थः अयंपक्षोयास्केनहिमेनोदकेनेत्यादिनोक्तः ॥ पितुमतीम् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वम् । ऋबीसे अत्रयास्कः—ऋबीसमपगतभासमपचितभासमपहृतभासमन्तर्हितभासंगतभासंवेति । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । अग्निं अदभक्षणे अदेस्त्रिनिश्चेतिचशब्दात्क्रिन् । अवनीतम् गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । स्वस्ति असुभुवि भावेक्तिन् छन्दस्युभयथेतिसार्वधातुकत्वादस्तेर्भूभावाभावः ॥ ८ ॥

नवमीमृचमाह—

परा॑वतं॑नासत्यानुदेथामु॒च्चाबु॑ध्नंचक्रथुर्जि॒ह्मबा॑रम् ।
क्षर॒न्नापो॒नपा॒यना॑यरा॒येस॒हस्रा॑यतृ॒ष्य॑ते॒गोत॑मस्य ॥ ९ ॥

---

१ नि० ६. ३६. । २ नि० ६. ३५. ।

परां । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुंध्नम् । चक्रथुः । जिह्मऽवारम् । क्षरंन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यंते । गोतमस्य ॥ ९ ॥

अत्रेदमाख्यानम्—कदाचिन्मरुभूमौवर्तमानस्यस्तोतुर्गोतमस्यऋषेःसमीपं देशान्तरेवर्तमानं कूपंउत्खायाश्विनौप्रापयेताम् प्रापय्यचतंकूपंस्नानपानादिसौकर्यायउपरिमूलंअधोबिलंअवस्थापयतामिति । तदेतदाह—हेनासत्यासत्यस्वभावौसत्यस्यनेतारौनासिकाप्रभवौवा एतत्संज्ञावश्विनौ युवांअवतम् कूपनामैतत् अवस्तात्तंकूपंपरानुदेथां गोतमस्यऋषेःसमीपेप्रेरितवन्तौ तदनन्तरंतंकूपंउच्चाबुध्नं उच्चैरुपरिष्टाद्बुध्नोमूलंयस्यसतथोक्तः जिह्मवारं जिह्मंअधस्ताद्वर्तमानं तथा वक्रंवारंद्वारंयस्यसतथोक्तः एवंगुणविशिष्टंचक्रथुः युवामकुरुतां तस्मात्कूपात्तृष्यतेपिपासवेगोतमस्य पायनायपानार्थं आपोन आपश्च अयंनशब्दश्चार्थे क्षरन्प्रवाहरूपेणनिरगमन् कीदृशस्य रायेहवींषिदत्तवते सहस्राय सहनशीलाय यद्वा सहस्रसंख्यायराये धनाय एतत्संख्यधनलाभार्थंचाक्षरन् ॥ अनुदेथाम् णुदप्रेरणे तौदादिकः । जिह्मवारम् द्वारशब्दस्य पृषोदरादित्वात् वारादेशः । क्षरन् क्षरसञ्चलने बहुलंछन्दस्यमाङ्योगेपीत्यडभावः शपःपित्त्वादनुदात्तत्वम् तिङोलसार्वधातुकस्वरेणधातुस्वरः । पायनाय हेतुमतिणिच् शाच्छासाह्वेतियुक् भावेल्युट् । राये रादाने रातिददातीतिराः रायेर्ङेः ऊडिदमितिविभक्तेरुदात्तत्वम् । तृष्यते ञितृषापिपासायाम् श्यन् लटःशतृ श्यनोनित्त्वादाद्युदात्तत्वम् षष्ठ्यर्थेचतुर्थीवक्तव्येतिचतुर्थी ॥ ९ ॥

दशमीमृचमाह—

जुजुरुषोनासत्योतवव्रिंप्रामुंचतंद्रापिमिवच्यवानात् ।
प्रातिरतंजहितस्यायुर्दस्रादित्पतिमकृणुतंकनीनाम् ॥ १० ॥ ९ ॥

जुजुरुषः । नासत्या । उत । वव्रिम् । प्र । अमुञ्चतम् । द्रापिम्ऽइंव । च्यवानात् । प्र । अतिरतम् । जहितस्य । आयुः । दस्रा । आत् । इत् । पतिम् । अकृणुतम् । कनीनाम् ॥ १० ॥ ९ ॥

अत्रेदमाख्यानम्—वलीपलितादिभिरूपेतोजीर्णाङ्गः पुत्रादिभिःपरित्यक्तश्च्यवनाख्यऋषिःअश्विनौतुष्टाव स्तुतावश्विनौतस्मैऋषयेजरामपगमय्यपुनर्यौवनंअकुरुतामिति तदेतदाह—

हेनासत्यावश्विनौ जुजुरुषोजीर्णाच्च्यवनाच्च्यवनाख्यादृषेःसकाशात् वव्रिंरूपंशरीरंआवृत्यावस्थितांजरांप्रामुञ्चतं प्रकर्षेणअमोचयतम् तत्रदृष्टान्तः—द्रापिमिव द्रापिरितिकवचस्याख्या यथाकश्चित्कवचं कृत्स्नशरीरव्यापकंभूत्वापश्चात्शरीरात्पृथक्करोतितद्वत् उतअपिचहेदस्राएतत्संज्ञौदर्शनीयौवाश्विनौ जहितस्यपुत्रादिभिःपरित्यक्तस्यऋषेःआयुर्जीवनंप्रातिरतम् प्रावर्धयतम् प्रपूर्वस्तिरतिर्वर्धनार्थः आदित्अनन्तरमेवयुवानंसन्तंकनीनांकन्यानांपतिंभर्तारंअकृणुतंअकुरुतम् ॥ जुजुरुषः जॄष्वयोहानौ लिटःक्वसुः बहुलंछन्दसीत्युत्वम् द्विर्भावः पञ्चम्येकवचनेवसोःसंप्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् । वव्रिं वृञ्वरणे आदृगमहनइतिकिप्रत्ययः । जहितस्य ओहाक्त्यागे कर्मणिनिष्ठा तस्यछन्दस्युभयथेतिसार्वधातुकत्वाद्यक् तस्यबहुलंछन्दसीतिश्लुः जहातेश्चेतीत्वम् । कनीनाम् रयेर्मतौबहुलमितिबहुलवचनात्कन्याशब्दस्यात्रसंप्रसारणम् ॥ १० ॥

॥ इतिप्रथमस्याष्टमेनवमोवर्गः ॥ ९ ॥

एकादशीमृचमाह—

**तद्वांनराशंस्यंराध्यंचाभिष्टिमन्नासत्यावरूथम् ।**
**यद्विद्वांसानिधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥ ११ ॥**

तत् । वाम् । नरा । शंस्यम् । राध्यम् । च । अभिष्टिऽमत् ।
नासत्या । वरूथम् । यत् । विद्वांसा । निधिम्ऽइव । अपऽगूळ्हम् ।
उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥ ११ ॥

अत्रेदमाख्यानम्—वन्दनोनामकश्चिदृषिः सचासुरैःकूपेनिखायउच्चरीतुमशक्नुवन्नश्विनावस्तौत् तमश्विनौकूपादुज्जिन्यतुरितितदाह—नराआरोग्यस्यनेतारौहेनासत्यावश्विनौ वांयुवयोःसंबन्धिअभिष्टिमत्अन्वेषणयुक्तं आभिमुख्येनप्राप्तव्यम् तथावरूथंवरणीयंकामयितव्यंतत्कर्मशंस्यंअस्माभिःप्रशंसनीयंराध्यंआराधनीयंच किंपुनस्तत्कर्म विद्वांसाजानन्तौयुवांनिधिमिवनिक्षिप्तंधनमियअपगूळ्हंअरण्येनिर्जनेदेशे असुरैर्निगूढं वन्दनायवन्दनंऋषिंदर्शतात् अध्वगैःपिपासुभिःद्रष्टव्यात्कूपात्उदूपथुः उदहार्ष्ट एवंयदेतत्कूपादुद्धरणंतदित्यर्थः ॥ शंस्यं शंसुस्तुतौ अस्माण्ण्यन्तादचोयदितियत् यतोनावइत्याद्युदात्तत्वम् । अभिष्टिमत् अभिपूर्वादिषगतावित्यस्माद्भावेक्तिन् मन्त्रेवृषेतिक्तिनउदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वेनसएवशिष्यते शकन्ध्वादित्वात्पर-

रूपत्वम् गादौचेतिद्रुगतिस्वरस्यसर्वविधीनांछन्दसिविकल्पितत्वादप्रवृत्तिः ततोमतुप् अन्तोदात्तादुत्तरस्यतस्यह्रस्वनुड्भ्यामित्युदात्तत्वम्। वरूथम् जॄवृञ्भ्यामूथन्। विद्वांसा सुपांसुलुगितिविभक्तेराकारः। अपगूह्ळम् गुहूसंवरणे कर्मणिनिष्ठा यस्यविभाषेतीट्प्रतिषेधः ढत्वधत्वष्टुत्वढ्लोपदीर्घाः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। दर्शतावत् भृमृदृशीत्यादिनाअतच्। ऊपथुः टुवप्बीजतन्तुसन्ताने लिट्यथुसि यजादित्वात्संप्रसारणम् द्विर्वचनादि। वन्दनाय क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी॥ ११॥

द्वादशीमृचमाह—

**तद्वांनरासनयेदंसउग्रमाविष्कृणोमितन्यतुर्नवृष्टिम्।**
**दध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाच॥ १२॥**

तत्। वाम्। नरा। सनये। दंसः। उग्रम्। आविः। कृणोमि।
तन्यतुः। न। वृष्टिम्। दध्यङ्। ह। यत्। मधु। आथर्वणः।
वाम्। अश्वस्य। शीर्ष्णा। प्र। यत्। ईम्। उवाच॥ १२॥

अत्रेयमाख्यायिका—इन्द्रोदधीचेप्रवर्ग्यविद्यांमधुविद्यांचोपदिश्ययदिइमामन्यस्मैवक्ष्यसि शिरस्तेछेत्स्यामीत्युवाच ततोश्विनावश्वस्यशिरश्छित्वादधीचःशिरःप्रच्छिद्यान्यत्रनिधायतत्राश्व्यंशिरःप्रत्यधत्ताम् तेनचदध्यङ् ऋचःसामानियजूंषिचप्रवर्ग्यविषयाणिमधुविद्याप्रतिपादकं ब्राह्मणंचाश्विनावध्यापयामास तदिन्द्रोज्ञात्वावज्रेणतच्छिरोच्छिनत् अथाश्विनौतस्यस्वकीयंमानुषंशिरःप्रत्यधत्तामितिशाट्यायनवाजसनेयप्रोःप्रपञ्चेनोक्तम्—तदेतत्प्रतिपाद्यते—नराहेनरौअश्विनौवांयुवयोःसंबन्धिउग्रंउद्गूर्णअन्यैर्दुःशकंदंसः कर्मनामैतत् युवाभ्यांपुराकृतंतत्कर्मसनयेधनलाभार्थंआविष्कृणोमिप्रकटीकरोमि तत्रदृष्टान्तः—तन्यतुर्न यथामेघस्थःशब्दोवृष्टिंमेघान्तर्वर्तमानमुदकंप्रवर्षणेनसर्वत्रप्रकटयतितद्वत् किंतत्कर्मअथर्वणःपुत्रोदध्यङ् एतत्संज्ञऋषिःअश्वस्यशीर्ष्णापुष्पत्सामर्थ्येनप्रतिहितेशिरसावांयुवाभ्यांईइमांमधु मधुविद्यांयद्यदाखलुप्रोवाचप्रोक्तवान् यदानींअश्वस्यशिरसःसन्धानलक्षणंपुनर्मानुषस्यशिरसःप्रतिसन्धानलक्षणंचयन्नत्वदीयंकर्मतत् आविष्कृणोमीत्यर्थः॥ सनये षणुदाने खनिकष्यञ्ज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्चेतिइप्रत्ययः। तन्यतुः तनुविस्तारे ऋतन्यञ्जीत्यादिनायतुच् यद्वा स्तनशब्दे बाहुलकाद्यतुच् छान्दसःसलोपः। वृष्टिं वृष्यतेसिच्यतेअनेनेतिवृष्टिः मन्त्रेवृषेत्यादिनाक्तिनउदात्तत्वम्। आथर्वणः अप-

त्यार्थेअणिअन्तितिप्रकृतिभावात् टिलोपाभावः। शीर्ष्णां शीर्षंश्छन्दसीतिशिरःशब्दपर्यायःशीर्षन्शब्दोन्तोदात्तोनिपात्यते अल्लोपेसतिउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् ॥ १२ ॥

त्रयोदशीमृचमाह—

अजोहवीन्नासत्याकरावांमहेयामंन्पुरुभुजापुरंन्धिः।
श्रुतंतच्छासुरिववध्रिमत्याहिरंण्यहस्तमश्विनावदत्तम् ॥ १३ ॥

अजोहवीत्। नासत्या। करा। वाम्। महे। यामंन्। पुरुऽभुजा। पुरंम्ऽधिः। श्रुतम्। तत्। शासुःऽइव। वध्रिऽमत्याः। हिरंण्यऽहस्तम्। अश्विनौ। अदत्तम् ॥ १३ ॥

वध्रिमतीनामकस्यचिद्राजर्षेःपुत्रीनपुंसकभर्तृका सापुत्रलाभार्थंअश्विनावाजुहाव तदाह्वानंश्रुत्वाअश्विनावागत्यतस्यैहिरण्यहस्ताख्यंपुत्रंददतुः तदेतदाह—पुरुभुजा बहूनांपालकौ प्रभूतहस्तौवा हेनासत्यावश्विनौ महेमहनीयेपूजनीये यामन्यामनियातिगच्छतीतियामःस्तोत्रंतस्मिन्स्ति करावभिमतफलस्यकर्तारौवांयुवांपुरन्धिर्बहुधीः वध्रिमतीवध्रिःपुत्रोत्पादनाशक्तःपण्डकःतद्वतीएतत्संज्ञाराजपुत्रीअजोहवीत् पुनःपुनः स्तुत्यापुत्रलाभार्थंआहूतवती युवांचवध्रिमत्यास्तदाह्वानंश्रुतंशृणुतम् तत्रदृष्टान्तः—शासुरिव यथाशासुराचार्यस्यवचनंशिष्योवहितःसन्नैकाग्र्येणशृणोतितद्वत्श्रुत्वाचहेअश्विनौतस्यैहिरण्यहस्तंसुवर्णमयपाणिंहितरमणीयपाणिंवाएतत्संज्ञंपुत्रंअदत्तं मायच्छतम् ॥ अजोहवीत् ह्वयतेर्यङ्लुगन्ताल्लङ् यङोवेतितिपईडागमः। करा करोतेःपचाद्यच् सुपांसुलुगितिविभक्तेराकारः। यामन् आतोमनिन्क्वनिप्वनिपश्चेतिमनिन् सुपांसुलुगितिसप्तम्यालुक्। श्रुतम् लङि बहुलंछन्दसीतिविकरणस्यलुक् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। शासुः शासुअनुशिष्टौ शंसिशासिशासीत्यादिनासंज्ञायांवुन् इडभावश्छान्दसस्तल्लोपश्च ॥ १३॥

चतुर्दशीमृचमाह—

आस्नोवृकंस्यवर्तिकामभीकेयुवंनंरानासत्यामुमुक्तम्।
उतोकविंपुरुभुजायुवंहकृपंमाणमकृणुतंविचक्षे ॥ १४ ॥

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या ।
अमुमुक्तम् । उतो इति । कविम् । पुरुऽभुजा । युवम् । ह ।
कृपमाणम् । अकृणुतम् । विऽचक्षे ॥ १४ ॥

वर्तिकाचटकसदृशस्यपक्षिणःस्त्री तां अरण्येवर्तमानेनशुनाग्रस्तांपुराकिलाश्विनौअमोचयतम् तदेतदाह–हेनरा नेतारौनासत्यावश्विनौयुवंयुवांअभीकेअभिगतेवृकवर्तिकयोःसङ्ग्रामेवृकस्यविकर्तकस्यशुनः आस्नः आस्याद्वर्तिकांचटकसदृशींअमुमुक्तंअमोचयतम् यास्कस्त्वाह–पुनःपुनर्वर्ततेयमितिदिवसमावर्ततइति। वर्तिकाउषाः तांवृकेणावरकेणसर्वजगत्प्रकाशेनाच्छादयितासूर्येणग्रस्ताम् उतोअपिचकविमृषिम् हेपुरुभुजावहुपालकौ युवंहयुवांएव कृपमाणंसन्तंविचक्षेविविधंद्रष्टुंअकृणुतम् अकुरुतम्॥आस्नःपद्दन्नित्यादिनाआस्यस्यासन्नादेशः अल्लोपोनइत्यकारलोपे उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम्। अमुमुक्तम् मुचेरन्तर्भावितण्यर्थात् लङिबहुलंछन्दसीतिविकरणस्यश्लुः। कृपमाणम् कृपिःस्तुतिकर्मा तुदादिषुद्रष्टव्यः विकरणस्वरेप्राप्ते तृपादीनांचेत्याद्युदात्तत्वम्। विचक्षे तुमर्थेसेसेनिति सेन्प्रत्ययः स्कोःसंयोगाद्योरितिसलोपः॥१४॥

पञ्चदशीमृचमाह–

चरित्रंहिवेरिवाच्छेदिपर्णमाजाखेलस्यपरितक्म्यायाम् ।
सद्योजंघामायसींविश्पलायैधनेहितेसर्तवेप्रत्यधत्तम् ॥ १५॥१०॥

चरित्रम् । हि । वेःऽइव । अच्छेदि । पर्णम् । आजा । खेलस्य ।
परिऽतक्म्यायाम् । सद्यः । जंघाम् । आयसीम् । विश्पलायै । धने ।
हिते । सर्तवे । प्रति । अधत्तम् ॥ १५ ॥ १० ॥

अगस्त्यपुरोहितः खेलोनामराजा तस्यसंवन्धिनी विश्पलानामस्त्री सङ्ग्रामे शत्रुभिश्छिन्नपादासीत् पुरोहितेनागस्त्येनस्तुतौअश्विनौ रात्रावागत्य अयोमयंपादं समधत्ताम् तदेतदाह–आजाआजौ सङ्ग्रामे अगस्त्यपुरोहितस्य खेलस्य संवन्धिन्याविश्पलाख्यायाश्चरित्रं चरणं वेरिव वेःपक्षिणःपर्णं पतत्रमिव अच्छेदिहि पुराछिन्नमभूत्खलु हेअश्विनौ युवांअगस्त्येनस्तुतौ

सन्तौ परितक्म्यायाम् परितक्म्या रात्रिः परित एनां तक्नतीति यास्कः।[1] एतामुभयतः सूर्यो गच्छतीति तस्यार्थः रात्रावागत्य सद्यस्तदानीमेव हिते शत्रुपुनिहिते धने जेतव्ये विषयभूते सति सर्वं वेसर्तुं गन्तुं विश्पलायै आयसीं अयोमयीं जंघां जंघोपलक्षितं पादं प्रत्यधत्तम् सन्धानमेकीकरणं कृतवन्तावित्यर्थः॥ चरित्रम् अर्तिलूधूसूखनसहचरइत्रइति करणेइत्रः। आजा सुपांसुलुगिति विभक्तेर्डादेशः। आयसीम् अयःशब्दाद्विकारार्थे प्राणिरजतादिभ्योञ् टिड्ढाणञिति ङीप्॥ १५॥

॥ इति प्रथमस्याष्टमे दशमो वर्गः॥ १०॥

षोडशीमृचमाह—

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्॥ १६॥

शतम्। मेषान्। वृक्ये। चक्षदानम्। ऋज्रऽअश्वम्। तम्। पिता। अन्धम्। चकार। तस्मै। अक्षी इति। नासत्या। विऽचक्षे। आ। अधत्तम्। दस्रा। भिषजौ। अनर्वन्॥ १६॥

वृषागिरः पुत्र ऋज्राश्वो नाम राजर्षिः तस्य समीपे अश्विनोर्वाहनभूतो रासभो वृकी भूत्वा वर्तते स्म स च तस्य आहारार्थं एकोत्तरशतसंख्यान् पौरजनानां स्वभूतान् मेषान् शकलीकृत्य प्रददौ ऋज्राश्वः शतमेकं च मेषानिति मन्त्रान्तरे[2] दर्शनात्। एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तमस्यान्धता जातेति जानन्तौ तस्मै अक्षिणी प्रायच्छतामिति तदेतदाह—अत्र तच्छन्दश्रुतेर्यच्छब्दाध्याहारः यः ऋज्राश्वः शतं शतसंख्याकान् मेषान् वृक्यै आत्मनापोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् तं चक्षदानं क्षदतिरत्तिकर्मा[3] अत्र शकलीकरणार्थः शकलीकृत्य दत्तवन्तं ऋज्राश्वं पिता शापेन अन्धं दृष्टिहीनं चकार कृतवान् हे नासत्या असत्यस्य भावोऽसत्यं स्तेन तद्रहितौ वा भिषजौ देवानां वैद्यभूतौ अश्विनौ वै देवानां भिषजाविति श्रुतेः। दस्रा दर्शनीयौ एतत्संज्ञौ वा हे अश्विनौ अनर्वन् अनर्वणौ अप्रत्यृतौ यद्वा अनर्वणी द्रष्टव्यं प्रति पितृशापान्गमनरहिते अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं सामर्थ्येन तस्मै ऋज्राश्वाय आधत्तं व्यधत्तं अकुरुतम्॥ वृक्ये वृको रण्यश्वा तस्य स्त्री वृकी जातेरस्त्रीविषयादिति ङीष्। जसादिषु छन्दसि वावचनमिति वृक्यै इत्येकवचनस्याट् अभावे यणादेशे उदात्तस्वरित-

१ नि० ११. २५। २ ऋ० सं० १. ८. १६.। ३ तै० सं० २. ३. ११.।

योर्थंणइतिपरस्यानुदात्तस्यस्वरितत्वम् । चक्षदानम् क्षदेर्लटःकानच् चित्स्वरः । अक्षी ईच-द्विवचनेइतिपरत्वादक्षशब्दस्यईकारान्तादेशः सचोदात्तः तस्मिन्कृतेसकृद्गतौविप्रतिषेधइतिपरिभाषयापुनर्नुंनभवति । विचक्षे चक्षेः संपदादिलक्षणोभावेक्विप् । अनर्वन् ऋगतौ अस्मादन्येभ्योपिदृश्यन्तइतिदृशिग्रहणस्यविध्यन्तरोपसंग्रहार्थत्वाद्भावेवनिप् अर्वंगमनंविपर्यंप्रत्यनयोर्नास्तीतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् सुपांसुलुगितिद्विवचनस्यलुक् छान्दसोनलोपाभावः ॥ १६ ॥

सप्तदशीमृचमाह—

आवांरथंदुहितासूर्यस्यकार्ष्मेवातिष्ठदर्वताजयन्ती ।
विश्वेदेवाअन्वमन्यन्तहृद्भिःसमुश्रियानासत्यासचेथे ॥ १७ ॥

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती । विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊम् इति । श्रिया । नासत्या । सचेथे इति ॥ १७ ॥

सवितादुहितरंसूर्याख्यांसोमायराज्ञेप्रदातुमैच्छत् तांसूर्यांसर्वेदेवावरयामासुः तेअन्योन्यमूचुःआदित्यमवधिंकृत्वाआजिंधावाम योस्माकंमध्येउज्जेष्यति तस्येयंभविष्यतीति तत्राश्विनावुदजयताम् साचसूर्या जितवतोस्तयोरथमारुरोह अत्र प्रजापतिर्वैसोमायराज्ञेदुहितरंमायच्छदित्यादिकंब्राह्मणमनुसन्धेयम । इदंचाख्यानंसूर्याविवाहस्यस्तावकेनसत्येनोत्तभिताभूमिरितिसूक्तेनस्पष्टयिष्यते हेअश्विनौवांयुवयोः रथंकार्ष्मेव कार्ष्मशब्दःकाष्ठवाची यथाकाष्ठंआजिधावनस्यअवधितयानिर्दिष्टंलक्ष्यंआशुगामीकश्चित्सर्वेभ्योधावद्भ्यःपूर्वंप्राप्नोति एवमेवसर्वेभ्योदेवेभ्यःपूर्वंअर्वताशीघ्रमवधिंप्राप्नुवतायुष्मदीयेनाश्वेनकरणभूतेनयुवाभ्यांजयन्तीजीयमानासूर्यस्यसवितुःदुहिताअतिष्ठत् आरूढवती विश्वेसर्वेइतरेदेवाः एतदारोहणंस्थानंहृद्भिःहृदयैः अन्वमन्यन्त अन्वजानन् तदानीं हेनासत्यावश्विनौ श्रियाऋक्सहस्रलाभरूपयासंपदाकान्त्यावायुवांसंसचेथे सङ्गच्छेथे ॥ जयन्ती व्यत्ययेनकर्मणिशतृप्रत्ययः । हृद्भिः पद्दन्नित्यादिनाहृदयशब्दस्यहृद्भावः । सचेथे षचसमवाये स्वरितेत्त्वादात्मनेपदम् ॥ १७ ॥

१ ऐ० ब्रा०४.७.१ ।   २ ऋ० सं० .८.३.२०.१ ।

अष्टादशीमृचमाह—

यदयातंदिवोदासायवर्तिर्भरद्वाजायाश्विनाहयन्ता ।
रेवदुवाहसचनोरथोवांवृषभश्चशिंशुमारश्चयुक्ता ॥ १८ ॥

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता । रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः । च । युक्ता ॥ १८ ॥

हेअश्विना हयन्तास्तुतिभिराहूयमानौयुवांभरद्वाजायसंभ्रियमाणहविर्लक्षणान्नाययजमानायदिवोदासायएतत्संज्ञायराजर्षये अभीष्टंफलंदातुंवर्तिस्तदीयंगृहंयद्यदाआयातंआगच्छतम् तदानींरेवत् धनयुक्तमन्नंवांयुवयोः सचनःसेवनोरथःउवाह तस्मैदिवोदासायमापयामास अपिच तस्मिन्रथेवृषभोनड्वान्शिंशुमारोग्राहश्चपरस्परविरुद्धावपिस्वसामर्थ्यंमकटनाययुक्तावाहनतयासंयुक्तावास्ताम् ॥ दिवोदासाय दिवश्चदासे षष्ठ्याअलुग्वक्तव्यइत्यलुक् दिवोदासादीनां छन्दस्युपसंख्यानमितिपूर्वपदाद्युदात्तत्वम् । भरद्वाजाय भृञ्भरणे अस्माद्व्यत्ययेनकर्मणिशतृप्रत्ययः शतुश्छन्दस्युभयथेत्यार्धधातुकत्वेनलसार्वधातुकानुदात्तत्वाभावात्प्रत्ययाद्युदात्तत्वम् बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हयन्ता ह्वेञःकर्मणिलटोव्यत्ययेनशतृ बहुलंछन्दसीतिसंप्रसारणम् शपिगुणेछान्दसोयादेशः। रेवत् रयिशब्दान्मतुप् रयेर्मतौबहुलमितिसंप्रसारणम् छन्दसीरइतिमतुपोवत्वम् रयिशब्दाच्चेतिमतुपउदात्तत्वम् । सचनः षचसेवने अनुदात्तेतश्चहलादेरितियुच् । युक्ता सुपांसुलुगितिविभक्तेराकारः ॥ १८ ॥

एकोनविंशीमृचमाह—

रयिंसुक्षत्रंस्वपत्यमायुःसुवीर्यंनासत्यावहन्ता ।
आजह्नावींसमनसोपवाजैस्त्रिरह्नोभागंदधतीमयातम् ॥ १९ ॥

रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवीर्यम् । नासत्या । वहन्ता । आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः । अह्नः । भागम् । दधतीम् । अयातम् ॥ १९ ॥

हेनासत्यासुक्षत्रं शोभनबलं रयिंधनं स्वपत्यंशोभनैःपुत्रादिभिरुपेतम् सुवीर्यंशोभनवीर्योपेतम् आयुः अन्ननामैतत् एवंगुणविशिष्टंअन्नंचवहन्ताधारयन्तौयुवां समनसासमानमनस्कौसन्तौजह्नावीं जह्नोर्महर्षेःसंबन्धिनींप्रजांआयातंआभिमुख्येनागच्छतम् कीदृशींवाजैर्हविर्लक्षणैरन्नैरुपेताम् अह्नः अत्राहःशब्देनतत्रानुष्ठेयःसोमयागोलक्ष्यते तस्यप्रातःसवनादिरूपेणत्रिधाविभक्तंभागंअंशंदधतींबिभ्रतीम् अनुसवनंहविर्भिर्यजमानामित्यर्थः ॥ सुक्षत्रम् बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । सुवीर्यम् वीरवीर्यौचेतिबहुव्रीहावुत्तरपदाद्युदात्तत्वम् । जह्नावीं जह्नुशब्दात्तस्येदमित्यण् टिड्ढाणञितिङीप् जाह्नवी ह्रस्वदीर्घयोर्विनिमयःपृषोदरादित्वात् उक्तंच—वर्णागमोवर्णविपर्ययश्चेति अतएवमध्योदात्तत्वम्॥ १९ ॥

विंशीमृचमाह—

परि॑विष्टंजाहु॒षंवि॒श्वतः॒सीं॑सु॒गेभि॒र्नक्त॑मूहथू॒रजो॑भिः ।
वि॒भि॒न्दुनां॑नासत्या॒रथे॑न॒विपर्व॑ताँअजर॒यूअ॑यातम् ॥ २० ॥११॥

परि॑ऽविष्टम् । जा॒हु॒षम् । वि॒श्वतः॑ । सी॒म् । सु॒ऽगेभिः॑ । नक्त॑म् ।
ऊ॒ह॒थुः॒ । रजः॑ऽभिः । वि॒ऽभि॒न्दुना॑ । ना॒स॒त्या॒ । रथे॑न । वि ।
पर्व॑तान् । अ॒ज॒र॒यू॒ इति॑ । अ॒या॒त॒म् ॥ २० ॥ ११ ॥

जाहुषोनामकश्चिद्राजा विश्वतःसर्वतः परिविष्टंशत्रुभिःपरिवृतंतंराजानं हेनासत्यावश्विनौ अजरयूजरारहितौनित्यतरुणौयुवां विभिन्दुनाविशेषेणसर्वस्यभेदकेनात्मीयेनरथेननक्तंरात्रौ सुगेभिः सुष्टुगन्तुंशक्यैः रजोभिःरञ्जकैर्मार्गैः ऊहथुः तस्माच्छत्रुसमूहान्निरगमयतम् सीमित्येतत्पदंपादपूरणम् निर्गतेनतेनसहपर्वतानशत्रुभिरारोढुमशक्यान् शिलोच्चयानत्ययातंविशेषेणगच्छतम् ॥ परिविष्टम् विशप्रवेशने कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । सुगेभिः सुदुरोरधिकरणइतिगमेर्डः । विभिन्दुना भिदिर्विदारणे औणादिकउप्रत्ययोनुमागमश्च । अजरयू नजराअजरा तामात्मनइच्छतः सुपआत्मनःक्यच् नच्छन्दस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः क्याच्छन्दसीत्युप्रत्ययः॥ २० ॥

॥ इतिप्रथमस्याष्टमेएकादशोवर्गः ॥ ११ ॥

एकविंशीमृचमाह—

एकस्यावस्तोरावतंरणायवशमश्विनासनयेसहस्रा ।
निरहतंदुच्छुनाइन्द्रवन्तापृथुश्रवसोवृषणावरातीः ॥ २१ ॥

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना । सनये । सहस्रा । निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥

हेअश्विनौवशमेतत्संज्ञमृषिं एकस्यावस्तोरेकस्याह्नः रणायरमणीयाय सहस्रा सहस्रसंख्यायसनयेधनलाभायआवतंअरक्षतं सऋषिः मत्यहंयथासहस्रसंख्यंधनंलभतेतथारक्षितवन्तावित्यर्थः अपिच हेवृषणौकामानांवर्षितारौअश्विनौ इन्द्रवन्ताइन्द्रेणसंयुक्तौयुवां दुच्छुनाः दुष्टसुखान्दुःखस्यकर्तॄन्पृथुश्रवसः विस्तीर्णयशसः अरातीः शत्रून्निरहतं निःशेषेणावधिष्टम् यद्वा कानीनस्यपृथुश्रवसस्संज्ञकस्यराज्ञः शत्रूनितियोज्यम् ॥ सहस्रा सुपांसुलुगितिचतुर्थ्याडादेशः । अहतम् लङ्थसस्तम् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । दुच्छुनाः शुनमितिसुखनाम दुष्टंसुखंयासांतास्तथोक्ताः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् ॥ २१ ॥

द्वाविंशीमृचमाह—

शरस्यचिदार्चत्कस्यावतादानीचादुच्चाचक्रथुःपातवेवाः ।
शयवेचिन्नासत्याशचीभिर्जसुरयेस्तर्यंपिप्यथुर्गाम् ॥ २२ ॥

शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वा । शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥ २२ ॥

आर्चत्कस्यऋचत्कपुत्रस्यशरस्यचित्एतत्संज्ञस्यापिस्तोतुः पिपासितस्यपातवेपानार्थंनीचात्नीचीनात् अवतात्कूपात् उच्चाउच्चैरुपरिष्टात् वाः उदकं हेअश्विनौयुवांआचक्रथुः आभिमुख्येनकृतवन्तौ तथा हेनासत्यावश्विनौ शचीभिः युष्मदीयैःकर्मभिः परिचरणैःजसुरयेश्रान्तायशयवेचित् शयुनाम्नेऋषयेस्तर्यंनिवृत्तप्रसवांगांअग्निहोत्रार्थंस्यपयसोदोग्ध्रींपिप्यथुः पय-

सायुवांआपूरितवन्तौ ॥ पातवे पापाने तुमर्थेसेसेनितितवेन्प्रत्ययः । जसुरये जसुहिंसायाम् जसुसहोरुरिन् । स्तर्यम् स्तीर्यतेआच्छाद्यतेप्रसवेसामर्थ्याभावेनेतिस्तरीः अवितृस्तृस्तृतन्त्रिभ्यईरितीकारप्रत्ययः वाछन्दसीत्यमिपूर्वस्यविकल्पितत्वाद्भावेयणादेशः उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । पिप्यथुः प्यायीवृद्धौ लिटिव्यत्ययेनपरस्मैपदम् लिड्यङोश्चेतिपीभावः ॥ २२ ॥

त्रयोविंशीमृचमाह-

अवस्यतेस्तुवतेकृष्णियायंऋजूयतेनासत्याशचीभिः ।
पशुंननष्टमिवदर्शनायविष्णाप्वंददथुर्विश्वकाय ॥ २३ ॥

अवस्यते । स्तुवते । कृष्णियायं । ऋजुऽयते । नासत्या ।
शचीभिः । पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् ।
ददथुः । विश्वकाय ॥ २३ ॥

अवस्यतेअवनंरक्षणमात्मनइच्छतेस्तुवतेस्तुतिंकुर्वते कृष्णियाय कृष्णोनामकश्चित् तस्य पुत्रायऋजूयते आर्जवमिच्छते विश्वकायएतत्संज्ञायऋषये हेनासत्यौ युवांशचीभिरात्मीयैःकर्मभिःविष्णाप्वं विष्णाप्वंनामविनष्टंपुत्रंदर्शनामदर्शनार्थंददथुःदत्तवन्तौ तत्रदृष्टान्तः—पशुंननष्टमिव एकउपमार्थीयःपूरकः यथाकश्चिद्विनष्टंपशुंस्वामिनोदृष्टिपथंप्रापयतितद्वत्॥अवस्यते अवस् शब्दात्सुपआत्मनःक्यच् शतुरनुमइतिविभक्तेरुदात्तत्वम् । कृष्णियाय कृष्णशब्दादपत्यार्थे छान्दसोघच् ॥ २३॥

चतुर्विंशीमृचमाह-

दशरात्रीरशिवेनानवद्यूनवनद्धंश्नथितमप्स्वन्तः ।
विप्रुतंरेभमुदनिप्रवृक्तमुन्निन्यथुःसोममिवस्रुवेर्ण ॥ २४॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम्।
अप्ऽसु । अन्तरिति । विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् ।
उत् । निन्यथुः । सोमम्ऽइव । स्रुवेर्ण ॥ २४ ॥

पुराखलुरेभमृषिंपाशैर्बद्धाअसुराःकूपेकस्यचिद्दिवसस्यसायंकालेप्रचिक्षिपुःसचाश्विनौस्तुवन्दशरात्रीर्नवाहानिचकूपमध्येतथैवावतस्थे दशमेहनिमातरश्विनौतंकूपादुदतारयन्तामितितदाह—अप्सुकूपान्तर्वर्तमानासुअन्तर्मध्येअसुरैःपातितं अशिवेनदुःखहेतुनादाम्नाअवनद्धंबद्धम् श्नथितंशत्रुभिर्हिंसितम् दशरात्रीःदशसंख्याकानिशाः नवद्यूनवसंख्याकान्यहानिच अत्यन्तसंयोगेद्वितीया एतावन्तंकालंतत्रैवकूपेवस्थितम् अतएवउदन्युदके विप्रुतंविप्लुतम् व्याक्षिप्तसर्वाङ्गं प्रवृक्तम् स्रुचोपममेतत् प्रवृजनेनसंतप्तंघर्ममिवव्यथयासन्तप्यमानम् एवंभूतंरेभं हेअश्विनौ युवांउन्निन्यथुः तस्मात्कूपादुन्नीतंउत्तीर्णंकृतवन्तौ तत्रदृष्टान्तः—सोममिव यथाअग्निहोत्रहोमार्थंअभिषुतंसोमरसंकूपसदृशेअग्निहोत्रस्थालीमध्येवर्तमानंस्रुवेणाध्वर्युरुन्नयतितद्वत् ॥ अवनद्धम् 'णहबन्धने कर्मणिनिष्ठा नहोधः झषस्तथोर्धोधइतिनिष्ठातकारस्यधत्वम् गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । श्नथितम् श्नथहिंसार्थः निष्ठा विप्रुतम् प्रुङ्गतौ अवनद्धवत्प्रत्ययस्वरौ कपिलकादित्वाल्लत्वविकल्पः । उदनि पद्दन्नित्यादिनाउदकशब्दस्योदन्भावः ॥ २४ ॥

पञ्चविंशीमृचमाह—

**प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।**
**उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ २५ ॥ १२**

प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् । सुऽगवः । सुऽवीरः । उत । पश्यन् । अश्नुवन् । दीर्घम् । आयुः । अस्तम्ऽइव । इत् । जरिमाणम् । जगम्याम् ॥ २५ ॥ १२ ॥

एवमनेनसूक्तेनाश्विनोर्महिमानंप्रशस्याधुनामन्त्रद्रष्टास्वाभीष्टंप्रार्थयते हेअश्विनौ वांयुवयोःदंसांसिपुरु कृतानिकर्माणिप्रावोचं इत्थमुक्तवानस्मि सोहंसुगवः शोभनगोयुक्तःसुवीरःशोभनवीरश्चभूत्वाअस्यराष्ट्रस्यपतिरधिपतिःस्यांभवेयं उतअपिच पश्यन्अक्षिभ्यांपश्यन्उपलक्षणमेतत् सर्वैरिन्द्रियैःस्वस्वविषयदर्शनसमर्थैःदीर्घंवर्षशतरूपेणायतंआयुर्जीवितंचाश्नुवन्प्राप्नुवन्नहम् अस्तमिवेत् यथागृहंस्वामीनिष्कण्टकंप्रविशति एवंजरिमाणंजरांजगम्यां कण्टकराहित्येनप्राप्नुयांवृद्धःसंश्चिरकालंनिवसेयमित्यर्थः ॥ स्याम् अस्तेःप्रार्थनायांलिङ् यासुट् असोरल्लोपइत्यकारलोपः । अश्नुवन् अशूव्याप्तौ व्यत्ययेनशतृ । जरिमाणम् जॄष्वयोहानौ अस्मादौणादिकइमनिच्प्रत्ययः । जगम्याम् गमेःप्रार्थनायांलिङि बहुलंछन्दसीतिविकरणस्यश्लुः ॥ २५ ॥

॥ इतिप्रथमस्याष्टमेद्वादशोवर्गः ॥ १२ ॥

मध्वइतिपञ्चविंशत्यृचंद्वितीयंसूक्तम् औशिजस्यकक्षीवतआर्षम् त्रैष्टुभमाश्विनम् मध्व-इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनयोःपूर्वसूक्तेनसहोक्तोविनियोगः ।

तत्रप्रथमामृचमाह—

मध्वः॒सोम॑स्याश्विना॒मदा॑यप्र॒त्नोहोता॒विवा॑सतेवाम् ।
ब॒र्हिष्म॑तीरा॒तिर्विश्रि॑ता॒गीरि॒षाया॑तंनासत्योप॒वाजैः॑ ॥ १ ॥

मध्वः॑ । सोम॑स्य । अ॒श्वि॒ना॒ । मदा॑य । प्र॒त्नः । होता॑ । आ । वि॒वा॒स॒ते॒ । वा॒म् । ब॒र्हिष्म॑ती । रा॒तिः । विऽश्रि॑ता । गीः । इ॒षा । या॒त॒म् । ना॒स॒त्या॒ । उप॑ । वाजैः॑ ॥ १ ॥

अश्विना हेअश्विनौ मध्वोमधुमाधुर्योपेतेनसोमस्यसोमेनमदाययुवयोर्मदार्थंप्रत्नश्चिरंतनो-होताहोमनिष्पादकोयजमानः वांयुवांआविवासते विवासतिःपरिचरणकर्मा आङ्मर्यादायाम् यथाशास्त्रंपरिचरति अपिचरातिर्दातव्यंहविः बर्हिष्मतीआस्तीर्णेनबर्हिषायुक्तंयुष्मदर्थंबर्हिष्या-सादितमित्यर्थः तथागीः स्तुतिलक्षणावाक्च विश्रितावाक्त्विक्षुसमवेता तैः स्तुतिरपिक्रियतइत्य-र्थः अतोहेनासत्यावश्विनौ इषाअस्मभ्यंदातव्येनान्नेन वाजैर्बलैश्चसहयुवां उपयातंअस्मत्समीपं प्राप्नुतम् ॥ मध्वः सुपांसुपोभवन्तीतितृतीयार्थेषष्ठी जसादिषुछन्दसिवावचनमितिघेर्ङितीतिगु-णाभावेयणादेशः । मदाय मदीहर्षे मदोनुपसर्गइत्यप् । रातिः रादाने कर्मणिक्तिन् मन्त्रेवृषेत्या-दिनातस्योदात्तत्वम् । विश्रिता श्रिञ्सेवायाम् कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् ॥ १ ॥

द्वितीयामृचमाह—

योवा॑मश्विना॒मन॑सो॒जवी॑या॒न्रथः॑स्व॒श्वो॒विश॑आ॒जिगा॑ति ।
येन॒गच्छ॑थःसु॒कृतो॑दुरो॒णंतेन॑नरावर्ति॒र॒स्मभ्यं॑यातम् ॥ २ ॥

यः । वा॒म् । अ॒श्वि॒ना॒ । मन॑सः । जवी॑यान् । रथः॑ । सु॒ऽअश्वः॑ । विशः॑ । आ॒ऽजिगा॑ति । येन॑ । गच्छ॑थः । सु॒ऽकृतः॑ । दु॒रो॒णम् । तेन॑ । न॒रा॒ । व॒र्तिः । अ॒स्मभ्य॑म् । या॒त॒म् ॥ २ ॥

हेअश्विनौ वांयुवयोःस्वभूतः मनसोजवीयान् मनसोप्यतिशयेनवेगवान् स्वश्वः शोभनाश्वः एवंभूतोयोरथः विशः आजाः आजिगाति आभिमुख्येनगच्छति येनरथेनसुकृतः शोभनंयागंकुर्वतोयजमानस्य दुरोणंदेवयजनलक्षणंगृहंगच्छथः हेनरानेतारावश्विनौ तेनरथेनअस्मभ्यंअस्माकंवर्तिः वर्तनाधिकरणंगृहंयातंआगच्छतम् ॥ जवीयान् जवोस्यास्तीति जववान् तदस्यास्तीतिमतुप् ततआतिशायनिकईयसुन् विन्मतोर्लुक् टेरितिटिलोपः । जिगाति गास्तुतौ जौहोत्यादिकः गतिकर्मसुपाठादत्रगच्छत्यर्थः बहुलंछन्दसीत्यभ्यासस्येत्वम् ॥ २ ॥

तृतीयामृचमाह–

ऋपिंनरावंहसःपाञ्चजन्यमृबीसादत्रिंमुञ्चथोगणेन ।
मिनन्तादस्योरशिवस्यमायाअनुपूर्वंवृषणाचोदयन्ता ॥ ३ ॥

ऋपिम् । नरौ । अंहसः । पाञ्चऽजन्यम् । ऋबीसात् । अत्रिम् ।
मुञ्चथः । गणेन । मिनन्ता । दस्योः । अशिवस्य । मायाः ।
अनुऽपूर्वम् । वृषणा । चोदयन्ता ॥ ३ ॥

हिनेनाग्निमित्यनयोक्तएवार्थःपुनःप्रकारान्तरेणानयाप्रतिपाद्यते अतस्तत्रोक्तंसर्वमत्रापिद्रष्टव्यम् अक्षरार्थस्तु हेनरौनेतारौवृषणौकामानांवर्षितारौअश्विनौपाञ्चजन्यंनिपादपञ्चमाश्चत्वारोवर्णाःपञ्चजनास्तेपुभवंस्वर्भानुनागृहीतममुंसूर्यंमोचयन्नत्रिःसर्वैःपहिताचरणाद् तत्रभवइत्युच्यते तादृशमृषिंअंहसःपापरूपादृबीसात् शतद्वारेयन्त्रगृहेअग्नेःपीडार्थअसुरैःप्रक्षिप्ताद् तुपाग्नेःसकाशाद् गणेनेन्द्रियवर्गेणपुत्रपौत्रादिगणेनवासहमुञ्चथः अमोचयतम् किंकुर्वन्तौ मिनन्तौहिंसन्तौ दस्योः उपक्षपयितुः अशिवस्यदुःखकारिणोसुरस्यसंबन्धिनीःनस्मिन्नत्रौप्रयुक्तामायाश्चअनुपूर्वंआनुपूर्व्येणचोदयन्तौप्रेरयन्तौनिवारयन्तौ ॥पाञ्चजन्यं वहिर्देवपञ्चजनेभ्यश्चयकच्यमिनिभवार्थेत्र्यः । मिनन्ता मीञ्हिंसायाम् क्र्यादिकः लटःशतृ मीनातेर्निगमेइतिह्रस्वत्वम् ॥ ३ ॥

चतुर्थीमृचमाह–

अश्वंनगूह्ळमश्विनादुरेवैर्ऋपिंनरावृषणारेभमप्सु ।
सन्तंरिणीथोविमुतंदंसोभिर्नवांजुर्यन्तिपूर्व्याकृतानि ॥ ४ ॥

अश्व॑म् । न । गूळ्ह॑म् । अ॒श्वि॒ना॒ । दुः॒ऽएवैः॑ । ऋषि॑म् । न॒रा॒ । वृ॒ष॒णा॒ ।
रेभ॑म् । अ॒प्ऽसु । सम् । तम् । रि॒णी॒थः॒ । विऽप्रु॑तम् । दंसः॑ऽभिः ।
न । वा॒म् । जू॒र्य॒न्ति॒ । पू॒र्व्या । कृ॒तानि॑ ॥ ४ ॥

नरानेतारौवृषणाकामानांवर्षकौ हेअश्विनौ दुरेवैर्दुष्पापैरसुरैः अप्सुकूपस्थेषूदकेषुगूळ्हंनिगूढंनिखातंरेभंऋषिंकूपादुन्नीयविप्रुतंविश्लिष्टावयववन्तंअश्वंनव्याधितमश्वमिव दंसोभिरात्मीयैः भैषज्यरूपैःकर्मभिः संरिणीथः समधत्तम् सर्वैरवयवैरुपेतमकुरुतमित्यर्थः वांयुवयोःसंबन्धीनिपूर्व्याचिरन्तनानिकृतानिकर्माणिनजूर्यन्ति नहिजीर्णानिभवन्ति ॥ दुरेवैः दुरुपसृष्टादेतेः ईषद्दुःसुषुइतिखल् । रिणीथः रीगतिरेषणयोः क्रैयादिकः प्वादीनांह्रस्वः । जूर्यन्ति जूष्वयोहानौ दैवादिकत्वाच्छ्यन् बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः ॥ ४ ॥

पञ्चमीमृचमाह—

सु॒षु॒प्वांसं॒ननिर्ऋ॑तेरु॒पस्थे॒सूर्यं॒नद॑स्रा॒तम॑सिक्षि॒यन्त॑म् ।
शु॒भेरु॒क्मंनद॑र्श॒तंनिखा॑त॒मुदू॑पथुरश्विना॒वन्द॑नाय ॥ ५ ॥ १३ ॥

सु॒सु॒प्वांस॑म् । न । निःऽऋ॑तेः । उ॒पऽस्थे॑ । सूर्य॑म् । न । द॒स्रा॒ ।
तम॑सि । क्षि॒यन्त॑म् । शु॒भे । रु॒क्मम् । न । द॒र्श॒तम् ।
निऽखा॑तम् । उत् । ऊ॒प॒थुः॒ । अ॒श्वि॒ना॒ । वन्द॑नाय ॥ ५ ॥ १३ ॥

निर्ऋतिरितिभूनाम निर्ऋतेःपृथिव्याः उपस्थेउत्संगेसुषुप्वांसंन सुप्तवन्तंपुरुषमिव कूपमध्येशयानंसूर्यंन सूर्यमिव तमसिकूपांतर्गतान्धकारेक्षियन्तंनिवसन्तं सूर्यमिवतेजस्विनमित्यर्थः शुभे शोभनार्थं निर्मितंरुक्मंन रोचमानंसुवर्णमयाभरणमिवदर्शतंदर्शनीयं एवंगुणविशिष्टंकूपेअसुरैर्निखातंवन्दनायवन्दनंऋषिं हेदस्रादर्शनीयावश्विनौयुवांउदूपथुः उद्धृतवन्तौ ॥ सुषुप्वांसम् ञिष्वप्शये लिटःक्वसुः वचिस्वपीत्यादिनासंप्रसारणम् द्विर्वचनादि । उपस्थे उपपूर्वात्तिष्ठतेर्घञर्थेकविधानमित्यधिकरणेकप्रत्ययः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् । वन्दनाय क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेत्रयोदशोवर्गः ॥ १३ ॥

षष्ठीमृचमाह—

तद्वांनराशंस्यंपज्रियेणंकक्षीवंतानासत्यापरिज्मन् ।
शफादश्वस्यवाजिनोजनायशतंकुंभाँअसिञ्चतंमधूनाम् ॥ ६ ॥

तत् । वाम् । नरा । शंस्यम् । पज्रियेण । कक्षीवंता । नासत्या । परिऽज्मन् । शफात् । अश्वस्य । वाजिनः । जनाय । शतम् । कुम्भान् । असिञ्चतम् । मधूनाम् ॥ ६ ॥

हेनरानेतारौनासत्यावश्विनौ परिज्मन्परिगमनेअभीष्टस्यप्रापणेनिमित्तभूतेसति पज्रियेणपज्राणांअङ्गिरसांकुलेजातेनकक्षीवतामया वांयुवयोःसंबन्धि तत्कर्मशंस्यंमकर्पेणशंसनीयं तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यज्जनायअपेक्षमाणायपुरुषायवाजिनोवेगवतस्त्वदीयाश्वस्यशफात् निर्गतैर्मधूनांमधुभिःशतंशतसंख्याकान्कुंभान्असिञ्चतंअपूरयतम् सिञ्चतिरत्रपूरणार्थः यदेतन्मधुनापूरणं तच्छंस्यमित्यर्थः ॥ ६ ॥

सप्तमीमृचमाह—

युवंनरास्तुवतेकृष्णियायविष्णाप्वंददथुर्विश्वकाय ।
घोषायैचित्पितृषदेदुरोणेपतिंजूर्यन्त्याअश्विनावदत्तम् ॥ ७ ॥

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः । विश्वकाय । घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् । जूर्यन्त्यै । अश्विना । अदत्तम् ॥ ७ ॥

हेनरानेतारावश्विनौ युवंयुवांस्तुवतेस्तोत्रंकुर्वते कृष्णियाय कृष्णाख्यस्यपुत्रायविश्वकायविष्णाप्वंददथुः विष्णाप्वंनामविनष्टंपुत्रंदत्तवन्तौ घोषानामब्रह्मवादिनीकक्षीवतोदुहिता साकुष्ठिनीसतीकस्मैचिद्वरायादत्तापितृगृहेनिषण्णाजीर्णासीत् साश्विनोरनुग्रहात् नष्टकुष्ठासतीपतिंलेभे तदेतदाह—हेअश्विनौ पितृषदेपित्रासंबद्धेदुरोणेस्वकीयेजनकगृहेकुष्ठरोगेणभर्तारमप्राप्य पितृषदेपितृसमीपेनिषण्णायैजूर्यन्त्यै जरांप्राप्नुवत्यैघोषायैचित्एतत्संज्ञायै ब्रह्मवादिन्यैअपिरोगोपशमनेनपतिंभर्तारंअदत्तम् युवांदत्तवन्तौ ॥ पितृषदे षद्लृविशरणादिषु क्विप्चेतिक्विप् । जूर्यन्त्यै

नृपूर्वयोहानौ लटः शतृ दिवादित्वाच्छ्यन् बहुलंछन्दसीत्युत्वम् हलिचेतिदीर्घः अदुपदेशाल्ल-सार्वधातुकानुदात्तत्वेश्यनोनित्त्वादाद्युदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

युवंश्यावायरुशतीमदत्तंमहःक्षोणस्याश्विनाकण्वाय ।
प्रवाच्यंतद्वृषणाकृतंवांयन्नार्षदायश्रवोअध्यधत्तम् ॥ ८ ॥

युवम् । श्यावाय । रुशतीम् । अदत्तम् । महः । क्षोणस्य ।
अश्विना । कण्वाय । प्रऽवाच्यम् । तत् । वृषणा । कृतम् ।
वाम् । यत् । नार्षदाय । श्रवः । अधिऽअधत्तम् ॥ ८ ॥

हेअश्विनौ युवंयुवांश्यावायकुष्ठरोगेणश्यामवर्णायऋषयेरुशतींदीप्तत्वचंस्त्रियंअदत्तम् प्रायच्छतम् अपिचक्षोणस्यक्षोणायदृष्टिराहित्येनगन्तुमशक्तःसन्एकस्मिन्नेवावस्थानेनिवसति तस्मैनिवसतेकण्वायऋषयेमहस्तेजः तैजसंचक्षुरिन्द्रियंअदत्तमितिशेषः तथाहेवृषणा कामानांवर्षितारौ वांयुवयोस्तात्कृतंकर्मप्रवाच्यंप्रकर्षेणवाचनीयंशंसनीयम् नार्षदायनृषदपुत्रायबधिरायऋषये श्रवःश्रवणेन्द्रियंयदध्यधत्तंदत्तवन्तौस्थइतियत्तदित्यर्थः अपरआह—ब्राह्मणस्यपरीक्षार्थअसुराःकण्वंऋषिंगूढेतमसिनिदधुः अत्रैवस्थितःसन्स्युष्टांउपसंविजानीहि यदित्वंब्राह्मणोसीति तमश्विनावागत्यऊचतुः व्युष्टायांहर्म्यस्योपरिवीणांवादयन्तावावामागमिष्यावः तंशब्दंश्रुत्वाव्युष्टामुपसंब्रूहि तदेतत्प्रतिपाद्यते—हेवृषणाकामानांवर्षितारौअश्विनौ वां युवयोस्तत्कृतंकर्मप्रवाच्यंप्रशंसनीयं यन्नार्षदायनृषदपुत्रायकण्वायक्षोणस्य क्षोणः शब्दकारीवीणाविशेषः महोमहतः क्षोणस्यश्रवः शब्दंअध्यधत्तम् उपसोविज्ञानार्थअधिकंअकुरुतम् ॥ महः महपूजायाम् अस्मादौणादिकोसिप्रत्ययः पक्षान्तरेतुमहच्छब्दात् पष्ठ्येकवचनेछान्दसोऽह्लोपः बृहन्महतोरुपसंख्यानमितिविभक्तेरुदात्तत्वम् यद्वा क्विबन्तात्पष्ठ्येकवचनम् । क्षोणस्य क्षिनिवासगत्योः कृत्यल्युटोबहुलमितिकर्तरिल्युट् पृषोदरादित्वात्क्षोणभावः नद्धंकंयास्केन—क्षोणस्यक्षयणस्य[1] । पक्षान्तरेतु—टुक्षुशब्देइत्यस्मादौणादिकोनप्रत्ययः । नार्षदाय ऋष्यन्धके-ष्णण् ॥ ८ ॥

1 नि० ६.६.।

हेसुदानूशोभनदानावश्विनौ वांयुवयोः संबन्धीनिएतानि समनन्तरोक्तानिवीर्याणिश्रव-स्याश्रवणीयानि सर्वैर्ज्ञातव्यानिभवन्ति तदर्थंरोदस्योः द्यावापृथिव्यात्मनावर्तमानयोर्युवयोः उक्तंचयास्केन—तत्कावश्विनौद्यावापृथिव्यावित्येकइति[1]। तथाचतैत्तिरीयकम्—इमेअश्विना-संवत्सरोऽग्निर्वैश्वानरइति[2]। तयोर्युवयोः सदनंस्वोऽत्समीपेनिवेशनंप्रसादनहेतुभूतंवा आङ्गूषंआ-घोषणीयम् ब्रह्म मन्त्ररूपंस्तोत्रंनिष्पन्नमितिशेषः यद्यदापज्रासः अंगिरसांगोत्रोत्पन्नायजमा-नाः हेअश्विनौ वांयुवां हवन्तेस्तुतिभिरात्मरक्षार्थंआह्वयन्ति तदानीं इषादन्नव्येनान्नेनसहा-यातंआगच्छतंच विदुषेयुष्मद्विषयस्तोत्रंजानतेमह्यंचवाजमन्नंबलंवाप्रयच्छतमितिशेषः ॥ या-तम् चवायोगेप्रथमेतिनिघातप्रतिषेधः । विदुषे विदज्ञाने विदेःशतुर्वसुः वसोःसंप्रसारणमि-तिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् ॥ १० ॥

॥ इतिप्रथमस्याष्टमेचतुर्दशोवर्गः ॥ १४ ॥

एकादशीमृचमाह—

सूनोर्मानेनाश्विनागृणानावाजंविप्रायभुरणारदन्ता ।
अगस्त्येब्रह्मणावावृधानासंविश्पलांनासत्यारिणीतम् ॥ ११ ॥

सूनोः । मानेन । अश्विना । गृणाना । वाजम् । विप्राय । भुरणा ।
रदन्ता । अगस्त्ये । ब्रह्मणा । ववृधाना । सम् । विश्पलाम् ।
नासत्या । अरिणीतम् ॥ ११ ॥

हेभुरणाभर्तारौपोषकौनासत्यासत्यस्वभावौ हेअश्विनौ सूनोः कुंभात्प्रसूतस्यअगस्त्य-स्यखेलपुरोहितस्यसंबन्धिनामानेनस्तुत्यस्यपरिच्छेदकेनस्तोत्रेणगृणानास्तूयमानौ विप्रायमेधा-विनेभरद्वाजाय कृपयेवाजमन्नंरदन्तौविलिखन्तौनिष्पादयन्तौ युवांविश्पलांसंग्रामेछिन्नजंघांखे-लस्यसंबन्धिनींस्त्रियंसमरिणीतम् पुनरस्याजंघयासमयोजयतम् तृतीयेनपादेनप्रथमपादोक्तो-र्थोविविच्यते अगस्त्येऋषौब्रह्मणा मन्त्ररूपेणस्तोत्रेणववृधानाप्रवर्धिताविति ॥ गृणाना गृशब्दे व्यत्ययेनकर्मणिकर्तृप्रत्ययः प्वादीनांह्रस्वः । भुरणा भुरणधारणपोषणयोः कण्ड्वादिः पचाद्यच् अतोलोपयलोपौ सुपांसुलुगितिविभक्तेराकारः आमन्त्रितनिघातः विप्रायेत्यस्यरदन्तेत्यनेनासाम-र्थ्यान्नपराङ्गवद्भावत्वम्। ववृधाना वृधेर्लिटःकानच् संहितायांछान्दसमभ्यासस्यदीर्घत्वम् तु-

१ नि० १२. १. । २ तै० सं० ५. ६. ४. ।

नवमीमृचमाह—

पुरूवर्पांस्यश्विनादधानानिपेदवंऊहथुराशुमश्वम् ।
सहस्रसांवाजिनमप्रतीतमहिहनंश्रवस्यं१तरुत्रम् ॥ ९ ॥

पुरु । वर्पांसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः ।
आशुम् । अश्वम् । सहस्रऽसाम् । वाजिनम् । अप्रतिऽइतम् ।
अहिऽहनम् । श्रवस्यम् । तरुत्रम् ॥ ९ ॥

हेअश्विनौ पुरुपुरूणिबहूनिवर्पांसि रूपनामैतत् आत्मीयैःकर्मभिः कृतानिरूपाणिदधाना धारयन्तौयुवांआशुंशीघ्रगामिनंअश्वं पेदवेपेदुनाम्नेस्तुवतेन्यूहथुः नितरांप्रापितवन्तौ दत्तवन्तावित्यर्थः कीदृशमश्वं सहस्रसांसहस्रसंख्याकस्यधनस्यसनितारंदातारंवाजिनंबलवन्तंअतएवअप्रतीतंशत्रुभिरप्रतिगतम् अहिहनंअहीनामागत्यहन्तॄणांशत्रूणांशत्रून्वाहन्तारंश्रवस्यं श्रवःश्रवणीयं स्तोत्रंतत्रभवंस्तुतिविषयमित्यर्थः तरुत्रं तरितारं ॥ वर्पांसि वृञ्वरणे वृञ्शीङ्भ्यांरूपस्वाङ्गयोः पुट्चेत्यसुन्पुडागमश्च। दधाना दधातेर्लटःशानच् अभ्यस्तानामादिरित्याद्युदात्तत्वम्। सहस्रसाम् षणुदाने जनसनखनेतिविट् विड्वनोरनुनासिकस्यादित्यात्वम्। श्रवस्यम् श्रवस्शब्दात् भवेछन्दसीतियत् तित्स्वरितः। तरुत्रम् तॄप्लवनतरणयोः अशित्रादिभ्यइत्रोत्रावित्युत्रप्रत्ययः व्यत्ययेनाद्युदात्तत्वम् यद्वा ग्रसितस्कभितेत्यादौनिपातनात्तृजन्तात्तरुतृशब्दादमि संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावेयण् तित्स्वरेणाद्युदात्तत्वम् ॥ ९ ॥

दशमीमृचमाह—

एतानिवांश्रवस्यासुदानूब्रह्माङ्गूषंसदनंरोदस्योः ।
यद्वांपज्रासोअश्विनाहवन्तेयातमिषाचविदुषेचवाजम्॥१०॥१४॥

एतानि । वाम् । श्रवस्या । सुदानू इति सुऽदानू । ब्रह्म । आङ्गूषम् ।
सदनम् । रोदस्योः । यत् । वाम् । पज्रासः । अश्विना । हवन्ते ।
यातम् । इषा । च । विदुषे । च । वाजम् ॥ १० ॥ १४ ॥

त्रयोदशीमृचमाह—

युवंच्यवानमश्विनाजरन्तंपुनर्युवानंचक्रथुःशचीभिः ।
युवोरथंदुहितासूर्यस्यसहश्रियानासत्यावृणीत ॥ १३ ॥

युवम् । च्यवानम् । अश्विना । जरन्तम् । पुनः । युवानम् ।
चक्रथुः । शचीभिः । युवोः । रथम् । दुहिता । सूर्यस्य । सह ।
श्रिया । नासत्या । अवृणीत ॥ १३ ॥

हेअश्विनौ युवंयुवांशचीभिः आत्मीयैर्भैषज्यलक्षणैःकर्मभिः जरन्तं जीर्यन्तं च्यवानंस्तुतीनांच्यावयितारंएतत्संज्ञंऋषिं युवानंपुनर्यौवनोपेतंचक्रथुः कृतवन्तौ अपिच हेनासत्यावश्विनौ युवोःयुवयोः रथंसूर्यस्यदुहितासूर्याख्याश्रियासहऋक्सहस्ररूपयासंपदाकान्त्यावासह अवृणीतसमभजत आगत्यारूढवतीत्यर्थः आवांरथंदुहितेत्यत्रलिखितमाख्यानमत्रापिद्रष्टव्यम्॥ जरन्तम् जॄष्वयोहानौ व्यत्ययेनशप् । युवोः युष्मच्छब्दात्षष्ठीद्विवचनेव्यत्ययेनयोचीतियत्वाभावेसतिशेषेलोपइतिदकारलोपः अतोगुणेइतिपररूपत्वम् एकादेशउदात्तेनोदात्तः । अवृणीत वृङ्संभक्तौ क्रैयादिकः ॥ १३ ॥

चतुर्दशीमृचमाह—

युवंतुग्रायपूर्व्येभिरेवैःपुनर्मन्यावभवतंयुवाना ।
युवंभुज्युमर्णसोनिःसमुद्राद्विभिरूहथुरृज्रेभिरश्वैः ॥ १४ ॥

युवम् । तुग्राय । पूर्व्येभिः । एवैः । पुनःऽमन्यौ । अभवतम् ।
युवाना । युवम् । भुज्युम् । अर्णसः । निः । समुद्रात् । विऽभिः ।
ऊहथुः । ऋज्रेभिः । अश्वैः ॥ १४ ॥

---

१ ऋ० सं० १. ८. ११. १

हेयुवाना दुःखानांयावयितारावश्विनौ युवंयुवांपूर्व्येभिः पुराणनामेतव पूर्वकालीनैश्चिरन्तनैः एवैः स्तुत्यंमतिगन्तृभिःस्तोत्रैस्तुयायभुज्योर्जनकस्यसंबन्धिभिः पुनर्मन्यौयथायुवंयुवांभुज्योःसमुद्रगमनात्पूर्वंयुवांस्तोतव्यौ तथापुनरपीदानीं स्तोतव्यौअभवतम् यद्वायुवंसमुद्रमध्येसेनयासहनिमग्नंभुज्युंतुग्रस्यपुत्रंअर्णसः अर्णस्वतः मौढोदकयुक्तावत्समुद्रावत्अम्बुराशेःसकाशाद्विभिर्गन्तृभिर्ऋज्रेभिः शीघ्रगतियुक्तैरश्वैश्चनिरूहथुः निर्गमय्यपितृसमीपंप्रापितवन्तौ तदानीं पुनरप्यतिशयेनस्तोतव्यौजातावित्यर्थः तुग्रोहंभुज्युमित्यत्रोक्तमाख्यानमत्राप्यनुसन्धेयम् ॥ एवैः इण्गतौ इण्शीङ्भ्यांवन् । पुनर्मन्यौ मनज्ञाने अत्रस्तुत्यर्थः मन्यतेस्तौतीतिमनास्तुतिः पचाद्यच् छन्दसिचेत्यर्हार्थेयः। युवाना युमिश्रणामिश्रणयोः कनिन्युवृषीत्यादिनाकनिन् सुपांसुलुगितिविभक्तेराकारः। अर्णसः अर्णस्शब्दावत्उतन्त्रस्यमत्वर्थीयस्यबहुलंछन्दसीतिबहुलग्रहणाल्लोपः सर्वेविधयश्छन्दसिविकल्प्यन्तइतिविभक्त्युदात्तस्यविकल्पनादभावः । ऋज्रेभिः ऋजगतिस्थानार्जनोपार्जनेषु ऋज्रेन्द्रेत्यादिनारन्प्रत्ययान्तोनिपातितः बहुलंछन्दसीतिभिसऐसभावः ॥ १४ ॥

पञ्चदशीमृचमाह–

अजोहवीदश्विनातौग्र्योवांप्रोळ्हःसमुद्रमंव्यथिर्जगन्वान् ।
निष्टमूहथुःसुयुजारथेनमनोजवसावृषणास्वस्ति ॥ १५ ॥ १५ ॥

अजोहवीत् । अश्विना । तौग्र्यः । वाम् । प्रऽऊळ्हः । समुद्रम् । अव्यथिः । जगन्वान् । निः । तम् । ऊहथुः । सुऽयुजा । रथेन । मनःऽजवसा । वृषणा । स्वस्ति ॥ १५ ॥ १५ ॥

हेअश्विनौ वांयुवांतौग्र्यःतुग्रपुत्रःप्रोळ्हःपित्रामापितः समुद्रमब्धिंजगन्वान्भुज्युःउदकेनिमग्नोपि अव्यथिः व्यथांपीडांअप्राप्तएवसन् अजोहवीत् स्तुतिभिराह्वयत् तमाह्वातारंहेमनोजवसामनोवद्वेगयुक्तौ वृषणाकामाभिवर्षकौअश्विनौ सुयुजासुष्ठुअश्वैर्युक्तेनरथेन स्वस्तिक्षेमंयथाभवति तथानिरूहथुः जलान्निर्गमय्ययुवांपितृगृहंप्रापितवन्तौ ॥ जगन्वान् गमेर्लिटःक्वसुः विभाषागमहनविदविशामितिविकल्पनादिडभावःम्वोश्चेतिमकारस्यनकारः। निष्टम् युष्मत्ततततक्षु-

1 ऋ० सं० १.८.८.।

ष्वन्तःपादमितिमूर्धन्यः । मनोजवसा मनसोजवइवजवोययोस्तौतथोक्तौ सुपांसुलुगितिविभक्ते-राकारः पदादित्वादामन्त्रितनिघाताभावेपाष्ठिकमाद्युदात्तत्वम् ॥१५॥

॥ इतिप्रथमस्याष्टमेपञ्चदशोवर्गः ॥ १५ ॥

षोडशीमृचमाह—

अजोहवीदश्विनावर्तिकावामास्नोयत्सीममुञ्चतंवृकस्य ।
विजयुषाययथुःसान्वद्रेर्जातंविष्वाचोअहतंविषेण ॥ १६ ॥

अजोहवीत् । अश्विना । वर्तिका । वाम् । आस्नः । यत् । सीम् ।
अमुञ्चतम् । वृकस्य । वि । जयुषा । ययथुः । सानु । अद्रेः ।
जातम् । विष्वाचः । अहतम् । विषेण ॥ १६ ॥

आस्नोवृकस्येत्यर्धर्चेनयदुक्तंतदत्रपूर्वार्धेनप्रतिपाद्यते वर्तिकाचटकसदृशस्यपक्षिणः स्त्रीवृकेणारण्यश्वनामस्तासती हेअश्विनौ वांयुवांतदाअजोहवीत् आहूतवती यत्सीं यदाखलुवृकस्य आस्नः आस्यात् अमुञ्चतंवर्तिकाममोचयतम् अपिच युवांजयुषा जयशीलेनरथेनअद्रेः पर्वतस्यसानुसमुच्छ्रितप्रदेशंवियययथुः शत्रुभिरावेष्टितंजाहुषाख्यंस्तोतारंशत्रुसमूहान्निर्गमय्य तेनसह अन्यैर्गन्तुमशक्यंपर्वताग्रंगतवन्तावित्यर्थः तदुक्तंपरिविष्टंजाहुषमित्यत्र । तथाविष्वाचोविविधगतियुक्तस्यएतत्संज्ञस्यासुरस्यजातमुत्पन्नमपत्यंविषेणक्ष्वेडेनअहतंयुवांहतवन्तौ यद्वा वर्ततेप्रतिदिवसमावर्ततइतिवर्तिकाउषाः वृकइतिविवृतज्योतिष्कःसूर्यउच्यते तेनग्रस्तासतीसा हेअश्विनौ युवामजोहवीत् आह्वयत् यदाखलुयुवांवृकस्यसूर्यस्यआस्नःआस्यस्थानीयात्मण्डलात्अमुञ्चतंअमोचयतम् सूर्येणैकीभूतामुषसंपृथक्कृत्यउदयात्पूर्वंरात्रेरपरभागेस्थापितवन्तावित्यर्थः । तथाचयास्कः—आदित्योपिवृकउच्यतेयदावृङ्क्तेआह्वयदुषाअश्विनावादित्येनाभिग्रस्तातामश्विनौप्रमुमुचतुरित्याख्यानमिति[3] । अपिच जयुषाजयशीलेनरथेनअद्रेर्मेघस्यसानुसमुच्छ्रितप्रदेशंवृष्टिचिकीर्षयाविशेषेणययथुः युवांगतवन्तौ गत्वाचविष्वाचोविविधगतियुक्तस्य मेघस्यसंबन्धिनाविषेणोदकेनजातमुत्पन्नंसर्वंभूतजातमहतमगमयतं वृष्टिंकृतवन्तावित्यर्थः ॥

१ ऋ० सं० १. ८. १०. । २ ऋ० सं० १. ८. ११. । ३ नि० ५. २१. ।

अजोह्वीव ह्वयतेर्यङ्लुगन्ताल्लङिति पियङोवेतीडागमः अभ्यस्तस्यचेतिद्विर्वचनात्पूर्वमेवह्वयतेःसंप्रसारणम् । आस्नः पद्दन्नित्यादिनाआस्यशब्दस्यासन्नादेशः अल्लोपोनइत्यकारलोपः । जयुषा जिजये औणादिकउषिप्रत्ययः । विप्वाचः विषुनाआभिमुख्येनअञ्चतीतिविग्रहः ऋत्विगित्यादिनाक्विन् अचइत्यकारलोपः चावितिदीर्घः उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वेप्राप्तेचावित्यन्तोदात्तत्वम् । अहतम् हनहिंसागत्योः लङिअदादित्वाच्छपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ १६ ॥

सप्तदशीमृचमाह—

शतंमेपान्वृक्येमामहानंतमःप्रणीतमशिवेनपित्रा ।
आक्षीऋज्राश्वेअश्विनावधत्तंज्योतिरन्धायचक्रथुर्विचक्षे ॥१७॥

शतम् । मेषान् । वृक्ये । ममहानम् । तमः । प्रऽनीतम् । अशिवेन ।
पित्रा । आ । अक्षी इति । ऋज्रऽअश्वे । अश्विनौ । अधत्तम् ।
ज्योतिः । अन्धाय । चक्रथुः । विऽचक्षे ॥ १७ ॥

शतंमेषान्वृक्येचक्षदानमित्यत्रयदाख्यानमवादिष्म तदत्राप्यनुसन्धेयम् शतंशतसंख्याकान्मेषान्वृक्ये वृकीरूपेणावस्थितायाअश्विनोर्वाहनायरासभाय ममहानं पूजितवन्तं आहारार्थंसमर्पितवन्तं अशिवेनअसुखकारिणापित्रास्वकीयेन जनकेन तमः दृष्टिराहित्येनप्रणीतं कृतम् अन्धंप्रापितं ऋज्राश्वं चक्षुष्मन्तंअश्विनावकुरुतामितिशेषः एतदेवविशदयति हेअश्विनौअक्षी पितृशापान्नष्टेचक्षुषी ऋज्राश्वेएतत्संज्ञकेराजर्षौआधत्तं पुनर्दर्शं नसमर्थेअकुरुतम्—तदेवाह अन्धाय दृष्टिहीनायज्योतिःप्रकाशकंचक्षुः विचक्षे विविधंजगद्द्रष्टुं चक्रथुः युवां कृतवन्तौ ॥ ममहानं महपूजायाम् लिटःकानच् संहितायांछान्दसमभ्यासस्यदीर्घत्वम् । प्रणीतम् प्रपूर्वान्नयतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । पित्रा उदात्तयणइतिविभक्तेरुदात्तत्वम् । अक्षी अक्षिशब्दाद्द्विवचने नुमागमश्चप्राप्नोति ईचद्विवचनेइतीकारान्तादेशश्च परत्वादीकारादेशः तस्मिन्कृतेसकृद्गतपरिभाषयापुनर्नुम्नभवति उदात्तइत्यनुवृत्तेरीकारस्योदात्तत्वम् ॥१७॥

१ ऋ० सं० १. ८. ११. ।

अष्टादशीमृचमाह—

शुनमन्धायभरमह्वयत्सावृकीरश्विनावृषणानरेति ।
जारःकनीनइवचक्षदानऋज्राश्वःशतमेकंचमेषान् ॥ १८ ॥

शुनम् । अन्धाय । भरम् । अह्वयत् । सा । वृकीः । अश्विना ।
वृषणा । नरा । इति । जारः । कनीनःऽइव । चक्षदानः । ऋज्रऽअश्वः ।
शतम् । एकम् । च । मेषान् ॥ १८ ॥

शुनमितिसुखनाम भरं पोषणहेतुभूतं चक्षुरिन्द्रियेणनिष्पाद्यं शुनंसुखं अन्धायदृष्टिही-नायतस्मैऋज्राश्वायइच्छन्तीसावृकी हेअश्विनौ अश्वयुक्तौ कृत्स्नंजगद्व्याप्नुवन्तौवा वृषणा हेवृषणौ कामानांवर्षितारौइति एवंसंबोध्य नरानेतारावश्विनौ अह्वयत् आहूतवती आह्वय-न्त्यास्तस्याः कोभिप्रायइतिचेत्तदुच्यते—कनीनइव यथाप्राप्तयौवनःकामुकोजारःपारदारिकः स्वपरस्त्रियैसर्वंधनं प्रयच्छति एवमृज्राश्वोमह्यंशतमेकंचएकोत्तरशतसंख्याकान्मेषान्पौरजना-नांस्वभूतानपहृत्यचक्षदानः शकलीकुर्वन्प्रादात् तेनेदृशींदुर्दशांप्रापदिति ॥ कनीनः युवशब्दा-दिष्ठनि युवाल्पयोःकनन्यतरस्यामितियुवशब्दस्यकनादेशः व्यत्ययेनइष्ठनःईनादेशः यद्वा कनी-दीप्तिकान्तिगतिषु औणादिकईनप्रत्ययः ॥ १८ ॥

एकोनविंशीमृचमाह—

महीवामूतिरश्विनामयोभूरुतस्रामंधिष्ण्यासंरिणीथः ।
अथायुवामिदह्वयत्पुरन्धिरागच्छतंसींवृषणाववोभिः ॥ १९ ॥

मही । वाम् । ऊतिः । अश्विना । मयःऽभूः । उत । स्रामम् । धिष्ण्या ।
सम् । रिणीथः । अथ । युवाम् । इत् । अह्वयत् । पुरम्ऽधिः । आ ।
अगच्छतम् । सीम् । वृषणौ । अवःऽभिः ॥ १९ ॥

हेअश्विनौ वांयुवयोःमहीमहतीऊतिःपालनं मयोभूःमयसःसुखस्यभावयित्री उतअपि च हेधिष्ण्याधिषणास्तुतिरक्षणावाक्तयास्तोतव्यौ स्रामंव्याधितंपुरुषंविश्लिष्टांगमस्यादिकंसं-रिणीथःसम्यक्सावयवंकुरुथः अथअपिच युवामित्युवामेवपुरन्धिर्बहुधीर्घोषाविश्पलावाआह्वयत्

रोगोपशमनार्थंआहूतवती हेवृषणौकामानांवर्षितारौअश्विनौ अवोभिःरक्षणैःसहआगच्छतम् आभिमुख्येनसीमेनांप्राप्तवन्तौ ॥ मही महती छान्दसोवर्णलोपः यद्वा महेरौणादिकइन् कृदिकारादक्तिनइतिङीप् । मयोभूः भवतेरन्तर्भावितण्यर्थात्क्विप् । रिणीथः रीगतिरेषणयोः क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वत्वम् ॥ १९ ॥

विंशीमृचमाह

अधेनुंदस्रास्तर्यं१विषक्तामपिन्वतंशयवेअश्विनागाम् ।
युवंशचीभिर्विमदायजायांन्यूहथुःपुरुमित्रस्ययोषाम् ॥ २० ॥ १६ ॥

अधेनुम् । दस्रा । स्तर्यम् । विऽसक्ताम् । अपिन्वतम् । शयवे । अश्विना । गाम् । युवम् । शचीभिः । विऽमदाय । जायाम् । नि । ऊहथुः । पुरुऽमित्रस्य । योषाम् ॥ २० ॥ १६ ॥

हेदस्रादर्शनीयावश्विनौ विषक्तां विशेषेणसक्तावयवांकृशावयवामित्यर्थः अतएवस्तर्यंनिवृत्तप्रसवां अतएवाधेनुंअदोग्ध्रीं एवंभूतांगांशयवेएतत्संज्ञायऋषयेअपिन्वतं पयसाअपूरयतं अपिच पुरुमित्रस्य पुरुमित्रोनामकश्चिद्राजातस्ययोषांकुमारीं शचीभिरात्मीयैःकर्मभिर्विमदाय एतत्संज्ञायऋषयेशत्रुभिःसहयोद्धुमशक्ताययुवंयुवांजायांन्यूहथुः विमदस्यगृहंप्रापितवन्तौ ॥ स्तर्यम् स्तृञ्आच्छादने अवितृस्तृतन्त्रिभ्यईरितिईकारप्रत्ययः वाछन्दसीत्यमिपूर्वस्यविकल्पादभावेयणादेशः उदात्तस्वरितयोर्यणइतिपरस्यानुदात्तस्यस्वरितत्वम् । विषक्ताम् षञ्जसङ्गे कर्मणिनिष्ठा अनिदितामितिनलोपः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । अपिन्वतम् पिविसेचने इदित्वान्नुम् भौवादिकः । पुरुमित्रस्य पुरूणिमित्राणियस्य संज्ञायांमित्राजिनयोरितिबहुव्रीहावुत्तरपदान्तोदात्तत्वम् ॥ २० ॥

॥ इतिप्रथमस्याष्टमेषोडशोवर्गः ॥ १६ ॥

एकविंशीमृचमाह—

यवंवृकेणाश्विनावपन्तेषंदुहन्तामनुषायदस्रा ।
अभिदस्युंबकुरेणाधमन्तोरुज्योतिश्चक्रथुरार्याय ॥ २१ ॥

यवम् । वृकेण । अश्विना । वपन्ता । इषम् । दुहन्ता । मनुषाय । दस्रा । अभि । दस्युम् । बकुरेण । धमन्ता । उरु । ज्योतिः । चक्रथुः । आर्याय ॥ २१ ॥

आर्यायविदुषेमनुषशब्दोमनुशब्दपर्यायः मनुषायमनवेमनोरर्थं हेदस्रादर्शनीयावश्विनौ वृकेणलाङ्गलेनकर्षकैः कृष्टदेशेयवंयवाद्युपलक्षितंसर्वधान्यजातंवपन्तावापयन्तौ तथा इषंअन्नमेतत्तत्कारणभूतंवृष्ट्युदकंचदुहन्तामेघात्क्षारयन्तौ तथा दस्युंउपक्षयकारिणंअसुरपिशाचादिकं बकुरेण बकुरोनामभासमानोवज्रः तेनअभिधमन्ता धमतिर्वधकर्मा अभिघ्नन्तौ एवंत्रिविधंकर्मकुर्वन्तौयुवां उरुविस्तीर्णंज्योतिःस्वकीयंतेजः माहात्म्यंचक्रथुः कृतवन्तौ दर्शितवन्तावित्यर्थः यद्वा त्रिविधकर्माचरणेनआर्यायविदुषेमनवेविस्तीर्णंसूर्याख्यंज्योतिश्चक्रथुः कृतवन्तौ जीवन्हि सूर्यंपश्यति तद्धेतुभूतानित्रीणिकर्माणियुवाभ्यांकृतानीतिभावः अत्रनिरुक्तम्—बकुरोभास्करोभयङ्करोभासमानोद्रवतीतिवावयमिववृकेणाश्विनौनिवपन्तौवृकोलाङ्गलंभवतिविकर्तनात्।इत्यादिकमनुसन्धेयम् ॥ मनुषाय मनेरौणादिकउषन्प्रत्ययः ॥ २१ ॥

द्वाविंशीमृचमाह—

आथर्वणायाश्विनादधीचेऽश्व्यंशिरःप्रत्यैरयतम् ।
सवांमधुप्रवोचदृतायन्त्वाष्ट्रंयद्दस्रावपिकक्ष्यंवाम् ॥ २२ ॥

आथर्वणाय । अश्विना । दधीचे । अश्व्यम् । शिरः । प्रति । ऐरयतम् । सः । वाम् । मधु । प्र । वोचत् । ऋतऽयन् । त्वाष्ट्रम् । यत् । दस्रौ । अपिऽकक्ष्यम् । वाम् ॥ २२ ॥

तद्वांनरासनयइत्यत्रोक्तमाख्यानमिहाप्यनुसन्धेयम् हेअश्विनौ आथर्वणायअथर्वणः पुत्रायदधीचेदध्यङ्नाम्नेमहर्षयेअश्व्यंअश्वस्यसंबन्धिशिरः प्रत्यैरयतम् प्रत्यधत्तम् तदीयंमानुषंशिरःमच्छिद्यान्यत्र विधायाश्व्येनशिरसावर्षिसमयोजयतमित्यर्थः सचवांयुवाभ्यांप्रवर्ग्यविद्यांमधुविद्यांचवक्ष्यामीतिपुराकृतांप्रतिज्ञांऋतायन्सत्यामात्मानइच्छन्प्रमधुमधुविद्यांत्वाष्ट्रंत्वष्टुरिन्द्रात्लब्धंप्रवोचप्रोक्तवान् हेदस्रादर्शनीयौअश्विनौ वांयुवयोःसंबन्धितद्पिकक्ष्यंछिन्नस्यपश्चात्शिरसः

१ नि० ६. २५. । २ ऋ० सं० १. ८. १०. ।

कक्षमदेशेनपुनःसन्धानभूतं मवर्ग्यविद्याख्यंरहस्यंतदपिवांयुवाभ्यांमावोचदित्यर्थः॥ दधीचे अश्वेतेऋंत्विगित्यादिनाकिन् अनिदितामितिनलोपः चतुर्थ्येकवचनेअचइत्यकारलोपेचावितिदीर्घत्वम् उदात्तनिवृत्तिस्वरेणविभक्त्युदात्तत्वेप्राप्तेतस्यापवादत्वेनचावितिविभक्तेःपूर्वस्योदात्तत्वंप्राप्तं तस्याप्ययमपवादः अश्वेश्छन्दस्यसर्वनामस्थानमितिविभक्त्युदात्तत्वम्॥ २२ ॥

त्रयोविंशीमृचमाह—

सदांकवीसुमतिमाचंकेवांविश्वाधियोअश्विनाप्रावंतंमे ।
अस्मेर॒यिंनांसत्याबृहन्तंमपत्यसाचंश्रुत्यंरराथाम् ॥ २३ ॥

सदा । कवी इति । सुऽमतिम् । आ । चके । वाम् । विश्वाः ।
धियः । अश्विना । प्र । अवतम् । मे । अस्मे इति । रयिम् ।
नासत्या । बृहन्तम् । अपत्यऽसाचम् । श्रुत्यम् । रराथाम् ॥ २३ ॥

हेकवीक्रान्तदर्शिनौमेधाविनावश्विनौ वांयुवयोःसुमतिंकल्याणीमनुग्रहात्मिकांबुद्धिंसदासर्वदाआचकेआभिमुख्येनप्रार्थये मेमदीयानि विश्वाधियःसर्वाणिकर्माणियुवांप्रावतंप्रकर्षेणरक्षतम् अपिचास्मेअस्मभ्यंहेनासत्यावश्विनौ बृहन्तं महान्तं अपत्यसाचंअपत्यैःपुत्रादिभिःसमवेतं श्रुत्यंप्रशंसनीयंउत्कृष्टं रयिंधनंरराथां प्रयच्छतम्॥ चके कैगैशब्दे व्यत्ययेनात्मनेपदम् लिटचुत्तमैकवचनेरूपम् । अस्मे सुपांसुलुगितिचतुर्थीबहुवचनस्यशेआदेशः ।अपत्यसाचं अपत्यैःसहसेचतेसंगच्छतइत्यपत्यसाच् छान्दसोण्विः । श्रुत्यम् श्रुतिःस्तुतिः तत्रभवंश्रुत्यम् भवेछन्दसीतियत् यतोनावइत्याद्युदात्तत्वम्। रराथाम् रादाने लोटिव्यत्ययेनात्मनेपदम् बहुलंछन्दसीतिशपःश्लुः॥ २३ ॥

चतुर्विंशीमृचमाह—

हिरंण्यहस्तमश्विनारराणापुत्रंनंरावध्रिमत्याअंदत्तम् ।
त्रिधांहश्यावंमश्विनाविकंस्तमुज्जीवसंऐरयतंसुदानू ॥ २४ ॥

हिरंण्यऽहस्तम् । अश्विना । रराणा । पुत्रम् । नरा । वध्रिऽमत्याः ।
अदत्तम् । त्रिधा । ह । श्यावम् । अश्विना । विऽकस्तम् । उत् ।
जीवसे । ऐरयतम् । सुदानू इति सुऽदानू ॥ २४ ॥

रराणा रममाणौदातारौवानरानेतारौ हेअश्विनौ हिरण्यहस्तंनामपुत्रंवध्रिमत्याः एतत्संज्ञायै ब्रह्मवादिन्यैअदत्तंमायच्छतम् अपिच हेसुदानूशोभनदानावश्विनौ त्रिधात्रेधाविकर्त्तंविच्छिन्नंश्यावाख्यमृषिंजीवसेजीवितुंउदैरयतम् असुरैस्त्रेधाखण्डितंशरीरंपुनरेकीकृत्यउदगमयतमित्यर्थः ॥ रराणा रमतेःशानचि बहुलंछन्दसीतिशपःश्लुः व्यत्ययेनमकारस्यात्वम् रातेर्वाव्यत्ययेन शानच् पूर्ववत्श्लुः । वध्रिमत्याः चतुर्थ्यर्थेबहुलंछन्दसीतिषष्ठी । जीवसे जीवप्राणधारणे तुमर्थेसेसेनितिअसेप्रत्ययः ॥ २४ ॥

पञ्चविंशीमृचमाह—

एतानिवामश्विनावीर्याणिप्रपूर्व्याण्यायवोऽवोचन् ।
ब्रह्मंकृण्वन्तोवृषणायुवभ्यांसुवीरासोविदथमावदेम ॥२५॥ १७॥

एतानि । वाम् । अश्विना । वीर्याणि । प्र । पूर्व्याणि । आयवः ।
अवोचन् । ब्रह्म । कृण्वन्तः । वृषणा । युवऽभ्याम् । सुऽवीरासः ।
विदथम् । आ । वदेम ॥ २५ ॥१७ ॥

अश्विनाहेअश्विनौ वांयुवयोःसंबन्धीनिपूर्व्याणिप्रत्नानिएतानिइदानींमयोक्तानि वीर्याणिवीरकर्माणिआयवोमनुष्याः मदीयाःपित्रादयःप्रावोचन्उक्तवन्तः वयंच हेवृषणाकामाभिवर्षकावश्विनौ युवाभ्यां ब्रह्ममन्त्रात्मकंस्तोत्रंकृण्वन्तः कुर्वन्तः सुवीरासः सुवीराः शोभनैर्वीरैःपुत्रादिभिरुपेताःसन्तः विदथंयज्ञंआवदेमआभिमुख्येनस्तुतीरुच्चारयाम यद्वा विदथंवेदयन्तमतिथिंतदपेक्षितप्रदानेनआवदेमआभिमुख्येनप्रियपूर्विकांवाचंउच्चारयाम ॥ कृण्वन्तःकृविहिंसाकरणयोश्च इदित्त्वान्नुम् लटःशतृ धिन्विकृण्व्योरचेत्युप्रत्ययः अकारान्तादेशश्च अतोलोपेसति स्थानिवद्भावाल्लघूपधगुणाभावः । सुवीरासः शोभनावीरायेषांतेतथोक्ताः आज्जसेरसुक् वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम् । विदथम् विदज्ञाने रुविदिभ्यांकिदित्यथप्रत्ययः ॥ २५ ॥

॥ इतिप्रथमस्याष्टमेसप्तदशोवर्गः ॥ १७ ॥

आवामित्येकादशर्चंतृतीयंसूक्तंकक्षीवतआर्षंत्रैष्टुभमाश्विनम् तथाचानुक्रान्तम्—आवामेकादशेति । पूर्वसूक्ताभ्यांसहप्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः ।

तत्रप्रथमामृचमाह—

आवांरथोअश्विनाश्येनपत्वासुमृळीकःस्ववाँयात्वर्वाङ् ।
योमर्त्यस्यमनसोजवीयान्त्रिवन्धुरोवृषणावातरंहाः ॥ १ ॥

आ । वाम् । रथः । अश्विना । श्येनऽपत्वा । सुऽमृळीकः ।
स्वऽवान् । यातु । अर्वाङ् । यः । मर्त्यस्य । मनसः । जवीयान् ।
त्रिऽवन्धुरः । वृषणा । वातऽरंहाः ॥ १ ॥

हेअश्विनौ वांयुवयोःस्वभूतोरथः अर्वाङ्अस्मदभिमुखंआयातुआगच्छतु कीदृशोरथः श्येनपत्वा श्येनइत्यश्वनाम शंसनीयगमनैरश्वैःपतन्गच्छन् यद्वा श्येनःपक्षी सइवशीघ्रंपतन् सुमृळीकः शोभनसुखयुक्तः स्ववान्धनवान् हेवृषणौकामानांवर्षितारौअश्विनौयःयुष्मदीयोरथःमर्त्यस्यमनुष्यस्यमनसोजवीयान् अतिशयेनवेगवान् तद्यथावेगेनकृत्स्नंजगद्व्याप्नोति ततोप्यतिशयेनक्षणमात्रादेवसर्वंजगत्पर्यटतीत्यर्थः ॥ त्रिवन्धुरः वन्धुरंवेष्टितंसारथेःस्थानं त्रिप्रकारेणवंधुरेणयुक्तः । वातरंहाः वातस्यवायोःरंहोवेगइववेगोयस्यसतथोक्तः अनेनाप्रतिहतगतित्वमुच्यतेसरथइतिपूर्वत्रान्वयः । श्येनपत्वा पत्लृगतौ अन्येभ्योपिदृश्यन्तइतिवनिप् दासीभारादिः यद्वा दृशिग्रहणस्यविध्यन्तरोपसङ्ग्रहार्थत्वाद्भावेवनिप् ततोबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । जवीयान् जवोस्यास्तीतिजववान् अतिशयेनजववानितिजवीयान् आतिशायनिकईयसुन् विन्मतोर्लुक् टेरितिटिलोपः ॥ १ ॥

द्वितीयामृचमाह—

त्रिवन्धुरेणत्रिवृतारथेनत्रिचक्रेणसुवृतायातमर्वाक् ।
पिन्वतंगाजिन्वतमर्वतोनोवर्धयतमश्विनावीरमस्मे ॥ २ ॥

त्रिऽवन्धुरेण । त्रिऽवृता । रथेन । त्रिऽचक्रेण । सुऽवृता । आ ।
यातम् । अर्वाक् । पिन्वतम् । गाः । जिन्वतम् । अर्वतः । नः ।
वर्धयतम् । अश्विना । वीरम् । अस्मे इति ॥ २ ॥

त्रिवन्धुरेण वन्धुरंसारथिस्थानंत्रिप्रकारवन्धुरोपेतेन त्रिवृतात्रिधावर्तमानेन त्रिचक्रेणचक्रत्रयोपेतेन सुवृताशोभनंगच्छतारथेनअर्वाक्अस्मदभिमुखंआयातंआगच्छतम् आगत्यचा-

स्मदीयागाः पिन्वतंपयसापूरयतम् नोऽस्माकंअर्वतोऽश्वान्जिन्वतंप्रीणयतम् अपिच हेअश्विनौ अस्मेअस्माकंवीरंपुत्रादिकंवर्धयतं प्रवृद्धंकुरुतम् ॥ त्रिचक्रेण त्रीणिचक्राणियस्यसतथोक्तः त्रिचक्रादीनांछन्दस्युपसङ्ख्यानमितिउत्तरपदान्तोदात्तत्वम् ॥ २ ॥

तृतीयामृचमाह—

प्रवद्यामनासुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः ।
किमङ्गवांप्रत्यवर्तिंगमिष्ठाहुर्विप्रासोअश्विनापुराजाः ॥ ३ ॥

प्रवत्ऽयामना । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् ।
श्लोकम् । अद्रेः । किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा ।
आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

हेदस्रौदर्शनीयावश्विनौ प्रवद्यामनाप्रकृष्टगमनेनशीघ्रगामिना सुवृताशोभनवर्तनेनरथेनागत्यअद्रेः आदरंकुर्वतःस्तोतुः इमंश्लोकंस्तुतिलक्षणामिमांवाचंशृणुतम् अङ्गाश्विना हेअश्विनौ पुराजाः पूर्वजाताश्चिरन्तनाः विप्रासोमेधाविनः वांयुवांअवर्तिंस्तोतॄणांदारिद्र्यंप्रतिवर्तिहर्तुंगमिष्ठागन्तृतमावाहुः कथयन्ति किंशब्दः प्रदर्शनफलप्रश्नेवर्तते किंनकथयन्ति कथयन्त्येवसर्वे तथासत्यागन्तव्यमिति ॥ प्रवद्यामना सोपसृष्टेधात्वर्थेवर्तमानात्प्रशब्दादुपसर्गाच्छन्दसिधात्वर्थेइतिवतिः यामापणे आवोमनिन्निविबहुलवचनाद्भावेमनिन् ततोबहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । अद्रेः दृङ्आदरे आङ्पूर्वादस्मादौणादिकःकिप्रत्ययः आङोह्रस्वश्च । गमिष्ठा गन्तृशब्दात्तुश्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्वितितृलोपः सुपांसुलुगितिविभक्तेराकारः ।आहुः प्रत्ययस्वरः पादादित्वान्निघाताभावः ॥ ३ ॥

चतुर्थीमृचमाह—

आवांश्येनासोअश्विनावहन्तुरथेयुक्तासआशवःपतङ्गाः ।
येअप्तुरोदिव्यासोनगृध्राअभिप्रयोनासत्यावहन्ति ॥ ४ ॥

आ । वाम् । श्येनासः । अश्विना । वहन्तु । रथे । युक्तासः ।
आशवः । पतङ्गाः । ये । अप्ऽतुरः । दिव्यासः । न । गृध्राः ।
अभि । प्रयः । नासत्या । वहन्ति ॥ ४ ॥

हेअश्विनौ रथेयुक्तासः युक्ताः सारथिनावहनप्रदेशेयोजिताः आशवः व्यामुवन्तः पतङ्गाः पतनसमर्थाः श्येनासः शंसनीयगमनाः अश्वाः वांयुवांआवहन्तु अस्मत्समीपमानयन्तु येअश्वाः अप्तुरः आपइवत्वरोपेताः दिव्यासोनगृध्राः अन्तरिक्षेवर्तमानागृध्राख्याःपक्षिणइवशीघ्रंगच्छन्तः हेनासत्यौ युवां प्रयोहविर्लक्षणमन्नं अभिलक्ष्य वहन्तिप्रापयन्ति तादृशाइतिपूर्वेणसंबन्धः ॥ अप्तुरः तुरत्वरणे अप्शब्दोपपदादस्माक्विप्चेतिक्विप् ॥ ४ ॥

पञ्चमीमृचमाह—

आवांरथंयुवतिस्तिष्ठदत्रजुष्टीनरादुहितासूर्यस्य ।
परिवामश्वावपुषःपतङ्गावयोवहन्त्वरुपाअभीके ॥ ५ ॥ १८॥

आ । वाम् । रथम् । युवतिः । तिष्ठत् । अत्र । जुष्टी । नरा । दुहिता । सूर्यस्य । परि । वाम् । अश्वाः । वपुषः । पतङ्गाः । वयः । वहन्तु । अरुपाः । अभीके ॥ ५ ॥ १८ ॥

हेनरानेतारावश्विनौ युवतिस्तरुणीसूर्यस्यदुहिताजुष्टीप्रीतासती वांयुवयोः अत्रइमं रथंआतिष्ठत् आरूढवती तयासहितौवांयुवांअश्वाः अभीकेगृहसमीपेतंरथंपरिवहन्तुपरिप्रापयन्तु कीदृशाअश्वाः वपुषः वपुरितिरूपस्यशरीरस्यवानामधेयम् तद्वन्तः छान्दसोमत्वर्थीयस्यलोपः पतंगाः उत्पतनसमर्थाः वयोगच्छन्तः अरुपाः आरोचमानाः हिंसकरहिताबा ॥ अत्र इतराभ्योपिदृश्यन्तइतिदृशिग्रहणाद्भवदाद्ययोगेपिइदमशब्दात विभक्त्यर्थेत्रलप्रत्ययः।जुष्टी जुषीप्रीतिसेवनयोः औणादिकः कुप्रत्ययः वोतोगुणवचनादितिङीप् ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेष्टादशोवर्गः॥ १८ ॥

षष्ठीमृचमाह—

उद्वन्दनमैरतंदंसनाभिरुद्रेभंदस्रावृषणाशचीभिः।
निष्टौग्र्यंपारयथःसमुद्रात्पुनश्च्यवानंचक्रथुर्युवानम्॥ ६ ॥

उत् । वन्दनम् । ऐरतम् । दंसनाभिः । उत् । रेभम् । दस्रा । वृषणा । शचीभिः। निः । तौग्र्यम् । पारयथः । समुद्रात् । पुनरिति। च्यवानम् । चक्रथुः । युवानम् ॥ ६ ॥

हेअश्विनौ वन्दनमेतत्संज्ञंऋषिंदंसनाभिरात्मीयैः कर्मभिः कूपादुदैरतम् उदैरयतम् उदगमयतम् हेदस्रादर्शनीयौवृषणाकामानांवर्षितारावश्विनौ शचीभिः कर्मभिःरेभंएतत्संज्ञंऋषिंदशरात्रीर्नवाहानिचकूपेनिवसन्तंतस्मादुदैरयतंउदतारयतम् तथाचौग्र्यंतुग्रस्यपुत्रंभुज्युंसमुद्रेनिमग्नं आत्मीयाभिर्नौभिरश्वैश्चसमुद्रान्निष्पारयथः तीरदेशंप्रापितवन्तौ तथाच्यवानं च्यवनंऋषिंजीर्यंपुनर्युवानंयौवनोपेतंचक्रथुः कृतवन्तौ ॥ ऐरतम् ईरगतौकम्पनेच ण्यन्ताल्लङिच्छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणिलोपः ॥ ६ ॥

सप्तमीमृचमाह–

युवमत्रयेवनीतायतप्तमूर्जमोमानमश्विनावधत्तम् ।
युवंकण्वायापिरिप्तायचक्षुःप्रत्यधत्तंसुष्टुतिंजुजुषाणा ॥ ७ ॥

युवम् । अत्रये । अवऽनीताय । तप्तम् । ऊर्जम् । ओमानम् ।
अश्विनौ । अधत्तम् । युवम् । कण्वाय । अपिऽरिप्ताय । चक्षुः ।
प्रति । अधत्तम् । सुऽस्तुतिम् । जुजुषाणा ॥ ७ ॥

हेअश्विनौ युवंयुवां अवनीतायशतद्वारेपीडायन्त्रगृहेअवस्तान्नीतायात्रये तत्पीडार्थं प्रक्षिप्तंतुषाग्निंशीतोदकेनावारयेथाम् अपिचास्मैअत्रयेओमानंसुखकरंऊर्जंरसवदन्नंअधत्तंप्रायच्छतम् तथासुष्टुतिंशोभनांस्तुतिंजुजुषाणासेवमानौ युवांअपिरिप्तायअसुरैर्ब्राह्मण्यपरीक्षार्थं इहासीनःसन्नस्मानुपसंजानीहीतिअन्धकारवतिगृहेप्रवेशितायकण्वाय ऋषयेचक्षुः न्युष्टायाउषसःप्रकाशकंवीणाशब्दंप्रत्यधत्तंकृतवन्तौ यद्वा अपिरिप्तायअपिलिप्तायपटलेनपिहितदृष्टयेएवंविधायकण्वायचक्षुरिन्द्रियंप्रत्यधत्तम् प्रत्यस्थापयतम् ॥ ओमानम् अवतेरौणादिकोमनिः ज्वरत्वरेत्यादिनायकारस्योपधायाश्चऊठ् गुणः। अपिरिप्ताय लिपउपदेहे अस्मात्कर्मणिनिष्ठा कपिलकादित्वाल्लत्वविकल्पः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । जुजुषाणा जुषीप्रीतिसेवनयोः छान्दसोलिट् लिटःकानज्वा सुपांसुलुगितिविभक्तेराकारः ॥ ७ ॥

अष्टमीमृचमाह–

युवंधेनुंशयवेनाधितायापिन्वतमश्विनापूर्व्याय ।
अमुञ्चतंवर्तिकामंहसोनिःप्रतिजंघांविश्पलायाअधत्तम् ॥ ८ ॥

युवम् । धेनुम् । शयवे । नाधितायं । अपिन्वतम् । अश्विना ।
पूर्व्याय । अमुंश्चतम् । वर्तिकाम् । अंहसः । निः । प्रति । जंघाम् ।
विश्पलायाः । अधत्तम् ॥ ८ ॥

अश्विनाहेअश्विनौ युवंयुवां पूर्व्यायपुरातनाय नाधिताययाचमानाय शयवे एतत्संज्ञाय ऋषयेधेनुंनिवृत्तप्रसवामदोग्ध्रीं अपिन्वतंपयसाअसिञ्चतम् सर्वदापयस्विनीमकुरुतमित्यर्थः अपिच वर्तिकांवृकेणग्रस्तांचटकसदृशींशकुनिंअंहसःवृकास्यलक्षणात्पापात्निरमुंचतम् निरमोचयतम् यद्वा पुनःपुनर्वर्ततइतिवर्तिकाउषाः तामादित्येनाभिग्रस्तांयुवाममोचयतम् तथाविश्पलायैसंग्रामेछिन्नजंघायैअगस्त्यपुरोहितस्यखेलस्यसंबन्धिन्यै एतत्संज्ञायैस्त्रियैआयसींजंघांप्रत्यधत्तम् प्रत्यस्थापयतम् समयोजयतमित्यर्थः ॥ ८ ॥

नवमीमृचमाह—

युवंश्वेतंपेदवइन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।
जोहूत्रमर्योअभिभूतिमुग्रंसहस्रसांवृषणंवीड्वङ्गम् ॥ ९ ॥

युवम् । श्वेतम् । पेदवे । इन्द्रऽजूतम् । अहिऽहनम् । अश्विना ।
अदत्तम् । अश्वम् । जोहूत्रम् । अर्यः । अभिऽभूतिम् । उग्रम् ।
सहस्रऽसाम् । वृषणम् । वीळुऽअङ्गम् ॥ ९ ॥

अश्विनाहेअश्विनौ पेदवेपेदुनाम्नेराज्ञेयुवंयुवांश्वेतंश्वेतवर्णंकञ्चिदश्वंअदत्तंप्रायच्छतम् कीदृशंइन्द्रजूतं इन्द्रेणयुवाभ्यांगमितंदत्तमित्यर्थः अहिहनंशत्रूणांहन्तारम् जोहूत्रंअतिशयेनसङ्ग्रामेष्वाह्वातारम् अर्यः अरेःशत्रोःअभिभूतिंअभिभावुकंउग्रंउद्गूर्णवीर्यवन्तमित्यर्थः सहस्रसां सहस्रसंख्याकस्यधनस्यसंभक्तारंदातारंवा वृषणंसेक्तारंयुवानमित्यर्थः वीड्वंगम् दृढाङ्गमित्यर्थः ॥ इन्द्रजूतम् जुइतिसौत्रोधातुर्गत्यर्थः अस्मादन्तर्भावितण्यर्थात्कर्मणिनिष्ठा तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम् । जोहूत्रम् ह्वयतेर्यङ्लुगन्तादौणादिकःत्रप्प्रत्ययः प्रत्ययस्यपित्त्वादनुदात्तत्वेधातुस्वरःशिष्यते । अर्यः अरिशब्दात्षष्ठ्येकवचनेजसादिषुछन्दसिवावचनमिति घेर्ङितीतिगुणस्यविकल्पितत्वादभावेयणादेशः उदात्तयणइतिविभक्तेरुदात्तत्वम् । अभिभूतिम् अभिभूयतेनेनेत्यभिभूतिः करणेक्तिन् तादौचेनिगतेःप्रकृतिस्वरत्वम् । सहस्रसाम् सनोतेःजनसनखनेतिविट् विड्वनोरनुनासिकस्यादित्यात्वम् ॥ ९ ॥

दशमीमृचमाह—

तावांनरास्ववंसेसुजाताहवांमहेअश्विनानाधंमानाः।
आनउपवसुंमतारथेनगिरोंजुषाणासुविताययातम् ॥ १० ॥

ता। वाम्। नरा। सु। अवंसे। सुऽजाता। हवांमहे। अश्विना। नाधंमानाः। आ। नः। उपं। वसुंऽमता। रथेन। गिरः। जुषाणा। सुविताय। यातम्॥ १०॥

नरानेतारौहेअश्विनौ सुजाताशोभनजन्मानौ तावांतौयुवांनाधमानाःधनंयाचमानाः वयंस्तोतारःअवसेरक्षणार्थंसुहवामहे शोभनमाह्वयामहे गिरःस्तुतीःजुषाणासेवमानौयुवांवसुमताधनयुक्तेनरथेननोस्मानुपायातम् उपागच्छतम् किमर्थं सुवितायसुष्ठुप्राप्तव्यायधनायसुखायवा॥ सुजाता शोभनंजातंजन्मययोस्तौसुजातौ सुपांसुलुगितिविभक्तेराकारः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। नाधमानाः नाधृयाच्ञायाम्। जुषाणा जुषीप्रीतिसेवनयोः ताच्छीलिकश्चानश् तुदादित्वाच्छः पूर्ववद्विभक्तेराकारः। सुविताय सुपूर्वादेतेःकर्मणिनिष्ठा तन्वादित्वादुवङ् सूपमानात्क्तइत्युत्तरपदान्तोदात्तत्वम्॥ १०॥

एकादशीमृचमाह—

आश्येनस्यजवंसानूतनेनास्मेयातंनासत्यासजोषाः।
हवेहिवामश्विनारातहंव्यःशश्वत्तमायाउषसोव्युष्टौ॥११॥ १९॥

आ। श्येनस्यं। जवंसा। नूतंनेन। अस्मे इतिं। यातम्। नासत्या। सऽजोषाः। हवें। हि। वाम्। अश्विना। रातऽहंव्यः। शश्वत्ऽतमायाः। उषसः। विऽउंष्टौ॥ ११॥ १९॥

हेनासत्यावश्विनौ सजोषाः सजोषसौसमानप्रीतियुक्तौ श्येनस्यशंसनीयंगच्छतोश्वस्यनूतनेननवतरेणप्रत्यग्रेणजवसावेगेनसहितौयुवामस्मेअस्मान् आयातंआगच्छतम् अश्विना हेअश्विनौ रातहव्योवांयुवाभ्यांदातव्येनहविषायुक्तःसन् शश्वत्तमायाः कालात्मकतयानित्यायाउषसः व्युष्टौविवासनसमयेवांयुवांहवेआह्वयामि हिर्हेतौ हियस्मादेवंतस्मादायातमित्यर्थः॥अस्मे

सुपांसुलुगितिशसःशेआदेशः । सजोषाः तेनैवद्विवचनस्यसुआदेशः । हवे ह्वेञोलट्युत्तमैकवचने बहुलंछन्दसीतिसंप्रसारणम् शप्गुणावादेशाः । शश्वत्तमायाः उत्तमशश्वत्तमौसर्वत्रेत्युञ्छादिषुपाठादन्तोदात्तत्वम् ॥ ११ ॥

॥ इतिप्रथमस्याष्टमेएकोनविंशोवर्गः ॥ १९॥

आवांरथमितिदशर्चंचतुर्थसूक्तं दैर्घतमसस्यकक्षीवतआर्षंजागतमाश्विनम् तथाचानुक्रान्तम्—आवांरथंदशजागतमिति । प्रातरनुवाकस्याश्विनेक्रतौजागतेछन्दसीदंसूक्तमाश्विनशस्त्रे च तथाचसूत्रितम्—आवांरथमभूदिदंयोवांपरिज्मेतित्रीणीति ।

तत्रप्रथमामृचमाह—

आवां॒रथं॑पुरुमा॒यंम॑नोजुवं॒जी॒राश्वं॑य॒ज्ञियं॑जी॒वसे॑हुवे ।
स॒हस्र॑केतुंव॒निनं॑श॒तद्व॑सुंश्रुष्टी॒वानं॑वरिवो॒धाम॒भिप्रयः॑ ॥ १ ॥

आ । वा॒म् । रथ॑म् । पु॒रु॒ऽमा॒यम् । म॒नः॒ऽजुव॑म् । जी॒रऽअ॑श्वम् ।
य॒ज्ञिय॑म् । जी॒वसे॑ । हु॒वे॒ । स॒हस्र॑ऽकेतुम् । व॒निन॑म् । श॒तत्ऽव॑सुम् ।
श्रु॒ष्टी॒ऽवान॑म् । व॒रि॒वः॒ऽधाम् । अ॒भि । प्रयः॑ ॥ १ ॥

हेअश्विनौवांयुवयोःसंबन्धिनंरथंजीवसेजीवनार्थं मयोहविर्लक्षणमन्नंअभिलक्ष्यआहुवे आह्वयामि कीदृशंपुरुमायंबहुविधाश्चर्यंबहुविधकर्माणंवा मनोजुवंमनइवशीघ्रंगच्छन्तं जीराश्वं जववदश्वोपेतम् यज्ञियंयज्ञंप्राप्तुमर्हं सहस्रकेतुंअनेकध्वजं सहस्रस्यधनस्यकेतयितारं ज्ञापयितारंवा वनिनं वनमित्युदकनाम तद्वन्तं शतद्वसुंशतसंख्याकैर्धनैर्युक्तं श्रुष्टीवानम् श्रुष्टीतिक्षिप्रनाम क्षिप्रंसंभजमानम् यद्वा सुखवन्तम् वरिवोधां वरिवइतिधननाम वरिवसोधनस्यदातारम् ॥ पुरुमायम् बहुव्रीहौत्रिचक्रादित्वादन्तोदात्तत्वम् यद्वा तत्पूर्वादर्शआदित्वादच् । जीराश्वम् जुइतिगत्यर्थःसौत्रोधातुः जोरीचेतिरक्ईकारान्तादेशश्च बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् । यज्ञियम् यज्ञर्त्विग्भ्यांघखञाविातिअर्हार्थेघप्रत्ययः । हुवे ह्वेञोलटिबहुलंछन्दसीतिसंप्रसारणम् लुगित्यनुवृत्तौबहुलंछन्दसीतिशपोलुक् उवङ् । शतद्वसुं शतवसुं छान्दसस्तकारोपजनः ॥ १ ॥

द्वितीयामृचमाह—

ऊर्ध्वाधीतिःप्रत्यंस्यप्रयामन्यधायिशस्मन्त्समयन्तआदिशः।
स्वदामिघर्मंप्रतियन्त्यूतयआवामूर्जानीरथमश्विनारुहत् ॥ २ ॥

ऊर्ध्वा । धीतिः । प्रति । अस्य । प्रऽयामनि । अधायि । शस्मन् ।
सम् । अयन्ते । आ । दिशः । स्वदामि । घर्मम् । प्रति । यन्ति ।
ऊतयः । आ । वाम् । ऊर्जानी । रथम् । अश्विना । अरुहत् ॥ २ ॥

अस्यरथस्यप्रयामनिप्रयाणेप्रगमनेसति शस्मन्अश्विनोःशंसनेस्तवनेधीतिः अस्मदीयाबुद्धिः ऊर्ध्वांउन्मुखा प्रत्यधायिप्रत्यस्थायि तदनन्तरंदिशः देष्टव्याः स्तुतयोपिसमयन्ते अश्विभ्यांसङ्गच्छन्ते आकारःसमुच्चये अहंचस्तोतावर्मंमहावीरस्थं यद्वा क्षरणशीलाज्यादिकंहविः स्वदामि स्वादूकरोमि ऊतयःअवितारोरक्षकाऋत्विजश्चप्रतियन्ति घर्मंप्रतिगच्छन्ति संस्कारार्थं अपिच हेअश्विनौ वांयुवयोः रथंऊर्जानीसूर्यस्यदुहिताआरुहत् आरूढवती ॥ प्रयामनि यामापणे आतोमनिन्निति कृत्यल्युटोबहुलमितिबहुलवचनाद्भावेमनिन् दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । शस्मन् शंसुस्तुतौ अन्येभ्योपिदृश्यन्तइतिमनिन् दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वादुपधानकारलोपः सुपांसुलुगितिसप्तम्यालुक् । अयन्ते अयपयगतौ भौवादिकोनुदात्तेत् । ऊतयः क्तिच्क्तौचसंज्ञायामितिअवतेःकर्तरिक्तिच् ज्वरत्वरेत्यादिनावकारोपधयोरूठ् । अरुहत् कृमृदृरुहिभ्यइतिच्लेरङादेशः ॥ २ ॥

तृतीयामृचमाह—

संयन्मिथःपस्पृधानासोअग्मतशुभेमखाअमिताजायवोरणे।
युवोरहप्रवणेचेकितेरथोयदश्विनावहथःसूरिमावरम् ॥ ३ ॥

सम् । यत् । मिथः । पस्पृधानासः । अग्मत । शुभे । मखाः ।
अमिताः । जायवः । रणे । युवोः । अह । प्रवणे । चेकिते । रथः ।
यत् । अश्विना । वहथः । सूरिम् । आ । वरम् ॥ ३ ॥

मखाःमखवन्तोयज्ञोपेताः अमिताःअपरिमिताःजायवोजयशीलाःमनुष्याः रणेसंग्रामेशुभे शोभनायधनायतदर्थंमिथःपस्पृधानासःअन्योन्यंस्पर्धमानाःयद्यदासमग्मतसङ्गच्छन्ते तदानींअश्विनाहेअश्विनौ युवोरहयुवयोरेवरथःप्रवणेप्रकर्षेणसंभजनीयेभूतलेचेकितेज्ञायते देवेषुमध्येयुवामेवरक्षणार्थंशीघ्रंरथेनागच्छथइत्यर्थः यद्येनरथेन सूरिंस्तोतारंप्रति वरंश्रेष्ठंधनंआवहथः प्रापयथः सरथइत्यर्थः॥ पस्पृधानासः स्पर्धसंघर्षे छान्दसोलिट् तस्यलिटःकानजादेशः छान्दसंरेफस्य संप्रसारणं अकारलोपः। अग्मत गमेश्छान्दसोलङ् समोगम्यृच्छीत्यादिनात्मनेपदम् बहुलंछन्दसीतिशपोलुक् झस्यादादेशः गमहनेत्युपधालोपः।मखाः मखोयज्ञः अर्शआदित्वादच्।जायवः जिजये कृवापाजीत्यादिनाउण्। चेकिते कितज्ञाने अस्माद्यङन्ताच्छान्दसोवर्तमानेलिट् अतोलोपयलोपौ। यद् सुपांसुलुगितितृतीयायालुक्॥ ३ ॥

चतुर्थीमृचमाह–

युवंभुज्युंभुरमाणंविभिर्गतंस्वयुक्तिभिर्निवहन्तापितृभ्यआ ।
यासिष्टंवर्तिर्वृषणाविजेन्यं१दिवोदासायमहिचेतिवामवः॥ ४ ॥

युवम्। भुज्युम्। भुरमाणम्। विऽभिः। गतम्। स्वयुक्तिऽभिः। निऽवहन्ता। पितृऽभ्यः। आ। यासिष्टम्। वर्तिः। वृषणा। विऽजेन्यम्। दिवःऽदासाय। महि। चेति। वाम्। अवः॥ ४ ॥

वृषणा कामानांवर्षितारौहेअश्विनौ युवंयुवांभुरमाणंविभिःअश्वैःध्रियमाणंगतंसमुद्रेनिमग्नंभुज्युंतुग्रपुत्रंस्वयुक्तिभिः स्वयमेव युज्यमानैरश्वैः नौविशेषैश्च निवहन्ता नितरांवहन्तौ पितृभ्यआ आङ्मर्यादायाम् यत्रपितरस्तुग्रादयआसतेतावत्पर्यन्तमित्यर्थः विजेन्यमितिदूरस्थंदूरेवर्तमानंवर्तिःतुग्रस्यगृहंप्रतियासिष्टंअगच्छतम् अपिच दिवोदासायराज्ञेकृतंवांयुवयोःसंबन्धिअवोरक्षणंशंबरहननरूपंमहिमहद्भीरंचेतिअस्माभिर्ज्ञायते॥भुरमाणं डुभृञ्धारणपोषणयोः कर्मणिलिटःशानच् व्यत्ययेनशः बहुलंछन्दसीत्युत्वम्। पितृभ्यआ मर्यादायामाङःकर्मप्रवचनीयसंज्ञा पञ्चम्यपाङ्परिभिरितिपञ्चमी। यासिष्टं यामापणे यमरमनमातांसक्चेतिसगागमः सिचइडागमः। विजेन्यं विजनोदूरदेशः तत्रभवंविजेन्यं भवेछन्दसीतियत् तित्स्वरितइतिस्वरितत्वम्॥ ४ ॥

पञ्चमीमृचमाह—

युवोरश्विनावपुषेयुवायुजंरथंवाणीयेमतुरस्यशर्ध्यम् ।
आवांपतित्वंसख्यायजग्मुषीयोषावृणीतजेन्यायुवांपती॥५॥२०॥

युवोः । अश्विना । वपुषे । युवाऽयुजम् । रथम् । वाणी इति ।
येमतुः । अस्य । शर्ध्यम् । आ । वाम् । पतिऽत्वम् । सख्याय ।
जग्मुषी । योषा । अवृणीत । जेन्या । युवाम् । पती इति॥५॥२०॥

अश्विनाहेअश्विनौ युवोः युवयोर्वाणीवननीयौप्रशस्यौअश्वौयुवायुजंयुवाभ्यांयुज्यमानं रथंआजिधावनसमयेअस्यरथस्ययत्शर्ध्यंप्राप्यंआदित्याख्यंअवधिभूतंलक्ष्यंवपुषेशोभनार्थंतद्येमतुः सर्वेभ्योदेवेभ्यःपूर्वंप्रापयामासतुः तदनन्तरंचआजग्मुषीआगतवती जेन्याआजिधावनेजनीयमानायोषास्त्रूर्या सख्यायसखित्वाययुवां युवयोः पतित्वंअवृणीत कथमिति ममयुवामेवपतीभर्ताराविति॥ युवोः षष्ठीद्विवचनेयोचीतियत्वस्यसर्वविधीनांछन्दसिविकल्पितत्वाद्भावे शेषेलोपइतिदकारलोपः अतोगुणेइतिपररूपत्वम्। युवायुजम् युवावौद्विवचनेइतिद्व्यर्थाभिधायकस्य युष्मच्छब्दस्यअविभक्तावपिव्यत्ययेनयुवादेशः। शर्ध्यं शृधुप्रसहने अस्माण्ण्यन्तादचोयदिति यत् यतोनावइत्याद्युदात्तत्वम्। जग्मुषी गमेर्लिटःक्वसुः उगितश्चेतिङीप् वसोःसंप्रसारणमिति संप्रसारणम् गमहनेत्युपधालोपः। जेन्या जिजये औणादिकएन्यप्रत्ययष्टिलोपश्च ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेविंशोवर्गः ॥ २० ॥

षष्ठीमृचमाह—

युवंरेभंपरिषूतेरुरुष्यथोहिमेनंघर्मंपरितप्तमत्रये ।
युवंशयोरवसंपिप्यथुर्गविप्रदीर्घेणवन्दनस्तार्यायुषा ॥ ६ ॥

युवम् । रेभम् । परिऽसूतेः । उरुष्यथः । हिमेन । घर्मम् । परिऽतप्तम् ।
अत्रये । युवम् । शयोः । अवसम् । पिप्यथुः । गवि । प्र । दीर्घेण ।
वन्दनः । तारि । आयुषा ॥ ६ ॥

---

१ नि० ५. २३. ।

हेअश्विनौ युवंयुवांरेभंऋषिंपरिपूतेः परितःप्रेरकादुपद्रवात् उपप्लवनाद्वाउरुष्यथःअरक्षथः उरुष्यतीरक्षाकर्मेतियास्कः। तथा अत्रयेऋषयेपरितप्तंपरितस्तप्तंघर्मंअसुरैःपीडार्थंमक्षिप्तंदीप्यमानंतुषाग्निंहिमेनशीतोदकेनअवारयेथाम् यद्वा हविषामत्त्रयेभक्षयित्रेअग्नयेपरितप्तंसूर्यकिरणैःसंतप्तंघर्मं अहर्नामैतत् अहः हिमेनवृष्ट्युदकेनहविःसंपादकव्रीह्याद्युत्पत्त्यर्थंअवारयेथाम् अपिच शयोः एतत्संज्ञस्यऋषेः गविनिवृत्तप्रसवायांधेनौअवसंरक्षकंपयः युवंयुवांपिप्यथुः प्रवर्धितवन्तौ तथा जीर्णांगोवन्दनऋषिः दीर्घेणायुषामवारियुवाभ्यांप्रवर्धितः प्रपूर्वस्तिरतिर्वर्धनार्थः॥ अवसं अवतेरौणादिकः असच्। पिप्यथुः प्यायीवृद्धौ व्यत्ययेनपरस्मैपदम् लिड्यङोश्चेतिपीभावः॥६॥

सप्तमीमृचमाह—

युवंवन्दनंनिर्ऋतंजरण्ययारथंनदस्राकरणासमिन्वथः।
क्षेत्रादाविप्रंजनथोविपन्ययाप्रवामत्रविधतेदंसनाभुवत् ॥ ७ ॥

युवम्। वन्दनम्। निःऽऋतम्। जरण्यया। रथम्। न। दस्रा। करणा। सम्। इन्वथः। क्षेत्रात्। आ। विप्रम्। जनथः। विपन्यया। प्र। वाम्। अत्र। विधते। दंसना। भुवत् ॥७॥

हेदस्राअश्विनौ युवंयुवांजरण्ययाजरयानिर्ऋतंनिःशेषेणप्राप्तंवन्दनंऋषिंकरणाकर्मणांकर्तारौशिल्पकुशलौयुवांसमिन्वथः समधत्तं पुनर्युवानमकुरुतं तत्रदृष्टान्तः—रथंन यथाकश्चिच्छिल्पीजीर्णंरथंपुनरप्यभिनवंकरोतितद्वत् अपिच विपन्ययास्तुत्यागर्भेस्थितेनवामदेवेनस्तुतौसन्तौ क्षेत्रात्आ आकारःसमुच्चये मातुरुदरलक्षणाज्जन्मस्थानात् विप्रंमेधाविनंतमृषिं जनथः जनयथश्च तथा वांयुवयोः दंसनारक्षणात्मकं कर्म अत्रास्मैविधतेपरिचरतेयजमानाय प्रभुवत्प्रभवतु रक्षितंसमर्थंभवतु॥ निर्ऋतं ऋगतौ कर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम्। जरण्यया जरणक्रियार्हांजरण्याअन्त्यावस्था छन्दसिचेतियः। करणा करोतेरन्येभ्योपिदृश्यतइतियुच्। इन्वथः इविव्याप्तौ इदित्वान्नुम् भौवादिकः। जनथःजनीप्रादुर्भावे णिच्युपधावृद्धिः जनीजृष्क्नसुरञ्जइतिमित्त्वान्मितांह्रस्वइतिह्रस्वत्वं छन्दस्युभयथेतिशपआर्धधातुकत्वात् णेरनिटीतिणिलोपः। विपन्यया पनस्तुतौ अघ्न्यादयश्चेतिभावेयत् व्यत्ययेनान्तोदात्तत्वम्। विधते विधविधाने तौदादिकः लटःशतृ शतुरनुमइतिविभक्तेरुदात्तत्वम्। भुवत् भवतेर्लेट्यडागमः बहुलंछन्दसीतिशपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः॥ ७॥

१ नि० ६.६.।

अष्टमीमृचमाह—

अगच्छतंकृपमाणंपरावतिपितुःस्वस्यत्यजसानिबाधितम्।
स्ववतीरितऊतीर्युवोरहंचित्राअभीकेअभवन्नभिष्टयः ॥ ८ ॥

अगच्छतम् । कृपमाणम् । पराऽवतिं । पितुः । स्वस्यं । त्यजसा । निऽबाधितम् । स्वःऽवतीः । इतः । ऊतीः । युवोः । अहं । चित्राः । अभीकें । अभवन् । अभिष्टयः ॥ ८ ॥

हेअश्विनौ परावतिदूरदेशेसमुद्रमध्येस्वस्यपितुःतुग्रस्यत्यजसात्यागेननिबाधितंपीडितंभुज्युं कृपमाणंयुवांस्तुवन्तंअगच्छतम् युवांरक्षणार्थंगतवन्तौ यस्मादेवंतस्मात् हेअश्विनौ स्ववतीः स्ववत्यः शोभनगमनयुक्ताः इतः इतोमुखात् चित्राश्चायनीया युवोरहयुवयोरेवऊतीः ऊतयोरक्षाः अभीकेसमीपे अभिष्टयः सर्वैःप्राणिभिःअभ्येषणीयाअभवन् भवन्ति ॥ कृपमाणं कृपतिःस्तुतिकर्मा अयंचतुदादिर्द्रष्टव्यः । स्ववतीः सुपूर्वादर्तेर्भावेविच् ततोमतुप् छन्दसीरइतिमतुपोवत्वम् । अभिष्टयः इषइच्छायाम् भावेक्तिन् शकन्ध्वादित्वात्पररूपत्वम् ॥ ८ ॥

नवमीमृचमाह—

उतस्यावांमधुमन्मक्षिकारपन्मदेसोमस्यौशिजोहुवन्यति ।
युवंदधीचोमनआविवासथोथाशिरःप्रतिवामश्व्यंवदत् ॥ ९ ॥

उत । स्या । वाम् । मधुंऽमत् । मक्षिका । अरपत् । मदें । सोमस्य । औशिजः । हुवन्यति । युवम् । दधीचः । मनः । आ । विवासथः । अथं । शिरः । प्रति । वाम् । अश्व्यम् । वदत् ॥ ९ ॥

उतअपिच हेअश्विनौ मधुमत्मधुमन्तौ वांयुवांस्यासामक्षिकासरघामधुकामासती अरपत्अस्तौत् तथा औशिजः उशिजःपुत्रः कक्षीवान्सोमस्यपानेनयुवयोर्मदेहर्षेनिमित्तभूतेसति हुवन्यतियुवामाह्वयति युवंयुवांच तस्यैमक्षिकायैमधुदातुंमधुविद्यार्थिनौसन्तौदधीचआथर्वणस्य ऋषेर्मनश्चित्तंशुश्रूषयाआविवासथः पर्यचरतम् अथानन्तरंतस्मिन् प्रीतेसतिअश्व्यंवांयुवाभ्यां प्रतिहितंअश्वस्यसंबन्धियच्छिरःतद्युवांप्रति मधुविद्यांअवदत् सऋषिराश्वेनशिरसाउपदिष्ट-

वानित्यर्थः ॥ मधुमत् सुपांसुलुगितिविभक्तेर्लुक् । अरपत् रपलपव्यक्तायांवाचि । मदे मदीहर्षे मदोनुपसर्गेइतिभावेअप् । हुवन्यति ह्वेञ्स्पर्धायांशब्देच ल्युट्चेतिभावेल्युट् बहुलंछन्दसीतिसंप्रसारणम् । हुवन्यति हवनमात्मनइच्छति सुपआत्मनःक्यच् अन्त्यलोपश्छान्दसः वर्णव्यापत्त्याउत्वम् । अश्व्यं अश्वेभवमश्व्यम् भवेछन्दसीतियत्॥ ९ ॥

दशमीमृचमाह—

युवंपेदवेपुरुवारमश्विनास्पृधांश्वेतंतरुतारंदुवस्यथः ।
शर्यैरभिद्युंपृतनासुदुष्टरंचर्कृत्यमिन्द्रमिवचर्षणीसहम् ॥१०॥२१॥

युवम् । पेदवे । पुरुऽवारम् । अश्विना । स्पृधाम् । श्वेतम् । तरुतारम् । दुवस्यथः । शर्यैः । अभिऽद्युम् । पृतनासु । दुस्तरम् । चर्कृत्यम् । इन्द्रम्ऽइव । चर्षणिऽसहम् ॥ १० ॥२१ ॥

अश्विनाहेअश्विनौ पेदवेपेदुनाम्नेराज्ञेपुरुवारंबहुभिर्वरणीयंस्पृधांसंग्रामेस्पर्धमानानांशत्रूणांतरुतारंतारकं श्वेतंशुभ्रवर्णइन्द्रालब्धमश्वंयुवंयुवांदुवस्यथः दत्तवन्तौ पुनरपिकीदृशंशर्यैः शीर्यन्तइतिशर्याः योद्धारःतैःपृतनासुसंग्रामेषुदुस्तरंतरीतुमशक्यंअभिद्युंअभिगतदीप्तिं चर्कृत्यंसर्वेषुकार्येषुपुनःपुनःप्रयोज्यंइन्द्रमिवचर्षणीसहंइन्द्रोयथाशत्रूनभिभवति एवंशत्रुजनानामभिभवितारमित्यर्थः॥स्पृधां स्पर्धसङ्घर्षे क्विप्चेतिक्विप् चशब्देनदृशिग्रहणानुकर्षणात्तस्यचविध्यन्तरोपसंग्रहार्थत्वादकारस्यलोपेरेफस्यचसंप्रसारणम् सावेकाचइतिविभक्तेरुदात्तत्वम् । तरुतारं तॄप्लवनतरणयोः अस्मात्तृचिग्रसितस्कभितस्तभितेत्यादौनिपातनाद्रूपसिद्धिः । चर्कृत्यम् करोतेर्यङ्लुगन्तादृभिपाकुवृपोरितिक्यप् ततस्तुक्॥ १० ॥

॥ इतिप्रथमस्याष्टमेएकविंशोवर्गः ॥ २१ ॥

कारोतदितिद्वादशर्चंपञ्चमंसूक्तम्अत्रानुक्रम्यते—कारोतद्द्वादशान्त्याद्युःस्वमनाशिनी आद्यागायत्री द्वितीयाककुप् तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पञ्चमीतनुशिरा षडक्षरैरुष्णिक् विष्टारबृहती कृतिर्विराट्तिस्रोगायत्र्यइति।अस्यायमर्थः—अनुवृत्तेरौशिजोदैर्घतमसःकक्षीवानृषिः आद्यागायत्रीविद्वांसाविदित्येषाककुप् मध्यमपादस्यद्वादशाक्षरत्वात् मध्यमश्चेत्ककुबिति हितलक्षणम् तृतीया ताविद्वांसेत्येषा काविराट् नवकयोर्मध्येजागतःकाविराडित्युक्तलक्षणोपे-

त्वात् चतुर्थीविपृच्छामीत्येषानष्टरूपी नववैराजत्रयोदशैनंष्टरूपीत्युक्तलक्षणोपेतत्वात् प्रयाधो-पइत्येषापश्चमीतनुशिरा एकादशिनोःपरःपट्कस्तनुशिरेत्युक्तलक्षणोपेतत्वात् श्रुतंगायत्रमित्ये-षापष्ठी यद्यपि पादसंख्ययाउष्णिक्नभवति तथाप्यक्षरसंख्ययोष्णिक् युवंहीतिसप्तमीविष्टारबृह-ती अष्टिनोर्मध्येदशकौविष्टारबृहतीतितल्लक्षणोपेतत्वात् माकस्माइत्यष्टमीकृतिः जागतावष्टकश्च-कृतिरित्युक्तलक्षणसद्भावात् दुहीयन्मित्रितिनवमीविराट् दशम्याद्यास्तिस्रोगायत्र्यः आश्विनंवैइति वैशब्दप्रयोगात्तुह्यादिपरिभाषयाइदमपिसूक्तमाश्विनम् अधःस्वप्नस्येत्यन्त्ययादुःस्वप्ननाशनंप्रति पाद्यते अतोयातेनोच्यतेसादेवतेतिन्यायेनतदेवदेवता सूक्तविनियोगोलैङ्गिकः घर्माभिष्टवेप्यादि-तोनवर्चोविनियुक्ताः सूत्र्यतेहि—काराधद्धोत्राश्विनावामितिनवाभात्यग्निरिति। काराधद्धोत्रा-श्विनावामितिनवविच्छन्दसइत्यादिकंब्राह्मणमनुसंधेयम्।

तत्रप्रथमामृचमाह—

काराधद्धोत्राश्विनावांकोवांजोषउभयोः। कथाविधात्यप्रचेताः॥१॥

का। राधत्। होत्रा। अश्विना। वाम्। कः। वाम्। जोषे। उभयोः। कथा। विधाति। अप्रऽचेताः॥ १॥

अश्विनाहेअश्विनौ वांयुवांकाहोत्रा वाङ्नामैतत् कीदृशीस्तुतिलक्षणावाक्राधत्आराध-यति प्रीतीकरोति युवयोर्माहात्म्यानुरूपास्तुतिर्नास्तीत्यर्थः किञ्च वांयुवयोरुभयोर्जोषेजोषणे सेवनेप्रीणनेवासमर्थःकःस्तोताविद्यते युष्मद्गुणाभिज्ञःकश्चिदपिनास्तीत्यर्थः अप्रचेताःयुवयोर्मा-हात्म्यमजानंश्चकथाकेनप्रकारेणविधाति युवांपरिचरति युष्मद्विषयंपरिचरणमपिनकर्तुंशक्यतइ-त्यर्थः॥ राधत् राधसाधसंसिद्धौ लेट्यडागमः। जोषे जुषीप्रीतिसेवनयोः भावेघञ् ञित्त्वादा-द्युदात्तत्वम्। कथा थाहेतौ चच्छन्दसीतिकिंशब्दात्प्रकारवचनेथाप्रत्ययः किमःकइतिकादेशः। विधाति विधविधाने तौदादिकःलेट्याडागमः। अप्रचेताः प्रकृष्टंचेतोयस्यासौप्रचेताः नञ्समासे-ऽव्ययपूर्वपदप्रकृतिस्वरत्वम्॥ १॥

द्वितीयामृचमाह—

विद्वांसाविद्दुरःपृच्छेदविद्वानित्थापरोअचेताः। नूचिन्नुमर्तेअक्रौ॥ २॥

१ ऐ० ब्रा० १. २१.।

विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः ।
अचेताः । नु । चित् । नु । मर्तः । अक्रौ ॥ २ ॥

इत्थाइत्थमनेनपूर्वोक्तप्रकारेणअविद्वान् अज्ञःस्तोताविद्वांसाविद् सर्वज्ञावश्विनावेव दुरोद्वाराणिस्तुतिपरिचरणयोरुपायभूतान्मार्गान्पृच्छेत् प्रष्टुमर्हतिअपरःअश्विभ्यामन्यःसर्वोप्यचेताः यस्मात् चेतसाज्ञानेनरहितः तस्मादश्विनावेवपृच्छेदित्यर्थः तौचाक्रौ शत्रुभिरनाक्रान्तौअश्विनौनूचित् क्षिप्रमेवमर्तंमनुष्येस्तोतरिभक्तानुग्राहकत्वयासांनिधत्तइतिवाक्यशेषः॥ इत्था थाहेतौचच्छन्दसीतिथाप्रत्ययः इदमइश् एतेतौरथोरितिइद्भावः यदि थाहेतौचेत्यत्रइदम्शब्दस्यनानुवृत्तिः तदानीं इदमस्थमुः एतदन्तात्परस्याविभक्तेर्व्यत्ययेनसुपांसुलुगितिडादेशः । अक्रौ क्रमुपादविक्षेपे अस्मान्नञ्युपपदेक्रत्यल्युटोबहुलमितिबहुलवचनात्कर्मण्यपिजनसनखनक्रमगमोविडितिविट् विड्वनोरनुनासिकस्यादित्यात्वम् नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ २ ॥

तृतीयामृचमाह—

ताविद्वांसाहवामहेवांतानोविद्वांसामन्मवोचेतमद्य ।
प्रार्चद्दयमानोयुवाकुः ॥ ३ ॥

ता । विद्वांसा । हवामहे । वाम् । ता । नः । विद्वांसा । मन्म ।
वोचेतम् । अद्य । प्र । आर्चत् । दयमानः । युवाकुः ॥ ३ ॥

हेअश्विनौविद्वांसासर्वज्ञौ तावांतौयुवांहवामहे आह्वयामहे तातौआहूतौविद्वांसाअभिज्ञौ युवांनोस्मभ्यंमन्ममननीयंज्ञातव्यंस्तोत्रंअद्यास्मिन्कालेवोचेतंब्रुवाणौभूयास्तं सचाहंयुवाकुर्युवां कामयमानःस्तुत्यासंयोजयन्वादयमानःयुवाभ्यांहविःप्रयच्छन्प्रार्चत् प्रार्चमकर्षेणस्तौमि ॥ ता सुपांसुलुगितिविभक्तेराकारः । वोचेतम् ब्रूञ्व्यक्तायांवाचि ब्रुवोवचिः लिङ्याशिष्यङ् वचउमित्युमागमः । आर्चत् अर्चपूजायाम् भौवादिकः तिङांतिङोभवन्तीतिमिपस्तिबादेशः । दयमानः दयदानगतिरक्षणहिंसादानेषु शपःपित्वादनुदात्तत्वम् शानचोल्सार्वधातुकस्वरेणधातुस्वरः शिष्यते । युवाकुः युवांकामयतइतियुवाकुः मितद्वादिभ्यउपसंख्यानमितिडुप्रत्ययः अविभक्तावपिव्यत्ययेनयुवावौद्विवचनेइतियुवादेशःआत्वंच यद्वा युमिश्रणे औणादिकःकाकुप्रत्ययः॥३॥

वर्तितयर्थः ॥ घोषे घोषानामकाचिद्ब्रह्मवादिनीकक्षीवतःपुत्री अत्रोपचारात्तद्वाचकंप्रातिपदिकं पुत्रेवर्तते । भृगवाणे चिरन्तनोभृगुरिवाचरति सर्वप्रातिपदिकेभ्यइतिक्विप् धातुसंज्ञायांव्यत्ययेन लटःशानच् शबादि आगमानुशासनस्यानित्यत्वान्मुगभावः वृषादिः । शोभे शुभदीप्तौ लोपस्त-आत्मनेपदेष्वितितलोपः । इषयुः इषगतौ इष्यतिगच्छतीतिइषमन्नं इगुपधलक्षणःकः यद्वा इष-इच्छायाम् इष्यतेसर्वैःप्राणिभिरितिइषमन्नम् व्यत्ययेनकर्मणिकर्तृप्रत्ययः प्रशब्देनसंहितायां प्राद्रूहोढोढ्येषैष्येषुवृद्धिर्वक्तव्येतिवृद्धिः ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेद्वाविंशोवर्गः ॥ २२ ॥

षष्ठीमृचमाह—

श्रुतंगा॒यत्रंतक॑वानस्या॒हंचि॒द्धिरि॒रेभा॑श्विनावाम् ।
आक्षीशु॑भस्पती॒दन् ॥ ६ ॥

श्रु॒तम् । गा॒य॒त्रम् । तक॑वानस्य । अ॒हम् । चि॒त् । हि । रि॒रेभ॑ ।
अ॒श्वि॒ना॒ । वा॒म् । आ । अ॒क्षी इति॑ । शु॒भः॒ । प॒ती॒ इति॑ । दन् ॥६॥

हेअश्विनौ गायत्रंगातव्यंगायत्रीयुक्तंगायत्रसाम्ना निष्पाद्यंनिष्पन्नंवास्तोत्रं तकवानस्यस्खलद्गते-र्मन्थस्यस्यऋज्राश्वस्यसंबन्धिश्रुतं शृणुतम् अहंचित् अहमिवशंयुवांसहिरिरेभस्तुतवान् किंकुर्वन् हेशुभस्पतीशोभनस्यकर्मणःपालयितारौ जलस्यवास्वामिनौ अक्षीयुवाभ्यांदत्तेचक्षुषीआदन आ-ददानः तस्मैइवमह्यमपिअभिमतफलंप्रयच्छतमितिभावः ॥ श्रुतम् श्रुश्रवणे लङि बहुलंछन्द-सीतिविकरणस्यलुक् । तकवानस्य तकगतौ अत्रगतिसामान्यवाचिनातद्विशेषोमन्दगतिर्लक्ष्यते औणादिकउप्रत्ययः । भृगवाणस्येतिवत्प्रक्रियोन्नेया । रिरेभ रेभृशब्दे । अक्षी ईचद्विवचनेइत्य-क्षिशब्दस्यईकारान्तादेशः सचोदात्तः । शुभस्पती सुबामन्त्रितेपराङ्गवत्स्वरेइतिषष्ठ्यन्तस्यपराङ्ग-वद्भावात् पदद्वयसमुदायस्याष्टमिकामन्त्रितानुदात्तत्वम् । दन् आङ्पूर्वाद्ददातेराङोदोनास्यविह-रणेइत्यात्मनेपदम् व्यत्ययेनशतृ जुहोत्यादित्वाच्छ्लुः द्विर्वचनप्रकरणे छन्दसिचेतिवक्तव्यमितिव-चनात् द्विर्वचनाभावः छन्दस्युभयथेत्युभयथाश्रयणात् शतुःसार्वधातुकत्वेनङित्त्वम् आर्धधा-तुकत्वादातोलोपइटिचेत्याकारलोपः ॥ ६ ॥

---

१ ऋ० सं० १. ८. २२. ।

सप्तमीमृचमाह–

युवंह्यास्तंमहोरन्युवंवायन्निरतंतंसतम् ।
तानोवसूसुगोपास्यातंपातंनोवृकादघायोः ॥ ७ ॥

युवम् । हि । आस्तम् । महः । रन् । युवम् । वा । यत् ।
निःऽअतंतंसतम् । ता । नः । वसू इति । सुऽगोपा । स्यातम् । पातम् ।
नः । वृकात् । अघयोः ॥ ७ ॥

हेअश्विनौ महोमहतोधनस्यरन्रातारौदातारौयुवंयुवांकश्चनास्तम्यद्वनिरततंसतंधनानिनिरगमयतम् रक्षकौविनाशकावपियुवामेवेत्यर्थः हेवसूवासयितारावश्विनौ ता तादृशौयुवं युवांनोस्माकंसुगोपा सुष्ठुगोपायितारौरक्षितारौस्यातंभवतम् अपिचनोस्मान्अघायोः अघंपापफलंनोस्माकमिच्छतोवृकाद् स्तेनात्पातंरक्षतम् ॥ महः महतश्छान्दसोऽन्त्यलोपः । रन् दनइतिवत्प्रक्रियोन्नेया व्यत्ययेनैकवचनम् । निरततंसतम् तसिअलङ्कारे अस्माण्ण्यन्ताल्लुङि णिश्रिद्रुस्रुभ्यइतिचङ्श्चङि द्विर्वचनादिच गुरुसंज्ञयालघुसंज्ञायाःबाधितत्वात् सन्वद्भावाभावः। सुगोपा सुपांसुलुगितिविभक्तेर्लुक् । अघायोः अघंपरेषामिच्छति छन्दसिपरेच्छायामितिक्यच् अश्वाघःस्यादित्यात्वम् क्याच्छन्दसीत्युप्रत्ययः ॥ ७ ॥

अष्टमीमृचमाह–

माकस्मैधातमभ्यमित्रिणेनोमाकुत्रानोगृहेभ्योधेनवोगुः ।
स्तनाभुजोअशिश्वीः ॥ ८ ॥

मा । कस्मै । धातम् । अभि । अमित्रिणे । नः । मा । अकुत्र ।
नः । गृहेभ्यः । धेनवः । गुः । स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

हेअश्विनौ अमित्रिणेअमित्रंमित्रराहित्यंतद्वतेकस्मैचिदपिशत्रवेनोस्मान्माभिधातम् आभिमुख्येनमावस्थापयतम् अपिचनोस्माकंगृहेभ्यःसकाशात् स्तनाभुजः स्तनैर्वत्सान्मनुष्यांश्चपा-

1 ऋ० सं० १. ८, २३. ।

लयन्त्योधेनवोगावः अशिश्वीः शिशुनावत्सेनविरहिताः अस्मदीयेगृहेऽशयानावासत्यः अकुत्रचित् अस्माभिरगम्येप्रदेशेमागुः मागच्छन्तु॥ धातम् धाञोमाङ्लिुङि गातिस्थेतिसिचोलुक्नमाङ्योगेऽइत्यडभावः। अकुत्र परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम्। गुः इणूगतौ इणोगाङ्लुङीतिगादेशः गातिस्थेतिसिचोलुक् आतइतिझेर्जुस्। स्तनाभुजः भुजपालनाभ्यवहारयोः स्तनैर्भुञ्जन्तिपालयन्तीतिस्तनाभुजः क्विप् अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः। अशिश्वीः सस्यशिश्वीतिभाषायामितिछन्दस्यपिव्यत्ययेननिपातनंद्रष्टव्यम् यद्वा शिशुरस्यास्तीतिशिश्वी छन्दसीवनिपाविनिमत्वर्थीयईकारः नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् वाछन्दसीतिपूर्वसवर्णदीर्घः अथवा शीङ्स्वप्ने उत्सर्गश्छन्दसीतिकिमत्ययः द्विर्वचनह्रस्वत्वे एरनेकाचइतियण् छान्दसोवकारः पूर्ववत्समासस्वरौ ॥ ८ ॥

नवमीमृचमाह—

दुहीयन्मित्रधितयेयुवाकुरायेचनोमिमीतंवाजवत्यै ।
इषेचनोमिमीतंधेनुमत्यै ॥ ९ ॥

दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतम् ।
वाजऽवत्यै । इषे । च । नः । मिमीतम् । धेनुऽमत्यै ॥ ९ ॥

हेअश्विनौ युवाकुयुवांकामयमानाः स्तुतिभिर्योजयितारः संयोजयितारोवास्तोतारः मित्रधितयेमित्राणांबन्धुजनानांधारणार्थं दुहीयन्युष्मत्सकाशाद्धनानिदुहन्तिप्राप्नुवन्ति अतोनोस्मानपिवाजवत्यैवाजयुक्तायचरायेधनायमिमीतंकुरुतम् तथा धेनुमत्यैधेनुभिर्युक्तायेषेन्नायचनोस्मान् मिमीतंकुरुतम् अस्मभ्यंस्तोतृभ्यः बलयुक्तंधनंगोयुक्तमन्नंचप्रयच्छतमित्यर्थः॥ दुहीयन् दुहप्रपूरणे दुहिर्दोहः इगुपधात्किदितिभावेइप्रत्ययः दुहिमात्मनइच्छतिदुहीयति सुपआत्मनःक्यच् दुहीयतेर्लेट्यडागमः इतश्चलोपइतीकारलोपः यद्वा दुहेर्लिङिझस्यरन्निितिव्यत्ययेनरन्नादेशाभावेरूपमेतत् छान्दसोन्त्यलोपः यद्वा रन्नादेशेकृतेछान्दसोरेफस्ययकारः अतएवव्युत्पत्त्यनवधारणान्नावगृह्णन्ति। युवाकु सुपांसुलुगितिजसोलुक्। मिमीतम् माङ्मानेशब्देच जौहोत्यादिकः व्यत्ययेनपरस्मैपदम् भृञामिदित्यभ्यासस्येत्वम् चवायोगेप्रथमेतिनिघातप्रतिषेधः॥ ९॥

दशमीमृचमाह—

अश्विनोरसनंरथमनश्वंवाजिनीवतोः । तेनाहंभूरिचाकन ॥१०॥

अश्विनोः । असनम् । रथम् । अनश्वम् । वाजिनीऽवतोः ।
तेन । अहम् । भूरि । चाकन ॥ १० ॥

वाजिनीवतोः वाजोन्नंबलंवातद्वत्क्रियावतोरश्विनोः अनश्वंअश्वरहितंअश्वराहित्येपितामर्थ्यातिशयेनगच्छन्तं रथंअसनं अहंस्तोतासमभजम् तेनचरथेनभूरिप्रभूतंश्रेयश्चाकन कामये ॥असनम्वनषणसंभक्तौ लुङ् । चाकन कनोदीप्तिकान्तिगतिषु छान्दसोलिट् णलुत्तमोवेतिणित्वस्यविकल्पनाद्वृद्ध्यभावः तुजादित्वादभ्यासदीर्घत्वम् ॥ १० ॥

एकादशीमृचमाह—

अयंसमहमातनूह्यातेजनाँअनु । सोमपेयंसुखोरथः ॥ ११ ॥

अयम् । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयम् ।
सुऽखः । रथः ॥ ११ ॥

हेसमह धनेनसहितहेरथ अयंपुरोवर्तीत्वम् मामांतनुविस्तारय पुत्रपौत्रधनादिभिःसमृद्धंकुरु यद्वा अयंअयमानं त्वांप्रामुवन्तंमामितियोज्यं सचसुखःशोभनावकाशःसुखहेतुर्वारथःजनान् अनुस्तोतृजनेषुसोमपेयं सोमपानंप्रतिऊह्यातेऊह्यतेअश्विभ्यांनीयते अतोश्विभ्यांप्रदीयतेततस्तर्वं रथएवददातीतिरथंसंबोध्यप्रार्थना ॥ अयं इदोयुंसि यद्वाअयपयगतौ पचाद्यच् । समह मघमितिधननाम मघेनसहवर्ततइतिसमघः छान्दसोवर्णविकारः यद्वा महपूजायाम् महयतिपूजयतीतिमहोधनम् पचाद्यच् । ऊह्याते वहप्रापणे कर्मणिलेट्याडागमः यजादित्वात्संप्रसारणम् तस्यछान्दसोदीर्घः अदुपदेशाल्लसार्वधातुकानुदात्तत्वेयकएवस्वरःशिष्यते । सोमपेयम् पापाने अचोयदितिभावेयत् ईद्यतीतिईकारादेशः यतोनावइत्याद्युदात्तत्वम् कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ११ ॥

द्वादशीमृचमाह—

अधस्वमस्यनिर्विदेभुंजतश्चरेवतः । उभातावस्निनश्यतः॥१२॥२३॥

अध । स्वप्नस्य । निः । विदे । अभुंञ्जतः । च । रेवतः । उभा ।
ता । बस्नि । नश्यतः ॥ १२ ॥ २३ ॥

अथइदानींप्रभातसमये स्वप्नस्यस्वप्नंप्रतिनिर्विदेनिर्विण्णोस्मि तथाअभुञ्जतः परान् रक्षतः रेवतोधनवतश्च पुरुषस्यएवंभूतंपुरुषंप्रत्यपिनिर्विण्णोस्मि यतःताउभातावुभौ बस्निक्षिप्रंनश्यतोना-शंप्राप्नुवतः स्वप्नदृष्टःपदार्थः प्रातर्नोपलभ्यते कदर्यस्यैवधनंअभुक्तंअदत्तंसद्क्षिप्रमेवनश्यति त-दुभयविषयोनिर्वेदोमांबाधतइत्यर्थः अत्रस्वप्नमात्रस्यअसत्वप्रतिपादनेनदुःस्वप्नस्यापिअसद्भावः प्रतिपादितः अतएवादुःस्वप्ननाशिनीतियुच्यते । स्वप्नस्य क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदा-नत्वाच्चतुर्थ्यर्थेषष्ठी । विदे विद्लृलाभे आगमानुशासनस्यानित्यत्वान्नुमभावः । रेवतः रयिशब्दा-न्मतुप् रयेर्मतौबहुलमितिसंप्रसारणम् छन्दसीरइतिमतुपोवत्वम् रेशब्दाच्चमतुपउदात्तत्वमितित-स्योदात्तत्वम् । उभा ता उभयत्रसुपांसुलुगित्याकारः ॥ १२ ॥

॥ इतिप्रथमस्याष्टमेत्रयोविंशोवर्गः ॥ २३ ॥

॥ इतिदाशतय्याःप्रथमेमण्डलेसप्तदशोनुवाकः ॥१७॥

अष्टादशेनुवाकेषट्सूक्तानि तत्रकदित्थेतिपञ्चदशर्चंप्रथमंसूक्तम् अत्रानुक्रम्यते—कदि-त्थापञ्चोनावैश्वदेवंवेति । अनुवर्तमानःकक्षीवानृषिः अनादेशपरिभाषयात्रिष्टुप् विश्वेदेवाइन्द्रो-वादेवता विनियोगोलैङ्गिकः ।

तत्रप्रथमामृचमाह—

कदित्थानॄँःपात्रंदेवयतांश्रवद्गिरोअङ्गिरसांतुरण्यन् ।
प्रयदानड्विशआहर्म्यस्योरुक्रंसतेअध्वरेयजत्रः ॥ १ ॥

कत् । इत्था । नॄन् । पात्रम् । देवऽयताम् । श्रवत् । गिरः ।
अङ्गिरसाम् । तुरण्यन् । प्र । यत् । आनट् । विशः । आ । हर्म्यस्य ।
उरु । क्रंसते । अध्वरे । यजत्रः ॥ १ ॥

नृँःपात्रंनृन्पातानृणांस्तुतॄणांपुरुषाणांरक्षणशीलइन्द्रः तुरण्यन् गोरूपंधनंप्रेरयन् देवयतांदेवंद्योतमानं दानादिगुणयुक्तंवाइन्द्रंआत्मनइच्छतांअङ्गिरसामृषीणांअस्माकं इत्थाइत्थंप्रयुज्यमानागिरःस्तुतीः कद्वकदाकस्मिन्कालेश्रवत्शृणुयात् यद्यदासइन्द्रः हर्म्यस्यहर्म्योपलक्षितेनगृहेण युक्तस्ययजमानस्यसंबन्धिनोविशः ऋत्विग्लक्षणान्मनुष्यान् आभिमुख्येनप्रानट्प्राप्नोति तदानीं अध्वरे अस्मदीयेयज्ञेयजत्रोयष्टव्यःसन्उरुबहुलंकंसतेक्रमते स्वयमेवोत्सहतइत्यर्थः॥ कद् कद् अन्यलोपश्छान्दसः। नृँःपात्रं नृन्पेइतिसंहितायांनकारस्यरुत्वम् अत्रानुनासिकःपूर्वस्यतुवेत्यृकारःसानुनासिकः। पात्रम् पारक्षणे ताच्छीलिकस्तृन् व्यत्ययेनत्रारमादेशः संज्ञापूर्वकस्यविधेरनित्यत्वाद्गुणाभावेयण्। देवयतां सुपआत्मनःक्यच् ततोलटःशतृ शतुरनुमइतिविभक्तेरुदात्तत्वम्। श्रवत् श्रुश्रवणे लेटयडागमः बहुलंछन्दसीतिविकरणस्यलुक्। तुरण्यन् तुरणत्वरायाम् कण्ड्वादिः। आनट् अश्नोतेर्लङि व्यत्ययेनपरस्मैपदम् श्नौप्राप्तेव्यत्ययेनश्नम् विकरणः व्रश्चादिषत्वेजश्त्वम् आडागमः। हर्म्यस्य हर्म्यशब्दादर्शआदित्वादच्। कंसते क्रमुपादविक्षेपे वृत्तिसर्गतायनेषुक्रमइत्यात्मनेपदम् लेटयडागमः सिब्बहुलंलेटीतिसिप्। यजत्रः अमिनक्षीत्यादिनायजेरत्रन्प्रत्ययः॥ १॥

द्वितीयामृचमाह—

स्तंभीद्धद्यांसधरुणंप्रुषायदृभुर्वाजायद्रविणंनरोगोः।
अनुस्वजांमहिषश्चक्षतव्रांमेनामश्वस्यपरिमातरंगोः॥ २॥

स्तंभीत्। ह। द्याम्। सः। धुरुणम्। प्रुषायत्। ऋभुः। वाजाय। द्रविणम्। नरः। गोः। अनु। स्वऽजाम्। महिषः। चक्षत। व्राम्। मेनाम्। अश्वस्य। परि। मातरम्। गोः॥ २॥

सइन्द्रः द्यांद्युलोकंस्तंभीद्ध स्तभ्नातिखलु तथागोः पणिभिरपहृतस्यगोसमूहस्यवज्रस्योदकस्यकिरणसमूहस्यवा नरोनेतासइन्द्रः ऋभुः सूर्यात्मनाउरुविस्तीर्णंभासमानःसन् द्रविणंसर्वैःप्राणिभिःअभिद्रवणीयं धरुणं उदकनामैतत् सर्वस्यधारकंवृष्ट्युदकंवाजायअन्नार्थंबलार्थंवाप्रुषायत् प्रुष्णातिसिञ्चति प्रवर्षतीत्यर्थः अपिचमहिषः महन्नामैतत्महान्सूर्यरूपीन्द्रः स्वजांस्वःसकाशादुत्पन्नां व्रांवृणोतितमसासर्वंमाच्छादयतीतिव्रारात्रिः यद्वा प्रकाशेनवृणोतीतिव्राउषाः तामनुचक्षत चष्टिःपश्यतिकर्मा अनुपश्चात्पश्यतिप्रकाशयते स्वयंप्रौढप्रकाशोपिस्वकल्पानिष्पादिना-

यारात्रेरुपसश्चपश्चादुदेतीत्यर्थः अपिचेदमपरमाश्चर्यम् यदयमश्वस्यमेनां स्त्रीनामैतव स्त्रियंवड-वांगोर्मातरं जननीं परिवैपरीत्येविपरीतामकरोत् कदाचिदिन्द्रोलीलयाअश्वायांगामुत्पादयामास तदत्रप्रतिपाद्यते मन्त्रान्तरेचेन्द्रवाक्यरूपेएतद्विस्पष्टमवगम्यते॥ धरुणं धारेर्णिलुक्चेत्युनप्रत्ययः। पृषायत् पृषपृष्ठपस्नेहनसेचनपूरणेषु कैयादिकः लेटचडागमः छन्दसिशायजपीत्यहावपिश्नाप्रत्यय-स्य शायजादेशः। नरः नृनये बहुलवचनात्ऋदोरप्निविकर्तर्यप्। चक्षत चक्षिङ्व्यक्तायांवा-चि छान्दसोलङ् बहुलंछन्दसीतिशपोलुगभावः॥ २ ॥

तृतीयामृचमाह—

नक्ष॒द्धव॑मरु॒णीः पू॒र्व्यं॑ रा॒ट्तु॒रो वि॒शामङ्गि॑रसा॒मनु॒द्यून्।
तक्ष॒द्वज्रं॒ नियु॑तं त॒स्तम्भ॒द्यां चतु॑ष्पदे॒ नर्या॑य द्वि॒पादे॑॥ ३ ॥

नक्ष॑त्। हव॑म्। अ॒रु॒णीः। पू॒र्व्यम्। राट्। तु॒रः। वि॒शाम्।
अङ्गि॑रसाम्। अनु॑। द्यून्। तक्ष॑त्। वज्र॑म्। निऽयु॑तम्। त॒स्तम्भ॑त्।
द्याम्। चतुः॑ऽपदे। नर्या॑य। द्वि॒ऽपादे॑॥ ३ ॥

अरुणीः अरुणवर्णा आरोचमानावाउषसः राट् राजयन्प्रकाशयन् सूर्यात्मा इन्द्रः पूर्व्यं पूर्वैर्ऋ-षिभिः प्रयुक्तम् हवम् इदानीं अस्माभिः क्रियमाणं आह्वानं नक्षत् नक्षतुशृणोतु कीदृशः अनुद्यून् अनुदिवसं विशां मनुष्याणां अङ्गिरसां ऋषीणां स्तोतॄणां तुरः धनस्यप्रेरयिता अपिच सइन्द्रः व-ज्रंस्वकीयंआयुधं नियुतं हन्तव्येन सह नितरांयुक्तं तक्षत् अकरोत् तथा द्यांद्युलोकं तस्तंभत् अस्तं-भयच्च यथाअधोनपतति तथा अकरोदित्यर्थः किमर्थं नर्याय नृभ्योहिताय चतुष्पदेगवाश्वा-दये द्विपदेमनुष्यायच एतदुभयथार्थमित्यर्थः॥ नक्षत् नक्षगतौ लेटचडागमः। पूर्व्यं पूर्वैःकृत-मिनियौचेतियप्रत्ययः। राट् राजृदीप्तौ अस्मादन्तर्भावितण्यर्थात् क्विप्। तुरः तुरत्वरणे इगुप-धलक्षणःकः। तक्षत् तक्षूत्वक्षूतनूकरणे बहुलंछन्दस्यमाङ्योगेपीत्यडभावः। तस्तंभत् स्तभि-स्कभिगतिप्रतिबन्धे अस्माण्ण्यन्ताल्लुङिचङिरूपम् चङ्यन्यतरस्यामिति उपोत्तमस्योदात्तत्वम् पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः। चतुष्पदे चत्वारः पादाअस्य संख्यासुपूर्वस्येतिपाद-शब्दस्यान्त्यलोपः समासान्तः चतुर्थ्येकवचने भसंज्ञायांपादःपदितिपद्भावः। द्विपादे पूर्ववत्प्रक्रिया अयंतुविशेषः अयस्मयादित्वेनपदत्वाद्भसंज्ञायाअभावेपद्भावाभावः द्वित्रिभ्यांपादन्मूर्धसुबहु-व्रीहौ इत्युत्तरपदान्तोदात्तत्वम्॥ ३ ॥

चतुर्थीमृचमाह—

अस्यमदेस्वर्यंदाऋतायापीवृतमुस्रियाणामनीकम् ।
यध्दंप्रसर्गेत्रिककुम्निवर्तदपद्रुहोमानुंपस्यदुरोवः ॥ ४ ॥

अस्य । मदे । स्वर्यम् । दाः । ऋताय । अपिऽवृतम् । उस्रियाणाम् ।
अनीकम् । यत् । ह । प्रऽसर्गे । त्रिऽककुप् । निऽवर्तत् । अप । द्रुहः ।
मानुपस्य । दुरः । वरिति वः ॥ ४ ॥

हेइन्द्र अस्यसोमस्यपानेनमदेहर्षेसतिऋताययज्ञार्थंस्वर्यंस्तुत्यंअपीवृतंपणिभिर्गुहायांनिगूढंउस्रियाणांगवामनीकंसंघं दाः अङ्गिरोभ्योदत्तवानसि उत्तरोर्धर्चःपरोक्षकृतः यद्ध यदाखलु प्रसर्गेयुद्धेत्रिककुप्त्रिषुलोकेषुउच्छ्रितइन्द्रः निवर्तत् नितरांवर्तेततदानींसइन्द्रोद्रुहोद्रोग्धुः मानुपस्यमनोःसंबन्धिनोसुरस्यपणेःसंबन्धीनिदुरोद्वाराणिगवामनिर्गमनायपिहितानिअपवः अपवृणोति उद्घाटयति ॥ स्वर्यम् स्वृशब्दोपतापयोः ऋहलोर्ण्यत् संज्ञापूर्वकस्यविधेरनित्यत्वाद्वृद्ध्यभावः । अपीवृतम् अपिपूर्वाद्वृणोतेःकर्मणिनिष्ठा निपातस्यचेतिपूर्वपदस्यदीर्घः गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् । प्रसर्गे प्रकर्षेणसृज्यन्तेविमुच्यन्तेस्मिन्निषवइतिप्रसर्गः अधिकरणेघञ् कृदुत्तरपदप्रकृतिस्वरत्वम् छान्दसस्थाथादिस्वराभावः । निवर्तत् वृतुवर्तने लेटयडागमः व्यत्ययेनपरस्मैपदम् । वः वृञ्वरणे छान्दसोलुङिमन्त्रेघसेतिच्लेर्लुक् गुणेहल्ङ्यादिलोपः ॥४ ॥

पञ्चमीमृचमाह—

तुभ्यंपयोयत्पितरावनीतांराधःसुरेतस्तुरणेभुरण्यू ।
शुचियत्तेरेक्णआयजन्तसबर्दुघायाःपयउस्रियायाः॥ ५ ॥२४॥

तुभ्यम् । पयः । यत् । पितरौ । अनीताम् । राधः । सुऽरेतः । तुरणे ।
भुरण्यू इति । शुचि । यत् । ते । रेक्णः । आ । अयजन्त ।
सबःऽदुघायाः । पयः । उस्रियायाः ॥ ५ ॥ २४ ॥

हेइन्द्र तुरणेक्षिप्रकारिणे तुभ्यंभुरण्यूकृत्स्नंजगत्पोपयन्त्यौपितरौउत्पादयन्त्यौद्यावापृथिव्यौयद्यदापयः सान्नाय्यलक्षणंहविः अनीतां गोप्वनयतां न्यधिपातामित्यर्थः कीदृशंपयः राधः राधकं समृद्धिकरं सुरेतः शोभनरेतस्कं कृत्स्नजगदुत्पादनशक्तमित्यर्थः हविपःसकाशाद्धिजगदुत्पद्यते अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति ॥

यद्यदाचद्यावापृथिवीभ्यांगोप्यानीतंशुचिशुद्धं सवर्दुघायाः क्षीरस्यदोग्ध्र्याउस्रियायाः गोःपयः रेक्णः धननामैतत् धनवदतिप्रियं यद्वा अविरिक्तमवृक्तंएवंविधंहविः तेतुभ्यंआयजन्त आभिमुख्येनयजमानाःप्रायच्छन् तदानींइन्द्रोमानुपस्यद्वाराणिअपवृणोतीतिपूर्वयासंबन्धः । अनीताम् णीञ्प्रापणे लुङि बहुलंछन्दसीतिशपोलुक् । शुचैतः सोमेनसीअर्टोमोपसीइत्युत्तरपदाद्युदात्तत्वम् । तुरणे तुरणत्वरायाम् कण्ड्वादिः क्विप्चेतिक्विप् अतोलोपयलोपौ । भुरण्यु भुरणधारणपोषणयोः अयमपिकण्ड्वादिः औणादिकउप्रत्ययः ॥ ५ ॥

॥ इतिप्रथमस्याष्टमेचतुर्विंशोवर्गः ॥ २४ ॥

षष्ठीमृचमाह—

अध॒प्रज॑ज्ञेत॒रणि॑र्ममत्तु॒प्ररो॑च्य॒स्याउ॒षसो॒नसूरः॑ ।
इन्दु॒र्येभि॒राष्ट॒स्वेदु॑हव्यैःस्रु॒वेण॑सि॒ञ्चञ्ज॒रणा॒भिधाम॑ ॥ ६ ॥

अध॑ । प्र । ज॒ज्ञे॒ । त॒रणिः॑ । म॒म॒त्तु॒ । प्र । रो॒चि॒ । अ॒स्याः । उ॒षसः॑ । न । सूरः॑ । इन्दुः॑ । येभिः॑ । आष्ट॑ । स्वऽइ॑दुहव्यैः । स्रु॒वेण॑ । सि॒ञ्चन् । ज॒रणा॑ । अ॒भि । धाम॑ ॥ ६ ॥

अधइदानींअयमिन्द्रःस्तुतिभिःप्रीयमाणःसन्प्रजज्ञे प्रकर्षेणप्रादुर्बभूव सतरणिःशत्रूणांतारकःअस्मान्ममत्तुमादयतु सचप्ररोचिप्रकर्षेणरोचते तत्रदृष्टान्तः—अस्याःअस्माभिः प्रदृश्यमानायाः उषसःसमीपेवर्तमानःसूरोन सूर्यइव जरणाजरणीयःस्तोतव्यःइन्दुःसोमः धामआहवनीयलक्षणं स्थानमभिलक्ष्यस्रुवेणसिञ्चन् सिच्यमानःसन् स्वेदुहव्यैःस्वभूतसमृद्धहविष्कैर्येभिर्येरस्माभिः आष्टआशितःआसीत्तानस्मान्मादयत्वित्यर्थः ॥ जज्ञे जनीप्रादुर्भावे लिटि गमहनेत्युपधालोपः । ममत्तु मदीहर्षे बहुलंछन्दसीतिविकरणस्यश्लुः । रोचि रुचदीप्तौ छान्दसोवर्तमानेलुङ् व्यत्ययेन च्लेश्चिणादेशः । आष्ट अशभोजने कर्मणिलङिबहुलंछन्दसीतिविकरणस्यलुक् व्रश्चादिषत्वेष्टुत्वम् आडागमः यद्वृत्तान्नित्यमितिनिघातप्रतिषेधः । स्वेदुहव्यैः इदिपरमैश्वर्ये औणादिकउप्रत्ययः अनित्यमागमशासनमितिनुमभावः इदूनिप्रभूतानिचतानिहव्यानिस्वभूतानिचहव्यानियेषाम् यद्वा ञिइन्धीदीप्तौस्मायत्तःनिइदूनिइद्धानिहव्यानियेषाम् अथवा स्वभूतंइदंपुरोवर्तिहव्यंहविर्येषांतेनतथोक्ताः पृषोदरादित्वादभिमतरूपसिद्धिः । सिञ्चन् षिचिरक्षरणे व्यत्ययेनकर्मणिकर्तृप्रत्ययः शेमुचादीनामितिनुम् । जरणा जरतिःस्तुतिकर्मा अस्मात्कर्मणिल्युट् सुपांसुलुगितिविभक्तेराकारः व्यत्येनलित्स्वराभावः ॥ ६ ॥

सप्तमीमृचमाह—

स्विध्मायद्वनधितिरपस्यात्सूरोअध्वरेपरिरोधनागोः।
यद्धप्रभासिकृत्व्याँअनुद्यूननर्विशेपश्विषेतुराय ॥ ७ ॥

सुऽइध्मा। यत्। वनऽधितिः। अपस्यात्। सूरः। अध्वरे। परि। रोधना। गोः। यत्। ह। प्रऽभासि। कृत्व्यान्। अनु। द्यून्। अनर्विशे। पशुऽइषे। तुराय ॥ ७ ॥

यद्यदिस्विध्मासुदीप्तास्यावनधितिः वनेछेत्तव्येवृक्षसमूहे निधातव्याशस्त्रीअपस्यात् अपः विशसनात्मकंस्वकीयंकर्मकर्तुमिच्छेत् तदानीं सूरः प्रेरकोध्वर्युः अध्वरेयज्ञेगोः पशोः रोधनारोधनायपूपेनियोजनायपरिभवति समर्थोभवति यद्वा स्विध्मासूर्यकिरणैःसुदीप्तावनधितिः वनमुदकमस्यांधीयतइतिवनधितिर्मेघमाला सायदाअपस्यात् अपःप्रवर्षणलक्षणं कर्मकरोति तदानीं सूरः प्रेरकइन्द्रः अध्वरेयज्ञस्यनिमित्तभूतेअध्वर्तव्येअहिंसितव्येन्तरिक्षे वर्तमानःसन् गोर्वृष्ट्युदकस्यरोधनारोधनान्यावरणानिपरिपरितोनिवारयतीतिशेषः उत्तरोर्धर्चः प्रत्यक्षकृतः हेइन्द्र सूर्यात्मनावर्तमानस्त्वं कृत्व्यान् कृत्वीतिकर्मनाम कर्मसुसाधून् द्यून् दिवसानअनुलक्ष्य यद्यदायस्मात्प्रभासिप्रकर्षेणदीप्यसे तदानींअनर्विशेअनसाशकटेनइन्धनाद्याहरणायअरण्यंप्रविशते यद्वा गन्तव्यंस्थलंप्रतिगन्तुं अशक्तायपुरुषायपश्विषेपशून्प्रेरयते तुराय त्वरमाणायगोधनपालायचतिष्ठ्वेदभिमतमितिवाक्यशेषः ॥ स्विध्मा शोभनंइध्मंदीप्तंआस्यंवीप्तिर्वायस्याःसातथोक्ता नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अपस्यात् अपस्शब्दात्सुपआत्मनःक्यच् छेदस्याडागमः। रोधना रुधिर्आवरणे ल्युट्चेतिभावेल्युट् शेश्छन्दसिबहुलमितिशेर्लोपः। अनर्विशे अनसाविशतिप्राप्नोतीत्यनर्विट् विशतेःक्विप् अहरादीनांपत्यादिषूपसंख्यानमितिसकारस्यरेफादेशः यद्वा अर्तेःकर्मणिविच् अरंगन्तव्यंप्रति विशतिप्राप्नोतीतिअर्विट् नअर्विट्अनर्विट् अव्ययपूर्वपदप्रकृतिस्वरत्वम् अतएवव्युत्पत्त्यनवधारणादवग्रहः। पश्विषे इषगतौ अस्मादन्तर्भावितण्यर्थात् क्विप्चेतिक्विप् ॥ ७॥

अष्टमीमृचमाह—

अष्टामहोदिवआदोहरीइहद्युम्नासाहमभियोधानउत्सम्।
हरियत्तेमन्दिनंदुक्षन्वृधेगोरभसमद्रिभिर्वाताप्यम् ॥ ८ ॥

अद्र॑ । म॒हः । दि॒वः । आदः॑ । हरी॒ इति॑ । इ॒ह । द्यु॒म्न॒ऽसह॑म् ।
अ॒भि । यो॒धा॒नः । उत्स॑म् । हरि॑म् । यत् । ते॒ । म॒न्दिन॑म् ।
धु॒क्षन् । वृ॒धे । गोऽर॑भसम् । अद्रि॑ऽभिः । वा॒ता॒प्य॑म् ॥ ८ ॥

हेइन्द्र महोमहतोदिवोमदकरस्य सोमस्याद्यभोक्तारौ हरीस्वकीयावश्वौ इह अस्मिन्कर्मणिआदः पीतशेषंसोमंप्रापय तथा द्युम्नासाहं द्युम्नस्यास्मदीयस्यधनस्याभिभवितारं उत्संउत्स्रावयितारं शत्रुंयोधानः योधनशीलस्त्वंअभिभव यत्यदातेतववृधेवर्धनाय हरिंमनोहरं मन्दिनंमदकरंगोरभसं अत्रगोशब्दःपयसिवर्तते पयोबलंतद्वद्वेगवन्तंवीर्यवन्तमित्यर्थः वाताप्यंवातेनमाप्तव्यं वाततुल्येनशीघ्रकारिणात्वयापातव्यमित्यर्थः एवंविधंसोमंअद्रिभिःग्रावभिः धुक्षन्दुहन्तिऋत्विजोभिषुण्वन्ति तदानीं अद्वेतिपूर्वेणसंबन्धः ॥ अद्रा अदभोजने तृच् आगमानुशासनस्यानित्यत्वादिडभावः । धुक्षन् पदकालीनोभष्भावश्छान्दसः ॥ ८ ॥

नवमीमृचमाह–

त्वमा॑य॒सं प्रति॑ वर्तयो॒ गोर्दि॒वो अश्मा॑न॒मुप॑नीत॒मृभ्वा॑ ।
कुत्सा॑य॒ यत्र॑ पुरुहूत व॒न्वञ्छुष्ण॑मन॒न्तैः प॑रि॒यासि॑ व॒धैः ॥ ९॥

त्वम् । आ॒य॒सम् । प्रति॑ । व॒र्त॒यः॒ । गोः । दि॒वः । अश्मा॑नम् ।
उप॑ऽनीतम् । ऋभ्वा॑ । कुत्सा॑य । यत्र॑ । पु॒रु॒ऽहू॒त॒ । व॒न्वन् ।
शुष्ण॑म् । अ॒न॒न्तैः । प॒रि॒ऽयासि॑ । व॒धैः ॥ ९ ॥

हेइन्द्र त्वंगोः गन्तुः शुष्णस्यासुरस्यवधार्थंआयसंअयोमयंवज्रंप्रतिवर्तयः आभिमुख्येनप्यसृजः कीदृशंवज्रंदिवोद्युलोकात्ऋभ्वादीप्तेनत्वष्ट्राउपनीतं आनीतंअश्मानंशीघ्रंशत्रोर्व्यापकं यत्रयदा हेपुरुहूतपुरुभिर्बहुभिःस्तोतृभिराहूतेन्द्र कुत्सायएतत्संज्ञायऋषयेशुष्णंशोकमसुरंअनन्तैर्निरवधिकैर्वधैर्हननसाधनैः आयुधैर्वन्वन् हिंसन्परियासि परितोगच्छसि तदानींतद्वधार्थंवज्रंप्रत्यवर्तयइत्यर्थः ॥ अश्मानं अशूव्याप्तौ अन्येभ्योपिदृश्यन्तइतिमनिन् । ऋभ्वा जसादिषुछन्दसिवावचनमितिनाभावस्यविकल्पितत्वान्नाभावेयणादेशः । वन्वन् वनुयाचने अत्रहिंसार्थः तथाचयास्कः–वनुष्यतिर्हंतिकर्मानवगतसंस्कारोभवतीति[1] । वधैः हनश्चवधइतिहन्तेःकरणेअप् तत्संनियोगेनवधादेशश्च सचादन्तोन्तोदात्तः तस्यातोलोपेसतिउदात्तनिवृत्तिस्वरेणप्रत्ययस्योदात्तत्वम् ॥ ९ ॥

1 नि० ५.२ ।

दशमीमृचमाह—

पुरायत्सूरस्तमसोअपीतेस्तमद्रिवःफलिगंहेतिमस्य ।
शुष्णस्यचित्परिहितंयदोजोदिवस्परिसुग्रथितंतदादः॥१०॥२५॥

पुरा । यत् । सूरः । तमसः । अपिऽइतेः । तम् । अद्रिऽवः । फलिऽगम् । हेतिम् । अस्य । शुष्णस्य । चित् । परिऽहितम् । यत् । ओजः । दिवः । परि । सुऽग्रथितम् । तत् । आ । अदः इत्यदः ॥१०॥२५॥

पुरायद्यदासूरःसूर्यः तमसः तमोरूपस्यशुष्णस्यासुरस्यापीतेः सङ्ग्रामात्मुक्तोभवदिति शेषः तदानीं हेअद्रिवः आद्रिणात्यनेनेत्यद्रिर्वज्रः तद्वन्निन्द्र तंफलिगंमेघनामैतत् मेघरूपेणावृण्वन्तंहेतिंहन्तारंशुष्णंअसुरंअस्यनिरसितवानसि यद्वा अस्यशुष्णस्यासुरस्यहेतिंहननसाधनं आयुधंफलिगंमेघलक्षणंप्राभांक्षीरितिशेषः तथाशुष्णस्यचिच्छोषयितुरसुरस्यचयदोजःआच्छादकंबलंदिवस्परिद्योतमानस्यसूर्यस्योपरिपरिहितंआच्छादितंसुग्रथितंसुष्ठुसूर्येसक्तंतदोजः तस्मात्सूर्यादादः आदृणाः विश्लिष्टंकृतवानसीत्यर्थः ॥ अद्रिवः छन्दसीरइतिमतुपोवत्वम् मतुवसोरुरितिनकारस्यरुत्वम् । हेतिम् कृत्यल्युटोबहुलमितिबहुलवचनाद्धन्तेःकर्तरिक्तिन् ऊतियूतीत्यादौनिपातनाद्रूपसिद्धिरन्तोदात्तत्वंच । अस्य असुक्षेपणे लङःसिप् तस्यव्यत्ययेनस्थादेशः अतोहेरितिहेर्लुक् । दिवस्परि पञ्चम्याःपरावध्यर्थेइतिविसर्जनीयस्यसत्वम् । अदः दृविदारणे लङिसिपिबहुलंछन्दसीतिविकरणस्यलुक् गुणेहल्ङ्याब्भ्यइतिसिलोपः ॥ १० ॥

॥ इतिप्रथमस्याष्टमेपञ्चविंशोवर्गः ॥ २५ ॥

एकादशीमृचमाह—

अनुत्वामहीपाजसीअचक्रेद्यावाक्षामामदतामिन्द्रकर्मन् ।
त्वंवृत्रमाशयानंसिरासुमहोवज्रेणसिष्वपोवराहुम् ॥ ११ ॥

अनु । त्वा । मही इति । पाजसी इति । अचक्रे इति । द्यावाक्षामा । मदताम् । इन्द्र । कर्मन् । त्वम् । वृत्रम् । आऽशयानम् । सिरासु । महः । वज्रेण । सिस्वपः । वराहुम् ॥ ११ ॥

हेइन्द्र महीमहत्यौमहत्यौपाजसीबलवत्यौअचक्रेअचंक्रमणेसर्वत्रव्याप्यवर्तमानेद्यावाक्षामाद्यावापृथिव्यौकर्मन्वृत्रवधादिलक्षणेकर्मणिप्रवृत्तंत्वात्वांअनुमदतांहृष्टमकुरुताम् अन्वमन्येतांवा तथा-

चतैत्तिरीयकम्—सआभ्यांमेवमसृतइन्द्रोवृत्रमहन्निति । तदनन्तरंत्वंआशयानंआसमन्ताद्या प्यवर्तमानंवराहुंवराहारंवृत्रमसुरंसिरासुसरणशीलासुअप्सुमहोमहतावज्रेणहत्वासिष्वपःअस्वापयः वज्रेणहत्वापातितवानित्यर्थः॥ महीसुपांसुलुगितिविभक्तेःपूर्वसवर्णदीर्घः । पाजसीपाजस्शब्दोबलवाचकोल्लक्षणयात्रतद्वतिवर्तते इयाडियाजीकाराणामुपसंख्यानमितिविभक्तेरीकारादेशः । द्यावाक्षामा द्यौश्चक्षामाच दिवोद्यावेतिद्यावादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् सुपांसुलुगितिविभक्तेर्लुक् । मदतां मदीहर्षे व्यत्ययेनशप् बहुलंछन्दस्यमाङ्योगेपीत्यडभावः । महः महतः करणेशेषत्वेनविवक्षितेषष्ठी अच्छब्दलोपश्छान्दसः । सिष्वपः ञिष्वप्शये अस्माण्ण्यन्तात्लुङिचङिसंज्ञापूर्वकस्यविधेरनित्यत्वात्स्वापेश्चङीतिसम्प्रसारणंनक्रियते॥ ११ ॥

द्वादशीमृचमाह—

त्वमि॑न्द्र॒नर्यो॒याँअवो॒नॄन्तिष्ठा॒वात॑स्यसु॒युजो॒वहि॑ष्ठान् ।
यंते॑का॒व्यउ॒शना॑म॒न्दिनं॒दाद्वृ॑त्र॒हणं॒पार्यं॑ततक्ष॒वज्र॑म् ॥ १२ ॥

त्वम् । इ॒न्द्र॒ । नर्यः॑ । यान् । अवः॑ । नॄन् । तिष्ठ॑ । वात॑स्य ।
सु॒ऽयुजः॑ । वहि॑ष्ठान् । यम् । ते॒ । का॒व्यः॑ । उ॒शना॑ । म॒न्दिन॑म् ।
दात् । वृ॒त्र॒ऽहन॑म् । पार्य॑म् । त॒त॒क्ष॒ । वज्र॑म् ॥ १२ ॥

हेइन्द्र नर्योनृभ्योहितस्त्वंयान्नॄन्नेतॄन् अश्वान् अवः अवसिरक्षसितान्वातस्यतुल्यान्तद्वच्छीघ्रंगच्छतः सुयुजः शोभनंरथेनयुज्यमानान्वहिष्ठान् अतिशयेनवोढॄन्अश्वान्तिष्ठ आतिष्ठ आरोहेत्यर्थः काव्यः कवेःपुत्रउशनामन्दिनंमदकरंयंवज्रंतेतुभ्यंदात्अदत्तवान् तंवज्रंवृत्रहणंवृत्रस्यासुरस्यघातकंपार्यंशत्रूणांपारणेअतिक्रमणेसमर्थंच ततक्षतनूकृतवानसि॥ अवःअवतेर्लेटचडागमः इतश्चलोपइतीकारलोपः।वहिष्ठान् वोढृशब्दात्तृश्छन्दसीतिइष्ठन् तुरिष्ठेमेयःस्वितितृलोपः।पार्यं पारतीरकर्मसमाप्तौ अस्माण्ण्यन्तादचोयदितियत् । ततक्ष तक्षूत्वक्षूतनूकरणे पुरुषव्यत्ययः॥१२॥

त्रयोदशीमृचमाह—

त्वंसूरो॑ह॒रितो॑रामयो॒नॄन्भर॑च्च॒क्रमेत॑शो॒नाय॑मिन्द्र ।
प्रास्य॑पा॒रंन॑व॒तिंना॒व्या॑ना॒मपि॑क॒र्तम॑वर्त॒योय॑ज्यून् ॥ १३ ॥

१ तै० सं० २. ५. २. ।

त्वम् । सूरः । हरितः । रमयः । नृन् । भरत् । चक्रम् । एतशः ।
न । अयम् । इन्द्र । प्रऽअस्य । पारम् । नवतिम् । नाव्यानाम् ।
अपि । कर्तम् । अवर्तयः । अयज्यून् ॥ १३ ॥

हेइन्द्र सूरः सूर्यात्मनावर्तमानस्त्वं हरितोहरिद्वर्णान्नॄन्नेतॄनश्वान्यद्वा रसहरणशीलान्रश्मीन्रामयः उपरमयः अयंएतशोन एतशइतिसूर्याश्वस्याख्या तथाचश्रूयते—एतशेनसूर्योदेवतांग-मयत्विति। नशब्दश्चार्थे एतशश्चरथस्यचक्रं भरत्प्रावहत् अपिच त्वंनाव्यानांनावातार्याणांनदीनां नवतिंनवतिसंख्यां अतीत्यवर्तमानंपारंतीरदेशंसप्तम्यर्थेद्वितीया तीरदेशेअयज्यूनयजमानान् यज्ञविधिहीनान्असुरादीन्प्रास्य प्रक्षिप्य तत्रकर्तमवर्तयः कर्तव्यमपिकृत्वातानयजमानानवर्तयः प्रापयः ॥ रमयः लङि बहुलंछन्दस्यमाङ्योगेपीत्यडभावः अन्येषामपिदृश्यतइतिसांहितिकोदीर्घः । प्रास्य असुक्षेपणे अस्मात्ल्यपित्यप्। नाव्यानाम् नौवयोधर्मेत्यादिनायत् तित्स्वरितमितिस्वरितत्वम्॥ १३ ॥

चतुर्दशीमृचमाह—

त्वंनोअस्याइन्द्रदुर्हणायाःपाहिवज्रिवोदुरितादभीके ।
प्रनोवाजान्रथ्योअश्वबुध्यानिषेयन्धिश्रवसेसूनृतायै ॥ १४ ॥

त्वम् । नः । अस्याः । इन्द्र । दुःऽहनायाः । पाहि । वज्रिऽवः ।
दुःऽइतात् । अभीके । प्र । नः । वाजान् । रथ्यः । अश्वऽबुध्यान् ।
इषे । यन्धि । श्रवसे । सूनृतायै ॥ १४ ॥

हेवज्रिवः वज्रवन्निन्द्र त्वंदुर्हणायाः दुःखेनहन्तव्यायाः अस्याः अवृतेर्दारिद्र्यात् नोस्मान्पाहिरक्ष तथा दुरितात्पापात् अभीकेअभिप्राप्तेसमीपवर्तिनिसङ्ग्रामे अस्मान्रक्ष अपिच नोस्मभ्यं रथ्योरथयुक्तान् अश्वबुध्यान् अश्वानांबोधकान् अश्वायावद्भिर्लभ्यन्तेतावदित्यर्थः यद्वा अश्वबुध्यान् छान्दसोवर्णविकारः अश्वमूलान् अश्वप्रमुखानित्यर्थः सर्वहिधनं अश्वमूलंदासापवर्गं यथोक्तम् दासप्रवर्गंरयिमश्वबुध्यमिति । एवंविधान्वाजानन्नानि प्र-यन्धिप्रयच्छ किमर्थंइषेअन्नार्थं श्रवसेकीर्त्यर्थं सूनृतायै सूनृताप्रियसत्यात्मिकावाक्तदर्थंच ॥ दुर्हणायाः ईषद्दुःसुष्विति हन्तेःकर्मणिखल् । पाहि पादादित्वान्निघाताभावः । वज्रिवः वज्रोस्या-

१ तै० सं० १. ६. ४. १ २ ऋ० सं० १. ६. २५ ।

स्तीतिवज्री हस्तः । तद्वानवज्रिवान् छन्दसीरइतिमतुपोवत्वम् संबुद्धौमतुवसोरुरितिनकारस्यरुत्वम् । रथ्यः छन्दसीवनिपावितिरथशब्दान्मत्वर्थीयईकारः । यन्धि यमउपरमे बहुलंछन्दसीतिविकरणस्यलुक् वाछन्दसीतिहेःपित्त्वेनङित्त्वाभावादङित्वश्चेतिहेर्धिः ॥ १४ ॥

पञ्चदशीमृचमाह–

**मासातेअस्मत्सुमतिर्विदसद्वाजप्रमहःसमिषोवरन्त ।**
**आनोभजमघवन्गोष्वर्योमंहिष्ठास्तेसधमादःस्याम ॥१५॥२६॥**

**मा । सा । ते । अस्मत् । सुऽमतिः । वि । दसत् । वाजऽप्रमहः । सम् । इषः । वरन्त । आ । नः । भज । मघऽवन् । गोषु । अर्यः । मंहिष्ठाः । ते । सधऽमादः । स्याम ॥ १५ ॥ २६ ॥**

हेवाजप्रमहः वाजैर्धनैःप्रमहनीयेन्द्र तेत्वदीयासासुमतिःशोभनानुग्रहरूपाबुद्धिः अस्मत्अस्मासुमाविदसत् माविशुष्यतु तथाइषोन्नान्यस्मान्संवरन्तसंवृतान्कुर्वन्तु हेमघवन्धनवन्निन्द्रअर्योधनपतिस्त्वंनोस्मान् गोषुआभजमापय तेतवमंहिष्ठाः अतिशयेनस्तुतिभिःप्रवर्धयितारोवयंसधमादःस्याम पुत्रपौत्रादिभिःसहमाद्यन्तोभवेम ॥ अस्मत् सुपांसुलुगितिसप्तम्यालुक् । दसत् दसुउपक्षये माङिलुङिपुषादित्वादङ् । वाजप्रमहः वाजैर्धनैःप्रकृष्टंमहस्तेजोयस्यसतथोक्तः पादादित्वादाष्टमिकनिघाताभावः षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । वरन्त वृञ्वरणे व्यत्ययेनशप् । गोषु सावेकाचइतिप्राप्तस्यविभक्त्युदात्तत्वस्य नगोश्वन्सावर्णेतिप्रतिषेधः । अर्यः अर्यःस्वामिवैश्ययोरितिनिपात्यते अर्यःस्वाम्याख्याचेदित्यन्तोदात्तत्वम् । मंहिष्ठाः महिवृद्धौ इदित्त्वान्नुम् अस्मादन्तर्भावितण्यर्थात्तृच् तुश्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्वितितृलोपः । सधमादः मदतृप्तियोगे चौरादिकः सहमादयन्तेत्रभावन्तीतिसधमादः क्विप्चेतिक्विप् जस् सधमादस्थयोश्छन्दसीति सहस्यसधादेशः ॥ १५ ॥

॥ इतिप्रथमस्याष्टमेषड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनि वारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येप्रथमाष्टकेऽष्टमोध्यायःसमाप्तः ॥८॥

॥ इतिप्रथमाष्टकःसमाप्तः ॥